(भावदीपः)

तेत्यस्य जानाति चेत्यर्थपर्यन्तत्वाज्ज्ञानविध्यर्थमित्युक्तम् । यथोक्तं भाक्तं वाऽनात्मवित्त्वादित्यत्र टीकायां उपास्ते जानाति चेत्युपासनाया ज्ञानपर्यन्तत्वम् । यद्वोपासीतेत्यस्यैव श्रवणादित्रितय-परत्वादेवमुक्तम् ॥ **तत्रेति** ॥ विधिसमीप इत्यर्थः । एतेन तदुक्तेति भाष्ये तत् तत्र ज्ञानविधौ विधिसमीपे इति च अर्थ उक्तो भवति ॥ **इत्यादीनामिति** ॥ 'आत्मेत्येवोपासीत' इत्यात्मत्व-ज्ञानमावश्यकमित्युक्तम् । तत्कुत इत्याकाङ्क्षायामात्मप्रशंसार्थमत्र 'ह्येते सर्व एकीभवन्ति' इत्यर्थ-वादस्तदुत्तरत्र तत्समीपे पठ्यते । तस्यायमर्थः । अत्रात्मत्वरूपगुणे एते प्राणन्नेव, प्राणो नाम भवति वदन् वाक्, पश्यंश्चक्षुः, शृण्वन् श्रोत्रं, मन्वानो मन इत्यादिनोपासना विहितः । पूर्व-वाक्येनोक्ताः प्राणत्ववक्तृत्वद्रष्टृत्वादयः सर्वे गुणा एकीभवन्ति अन्तर्भवन्ति । तस्मात्प्रशस्त-मात्मत्वज्ञानमिति तत्र सर्वगुणसङ्ग्राहकत्वयुक्तिरुच्यते । वक्ष्यति चात्मगृहीतिरितरवदित्यत्र । तथा 'आत्मानमेव लोकमुपासीत' इत्यत्र य आत्मानमेव लोकमुपास्ते 'न हास्य कर्म क्षीयत' इत्यक्षयकर्मफलहेतुत्वयुक्तिः । उक्तं च भाक्तं वेत्यत्र तथा 'तमेवैकं जानथ' इत्यत्र 'अमृतस्यैष सेतुः' इति मुक्तोपसृप्यत्वयुक्तिरुच्यत इति इत्यादीनां सम्भवतीत्युक्तम् ॥ **इतरांशस्येति** ॥ प्राणन्नेव प्राण इत्याद्यंशस्य कस्यचिज्ज्ञेयभगवदीयगुणपरत्वात् कस्यचिज्ज्ञेयकर्मादिपरत्वात् कस्यचिदु-पासनातदङ्गादिविधिपरत्वात्कस्यचित्फलप्रतिपादकत्वादित्यर्थः ॥ **सर्वाधिकारीति** ॥ वसूनामेवैको भूत्वेत्यादाविव विशेषाश्रवणादिति भावः ।

## श्रीमत्सत्यनाथतीर्थयतिविरचिता श्रीमत्तत्त्वप्रकाशिकाव्याख्या अभिनवचन्द्रिका

**(एतत्पादप्रतिपाद्यमिति अ.चं.पा.) एतत्पादार्थमिति** ॥ 'तर्ह्यध्यायस्यैकार्थत्वात्पादभेदः किं निबन्धन इत्यतः साधनेऽप्यवान्तरभेदेन' इति भावेनेति वर्तते । तस्य 'एतत्पादप्रतिपाद्यं दर्शयति' इत्यनेन सम्बन्धः । भाष्ये उपासनाऽस्मिन्पादे इति । प्रायेणेति शेषः । एतेन 'छन्दत' इति कर्म-नियमाभावाधिकरण उपासनाऽनभिधानात् 'उपासनाऽस्मिन्पाद उच्यत' इत्युक्तमयुक्तमिति परास्तम् ॥ **अत एवेति** ॥ श्रवणमननयोरुपासनारूपत्वादेवेत्यर्थः ॥ **प्रतिशाखमिति** ॥ उपास्यतया स्वीकृतात् स्वशाखोक्ताद्ब्रह्मणः शाखान्तरोक्तस्य भिन्नत्वान्न तदुपासनार्थं प्रतिपत्तव्यम् । स्वशाखोक्तब्रह्मद्रोहापत्तेरिति भावः ॥ **अन्यथेति** ॥ भेदाभाव इत्यर्थः ॥ **विधयश्चेति** ॥ यद्यपि अत्र 'श्रोतव्यो मन्तव्य' इति विधय उदाहर्तव्याः, श्रवणविधीनामेव साधारण्यस्य सर्वेषां

(अभिनवचन्द्रिका)

सर्वशाखाज्ञानाधिकारसाधकत्वात्, न तूपासनाविधयः 'आत्मा' इत्युपासनाविधेः सर्वसाधारण्येऽपि मध्वाद्युपासनाविधीनां सर्वसाधारण्याभावात् तथापि उपासनाविधीनामपि केषाञ्चित्सर्वसाधारण्यम् किमु ज्ञानविधीनां सर्वसाधारण्यमिति कैमुत्यज्ञापनायोपासनाविध्युदाहरणमिति बोध्यम् । अथवा । यद्यपि सर्वोपासनाविधयो न सर्वाधिकारिसाधारणाः तथापि सर्वशाखिसाधारणा एव । न हि वस्वादिपदयोग्या बह्वृचेषूत्पन्ना इति छन्दोगोक्तमधुविद्योपासनासु नाधिक्रियन्त इति साम्प्रतम् । ततश्चोपासनावाक्योदाहरणमुपपन्नम् ॥ **युक्तयश्चेति** ॥ आत्मत्वगुणस्य केनचिदुपास्यत्वे सर्वगुणान्तर्भाववत्त्वेनाभ्यर्हितत्वादयो युक्तयः । ताश्चैकाधिकारिणं प्रतीव सर्वान् प्रत्यप्यविशिष्टा एव । न हि आत्मत्वादीनां सर्वोपासनाफलदातृत्वेनाभ्यर्हितत्वं कंचित्प्रत्यस्ति अन्यं प्रति तु नेति विभागोऽस्तीति भावः ।

## ताम्रपर्णी श्रीनिवासाचार्यविरचिता वाक्यार्थमुक्तावली

**पादप्रतिपाद्यमिति** ॥ अध्यायस्यैकार्थत्वात्पादभेदः किं निबन्धन इत्यतः साधनेष्ववान्तर-भेदादिति भावेनेत्यादौ पूरणीयम् । नन्वथ ब्रह्मजिज्ञासापदोक्तसाधनविचारोऽयमध्याय इत्युक्तम् । तत्राथशब्दोक्तयोर्वैराग्यभक्त्योः पादद्वयेन विचारितत्वादवसरप्राप्ता ज्ञानसाधनीभूता जिज्ञासाऽस्मिन्पाद उच्यत इति वक्तव्यम् । उपासनाऽस्मिन्पादे उच्यत इति । कथमुक्तमित्यत आह– **उपासना नामेति** ॥ 'वैराग्यतो भक्तिदार्ढ्यं तेनोपासा यदा भवेत् । आपरोक्ष्यं ततो विष्णोः इति पादक्रमो भवेत् 'इत्यनुव्याख्यानानुसारेण पादक्रमनियामकमाह– **सा चेति** ॥

ननूपासना नामिका जिज्ञासा श्रवणमनननिदिध्यासनरूपा सर्वपरिज्ञानं च तृतयमपि भवति । ध्यानस्यापि ज्ञानरूपत्वात् । तृतयस्य च प्रथमप्रतिपाद्यत्वे शिष्टैरधिकरणैः किं निरूपणीयमित्यतः सर्वपरिज्ञानं नाम सर्ववेदार्थश्रवणजं शास्त्रीयोपक्रमादियुक्त्यपरनामकमननजं च ज्ञानं शास्त्राभ्यास-स्वरूपं च विवक्षितम् । तदिह आद्याधिकरणे निरूप्यते । ध्यानं तु मनःकरणकं शिष्टैरधिकरणै-र्निरूप्यत इति भावेन प्रथमतः सर्वपरिज्ञानोक्तौ नियामकमाह– **उपासनेति** ॥ तदुक्तं 'सोपासना च द्विविधा'इति । श्रवणमननयोर्ध्यानाङ्गत्वमेवोपपादयति– **समस्तेति** ॥ **अत एवेति** ॥ भगव-ज्ज्ञानसाधनध्यानाङ्गयोः कर्तव्यत्वसमर्थनादेवास्ति शास्त्रादिसङ्गतिरित्यर्थः। पूर्वाधिकरणे रातिर्दातुः.

(वाक्यार्थमुक्तावली)

एष ह्येव साधु कर्म कारयति, इति सामान्योक्त्या सर्वकर्माधिकारित्वमुक्तम् । समाचारेऽधिकाराच्चेति तदेव हेतूकृत्य सर्ववेदान्तप्रत्ययत्वसमर्थनादनन्तरसङ्गतिः ॥ **किमेकेनेति** ॥ अत्र ब्रह्म स्वस्वशाखोक्तश्रवणमननाभ्यां ज्ञातव्यमुत सर्वशाखोक्तप्रकारेणेति चिन्ता । तदर्थं प्रतिशाखमुच्यमानानां पृथक्त्वं सर्वशाखाध्ययनाभावश्च किं सर्वशाखोक्तप्रकारेण ज्ञानेऽधिकाराभावनिबन्धन उत चोदनाद्यविशेषादध्ययनविधेरर्थज्ञानपर्यवसन्नायाः सामान्यतः प्रवृत्तत्वात् सर्ववेदोक्तकर्माधिकारसद्भावाच्चाशक्तिनिबन्धन इति ॥ **सामान्योक्तिरिति** ॥ ब्रह्मजिज्ञासा कर्तव्येति सामान्योक्तिरित्यर्थः । अत्र भेदान्नेति सूत्रनिरस्यं पृथग्दृष्टिरित्युक्तन्यायं दर्शयन् पूर्वपक्षयति स्वस्वशाखेत्यादिना । हेतूच्छित्तिरूपं विपक्षे बाधकतर्कमाह **अन्यथेति** ॥ 'सलिलवच्च तन्नियम' इति सूत्रनिवर्तनीयं बाधकमाह– **सर्वज्ञानमिति** ॥ **पूर्वोत्तरविरुद्धमिति** ॥ प्रथमाध्याये मन्त्रब्राह्मणादिरूपस्य सर्वस्य वेदस्य गतिसामान्यस्य 'ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके' इत्यादिना समन्वयस्योक्तत्वादुपसंहारोऽर्थाभेदादिति सर्ववेदोपसंहारस्य वक्ष्यमाणत्वादत्रापि सर्ववेदपदेन मन्त्रादिरूपस्य सर्वस्य वेदस्य ग्राह्यत्वात् वेदान्तपदेनोपनिषन्मात्रग्रहणं पूर्वोत्तरविरुद्धमित्यर्थः । सूत्रे सर्ववेदानामन्तेन प्रत्ययो यस्येति व्यधिकरणबहुव्रीहिः । अन्तेनेति करणे तृतीयेति भावेन पूर्वानुवृत्त्या व्याचष्टे **पूर्वसूत्रेति** ॥ **सर्ववेदनिर्णयेनेति** ॥ सर्ववेदार्थश्रवणमननरूपनिर्णयेनोत्पाद्यं शाब्दानुमितिलक्षणं यन्निश्चयात्मकं ज्ञानं तद्विषयज्ञानमित्यर्थः ॥ **किमुक्तमिति** ॥ एकैकेनापि सर्वशाखाश्रवणयुक्त्यनुसन्धानाभ्यां ब्रह्म **ज्ञातव्यमिति** प्रतिज्ञायं सर्ववेदोत्पाद्यज्ञानविषयत्वप्रतिज्ञानेन किमुक्तं भवति, सिद्धत्वादिति भावः ॥ **ध्यानार्थिनापीति** ॥ एकैकेनापीति भावः । **श्रवणमननाभ्यामिति** । श्रवणमननाभ्यामयमेवार्थो नान्य इति निर्धार्य ज्ञातुं प्रयतेतेत्यर्थः । एकैकस्यापि श्रवणमननाभ्यां सर्ववेदोक्तब्रह्मज्ञानेऽधिकारः, न तु स्वस्वशाखोक्तमात्रब्रह्मज्ञानेऽधिकार इत्येतत्कुतः परपक्षे साधकाभावाद्वा, स्वपक्षे तत्सद्भावाद्वेत्याशयेन पृच्छति– **कुत इति** ॥ तत्र तावत्परपक्षे साधकाभावान्न शाखानामेकाधिकारिविशेषकल्पना युक्ता । किन्तु सर्वाधिकारिकत्वमेवेति प्रतिपादयितुं चोदनाद्यविशेषादिति सूत्रखण्डं प्रवृत्तम् । तच्च भाष्ये आत्मेत्येवोपासीत इत्यादिविधीनां अविशिष्टत्वात्सर्वाधिकारिसाधारणत्वादिति व्याख्यायते, अतः साधकाभावपरतया न साक्षात्प्रतीयत इत्यतः साक्षात्साधकाभावप्रदर्शनपरतयापि सूत्रखण्डं व्याचष्टे– **एवं काण्वैरिति** ॥ एतेन चोदनासु विधिगर्भासु काण्वादिशाखासु काण्वैरेवं श्रवणमननाभ्यां ज्ञातव्यं माध्यन्दिनैरेवमित्य-

(वाक्यार्थमुक्तावली)

विशेषादधिकारिविशेषनिर्देशाभावादिति सूत्रखण्डार्थ उक्तो भवति । न चेदुद्भाष्यं व्याख्यानम् । विधीनां विधिगर्भाणां काण्वादिशाखानामविशिष्टत्वादधिकारिविशेषनिर्देशशून्यत्वादिति भाष्यार्थं तावदभिप्रेत्य टीकाप्रवृत्तिसम्भवात् । अधिकारिविशेषनिर्देशाभावस्य स्वरूपासिद्ध्या शङ्का-परिहारार्थं सूत्रखण्डं प्रकारान्तरेण व्याकुर्वदात्मेत्येवोपासीत इत्यादिविधीनामविशिष्टत्वात् इति भाष्यं व्याचष्टे– **स हि भवन्निति** ॥ अधिकारिविशेषनिर्देशो भवत्तद्यत्प्रथमममृतं तद्वत् उपजीवन्तीतिवत् विधिसमीपे स्यादित्यर्थः ॥ **विधयश्चेति** ॥ 'आत्मेत्येवोपासीत,' 'आत्मानमेव लोकमुपासीत,' 'तमेवैकं जानथ,' 'विज्ञाय प्रज्ञां कुर्वीत इत्यादयः । पौर्णमासीं निर्वपतीतिवत् सर्वाधिकारिसाधारणा एव पठ्यन्ते न तु स्वसमीपेऽधिकारिविशेषनिर्देशवन्त इत्यर्थः । यद्यपि श्रोतव्यो मन्तव्य इत्यादयः श्रवणमननविधयः प्रकृततत्वात्पठनीयाः तथाप्युपासीतेत्यस्यैव 'सोपासना च द्विविधा शास्त्राभ्यासस्वरूपिणी'इत्युक्तरीत्या श्रवणमननविधित्वाद्भाष्यगतादिशब्देन 'तमेवैकं जानथ, श्रोतव्य' इत्यादिविधिग्रहणाद्वा नानुपपत्तिः । स्पष्टं तदुपासनं तु उपासनाविधीनामेव सर्वसाधारण्यं किमु ज्ञानविधीनामिति कैमुत्यद्योतनायेति ज्ञेयम् । नन्वधिकारिविशेषनिर्देशाभावेऽपि फलोक्त्यादिनाऽधिकारिविशेषनिश्चयो भवतीत्याशङ्क्य तन्निरासपूर्वकं सूत्रादिशब्दव्याख्यानपरं तत्रोक्तयुक्तीनां चाविशिष्टत्वादिति भाष्यं व्याचष्टे । **न च वाच्यमित्यादिना** ॥ **स्वर्गकाम-त्वादीति** ॥ लोकेषणादेर्यत्यादीनामविहितत्वादिति भावः । अत्र ह्येते कवयः सम्भवन्तीत्याद्या-नामित्याद्यपदेन तत्त्वप्रदीपरीत्यात्मानमेव लोकमुपासीत इत्यादावुक्तानां स य आत्मानमेव लोक-मुपास्ते, न हास्य कर्म क्षीयत, अमृतस्यैष सेतुः, वाचो विग्लापनं हि तदित्यादीनां ग्रहणम् ॥ **इतरांशस्येति** ॥ प्राणन्नेव प्राणो भवति, श्रृण्वानः श्रोत्रं पश्यंश्चक्षुरित्यादीतरांशस्येत्यर्थः ॥ **युक्तयश्चेति** ॥ यस्मादेते प्राणादिशब्दोक्ताः सर्वे आनन्दादय आत्मत्वेऽन्तर्भवन्ति । अत आत्मे-त्युपासने आनन्दादिगुणलाभादात्मेत्युपासीतेत्यादियुक्तयश्च सर्वाधिकारिसाधारणा एव आनन्दादेः सर्वापेक्षितत्वादिति भावः ।

## पाण्डुरङ्गि श्रीनिवासाचार्यविरचिता तत्त्वसुबोधिनी

ननु अथ ब्रह्मजिज्ञासेति पदद्वयोक्तसाधनचतुष्टये अथपदोक्तवैराग्यभक्त्योः पादद्वयेनोक्तत्वादि-दानीमवसरप्राप्ता ज्ञानसाधनीभूता जिज्ञासापदोक्तब्रह्मजिज्ञासा अस्मिन्पाद उच्यते इति भाष्ये

(तत्त्वसुबोधिनी)

वक्तव्यम् । उपासनास्मिन्पाद उच्यत इति कथमुक्तमित्यत आह ॥ **उपासना नामेति** ॥ ननु तथापि भक्त्यनन्तरं ज्ञानात्पूर्वं उपासनानिरूपणे कासङ्गतिरित्यत आह ॥ **सा चेति** ॥ तथा च साध्यसाधनरूपैव सङ्गतिरिति तन्निरूपणमिति भावः । ननु उपासनाप्रतिपादके अस्मिन्पादे सर्व-परिज्ञानोक्तिः कथं सङ्गता तस्याप्युपासनत्वेऽपि प्रथमतः तदुक्तौ किं निमित्तमित्यत आह ॥ **उपासना द्विविधेति** ॥ तत्राद्यमाह ॥ **समस्तेति** ॥ ननु श्रवणमनननिदिध्यासनानामे-वोपासनात्वस्य जिज्ञासाधिकरणेऽभिहितत्वात्कथं सच्छास्त्राभ्यासस्याप्युपासनात्वमित्यत आह ॥ **यामाहुरिति** ॥ द्वितीयामाह ॥ **ध्यानेति** ॥ तत्राद्याधिकरणे का निरूप्यते इति विशये सत्याह ॥ **तत्रेति** ॥ तत्र हेतुर्ध्यानेति । कथमस्य ध्यानाङ्गत्वमित्यत आह ॥ **समस्तेति** ॥ दूरोत्सारिताः अज्ञानसंशयविपर्ययाः येनेति विग्रहः । अत्र श्रवणं तत्वज्ञानं जनयदज्ञानं निवर्तयति । मननं तु वेदार्थनिर्णयं कुर्वत् संशयविपर्ययौ निवर्तयतीति बोद्धव्यम् ॥ **अत एवेति** ॥ श्रवणमननयो-रुपासनारूपत्वादेवेत्यर्थः । पूर्वसूत्रे पूर्वपदोक्ते ब्रह्मणि सर्ववेदान्तप्रत्ययत्वं विचार्यते इत्यनन्तर-सङ्गतिः ॥ **कर्तव्येत्युक्तमिति** ॥ जिज्ञासापदेनेत्यर्थः ॥ **सामान्योक्तेरिति** ॥ ब्रह्मजिज्ञासाकर्तव्येति सामान्योक्तिरित्यर्थः । नन्वस्तु प्रतिशाखमुच्यमानानामर्थानां पृथक्त्वं तथापि स्वस्वशाखोक्तमेव ज्ञेयमिति कुतः सर्वशाखोक्तमेव ज्ञेयमिति किं न स्यादित्यत आह ॥ **अन्यथेति** ॥ एकप्रकारस्यैव वस्तुनो ध्यानार्थं ज्ञेयत्वादिति भावः ।

ननु ध्यानार्थं सर्वज्ञानस्यावश्यकत्वेन तस्य च सर्वशाखाविषयकश्रवणमननाभ्यां विना असम्भवादवश्यं सर्वशाखाविषयकश्रवणादिकर्तव्यमन्यथा ध्यानाधिकार एव न स्यादित्यत आह ॥ **सर्वज्ञानमिति** ॥ **पूर्वोत्तरविरुद्धमिति** ॥ पूर्वं प्रथमाध्याये मन्त्रब्राह्मणादिरूपस्य सर्ववेदसमन्वय-स्योक्तेः उपसंहारोऽर्थभेदादित्युत्तरत्रापि सर्ववेदोक्तप्रकारेण ध्यानस्य वक्ष्यमाणत्वेनात्रापि सर्ववेद-पदेन मन्त्रादिरूपस्य सर्ववेदस्याग्राह्यत्वात् वेदान्तपदेनोपनिषन्मात्रग्रहणं पूर्वोत्तरविरुद्धमित्यर्थः । सूत्रे सर्ववेदानामन्तेन प्रत्ययोयस्येति व्यधिकरणो बहुव्रीहिरन्यपदार्थश्च ब्रह्मेत्यभिप्रेत्याह ॥ **पूर्वसूत्र इति** ॥ सूत्रभाष्ययोर्विवक्षितसाध्याप्रतीतेराह । अस्मिन् पादे सूत्रभाष्योक्तविध्यविशिष्टत्वस्य साक्षाद्धेतुत्वासम्भवात्साक्षाद्धेतुं प्रश्नपूर्वकमाह ॥ **कुत इति** ॥ ननु अधिकारिविशेषनिर्देशा-भावोऽसिद्ध इत्याह ॥ **स हि भवतीति** ॥

(तत्त्वसुबोधिनी)

ननु कर्मविद्यायामधिकारिविशेषनिर्देशाभावेऽपि स्वर्गकामत्वादिरूपकल्पबलेन गृहिण एवाधिकारित्वकल्पनवत् प्रकृतेऽपि फलोत्पत्यादिनाऽधिकारिविशेषनिश्चयो भविष्यतीत्याशङ्क्य निषेधति ॥ **न च वाच्यमिति** ॥ **स्वर्गकामत्वादिति** ॥ लोकेषणादेः यज्ञादीनामविहितत्वादिति भावः । ननु प्रकृतेऽपि आत्मेत्युपासनाविधिसमीपोक्तानां अत्र ह्येते सर्व एकीभवन्ति इत्यादीनामेवाधिकारिविशेषकल्पकत्वं स्यादित्यत आह ॥ **कल्पकत्वस्येति** ॥ ननु उपासनाविधिसमीपे अत्र ह्येते इत्यादिना किमर्थेयमुक्तिरित्यत उक्तम् ॥ **ज्ञानविध्यर्थमिति** ॥ उपासनाविध्युपपत्यर्थमित्यर्थः । आत्मेत्येवोपासीत इत्युक्ते तदेव कुतः उपास्यमित्याशङ्कायामात्मत्वे सर्वगुणानामन्तर्भावादित्यभिप्रायेणात्र ह्येत इति वाक्यस्य प्रवृत्तत्वादिति भावः । युक्तीनामेव कुतः कल्पकत्वं अन्यांशस्यापि तत्किं न स्यादित्यत आह ॥ **इतरांशस्येति** ॥ तद्धेद तर्ह्यव्याकृतमासीदित्यादेरित्यर्थः । **सर्वाधिकारिसाधारणा इति** । सर्वेषामपि ज्ञानार्थिनां मुमुक्षुत्वादिति भावः ।

## श्रीनिवासतीर्थविरचितं वाक्यार्थविवरणम्

॥ **समस्तेति** ॥ सर्वपरिज्ञानशब्दार्थोऽयम् ॥ **अत एवेति** ॥ श्रवणमननयोरुपासनात्वादेव भगवज्ज्ञानसाधनसर्वपरिज्ञानापरपर्यायसमस्तसच्छास्त्राभ्यासरूपश्रवणमननरूपोपासनस्य कर्तव्यतासमर्थनादित्यर्थः ॥ **अस्य शास्त्रस्येति** ॥ सर्वशाखानिर्णायकस्यास्य शास्त्रस्य सर्वाधिकार्यनुपादेयता स्यात् । कुतः ।। अधिकारिणां सर्वशाखाविषयश्रवणाद्यसम्भवादिति भावः । **पृथक्त्वेन** अनेकप्रकारत्वेन ॥ **अन्यथेति** ॥ तैस्तैः स्वशाखोक्तरीत्यैव ब्रह्म न ज्ञेयं किन्तु एकेनैव सर्वशाखोक्तरीत्येत्यङ्गीकारे ॥ **एकप्रकारेति** ॥ एकप्रकारेणानेकवस्तु ज्ञातव्यम् । अनेकप्रकारेणैवोक्तौ तस्याधिकारिणा मन्देन ज्ञातुमशक्यत्वादिति भावः ॥ **स हीति** ॥ काण्वाद्यधिकारिनिर्देशः । **विधिसमीपे** विधिवाक्यसमीपे । 'स्वर्गकामो यजेत' इतिवदिति भावः । न त्वधिकारिविशेषं प्रति प्रवृत्ताः । तदनिर्देशादित्येवकारार्थः ॥ **गृही** ॥ अनुक्तोऽपीति शेषः ॥ **अत्रापि** ॥ उपासनाविधिवाक्यं अनुक्तोऽपीति शेषः ॥ **स्वर्गेति** ॥ स्वर्गकामनाया यत्यादेरविहितत्वात् तत्कामनावानेव गृही ज्योतिष्टोमाधिकारित्वेन कल्प्यत इत्येवं गृहिणोऽधिकारित्वकल्पकं स्वर्गकामपदमेवास्तीति स्वर्गकामत्वादिरूपकल्पकवदित्यर्थः ॥ **ज्ञानविध्यर्थम्** ॥ **उपासनाविध्यर्थम्** ॥ 'आत्मेत्येवोपासीत' इत्युपासनाविधावधिकारिविशेषकल्पकत्वं तत्रोक्तयुक्तीनामेव सम्भवतीत्यन्वयः

(तत्त्वसुबोधिनी)

वक्तव्यम् । उपासनास्मिन्पाद उच्यत इति कथमुक्तमित्यत आह ॥ **उपासना नामेति** ॥ ननु तथापि भक्त्यनन्तरं ज्ञानात्पूर्वं उपासनानिरूपणे कासङ्गतिरित्यत आह ॥ **सा चेति** ॥ तथा च साध्यसाधनरूपैव सङ्गतिरिति तन्निरूपणमिति भावः । ननु उपासनाप्रतिपादके अस्मिन्पादे सर्वपरिज्ञानोक्तिः कथं सङ्गता तस्याप्युपासनत्वेऽपि प्रथमतः तदुक्तौ किं निमित्तमित्यत आह ॥ **उपासना 'द्विविधेति** ॥ तत्राद्यमाह ॥ **समस्तेति** ॥ ननु श्रवणमननिदिध्यासनानामेवोपासनात्वस्य जिज्ञासाधिकरणेऽभिहितत्वात्कथं सच्छास्त्राभ्यासस्याप्युपासनात्वमित्यत आह ॥ **यामाहुरिति** ॥ द्वितीयामाह ॥ **ध्यानेति** ॥ तत्राद्याधिकरणे का निरूप्यते इति विशये सत्याह ॥ **तत्रेति** ॥ तत्र हेतुर्ध्यानेति । कथमस्य ध्यानाङ्गत्वमित्यत आह ॥ **समस्तेति** ॥ दूरोत्सारिताः अज्ञानसंशयविपर्ययाः येनेति विग्रहः । अत्र श्रवणं तत्वज्ञानं जनयदज्ञानं निवर्तयति । मननं तु वेदार्थनिर्णयं कुर्वत् संशयविपर्ययौ निवर्तयतीति बोद्धव्यम् ॥ **अत एवेति** ॥ श्रवणमननयोरुपासनारूपत्वादेवेत्यर्थः । पूर्वसूत्रे पूर्वपदोक्ते ब्रह्मणि सर्ववेदान्तप्रत्ययत्वं विचार्यते इत्यनन्तरसङ्गतिः ॥ **कर्तव्येत्युक्तमिति** ॥ जिज्ञासापदेनेत्यर्थः ॥ **सामान्योक्तेरिति** ॥ ब्रह्मजिज्ञासाकर्तव्येति सामान्योक्तिरित्यर्थः । नन्वस्तु प्रतिशाखमुच्यमानानामर्थानां पृथक्त्वं तथापि स्वस्वशाखोक्तमेव ज्ञेयमिति कुतः सर्वशाखोक्तमेव ज्ञेयमिति किं न स्यादित्यत आह ॥ **अन्यथेति** ॥ एकप्रकारस्यैव वस्तुनो ध्यानार्थं ज्ञेयत्वादिति भावः ।

ननु ध्यानार्थं सर्वज्ञानस्यावश्यकत्वेन तस्य च सर्वशाखाविषयकश्रवणमननाभ्यां विना असम्भवादवश्यं सर्वशाखाविषयकश्रवणादिकर्तव्यमन्यथा ध्यानाधिकार एव न स्यादित्यत आह ॥ **सर्वज्ञानमिति** ॥ **पूर्वोत्तरविरुद्धमिति** ॥ पूर्वं प्रथमाध्याये मन्त्रब्राह्मणादिरूपस्य सर्ववेदसमन्वयस्योक्तेः उपसंहारोऽर्थाभेदादित्युत्तरत्रापि सर्ववेदोक्तप्रकारेण ध्यानस्य वक्ष्यमाणत्वेनात्रापि सर्ववेदपदेन मन्त्रादिरूपस्य सर्ववेदस्याग्राह्यत्वात् वेदान्तपदेनोपनिषन्मात्रग्रहणं पूर्वोत्तरविरुद्धमित्यर्थः । सूत्रे सर्ववेदानामन्तेन प्रत्ययोयस्येति व्यधिकरणो बहुव्रीहिरन्यपदार्थश्च ब्रह्मेत्यभिप्रेत्याह ॥ **पूर्वसूत्र इति** ॥ सूत्रभाष्ययोर्विवक्षितसाध्याप्रतीतेराह । अस्मिन् पादे सूत्रभाष्योक्तविध्यविशिष्टत्वस्य साक्षाद्धेतुत्वासम्भवात्साक्षाद्धेतुं प्रश्नपूर्वकमाह ॥ **कुत इति** ॥ ननु अधिकारिविशेषनिर्देशाभावोऽसिद्ध इत्याह ॥ **स हि भवतीति** ॥

(तत्त्वसुबोधिनी)

ननु कर्मविद्यायामधिकारिविशेषनिर्देशाभावेऽपि स्वर्गकामत्वादिरूपकल्पबलेन गृहिण एवाधिकारित्वकल्पनवत् प्रकृतेऽपि फलोत्पत्यादिनाऽधिकारिविशेषनिश्चयो भविष्यतीत्याशङ्क्य निषेधति ॥ **न च वाच्यमिति** ॥ **स्वर्गकामत्वादिति** ॥ लोकेषणादेः यज्ञादीनामविहितत्वादिति भावः । ननु प्रकृतेऽपि आत्मेत्युपासनाविधिसमीपोक्तानां अत्र ह्येते सर्व एकीभवन्ति इत्यादीनामेवाधिकारिविशेषकल्पकत्वं स्यादित्यत आह ॥ **कल्पकत्वस्येति** ॥ ननु उपासनाविधिसमीपे अत्र ह्येते इत्यादिना किमर्थेयमुक्तिरित्यत उक्तम् ॥ **ज्ञानविध्यर्थमिति** ॥ उपासनाविध्युपपत्यर्थमित्यर्थः । आत्मेत्येवोपासीत इत्युक्ते तदेव कुतः उपास्यमित्याशङ्कायामात्मत्वे सर्वगुणानामन्तर्भावादित्यभिप्रायेणात्र ह्येत इति वाक्यस्य प्रवृत्तत्वादिति भावः । युक्तीनामेव कुतः कल्पकत्वं अन्यांशस्यापि तत्किं न स्यादित्यत आह ॥ **इतरांशस्येति** ॥ तद्धेद तर्ह्यव्याकृतमासीदित्यादेरित्यर्थः । **सर्वाधिकारिसाधारणा इति** । सर्वेषामपि ज्ञानार्थिनां मुमुक्षुत्वादिति भावः ।

## श्रीनिवासतीर्थविरचितं वाक्यार्थविवरणम्

॥ **समस्तेति** ॥ सर्वपरिज्ञानशब्दार्थोऽयम् ॥ **अत एवेति** ॥ श्रवणमननयोरुपासनात्वादेव भगवज्ज्ञानसाधनसर्वपरिज्ञानापरपर्यायसमस्तसच्छास्त्राभ्यासरूपश्रवणमननरूपोपासनस्य कर्तव्यतासमर्थनादित्यर्थः ॥ **अस्य शास्त्रस्येति** ॥ सर्वशाखानिर्णायकस्यास्य शास्त्रस्य सर्वाधिकार्यनुपादेयता स्यात् । कुतः । अधिकारिणां सर्वशाखाविषयश्रवणाद्यसम्भवादिति भावः । **पृथक्त्वेन** अनेकप्रकारत्वेन ॥ **अन्यथेति** ॥ तैस्तैः स्वशाखोक्तरीत्यैव ब्रह्म न ज्ञेयं किन्तु एकेनैव सर्वशाखोक्तरीत्येत्यङ्गीकारे ॥ **एकप्रकारेति** ॥ एकप्रकारेणानेकवस्तु ज्ञातव्यम् । अनेकप्रकारेणैवोक्तौ तस्याधिकारिणा मन्देन ज्ञातुमशक्यत्वादिति भावः ॥ **स हीति** ॥ काण्वाद्यधिकारिनिर्देशः । **विधिसमीपे** विधिवाक्यसमीपे । 'स्वर्गकामो यजेत' इतिवदिति भावः । न त्वधिकारिविशेषं प्रति प्रवृत्ताः । तदनिर्देशादित्येवकारार्थः ॥ **गृही** ॥ अनुक्तोऽपीति शेषः ॥ **अत्रापि** ॥ उपासनाविधिवाक्यं अनुक्तोऽपीति शेषः ॥ **स्वर्गेति** ॥ स्वर्गकामनाया यत्यादेरविहितत्वात् तत्कामनावानेव गृही ज्योतिष्टोमाधिकारित्वेन कल्प्यत इत्येवं गृहिणोऽधिकारित्वकल्पकं स्वर्गकामपदमेवास्तीति स्वर्गकामत्वादिरूपकल्पकवदित्यर्थः ॥ **ज्ञानविध्यर्थम्** ॥ **उपासनाविध्यर्थम्** ॥ 'आत्मेत्येवोपासीत' इत्युपासनाविधावधिकारिविशेषकल्पकत्वं तत्रोक्तयुक्तीनामेव सम्भवतीत्यन्वयः

(वाक्यार्थविवरणम्)

॥ **तत्रोक्तेति** ॥ उपासनाविधिवाक्यसमीपस्थवाक्योक्तेत्यर्थः । तत्रोक्तयुक्तीनामेव कुतः कल्पकत्वमित्यत आह ॥ **इतरांशस्येति** ॥ 'तद्धेदं तर्ह्यव्याकृतमासीत्' इत्यादेरित्यर्थः ॥ **ज्ञेयेति** ॥ ज्ञेयभूतात्मस्वरूपेत्यर्थः । युक्तीनामधिकारिविशेषं प्रति प्रवृत्तत्वे युक्तमेव तासां कल्पकत्वम् । तदेव नास्तीत्याह ॥ **युक्तयश्चेति** ॥ साधारणाः अधिकारिविशेषानुपादानादिति भावः ।

## शर्करा श्रीनिवासाचार्यविरचिता वाक्यार्थमञ्जरी

नन्वथ ब्रह्मजिज्ञासापदोक्तसाधनविचारात्मकेऽस्मिन्नध्याये पादद्वयेनाथशब्दोक्तवैराग्यभक्तिनिरूपणानन्तरं ब्रह्मजिज्ञासापदोक्तज्ञानसाधनीभूता ब्रह्मजिज्ञासाऽस्मिन्पादे निरूपणीया । किमुपासनानिरूपणेनेत्यत आह ॥ **उपासना नामेति** ॥ ननूपासनाप्रतिपादकेऽस्मिन्पादे सर्वपरिज्ञानोक्तिः कथं सङ्गता । तस्याऽप्युपासनात्वेन सङ्गतत्वेऽपि प्रथमतः तदुक्तौ किं निमित्तमित्यत आह ॥ **उपासना द्विविधेति** ॥ श्रवणमनननिदिध्यासनानामेवोपासनात्वस्य जिज्ञासाधिकरणेऽभिहितत्वात्कथं सच्छास्त्राभ्यासस्याप्युपासनात्वमित्यत आह ॥ **यामाहुरिति** ॥ श्रवणमननयोर्ध्यानांगत्वमेवोपपादयति ॥ **समस्तेति** ॥ अत्र श्रवणं तत्त्वज्ञानमुत्पादयदज्ञानं निवर्तयति । मननं तु वेदार्थनिर्णयं कुर्वत्संशयविपर्ययौ निवर्तयतीति विवेकः ॥ **अत एवेति** ॥ श्रवणमननयोरप्युपासनात्वादेवेत्यर्थः । ततश्चात्र भगवत्प्राप्तिसाधनीभूतायाः सर्ववेदश्रवणमननोपासनारूपायाः समर्थनादस्ति शास्त्रादिसङ्गतिरित्युक्तं भवति । अविषयत्व इति छेदः ॥ **सर्वोपादेयतेति** ॥ एकशाखाविषयश्रवणादिकुर्वतः शाखान्तरज्ञानाभावेन सर्वशाखानिर्णायिकैतच्छास्त्रेण प्रयोजनाभावादिति भावः ॥ **सामान्योक्तिरिति** ॥ ब्रह्मजिज्ञासा कर्तव्येति सामान्योक्तिरित्यर्थः ॥ **पृथक्त्वेनेति** ॥ क्वचित् 'विज्ञानमानन्दं ब्रह्म' इति विज्ञानाद्यात्मकस्य क्वचिच्च 'सत्यं ज्ञानमनन्तं ब्रह्म' इति सत्याद्यात्मकस्य वस्तुनोऽभिधानदर्शनादित्यर्थः ।

ब्रह्म सर्ववेदान्तप्रत्ययं सर्वेषां वेदानामन्तेन निर्णयेन जातो यः प्रत्ययः ज्ञानं तद्विषयः कुतः चोदनाद्यविशेषात् चोदनानामुपासनाविधीनामादिपदोक्तयुक्तीनां च सर्वान्प्रति विशेषरहितत्वादित्यर्थः ॥ **पूर्वोत्तरविरुद्धमिति** ॥ पूर्वं प्रथमाध्याये मन्त्रब्राह्मणादिरूपस्य सर्वस्य वेदस्य समन्वयस्योक्तत्वात् उपसंहारोऽर्थभेदादित्युत्तरत्रापि सर्ववेदोक्तप्रकारेण ध्यानस्य वक्ष्यमाणत्वात् । अत्रापि

(वाक्यार्थमञ्जरी)

सर्ववेदपदेन मन्त्रादिरूपस्य सर्वस्यापि वेदस्य ग्राह्यत्वात्सर्ववेदान्तेत्येकं पदमंगीकृत्योपनिषद्ग्रहणं पूर्वोत्तरविरुद्धमित्यर्थः । विवक्षितसाध्यस्य स्पष्टमप्रतीतेराह ॥ **किमुक्तमिति** ॥ ज्ञातव्य-मित्यनन्तरमुक्तं भवतीत्यनुवर्तते । नन्वधिकारिविशेषनिर्देशाभावेऽपि फलविशेषादिनाऽधिकारि-विशेषनिश्चयो भविष्यतीत्याशङ्क्य निषेधति ॥ **न च वाच्यमिति** ॥ 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादिका कर्मविद्या ॥ कल्पकाभावमेवोपपादयति । **कल्पकत्वं चेत्यादिना** ॥ **तत्रोक्त-युक्तीनामिति** ॥ आत्मत्वमेव कुत उपास्यमित्याशङ्कायामात्मत्वे गुणानामन्तर्भावादित्यभिप्रायेणा-त्रेति वाक्यस्य प्रवृत्तत्वादिति भावः । अत्रात्मत्वे एते सर्वगुणाः एकीभवन्ति अन्तर्भवन्तीत्यर्थः ॥ **इतरांशस्येति** ॥ तद्धीदन्तर्ह्यव्याकृतमासीत् इत्यादेरित्यर्थः ॥ **सर्वाधिकारिसाधारणा एवेति** ॥ सर्वेषामपि ज्ञानार्थिना मुमुक्षुत्वेन स्वयोग्येतरगुणसङ्ग्राहकात्मत्वोपासकत्वादिति भावः ।

## सूत्रभाष्यम्

### ॥ ॐ भेदान्नेति चेदेकस्यामपि ॐ ॥ २ ॥

**'विज्ञानमानन्दं ब्रह्म' (बृ.उ.५-९-२८) । 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै.उ.२-१) इत्यादिप्रतिशाखमुक्तिभेदान्नैकाधिकारिविषयाः सर्वशाखा इति चेन्न । एकस्यामपि शाखायां 'आत्मेत्येवोपासीत' (बृ.उ.३-४-७) 'कं ब्रह्म खं ब्रह्म' (छां.उ.४-१०-५) इत्यादिभेद-दर्शनात् ॥**

## तत्त्वप्रदीपिका

तत्तच्छाखासु पृथक्पृथक् ब्रह्मरूपस्योच्यमानत्वान्नैराकाङ्क्ष्यात्तत्तच्छाखिनां तत्तदुदितपरिज्ञानेन पूर्यत इति चेन्न । एवं चेदेकस्यामप्युक्तिभेददर्शनादधिकारिभेदप्रसङ्गात् ।

## तत्त्वप्रकाशिका

उक्तमाक्षिप्य समादधत्सूत्रमुपन्यस्याक्षेपांशं तावद्व्याचष्टे ॥ **भेदादिति** ॥ यदुक्तं सर्वशाखोक्त-मेकैकेनैव ज्ञातव्यमिति न तद्युक्तम् । एकं हि वस्तु अनेन ज्ञातव्यम् । न हि सर्वशाखोक्तं वस्त्वेकम् । कस्याञ्चिच्छाखायां हि विज्ञानानन्दरूपं वस्तूच्यते । कचिच्च सत्यज्ञानानन्तं

(तत्त्वप्रकाशिका)

**क्वचिच्छ्रोतृमन्त्रादिरूपं अपहतपाप्मत्वादिरूपं चान्यत्रेत्येवमादि । अतः सर्वशाखोक्तानां पृथक्त्वादेकस्यैव ज्ञातव्यत्वात्स्वशाखोक्तमेव ज्ञातव्यमिति भावः । परिहारांशं व्याचष्टे ॥ नेति ॥ न च तत्तच्छाखोक्तार्थानां पृथक्त्वात्सर्वशाखोक्तं नैकेन ज्ञातव्यमिति वाच्यम् । तथा सत्येक-शाखोक्तस्याप्येकेनाज्ञातव्यत्वप्रसङ्गात् । तत्रोक्तार्थानामपि पृथक्त्वदर्शनात् । अथोच्येत तत्र धर्म्यनु-वादेनान्यान्यधर्मविधानादेकमेवोच्यत इति । हन्त तर्ह्यत्रापि तथा किं न स्यात् । न च सर्वशाखा-नामेकविषयत्वेंऽशे पौनरुक्त्यमिति । एकस्यामपि साम्यात् । अथ यदि तत्र प्रसङ्गभेदादनुवादादि-परिहारः । स च समः प्रकृतेऽपीति भावः ।**

## गुर्वर्थदीपिका

तत्रोक्तार्थानामपि पृथक्त्वदर्शनादित्यत्र 'अग्निमीळे पुरोहितम्' इत्येकत्र 'वायवाया हि दर्शते' इत्यन्यत्र दर्शनादित्यर्थः ।

## भावबोधः

इत्यादीतिभाष्यगतादिपदेन 'श्रोता मन्ता' इति 'य आत्माऽपहतपाप्मा' इत्यादि ऐतरेय-च्छान्दोग्यादिशाखान्तरगतं वाक्यं गृहीतमित्यभिप्रेत्याह– **क्वचिच्छ्रोतृमन्त्रादीत्यादिना** ॥

## भावदीपः

नैकाधिकारीति प्रतिज्ञाभाष्यं व्याचष्टे ॥ **यदुक्तमित्यादिना** ॥ एतेन सर्ववेदान्तप्रत्ययं ब्रह्मेति पूर्वसूत्रादनुवृत्तिरत्र सूत्र इति सूचितम् । तेन भाष्यस्य नोत्सूत्रत्वप्रसङ्गः । परिष्कारपूर्वं विज्ञान-मित्यादिभाष्यं व्याचष्टे ॥ **एकं हीत्यादिना** ॥ **कस्याश्चिदिति** ॥ शाखान्तरे ॥ **क्वचिच्चेति** ॥ तैत्तिरीयोपनिषदि । भाष्यस्थादिपदार्थमाह ॥ **क्वचिच्छ्रोत्रिति** ॥ श्रोता मन्ता द्रष्टादेष्टा घोष्टा विज्ञाता प्रज्ञाता इत्यैतरेये, य आत्माऽपहतपाप्मा, विजरो विमृत्युर्विशोक इत्यादि छान्दोग्ये । एवमादीत्यादिपदेन प्राणस्य प्राणश्चक्षुषश्चक्षुरित्यादिग्रहः । नेति नञः प्रतिशाखमित्यादि-पूर्वभाष्येणान्वयमाह ॥ **न च तत्तदिति** ॥ सूत्रे नञोऽध्याहारेण वाऽऽवृत्त्या वा भाष्ये नेत्युक्तमिति भावः । एकस्यामित्यादिनोक्तहेतुं परम्परया घटयति ॥ **तथा सतीत्यादिना** ॥ नन्वेतावता प्रतिशाखं नानोक्तेः का गतिरुक्तेत्यतः परमुखेनैव समाधिवाचनं तात्पर्यमिति भावेन सूत्रभाष्ययोर्भावं

(भावदीपः)

व्यनक्ति ॥ **अथोच्येतेति** ॥ भेदान्नेति चेत् इत्येतदभेदान्नेति चेदित्यस्याप्युपलक्षणमित्युपेत्य प्रकारान्तरेण व्याख्याति ॥ **न चेत्यादिना** ॥ साम्यादिति शेषोक्तिः । शेषस्य तात्पर्यमाह ॥ **अथ यदीति** ॥ काण्वश्रुतावत्रायं पुरुषः स्वयंज्योतिरिति द्विरुक्तावपि स्वप्नसुप्तिप्रसङ्गभेदेनापौनरुक्त्यम् । तथा शाखान्तरेऽपि । यथा च छान्दोग्ये सैषा षड्विधा चतुष्पदेति प्रागुक्तषाड्विध्यानुवादेन चतुष्पात्त्वविधिस्तथा शाखान्तरोक्तानुवाद इत्यर्थः ।

## अभिनवचन्द्रिका

**॥ एकं हीति ॥** एकमेव वस्तु मोक्षाऽर्थिना श्रवणमनननिदिध्यासनादिना भक्तिपूर्वमुपास्यम् । अन्यथानेकप्राघुणिकन्यायेन मोक्षासिद्धिस्स्यादिति भावः ।

पूर्वपक्षस्तु– स्वस्वशाखोक्तमेव तेन तेन ज्ञेयं न सर्वशाखोक्तम् । शाखाप्रतिपाद्यानां नानात्वात् । एकस्यां हि शाखायां 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्युच्यते । अपरस्यां तु 'विज्ञानमानन्दं ब्रह्म' इति सत्यत्वपरित्यागेनोच्यते । सत्यत्वभावाभावाभ्यां प्रतिपाद्यं भिद्यते । किं च वस्त्वैक्येऽशे पौनरुक्त्यं स्यात् । शाखान्तरोक्तस्यैव ज्ञानरूपत्वादेः शाखान्तरेऽभिधानात् । न च नानात्वेऽपि सर्वेषामेकोपास्यता । अनेकप्राघुणिकन्यायेन मोक्षाऽसिद्धिप्रसङ्गात् । ततश्च सर्वशाखानिर्णायकं ब्रह्ममीमांसाशास्त्रमनुपादेयमेवेति ।

सिद्धान्तस्तु- सर्ववेदश्रवणमननाद्युत्पाद्यज्ञानमेव ब्रह्म सर्वैरुपास्यम् । 'श्रोतव्यो मन्तव्यः' इत्यादिविधीनां सर्वसाधारणत्वात् । न हि काण्वादिशाखासु तैरेवेदं ज्ञेयं नान्यैरित्युच्यते । येन साधारण्यं न स्यात् । यदत्रोक्तं 'उपदेशभेदात् वस्तु भिद्यते' इति । तन्न एकत्वेन त्वयाऽभ्युपगते एकशाखाप्रतिपाद्येऽपि उपदेशभेददर्शनेन व्यभिचारात् । यदपि वस्त्वैक्येऽशे पौनरुक्त्यं स्यादिति, तदपि एकस्यामपि शाखायां उक्तानामेव गुणानां पुनरभिधानेन समानम्, यदि तत्र धर्म्यनुवादेन धर्मविधानात् नोपदेशभेदः, नापि पौनरुक्त्यं, प्रसङ्गभेदादनुवादकत्वाद्वेत्युच्यते तच्छाखान्तरेऽपि समानम् । किं च 'स्वाध्यायोऽध्येतव्यः' इत्यध्ययनविधेः सामान्यत्वात् अध्ययनस्य च ज्ञानार्थत्वात् सर्वेषां सर्ववेदोक्तज्ञानेऽधिकारः । अपि च सर्वेषां सर्ववेदोक्तकर्माधिकारस्तावद्दृश्यते । ततो ज्ञानाधिकारोऽपि मन्तव्यो विशेषाभावात् । यानि चेमानि विरुद्धकर्माणि 'सामगो वटुर्मुण्डः,

(अभिनवचन्द्रिका)
अन्यः शिखी' इत्यादीनि तानि च एकशाखागतविरुद्धकर्मवद्विकल्पेन भवन्ति । न च मन्दानां ध्यानाभाव इति वाच्यम् । 'सर्वासामपां समुद्र एकायनम्' इत्यादिवाक्यानां बाधकाभावे समुद्रायनत्वनियमतात्पर्यवत्, श्रवणादिविधीनामपि यथाशक्ति सर्वश्रवणविधौ तात्पर्यांगीकारात् । 'सर्वैश्च वेदैः परमो हि देवो जिज्ञास्योऽसौ नाल्पवेदैः प्रसिध्येत्' इति श्रुतेश्च । अतो भगवद्ध्यानार्थं सर्ववेदोक्तं ज्ञेयमिति सर्वोपादेयं शास्त्रमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

अत्र ब्रह्म सर्ववेदान्तप्रत्ययमित्यनुवर्तते । तेन नञोऽन्वयः । एकस्यामिति प्रकृतत्वात् सर्वशाखास्विति पूर्वपक्षे लभ्यते । भेदादित्युक्तिभेदादित्यर्थमभिप्रेत्य प्रवृत्तं भाष्यं व्याचष्टे । **यदुक्तमित्यादिना** ।। कस्यांचिदित्यंशं व्याचष्टे ।। **इतीति** ।। नञः भेदादित्यस्य चानुवृत्तिपूर्वमिति शेषः । तत्र धर्म्यनुवादेनेति । आत्मेत्येवोपास्यं ब्रह्म धर्मिभूतं खं ब्रह्मेत्यत्रानूद्य खं प्रकाशरूपमित्यन्यधर्मविधानादित्यर्थः । एतेनैकस्यां शाखायां विधेयधर्मभेदान्न प्रतिपाद्यार्थपृथक्त्वमिति चेदिति सूत्रार्थ उक्तो भवति । **हन्त तर्हीति** । एतेनापि अत्रापि सर्वशाखास्वपि धर्म्यैक्येऽपि विधेयधर्मभेदान्न पृथक्त्वमिति सिद्धान्तांशार्थ उक्तो भवति ।। **अंशे पौनरुक्त्यमिति** ।। 'विज्ञानमानन्दं ब्रह्म' इत्यत्रोक्तस्य विज्ञानस्यैव सत्यं ज्ञानमित्यत्रोक्तत्वादंशे पौनरुक्त्यमित्यर्थः ।। **एकस्यामपीति** ।। एकस्यामपि शाखायाम् 'आत्मेत्येवोपासीत' इति प्रकरणे प्राणन्नेव प्राणो भवतीत्यत्रोक्तप्रकृष्टानन्दरूपत्वस्य 'कं ब्रह्म' इति पुनराम्नानादंशे पौनरुक्त्यसाम्यादित्यर्थः । एतेन शाखानामेकाधिकारिकत्वे एकविषयत्वे च विज्ञानमानन्दं ब्रह्म, 'सत्यं ज्ञानम्' इत्यादि प्रतिशाखासु पुनः पुनरुक्तिभेदात् पृथक्पृथगुक्तस्यैव ब्रह्मस्वरूपांशस्योच्यमानत्वात्पुनरुक्ततया अंशे नैकाकायात् नैकाधिकारिकत्वं नैकविषयत्वं चेत् नैकस्यामपि शाखायामुक्तस्यैव पुनरुक्तिभेदान्नैकाधिकारिकत्वमिति सूत्रभाष्यार्थ उक्तो भवति । उक्तं च तत्त्वप्रदीपे । तत्तच्छाखासु पृथक्पृथग्ब्रह्मस्वरूपस्योच्यमानत्वान्नैकाकायात्तत्तच्छाखिनां तत्तदुदितपरिज्ञानेन पूर्यत इति चेन्न । एकस्यामप्युक्तिभेदादधिकारिभेदप्रसङ्गादिति । एकस्यां शाखायां भेदात् प्रसङ्गभेदात् अनुवादादिना पुनर्दार्ढ्यादिना न पौनरुक्त्यमिति चेन्न । अपि सर्वशाखास्वपि प्रसङ्गभेदादनुवादादिना न पौनरुक्त्यमिति सूत्रार्थमाह ।। **तत्र तत्रेति** ।।

## तत्त्वसुबोधिनी

इत्यादीति भाष्यगतादिपदेन 'श्रोता मन्ता' इति 'य आत्माऽपहतपाप्मा' इत्यादि ऐतरेय-छान्दोग्यादिगतं वाक्यं गृहीतमित्याह ॥ **क्वचिच्छ्रोत्रिति** ॥ अथैकस्यां शाखायां प्रसङ्गादुक्त-स्योक्तिरिति नानुवादादिदोषप्राप्तिरिति शङ्कते ॥ **अथ यदीति** ॥

## वाक्यार्थविवरणम्

**एकं हीति** ॥ एकप्रकारमित्यर्थः । एवमुत्तरत्रापि ॥ **तत्रोक्तेति** ॥ एकशाखोक्तेत्यर्थः ॥ **तत्र** एकशाखायाम् ॥ **धर्म्यंशेति** ॥ तथा च ज्ञेयब्रह्मरूपधर्म्यंशे एकप्रकारत्वमेव न पृथक्त्वमिति भावः । **अत्रापि** सर्वशाखास्वपि । धर्म्यंशानुवादेनान्यधर्मविधानादेकमेवोच्यत इति न पृथक्त्वमिति साम्यमिति भावः ॥ **अंशे** धर्म्यंशे । एकस्यां शाखायाम् ॥ **साम्यात्** ॥ धर्म्यंशानुवादेनैकविषयत्वे अंशे पौनरुक्त्यसाम्यादित्यर्थः ॥ **तत्र** ॥ एकस्यां शाखायाम् ॥ **प्रसङ्गभेदादिति** ॥ एकस्मिन्नेव प्रसङ्गे 'आत्मेत्येवोपासीत' 'कं ब्रह्म' इत्याद्युक्तौ तत्र पृथक्त्वपरिहाराय धर्म्यंशानुवादेनान्य-धर्मविधानं कल्प्यत इति साम्यं स्यात् । न चैवम् उपकोसलाग्निप्रसङ्गे 'कं ब्रह्म' इत्यादिकमुच्यते । अन्ययोः प्रसङ्गे आत्मेत्येवेत्यादिकम् । अतः प्रसङ्गभेदान्नानुवादादिकल्पनावकाश इत्याशयः । आदिपदेन् पुनरुक्तिग्रहणम् ॥ **प्रकृत इति** ॥ सर्वशाखायामपीत्यर्थः । 'विज्ञानमानन्दं ब्रह्म' 'सत्यं ज्ञानम्' इत्यादेरपि भिन्नभिन्नप्रसङ्ग एवोक्तत्वेनानुवादित्वादिपरिहारः समः इत्याशयः ।

## वाक्यार्थमञ्जरी

प्रतिशाखं वस्तुभेदान्नैकं ब्रह्म सर्ववेदान्तप्रत्ययमिति चेन्न एकस्यामपि शाखायामर्थभेदसद्भावेन तदुक्तस्याप्यज्ञेयत्वप्रसक्तेरित्यर्थः । कस्याश्चित् अथर्वणशाखायां क्वचिद्यजुःशाखायां क्वचिदृक्-शाखायां अन्यत्र सामशाखायाम् । तत्रैकशाखायाम् ॥ **पृथक्त्वदर्शनादिति** ॥ 'कं ब्रह्म, खं ब्रह्म' इत्यत्र भेददर्शनादित्यर्थः ॥ **धर्मीति** ॥ ब्रह्मरूपधर्मिणमनूद्य सुखज्ञानादिरूपधर्मविधाना-दित्यर्थः ॥ **तथेति** ॥ ब्रह्मात्मादिपदैर्धर्मिणमनूद्य विज्ञानादिधर्मविधानादिति भावः ॥ अंशे धर्म्यंशे ॥ **प्रसङ्गभेदेति** ॥ प्रकरणभेदादधिकविधानायानुवादाच्च न पौनरुक्त्यमिति परिहार इत्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च ॐ ॥ ३ ॥**

'स्वाध्यायोऽध्येतव्यः' (तै.आ.२-१५) इति सामान्यविधेः । हिशब्दात्–

'वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना'इति स्मृतेः ।

'सर्ववेदोक्तमार्गेण कर्म कुर्वीत नित्यशः ।
आनन्दो हि फलं यस्माच्छाखाभेदो ह्यशक्तिजः ॥
सर्वकर्मकृतौ यस्मादशक्ताः सर्वजन्तवः ।
शाखाभेदं कर्मभेदं व्यासस्तस्मादचीक्लृपत्' इति समाचारे सर्वेषामधिकाराच्च ॥

## तत्त्वप्रदीपिका

स्वाध्यायस्येत्यादि सूत्रम् । इतश्च सर्ववेदनिर्णयेन ब्रह्मज्ञानमुत्पाद्यम् । यथा सर्ववेदनिर्णयप्राप्तिरधिकारिणां भवति । तथा हि स्वाध्यायाध्ययनविधिः प्रवृत्तः । 'स्वाध्यायोऽध्येतव्यः' इति सामान्यतो ह्यध्ययनं विधत्ते नैतावान्भाग एतस्येति । अतः कृत्स्नो वेदोऽधिगन्तव्य इत्यर्थः । तथा स्मृतेश्च । आनन्दो हि वेदोदितानुष्ठानफलम् । अतः सर्ववेदोदितमार्गेणानुष्ठान आनन्दोद्रेक इति कर्तव्यं नित्यं तथा सर्वकर्म । कुतस्तर्हि शाखाभेदः कर्माणि च तदधिकारिणामित्यत आह– **'शाखाभेदो ह्यशक्तिजः' इति** । तदेवोपपादयति 'सर्वकर्मकृतौ' इत्यादिना । समाचारे सम्यक् सर्वकर्माचरणे सर्वेषां शाखिनामधिकाराच्च न मन्तव्यं नैकाधिकारिविषयाः सर्वशाखा इति । न हि सर्ववेदाधिगतिमन्तरेण तदुक्तमार्गेण मानसस्य वाऽन्यस्य वा कर्मणोऽनुष्ठानं शक्यते । ज्ञानपूर्वकत्वादनुष्ठानस्य ।

## तत्त्वप्रकाशिका

हेत्वन्तरेणैतमर्थं समर्थयत्सूत्रं पठित्वा व्याचष्टे ॥ **स्वाध्यायस्येति** ॥ अस्ति खलु सर्वशाखा एकैकेनाध्येतव्या इति 'स्वाध्यायोऽध्येतव्यः' इति स्वाध्यायाध्ययनविधेः सर्वाधिकारिसाधारणत्वात् । अन्यथाऽनेनायं स्वाध्यायोऽध्येतव्य इति विधिप्रसङ्गात् । अध्ययनं च तदुक्तज्ञानार्थमेवेति वक्ष्याम इति भावः । ननु लोके शाखाभेदस्य प्रसिद्धत्वाद्विधेरपि विशेषनिष्ठत्वमिति । मैवम् । विशेषस्मृति-

(तत्त्वप्रकाशिका)

**विरोधादिति भावेनाह ॥ हीति ॥ सूचिताया इति शेषः । अनेन सर्वेषां सर्वशाखाध्ययनाभावात्सर्वज्ञानमयुक्तमिति च परास्तम् । किं च सर्ववेदोक्तकर्मसमाचारे सर्वेषामधिकारसद्भावात्तदुक्तब्रह्मज्ञाने सुतरामधिकार इति सप्रमाणकमाह ॥ सर्वेति ॥ यदि सर्वेषां सर्वशाखाध्ययनादि तर्हि कथमेष शाखाभेदः कर्मभेदश्चेत्यत आह ॥ शाखेति ॥ कर्मभेदश्चेति ज्ञातव्यम् । तद्विवृणोति ॥ सर्वेति ॥ सर्वशाखाध्ययने चेति द्रष्टव्यम् । यानि चेमानि विरुद्धकर्माणि सामगो वटुर्मुण्डोऽन्यः शिखीत्यादीनि तानि चैकशाखागतविरुद्धकर्मवद्विकल्पेन भवन्ति ।**

## गुर्वर्थदीपिका

अनेन सर्वेषामित्यत्र अनेन सर्वेषां सर्वशाखाध्ययनविधिना । विकल्पेन भवन्तीत्यत्र विकल्पेन 'उदिते जुहोति, अनुदिते जुहोति' इति व्यवस्थितविकल्पेनेत्यर्थः ।

## भावबोधः

अध्ययनसाधारण्यस्य सर्वशाखोक्तप्रकारेण ब्रह्म ज्ञेयमिति साध्ये न साक्षाद्धेतुत्वमिति तत्साध्यं साक्षाद्धेतुमाह– **अस्ति खल्वित्यादिना** ॥ नन्वस्तु सर्वशाखानामेकैकेनाध्येतव्यत्वम् । तथापि न तदुक्तप्रकारेण ब्रह्म ज्ञातव्यमिति सिद्ध्यति । अध्ययनविधेरक्षरग्रहणेनैव चरितार्थत्वादित्यत आह– **अध्ययनं चेति** ॥ 'ज्ञानार्थमध्ययनार्थं गुणानां समुदीरणा' इति वक्ष्याम इत्यर्थः ॥ **सुतरामधिकार इति** ॥ बहुत्वेन परस्परविरुद्धत्वेनाशक्यानुष्ठानेषु सर्वकर्मसु यदाधिकारस्तदा 'गतिसामान्यात्' इत्युक्तप्रकारेणाताद्दग्रूपे ब्रह्मज्ञाने सुतरामधिकार इति भावः । शाखाभेदं कर्मभेदमिति वक्ष्यमाणानुसारेणाह– **कर्मभेदश्चेति** ॥ **ज्ञातव्यमिति** ॥ अत एव 'तद्धेत्वभिधानेऽपि सर्वशाखाध्ययने च' इति द्रष्टव्यमित्युक्तम् ।

## भावदीपः

सूत्रे चशब्दस्य स्वाध्यायस्य तथात्वेन चेत्यप्यन्वयमुपेत्याह ॥ **हेत्वन्तरेणेति** ॥ सामान्येनैकवचनम् ॥ **समर्थयदिति** ॥ समाहितमेतत्परस्मैपदं प्राक् । साध्यमध्याहृत्य तत्र हेतुत्वेन स्वाध्याय इत्यादिभाष्यं व्याचष्टे ॥ **अस्ति खल्विति** ॥ तावता सर्वशाखोक्तमेकेन ज्ञातव्यमिति कुत इत्यत आह ॥ **अध्ययनं चेति** ॥ आध्यानाय प्रयोजनाभावादित्यत्र वक्ष्याम इत्यर्थः ।

(भावदीपः)

ज्ञानार्थमेवेत्येवकारोऽयोगव्यवच्छेदपरो ध्येयः । अध्ययनं नित्यमित्यस्यापि न्यायामृते तृतीयपरिच्छेदे समर्थनात् ॥ **अनेनेति** ॥ हीति स्मृतिसूचनेनेत्यर्थः ॥ **इति चेति** ॥ न केवलमध्ययनविधेर्विशेष-निष्ठत्वमिति चार्थः । सर्वकर्मकृतावधिकारोक्तेरुपयोगं वदन्नेवावतारयति ॥ **किं चेति** ॥ **ब्रह्मज्ञान इति** ॥ सर्ववेदान्तप्रत्ययं ब्रह्मेत्यनुवृत्तिं सूचयति । ज्ञानपूर्वकत्वात्कर्मकृतेः सुतरामित्युक्तम् । भवेदेवं यदि सर्वकर्मकृतावधिकारः स्यात् । सैवाशक्या । विरुद्धत्वादित्यत आह ॥ **यानि चेति** ॥ **विरुद्धकर्मवदिति** ॥ 'अतिरात्रे षोडशिनं गृह्णाति नातिरात्रे षोडशिनम्' इत्युक्तषोडशिग्रहणा-ग्रहणादिकर्मवदित्यर्थः ।

## वाक्यार्थमुक्तावली

**हेत्वन्तरेणेति** ॥ एवं परपक्षे साधकाभावेन सर्वेषां सर्वशाखोक्तब्रह्मज्ञानाधिकारं समर्थ्य स्वपक्षसाधकेनापीत्यर्थः । सूत्रे सर्ववेदान्तप्रत्ययं ब्रह्मेत्यनुवर्तते । तत्र हेतुः स्वाध्यायस्य तथात्वेनेति । तथात्वेनेत्यविशेषादित्युक्तं परामृश्यते । तथा च स्वाध्यायस्याध्ययनस्य तथात्वेनाविशेषत्वेन सर्ववेदान्तप्रत्ययं ब्रह्मेति हृदि कृत्वा व्याचष्टे ॥ **अस्ति खल्विति** ॥ सर्वसाधारणसर्वशाखा-समूहस्याविशेषेऽध्येतव्यत्वमसिद्धमित्यर्थः । इत्यस्ति खलु प्रमितमित्युक्तं तत्कथमित्यतः स्वाध्यायस्य तथात्वेनेत्येतदेव हेतुसाधकतया व्याचष्टे ॥ **स्वाध्यायोध्येतव्य इति** ॥ एतेन स्वाध्यायस्येत्यस्य लक्षणया स्वाध्यायाध्ययनविधेरित्यर्थ उक्तो भवति । एतेन स्वाध्यायाध्ययनविधेः साधारणत्वात् सर्वशाखास्वाध्यायस्य सर्वसाधारण्यं सर्वशाखास्वध्ययनस्य तथात्वेन सर्ववेदान्त-प्रत्ययं ब्रह्मेत्यर्थ उक्तो भवति । नन्वस्तु सर्वशाखास्वाध्यायस्य सर्वसाधारण्यं तथापि न तदुक्त-प्रकारेण ब्रह्म ज्ञातव्यमिति सिद्ध्यति । अध्ययनविधेरग्रहणेनैव चरितार्थत्वादित्यत आह ॥ **अध्ययनं चेति** ॥ आध्यानायेत्यत्र ज्ञानार्थमथध्यानार्थं गुणानां समुदीरणेति वक्ष्याम इत्यर्थः ॥ **विधेरपि विशेषनिष्ठत्वमिति** ॥ एतेन चोदनाद्यविशेषादित्यनेनैतद्गतार्थम् । अर्थज्ञानपर्यन्तायाः स्वाध्यायचोदनायाः अविशेषादित्यपि तदर्थोपपत्तेरिति निरस्तम् । शाखाभेदस्य सुप्रसिद्धत्वात् । चोदनादिकमपि विशेषनिष्ठं भवत्वित्यभ्यधिकाशङ्कायां हि शब्दसूचितविशेषस्मृत्या तां परिहर्तुं पुनः प्रक्रमोपपत्तेः । उक्तं च सुधायां शाखाभेदस्य सुप्रसिद्धत्वाच्चोदनादिकमपि विशेषनिष्ठं व्याख्येय-मित्यतो युक्त्यन्तरमाह सूत्रकारः । तत्र हीत्यन्तं व्याचष्ट इति ॥ **सर्वशाखाध्ययनाभावादिति** ॥ अध्ययनाधिकाराभावादित्यर्थः ।

(वाक्यार्थमुक्तावली)

ननु समाचारेऽधिकाराच्च ब्रह्म सर्ववेदान्तप्रत्ययमित्ययुक्तम् । कर्मसमाचाराधिकारेऽपि तदुक्तब्रह्मज्ञानेऽधिकाराभावोपपत्तेरित्यतस्तत्कैमुत्येन घटयति ॥ **सुतरामिति** ॥ 'कर्मणा ज्ञानमातनोति' इति सर्ववेदोक्तब्रह्मज्ञाने सर्ववेदोक्तकर्मसमाचारस्य हेतुत्वेन साधनलाभे साध्यमनायासेन लभ्यत इति भावः । यद्वा सर्ववेदोक्तकर्मानुष्ठानं हि सर्ववेदार्थज्ञानमन्तरेण न सम्भवति । ब्रह्मकर्मविधयोरेकत्वेन तत्पूज्यस्य तत्फलदातुः ब्रह्मणः अवान्तरपूज्यानां देवतानां तत्प्रकारस्य चाज्ञाने तदयोगात् अनुष्ठानेऽधिकारे सुतरां तदुक्तब्रह्मज्ञानेऽधिकार इति भावः । तदुक्तं तत्त्वप्रदीपे । सर्ववेदाधिगतिमन्तरेण तदुक्तमार्गेण कर्मणोऽनुष्ठानं न शक्यते ज्ञानपूर्वकत्वादनुष्ठानस्येति । आनन्दो हि फलमिति भाष्यस्यायं भावः आनन्दो हि सर्ववेदोदितानुष्ठानफलमतः सर्ववेदोदितानुष्ठाने आनन्दोद्रेको भवतीति तल्लिप्सुभिस्तदनुष्ठानं कार्यमिति ॥ **एकैकशाखागतविरुद्धकर्मवदिति** ॥

## तत्त्वसुबोधिनी

अध्ययनविधौ साधारणसर्वशाखोक्तप्रकारेण ब्रह्मज्ञेयमिति साध्ये न साक्षाद्धेतुत्वमिति तत्साध्ये साक्षाद्धेतुमाह ॥ **अस्ति खल्विति** ॥ **अन्यथेति** ॥ सर्वाधिकारिसाधारणत्वाभावे इत्यर्थः । नन्वस्तु सर्वशाखानामेकेनैवाध्येतव्यत्वं तथापि न तदुक्तप्रकारेण ब्रह्म ज्ञातव्यमिति सिद्ध्यति अध्ययनविधेः अक्षरग्रहणेनैव चरितार्थत्वात् इत्यत आह ॥ **अध्ययनं चेति** ॥ ज्ञानार्थमथ ध्यानार्थं गुणानां समुदीरणेति वक्ष्यामः इत्यर्थः ॥ **अनेनेति** ॥ वेदः कृत्स्नोऽधिगन्तव्यः इति विशेषस्मृत्युदाहरणेनेत्यर्थः ॥ **सुतरामधिकार इति** ॥ बहुत्वेन परस्परविरुद्धत्वेनाशक्यानुष्ठानेषु सर्वकर्मसु यदाधिकारः तदा गतिसामान्यादित्युक्तप्रकारेणाताद्रूप्ये ब्रह्मज्ञाने सुतरामधिकार इति भावः । शाखाभेदं कर्मभेदमिति वक्ष्यमाणानुसारेणाह ॥ **कर्मभेदश्चेति** ॥ अत एव तद्धेत्वनभिधानेऽपि सर्वशाखाध्ययने च इति द्रष्टव्यमित्युक्तम् ।

ननु सर्वशाखोक्तकर्मण्यपि कथमधिकारः । सर्वशाखोक्तकर्मणां परस्परविरुद्धत्वेन एकदा करणासम्भवादित्यत आह ॥ **यानि चेति** ॥ एकशाखागतव्रीहियववाक्यवद्विकल्पेनेति भावः । अत्राद्ये सूत्रे सर्वपरिज्ञानं प्रतिज्ञाय तत्रोपासनाविध्यविशिष्टत्वरूपान्तरङ्गहेतूक्तिः । द्वितीये

(तत्त्वसुबोधिनी)
तदाक्षेपोद्धारः । तृतीये प्रकृतसाध्ये हेत्वन्तरोक्तिः । चतुर्थे बाधकोद्धारः । पञ्चमे श्रुतिस्मृतिरूप-प्रमाणोक्तिरिति सूत्रक्रमः ।

## वाक्यार्थविवरणम्

**अयम्** ॥ स्वाध्यायः ऋग्वेदादिरूपो वेदविशेषः ॥ **विधेरपीति** ॥ स्वाध्यायाध्ययन-विधेरप्यधिकारिविशेषपरत्वमित्यर्थः ॥ **अनेनेति** ॥ 'वेदः कृत्स्नोऽधिगन्तव्यः' इति वचनेनेत्यर्थः । अत्र द्विर्मातुरुपनयने चेति द्विवारं जायत इति द्विजन्मा ब्राह्मणादिः । तथा च ब्राह्मणादित्रयाणां सर्वेषामप्यधिकारिणां कृत्स्न इति सर्वशाखाध्ययनविधानेनाध्ययनस्य चार्थज्ञानपर्यन्तत्वात् सर्वशाखा-परिज्ञानं प्राप्तमेवेति भावः । तथा च 'स्वाध्यायस्य तथात्वेन हि'इति सूत्रखण्डस्य स्वाध्यायस्य स्वाध्यायाध्ययनविधेस्तथात्वेन सामान्यतः सर्ववेदाध्ययनविधायकत्वहेतुना सर्वपरिज्ञानमङ्गीकार्यम् । किञ्च हि कृत्स्नपदोपेतविशेषस्मृतेश्च अध्ययनस्यार्थज्ञानपर्यन्ततास्थितेरित्यर्थो द्रष्टव्यः । भाष्ये आनन्दो हि फलं, अपरोक्षज्ञानिनां साक्षात् । अनपरोक्षज्ञानिनां ज्ञानद्वारेति द्रष्टव्यम् ॥ **समाचारे** सर्ववेदोक्तकर्मणः सम्यगाचरण इत्यर्थः ।

ननु सर्ववेदोक्तकर्माचरणमेकस्यासम्भवि । कस्याञ्चिच्छाखायां सामगबटोर्मुण्डित्वस्य, अन्यस्यां च शाखायामन्यगस्य शिखित्वोक्तेर्विरुद्धयोर्मुण्डित्वशिखित्वयोराचरणमेकस्य विरुद्धमिति कथं तत्र अधिकार इत्यत आह ॥ **यानि चेति** ॥ भिन्नभिन्नशाखागतानीत्यर्थः । तानि विकल्पेन स्वेच्छया भवन्तीत्यन्वयः । अयमर्थः । यद्येकस्यैव सामगबटो ऋग्वेदाद्युक्तकर्मकरणेच्छा तदा शिखिना भवितव्यम् । यदि सामवेदोक्तकर्मकरणेच्छा तदा मुण्डिनेत्येवमिच्छानुसारेण विकल्पः । यद्वा । एकस्यैव ऋग्वेदिनः पुत्रद्वये सति स्वेच्छयैकस्य ऋग्वेदाद्युक्तकर्मणः शिखित्वादेराचरणं अपरस्य सामवेदोक्तरीत्या मुण्डितत्वादिकर्माचरणमिति विकल्पेन भवन्तीत्यविरुद्धानीत्यर्थः । तत्र दृष्टान्त एकशाखेति । एकाधिकारित्वेन निश्चितैकशाखायामेव व्रीहिभिर्जुहोति यवैर्वा जुहोति इत्याद्युक्तविरुद्धकर्मानुष्ठानस्यैकेनैकदा कर्तुमशक्यत्वात्तत्र यथा स्वेच्छया विकल्पोऽवश्य-माश्रयणीयः । कदाचिद्व्रीहिभिर्होमः कदाचिद्यवैरिति तद्वदिति भावः ।

## वाक्यार्थमञ्जरी

ब्रह्म सर्ववेदान्तप्रत्ययमेव कुतः स्वाध्यायस्य वेदाध्ययनविधेस्तथात्वेन सर्वान्प्रत्यविशिष्टत्वेन निमित्तेन तथा सर्ववेदोक्तकर्मणः समाचारे सम्यगनुष्ठाने सर्वेषामधिकाराच्चेत्यर्थः ॥ **स्वाध्याय इति** ॥ वेदः पठनीय इत्यर्थः । नन्वस्तु सर्वशाखानामेकैकेनाध्येतव्यत्वं तथापि न तदुक्तप्रकारेण ब्रह्म ज्ञातव्यमिति सिध्यति । अध्ययनविधेरग्रहणेनैव चरितार्थत्वादाह ॥ **अध्ययनं चेति** ॥ ज्ञानार्थमथ ध्यानार्थं गुणानां समुदीरणेति वक्ष्याम इत्यर्थः ॥ **परास्तमिति** ॥ स्मृतौ कृत्स्नशब्द-श्रवणादितिभावः ॥ **सुतरामिति** ॥ बहुत्वेन परस्परविरुद्धत्वेन चाशक्यानुष्ठानेषु कर्मसु यदाधिकारस्तदा गतिसामान्यादित्युक्तप्रकारेण तादृशे ब्रह्मज्ञाने सुतरामधिकार इत्यर्थः । कर्मभेद-मिति वक्ष्यमाणानुरोधेनाह ॥ **कर्मभेदश्चेति** ॥ **ज्ञातव्यमिति** ॥ एवं सर्वशाखेत्यपि अन्यः अन्यशाखास्थः ॥ **एकशाखागतेति** ॥ 'व्रीहिभिर्वा यजेत' 'यवैर्वा यजेत' इत्याद्युक्तेरित्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ सलिलवच्च तन्नियमः ॐ ॥ ४ ॥**

**यथा सर्वं सलिलं समुद्रं गच्छन्त्येवं सर्वाणि वचनानि ब्रह्मज्ञानार्थानीति नियमः । आग्नेये च–**

**'यथा नदीनां सलिलं शक्ये सागरगं भवेत् ।**
**एवं शक्यानि सर्वाणि पुंशक्त्या ब्रह्मवित्तये' इति ॥**

## तत्त्वप्रदीपिका

यथा सर्वं सलिलं शक्ये समुद्रगमनपर्यवसायि । एवं सर्ववचनानि ब्रह्मज्ञापनपर्यवसायीनि । पुरुषशक्त्यभावादेव तदपरिज्ञानं न तेषां तस्यार्थस्याभावादिति भावः ।

## तत्त्वप्रकाशिका

यदि सर्वशाखोक्तप्रकारेणैव जानतो ध्यानाधिकारः प्राप्तस्तर्हि मन्दानां ध्यानाभाव इत्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे ॥ **सलिलवदिति** ॥ नोक्तभङ्ग्या मन्दानां ध्यानाभावप्राप्तिः । यथा

(तत्त्वप्रकाशिका)

**खलु सर्वासामपां समुद्र एवैकायनमिति नियमः प्रतिवन्धाभावमपेक्ष्यैव न त्वतिदृढः। एवं सर्ववेदोक्त-प्रकारेण ध्यानेच्छूनां ब्रह्म ज्ञातव्यमिति नियमस्यापि पुरुषशक्त्यपेक्षत्वादिति भावः । अत्रैव स्मृतिमाह ॥ आग्नेये चेति ॥**

## गुर्वर्थदीपिका

यथा खलु सर्वासामपामित्यत्र सर्वासामपां सर्वनदीजलानामित्यर्थः । प्रतिबन्धाभावमपेक्ष्यैवेत्यत्र प्रतिबन्धो नाम नदीजलानां समुद्रान्तः स्वस्वशक्त्यनुसारेण प्रविष्टानामग्रे गमनशक्तिप्रतिबन्धकस्य समुद्रनिबिडजलमित्यर्थः ।

## भावदीपः

सौत्रश्चशब्दः शङ्कानिरासक इति भावेनाह ॥ **नोक्तभङ्गश्चेति** ॥ भाष्यं व्याचष्टे ॥ **यथेति** ॥ **इति नियम इति** ॥ काण्वश्रुत्युक्त इत्यर्थः ।

## वाक्यार्थमुक्तावली

एवं तर्हि मन्दानां ध्यानाधिकारः स्यादित्यत आह ॥ **ॐ सलिलवच्च तन्नियमः ॐ** ॥ चोऽवधारणे समुच्चये च । स चासौ नियमश्च तन्नियमः । सर्ववेदान्तप्रत्ययं ब्रह्मेत्येष नियमः सलिलवदेव । सलिलानां समुद्रप्राप्तिनियमवत्प्रतिबन्धाभावमपेक्ष्यैव न तु सुदृढ इति । सूत्रार्थमाह । **यथा खल्विति** ॥ शक्ये सागरगमित्यत्र गमने शक्यमिति योज्यम् ।

## वाक्यार्थविवरणम्

**न त्वतिदृढ इति** ॥ पर्वतादिनोन्नतभूम्या वा प्रतिबन्धे सति प्रवाहविच्छेदेन समुद्रगमना-योगादिति भावः ॥ **तन्नियम इति** ॥ सूत्रखण्डस्य व्याख्यानपरं यत् 'एवं वाक्यानि सर्वाणि' इति भाष्यम् तदर्थमाह ॥ **एवमिति** ॥ स्मृतौ 'शक्ये' सत्यस्य प्रतिबन्धाभावे सतीत्यर्थः । तन्नियम इत्यस्य तात्पर्यमेवमिति 'ब्रह्मवित्तये' ब्रह्मज्ञानाय भवतीत्यर्थः ॥ विज्ञेयं सर्वतोऽपीति शेषः ।

## सूत्रभाष्यम्

**॥ ॐ दर्शयति च ॐ ॥ ५ ॥**

**'सर्वैश्च वेदैः परमो हि देवो जिज्ञास्योऽसौ नाल्पवेदैः प्रसिद्ध्येत् ।**
**तस्मादेनं सर्ववेदानधीत्य विचार्य च ज्ञातुमिच्छेन्मुमुक्षुः' इति चतुर्वेदशिखायाम् ।**

**'सर्वान्वेदान्सेतिहासान्सपुराणान्सयुक्तिकान् ।**
**सपञ्चरात्रान्विज्ञाय विष्णुर्ज्ञेयो न चान्यथा' इति ब्रह्मतर्के ॥**

## तत्त्वप्रदीपिका

**तमेतमर्थं श्रुतिश्च मुखत एव दर्शयति ॥ चशब्दात्स्मृतिश्च ॥**

## तत्त्वप्रकाशिका

**युक्तिसमर्थितार्थं श्रुतिस्मृतिभ्यां च समर्थयत्सूत्रं पठित्वा ते उदाहरति ॥ दर्शयति चेति ॥ अतो भगवद्ध्यानार्थं सर्ववेदोक्तं विज्ञेयमिति सर्वोपादेयं शास्त्रमिति सिद्धम् ।**

## भावबोधः

श्रुतिस्मृतिभ्यां चेति । 'नाना वेदैरितिहासैः पुराणैः सुज्ञेय एको भगवान् युक्तिभिश्च' इति सुष्ठुज्ञेयत्वाद्विष्णोरिति न्यायविवरणमप्यनेनोक्ततात्पर्यम् । अत्राद्ये सूत्रे सर्वपरिज्ञानं प्रतिज्ञाय तत्रोपासनाविध्यविशिष्टत्वरूपान्तरङ्गहेतूक्तिः । द्वितीये सर्वपरिज्ञानस्य बाधकमाशङ्क्य प्रतिबन्द्या तदुद्धारः । तृतीये शाखाभेदरूपबाधकस्याशक्तिनिबन्धनतयान्यथासिद्धिवचनपूर्वकं प्रकृतसाध्ये हेत्वन्तरोक्तिः । चतुर्थे सर्वेषां सर्वपरिज्ञाने मन्दानां ध्यानाभावः स्यादिति बाधकोद्धारः । पञ्चमे निर्बाधयुक्तिसिद्धार्थे श्रुतिस्मृतिरूपप्रमाणोक्तिरिति सूत्रक्रमः ।

## भावदीपः

**युक्तीति** ॥ चोदनाद्यविशेषात् स्वाध्यायस्येत्यादिनोक्तयुक्तिभिः समर्थितार्थमित्यर्थः । सौत्रश्चशब्दः स्मृतिसमुच्चायक इति भावेनोक्तम् ॥ **श्रुतिस्मृतिभ्यां चेति** ॥ **अत इति** ॥

(भावदीपः)

युक्तिश्रुतिस्मृतिरूपप्रमाणभावात्प्रतिशाखं भेदाद्युक्तेरेकस्यामिवान्यथागतिसम्भवाच्चेत्यर्थः । इति हेतोरित्यर्थः ॥ **सर्वेति** ॥ अस्य शास्त्रस्य सर्ववेदनिर्णायकत्वात्सर्वशाखाध्येत्रुपादेयत्वमिव सर्व-निर्णायके कतिपयनिर्णायकत्वस्यापि भावेन कतिपयशाखाध्येतृमन्दोपादेयमपि भवतीति भावः ।

## वाक्यार्थमुक्तावली

तमेनमर्थं श्रुतिमुखत एव दर्शयति । चशब्दात् स्मृतिश्च । अतः सर्ववेदान्तप्रत्ययं ब्रह्मेति सूत्रार्थः । 'विष्णुर्ज्ञेयो न चान्यथा' इत्यनेनैव सुज्ञेयतेत्युक्तन्यायः प्रदर्शितः । अन्यथा सर्ववेदाद्य-परिज्ञाने विष्णोः सुष्ठ्वज्ञेयत्वादिति भावः । अत्राद्ये परपक्षे साधकाभावस्योक्तिः । द्वितीये साधकान्तरमाशङ्क्य निरासः । तृतीये स्वपक्षसाधकोक्तिः । चतुर्थे मन्दानां ध्यानाभावे बाधकमाशङ्क्य निरासः । पञ्चमे उक्तार्थे श्रुतिस्मृत्युपन्यास इति सूत्रक्रमः ।

## वाक्यार्थविवरणम्

**शास्त्रम्** ॥ सर्वश्रुतिनिर्णायकं शास्त्रं सर्वोपादेयमिति सिद्धमित्यर्थः ।

## वाक्यार्थमञ्जरी

**भङ्ग्या** रीत्या ॥ उक्तमर्थं सर्वैर्वेदैरिति श्रुतिर्दर्शयति, चशाब्दात्स्मृतिश्चेत्यर्थः ।

॥ इति सर्ववेदा(न्तप्रत्यया)धिकरणम् ॥ १ ॥

## २. उपसंहाराधिकरणम्

सर्वैर्वेदैर्ज्ञेयो नोपास्योऽशक्यत्वादित्यत आह—

॥ ॐ उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च ॐ ॥ ६ ॥

सर्ववेदोक्तान्गुणान्दोषाभावांश्चोपसंहृत्यैव परमात्मोपास्यः ।

'उपास्य एकः परतः परो यो वेदैश्च सर्वैः सह चेतिहासैः ।
सपञ्चरात्रैः सपुराणैश्च देवः सर्वैर्गुणैस्तत्र तत्र प्रतीतैरिति (हि)
भाल्लवेयश्रुतिः ।

आग्नेये च—

विधिशेषाणि कर्माणि सर्ववेदोदितान्यपि ।
यथा कार्याणि सर्वैश्च सर्वाण्येवाविशेषतः ॥
एवं सर्वगुणान्सर्वदोषाभावांश्च यत्नतः ।
योजयित्वैव भगवानुपास्यो नान्यथा क्वचित्'इति ॥

समानविषये चोपसंहारः । न तु 'सोऽरोदीत्' (तै.सं.१-५-१) इत्यादीनाम् ।

'गुणैरेव स तूपास्यो नैव दोषैः कथञ्चन ।
गुणैरपि न तूपास्यो ये पूर्णत्वविरोधिनः' इति बृहत्तन्त्रे ॥

### तत्त्वप्रदीपिका

एवं तावत्सर्ववेदपरिज्ञानं मुख्यम् । तदशक्तौ यावच्छक्तिप्रयत्नलभ्यमित्युक्तं भवति । यद्यपि केषाञ्चिद्विदितप्रज्ञानां सर्वपरिज्ञानं कथञ्चित्क्रमेण शक्यम् । तथाऽपि न सर्ववेदोदितगुणोपसंहारेणोपास्यः परः । अनन्तवेदपदोदितानन्तगुणानां युगपद्बुद्ध्यावारोपणस्याशक्यात्वादित्यत आह– उपसंहार इत्यादिसूत्रम् ॥ गुणान् बलज्ञानादीन् दोषाभावानपहतपाप्मत्वादीन् । 'सर्वैर्गुणैस्तत्र तत्र प्रतीतैः'इत्यनेन पूर्वोक्तं व्याचष्टे श्रुतिः । एक इति श्रुतिपदेनार्थाभेदादिति सूत्रावयवं व्याचष्टे । एको हि परमात्मा सर्ववेदेपूपास्योऽर्थः सर्वगुणात्मक इत्यर्थः । यजेतेत्यादिविधिविषयत्वेन विधिशेषाणि

(तत्त्वप्रदीपिका)

कर्माणि ज्योतिष्टोमादीनि । अथवा प्रधानविधिशेषभूतानि कर्माणि विधिशेषाणि प्रयाजादीनि सर्वैर्वेदैः सम्भूयोदितानि सर्वैः शाखिभिः कार्याणि । समानविषये चेत्यादेरयमर्थः । गुणानामेव चोपसंहारः कार्यो नतु 'सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वं' 'रुद्रस्य त्वेवधनुरार्त्निः शिर उत्पिपेष' इत्याद्यर्थानाम् । तत्र हि 'तदधीनत्वादर्थवत्' इत्युक्तन्यायसिद्धरोदनस्वातन्त्र्यादीनां गुणानामुपसंहारः । रोदनादीनां दोषाणामनुपसंहार एव । लोके सुखज्ञानादीनां गुणानां सप्रतियोगिकत्वदर्शनेन परमात्मन्यपि तद्व्याप्तिराशङ्कनीया स्यादिति तत्परिहाराय समानविषये चेत्युक्तम् । इयं चाशङ्का प्रथमत एव पर्यहारि ॥ **दोषवर्जितमिति** ॥ अत्र तूपास्तिप्रकरणे पुनर्विशोधनार्थं सूत्रितो दोषानुपसंहारो भाष्यते ॥ **समानविषये चेति** ॥ गुणविपरीतलक्षणदोषानुपसंहारसिद्धावपि निर्दुःखत्वादयः पृथक्पृथगुपसंहर्तव्या इत्येतदर्थं दोषाभावांश्चेति पृथग्भाष्यम् । यद्यपि दोषाभावेषु गुणव्यवहारोऽस्ति । तथाऽपि लोकवेदानुसारेण भेदोक्तिरूपदेशस्पष्टत्वाय तात्पर्यादिति । न च सुखं दुःखाभवः । सुखदुःखयोः सहोपलब्धेः सर्वसम्मतत्वात् । न च सति सुखे दुःखं नास्तीति नियमः । उक्तहेतोरेव । तस्माद्गुणोक्त्यनन्तरं दोषाभावोक्तिर्न पुनरुक्तिः स्यात् । पूर्णत्वविरोधिनोऽमितभुक्त्वादयः ।

## तत्त्वप्रकाशिका

अत्र भगवज्ज्ञानसाधनोपासनाय सार्वत्रिकगुणोपसंहारसमर्थनादस्ति शास्त्रादिसङ्गतिः । तदभावे सर्वज्ञानस्य वैयर्थ्यप्रसङ्गात्समर्थनीय एव । यद्ध्यानाङ्गत्वेन सर्वज्ञानमुक्तं स परमात्मैव विषयः । किं सर्ववेदोक्तगुणानुपसंहृत्य ध्यातव्योऽन्यथा वेति सन्देहः । ध्यानविधेरुभयथापि पर्यवसानं सन्देहबीजम् । पूर्वपक्षयति ॥ **सर्वैरिति** ॥ ईश्वरः सर्ववेदोक्तप्रकारेण ज्ञातव्य एव न तु सर्वगुणानुपसंहृत्य ध्यातव्यः । तथाविधध्यानस्य कर्तुमशक्यत्वात् । ज्ञानं तु क्रमभावित्वाच्छक्यमेव । अतः सर्ववेदोक्तप्रकारेण ध्यानायोगात्तदर्थमुक्तं सर्वज्ञानं व्यर्थमिति भावः । सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ **अत इति** ॥ सर्ववेदार्थभूतानामानन्दादिगुणानामपहतपाप्मत्वादिदोषाभावानां चाभेदादविभागेनैवोपसंहारः कर्तव्यः । तथोपसंहृत्यैव परमात्मा ध्यातव्यः ॥ **कुतः** ॥ यथाविधि प्राप्तत्वात्सन्ध्यावन्दनादि कर्तव्यमेव । अन्यथा प्रत्यवायात् । तथा सर्वगुणोपसंहारेण परमात्मध्यानस्य 'उपास्य एकः' इति श्रुतौ विहितत्वात्तत्कर्तव्यमेव । अन्यथा विहितक्रियालोपेनानर्थप्राप्तेरिति भावः । तथा च श्रुतिः । 'सर्वे गुणाः सर्वदैव ह्युपास्यास्तेनैव विद्वान्विधिकृन्नान्यथा स्यात्' इति ।

(तत्त्वप्रकाशिका)

अत्र गुणा इति विधिमुखवेद्या वेदोक्तधर्माः । दोषाभावा इति निषेधमुखवेद्याः । वेदैरित्यस्य विवरणं सर्वैरिति । अत्रैव स्मृतिमाह ॥ **आग्नेये चेति** ॥ सर्ववेदोक्तगुणोपसंहारमुक्त्वा तदपवादमाह ॥ **समानेति** ॥ यद्यपि सामान्यत उक्तं सर्वे विधिमुखवेद्या वेदोक्तधर्मा उपसंहर्तव्या इति । तथापि ये समाना भगवति योग्याः पूर्णत्वाविरोधिनस्त एवोपसंहर्तव्या न त्वयोग्या रोदनादयः । अयोग्योपासनस्यानर्थफलत्वादिति भावः । अत्र स्मृतिमाह ॥ **गुणैरिति** ॥ तथा च सांकर्षणसूत्रम् । 'अचेतनासत्यायोग्यानुपास्यान्यफलत्वविपर्ययाभ्याम्' इति ।

## गुर्वर्थदीपिका

तथाविधध्यानस्येत्यत्र यौगपद्येन सकलशाखास्थगुणोपसंहाररूपस्येत्यर्थः । किं नाम्ना यागेन कदा कः किमर्थं यजेतेति शङ्कापूरकतया विधिवाक्यस्थसकलपदोक्तानां वसन्तकालयजमानस्वर्गज्योतिष्टोमानां विधिशेषत्वेऽपि यजेतेति लिङन्तपदे लिङर्थभूतविधेरुपसर्जनतया धात्वर्थभूतयजमानस्य सहैव पाठात्तथैव विधिशेषत्वमित्यभिप्रेत्योक्तं **विधिशेषवदिति** ।

## भावबोधः

**तदभाव इति** ॥ अनेन पूर्वाधिकरणोक्तस्य सर्वपरिज्ञानस्य वैयर्थ्यपरिहारादनन्तरसङ्गतिरित्युक्तं भवति ॥ **किं सर्वेति** ॥ अत्र परमात्मा सर्वगुणाननुपसंहृत्य ध्यातव्य उतोपसंहृत्येति चिन्ता । तदर्थं सर्वगुणोपसंहारे यथाविधिरस्ति, तथा तदनुपसंहारेऽपि विधिरस्त्युत नास्तीति । तदर्थं 'आत्मेत्येवोपासीत' इत्यवधारणमन्यगुणयोगव्यवच्छेदकमुतात्मत्वायोगव्यवच्छेदकमिति । तदर्थमशक्यत्वं सर्वगुणोपसंहारबाधकं भवत्युत नेति । तदर्थं सर्वविद्यानां ब्रह्मनामकत्वोक्तिः सर्वगुणानुपसंहाराभ्युपगमविरोधिन्युत नेति । तदर्थं सर्वविद्यानां ब्रह्मनामत्वेन सर्वगुणोपसंहाराभ्युपगमे विशेषप्रमाणं नास्त्युतास्तीति । न तु सर्वगुणानुपसंहृत्य ध्यातव्य इत्यादिना शक्यत्वोक्तस्याप्युपसंहारो नास्तीति न्यायविवरणमप्युक्ततात्पर्यकम् ॥ **तथा विधेति** ॥ सर्ववेदोक्तगुणविषयकस्येत्यर्थः । सर्ववेदोक्तगुणोपसंहारस्याशक्यत्वादिति भावः । अत एव न्यायविवरणोक्तोपसंहाराभावो भाष्योक्तध्यानरूपोपासनाभावं प्रति हेतुरिति ज्ञापयितुमुपसंहृत्येत्युक्तम् ।

नन्वेवं तर्हि सर्ववेदोक्तगुणज्ञानमप्यशक्यत्वादेवानुपपन्नमिति कथं सर्ववेदान्तप्रत्ययं ब्रह्मेत्युक्तमित्याशङ्कापरिहाराय भाष्ये 'सर्वैर्वेदैर्ज्ञेयः' इत्युक्तमित्यभिप्रेत्य तदभिप्रायमाह– **ज्ञानं**

(भावबोधः)

**त्विति** ॥ सूत्रे सर्ववेदान्तेत्यतः सर्ववेदेत्यस्यानुवृत्तिः । अर्थशब्दश्च गुणदोषाभावपरः । एवं सर्वगुणान् सर्वदोषाभावांश्चेति स्मृतेः । अर्थाभेदादुपसंहार इत्यन्वय इत्यभिप्रेत्य सर्ववेदेत्यादिभाष्यं प्रवृत्तमित्याशयेनाह– **सर्ववेदार्थभूतानामिति** ॥ सूत्रे न केवलमुपसंहार एव ग्राह्यः, किं तु योजयित्वैव भगवानुपास्य इत्युक्तमित्याशयेनाह– **तथोपसंहृत्यैवेति** ॥ सूत्रे 'विधिशेषवत्' इति दृष्टान्तोक्त्यैव, श्रुतिविहितत्वादिति हेतुः सूचित इत्याशयेन भाष्ये उपास्य इत्युपासनाविधायक-श्रुत्युदाहरणमित्यभिप्रेत्य विधिशेषानिति स्मृत्यनुसारेण विधिशेषवदिति सूत्रांशतात्पर्यमाह– **यथाविधिप्राप्तत्वादित्यादिना** ॥ विहितक्रियाविलोपप्रसङ्गादिति न्यायविवरणं विपक्षबाधक-प्रदर्शनपरत्वेन संयोजयितुमाह– **अन्यथेति** ॥ इष्टापत्तिपरिहारार्थमनर्थप्राप्तेरित्युक्तम् । अन्यथा विहितक्रियालोप इत्यत्र न्यायविवरणोदाहृतां श्रुतिमुदाहरति– **तथा चेति** ॥

ननु सर्ववेदोक्तगुणानिति भाष्ये गुणशब्दस्य क्रियादिसङ्ग्रहार्थं धर्ममात्रपरत्वस्यावश्यकत्वात्तेनैव दोषाभावस्यापि सङ्ग्रहोपपत्तौ किमर्थं दोषाभावानां पृथग्ग्रहणमित्यत आह– **अत्र गुणा इतीति** ॥ वेदैरित्यस्यैव विवरणमिति । वेदैरिति बहुवचनस्य त्रित्वेऽपि सम्भवादिति भावः । भगवति योग्या इति समानपदार्थमुक्त्वा ये पूर्णत्वविरोधिन इति स्मृत्यनुसारेण तत्तात्पर्यमाह– **पूर्णत्वाविरोधिन इति** ॥ **त एवेति** ॥ अनेन सूत्रभाष्ययोः चशब्दः एवार्थः । अत एव भाष्ये न तु सोऽरोदीत् इत्यादीनामिति व्यवच्छेद्यप्रदर्शनं कृतमित्युक्तं भवति । न त्वयोग्या इति । रोदनादीनां दुःख-कार्यत्वेन पूर्णत्वविरोधित्वादयोग्यत्वमित्यर्थः ॥ **अचेतनाऽसत्येति** ॥

'अचेतनमयोग्यं च तथैवातात्त्विकं क्वचित् ।
नोपासीत परोऽनर्थः स्यात्तथोपासनाकृतः ॥'

इति वचनादेतत्सूत्रार्थोऽवगन्तव्यः ।

## भावदीपः

**सार्वत्रिकगुणोपसंहारेति** ॥ अनन्तवेदपदोदितानन्तगुणानां युगपद्बुद्धावारोपणसमर्थ-नादित्यर्थः । यद्यपि भाष्ये तथोपासनासमर्थनमेव भवति । तथापि सौत्रोपसंहारोक्तेस्तदङ्ग-कोपासनापर्यन्तत्वेनोपास्य इति भाष्योक्तौ सत्यामपि सूत्राविसंवादायोपासनायोपसंहारेत्युक्तम् ।

(भावदीपः)

भगवदित्यनेन शास्त्रे साधनेत्यनेनाध्याये उपासनेत्यनेन पादेऽन्तर्भावसङ्गतिरुक्तेति ध्येयम् । एवमग्रेऽपि अत्रोपासनायेत्युक्त्या नामपादेऽन्तरधिकरण इव फलतः पादसङ्गतिरिति सूचितम् । सर्वगुणोपासनायेत्यर्थो बोध्यः । तेन हेतुहेतुमद्भावो व्यक्तः । ननु प्रागुक्तदिशा सर्ववेदोक्त-गुणपरिज्ञानेनैव तथोपासनोपपत्तौ किमनेनेत्यत आह ॥ **तदभाव इति** ॥ सर्वज्ञानस्य क्रमेणोत्पन्न-स्योपसंहारद्वारैवोपासनार्थत्वादुपसंहाराभावे प्रागुक्तसर्वज्ञानं व्यर्थमापद्येतेत्यर्थः । यद्यप्यस्त्यदृष्टं फलं गुणाः सर्वेऽपि वेत्तव्या ध्यातव्याश्च न संशयः इत्यादिना ज्ञानस्यापि विधानात् तथापि दृष्टे सम्भवत्यदृष्टायोगाद्दृष्टोपासनमेव फलमित्युपेत्य वा मोक्षरूपमहादृष्टस्य दृष्टोपासनफलार्थत्वं विनाऽयोगादित्युपेत्य वा द्वारभूतोपसंहाराभावे स्वर्गहेत्वपूर्वाभावे ज्योतिष्टोमादेरिव वैयर्थ्यं मोक्ष-रूपमहाफलवत्त्वराहित्यमेवेति भावेनैवमुक्तम् । एतेन प्रागुक्तसर्वपरिज्ञानस्य गुणाः सर्वेऽपि वेत्तव्या इति विधानेनापरोक्षैकसाध्यमोक्षेतरफलार्थत्वसिद्धावपि मोक्षहेतुदृष्टिकारणध्यानांगोपसंहारार्थत्वा-भावान्न महाफलार्थत्वमित्याक्षेपेणात्र पूर्वपक्षप्रवृत्तेः पूर्वेणास्याधिकरणस्याक्षेपिकी सङ्गतिरपि सूचिता ।

भाष्ये विषयीकृतपरमात्मनोऽप्रकृतत्वभ्रान्तिं निराह ॥ **यद्ध्यानेति** ॥ **ध्यानविधेरिति** ॥ निदिध्यासितव्य इत्यादिविधेरित्यर्थः । एतेनोपसंहारानुपसंहारयोरन्यतरस्मिन्नपि पक्षे न ध्यान-विधिविरोध इति सूचितम् । आकांक्षितपूर्त्या भाष्यं व्याचष्टे ॥ **ईश्वर इति** ॥ नोपास्योऽशक्य-त्वादिति भाष्योक्तसाध्यसाधनभावं व्यक्तीकर्तुमुक्तं न तु सर्वगुणानुपसंहृत्येति । एतेन सर्वैर्वेदै-रित्येतदत्राप्यन्वेतीति सूचितम् । एतेन न्यायविवरणे अशक्यत्वात्कस्याप्युपसंहारो नास्तीत्युप-संहाराभावेऽशक्यत्वं हेतूकृतमत्र पुनरुपासनाभावे तद्विरुध्यत इति निरस्तं साक्षात्परंपराभिप्रायेण ग्रन्थद्वयेन साध्यनिर्देश इति तात्पर्यस्य प्रकटितत्वात् । कथं तर्हि ज्ञेय इति वा भाषणमित्यत आह ॥ **ज्ञानं त्विति** ॥ **अत इति** ॥ अशक्यत्वेनोपसंहारायोगादित्यर्थः । ध्यानायोगे हेतुरयम् ॥ **तदर्थमुक्तमिति** ॥ पूर्वोक्तिलब्धमेतदिति ज्ञेयम् । सूत्रे अर्थाभेदादित्यत्र पूर्वस्मात्सर्ववेदपदमनुवर्त्य सूत्रखण्डार्थं तावदाह ॥ **सर्ववेदार्थेति** ॥ **अभेदादिति** ॥ ऐक्यादित्यर्थः । सर्ववेदेषूपास्यपरमात्मनेति शेषः । अविभागेनेति फलितोक्तिः । कस्यापि गुणस्य त्यागमकृत्वेत्यर्थः ।

यद्वाऽभेदादित्यस्यैवार्थोऽविभागेनेति । परमात्मना विभागाभावेनेत्यर्थः । सर्ववेदेष्वेकस्यैव हरेरुपास्यत्वात्सर्ववेदोक्तगुणानां दोषाभावानां च तदभेदाद्धेतोर्वा तदविभागेन प्रकारेण वा

(भावदीपः)

कस्याप्यत्यागेनेति वोपसंहारः कार्य इत्यर्थः । सूत्रखण्डस्य भावार्थतया भाष्यं योजयति ॥ **तथोपसंहृत्येति** ॥ गुणदोषाभावानविभागेनोपसंहृत्यैकबुद्ध्यारूढान् कृत्वेत्यर्थः । विधिमुखवेद्या गुणा निषेधमुखवेद्या दोषा भावा इत्यग्रे व्यक्तम् । सूत्रे कर्मवदिति वाच्ये विधिशेषवदित्युक्त्या लब्धहेतुं वदन् विधिशेषाणीति स्मृत्यनुरोधेन सौत्रदृष्टान्तांशं व्याचष्टे ॥ **यथेति** ॥ शिष्यत इति शेषः । कर्मणि घञ्प्रत्ययः । विधिना विधायकश्रुत्या शिष्टं विहितं विधिशेषः तद्वदित्यर्थः सूचितः । भाष्यस्थैवकारस्योपास्य एवेत्यन्वयमुपेत्योक्तम् ॥ **कर्तव्यमेवेति** ॥ परमात्मध्यानमित्यनुकर्षः । एवकारव्यावर्त्यरूपाकरणेऽर्थे विहितक्रियालोपप्रसङ्गादिति न्यायविवरणोक्तबाधकं संयोजयति ॥ **अन्यथा विहितेति** ॥ प्रसङ्गस्यानिष्टताद्योतनायानर्थप्राप्तेरित्युक्तम् । अनिष्टादिकारिणामित्यत्रोक्तदिशा नरकादिप्राप्तेरित्यर्थः । एवं ध्याने कृते सत्येव विहितकृतिरन्यथा तु तल्लोप इत्यर्थस्य भाष्योक्तश्रुतावस्फुटत्वान्न्यायविवरणोक्तश्रुतिमाह ॥ **तथा च श्रुतिरिति** ॥

ननु प्राप्तेश्चेत्यत्र गुणैः सर्वैरुपास्योऽसौ ब्रह्मणेति वक्ष्यमाणस्मृत्योपसंहारस्य ब्रह्माधिकारिकत्वात्तस्य च निधिर्वा धारणवदित्यादौ विधिनियता मनुष्या, अनियता देवा, ब्रह्मैव स्वेच्छानियत इत्यादिवक्ष्यमाणश्रुतिस्मृत्यादिबलेन ब्रह्मणः प्रत्यवायाभावात्कथं तेनोपसंहारकर्तव्यत्वोक्तिः । मैवम् । देवाधिकारिकबहुगुणोपसंहारस्याप्यत्राभिमतेः । अदृश्यत्वादिगुणक इत्यत्राभावेऽपि गुणपदप्रयोगेन दोषाभावस्यापि गुणत्वाद्भाष्ये कथं पृथगुक्तिः क्रियारूपधर्मानुक्तिश्चेत्यतोऽवान्तरोपाधिभेदात्पृथगुक्तिरित्याह ॥ **अत्र गुणा इतीति** ॥ वेदैरुपास्य इत्युक्तावपि प्रत्येकमपि वेदानामुपासनाहेतुत्वोपपत्त्या सम्भूय हेतुत्वस्य स्पष्टमप्रतीतेस्तल्लाभाय सर्वैरित्युक्तमिति भावेनाह ॥ **वेदैरित्यस्य विवरणं सर्वैरितीति** ॥ अन्यथा प्रकृतानुपयोगादिति भावः ॥ **स्मृतिमाहेति** ॥ तदर्थस्तु यजेत इत्यादिविधिविषयत्वेन विधिशेषाणि कर्माणि ज्योतिष्टोमादीनि । अथवा प्रधानविधिशेषभूतानि कर्माणि विधिशेषाणि प्रयाजादीनि सर्वैर्वेदैः सम्भूयोदितानि सर्वैः शाखिभिरिति तत्वप्रदीपोक्तेः । समानपदार्थमाह ॥ **भगवति योग्या इति** ॥ योग्यत्वज्ञानं केन धर्मेणेत्यत उक्तम् ॥ **पूर्णत्वाविरोधिनस्त एवेति** ॥ सूत्रभाष्ययोश्चोऽवधारण इति भावः । 'सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वं, रुद्रस्य त्वेव धनुरार्त्निश्शिर उत्पिपेष' इत्यादौ तदधीनत्वादर्थवत् इत्युक्तन्यायेन रोदनस्वातन्त्र्यादय उपसंहार्या न रोदनादय इत्यर्थः ॥ **स्मृतिमिति** ॥ स्मृतौ पूर्णत्वविरोधिनः मितभुक्त्वादयो ग्राह्याः । स्मृतावयोग्यपदाभावादाह ॥ **तथा च साङ्कर्षणसूत्रमिति** ॥

## अभिनवचन्द्रिका

**सार्वत्रिकगुणेति ॥** सार्वत्रिकगुणोपसंहारस्य असम्भावनां निराकृत्य समर्थनादित्यर्थः । एतेनास्मिन्नधिकरणेऽनुपसंहारस्यापि वक्ष्यमाणत्वात् विशिष्य गुणोपसंहारसमर्थनादिति कथनमयुक्तमिति परास्तम् ॥ **तदभाव इति ॥** समर्थनाभावे सर्वज्ञानस्य वैयर्थ्यप्रसङ्गात् उपसंहारलक्षणप्रयोजनेन यत्सफलत्वं तदभावप्रसङ्गादित्यर्थः । तेन सर्वपरिज्ञानस्य संशयविपर्ययनिरासेन स्वयोग्यध्यानाधिकारार्थत्वात्, 'वैयर्थ्यप्रसङ्गात्' इत्ययुक्तमिति परास्तम् । ननु दोषाभावानामपि गुणत्वात्कथं पृथग्ग्रहणमित्यतः कुरुपाण्डवन्यायेनेति भावेनाह– **अत्र गुणा इति ॥ तदपवादमाहेति ॥**

ननु इदमपवादाभिधानमयुक्तम् । प्राप्त्यभावात् । तथा हि वेदोक्तगुणा उपास्या इति ह्युक्तम् । न च रोदनादयो वेदोक्ताः । तेषां दोषत्वेन वेदतात्पर्याविषयत्वात् । तदुक्तम् 'तात्पर्यं नैव दूषणम्' इति । ततश्चापवादो व्यर्थ इति चेत्, सत्यम्, वेदोक्तस्यार्थस्योपसंहारवचने रोदनादीनामुपसंहारस्याऽनुक्तत्वादपवादो व्यर्थः तथापि वेदतात्पर्यविषयीभूतस्यैवोपसंहार इति इममर्थं दृढीकर्तुं सूत्रकारः उपसंहारोऽर्थाभेदाद्विधिशेषवदिति सूत्रखण्डेन वेदप्रतीतार्थस्य सामान्येनोपसंहारमुक्त्वा 'समाने च' इति खण्डेनोपस्थितापवादमाह । न चास्मिन्पक्षे रोदनादीनामुपसंहारप्राप्तिरस्ति । तत्प्रापकस्य वेदप्रतीतत्वस्याऽऽनन्दादिगुणेष्विवाऽत्रापि भावात् । भाष्ये गुणैरपि न तूपास्य इति । येऽन्येषां गुणाः तज्जातीयैरपि भगवान्नोपास्यः, के ते यैर्नोपास्य इत्यत उक्तम् ये पूर्णत्वविरोधिन इति । रजतजनकरोदनं रुद्रस्य गुणोऽपि ईश्वरस्य दोषत्वान्नोपासनायोग्यमिति भावः । टीकायाम् **अचेतनेति ॥** अचेतं न च पाषाणादि, असत्यं शशविषाणादि, तथा उपास्यायोग्यो गुणश्चेत्येतानि अनुपास्यानि । अचेतनासत्योपासनयोरफलत्वात्, तृतीयस्यानर्थहेतुत्वादिति साङ्कर्षणसूत्रार्थः ।

## वाक्यार्थमुक्तावली

**तदभाव इति ॥** अनेन पूर्वाधिकरणोक्तस्य सर्वपरिज्ञानस्य वैय्यर्थ्यपरिहारादनन्तरसङ्गतिरित्युक्तं भवति ॥ **किं सर्वेति ॥** अत्र परमात्मा सर्वगुणाननुपसंहृत्य ध्यातव्य उतोपसंहृत्येति चिन्ता । तदर्थं तदशक्यमप्रामाणिकमुत शक्यं प्रामाणिकं वेति ॥ **ध्यानविधेरिति ॥** तेन मन्तव्यो निदिध्यासितव्य इति सामान्यविधेरित्यर्थः । पूर्वपक्षयतीति । अशक्यत्वमित्युक्तन्यायप्रदर्शन-

(वाक्यार्थमुक्तावली)

पूर्वकमिति ग्राह्यम् । सर्वैरित्यस्य सर्वविधैः करणभूतैरित्यर्थमभिप्रेत्योक्तं सर्ववेदोक्तेति । सर्वैरनुपास्य इत्यपि सम्बन्धः । सर्वैर्गुणैर्नोपास्यः । तत्तात्पर्यमाह ॥ **सर्वगुणेति** ॥ **अशक्यत्वादिति** । युगपत्स्वभुजवत्सर्वगुणानामेकबुद्ध्यारोहस्याशक्यत्वादित्यर्थः । सूत्रे सर्ववेदान्तेत्यतः सर्ववेदेत्यस्यावृत्तिः । अर्थशब्दश्च गुणदोषाभावपरः । सर्ववेदार्थभेदादुपसंहार इत्यन्वय इत्यभिप्रेत्य सर्ववेदेत्यादिभाष्यं प्रवृत्तमित्याशयेनाह ॥ **सर्ववेदार्थभूतानामिति** ॥ अविभागेनैते उपास्याः । एते नोपास्या इति विभागं विना सूत्रे उपसंहारपदेन न केवलमुपसंहार एव ग्राह्यः । किन्तु तत्पूर्वकोपासनमपि गृह्यत इति भावेन भाष्ये उपसंहृत्यैव परमात्मा उपास्य इत्युक्तम् । तद्भावमाह । उपसंहारः कर्तव्यः ॥ **तथोपसंहृत्यैवेति** ॥ विधिशेषवदित्यत्र शिष्यन्त इति शेषाणि । विधिभिः शेषाणि विधिशेषाणि । कर्माणि वेति दृष्टान्तोक्त्यैव श्रुतिविहितत्वादिति हेतुः सूचित इत्याशयेन भाष्ये उपास्य इति उपासनाविधायकश्रुत्युदाहरणमिति भावेन विधिशेषाणीति स्मृत्यनुसारेण विधिशेषवदिति सूत्रखण्डतात्पर्यं वदन् विधिक्रियेत्युक्तन्यायमप्यारूढं दर्शयति ॥ **कुत इत्यादिना** ॥

ननु क्रियादिसङ्ग्रहाय गुणपदस्य धर्मपरत्वे वाच्ये तेनैव दोषाभावग्रहणसम्भवात् व्यर्थं पृथगुक्तिरित्यत आह ॥ **अत्र गुणा इति** ॥ यद्वा समाने च इति सर्वगुणोपसंहारमुक्त्वा तदपवाद उच्यते स न युक्तः । अत्र सर्ववेदोक्तगुणोपसंहारस्य कर्तव्यत्वोक्त्या रोदनादिदोषाणामुत्सर्गतः प्राप्त्यभावादयुक्तः । यद्यत्र गुणपदेन वेदोक्तभावरूपधर्ममात्रग्रहणं विवक्षित्वा दोषाणां प्राप्तिरभिप्रेयते तथापि समाने चेत्यपवादो व्यर्थः । अर्थपदेन दोषाभावस्य गृहीतत्वेन तेनैव तदपवादलाभादित्यत आह ॥ **अत्र गुणा इति** ॥ गुणपदेन वेदोक्तभावरूपधर्ममात्रग्रहणादस्ति रोदनादीनां दोषाणामुत्सर्गतः प्राप्तिः । दोषाभावपदेनाभावरूपधर्मग्रहणान्न तेन दोषापवादः । तथा च गुणदोषाभावपदाभ्यां भावाभावरूपवेदोक्तयावद्धर्मोक्त्या रोदनमिति भुक्त्यादीनां भावरूपधर्माणामत्यशनित्वाभावादीनामभावरूपधर्माणां चोपसंहारप्रसक्तौ समाने चेत्यनेन पूर्णत्वाविरोधिनां भावरूपधर्माणामभावरूपधर्माणां चोपसंहारः । न तु तद्विरोधि रोदनादिभावरूपाणां बहुभोक्तृत्वाभावाद्यभावरूपधर्माणां चोपसंहार इत्यपवादो वर्तिष्यत इति भावः ।

ननु 'वेदैश्च सर्वैः सह चेतिहासैः' इत्यत्र वेदादिभिरुपास्यत्वमुच्यते तत्र वेदादिप्रतीतगुणैरुपास्यत्वमेव विवक्षितम् । तथा च सर्वैर्गुणैस्तत्र तत्र प्रतीतैरिति पुनरुक्तमित्यत आह

(वाक्यार्थमुक्तावली)

।। **वेदैरित्यस्येति** ।। प्रतीकग्रहणमेतत् । वेदैश्च सर्वैः सह चेतिहासैः सपञ्चरात्रैः सपुराणैश्चेत्यस्य सर्वैर्गुणैस्तत्र तत्र प्रतीतैरित्यनेन पूर्वोक्तं व्याचष्टे ।। **श्रुतिरिति** ।। भावबोधादौ तु 'वेदैश्च सर्वैः' इत्यत्र वेदैरित्यस्य सर्वैरिति विवरणम् । अन्यथा बहुवचनस्य त्रित्वे पर्यवसानं स्यादिति भाव इत्युक्तम् ।। **गुणोपसंहारमुक्त्वेति** ।। भावरूपधर्मोपसंहारमुक्त्वेत्यर्थः ।। **समाना भगवति योग्या इति** ।। अस्य पुरुषस्येयं भार्या समानेत्युक्ते योग्येत्येवार्थप्रतीतेरिति भावः ।। **न त्वयोग्या इति** ।। एतेन सौत्रश्चशब्दोऽवधारणार्थ इत्युक्तं भवति । गुणैरेव स तूपास्य इत्यस्यायमर्थः । उपास्यतया सामान्यत उक्तानां भावरूपधर्माणां मध्ये गुणैरानन्दादिभिरेवोपास्यः न तु ये पूर्णत्वविरोधिनो रोदनादयस्तैर्दोषैरुपास्यः । गुणैरुपास्य इत्यत्राप्यपवादमाह । ये पूर्णत्वविरोधिनो मितभुक्त्वादयस्तैर्गुणैरपि न तूपास्यः । मितभुक्त्वस्य लोके गुणत्वेऽपि ईश्वरे पूर्णत्वविरोधित्वात् । ईश्वरे बहुभुक्त्वस्यैव गुणत्वादिति । तदुक्तं 'बहुभुक्त्वं यथा दोषो नृषु नैव हरेः क्वचित्' इति ।

ततश्चायं सूत्रार्थः, सर्ववेदोक्तानामर्थानां भावाभावरूपाणामभेदात् एते उपसंहर्तव्या एते नैवोपसंहर्तव्या इति विभागमन्तरेणोपसंहारः युगपद्बुद्धावारोपलक्षणः कार्यः । उपसंहृत्य च परमात्मा तद्गुणात्मकत्वेनोपास्यः । कुतः । विधिशेषवत् विधिशिष्टसन्ध्यावन्दनादिवत् ध्यानस्यापि विहितत्वात् । स चोपसंहारः समाने योग्ये एव पूर्णत्वाविरोधित्वेन न तु तद्विरोधिषु रोदनादिष्विति ।

## तत्त्वसुबोधिनी

अनन्तरसङ्गतिमाह ।। **तदभाव इति** ।। सर्वगुणोपसंहारसमर्थनाभाव इत्यर्थः । तथा च पूर्वाधिकरणोक्तसर्वपरिज्ञानस्य वैयर्थ्यपरिहारादनन्तरसङ्गतिरिति भावः ।। **उभयेपीति** ।। सर्वगुणोपसंहारेऽनुपसंहारे चेत्यर्थः ।। **तथाविधस्येति** ।। सर्ववेदोक्तगुणविधायकस्येत्यर्थः । सर्ववेदोक्तगुणोपसंहारस्याशक्यत्वादिति भावः । नन्वेवं तर्हि सर्ववेदोक्तगुणज्ञानमप्यशक्यत्वादेवानुपपन्नमिति कथं सर्ववेदान्तप्रत्ययं ब्रह्मेत्युक्तमित्याशङ्क्याह ।। **ज्ञानं त्विति** ।। सूत्रे सर्ववेदान्तेत्यस्यानुवृत्तिः अथशब्दश्च गुणदोषाभावपरः । एवं चार्थभेदादुपसंहार इत्यभिप्रेत्य सर्ववेद इत्यादिभाष्यं प्रवृत्तमित्याशयेनाह ।। **सर्ववेदार्थभूतानामिति** ।। सूत्रे न केवलं उपसंहार एव ग्राह्यः किं तु योजयित्वैव भगवानुपास्य इति स्मृत्यनुसारेणोपसंहृत्य उपासनामपि ग्राह्यमित्यभिप्रेत्योपसंहृत्यैव परमात्मोपास्य इत्युक्तमित्याशयेनाह ।। **तथोपसंहृत्यैवेति** ।।

(तत्त्वसुबोधिनी)

सूत्रे विधिशेषवदिति दृष्टान्तोक्त्यैव श्रुतिविहितत्वादिति हेतोः सूचित इत्याशयेन वा भाष्ये उपास्य इत्युपासनाविधायकश्रुत्युदाहरणमित्यभिप्रेत्य विधिशेषवदिति सूत्रांशतात्पर्यमाह ॥ **यथाविधिप्राप्तत्वादिति** ॥ एवं च विधिशेषवदित्यस्य विधिशिष्टवद्विधिविहित सन्ध्यावन्दनादिवदित्यर्थः ॥ **अन्यथेति** ॥ विहितस्याकर्तव्यत्वेत्यर्थः इष्टापत्तिपरिहारार्थं अनर्थप्राप्तेरित्युक्तम् । अन्यथाविहितक्रियाऽयोग इत्यत्र श्रुतिमाह ॥ **तथा चेति** ॥ ननु सर्ववेदोक्तान् गुणानिति भाष्ये गुणशब्दस्य क्रियादिसङ्ग्रहार्थं धर्ममात्रस्यावश्यकत्वात् तेनैव दोषाभावस्यापि सङ्ग्रहोपपत्तौ किमर्थं दोषाभावानां पृथग्ग्रहणं इत्यत आह ॥ **अत्र गुणा इति** ॥ वेदैरित्यस्यैव विवरणमिति । वेदैरिति बहुवचनस्य त्रित्वेऽपि सम्भवादिति भावः ॥ **भगवति योग्या इति** ॥ समाः । पदार्थमुक्त्वा ये पूर्णत्वविरोधिनः इति स्मृत्यनुसारेण तात्पर्यमाह ॥ **पूर्णत्वविरोधिन एवेति** ॥ **ते एवेति** ॥ अनेन सूत्रभाष्ययोश्चशब्दः एवार्थः ॥ **न त्वयोग्या इति** ॥ रोदनादीनां दुःखकार्यत्वेन पूर्णत्वविरोधित्वादयोग्यमित्यर्थः ॥ **अचेतनासत्येति** ॥ अचेतनं चेतनादन्यत् अयोग्यं असत्यं अतात्विकं एतानि नोपास्यानि । अफलत्वविपर्ययाभ्यामित्यर्थः ।

## वाक्यार्थविवरणम्

**वैय्यर्थ्येति** ॥ सर्वशाखापरिज्ञानस्य सार्वत्रिकगुणोपसंहारार्थकत्वात् । तस्य कर्तव्यत्वाभावे तद्वैय्यर्थ्यमेवेति भावः ॥ **यद्ध्यानेति** ॥ यत्कर्मध्यानेत्यर्थः । ध्यातव्यः तद्वत्त्वेनेति शेषः । एकस्मिन्नेव प्रकरणे सर्वगुणोक्तिसम्भावनार्थपरिहाराय सूत्रे परोवरीयस्त्वादिवदित्युदाहरणमुक्तम् । 'तत्र तस्येव' इति सप्तम्यर्थे वतिरित्याशयेन भाष्ये परोवरीयस्त्वादिष्वित्युक्तम् । एकस्मिन् प्रकरणे सर्वगुणोक्तिसम्भावना न कार्या । यथा परोवरीयस्त्वादिप्रकरणे 'तावदेव ह्युक्तं' न सर्वगुणजातमित्यर्थः ।

## वाक्यार्थमञ्जरी

**सार्वत्रिकेति** ॥ सर्वशाखोक्तेत्यर्थः ॥ **उपसंहारेति** ॥ तत्र तत्रोक्तान्बुद्ध्या युगपत्सङ्गृह्य भगवति योजनेत्यर्थः । **ध्यानविधेः** निदिध्यासितव्य इत्यस्य ॥ **तथाविधेति** ॥ सर्ववेदोक्तगुणविषयकस्येत्यर्थः । सर्ववेदोक्तगुणोपसंहारस्याशक्यत्वादिति भावः ॥

(वाक्यार्थमञ्जरी)

अर्थाभेदात् सर्ववेदार्थानां गुणादीनामभेदेनाविभागेन सर्वानविहायेति यावत् । उपसंहारः कार्यः कुतः विधिशेषवत् विधिभिः शिष्यन्त उपदिश्यन्त इति विधिशेषाणि विध्युक्तकर्माणि सर्ववेदोक्तानि यथा विहितत्वात्क्रियन्ते तद्वदुपसंहारोऽपि कार्यः । सचोपसंहारः समाने च योग्यगुणविषय एव कार्य इत्यर्थः । तथाऽविभागेन अन्यथा विहितक्रियालोप इत्येतत्कुत इत्यत आह ॥ **तथा च श्रुतिरिति** ॥ विद्वांस्तेनैव विधिकृत्स्यान्नान्यथेत्यन्वयः । ननु सर्ववेदोक्तगुणानित्यत्र गुणशब्दो धर्ममात्रपरः अन्यथा क्रियाद्यसङ्ग्रहापत्तेः । दोषाभावोऽपि धर्म एव अतः कथं पृथग्ग्रहणमित्यत आह ॥ **अत्र गुणा इतीति** ॥ **वेदैरित्यस्येति** ॥ वेदैरिति बहुवचनस्य त्रित्वेऽपि सम्भवादिति भावः । समानशब्दार्थमुक्त्वा तत्तात्पर्यमाह ॥ **पूर्णत्वाविरोधिन इति** ॥ **न त्वयोग्या इति** ॥ रोदनादीनां दुःखकार्यत्वेन पूर्णत्वविरोधित्वादयोग्यत्वमिति भावः ॥ **अचेतनेति** ॥ अचेतनादीनि त्रीण्यनुपास्यानि कुतः निष्फलत्वाद्विपरीतफलत्वाच्चेत्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ अन्यथात्वं (च) शब्दादिति चेन्नाविशेषात् ॐ ॥ ७ ॥**

**'आत्मेत्येवोपासीत' (बृ.उ.३-४-७) इतिशब्दादुपसंहारस्यान्यथात्वमिति चेन्न । एते गुणा नोपास्या इति विशेषवचनाभावात् ॥**

**'सर्वैर्गुणैरेक एवेशिताऽसावुपासितव्यो न तु दोषैः कदाचित्' इति विशेषवचनाच्च । आत्मेत्यवधारणमनात्मत्वनिवृत्त्यर्थम् ॥**

## तत्त्वप्रदीपिका

अन्यथात्वमित्यादिसूत्रम् ॥ 'आत्मेत्येवोपासीत' इत्यवधारणादेतावदेवोपासीत नाधिकमित्यवगमादुपसंहारस्याकर्तव्यत्वमिति चेन्न । एते गुणा नोपास्या इति विशेषवचनाभावात् । अवधारणमेव तदिति चेन्न । अन्यार्थत्वात् । आत्मेत्येवोपासीत भगवन्तं न त्वानात्मेत्ययोग व्यवच्छेदार्थत्वात् ।

## तत्त्वप्रकाशिका

उक्तमाक्षिप्य समादधत्सूत्रमुपन्यस्याक्षेपांशं तावद्व्याचष्टे ॥ **अन्यथात्वमिति** ॥ यदुक्तं सर्वगुणोपसंहारस्य कर्तव्यत्वं तदयुक्तम् । 'आत्मेत्येवोपासीत' इत्युपसंहारवदनुपसंहारस्यापि विहितत्वात् । अतः सर्वगुणोपसंहारे विहितक्रियालोपप्रसङ्गात्तस्याकर्तव्यत्वमिति भावः । परिहारांशं व्याचष्टे ॥ **नेति** ॥ न सर्वगुणोपसंहाराभावः ॥ **तथा हि** ॥ किमसौ प्रामाणिकत्वादङ्गीक्रियते सर्वगुणोपसंहारे प्रमाणाभावाद्वा । नाद्यः । एते गुणा नोपसंहर्तव्या इति विशेषप्रमाणाभावात् ॥ **नापि द्वितीयः** ॥ सर्वैर्गुणैरिति श्रुतेरेव विद्यमानत्वादिति भावः । नन्वात्मत्वावधारणादेवैतदन्ये गुणा नोपास्या इति सिद्ध्यतीत्यत आह ॥ **आत्मेति** ॥ निरवकाशश्रुतिविरोधात्सावकाशावधारणस्य नान्ययोगव्यवच्छेदकत्वमिति भावः ।

## गुर्वर्थदीपिका

'आत्मेत्येवोपासीत'इति श्रुतावन्ययोगव्यवच्छेत्रैवकारेणान्योपासनस्य प्रतिषेधोऽपि कृत इति भावेनोक्तं अनुपसंहारस्येति । गुणान्तरानुपसंहारस्येत्यर्थः । किमसावित्यत्र असौ गुणान्तरानुपसंहार इत्यर्थः । सावकाशावधारणस्येत्यत्र चतुर्मुखपक्षे आत्मपदेन सर्वगुणानामपि ग्रहणेन व्यवच्छेद्यगुणान्तराभावादात्मत्वेनैवोपास्य इत्येवकारस्य विशेषणसङ्गतिं कृत्वा न त्वनामत्वेनोपास्य इत्यात्मत्वायोगपरत्वेनापि सावकाशत्वान्नान्ययोगव्यवच्छेदकत्वं न सजातीयगुणान्तरव्यवच्छेदकत्वमित्यर्थः ।

## भावबोधः

अनुपसंहारस्यापि **विहितत्वादिति** ॥ तथा च 'विधिविशेषवत्' इत्यनेनोक्तविहितत्वहेतुः सत्प्रतिपक्ष इत्यर्थः ॥ **विशेषप्रमाणाभावादिति** ॥ अनेनानुपसंहारसाधकविहितत्वहेतोरसिद्धिरुक्ता भवति ॥ **नान्ययोगव्यवच्छेदकत्वमिति** ॥ अनेनावधारणस्यान्यथासिद्धिं वदता विशेषप्रमाणाभावः समर्थितो भवति ।

## भावदीपः

उक्तमाक्षिप्येत्युक्तं व्यञ्जयन् भाष्यं व्याचष्टे ॥ **यदुक्तमित्यादिना** ॥ अवधारणेन एतावदेवोपासीत नाधिकमित्यवगमादनुपसंहारस्य विहितत्वमिति भावः ॥ **अत इति** ॥ अनुप-

(भावदीपः)

संहारस्यापि विहितत्वादित्यर्थः । एतेन भाष्ये शब्दादित्यनन्तरमनुपसंहारस्यापि विहितत्वादिति शेषो दर्शितः । तस्य हेतोः साक्षात्साध्येनानन्वयान्न्यायविवरणोक्तमेव हेतुमत्रापि संयोजयति ॥ **विहितक्रियेति** ॥ अन्यथात्वमित्यस्यार्थोऽकर्तव्यत्वमिति । एतेनोपसंहारः कार्यो विहितत्वाज्ज्योतिष्टोमादिवदिति प्रागुक्तानुमाने तर्कपराहतिरुक्ता भवति । भाष्योक्तहेतुद्वयं विकल्पमुखेन विवृणोति ॥ **किमसाविति** ॥ उपसंहाराभाव इत्यर्थः । कल्पकाभावमाशङ्क्याह ॥ **निरवकाशेति** ॥ एतेनानुपसंहारस्य विधानाभावादुपसंहारकर्तव्यत्वानुमाने तर्कपराहतिरुद्धृता भवति । एतेनैव 'आत्मेत्येवोपासीत' इति श्रुतिविरोधोऽप्युक्तानुमानस्यापोढो भवति ।

## अभिनवचन्द्रिका

अनुपसंहारस्यापि **विहितत्वादिति** ॥ कतिपयमात्रगुणोपसंहारस्यापि विहितत्वादित्यर्थः । **विहितक्रियालोपप्रसङ्गादिति** ॥ विहितायाः आत्मत्वमात्रगुणोपसंहारलक्षणक्रियायाः लोपप्रसङ्गात् । त्यागप्रसङ्गादित्यर्थः । **किमसाविति** ॥ यद्यपि अनुपसंहारस्य प्रामाणिकत्वं परेणोक्तमिति प्रश्नायोगः, तथापि परोक्तस्य प्रमाणस्याऽनुपसंहारार्थत्वाभावात् तद्वाक्यं परोक्तार्थे प्रमाणमेव न भवतीति द्योतनाय प्रश्नः कृतः । नायं सर्वगुणोपसंहारो युक्त इति । केनापि सर्वथा न सर्वगुणोपसंहारः कर्तव्यः । अशक्यत्वादित्याशङ्क्यां येषां न सर्वगुणोपसंहारे शक्तिः नास्त्येव, तेषां सर्वगुणोपसंहार इति केषाञ्चिदधिकारिणामनुपसंहारमभ्युपगम्य, शक्तानां तु सम्भवत्येव सर्वगुणोपसंहार इति गूढाशयेन परिहरत्सूत्रमुपन्यस्येत्यर्थः । एतेन यद्यभ्युपगमः न तर्हि परिहारः, यदि परिहारः न तर्ह्यभ्युपगम इति, अभ्युपगमश्च परिहारश्चेति माता वन्ध्येतिवद्व्याहतमिति परास्तम् । अभ्युपगमपरिहारयोर्भिन्नविषयत्वाङ्गीकारात् ।

## वाक्यार्थमुक्तावली

सूत्रे उपसंहार इत्येतत्पदमुपसंहारस्येति षष्ठ्यन्ततयानुवर्तते । चोऽप्यर्थः । उपसंहारस्यान्यथात्वमकर्तव्यत्वं कुतः । अनुपसंहारस्यापि शब्दविहितत्वात् । तथा च विधिशेषवदित्यनेन उक्तो हेतुः प्रकरणसम इति भावेन व्याचष्टे ॥ **यदुक्तमित्यादिना** ॥ **अनुपसंहारस्येति** ॥ आत्मेत्येवोपास्येत्यवधारणात् सर्वाधिकारिसाधारणं स्वामित्वमात्रमुपासीत नातोऽधिकमित्यवगमादिति

## तत्त्वप्रकाशिका

**उक्तमाक्षिप्य समादधत्सूत्रमुपन्यस्याक्षेपांशं तावद्व्याचष्टे ॥ अन्यथात्वमिति ॥** यदुक्तं **सर्वगुणोपसंहारस्य कर्तव्यत्वं तदयुक्तम् । 'आत्मेत्येवोपासीत' इत्युपसंहारवदनुपसंहारस्यापि** विहितत्वात् । **अतः सर्वगुणोपसंहारे** विहितक्रियालोपप्रसङ्गात्तस्याकर्तव्यत्वमिति भावः । परिहारांशं व्याचष्टे ॥ **नेति ॥ न सर्वगुणोपसंहाराभावः ॥ तथा हि ॥** किमसौ प्रामाणिकत्वादङ्गीक्रियते **सर्वगुणोपसंहारे प्रमाणाभावाद्वा । नाद्यः । एते गुणा नोपसंहर्तव्या इति विशेषप्रमाणाभावात् ॥ नापि द्वितीयः ॥ सर्वैर्गुणैरिति** श्रुतेरेव विद्यमानत्वादिति भावः । **नन्वात्मत्वावधारणादेवैतदन्ये गुणा नोपास्या इति सिद्ध्यतीत्यत आह ॥ आत्मेति ॥** निरवकाशश्रुतिविरोधात्सावकाशा-वधारणस्य नान्ययोगव्यवच्छेदकत्वमिति भावः ।

## गुर्वर्थदीपिका

'आत्मेत्येवोपासीत'इति श्रुतावन्ययोगव्यवच्छेत्रैवकारेणान्योपासनस्य प्रतिषेधोऽपि कृत इति भावेनोक्तं अनुपसंहारस्येति । गुणान्तरानुपसंहारस्येत्यर्थः । किमसावित्यत्र असौ गुणान्तरानुपसंहार इत्यर्थः । सावकाशावधारणस्येत्यत्र चतुर्मुखपक्षे आत्मपदेन सर्वगुणानामपि ग्रहणेन व्यवच्छेद्य-गुणान्तराभावादात्मत्वेनैवोपास्य इत्येवकारस्य विशेषणसङ्गतिं कृत्वा न त्वनामत्वेनोपास्य इत्यात्मत्वायोगपरत्वेनापि सावकाशत्वान्नान्ययोगव्यवच्छेदकत्वं न सजातीयगुणान्तरव्यवच्छेद-कत्वमित्यर्थः ।

## भावबोधः

अनुपसंहारस्यापि **विहितत्वादिति** ॥ तथा च 'विधिविशेषवत्' इत्यनेनोक्तविहितत्वहेतुः सत्प्रतिपक्ष इत्यर्थः ॥ **विशेषप्रमाणाभावादिति** ॥ अनेनानुपसंहारसाधकविहितत्वहेतोरसिद्धिरुक्ता भवति ॥ **नान्ययोगव्यवच्छेदकत्वमिति** ॥ अनेनावधारणस्यान्यथासिद्धिं वदता विशेषप्रमाणाभावः समर्थितो भवति ।

## भावदीपः

उक्तमाक्षिप्येत्युक्तं व्यञ्जयन् भाष्यं व्याचष्टे ॥ **यदुक्तमित्यादिना** ॥ अवधारणेन एतावदेवोपासीत नाधिकमित्यवगमादनुपसंहारस्य विहितत्वमिति भावः ॥ **अत इति** ॥ अनुप-

(भावदीपः)

संहारस्यापि विहितत्वादित्यर्थः । एतेन भाष्ये शब्दादित्यनन्तरमनुपसंहारस्यापि विहितत्वादिति शेषो दर्शितः । तस्य हेतोः साक्षात्साध्येनानन्वयान्न्यायविवरणोक्तमेव हेतुमत्रापि संयोजयति ॥ **विहितक्रियेति** ॥ अन्यथात्वमित्यस्यार्थोऽकर्तव्यत्वमिति । एतेनोपसंहारः कार्यो विहितत्वाज्ज्योतिष्टोमादिवदिति प्रागुक्तानुमाने तर्कपराहतिरुक्ता भवति । भाष्योक्तहेतुद्वयं विकल्पमुखेन विवृणोति ॥ **किमसाविति** ॥ उपसंहाराभाव इत्यर्थः । कल्पकाभावमाशङ्क्याह ॥ **निरवकाशेति** ॥ एतेनानुपसंहारस्य विधानाभावादुपसंहारकर्तव्यत्वानुमाने तर्कपराहतिरुद्धृता भवति । एतेनैव 'आत्मेत्येवोपासीत' इति श्रुतिविरोधोऽप्युक्तानुमानस्यापोढो भवति ।

## अभिनवचन्द्रिका

अनुपसंहारस्यापि **विहितत्वादिति** ॥ कतिपयमात्रगुणोपसंहारस्यापि विहितत्वादित्यर्थः । **विहितक्रियालोपप्रसङ्गादिति** ॥ विहितायाः आत्मत्वमात्रगुणोपसंहारलक्षणक्रियायाः लोपप्रसङ्गात् । त्यागप्रसङ्गादित्यर्थः । **किमसाविति** ॥ यद्यपि अनुपसंहारस्य प्रामाणिकत्वं परेणोक्तमिति प्रश्नायोगः, तथापि परोक्तस्य प्रमाणस्याऽनुपसंहारार्थत्वाभावात् तद्वाक्यं परोक्तार्थे प्रमाणमेव न भवतीति द्योतनाय प्रश्नः कृतः । नायं सर्वगुणोपसंहारो युक्त इति । केनापि सर्वथा न सर्वगुणोपसंहारः कर्तव्यः । अशक्यत्वादित्याशङ्कां येषां न सर्वगुणोपसंहारे शक्तिः नास्त्येव, तेषां सर्वगुणोपसंहार इति केषाञ्चिदधिकारिणामनुपसंहारमभ्युपगम्य, शक्तानां तु सम्भवत्येव सर्वगुणोपसंहार इति गूढाशयेन परिहरत्सूत्रमुपन्यस्येत्यर्थः । एतेन यद्यभ्युपगमः न तर्हि परिहारः, यदि परिहारः न तर्ह्यभ्युपगम इति, अभ्युपगमश्च परिहारश्चेति माता वन्ध्येतिवद्व्याहतमिति परास्तम् । अभ्युपगमपरिहारयोर्भिन्नविषयत्वाङ्गीकारात् ।

## वाक्यार्थमुक्तावली

सूत्रे उपसंहार इत्येतत्पदमुपसंहारस्येति षष्ठ्यन्ततयानुवर्तते । चोऽप्यर्थः । उपसंहारस्यान्यथात्वमकर्तव्यत्वं कुतः । अनुपसंहारस्यापि शब्दविहितत्वात् । तथा च विधिशेषवदित्यनेन उक्तो हेतुः प्रकरणसम इति भावेन व्याचष्टे ॥ **यदुक्तमित्यादिना** ॥ **अनुपसंहारस्येति** ॥ आत्मेत्येवोपास्येत्यवधारणात् सर्वाधिकारिसाधारणं स्वामित्वमात्रमुपासीत नातोऽधिकमित्यवगमादिति

(वाक्यार्थमुक्तावली)

भावः । अविशेषादिति भिन्नपदत्वमभिप्रेत्य विशेषवचनाभावादित्युक्तम् । नाविशेषादित्येकपदत्वं न समासं विशेषवचनाभावस्याभावो नाविशेष इत्यर्थं चाभिप्रेत्य विशेषवचनादित्युक्तमित्यभिप्रेत्य व्याचष्टे । तथा हीत्यादिना । अनात्मत्वनिवृत्त्यर्थमिति भाष्यस्य आत्मत्वव्यतिरेकनिवृत्त्यर्थोऽनुसन्धेयः ॥ **नान्ययोगेति** ॥ उत्तमाधिकारिणः प्रतीति भावः । यद्वा अन्ययोगव्यवच्छेदकत्वमात्रं नेति भावः । तेनान्ययोगव्यवच्छेदकत्वस्य वक्ष्यमाणत्वात् विरोध इति निरस्तम् ।

## तत्त्वसुबोधिनी

**अनुपसंहारस्यापीति** ॥ तथा च विधिशेषवदित्यनेनोक्तविधिविहितहेतुः सत्प्रतिपक्ष इत्यर्थः ॥ **तस्येति** ॥ उपसंहारस्येत्यर्थः ॥ **विशेषप्रमाणाभावादिति** ॥ एवं चानुपसंहारसाधकविहितत्वहेतोः असिद्धिरुक्ता भवति ॥ **नान्ययोगव्यवच्छेदकत्वमिति** ॥ अनेनावधारणस्यान्यथासिद्धिं वदता विशेषप्रमाणाभावः समर्थितो भवति ।

## वाक्यार्थमञ्जरी

शब्दात् आत्मेत्येवेत्यवधारणश्रुतेः अन्यथात्वं प्रागुक्तसर्वोपसंहारस्याकर्तव्यत्वमिति चेन्न अविशेषात् एते गुणा नोपसंहार्या इति विशेषप्रमाणाभावादित्यर्थः ॥ **अनुपसंहारस्यापीति** ॥ अवधारणस्यान्ययोग्यव्यवच्छेदकत्वेन सर्वोपसंहारनिषेधकत्वेन निषेधस्यैव सर्वानुपसंहारविधित्वादिति भावः ॥ **सावकाशेति** ॥ अयोगव्यवच्छेदकत्वेन सावकाशेत्यर्थः ।

## सूत्रभाष्यम्

**ओं न वा प्रकरणभेदात्परोवरीयस्त्वादिवत् ओं ॥ ८ ॥**

**प्रकरणभेदान्न वोपसंहारः कार्यः । परोवरीयस्त्वादिषु तावदेव ह्युक्तम् ।**

## तत्त्वप्रदीपिका

न वेत्यादि सूत्रम् ॥ ‘स एष परोवरियानुद्गीथः स एषोऽनन्तः परोवरीयो हास्य भवति परोवरियसो ह लोकाञ्जयति य एतमेवंविद्वान् परोवरियांसमुद्गीथमुपास्त’ इत्यादिषु प्रकरणेषु कियताञ्चिदेवोपास्तिः फलवती ह्युक्ता ।

## तत्त्वप्रकाशिका

नायं सर्वगुणोपसंहारो युक्तोऽशक्यत्वादित्याशङ्कामभ्युपगमेन परिहरत्सूत्रं पठित्वा व्याचष्टे ॥ **न वेति** ॥ एवमुपसंहारः कर्तव्यतयोक्तः न चासौ कर्तव्यः । परोवरीयो वैश्वानरादिप्रकरणभेदात् । यद्येकैकस्य सर्वगुणोपासनं स्यान्न तर्हि प्रकरणानि भिद्येरन् कारणाभावादिति भावः । नन्वेकैकस्मिन्नेव प्रकरणे सर्वगुणोक्तिसम्भवात्प्रकरणभेदेऽपि सर्वगुणोपासनोपपत्तिरित्यत आह ॥ **परोवरीयस्त्वादिष्विति** ॥ 'स एष परोवरीयानुद्गीथः स एषोऽनन्तः' इत्यादिप्रकरणेषु परोवरीयस्त्वाद्येवोपास्यमुक्तं न सर्वगुणा इत्यर्थः ।

## गुर्वर्थदीपिका

पूर्वसूत्रोदितसर्ववेदोक्तगुणोपसंहारो द्विविधः नानाशाखोक्तसकलगुणोपसंहारः कतिपय-गुणोपसंहारश्चेति । तत्राद्यस्य केवलं ब्रह्मणैव कार्यस्य सर्वैरकार्यत्वं चेदभ्युपगच्छाम इति भावेनोक्तम् **अभ्युपगमेनेति** ॥ सर्वेषां सर्वगुणोपास्तावशक्तिः सूत्रकृताऽप्यङ्गीकृतैवेति भावः । इत्यादिप्रकरणेष्वित्यत्राऽऽदिपदेन 'यस्त्वेतमेव प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते' इति वैश्वानरप्रकरणवाक्यं गृह्यते । तत्सर्वगुणोपसंहरणमुक्तं कस्यचिदुत्तमाधिकारिण उक्त इत्यस्यार्थ-कथनम् । उक्तोऽप्युपसंहार इति कस्यचिदुपसंहारोऽप्युक्त इति योजना ।

## भावबोधः

इत्यादिप्रकरणेष्वित्यादिशब्देन 'यस्त्वेनमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरम्' इति वैश्वानरप्रकरणं गृह्यते ।

## भावदीपः

**अभ्युपगमेनेति** ॥ उत्तरनये वक्ष्यमाणदिशाऽधिकारिविशेषमभिप्रेत्येति भावः । सूत्रेऽनुक्तेः केन विकल्प इत्यतस्तद्दर्शयन्भाष्यं व्याचष्टे ॥ **एवमिति** ॥ विहितत्वात्तर्कपराहत्याद्यभावादित्युक्त-प्रकारेणेत्यर्थः । स एष परोवरीयानुद्गीथः स एषोऽनन्त इत्यादिपरोवरीयः प्रकरणमभिविमानं वैश्वानरमुपास्त इति वैश्वानरप्रकरणं 'यो वै भूमा तत्सुखम्' इति भूमप्रकरणमित्यादि-प्रकरणभेदादित्यर्थः ॥ **न तर्हीति** ॥ प्रकरणभेदो हि तत्तन्मात्रोपासनार्थ एव न तु तस्य प्रयोजनान्तरमस्तीत्याध्यानायेत्यत्र सेत्स्यमानत्वादिति भावः ॥

## अभिनवचन्द्रिका

**न चासौ कर्तव्य इति ॥** अशक्तेनेत्यर्थः ॥ **यद्येकैकस्येति ॥** यदि कस्मिंश्चिदुपासने कस्यचिदधिकारः, कस्यचिन्नेत्येवंरूपो विभागो न स्यात्। अपि तु सर्वेषां सर्वगुणोपासनेऽधिकारः स्यात् तर्हि प्रकरणानि न भिद्येरन्निति भावः । ननु भवेदयं प्रकरणभेदः सर्वगुणोपसंहाराभावस्य ज्ञापकः, यद्येकैकस्मिन्प्रकरणे सर्वगुणानामुक्तिरसम्भाविता स्यात् । न चैवं 'काकेभ्यो दधि रक्ष्यताम्' इत्यादौ काकमात्रग्रहणेऽपि उपलक्षणतया मार्जारादिग्रहणवत्, तत्तत्प्रकरणेषु शब्दविशेषसद्भावेऽपि उपलक्षणतया सर्वगुणग्रहणसम्भवात् सर्वोपसंहारोपपत्तिरिति भावेन शङ्कते– **नन्विति ॥ स एष परोवरीयानिति ॥** अस्मिन्प्रकरणे तावत् यावन्तो गुणाः श्रूयन्ते तेषामेव ग्रहणम्, नोपलक्षणतया सर्वगुणानां ग्रहणमित्यभ्युपगन्तव्यम् । अन्यथा परोवरीयशब्देनैव उद्गीथत्वादीनामपि ग्रहणसम्भवेन उद्गीथ इत्यादिशब्दवैय्यर्थ्यप्रसङ्गात्। अनेनैव न्यायेन सर्वाण्यपि प्रकरणानि स्वरसलभ्यगुणपराण्येव नोपलक्षणतया सर्वगुणपराणीति भावः । सूत्रयोजना तु न वा सर्वगुणोपसंहारः कार्यः प्रकरणभेदात् । तच्च प्रकरणं प्रतिपाद्यतया परोवरीयस्त्वादिमात्रवदिति । अत्र सूत्रे मतुपो मकारस्य वकारश्छान्दसः । उक्तमाक्षिप्यसमादधदिति । पूर्वोक्तमनुपसंहारमाक्षिप्य, उत्तमाधिकारिणामुपसंहारमङ्गीकृत्य, असमर्थपुरुषविषयमनुपसंहारं समादधत्सूत्रमित्यर्थः । एतेन 'संज्ञातश्चेत्' इति सूत्रेऽनुपसंहारसमर्थनादर्शनात् 'आक्षिप्य समादधत्' इत्ययुक्तमिति परास्तम् । साक्षादनुपसंहारसमर्थनाभावेऽपि उपसंहारस्तूत्तमानां स्यादिति गूढाशयेनोपसंहाराङ्गीकारेणाऽसमर्थानामनुपसंहारस्य सूचनात् ।

## वाक्यार्थमुक्तावली

**अभ्युपगमेनेति ॥** नन्वेवं तर्ह्यस्य सूत्रस्य सार्वत्रिकगुणोपसंहारसमर्थकेऽस्मिन्नधिकरणेऽप्रवेश एव भवेदिति चेन्न, अशक्तेरधिकारिविशेषनिष्ठत्वात् । शक्तानां उपासनाविरोध इति तात्पर्यस्योत्तरत्र स्पष्टत्वात् । सूत्रे उपसंहार इत्यस्ति । वाशब्दो व्यवस्थितविकल्पे । परोवरीयस्त्वादिवदिति षष्ठ्यर्थे वतिः । परोवरीयो वैश्वानरादिप्रकरणानामिव सर्वेषामपि प्रकरणानां विधानां भेदात् । न वोपसंहारः कार्य इत्यर्थमभिप्रेत्य व्याचष्टे ॥ **न चासाविति ॥** परोवरीयस्त्वादिवदिति सप्तम्यर्थे वतिः । प्रथमार्थे च । 'तत्र तस्यैव' इति विधेः प्रायिकत्वात् । तथा च परोवरीयस्त्वादि-

(वाक्यार्थमुक्तावली)
प्रकरणेषु परोवरीयस्त्वादिकमिव प्रकरणभेदात् तत्तत्प्रकरणप्रतिपाद्यगुणानां भेदात् पृथक्त्वात्तावदेवोपास्य इत्युक्तम् । न सर्वगुणोपसंहार इति भावेन व्याचष्टे ॥ **स एष परोवरीयानिति** ॥

## तत्त्वसुबोधिनी

अस्तु प्रकरणभेदः तथापि सर्वगुणोपसंहारः कुतो नेत्यत आह ॥ **यदीति** ॥ इत्यादिप्रकरणेष्विति । यस्त्वेतमेवं प्रादेशमात्रमिति विमानमिति वैश्वानरप्रकरणं गृह्यते ईप्सित फलाभावविपरीतफलप्राप्तिभ्यामित्यर्थः ।

## वाक्यार्थमञ्जरी

सर्वोपसंहारो न कार्यः, कुतः प्रकरणभेदात् । परोवरीयो वैश्वानरादिप्रकरणानां भिन्नत्वाद्भिन्नप्रकरणोक्तगुणानां भिन्नैरेवोपास्यत्वेनैकेन सर्वेषामनुपास्यत्वात् तर्ह्येकस्मिन्नेव प्रकरणे सर्वोक्तिरस्त्वित्यत आह ॥ **परोवरीयस्त्वादिवदिति** ॥ यथा स एषोऽनन्त इत्यादिप्रकरणेषु सर्वोत्तमत्वादिकमेवोक्तं न गुणान्तरं तथा प्रकरणान्तरेऽपीत्यर्थः ॥ **कारणाभावादिति** ॥ अधिकारिभेदस्यैव प्रकरणभेदप्रयोजकत्वेन सर्वप्रकरणानामेकोपास्यगुणप्रतिपादकत्वे अधिकार्यैक्येन प्रकरणभेदो न स्यादित्यर्थः ॥ **इत्यादिप्रकरणेष्विति** ॥ 'यस्त्वेतमेवंप्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते' इति वैश्वानरप्रकरणमादिशब्देन गृह्यते ।

## सूत्रभाष्यम्

### ॥ ॐ संज्ञातश्चेत्तदुक्तमस्ति तु तदपि ॐ ॥ ९ ॥

सर्वविद्या उक्त्वा 'सोऽहं नामविदेवास्मि नाऽऽत्मवित्' (छां.उ.७-१-३)इति वचनात्सर्वस्य ब्रह्मनामत्वात्तदुपसंहारः कार्यः ।

'नामत्वात्सर्वविद्यानां गुणानामुपसंहृतिः ।
कार्यैव ब्रह्मणि परे नात्र कार्या विचारणा'इति च ब्रह्मतर्के ।

इति चेत्सत्यम् । उक्तो ह्युपसंहारः । तत्प्रमाणमप्यस्त्येव ।

'नाम वा एता ब्रह्मणः सर्वविद्यास्तस्मादेकः सर्वगुणैर्विचिन्त्यः' इति कौण्डिन्य श्रुतौ ॥

## तत्त्वप्रदीपिका

**'ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदम्'** इत्यादि सर्वविद्या उक्त्वा **'सोऽहं नामविदेवास्मि नाऽत्मवित्'**इति सनत्कुमारं प्रति नारदस्य तत्त्वजिज्ञासोर्वचनात् सर्वस्य शब्दराशेर्ब्रह्मनामत्वात्तदुदितसर्वगुणानुपसंहारे तन्नाम्नि ब्रह्मणोऽनुपास्तिप्रसङ्गादुपसंहारः कार्य इति चेत्सत्यम् । कर्तव्य एवोपसंहार इत्युक्तम् । यावच्छक्तिप्रयत्नेनोपसंहारे फलाधिक्यबोधनार्थं बहुप्रमाणग्रहणार्थं च पुनः पुनरुपसंहारोपन्यासः । वेदयन्तीति विद्या वेदादयः ।

## तत्त्वप्रकाशिका

उक्तमाक्षिप्य समादधत्सूत्रमुपन्यस्याक्षेपांशं तावद्व्याचष्टे ।। **संज्ञात इति** ।। कर्तव्य एव सर्ववेदोक्तगुणोपसंहारः । सर्वविद्यानां ब्रह्मनामत्वेन तद्गुणाभिधायकत्वात् । गुणाभिधानस्य चोपसंहारार्थत्वात् । सर्वविद्यानां ब्रह्मनामत्वं च 'ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदम्' इति नारदेनात्मनः सर्वविद्यावेदित्वमुक्त्वा सोऽहं सर्वविद्यावेत्ताऽऽत्मनामविदेव तन्निर्णयाज्ञानान्नात्मविदित्युक्तत्वादवगम्यत इति भावः । 'यद्वै किंचिदध्यगीष्ट नामैवैतद्' इत्युत्तरवाक्यानुगुण्यान्मन्त्रविदित्यस्याप्ययमेवार्थः । श्रुत्यन्तरमेवैतत् । अभ्युपगमरूपं समाधानांशं व्याचष्टे ।। **सत्यमिति** ।। सर्वविद्यानां भगवन्नामत्वेन तद्गुणाभिधायकत्वाद्गुणाभिधानस्य चोपसंहारार्थत्वात् कर्तव्यः सर्वगुणोपसंहार इति यत्तत्सत्यं युक्तमेव नास्माकं विरोधि । कथं अस्माभिरप्युपसंहारस्य कर्तव्यत्वेनोक्तत्वादस्यास्मदिष्टत्वादिति भावः । न केवलं गुणाभिधानस्योपसंहारार्थत्वयुक्त्या नामत्वाद्विद्यानां सर्वगुणोपसंहारसिद्धिः किं तु श्रुत्याऽपीत्याह ।। **तदिति** ।। अतः सर्वगुणोपसंहारस्य कर्तव्यत्वात्सार्थकमेव सर्वपरिज्ञानमिति सिद्धम् ।

## गुर्वर्थदीपिका

तन्निर्णायकाज्ञानादित्यस्य तदर्थनिर्णायकाज्ञानादित्यर्थः ।

## भावबोधः

गुणोपसंहारस्य कर्तव्यत्वे सर्वविद्यानां ब्रह्मनामत्वं कथं हेतुरित्यत आह– **तद्गुणाभिधायकत्वादिति** ।। अप्रयोजकत्वपरिहारार्थमाह– **गुणाभिधानस्य चेति** ।। 'ज्ञानार्थमथ ध्यानार्थं गुणानां समुदीरणा' इति वचनादित्यर्थः ।।

(भाववोधः)

ननु छन्दोगाः 'सोऽहं मन्त्रविदेवास्मि' इति पठन्ति । तत्कथं भाष्ये 'सोऽहं नामविदेवोक्तं' इत्यत आह– **यद्वै किञ्चिदिति ॥ मन्त्रविदित्यस्यापीति** ॥ एवं पाठोपनिषदोऽपीत्यर्थः । तथा च भाष्यमुपनिषदर्थानुवादपरमिति भावः । अत्राद्ये सूत्रे उपसंहारस्य कर्तव्यत्वे विहितत्वरूप-प्रमाणोक्तिः । द्वितीये तस्य प्रकरणसमत्वमाशङ्क्य तन्निरासः । तृतीये उपसंहारस्य सर्वाशक्यत्वाद-कर्तव्यत्वमित्याशङ्कापरिहारार्थं सप्रमाणकमनुपसंहाराभ्युपगमः । चतुर्थे तृतीयोक्तमनुपसंहार-माक्षिप्योपसंहारस्याप्यभ्युपगमेन तत्परिहार इति सूत्रक्रमः ।

## भावदीपः

आकाङ्क्षाक्रमेण भाष्यं व्याचष्टे ॥ **कर्तव्य एवेति** ॥ सर्वस्येत्यस्यार्थः सर्वविद्यानामिति । वेदयन्तीति विद्या वेदादयस्तेषामित्यर्थः । नामत्वस्य साक्षादहेतुत्वादाह ॥ **तद्गुणेति** ॥ **उपसंहारार्थत्वादिति** ॥ आध्यानाय प्रयोजनाभावादिति वक्ष्यमाणन्यायेन ध्यानार्थतया तदनुकूलोप-संहारार्थत्वादित्यर्थः । छान्दोग्ये सप्तमेऽध्याये सनत्कुमारं प्रति नारदवाक्यतया सोऽहं मन्त्रविदेवा-स्मीत्येव पाठो न तु नामविदिति । तथा च कथं नामविदिति भाष्यमित्यतस्तदर्थभाषणमेतदिति भावेनाह ॥ **यद्वै किञ्चिदिति** ॥ **उत्तरेति** ॥ छान्दोग्यस्थोत्तरवाक्येत्यर्थः ॥ **श्रुत्यन्तरमेवैतदिति** ॥ भाष्योक्तवाक्यमित्यर्थः ॥ **अभ्युपगमेति** ॥ उत्तमाधमाधिकार्यपेक्षया द्वयोरविरोधोऽग्रे व्यक्त इति भावः । प्रकरणभेदोक्तिगतिरस्मिन्पक्षे आध्यानायेत्यत्र वक्ष्यत इति तात्पर्यम् । तेन सौत्रः संज्ञातहेतुर्नाप्रयोजक इति ज्ञेयम् । अपिशब्दार्थं व्यनक्ति ॥ **न केवलमिति** ॥ श्रुत्यापीत्यनेन भाष्ये श्रुतावित्यत्रोक्तो ह्युपसंहार इत्यनुषङ्गः सूचितः । नन्वेवमन्यथात्वमित्यतः प्रागेव संज्ञात्वयुक्ति-श्रुतिभ्यां चेति सूत्रेण आर्जवमिति चेत्सत्यं प्रकरणभेदादुपसंहारापवादशङ्काव्युदासाय तदनन्तर-मेवात्र निर्देशः प्राचीनविहितत्वयुक्तिस्मारणाय शङ्कोत्तररूपेण च विन्यासः । अत एव यावच्छक्ति-प्रयत्नेनोपसंहारे फलाधिक्यबोधनार्थं बहुप्रमाणग्रहणार्थं च पुनः पुनरुपसंहारोपन्यास इत्युक्तं तत्वप्रदीपे ॥ **अत इति** ॥ निर्बाधविहितत्वानुमानात्सर्वस्य ब्रह्मनामत्वान्यथानुपपत्तिरूपयुक्तिबलात् श्रुतिबलाच्चेत्यर्थः । उपसंहारकर्तव्यत्वे हेतुत्रयम् । सौत्रप्रतिज्ञांशार्थं हेतूकृत्य फलोक्त्या भाष्यार्थोपसंहारः सर्वेत्यादिना ।

## अभिनवचन्द्रिका

**सर्वविद्यानां ब्रह्मनामत्वेनेति ॥** यद्यपि अत्र वेदोक्तसर्वगुणोपसंहारं साधयता पूर्वपक्षिणा गुणाभिधानस्य चोपसंहारार्थत्वादुपसंहारः कार्य इत्येव वक्तव्यं न तु सर्वविद्यानां भगवन्नामत्वं तत्साध्ये वेदानां भगवद्गुणप्रतिपादकत्वे विवादाभावात्, विवक्षिते चोपसंहारकर्तव्यत्वे तस्य हेतुत्वाभावात् । तथापि कर्मकाण्डस्य कर्मपरत्वेन भगवद्गुणप्रतिपादकत्वाभावात् न सर्ववेदोक्त-गुणोपसंहारः कार्य इति तटस्थाऽऽशङ्कानिवृत्तये सर्वस्यापि वेदस्य भगवद्गुणप्रतिपादकत्वं समर्थयितुं सर्वविद्यानां भगवन्नामत्वेनेत्युक्तमिति बोध्यम् । ननु 'सोहं नामविदेवास्मिन्नात्मवित्' इति पाठबलेन सर्वविद्यानां ब्रह्मनामत्वव्युत्पादनमयुक्तम्, 'सोऽहं मन्त्रविदेवास्मि' इति पाठबलेन मन्त्रत्वावगमात् । न च भाष्योदाहृतपाठबलेन मन्त्रविदिति पाठगतमन्त्रपदस्यापि नामत्वमेवार्थ इति युक्तं, वैपरीत्यस्यापि सम्भवादित्यत आह– **यद्वै किं चैतदिति ॥**

पूर्वपक्षस्तु– नेश्वरः सर्ववेदोक्तगुणोपसंहारेण ध्यातव्यः । अशक्यत्वात् । ततश्च तदर्थमापाद्यं सर्वज्ञानं व्यर्थमिति ॥

सिद्धान्तस्तु– सर्ववेदार्थानाम् आनन्दादिगुणानामपहतपाप्मत्वादिदोषाभावानां च केषाञ्चि-दुपसंहारः केषाञ्चिन्नेति विभागमकृत्वोपसंहारेण परमात्मा ध्यातव्यः । 'सर्वे गुणाः सर्वदैव ह्युपास्या' इति विहितत्वात् । अन्यथा विहित सन्ध्यावन्दनाद्यकरणे प्रत्यवायवत् प्रत्यवायः स्यात् । ननु किं वेदप्रतीताः सर्वेऽपि धर्मा उपसंहर्तव्याः, न, वेदतात्पर्यविषयीभूता एवोपास्याः, न त्वतात्पर्यविषयीभूताः । 'सोरोदीत्' इत्यादिना प्रतीता रोदनादयः, दुःखकार्याणां तेषां परमेश्वरेऽयोगात्, अयोग्योपासनस्यानर्थहेतुत्वात् । ननु 'आत्मेत्येवोपासीत' इति गुणान्तरोप-संहारनिषेधेन आत्मत्वमात्रोपासनस्य विहितत्वात्सर्वगुणोपसंहारे विहितक्रियालोपप्रसङ्ग इति चेत्, न एते गुणा नोपसंहर्तव्या इति विशेषप्रमाणाभावात् । 'सर्वैर्गुणैरेक एवेशिताऽसावुपासितव्यो न तु दोषैः कथंचित्' इति विशेषवचनाच्च । निरवकाशै तच्छ्रुतिविरोधादेव 'आत्मेत्येवोपासीत' इत्यवधारणस्याऽनात्मत्वरूपदोषव्यवच्छेदकत्वमेव न तु गुणान्तरव्यवच्छेदकत्वमिति तदपि नाऽनुपसंहारे प्रमाणम् । अथवा पनुरस्त्वनुपसंहार एव सर्वगुणानां प्रकरणभेदात् । अन्यथा प्रकरणानि न भिद्येरन्, सर्वाण्यपि प्रकरणान्युपलक्षणतया सर्वगुणपराणीति सर्वोपसंहृतिः कार्यैवेति

(अभिनवचन्द्रिका)

न मन्तव्यम् । परोवरीयस्त्वादिप्रकरणस्य श्रूयमाणगुणमात्रपरत्वात् । अन्यथा एकेनैव शब्देन सर्वगुणोपलक्षणसम्भवेनोद्गीथादिशब्दवैयर्थ्यं स्यात् ।

ननु कर्तव्य एव सर्वगुणोपसंहारः सर्ववेदानां भगवन्नामत्वेन गुणाभिधायित्वात् । गुणाभिधानस्य च ध्यानार्थत्वादिति चेत्, अस्तु अस्माभिरपि सर्वगुणोपसंहारस्योक्तत्वेनेष्टत्वात् । 'नाम वा एता ब्रह्मणः सर्वा विद्या तस्मादेकः सर्वैर्गुणैर्विचिन्त्य' इति कौण्डिन्यश्रुतौ विहितत्वेन प्रामाणिकत्वाच्च । अतः सर्वगुणोपसंहारस्य कर्तव्यत्वात् सार्थकमेव सर्वपरिज्ञानमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

संज्ञात इति भावप्रधानम् । प्रकरणपदेन प्रकृतत्वात् विद्यानामित्यन्वेति । उपसंहार इत्यनुवर्तत इति भावेन प्रवृत्तं सर्वस्य ब्रह्मनामत्वादुपसंहारः कार्यः इति भाष्यं व्याचष्टे । **कर्तव्य एवेत्यादिना** ॥ गुणोपसंहारस्य कर्तव्यत्वे विद्यानां नामत्वं कथं हेतुरित्यत उक्तं तद्गुणाभिधायकत्वादिति । अप्रयोजकत्वपरिहारायोक्तं गुणाभिधानस्येति । आध्यानायेति वक्ष्यमाणत्वादिति भावः । न नु च्छन्दोगाः सोऽहं मन्त्रविदेवास्मीति पठन्ति । तत्कथं भाष्ये नामविदिति पाठ इत्यत आह ॥ **श्रुत्यन्तरमेवेति** ॥ 'कश्छन्दसां योगमावेद धीरः को धिष्ण्यां प्रतिवाचं पपाद'इति श्रुतिरित्यर्थः । तर्हि तद्विरोध इत्यत उक्तं मन्त्रविदित्यस्यापीति । छन्दोगश्रुतिबलान्नामविदिति शाखाया अपि मन्त्रविदित्येवार्थः किन्न स्यादित्यत उक्तं **यद्वै किञ्चिदिति** ॥ भावबोधे तु मन्त्रविदित्यस्यापीति । एवं पाठ उपनिषदोऽपीत्यर्थः । तथा च भाष्यमुपनिषदर्थानुवादपरमिति भाव इत्युक्तम् । तदुक्तमस्ति तु तदपीत्यत्र तुरवधारणे । तदुपसंहारस्य कर्तव्यत्वमुक्तम् । **तदपि** तत्प्रमाणमपि । न केवलं युक्तिरूपं श्रुतिरूपप्रमाणमप्यस्त्येवेत्यर्थः । अत्राद्ये उपसंहारस्य कर्तव्यत्वे विहितत्वरूपहेतूक्तिः । द्वितीये तस्य प्रकरणसमत्वमाशङ्क्य निरासः । तृतीये उपसंहारस्य कर्तव्यत्वेऽशक्यत्वरूपपरोक्तन्यायबाधमाशङ्क्य सप्रमाणकमुपसंहारस्याप्यभ्युपगमः । चतुर्थे तृतीयोक्तमुपसंहारमाक्षिप्योपसंहारस्य कर्तव्यत्वे पुनः प्रमाणोक्तिरिति सूत्रक्रमः । यावच्छक्तिप्रयत्नेनोपसंहारे फलाधिक्यबोधनार्थं बहुप्रमाणसङ्ग्रहार्थं च पुनःपुनरुपसंहारोपन्यासः ।

## अभिनवचन्द्रिका

**सर्वविद्यानां ब्रह्मनामत्वेनेति ॥** यद्यपि अत्र वेदोक्तसर्वगुणोपसंहारं साधयता पूर्वपक्षिणा गुणाभिधानस्य चोपसंहारार्थत्वादुपसंहारः कार्य इत्येव वक्तव्यं न तु सर्वविद्यानां भगवन्नामत्वं तत्साध्ये वेदानां भगवद्गुणप्रतिपादकत्वे विवादाभावात्, विवक्षिते चोपसंहारकर्तव्यत्वे तस्य हेतुत्वाभावात् । तथापि कर्मकाण्डस्य कर्मपरत्वेन भगवद्गुणप्रतिपादकत्वाभावात् न सर्ववेदोक्त-गुणोपसंहारः कार्य इति तटस्थाऽऽशङ्कानिवृत्तये सर्वस्यापि वेदस्य भगवद्गुणप्रतिपादकत्वं समर्थयितुं सर्वविद्यानां भगवन्नामत्वेनेत्युक्तमिति बोध्यम् । ननु 'सोहं नामविदेवास्मिन्नात्मवित्' इति पाठबलेन सर्वविद्यानां ब्रह्मनामत्वव्युत्पादनमयुक्तम्, 'सोऽहं मन्त्रविदेवास्मि' इति पाठबलेन मन्त्रत्वावगमात् । न च भाष्योदाहृतपाठबलेन मन्त्रविदिति पाठगतमन्त्रपदस्यापि नामत्वमेवार्थ इति युक्तं, वैपरीत्यस्यापि सम्भवादित्यत आह– **यद्वै किं चैतदिति ॥**

पूर्वपक्षस्तु– नेश्वरः सर्ववेदोक्तगुणोपसंहारेण ध्यातव्यः । अशक्यत्वात् । ततश्च तदर्थमापाद्यं सर्वज्ञानं व्यर्थमिति ॥

सिद्धान्तस्तु– सर्ववेदार्थानाम् आनन्दादिगुणानामपहतपाप्मत्वादिदोषाभावानां च केषाञ्चि-दुपसंहारः केषाञ्चिन्नेति विभागमकृत्वोपसंहारेण परमात्मा ध्यातव्यः । 'सर्वे गुणाः सर्वदैव ह्युपास्या' इति विहितत्वात् । अन्यथा विहित सन्ध्यावन्दनाद्यकरणे प्रत्यवायवत् प्रत्यवायः स्यात् । ननु किं वेदप्रतीताः सर्वेऽपि धर्मा उपसंहर्तव्याः, न, वेदतात्पर्यविषयीभूता एवोपास्याः, न त्वतात्पर्यविषयीभूताः । 'सोरोदीत्' इत्यादिना प्रतीता रोदनादयः, दुःखकार्याणां तेषां परमेश्वरेऽयोगात्, अयोग्योपासनस्यानर्थहेतुत्वात् । ननु 'आत्मेत्येवोपासीत' इति गुणान्तरोप-संहारनिषेधेन आत्मत्वमात्रोपासनस्य विहितत्वात्सर्वगुणोपसंहारे विहितक्रियालोपप्रसङ्ग इति चेत्, न एते गुणा नोपसंहर्तव्या इति विशेषप्रमाणाभावात् । 'सर्वैर्गुणैरेक एवेशिताऽसावुपासितव्यो न तु दोषैः कथंचित्' इति विशेषवचनाच्च । निरवकाशै तच्छ्रुतिविरोधादेव 'आत्मेत्येवोपासीत' इत्यवधारणस्याऽनात्मत्वरूपदोषव्यवच्छेदकत्वमेव न तु गुणान्तरव्यवच्छेदकत्वमिति तदपि नाऽनुपसंहारे प्रमाणम् । अथवा पनुरस्त्वनुपसंहार एव सर्वगुणानां प्रकरणभेदात् । अन्यथा प्रकरणानि न भिद्येरन्, सर्वाण्यपि प्रकरणान्युपलक्षणतया सर्वगुणपराणीति सर्वोपसंहृतिः कार्यैवेति

(अभिनवचन्द्रिका)

न मन्तव्यम् । परोवरीयस्त्वादिप्रकरणस्य श्रूयमाणगुणमात्रपरत्वात् । अन्यथा एकेनैव शब्देन सर्वगुणोपलक्षणसम्भवेनोद्गीथादिशब्दवैयर्थ्यं स्यात् ।

ननु कर्तव्य एव सर्वगुणोपसंहारः सर्ववेदानां भगवन्नामत्वेन गुणाभिधायित्वात् । गुणाभिधानस्य च ध्यानार्थत्वादिति चेत्, अस्तु अस्माभिरपि सर्वगुणोपसंहारस्योक्तत्वेनेष्टत्वात् । 'नाम वा एता ब्रह्मणः सर्वा विद्या तस्मादेकः सर्वैर्गुणैर्विचिन्त्य' इति कौण्डिन्यश्रुतौ विहितत्वेन प्रामाणिकत्वाच्च । अतः सर्वगुणोपसंहारस्य कर्तव्यत्वात् सार्थकमेव सर्वपरिज्ञानमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

संज्ञात इति भावप्रधानम् । प्रकरणपदेन प्रकृतत्वात् विद्यानामित्यन्वेति । उपसंहार इत्यनुवर्तत इति भावेन प्रवृत्तं सर्वस्य ब्रह्मनामत्वादुपसंहारः कार्यः इति भाष्यं व्याचष्टे । **कर्तव्य एवेत्यादिना** ॥ गुणोपसंहारस्य कर्तव्यत्वे विद्यानां नामत्वं कथं हेतुरित्यत उक्तं तद्गुणाभिधायकत्वादिति । अप्रयोजकत्वपरिहारायोक्तं गुणाभिधानस्येति । आध्यानायेति वक्ष्यमाणत्वादिति भावः । न नु च्छन्दोगाः सोऽहं मन्त्रविदेवास्मीति पठन्ति । तत्कथं भाष्ये नामविदिति पाठ इत्यत आह ॥ **श्रुत्यन्तरमेवेति** ॥ 'कश्छन्दसां योगमावेद धीरः को धिष्ण्यां प्रतिवाचं पपाद'इति श्रुतिरित्यर्थः । तर्हि तद्विरोध इत्यत उक्तं मन्त्रविदित्यस्यापीति । छन्दोगश्रुतिबलान्नामविदिति शाखाया अपि मन्त्रविदित्येवार्थः किन्न स्यादित्यत उक्तं **यद्वै किञ्चिदिति** ॥ भावबोधे तु मन्त्रविदित्यस्यापीति । एवं पाठ उपनिषदोऽपीत्यर्थः । तथा च भाष्यमुपनिषदर्थानुवादपरमिति भाव इत्युक्तम् । तदुक्तमस्ति तु तदपीत्यत्र तुरवधारणे । तदुपसंहारस्य कर्तव्यत्वमुक्तम् । **तदपि** तत्प्रमाणमपि । न केवलं युक्तिरूपं श्रुतिरूपप्रमाणमप्यस्त्येवेत्यर्थः । अत्राद्ये उपसंहारस्य कर्तव्यत्वे विहितत्वरूपहेतूक्तिः । द्वितीये तस्य प्रकरणसमत्वमाशङ्क्य निरासः । तृतीये उपसंहारस्य कर्तव्यत्वेऽशक्यत्वरूपपरोक्तन्यायबाधमाशङ्क्य सप्रमाणकमुपसंहारस्याप्यभ्युपगमः । चतुर्थे तृतीयोक्तमुपसंहारमाक्षिप्योपसंहारस्य कर्तव्यत्वे पुनः प्रमाणोक्तिरिति सूत्रक्रमः । यावच्छक्तिप्रयत्नेनोपसंहारे फलाधिक्यबोधनार्थं बहुप्रमाणसङ्ग्रहार्थं च पुनःपुनरुपसंहारोपन्यासः ।

## तत्त्वसुबोधिनी

ननु गुणोपसंहारस्य कर्तव्यत्वे सर्वविधीनां ब्रह्मनामत्वं कथं हेतुरित्यत आह ॥ **तद्गुणाभिधायित्वादिति** ॥ अस्तु गुणाभिधानं तथापि उपसंहारस्य कुतः कर्तव्यत्वमित्यत आह । **गुणाभिधानस्य चेति** ॥ ज्ञानार्थमथ ध्यानार्थं गुणानां समुदीरणेति वचनादित्यर्थः । सर्वविद्यानां ब्रह्मनामत्वे किं प्रमाणमत आह ॥ **सर्वविद्यानामिति** ॥ ननु छन्दोगाः सोऽहं मन्त्रविदेवास्मि इति पठन्ति तत्कथं भाष्ये सोऽहं नामविदेवास्मि इत्युक्तमित्यत आह ॥ **यद्वै किंचिदिति** ॥ उत्तरवाक्ये ऋगादौ नामशब्दस्य प्रकृतत्वेन एवमुपनिषत्पाठाभावेऽपि तदनुरोधेन मन्त्रविदित्यस्य नामविदित्यर्थो ग्राह्य इति भावः । तथा च भाष्यं उपनिषदंशानुवादपरमिति भावः । अथवा नामवित् इत्येतत् श्रुत्यन्तरमिति भावः ॥ **न केवलमिति** ॥ विद्यानां ब्रह्मनामत्वात् गुणोपसंहारसिद्धिरित्यन्वयः । विद्यानां ब्रह्मनामत्वेऽपि गुणोपसंहारसिद्धिः कया युक्त्या इत्यत उक्तम् ॥ **गुणेति** ॥ अत्राद्यसूत्रे विहितत्वरूपप्रमाणोक्तिः सर्ववेदार्थभूतज्ञानादिगुणानां दोषाभावानां चाभेदादविभागेनैवोपसंहारः कर्तव्यः । कुत इत्यत उक्तम् ॥ **विधिशेषवदिति** ॥ विधिविहितसन्ध्यावन्दनादिवत् अस्यापि विहितत्वादित्यर्थः । समाने चशब्दोऽवधारणार्थः । समानानां योग्यानां एवोपसंहार इत्यक्षरार्थः । द्वितीये तस्य सत्प्रतिपक्षसाधनत्वनिरासः । तृतीयेऽनुपसंहाराभ्युपगमः । चतुर्थे उपसंहाराभ्युपगम इति सूत्रक्रमः ।

## वाक्यार्थविवरणम्

**तद्गुणेति** ॥ नाम्नां यौगिकत्वादिति भावः । आत्मनामवित् । नामार्थभूतात्मवित् कुतो नेत्यत उक्तम् ॥ **तन्निर्णयाज्ञानादिति** ॥ नामवाच्यात्मस्वरूपनिर्णयज्ञानाभावादित्यर्थः । सोऽहं नामविदेवास्मीत्येतत् सोऽहं मन्त्रविदेवास्मीति छान्दोग्योपनिषदोऽर्थानुवादपरम् । मन्त्रशब्दस्य नामवाचित्वात् । अत एव मन्त्रविदित्यस्मादुत्तरत्र नामैवेतदित्युक्तेरित्युक्तम् । प्रकारान्तरं चाह ॥ **श्रुत्यन्तरमेवेति** ॥ नामविदेवास्मीति शाखान्तरपाठ इत्यर्थः ॥ **अस्य** ॥ त्वदुक्तस्य विद्यानां नामत्वात् । नाम्नां च गुणाभिधायकत्वात् । गुणाभिधानस्य चोपसंहारार्थत्वादिति उपसंहारार्थत्वयुक्त्येति योज्यम् । सूत्रार्थस्तु । सर्वविद्यानां संज्ञातः नामत्वान्यथानुपपत्त्योपसंहारस्य कर्तव्यत्वं चेदुच्यते तर्हि तन्नास्माकं विरोधि यतस्तत उपसंहारस्य कर्तव्यत्वमुक्तमस्ति । तदप्यस्ति । तस्योपसंहारस्य कर्तव्यत्वं 'नाम वा एता' **इति प्रमाणमप्यस्त्येवेति** ॥

## वाक्यार्थमञ्जरी

सर्वविद्यानां संज्ञातः भगवन्नामत्वान्नाम्नां च तद्गुणवाचित्वात्तस्य च सर्वोपसंहारेण ध्यानार्थत्वात् सर्वोपसंहारः कार्य इति चेत्, तदुक्तं तत्सर्वोपसंहारस्य कर्तव्यत्वमुक्तमस्माभिः प्राक् न केवलं नामत्वयुक्तिसिद्धमेतत् किं तु तदपि नामवा एता ब्रह्मणः सर्वविद्या इति श्रुतिरूपप्रमाणमस्ति तु अस्त्येवेत्यर्थः ॥ **गुणाभिधानस्येति** ॥ ज्ञानार्थमधध्यानार्थं गुणानां समुदीरणेत्युक्तेरिति भावः । भगव इति सनत्कुमारं प्रति नारदस्य सम्बोधनम् ॥ **इतिहास इति** ॥ इतिहासश्च पुराणं च इति द्वन्द्वैकवद्भावः । वेदानां पञ्चमं पञ्चत्वसङ्ख्यापूरकम् । इतिहासपुराणाख्यं वेदं ग्रन्थमध्येमीत्यर्थः । ननु सोऽहं मन्त्रविदेवास्मीति च्छन्दोगपाठात्कथं नामविदेवेत्युक्तमित्यत आह ॥ **यद्वै किञ्चि-दिति** ॥ अध्यगीष्ठाः अधीतवानसि इदं सनत्कुमारोक्तं वाक्यम् ॥ **मन्त्रविदित्यस्यापीति** ॥ मन्त्रविदितिपाठ उपनिषदोऽपीत्यर्थः । तथा च भाष्यमुपनिषदर्थानुवादपरमिति भावः ।

॥ इति **उपसंहाराधिकरणम्** ॥ २ ॥

## ३. प्राप्त्यधिकरणम्

**॥ ॐ प्राप्तेश्च समञ्जसम् ॐ ॥ १० ॥**

युज्यते चोपसंहारोऽनुपसंहारश्च योग्यताविशेषात् ।

'गुणैस्सर्वैरुपास्योऽसौ ब्रह्मणा परमेश्वरः ।
अन्यैर्यथाक्रमं चैव मानुषैः कैश्चिदेव तु'इति भविष्यत्पर्वणि ॥

### तत्त्वप्रदीपिका

उपसंहारः कर्तव्य इत्युक्तम् । न वा सर्वगुणोपसंहार इति चोक्तम् । तत्कथमित्यत आह–**प्राप्तेश्च समञ्जसम् ॥** ब्रह्मणः सर्वगुणोपसंहारयोग्यता । ततः क्रमेण न्यूनोपसंहारो देवपित्रादिषु । मानुषेष्वल्पोपसंहारयोग्यता ।

### तत्त्वप्रकाशिका

अत्र ब्रह्मज्ञानसाधनोपासने गुणोपसंहारानुपसंहारयोः कर्तव्यतासमर्थनादस्ति शास्त्रादिसङ्गतिः । अन्यथोक्तबाधप्रसङ्गात्तौ समर्थनीयौ । प्रकृतौ गुणोपसंहारानुपसंहारौ विषयः । युज्येते न वेति सन्देहः । प्रतिपादनं विरोधश्च सन्देहबीजम् । न युज्येते इति पूर्वः पक्षः । तथा हि । किं तौ द्वावप्येकस्यैव पुरुषस्योत पुरुषभेदेन । नाद्यः । विरोधात् । नापि द्वितीयः । अनेनोपसंहारः कर्तव्यो नानेनेति निर्णयाभावात् । अतः प्रकारद्वयेऽपि तदनुपपत्तेरुक्तमनुपपन्नमिति । सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ॥ **प्राप्तेश्चेति** ॥ युक्तावुपसंहारानुपसंहारौ पुरुषभेदेन । न च निर्णयाभावः । 'यस्य यावद्गुणाः स्पष्टं प्रतिभासन्त्युपासने । युगपत्स्वभुजौ यद्वद्ध्यायेत्तावत एव सः' । इति श्रुतेर्युगपत्प्रतीत्यादियोग्यताविशेषेण निर्णयोपपत्तेरिति भावः । एतदेव शृङ्गग्राहिकया स्मृत्या दर्शयति ॥ **गुणैरिति** ॥ कैश्चिदानन्दादिगुणैरित्यर्थः । युगपत्सर्वगुणप्रतीतिर्ब्रह्मण इत्यादि ज्ञातव्यम् । अतो गुणोपसंहारानुपसंहारयोः सामञ्जस्याद्युक्तं पूर्वोक्तमिति सिद्धम् ।

### गुर्वर्थदीपिका

युगपत्प्रतीत्यादियोग्यताविशेषेणेत्यत्र शास्त्रश्रवणमनननाभ्यां शास्त्रोक्तसकलगुणपरिज्ञाने पृथक्पृथगेकैकगुणस्मरणे च सत्यपि ध्यानकाले युगपत्स्वयोग्या एव गुणा भासन्ते नापरे । एवं च

(गुर्वर्थदीपिका)

युगपद्भासमानेषु गुणेषु योग्यता, अभासमानगुणेषु योग्यता नेति विवेकोपपत्तेरित्यर्थः । युगपत्सर्वगुणप्रतीतिरित्यस्य निरवधिकसर्वगुणानां ब्रह्मणाऽप्युपासितुमशक्यत्वाद्वेदोक्त सकलगुणप्रतीतिरित्यर्थः ।

## भावबोधः

अनन्तरसङ्गतिं प्रदर्शयन् विषयमाह– **प्रकृताविति** ॥ 'उपसंहार इति' 'न वेति' सूत्राभ्यां प्रकृतावित्यर्थः । युज्येते न वेति । अत्रोपसंहारानुपसंहारौ न युज्येते, उत युज्येते, इति चिन्ता । तदर्थं तौ किं परस्परं विरुद्धावुताधिकारिभेदेनाविरुद्धाविति । तदर्थमधिकारिभेदव्यवस्थापकं **नास्त्युतास्तीति** ॥ **अनेनैवोपसंहार इति** ॥ एतेन अनेनोपसंहर्तव्या अनेन नोपसंहर्तव्या इत्यनिर्णीतिरेवेति न्यायविवरणमुक्तार्थं भवति । न केवलमुक्तरीत्योपसंहारानुपसंहारयोः कर्तव्यत्वं किं तु तद्द्वयं समञ्जसं युक्तं चेति सूत्रार्थमभिप्रेत्य प्रवृत्तं युज्यते चोपसंहारोऽनुपसंहारश्चेति भाष्यं व्याख्याति– **युक्ताविति** ॥ न्यायविवरणोदाहृतश्रुतिमुदाहृत्य प्राप्तेरित्येतद्व्याख्यानपरं योग्यताविशेषादिति भाष्यं युगपत्प्रतीत्यादिमाहात्म्यात् निर्णयोपपत्तेरिति न्यायविवरणानुसारेण व्याचष्टे– **यस्येति** ॥ अनेन न्यायविवरणे माहात्म्यशब्दो योग्यताविशेषार्थक इत्युक्तं भवति ॥ **एतदेवेति** ॥ योग्यताविशेषादित्यनेनोक्तमेवेत्यर्थः । कैश्चिदित्यस्यानिर्दिष्टयत्किञ्चिद्गुणपरत्वप्रतीतिनिवारणार्थं 'आनन्दादयः प्रधानस्य' इत्युत्तरसूत्रानुसारेणार्थमाह– **कैश्चिदानन्दादिगुणैरिति** ॥

ननु 'यस्य यावद्गुणाः स्पष्टम्' इत्युक्तयुगपत्प्रतीत्यादिरूपयोग्यताविशेषस्यात्र चतुर्मुखादिसम्बन्धित्वेनानुक्तेरुपासना कथं चतुर्मुखादिसम्बन्धित्वेनोच्यत इत्यतः,

> 'युगपद्ब्रह्मणः सर्वे भासन्ते हि गुणा हरेः ।
> तदन्येषां यथायोग्यं स्वमाहात्म्यानुसारतः ॥'

इति न्यायविवरणोदाहृतां श्रुतिं मनसि निधायाह– **युगपदिति** ॥

## भावदीपः

**उपासने** उपासनार्थम् । या उपसंहारानुपसंहारयोः कर्तव्यता तत्समर्थनादित्यनेन फलतः पादसङ्गतिः सूचिता ॥ **समर्थनादिति** ॥ अधिकारिभेदकथनेनेति भावः । अनेन पूर्वानन्तर्य-

(भावदीपः)

सङ्गतिरपि सूचिता । प्रतिपादनं श्रुतियुक्तिभिः पूर्वत्रेत्यर्थः । युज्यत इत्यादिभाष्यसूचित-संशयकोटीरुक्त्वा पूर्वपक्षकोटिमाह ॥ **न युज्येते इति** ॥ कुत इत्याकाङ्क्षायां अनेनोपसंहर्तव्या अनेन नोपसंहर्तव्या इत्यनिर्णीतिरित्यन्यत्रोक्तं हेतुमत्र विकल्पमुखेन संयोजयति ॥ **किं ताविति** ॥ **अत इति** ॥ पक्षद्वयेऽपि दोषभावादित्यर्थः ॥ **तदनुपपत्तेरिति** ॥ अन्यतरानुपपत्तेः प्रागुक्तमुभय-कर्तव्यत्वमनुपपन्नमित्यर्थः । यद्वा तदनुपपत्तेरुभयकर्तव्यत्वानुपपत्तेः प्रागुक्तं सर्वपरिज्ञानमनुपपन्न-मित्यर्थः । भाष्योक्तसाध्यहेतू न साक्षादन्वितावित्यभिप्रेत्य मध्येऽपेक्षितमध्याहृत्य भाष्यं व्याचष्टे ॥ **युक्ताविति** ॥ न्यायविवरणे श्रुत्युक्तिपूर्वमुक्तमत्र योग्यतास्वरूपं विवृण्वन् हेत्वंशं व्याचष्टे ॥ **यस्य यावदिति** ॥ **युगपदिति** ॥ पूर्वं श्रवणादिविषयीभूतगुणानां मध्ये ध्यानकाले यावन्तो गुणा यस्य स्पष्टं युगपन्मनसा प्रतीयन्ते तावद्गुणोपसंहारे तस्य योग्यतेत्येवं योग्यताविशेषेणेत्यर्थः । प्रागेव योग्यतानियमाज्ञानेऽयोग्योपासनप्रयत्नप्रसङ्गेनानर्थप्राप्तेः । प्रागेव योग्यतानिर्णयेन भाव्यमिति चोद्यं तु इतरे त्वर्थसामान्यादित्यत्र समाधास्यत इति भावः ॥ **शृङ्गग्राहिकयेति** ॥ धात्वर्थनिर्देशे ण्वुल्वक्तव्य इति रूपम् । शृङ्गग्रहणेनेत्यर्थः । अधिकारिविशेषनिर्धारणेनेत्यर्थः । स्मृतावुपासनाविशेष एवोच्यते । न तु प्रतीतिनियम इत्यतोऽर्थात्तल्लाभ इत्याह ॥ **युगपदिति** ॥ देवपित्रादीनां क्रमेण न्यूनगुण-प्रतीतिर्मानुषाणामल्पगुणप्रतीतिरिति ज्ञातव्यमित्यर्थः । 'युगपद्ब्रह्मणः सर्वे भासन्ते हि गुणा हरेः । तदन्येषां यथायोग्यं स्वमाहात्म्यानुसारतः' इति न्यायविवरणोक्तश्रुतेरिति भावः । सूत्रार्थं विवृण्वन्नेव फलोक्त्योपसंहरति ॥ **अत इति** ॥ युगपद्गुणप्रतिभासवत्त्वादिरूपयोग्यताभेदेन निर्णयोपपत्तेरिति प्राप्तेरित्यस्यार्थः ॥ **उपसंहारेति** ॥ एतेनोपसंहारानुपसंहारकर्तव्यत्वं समंजसं युक्तमित्यर्थः सूचितः । पूर्वोक्तं सर्वपरिज्ञानमुभयकर्तव्यत्वं चेत्यर्थः ।

## अभिनवचन्द्रिका

**कर्तव्यतासमर्थनादिति** ॥ प्रागधिकारिभेदस्य व्यक्तमनुक्तत्वेन वक्ष्यमाणाभ्यधिकाशङ्काप्राप्ति-सद्भावादिति भावः । प्राक्संक्षेपेणोक्तस्य इह विस्तरेणाऽभिधानाद्भिन्नाधिकरणता । तदुक्तम् 'सङ्क्षेपविस्तराभ्यां च प्रवदन्ति मनीषिणः । बहुवारस्मृतेस्तस्य फलबाहुल्यकारणात्' इति ॥ **नियामकाभावादिति** ॥ ननु शक्त्यशक्त्योरेव नियामकत्वेन कथं नियामकाभाव इति चेत्, कृच्छ्रेणाऽनुष्ठाने सर्वेषां शक्यत्वात् अन्यथा सर्वेषामशक्यत्वात् ।

(अभिनवचन्द्रिका)

पूर्वपक्षस्तु– अयुक्तौ प्रागुक्तोपसंहारानुपसंहारौ विरोधात् । न हि विरुद्धयोर्युगपदनुष्ठानमेकेन सम्भवति । न च अधिकारिभेदादुभयोपपत्तिः **नियामकाभावादिति ।**

सिद्धान्तस्तु– उपपन्नावेवोपसंहारानुपसंहारौ यस्य युगपत् स्वभुजाविव यावन्तो गुणाः स्पष्टं प्रतिभासन्ते स तावतामुपसंहारे योग्यः । अन्यस्तु नेति नियामकसद्भावात् । ब्रह्मणस्तु युगपद्वेदोक्ताः सर्वगुणाः प्रतिभासन्ते । रुद्रादीनां तु तत्तद्योग्यतानुसारेणेति विवेकः । अतो गुणोपसंहारानुपसंहारयोः सामञ्जस्याद्युक्तं पूर्वोक्तमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

**अन्यथेति** ।। असमर्थत्वे उपसंहारोऽर्थाभेदान्न वा प्रकरणेन लिङ्गादित्युक्ते बाधप्रसङ्गादित्यर्थः ।। **युज्येतेति** ।। गुणोपसंहारानुपसंहारौ युज्येते उत न युज्येत इति चिन्ता । किं तयोः पुरुषभेदेन विरोधनये निर्णायकं नास्त्युतास्तीति । सिद्धान्ते निर्णायकोक्त्या लब्धानिर्णीतिरित्युक्तन्यायं विशदयन् पूर्वपक्षयति ।। **न युज्येत इति** ।। न केवलमुक्तरीत्योपसंहारानुपसंहारयोः कर्तव्यत्वं किन्तु तद्द्वयं समञ्जसं युक्तं चेति सूत्रार्थमभिप्रेत्य प्रवृत्तं युज्यते चोपसंहारोऽनुपसंहारश्चेति भाष्यं व्याचष्टे ।। **युक्ताविति** ।। भाष्ये योग्यताविशेषादित्यत्र योग्यताशब्देन तत्पुरुषोपलक्षणं मत्वा व्याचष्टे ।। **पुरुषभेदेनेति** ।। एतेन प्राप्तेः प्राप्तत्वात्पुरुषभेदेन व्यवस्थितत्वादिति सूत्रार्थ उक्तो भवति । माहात्म्यमित्युक्तन्यायप्रदर्शकयोग्यताविशेषादित्येतद्भाष्यमेव प्राप्तेरित्यस्यार्थन्तरपरतया प्रमाणोदाहरणपूर्वकं व्याचष्टे ।। **यस्येति** ।। तावतो गुणान्युगपत्प्रतीत्य । आदीत्यादिपदेन तदभाव उच्यते । एतेन ध्यानकाले गुणानां युगपद्बुद्धौ प्राप्तिमपेक्ष्य तद्भावाभावलक्षणयोग्यता विशेषादिति यावत् । पुरुषविशेषनिर्णयेन तदुभयं समञ्जसमित्यर्थ उक्तो भवति । नन्वेतेन ध्यानकाले यस्य यावन्तो गुणा उपस्थाप्यन्ते तेनैव तावन्तो गुणा उपास्या नान्येनेति पुरुषविशेषनिर्णयानन्तरं ध्याने प्रवृत्तिः । अन्यथा योग्यप्रयत्नदोषप्रसरात् । प्रवृत्त्यनन्तरं पुरुषविशेषनिर्णय इत्यन्योन्याश्रयदोष इति चेन्न, इतरे त्वर्थसामान्यादित्यत्र वक्ष्यमाणत्वात् । ननु भविष्यत्पर्ववचने युगपत्प्रतीत्यादियोग्यताविशेषस्य चतुर्मुखादिसम्बन्धितयाऽनुपादानात् कथं सर्वगुणोपासकस्यैवोक्तं कथं प्रकृतोपयोग इत्यतः 'युगपद्ब्रह्मणः सर्वे भासन्ते हि गुणा हरेः । तदन्येषां यथायोग्यं स्वमाहात्म्यानुसारतः' इति न्यायविवरणानुसारात्तदप्यत्रोपलक्षणत्वेन ज्ञातव्यमित्याह ।। **युगपदिति** ।।

## तत्त्वसुबोधिनी

**अन्यथेति** ॥ गुणोपसंहारानुपसंहारयोः कर्तव्यतासमर्थनाभावे उक्तसर्वपरिज्ञानस्य वैय्यर्थ्य-रूपबाधप्रसङ्गादित्यर्थः । अनन्तरसङ्गतिमाह ॥ **प्रकृताविति** ॥ उपसंहार इति न चेति सूत्राभ्यां प्रकृतौ इत्यर्थः । उक्तयोः उपसंहारानुपसंहारयोः बाधकपरिहारादनन्तरसङ्गतिरिति भावः । न केवलं उक्तरीत्या उपसंहारानुपसंहारयोः कर्तव्यत्वं किन्तु तद्वयं समंजसं युक्तं चेति सूत्रार्थमभिप्रेत्य प्रवृत्तस्य युज्यते चेत्यस्यार्थमाह ॥ **युक्ताविति** ॥ निर्णयाभावपरिहाराय योग्यताविशेषादिति भाष्यं सप्रमाणकं व्याचष्टे **यस्येति** ॥ **एतदेवेति** ॥ योग्यताविशेषादित्यनेन उक्तमेवेत्यर्थः । कैश्चिदित्यस्य निर्दिष्टयत्किञ्चिद्गुणपरत्वप्रतीतिनिवारणार्थमानन्दादय इत्युत्तरसूत्रानुसारेणार्थमाह ॥ **कैश्चिदिति** ॥ ननु यस्य यावद्गुणाः स्पष्टमित्युक्त युगपत्प्रतीत्यादिरूपयोग्यताविशेषस्यात्र चतुर्मुखादिसम्बन्धि-त्वेनानुक्ते उपासनं कथं चतुर्मुखादिसम्बन्धित्वेन उच्यत इत्यत आह ॥ **युगपदिति** ॥ न केवलं उपसंहारानुपसंहारयोः कर्तव्यत्वं किन्तु तद्वयं समंजसं युक्तं च कुतः प्राप्तेः योग्यताविशेषादित्यर्थः ।

## वाक्यार्थविवरणम्

**उक्तेति** ॥ उपसंहारानुपसंहारयोरुभयोरपि कर्तव्यत्वं यदुक्तं तस्य बाधप्रसङ्गादित्यर्थः ॥ **प्रतिपादनमिति** ॥ 'संज्ञातश्चेत् न वा प्रकरणभेदात्' इति उभयोरपि प्रतिपादनमित्यर्थः ॥ **नियमाभावात्** ॥ नियामकप्रमाणाभावात् ॥ **न चेति** ॥ तयोरित्यर्थः ॥ **पुरुषभेदेनेति** ॥ तथा चाविरोध इति भावः ॥ तावतो गुणान् ॥ **आनन्दादीति** ॥ 'सच्चिदानन्दात्मेति मानुषैस्तु' इत्युक्तेरिति भावः ॥ **इत्यादीति** ॥ 'सुरैर्हरिर्यथाक्रमं बहुगुणैः' इत्युक्तेरिति द्रष्टव्यम् ॥ **शृङ्गिग्राहिकयेति** ॥ शृङ्गिग्राहिकन्यायरूपया स्मृत्येत्यर्थः ॥ **सामञ्जस्यादिति** ॥ तथा च सूत्रे समञ्जसमिति भावप्रधानो निर्देशः । प्राप्तेर्योग्यतायाः अनुसारेणोपसंहारानुपसंहारयोः । समञ्जसं सामञ्जस्यं विरोधो निर्णयाभावश्च नास्तीति सूत्रार्थः ।

## वाक्यार्थमञ्जरी

**उक्तबाधेति** ॥ पूर्वाधिकरणोक्तस्योभयोरपि कर्तव्यत्वस्य बाधेत्यर्थः । प्रतिपादनं उक्तरीत्या-विरोधः ॥ **अन्योन्यनियमेनेति** ॥ नियामकेत्यर्थः ॥ **ॐ प्राप्तेश्च समंजसं ॐ** ॥ न केवल-

(वाक्यार्थमञ्जरी)

मुक्तरीत्योपसंहारानुपसंहारयोः कर्तव्यत्वमपि तु तद्वयं समंजसं च युक्तं, कुतः प्राप्तेः योग्यताया व्यवस्थितत्वादित्यर्थः ॥ **यस्येति** ॥ यस्योपासकस्योपासनासमये स्वभुजवद्यावन्तोभ गवतो गुणाः स्पष्टं युगपत्प्रतिभासन्ते स तावत एव गुणान् ध्यायेदिति सम्बन्धः ॥ **एतदेवेति** ॥ योग्यताविशेषादित्यनेनोक्तमेवेत्यर्थः । कैश्चिदित्यस्यानिर्दिष्टयत्किञ्चिद्गुणपरत्वप्रतीतिनिरासायाह ॥ **आनन्दादीति** ॥ यस्य यावद्गुणाः स्पष्टमित्युक्तयुगपत्प्रतीतियोग्यताविशेषो नात्र चतुर्मुख-सम्बन्धित्वेनोच्यत इत्यत आह ॥ **युगपदिति** ॥ 'युगपद्ब्रह्मणः सर्वे भासन्ते हि गुणा हरेः । तदन्येषां यथायोग्यम्'इति श्रुतेरिति भावः ।

**॥ इति प्राप्त्यधिकरणम् ॥ ३ ॥**

## ४. सर्वाभेदाधिकरणम्

**॥ ॐ सर्वाभेदादन्यत्रेमे ॐ ॥ ११ ॥**

सर्वगुणयुक्तत्वेनोपासनादन्यत्रैव फले ब्रह्मादयो भवन्ति ।

'सम्पूर्णोपासनाद्ब्रह्मा सम्पूर्णानन्दभाग्भवेत् ।
इतरे तु यथायोगं सम्यङ्मुक्तौ भवन्ति हि' इति पाद्मे ॥ ११ ॥

### तत्त्वप्रदीपिका

ये सर्वगुणोपास्तिं कुर्वन्ति ते सर्वगुणाभेदेनोपासनेन तेनान्यत्र विलक्षणे सम्पूर्णानन्दाद्यात्मके मोक्षफले भवन्ति । इम इति विशेषतः प्रस्तुतत्वात्सर्वोपसंहारका उच्यन्ते । यद्यपि ब्रह्मैव सर्वगुणोपासकः । तथाऽपि तदनतिन्यूनब्रह्माण्यादिविषय आदिशब्दः । इतरे तु यथाशक्त्युपास्तिं कुर्वाणा यथायोगं फलभाजो भवन्ति । 'सम्यङ्मुक्तौ' इति वचनादत्यल्पगुणोपासकानां मुक्तिरपि सम्यङ्मुक्तिरेव । नासम्यङ्मुक्तिरिति सिद्ध्यति । दुःखलेशाभावात् ।

### तत्त्वप्रकाशिका

अत्रेश्वरदर्शनसाधनोपासने बहुगुणोपसंहारस्य कर्तव्यतासमर्थनादस्ति शास्त्रादिसङ्गतिः । अन्यथोक्तानुपपत्तेः समर्थनीय एव । प्रकृतो बहुगुणोपसंहारो विषयः । कर्तव्यो न वेति सन्देहः । उभयविधक्रियादर्शनं सन्देहबीजम् । न कर्तव्य इति पूर्वः पक्षः । तथा हि । अल्पगुणोपसंहारकेभ्यो बहुगुणोपसंहर्तॄणां फलातिशयोऽस्ति न वा । नाद्यः । प्रमाणाभावेन फलातिशयनिर्णयाभावात् । न द्वितीयः । व्यर्थायासस्य बुद्धिमदुपादित्साऽगोचरत्वात् । अतः फलानिर्णीतेरुपसंहारस्य कर्तव्यत्वादुक्तमयुक्तमिति । सिद्धान्तयत्सूत्रं पठित्वा व्याचष्टे **॥ सर्वेति ॥** युक्त एव ब्रह्मादीनां बहुगुणोपसंहारः । बहुगुणोपसंहारेण तेषामनुपसंहर्तृभ्यो विलक्षणफलसद्भावात् । न च फलानिर्णयः । तेषां सर्वगुणोपसंहारेणोपासकानां महत्त्वादेव महत्फलमिति निर्णयोपपत्तेः । न हि वेदोक्तमहोपासनावतामतिशयितफलाभावः सम्भवतीति भावः । स्मृत्या चायं निर्णय इति तामुदाहरति **॥ सम्पूर्णेति ॥** सम्यग्भवन्त्यतिशयवन्तो भवन्तीत्यर्थः । अतो बहुगुणोपसंहर्तॄणां फलविशेषभावादुपसंहारो युक्त एवेति सिद्धम् ।

## गुर्वर्थदीपिका

सर्वगुणयुक्तत्वेनोपासनादिति वदता सर्वेषां गुणानामभेदादेकीकृत्योपासनादित्यर्थस्सूत्रखण्डस्य सूचितः । इदं चोपलक्षणम् । एतादृश्युपासनयोग्यता ब्रह्मण एवास्ति न त्वन्येषाम् । एवं च ब्रह्मादय इति वदता भाष्यकारेण सूत्रे स्ववचने चोक्तमन्यस्योपलक्षणमिति सूचितम् । तथा च सर्वगुणोपासनात्ततोऽपि क्रमेण न्यूनगुणोपासनादिति साधनवैचित्र्यमुक्तं भवति । तस्मादिमे ब्रह्मादयः अन्यत्र फले अन्यत्र अन्यस्मिन्भिन्ने इदं चाऽऽवर्तनीयं भिन्ने फले भवन्तीति सूत्रभाष्ययोरर्थः ।

## भावबोधः

अनन्तरसङ्गतिं सूचयन् विषयमाह– **प्रकृत इति** ॥ पूर्वसूत्र इत्यर्थः । कर्तव्य उत न वेति । अत्र बहुगुणोपसंहारः किं न कर्तव्य उत कर्तव्य इति चिन्ता । तदर्थं स किं फलातिशयवान्न भवत्युत भवतीति चिन्ता । तदर्थं फलातिशये प्रमाणं नास्त्युतास्तीति । फलातिशयोऽस्ति न वेति । गुणोपसंहारस्य सफलत्वमात्रं तु श्रुतिविहितत्वादेव सिद्धमिति भावः । फलानिर्णीतिरिति न्यायविवरणं व्याचष्टे– **प्रमाणाभावेनेति** ॥ 'अन्यत्रेमे' सूत्रांशव्याख्यानपरं, अन्यत्रैव फले ब्रह्मादयो भवन्तीति भाष्यं तात्पर्यतो व्याचष्टे– **युक्त एवेत्यादिना** ॥ अनेन सूत्रभाष्ययोः 'अन्यत्र' इत्येतत्पदं विलक्षणार्थकम् । अनुपसंहर्तृफलं तु प्रतियोगीत्युक्तं भवति । महात्म्येनैवान्यत्फलं महतामिति निर्णयोपपत्तेरिति न्यायविवरणं व्याचष्टे– **तेषां सर्वगुणोपसंहारेणेति** ॥ असम्यक् मुक्तेरभावात् । नासम्यगित्येतन्मुक्तिविशेषणमित्यभिप्रेत्याह– **सम्यग्भवन्तीति** ॥

## भावदीपः

उपासन इत्यादिपूर्ववद्व्याख्येयम् । एवमग्रेऽपि । समर्थनात्फलविशेषकथनेनेति भावः । अन्यथा फलविशेषोक्त्या तदसमर्थने । अधिकारिभेदेनोभयसामञ्जस्यरूपप्रागुक्तप्रमेयानुपपत्तेरित्यर्थः । एतेन पूर्वसङ्गतिरप्यत्र सूचिता । यद्वा सर्वपरिज्ञानरूपप्रागुक्तप्रमेयानुपपत्तेरित्यर्थः । गुणोपसंहार इत्येवोक्तौ ब्रह्ममात्रकर्तृकसर्वोपसंहारप्राप्त्या ब्रह्मादय इति भाष्यनिर्देशायोगात्तदुपपत्तये ब्रह्मानतिन्यून-ब्रह्माण्यादिपरिग्रहाय बहुगुणोपसंहार इत्युक्तम् । पूर्वत्र प्राप्तेरित्यनेन सर्वोपसंहारवत्क्रमन्यून-

(भावदीपः)

बहुगुणोपसंहारस्यापि प्रकृतत्वात्प्रकृत इति भावः ॥ **क्रियेति** ॥ व्यापार इत्यर्थः । फला-निर्णीतिरिति न्यायविवरणोक्तहेतुमिह विकल्पमुखेन विवृणोति ॥ **अल्पगुणेति** ॥ सर्वाभेदा-दित्येतद्व्यावर्त्यमाह ॥ **प्रमाणाभावेनेति** ॥ **व्यर्थायासस्येति** ॥ विहितत्वात्कर्तव्यमिति तु आध्यानायेत्यत्राशङ्क्य निरसिष्यत इति भावः ॥ **अत इति** ॥ फलातिशयस्याप्रामाणि-कत्वात्सामान्यफलस्य चानुपसंहारसाध्यत्वादिति फलानिर्णीतौ हेतुरयम् ॥ **उक्तमिति** ॥ पूर्ववद्व्याख्येयम् । अत्र भाष्ये पूर्वभाष्याद्युज्यते चोपसंहार इति पदमनुवर्त्य तत्र हेतुतया भवन्तीत्यन्तभाष्यं व्याचष्टे ॥ **युक्त एवेति** ॥ सर्वेत्यादेरर्थ उपसंहारेणेति । अन्यत्रेत्यादेरर्थ-स्तेषामित्यादि । माहात्म्येनैवान्यफलं महतामिति निर्णयोपपत्तेरिति न्यायविवरणोक्तहेतुं सङ्गमयति ॥ **न च फलेत्यादिना** ॥ **अयमिति** ॥ उपसंहर्तॄणां महाफलमिति निर्णयो न केवलं वेदोक्त-महोपासनवत्त्वयुक्तेति चार्थः । मुक्तौ सम्यग्भवन्तीत्यत्र किमिदं सम्यक्त्वमित्यत आह ॥ **सम्यगिति** ॥ सूत्रार्थं विवृण्वन्नेव फलोक्त्योपसंहरति ॥ **अत इति** ॥ सर्वगुणाभेदेन वेदोक्तमहोपासनवत्त्वरूपयुक्तिः सम्पूर्णेत्यादिस्मृतिबलादिति सर्वाभेदादित्यस्यार्थः । इमे इत्यस्यार्थः **बहुगुणोपसंहर्तृणामिति** ॥ त एव पूर्वत्र प्राधान्येन प्रकृता इति भावः । अन्यत्रेत्यस्यार्थः **फलविशेषेति** ॥ उपसंहारः समंजस इत्यनुवृत्तस्यार्थः **उपसंहारो युक्त एवेति** ॥ फलान्वयार्थः पञ्चम्यन्ततया सूत्रार्थानुवादः ।

## अभिनवचन्द्रिका

सर्वशब्दोऽत्र बहुशब्दपर्यायः । बहूनां गुणानामयमुपसंहर्तव्यो नायमुपसंहर्तव्य इति विभाग-मकृत्वा उपासनात् बहुगुणोपसंहारेणोपासनादिति यावत् । **अन्यत्र** अल्पगुणोपसंहर्तृफलादति-शयितफले । **इमे** ब्रह्मादयो, भवन्तीति सूत्रार्थः । **उभयविधक्रियादर्शनमिति** ॥ स्वापेक्षयाऽल्पा-याससाध्यक्रियाफलाधिकफलजनकाजनकक्रियादर्शनं सन्देहबीजमित्यर्थः । **अल्पगुणेति** ॥ केषांचिद्बहुगुणोपसंहारः किमल्पगुणोपसंहारकेभ्यो बहुगुणोपसंहारकर्तॄणां फलातिशयसद्भावादङ्गी-क्रियते, उत फलाऽभावेऽप्यङ्गीक्रियत इति भावः । **नाद्य इति** ॥ फलातिशयेन बहुगुणोपसंहारः साधयितुं न शक्य इत्यर्थः । तत्र हेतुमाह– **प्रमाणाभावेनेति** ॥ फलातिशयस्यासिद्धत्वान्न तेन लिङ्गेन तत्साधनमिति भावः । एतेन– प्रमाणाभावादित्यनेनैव पूर्णत्वात्फलातिशयनिर्णयाभावा-

(अभिनवचन्द्रिका)

दित्यधिकमिति परास्तम् । स्वपरिचितप्रमाणाभावेऽपि प्रमाणान्तरसम्भवात् स्वरूपासिद्धेर्दातु-मशक्यत्वेन अज्ञानासिद्धिं वक्तुं तस्य सार्थक्यात् ॥ **न द्वितीय इति** ॥ नास्त्येव फलं तथापि बहुगुणोपसंहारः कर्तव्य एवेति द्वितीयः पक्षो न युक्त इत्यर्थः ॥ **महत्वादेवेति** ॥ महा-साधनवत्वादेवेत्यर्थः ।

पूर्वपक्षस्तु– न बहुगुणोपसंहारः कर्तव्यः । उपासनातारतम्यानुसारिफलतारतम्ये **प्रमाणा-भावादिति** ॥

सिद्धान्तस्तु– कर्तव्य एव बहुगुणोपसंहारः । साधनतारतम्ये फलतारतम्यनियमात् वेदोक्तमहोपासनावतामतिशयितफलाभावायोगादिति ।

## वाक्यार्थमुक्तावली

**अन्यथेति** ॥ उपसंहारस्यैवाकर्तव्यत्वे प्राप्तेरित्यत्र योग्यताविशेषेणोपसंहारानुपसंहारयोः सामञ्जस्योक्त्यनुपपत्तिरित्यर्थः ॥ **कर्तव्य इति** ॥ बहुगुणोपसंहारो न कर्तव्य उत कर्तव्यः । तदर्थमुपसंहारेण फलातिशयो नास्त्युतास्तीति । तदर्थं फलातिशये प्रमाणं नास्त्युतास्तीति । अत्रापि फलातिशयनिर्णायकोक्त्या तद्व्यावर्त्यमनिर्णीतिरित्युक्तन्यायं दर्शयन् पूर्वपक्षयति ॥ **तथा हीति** ॥ गुणोपसंहारस्य श्रुतिविहितत्वात् फलं सिद्धवत्कृत्य फलातिशयोऽस्ति वा न वेत्युक्तम् ॥ **व्यर्थायासस्येति** ॥ साध्यातिशयाभावे साधनातिशयवैय्यर्थ्यादिति भावः । सर्वगुणयुक्तत्वेनोप-संहारेऽनुपसंहर्तृभ्यः फलातिशयोऽस्ति न वेति विकल्प्य द्वितीये उपसंहारानुपपत्तिरुक्ता । तत्परिहारायाद्यपक्षमभ्युपगन्तुमिदं सूत्रमिति भावेन सर्वगुणयुक्तत्वेनोपासनादिति भाष्यं प्रवृत्तम् । प्राप्तेश्चेत्यत्र महायोग्यतावत्वेन प्रकृतत्वादिमे इति ब्रह्मादिपरामर्श इति भावेन ब्रह्मादय इत्युक्तम् । सर्वाभेद इत्यस्य सर्वेषां गुणानामभेदादविभागात् अपरिग्रहादित्यस्य तात्पर्यमुक्तं सर्वगुणयुक्तत्वे-नोपासनादिति । अन्यत्रेत्यस्य फल इति विशेष्यम् । अनुपसंहर्तृणां प्रकृतत्वेन तत्फलमन्यत्रेत्युक्त-वैलक्षण्यप्रतियोगितया गृह्यत इति भावेनान्यत्रैव फल इत्युक्तम् । तथा च सर्वगुणयुक्तत्वेनोपासनेन तदुपासका ब्रह्मादयः । अन्यत्रानुपसंहर्तृफलादतिशयितफलं भवत्येवेत्याद्यपक्षो गृह्यत इति सूत्रभाष्ययोराद्यपक्षपरिग्रहमात्रार्थत्वं तावन्मनसि निधायाद्यपक्षस्य स्वीकृतत्वात् द्वितीयपक्षोक्तो

(भावदीपः)

बहुगुणोपसंहारस्यापि प्रकृतत्वात्प्रकृत इति भावः ॥ **क्रियेति** ॥ व्यापार इत्यर्थः । फलानिर्णीतिरिति न्यायविवरणोक्तहेतुमिह विकल्पमुखेन विवृणोति ॥ **अल्पगुणेति** ॥ सर्वाभेदादित्येतद्व्यावर्त्यमाह ॥ **प्रमाणाभावेनेति** ॥ **व्यर्थायासस्येति** ॥ विहितत्वात्कर्तव्यमिति तु आध्यानायेत्यत्राशङ्क्य निरसिष्यत इति भावः ॥ **अत इति** ॥ फलातिशयस्याप्रामाणिकत्वात्सामान्यफलस्य चानुपसंहारसाध्यत्वादिति फलानिर्णीतौ हेतुरयम् ॥ **उक्तमिति** ॥ पूर्ववद्व्याख्येयम् । अत्र भाष्ये पूर्वभाष्याद्युज्यते चोपसंहार इति पदमनुवर्त्य तत्र हेतुतया भवन्तीत्यन्तभाष्यं व्याचष्टे ॥ **युक्त एवेति** ॥ सर्वेत्यादेरर्थ उपसंहारेणेति । अन्यत्रेत्यादेरर्थस्तेषामित्यादि । माहात्म्येनैवान्यफलं महतामिति निर्णयोपपत्तेरिति न्यायविवरणोक्तहेतुं सङ्गमयति ॥ **न च फलेत्यादिना** ॥ **अयमिति** ॥ उपसंहर्तॄणां महाफलमिति निर्णयो न केवलं वेदोक्तमहोपासनवत्त्वयुक्तेति चार्थः । मुक्तौ सम्यग्भवन्तीत्यत्र किमिदं सम्यक्त्वमित्यत आह ॥ **सम्यगिति** ॥ सूत्रार्थं विवृण्वन्नेव फलोक्त्योपसंहरति ॥ **अत इति** ॥ सर्वगुणाभेदेन वेदोक्तमहोपासनवत्त्वरूपयुक्तिः सम्पूर्णेत्यादिस्मृतिबलादिति सर्वाभेदादित्यस्यार्थः । इमे इत्यस्यार्थः **बहुगुणोपसंहर्तॄणामिति** ॥ त एव पूर्वत्र प्राधान्येन प्रकृता इति भावः । अन्यत्रेत्यस्यार्थः **फलविशेषेति** ॥ उपसंहारः समंजस इत्यनुवृत्तस्यार्थः **उपसंहारो युक्त एवेति** ॥ फलान्वयार्थः पञ्चम्यन्ततया सूत्रार्थानुवादः ।

## अभिनवचन्द्रिका

सर्वशब्दोऽत्र बहुशब्दपर्यायः । बहूनां गुणानामयमुपसंहर्तव्यो नायमुपसंहर्तव्य इति विभागमकृत्वा उपासनात् बहुगुणोपसंहारेणोपासनादिति यावत् । **अन्यत्र** अल्पगुणोपसंहर्तृफलादतिशयितफले । **इमे** ब्रह्मादयो, भवन्तीति सूत्रार्थः । **उभयविधक्रियादर्शनमिति** ॥ स्वापेक्षयाऽल्पायाससाध्यक्रियाफलाधिकफलजनकाजनकक्रियादर्शनं सन्देहबीजमित्यर्थः । **अल्पगुणेति** ॥ केषांचिद्बहुगुणोपसंहारः किमल्पगुणोपसंहारकेभ्यो बहुगुणोपसंहारकर्तॄणां फलातिशयसद्भावादङ्गीक्रियते, उत फलाऽभावेऽप्यङ्गीक्रियत इति भावः । **नाद्य इति** ॥ फलातिशयेन बहुगुणोपसंहारः साधयितुं न शक्य इत्यर्थः । तत्र हेतुमाह– **प्रमाणाभावेनेति** ॥ फलातिशयस्यासिद्धत्वान्न तेन लिङ्गेन तत्साधनमिति भावः । एतेन– प्रमाणाभावादित्यनेनैव पूर्णत्वात्फलातिशयनिर्णयाभावा-

(अभिनवचन्द्रिका)

दित्यधिकमिति परास्तम् । स्वपरिचितप्रमाणाभावेऽपि प्रमाणान्तरसम्भवात् स्वरूपासिद्धेर्दातुमशक्यत्वेन अज्ञानासिद्धिं वक्तुं तस्य सार्थक्यात् ॥ **न द्वितीय इति** ॥ नास्त्येव फलं तथापि बहुगुणोपसंहारः कर्तव्य एवेति द्वितीयः पक्षो न युक्त इत्यर्थः ॥ **महत्वादेवेति** ॥ महासाधनवत्वादेवेत्यर्थः ।

पूर्वपक्षस्तु– न बहुगुणोपसंहारः कर्तव्यः । उपासनातारतम्यानुसारिफलतारतम्ये **प्रमाणाभावादिति** ॥

सिद्धान्तस्तु– कर्तव्य एव बहुगुणोपसंहारः । साधनतारतम्ये फलतारतम्यनियमात् वेदोक्तमहोपासनावतामतिशयितफलाभावायोगादिति ।

## वाक्यार्थमुक्तावली

**अन्यथेति** ॥ उपसंहारस्यैवाकर्तव्यत्वे प्राप्तेरित्यत्र योग्यताविशेषेणोपसंहारानुपसंहारयोः सामञ्जस्योक्त्यनुपपत्तिरित्यर्थः ॥ **कर्तव्य इति** ॥ बहुगुणोपसंहारो न कर्तव्य उत कर्तव्यः । तदर्थमुपसंहारेण फलातिशयो नास्त्युतास्तीति । तदर्थं फलातिशये प्रमाणं नास्त्युतास्तीति । अत्रापि फलातिशयनिर्णायकोक्त्या तद्व्यावर्त्यमनिर्णीतिरित्युक्तन्यायं दर्शयन् पूर्वपक्षयति ॥ **तथा हीति** ॥ गुणोपसंहारस्य श्रुतिविहितत्वात् फलं सिद्धवत्कृत्य फलातिशयोऽस्ति वा न वेत्युक्तम् ॥ **व्यर्थायासस्येति** ॥ साध्यातिशयाभावे साधनातिशयवैय्यर्ध्यादिति भावः । सर्वगुणयुक्तत्वेनोपसंहारेऽनुपसंहर्तृभ्यः फलातिशयोऽस्ति न वेति विकल्प्य द्वितीये उपसंहारानुपपत्तिरुक्ता । तत्परिहारायाद्यपक्षमभ्युपगन्तुमिदं सूत्रमिति भावेन सर्वगुणयुक्तत्वेनोपासनादिति भाष्यं प्रवृत्तम् । प्राप्तेश्चेत्यत्र महायोग्यतावत्वेन प्रकृतत्वादिमे इति ब्रह्मादिपरामर्श इति भावेन ब्रह्मादय इत्युक्तम् । सर्वाभेद इत्यस्य सर्वेषां गुणानामभेदादविभागात् अपरिग्रहादित्यस्य तात्पर्यमुक्तं सर्वगुणयुक्तत्वेनोपासनादिति । अन्यत्रेत्यस्य फल इति विशेष्यम् । अनुपसंहर्तॄणां प्रकृतत्वेन तत्फलमन्यत्रेत्युक्तवैलक्षण्यप्रतियोगितया गृह्यत इति भावेनान्यत्रैव फल इत्युक्तम् । तथा च सर्वगुणयुक्तत्वेनोपासनेन तदुपासका ब्रह्मादयः । अन्यत्रानुपसंहर्तृफलादतिशयितफलं भवत्येवेत्याद्यपक्षो गृह्यत इति सूत्रभाष्ययोराद्यपक्षपरिग्रहमात्रार्थत्वं तावन्मनसि निधायाद्यपक्षस्य स्वीकृतत्वात् द्वितीयपक्षोक्तो

(वाक्यार्थमुक्तावली)

वैय्यर्थ्येनानुपसंहारायोगो नास्तीति तात्पर्यमाह ॥ **युक्त एवेति** ॥ आद्यपक्षाङ्गीकारे तत्पक्षोक्तदोष इत्याशङ्क्य निषेधति ॥ **न चेति** ॥ कुतो नेत्यतस्ते येन सूत्रभाष्ये माहात्म्यमित्युक्त-न्यायस्फोरकत्वेन व्याचष्टे तेषामित्यर्थः । एतेन सर्वाभेदात् सर्वगुणयुक्तत्वेनोपासनात् अतिमहत्वात् तन्निमित्तात् अन्यत्रातिमहत्येव फले ब्रह्मादयो भवन्ति नान्य इत्यत्र उक्तो भवति । असम्यङ्क्तेर-भावात् न सम्यगित्येतन्मुक्तिविशेषणमित्यभिप्रेत्याह ॥ **सम्यग्भवन्तीति** ॥

## तत्त्वसुबोधिनी

**अन्यथोक्तानुपपत्तेरिति** ॥ बहुगुणोपसंहारसमर्थनाभावे उक्तोपसंहारानुपपत्तेरित्यर्थः । अनन्तरसङ्गतिमाह ॥ **प्रकृत इति** ॥ प्राप्तेरिति पूर्वसूत्र इत्यर्थः । फलातिशयोऽस्ति न वेति । गुणोपसंहारस्य सफलत्वमात्रं तु श्रुतिविहितत्वादेव सिद्धमिति भावः ॥ **उक्तमिति** ॥ उपसंहार-समर्थनमित्यर्थः । अन्यत्रेमे इति सूत्रांशव्याख्यानपरं अन्यत्रैवेति भाष्यं व्याचष्टे । **युक्त एवेति** ॥ अनेन सूत्रभाष्ययोः अन्यत्रेत्येतत्पदं विलक्षणार्थकम् । अनुपसंहर्तृफलं तु प्रतियोगीत्युक्तं भवति । असम्यङ्क्तेरभावान्न सम्यगित्येतन्मुक्तिविशेषणमित्यभिप्रेत्याह ॥ **सम्यग् भवतीति** ॥

## वाक्यार्थविवरणम्

**उक्तेति** ॥ उपसंहारोऽर्थभेदादित्युक्तेत्यर्थः । सूत्रार्थस्तु सर्वाभेदात् सर्वेषां गुणानाम-भेदादविभागेन युगपदुपसंहारपूर्वं तद्युक्ततया भगवदुपासनात् इमे ब्रह्मादयोऽन्यत्र अनुपसंहर्तृफल-विलक्षणे फले भवन्ति । तादृशफलभाजो भवन्तीति ॥ **अतिशयेति** ॥ अनुपसंहर्तृभ्यः ॥ **फलविशेषेति** ॥ अनुपसंहर्तृभ्यः ।

## वाक्यार्थमञ्जरी

**प्रकृतेति** ॥ प्राप्तेरिति पूर्वसूत्रप्रकृतेत्यर्थः ॥ **ॐ सर्वाभेदादन्यत्रेमे ॐ** ॥ इमे ब्रह्मादयोऽनुपसंहर्तृफलापेक्षयाऽन्यत्र विलक्षणे फले भवन्ति कुतः सर्वाभेदात् सर्वेषां गुणानामभेदात् अविभागेनोपसंहारात् तेषां सर्वगुणोपसंहर्तृत्वादिति भावः । असम्यङ्क्त्यभावेन सम्यगित्यस्य मुक्तिविशेषणत्वायोगादाह ॥ **सम्यग्भवन्तीति** ॥

॥ इति सर्वाभेदाधिकरणम् ॥ ४ ॥

## ५. आनन्दाद्यधिकरणम्

सर्वेषां मुमुक्षूणां कियन्नियमेनोपास्यमिति(अत)आह—

**॥ ॐ आनन्दादयः प्रधानस्य ॐ ॥ १२ ॥**

**प्रधानफलस्य मोक्षस्यार्थे आनन्दो ज्ञानं सदात्मेत्युपास्य एव ।**
**सच्चिदानन्द आत्मेति ब्रह्मोपासा विनिश्चिता ।**
**सर्वेषां च मुमुक्षूणां फलसाम्यादपेक्षितेति ब्रह्मतर्के ॥**

### तत्त्वप्रदीपिका

ये सम्यङ्मुक्तिमात्रमिच्छन्ति न तत्र विशेषांस्तेषां ये गुणा उपास्यास्ते कियन्त इत्यधुना निरूप्यते । ननु किमत्र गुणोपास्तिप्रयोजनं, यदि स्वात्मनि गुणसमभिव्यक्तिस्तर्ह्यनर्थहेतुर्गुणोपासना स्यात् । बुद्धिसुखादीनां गुणानामत्यन्तोच्छित्तेरेवानर्थहानित्वेन मोक्षत्वात् । सुखज्ञाने हि दुःखज्ञानं दुर्वारम् । सुखदुःखयोरितरेतरव्याप्तत्वात् । अदृष्टनिमित्तानां च बुद्ध्यादीनां विशिष्टज्ञानयोगेन तदुच्छेद उच्छित्तिरेवाऽश्रयणीया । न च सुखानुभवाभावे मोक्षे प्रवृत्त्यभावप्रसङ्गः । दुःखनिवृत्त्यर्थं तदुपपत्तेरिति । न तावत्सुखज्ञानादीनां गुणानामभावो मोक्षे मन्तव्यः । प्रमाणाभावात् । यच्चोत्प्रेक्ष्यते मोक्षः सुखहीनो दुःखहीनत्वाद्वैधर्म्येण संसारवदिति । तदीश्वरेऽनैकान्तिकम् । 'आनन्दं ब्रह्मणो विद्वान्न बिभेति' 'आनन्दो ब्रह्मेति व्यजानात्' 'विज्ञानमानन्दं ब्रह्म' इत्यादिश्रुतेः पूर्णानन्दत्वादीश्वरस्य, 'निरनिष्टो निरवद्यः' 'अपहतपाप्मा विजरो विमृत्युर्विशोकः' 'योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति' इत्यादेर्निर्दुःखत्वाच्च, सुखदुःखयोरितरेतरव्याप्तिरिति वाङ्मात्रम् । 'ब्रह्मेति यद्विदुरजस्रसुखं विशोकम्' इति च भागवते । आगमविरुद्धं चैतत् । 'यत्र कामा निकामाश्च' 'यत्राऽनन्दाश्च मोदाश्च' 'सर्वे नन्दन्ति' 'स दुःखाद्विमुक्त आनन्दी भवति' 'तरति शोकमात्मवित्' इत्यादिश्रुतिभ्यो मोक्षे निर्दुःखसुखाधिगमात् । अप्रवृत्तिप्रसक्तिश्चान्यथा । पुरुषार्थाभावात् । दुःखनिवृत्तिः पुरुषार्थ इति चेत्सत्यमनुभूयमाना । अन्यथा शिलादिवन्नैव स्यात् । पुरुषार्थ इति मतिमन्तो मन्येरन् । 'मग्नस्य हि परेऽज्ञाने किं न दुःखतरं भवेत्' इति च भारते । इच्छन्ति सुप्त्यादिकं दुःखं सोढुमक्षमा इति चेन्न । सुखार्थत्वात्तदिच्छायाः । सुखमहमस्वाप्समिति हि तत्रत्यः सुखानुभवोऽनुस्मर्यते । दुःखनिवृत्तौ तत्र सुखव्यवहारो भारार्तानामिव तन्निवृत्ताविति चेत् ।

(वाक्यार्थमुक्तावली)

वैय्यर्थ्येनानुपसंहारायोगो नास्तीति तात्पर्यमाह ॥ **युक्त एवेति** ॥ आद्यपक्षाङ्गीकारे तत्पक्षोक्तदोष इत्याशङ्क्य निषेधति ॥ **न चेति** ॥ कुतो नेत्यतस्ते येन सूत्रभाष्ये माहात्म्यमित्युक्त-न्यायस्फोरकत्वेन व्याचष्टे तेषामित्यर्थः । एतेन सर्वाभेदात् सर्वगुणयुक्तत्वेनोपासनात् अतिमहत्वात् तन्निमित्तात् अन्यत्रातिमहत्येव फले ब्रह्मादयो भवन्ति नान्य इत्यत्र उक्तो भवति । असम्यङ्मुक्तेर-भावात् न सम्यगित्येतन्मुक्तिविशेषणमित्यभिप्रेत्याह ॥ **सम्यग्भवन्तीति** ॥

## तत्त्वसुबोधिनी

**अन्यथोक्तानुपपत्तेरिति** ॥ बहुगुणोपसंहारसमर्थनाभावे उक्तोपसंहारानुपपत्तेरित्यर्थः । अनन्तरसङ्गतिमाह ॥ **प्रकृत इति** ॥ प्राप्तेरिति पूर्वसूत्र इत्यर्थः । फलातिशयोऽस्ति न वेति । गुणोपसंहारस्य सफलत्वमात्रं तु श्रुतिविहितत्वादेव सिद्धमिति भावः ॥ **उक्तमिति** ॥ उपसंहार-समर्थनमित्यर्थः । अन्यत्रेमे इति सूत्रांशव्याख्यानपरं अन्यत्रैवेति भाष्यं व्याचष्टे । **युक्त एवेति** ॥ अनेन सूत्रभाष्ययोः अन्यत्रेत्येतत्पदं विलक्षणार्थकम् । अनुपसंहर्तृफलं तु प्रतियोगीत्युक्तं भवति । असम्यङ्मुक्तेरभावान्न सम्यगित्येतन्मुक्तिविशेषणमित्यभिप्रेत्याह ॥ **सम्यग् भवतीति** ॥

## वाक्यार्थविवरणम्

**उक्तेति** ॥ उपसंहारोऽर्थाभेदादित्युक्तेत्यर्थः । सूत्रार्थस्तु सर्वाभेदात् सर्वेषां गुणानाम-भेदादविभागेन युगपदुपसंहारपूर्वं तद्युक्ततया भगवदुपासनात् इमे ब्रह्मादयोऽन्यत्र अनुपसंहर्तृफल-विलक्षणे फले भवन्ति । तादृशफलभाजो भवन्तीति ॥ **अतिशयेति** ॥ अनुपसंहर्तृभ्यः ॥ **फलविशेषेति** ॥ अनुपसंहर्तृभ्यः ।

## वाक्यार्थमञ्जरी

**प्रकृतेति** ॥ प्राप्तेरिति पूर्वसूत्रप्रकृतेत्यर्थः ॥ **ॐ सर्वाभेदादन्यत्रेमे ॐ** ॥ इमे ब्रह्मादयोऽनुपसंहर्तृफलापेक्षयाऽन्यत्र विलक्षणे फले भवन्ति कुतः सर्वाभेदात् सर्वेषां गुणानामभेदात् अविभागेनोपसंहारात् तेषां सर्वगुणोपसंहर्तृत्वादिति भावः । असम्यङ्मुक्त्यभावेन सम्यगित्यस्य मुक्तिविशेषणत्वायोगादाह ॥ **सम्यग्भवन्तीति** ॥

॥ इति सर्वाभेदाधिकरणम् ॥ ४ ॥

## ५. आनन्दाद्यधिकरणम्

सर्वेषां मुमुक्षूणां कियन्नियमेनोपास्यमिति(अत)आह—

**॥ ॐ आनन्दादयः प्रधानस्य ॐ ॥ १२ ॥**

**प्रधानफलस्य मोक्षस्यार्थे आनन्दो ज्ञानं सदात्मेत्युपास्य एव ।**
**सच्चिदानन्द आत्मेति ब्रह्मोपासा विनिश्चिता ।**
**सर्वेषां च मुमुक्षूणां फलसाम्यादपेक्षितेति ब्रह्मतर्के ॥**

### तत्त्वप्रदीपिका

ये सम्यङ्मुक्तिमात्रमिच्छन्ति न तत्र विशेषांस्तेषां ये गुणा उपास्यास्ते कियन्त इत्यधुना निरूप्यते । ननु किमत्र गुणोपास्तिप्रयोजनं, यदि स्वात्मनि गुणसमभिव्यक्तिस्तर्ह्यनर्थहेतुर्गुणोपासना स्यात् । बुद्धिसुखादीनां गुणानामत्यन्तोच्छित्तेरेवानर्थहानित्वेन मोक्षत्वात् । सुखज्ञाने हि दुःखज्ञानं दुर्वारम् । सुखदुःखयोरितरेतरव्याप्तत्वात् । अदृष्टनिमित्तानां च बुद्ध्यादीनां विशिष्टज्ञानयोगेन तदुच्छेद उच्छित्तिरेवाऽश्रयणीया । न च सुखानुभवाभावे मोक्षे प्रवृत्त्यभावप्रसङ्गः । दुःखनिवृत्त्यर्थं तदुपपत्तेरिति । न तावत्सुखज्ञानादीनां गुणानामभावो मोक्षे मन्तव्यः । प्रमाणाभावात् । यच्चोत्प्रेक्ष्यते मोक्षः सुखहीनो दुःखहीनत्वाद्वैधर्म्येण संसारवदिति । तदीश्वरेऽनैकान्तिकम् । 'आनन्दं ब्रह्मणो विद्वान्न बिभेति' 'आनन्दो ब्रह्मेति व्यजानात्' 'विज्ञानमानन्दं ब्रह्म' इत्यादिश्रुतेः पूर्णानन्दत्वादीश्वरस्य, 'निरनिष्टो निरवद्यः' 'अपहतपाप्मा विजरो विमृत्युर्विशोकः' 'योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति' इत्यादेर्निर्दुःखत्वाच्च, सुखदुःखयोरितरेतरव्याप्तिरिति वाङ्मात्रम् । 'ब्रह्मेति यद्विदुरजस्रसुखं विशोकम्' इति च भागवते । आगमविरुद्धं चैतत् । 'यत्र कामा निकामाश्च' 'यत्राऽनन्दाश्च मोदाश्च' 'सर्वे नन्दन्ति' 'स दुःखाद्विमुक्त आनन्दी भवति' 'तरति शोकमात्मवित्' इत्यादिश्रुतिभ्यो मोक्षे निर्दुःखसुखाधिगमात् । अप्रवृत्तिप्रसक्तिश्चान्यथा । पुरुषार्थाभावात् । दुःखनिवृत्तिः पुरुषार्थ इति चेत्सत्यमनुभूयमाना । अन्यथा शिलादिवन्नैव स्यात् । पुरुषार्थ इति मतिमन्तो मन्येरन् । 'मग्नस्य हि परेऽज्ञाने किं न दुःखतरं भवेत्' इति च भारते । इच्छन्ति सुप्त्यादिकं दुःखं सोढुमक्षमा इति चेन्न । सुखार्थत्वात्तदिच्छायाः । सुखमहमस्वाप्समिति हि तत्रत्यः सुखानुभवोऽनुस्मर्यते । दुःखनिवृत्तौ तत्र सुखव्यवहारो भारार्तानामिव तन्निवृत्ताविति चेत् ।

(तत्त्वप्रदीपिका)

दुःखनिवृत्त्यनुभवः तर्हि तत्रापि पुरुषार्थं मन्यसे। न च दुःखाभाव एव सुखमिति वक्तुं शक्यते। प्रतियोग्यनिरूप्यत्वात्। सुखाभाव एव दुःखमित्युक्ते किञ्चोत्तरमनुभवापलापिनः। तस्मात्सुखानुभवाभावे प्रवृत्त्यभावप्रसङ्गात् श्रुतिबलाच्च मोक्षे सुखानुभवोऽभ्युपगन्तव्यः। तथाऽपि भगवानुपासित एव दुःखं निवर्तयति सुखं चोपभोजयति। किमनेन गुणविशेषान्वेषणेन। अथवा सुषुप्तिप्रलयवदनुपास्यैव च स स्यादित्यत आह– **आनन्दादयः प्रधानस्य ॥** निर्दोषसुखानुभवरूपाय मोक्षप्रयोजनाय आनन्दादयश्चत्वारो गुणा उपास्या एव। सत्त्वं नाम निर्दोषत्वम्। न हि सुखानुभवमात्रं मोक्ष इष्यते। संसारेऽपि तत्सम्भवात्। न च निर्दोषसुखानुभवस्तथा तदुपास्तिं विना प्राप्यते। 'तं यथा यथोपासते तदेव भवति' इति श्रुतेः। 'स यथाकामो भवति' इत्यादेश्च। स च पुरुषार्थः परतन्त्रस्य जीवस्य स्वामिनः सकाशाल्लभ्यत इति स्वामित्वं भगवत उपसंहर्तव्यं विशेषतः। तच्चाऽह ॥ **आत्मेति ॥** आदत्त इति ह्यात्मा। एतदेव च विशेषत उपसंहारयिष्यति महत्यामप्यापदि– आत्मेति तूपगच्छन्तीत्यादौ। 'आत्मशब्दाच्च'इति चोक्तमात्रोपसंहारप्रमाणं वदिष्यति 'आत्मेत्येवोपासीत' इति श्रुतिम्। अत एतच्चतुष्कमुपासनीयम्। फलसाम्यात्। फलस्योपास्तिसदृशत्वात्। 'प्रतिमुखस्य यथा मुखश्रीः' इति हि भागवते। अनेवम्भूतस्य चाफलत्वादुक्तन्यायेन। न च सुप्त्यादिवन्मोक्षसुखानुभवः। तस्यास्पष्टत्वात्। सांसारिकादनन्तगुणत्वान्मौक्तिकस्य। सभक्तिभगवद्दृष्टिरूपत्वाच्च।

## तत्त्वप्रकाशिका

अत्र भगवज्ज्ञानसाधनाशेषमुमुक्षुसाधारणगुणोपासनस्य निर्णीयमानत्वादस्ति शास्त्रादिसङ्गतिः। अनिर्णये तूपासनामात्रोच्छेदप्रसङ्गात्तन्निर्णेतव्यम्। प्रकृतभगवद्गुणा एव विषयः। किं सर्वमुमुक्षूपास्याः सङ्ख्यानिर्देशाभ्यां क्लृप्ताः पृथक् सन्ति न वेति संदेहः। पूर्वोक्तिर्विशेषानुक्तिश्च सन्देहबीजम्। पूर्वपक्षयति ॥ **सर्वेषामिति** ॥ न सर्वमुमुक्षूपास्याः सङ्ख्यानिर्देशाभ्यां क्लृप्ता गुणाः पृथक् सन्ति। यदि भवेयुस्तर्हि ते के कियन्तश्चेति वक्तव्याः। यदि चतुःपञ्चषा आनन्दादय इत्युच्यन्ते तर्हि केषाञ्चित्समुच्चयेऽन्येषामपि समुच्चयप्रसङ्गेन नियमासम्भवात्। एवं न निर्देशक्लृप्तिः नैतेऽन्य एवेत्यपि वक्तुं शक्यत्वात्। अतः सर्वैर्मुमुक्षुभिर्नियमेनोपास्यगुणानिर्णयान्न कस्याप्युपासनोपपत्तिरिति भावः। सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ **अत आहेति** ॥ सन्ति सङ्ख्यानिर्देशाभ्यां क्लृप्ताः सर्वमुमुक्षुभिः सर्वथोपास्या गुणा आनन्दादयश्चत्वारो न त्वधिकाः। सर्वमुमुक्षूणां तदधिकोपासनेऽ-

(तत्त्वप्रकाशिका)

समर्थत्वात् । न च निर्देशविपर्ययः । उपासनस्यानन्दादिरूपमोक्षार्थत्वात् । अपेक्षितफलानुसारेणैवेश्वरस्योपास्यत्वात् । 'तं यथा यथोपासते तदेव भवति' इति श्रुतेरिति भावः । अत्र स्मृतिं चाह ॥ सच्चिदिति ॥ सत्त्वं निर्दोषत्वम् । तच्च ज्ञानानन्दौ च सर्वापेक्षितं फलम् । आत्मपदोदितस्वामित्वं तु स्वसम्बन्धानुस्मरणस्य भगवत्प्रीतिसाधनत्वादुपास्यम् । तच्च चतुर्थे वक्ष्यत इति । अतः सर्वोपास्यगुणनिर्णयायुक्तमुपासनमिति सिद्धम् ॥

## गुर्वर्थदीपिका

उपासनामात्रोच्छेदप्रसङ्गादित्यत्र उपासनामात्रं कात्स्न्येनोपासनं सर्वेषां तद्गुणोपासनमिति यावत् । तस्योच्छेदप्रसङ्गादित्यर्थः । अन्यथा काप्युपासना न स्यादित्येवोक्ते साधारणोपास्य गुणाभावेऽपि स्वस्वयोग्यगुणोपासनसम्भवेन वाक्यमसङ्गतं स्यात् । अत उक्तैव योजना । केषाञ्चित्समुच्चय इत्यस्य नियामकं विना स्वेच्छयैव मम ध्यानार्थमिमे गुणा एतावन्त इति मनसि पुञ्जीकरणे श्रौतत्वाविशेषाद्भगवद्गुणत्वाविशेषाच्च गुणान्तरपुञ्जीकरणस्यापि न्यायप्राप्तत्वादित्यर्थः । एकत्रैव पुञ्जीभूततण्डुलतिलमाषमुद्गादिराशौ तण्डुलचतुष्टयमानयेत्यादिविशेषनिर्देशं विना केवलमितश्चतुष्टयमानयेत्येवोक्ते तण्डुलचतुष्टयवद्धान्यान्तरमेलनेनापि चतुष्ट्वपूरणवदिति भावः । न च निर्देशविपर्यय इत्यस्य 'सच्चिदानन्द आत्मा' इति निर्देशेन विना सर्वेश्वरः सर्वकर्ता सर्वनियामकः सर्वशक्तश्चेति गुणान्तरचतुष्टयेनापि निर्देशसम्भवादित्यर्थः । 'सुखमेव मे स्याद्दुःखं मनागपि माभूत्' इति सर्वापेक्षितमोक्षेऽप्यानन्दस्य तदनुभवस्य दुःखादिदोषराहित्याख्यसत्तायाः यथायोग्यं स्वावरनियामकत्वस्य चेति गुणचतुष्टयस्यैव सर्वैरर्थ्यतेति भावेनोक्तमपेक्षितमिति । चतुर्थे वक्ष्यत इत्यत्र चतुर्थाध्याये 'आत्मेति तूपगच्छन्ति ग्राहयन्ति च'इत्यस्मिन्नधिकरण इत्यर्थः ।

## भावबोधः

अनन्तरसङ्गतिं सूचयन् विषयमाह– प्रकृतेति ॥ 'प्राप्तेश्च समञ्जसम्' इत्यत्र युगपत्प्रतीतिविषयत्वेन प्रकृता भगवद्गुणा इत्यर्थः । तथा च 'प्राप्तेः'इत्यत्र युगपत्प्रतीतिविषयत्वेन ये गुणाः प्राप्ताः ते उपास्या इत्यभिहिते शङ्काद्वयमुत्थितम् । फलातिशयनिर्णयाभावहेतुकोपसंहाराकर्तव्यताक्षेपस्य विषयविशेषानिर्णयहेतुकतयाक्षेपात् प्राबल्येन पूर्वाधिकरणे तमाक्षेपं परिहृत्य

(भावबोधः)

अनन्तरमयमाक्षेपः परिह्रियत इत्यनन्तरसङ्गतिरिति भावः । किं **सर्वेत्यादि** ॥ अत्र भगवद्गुणाः सर्वमुमुक्षूपास्याः सङ्ख्यानिर्देशाभ्यां पृथक् क्लृप्ता न सन्त्युत सन्तीति चिन्ता । तदर्थमानन्दादि-गुणचतुष्टयव्यतिरिक्तगुणानां सर्वमुमुक्ष्वपेक्षितफलहेतुत्वातदुपासनाशक्यत्वे वर्तेते न वेति । आनन्दादीनां केषाञ्चित् समुच्चये प्राप्ते सर्वगुणसमुच्चयः सर्वेषां स्यादिति न्यायविवरणं तन्निवर्तनीयाशङ्काप्रदर्शनपूर्वकं योजयति– **यदीति** ॥ चतुष्पञ्चषा इति सङ्ख्या क्लृप्तिः । आनन्दादय इति निर्वेशक्लृप्तिरिति ज्ञातव्यम् । अनेन न्यायविवरणे आनन्दादीनामिति निर्देशक्लृप्तिः केषाञ्चिच्चतुष्पञ्चषाणामिति सङ्ख्याक्लृप्तिरुक्तेत्युक्तं भवति । अत्र न्यायविवरणे सर्वगुणसमुच्चयः सर्वेषां स्यादिति सङ्ख्याक्लृप्तावतिप्रसङ्गोक्तिः । निर्देशक्लृप्त्यतिप्रसङ्गस्यापि उपलक्षणमित्यभिप्रेत्याह– **एवमिति** ॥ अल्पशक्तित्वात्तेषां पुंसामिति न्यायविवरणं व्याख्याति– **सर्वेति** ॥ अनेन न्यायविवरणे तेषामित्यनेन पूर्वं सर्वेषामिति प्रकृतानां सर्वमुमुक्षूणां परामर्श इत्युक्तं भवति । ब्रह्मादीनां केषाञ्चिदानन्दादिगुणचतुष्टयाधिकगुणोपासनासमर्थत्वेऽपि न सर्वेषां तत्सामर्थ्यम् । मनुष्योत्तमानां तदभावादिति भावः । नन्वयमपि नियमो नास्ति–

'आत्मेत्येव परं देवमुपास्य हरिमव्ययम् ।
केचिदत्रैव मुच्यन्ते' इति ॥

आत्मत्वमात्रोपासकानामपि मुक्तेरिति चेत् मैवम्, अत्र कर्मक्षयोत्क्रान्तिमार्गभोगलक्षण-चतुर्विधमोक्षयोग्यानामेवानन्दादिगुणनियतिसमर्थनात् । आत्मत्वमात्रोपासकानां तु 'नोत्क्रामन्ति' इत्युक्तत्वेन **तदयोग्यत्वादिति** ॥

ननु सत्त्वादिगुणत्रयोपासनाफलस्य निर्दुष्टज्ञानानन्दरूपस्य सर्वापेक्षितत्वेनास्तु तदुपास-नावश्यकत्वम् । आत्मत्वोपासनाफलस्य स्वामित्वस्य सर्वमुमुक्ष्वपेक्षितत्वाभावेन कथं तदुपासन-स्यावश्यकत्वमित्यत आह– **आत्मपदेति** ॥ **तच्चेति** ॥ तत् भगवत्प्रीतिसाधनत्वम् । चतुर्थे 'आत्मेति तु उपगच्छन्ति ग्राहयन्ति च' इत्यत्रेत्यर्थः ।

## भावदीपः

उपासनस्येत्युक्त्या साक्षादेवास्यान्तर्भावसङ्गतिः सूचिता ॥ **उपासनामात्रेति** ॥ उपासनासामान्येत्यर्थः । तदुच्छेदे च कुतो विशेषचिन्ता पूर्वोक्तेति भावः । एतेन सिद्धे हि

(भावदीपः)

सामान्यत उपासनाकर्तव्यत्वे फलातिशयादिना अधिकारिभेदादिना च सर्वगुणोपासनाकर्तव्यत्व-रूपविशेषचिन्ता पूर्वत्र कृता युक्ता । सैव त्वयुक्ता । गुणनिर्णयाभावेनोपासनामात्रस्यैवायुक्तेरिति वा सर्वभेदादिति सर्वगुणोपासनस्य फलविशेषोक्तिरयुक्ता । उपासनामात्रस्यैवासिद्ध्या तद्विशेषासिद्धे-रित्यव्यवहितपूर्वमात्राक्षेपेणात्र पूर्वपक्षप्रवृत्तेर्वा पूर्वसङ्गतिः सूचिता । यद्यपीदमधिकरणमुप-संहारनयात्पूर्वमेव निवेश्यम् उपासनामात्रसमर्थनपरत्वादस्य । अत एवाणुभाष्ये सच्चिदानन्द आत्मेति एतन्नयार्थः प्रथमं निवेशितः । तथापि सर्वाधिकार्युत्तमब्रह्माधिकारिकत्वात्सर्वगुणोपासनस्य मुख्योपासनत्वाच्चादौ तन्निवेश इति भावः ॥ **प्रकृतेति** ॥ सर्वाभेदादित्यादौ सर्वपदादिना प्रकृतेत्यर्थः । सर्वेषामिति भाष्योक्तेराह ॥ **सर्वेति** ॥ **सङ्ख्येति** ॥ चतुःपञ्चेत्यादिसङ्ख्यया आनन्दज्ञानेत्यादिविशेषोद्देशेन च क्लृप्ता इत्यर्थः ॥ **विशेषेति** ॥ उपासनाविधिषु विशेषानुक्ति-रित्यर्थः । आनन्दादीनां केषाञ्चित्समुच्चये प्राप्ते सर्वगुणसमुच्चयः सर्वेषां स्यादित्यन्यत्रोक्तन्यायमिह प्रश्नपूर्वमाह ॥ **ते के कियन्तश्चेति वक्तव्या इत्यादिना** ॥ **चतुःपञ्चषा इति** ॥ चत्वारः पञ्च वा षड्वेत्यर्थः । सङ्ख्ययाव्ययासन्नादूराधिकसङ्ख्याः सङ्ख्येय इति बहुव्रीहिः । बहुव्रीहौ सङ्ख्येयेडज-बहुगणादिति समासान्तः । केषाञ्चित् आनन्दादिगुणानामित्यर्थः । अन्येषां बलैश्वर्यादीनामित्यर्थः ॥ **अत इति** ॥ सङ्ख्यानिर्देशक्लृप्तौ नियामकाभावादित्यर्थः । अनिर्णये हेतुरयम् । कस्यापि गुणस्येत्यर्थः ॥ आनन्दो ज्ञानमित्यादिभाष्यं व्याचष्टे ॥ **सन्तीत्यादिना** ॥ **सर्वमुमुक्षुभिरिति** ॥ सर्वेषां मुमुक्षूणामित्येतत्पूर्वभाष्यादत्राप्यनुवर्तत इति भावः । एवकारस्य इत्येवोपासीतेति भिन्नक्रममुपेत्य तद्व्यावर्त्यमाह ॥ **न त्विति** ॥ कुत इत्यतोऽल्पशक्तित्वात्तेषां पुंसामित्यन्यत्रोक्तं हेतुमाह ॥ **सर्वमुमुक्षूणामिति** ॥ अयं च तेषामित्यस्यार्थः । सङ्ख्याक्लृप्तौ न्यायविवरणोक्तहेतुं योजयित्वा निर्देशक्लृप्तौ प्रधानफलस्य मोक्षस्यार्थ इति भाष्यं हेतुतया योजयति ॥ **न चेत्यादिना** ॥ **आनन्दादिरूपेति** ॥ निर्दोषानन्दानुभवरूपेत्यर्थः । तथाप्यानन्दादय एवोपास्य इति कुत इत्यतस्तस्य हेतुतां व्यनक्ति ॥ **अपेक्षितेति** ॥ तदेव भवति तदेव प्राप्नुवन्तीत्यर्थः । भू प्राप्तौ परस्मैपदमेकवचनं च छान्दसम् ॥ **अत्रेति** ॥ मोक्षार्थमेत एवोपास्या इत्यत्रेत्यर्थः । फलसाम्या-दित्यत्रापेक्षितफलस्वरूपमाह ॥ **सत्त्वमिति** ॥ आत्मत्वोपासने बीजमन्यदाह ॥ **आत्मेति** ॥ स्मृतावात्मत्वोपासने हेत्वनुक्तेराह ॥ **तच्चेति** ॥ तच्चात्मत्वोपासनमावश्यकमित्येतच्चतुर्थाद्यपादे आत्मेति तूपगच्छन्तीत्यत्र वक्ष्यत इत्यर्थः ॥ **अत इति** ॥ अपेक्षितमोक्षाख्यफलार्थतया

(भावदीपः)

वक्ष्यमाणदिशा भगवत्प्रीतिहेतुतया चाधिकोपासने शक्त्यभावाच्च सत्त्वज्ञानानन्दात्मत्वानां चतुर्णामेवावश्यकत्वादिति निर्णये हेतुरयम् । यद्वा अत इत्यस्यैव विवरणं **सर्वेत्यादि** ॥

## अभिनवचन्द्रिका

**उपासनामात्रोच्छेदप्रसङ्गादिति** ॥ सामान्यगुणोपासनपूर्वकत्वाद्विशेषगुणोपासनानां निर्णयाभावेन प्राथमिकोपासनाभावे उपासनामात्रविलोपप्रसङ्ग इत्यर्थः ॥ **पूर्वोक्तिरिति** ॥ 'मानुषैः कैश्चिदेव तु' इति पूर्वोक्तिर्विशेषानुक्तिश्च सन्देहबीजमित्यर्थः ।

पूर्वपक्षस्तु– न सन्त्येव सर्वसाधारणतयोपास्यगुणाः क्लृप्ताः । नियामकाभावात् । ततश्च क्लृप्त्यभावेन प्राथमिकोपासनाऽसम्भवादुपासनामात्राऽसम्भव इति ।

सिद्धान्तस्तु– क्लृप्ता एव सर्वमुमुक्षूपास्या गुणाः । सर्वेषां मुक्तौ आनन्दज्ञानदुःखाभावानामपेक्षितत्वात् । तत्सिद्धये सत्त्वचिदानन्दास्तावत् उपास्याः । यत्तु आत्मत्वापरपर्यायम् । स्वामित्वं स्वसम्बन्धानुस्मरणस्य भगवत्प्रीतिसाधनत्वात्तदप्युपास्यम् । एवञ्च प्राथमिकोपास्यनिर्णयात्सर्वाप्युपासना युक्तैवेति सिद्धम् ।

## वाक्यार्थमुक्तावली

**उपासनामात्रोच्छेदेति** ॥ सर्वमुमुक्षुभिर्नियमेनोपास्यसामान्यगुणानिर्णये उपासन एवाप्रवृत्तेः प्रवृत्तस्यैव युगपत्प्रतीतगुणान्तरोपासनसम्भवादन्यथाऽसम्भवादिति भावः । उपासनाफलनिरूपणानन्तरं तद्विषयसर्वसाधारणगुणनिर्णयादनन्तरसङ्गतिः ॥ **किमिति** ॥ सर्वमुमुक्षूपास्या गुणाः सङ्ख्यानिर्देशाभ्यां क्लृप्ता न सन्त्युत सन्तीति चिन्ता । तदर्थं सङ्ख्यानिर्देशक्लृप्तिकल्पकं **नास्त्युतास्तीति** ॥ **विशेषानुक्तिरिति** ॥ मानुषैः कैश्चिदेव त्वित्युक्तगुणाः सर्वमुमुक्षुभिर्नियमेनोपास्या इति वक्तव्यम् । मध्यमगुणानामुत्तमगुणानां च सर्वमुमुक्षुसाधारण्यायोगात् । तत्र कैश्चिदेव त्वित्येवोक्ते विशेषानुक्तिः सन्देहबीजमिति भावः । पूर्वपक्षं सूचयतीति । कियन्नियमेनोपास्यं न कियदपीति काका सङ्ख्याक्लृप्त्याक्षेपेऽपि निर्देशक्लृप्त्याक्षेपस्यात्र मुखतो लाभात् सूचयतीत्युक्तम् । अत एव किन्नियमेनोपास्यं न कियदपीति काकुलब्धं सङ्ख्याक्लृप्त्याक्षेपमुपलक्षणं

(वाक्यार्थमुक्तावली)

मत्वोभयमाक्षिपति ॥ **न सर्वमुमुक्षूपास्या इति** ॥ कुतो न सन्तीत्यतः सङ्ख्याप्रश्नपरत्वेन तदेव वाक्यं व्याकुर्वन्नुपलक्षणत्वे निर्देशमपि पृच्छति ॥ **यदि भवेयुरिति** ॥ यदिशब्दाध्याहारेण तदेव वाक्यं सङ्ख्याप्रश्नोत्तरशङ्कापरत्वेन व्याचष्टे ॥ **यद्यीति** ॥ एतेन यदि कियच्चतुष्पञ्चषट्सङ्ख्याकं नियमेनोपास्यमित्युच्यत इति व्याख्यातं भवति । उपलक्षणीयमर्थमाह ॥ **आनन्दादय इति** ॥ यद्यानन्दादय इत्युच्यत इत्यर्थः । तदुत्तरत्वेन समुच्चय इत्युक्तन्यायप्रदर्शकत्वेन तर्हीत्यध्याहारेण तदेव भाष्यं व्याचष्टे ॥ **तर्हीति** ॥ तर्हीत्यस्यैव विवरणं **केपाञ्चिदिति** ॥ एतेन तर्हि चतुष्पञ्चषण्णामुपास्यत्वे पुनः किन्नियमेनोपास्यं प्रसज्येत । ततोऽधिकानां कियतां सप्ताष्टादिसङ्ख्याकानामपि नियमेनोपास्यत्वमिति समुच्चयः प्रसज्यत इत्यर्थ उक्तो भवति । निर्देशाक्लृप्तावप्यतिप्रसङ्गमुपलक्षणत्वेनाह ॥ **एवमिति** ॥ **आनन्दादयश्चत्वार इति** ॥ यद्यपि सूत्रे आनन्दादय इति आत्मानन्दमात्रस्य मुखतो निर्देशेनादय इत्येवोक्तम् । चत्वार इति सङ्ख्याविशेषनिर्देशश्च न कृतः । तथापि प्रधानस्य इत्युक्तफलपर्यालोचनात् सङ्ख्यानिर्देशज्ञानं सुकरम् । निर्दोषानन्दानुभवस्वावरस्वामित्वरूपप्रधानफलस्य चतूरूपत्वेनानन्दादय इत्युक्ते सङ्ख्यानिर्देशविशेषज्ञानसम्भवादानन्दादयश्चत्वार इति व्याख्यातम् । महदल्पसाधारण्येन मुमुक्षुमात्रापेक्षिततया प्रधानफलस्यार्थ इत्युक्त्यैव सूचितं अल्पशक्तिरित्युक्तन्यायं चत्वार एवोपास्या नाधिका इत्यत्र हेतुत्वेनाह ॥ **सर्वमुमुक्षूणामिति** ॥ निर्देशाक्लृप्तावपि प्रधानस्येत्ययमेव हेतुरित्याह ॥ **न च निर्देशविपर्यय इत्यादिना** ॥ सर्वेषां च मुमुक्षूणामित्यस्य कर्मक्षयादिरूपचतुर्विधमोक्षेच्छूनां सर्वेषां सच्चिदानन्द आत्मेति ब्रह्मोपासाफलस्य साम्यात् फलस्योपास्तिसदृशत्वात् अपेक्षिता विनिश्चिता इत्यर्थः । तदुक्तं तत्त्वप्रदीपे । फलसाम्यात् फलस्योपास्तिसदृशत्वात्प्रतिमुखस्य यथा मुखश्रीरिति भागवतमिति । आत्मत्वोपासनस्य कर्तव्यत्वे निमित्तान्तरमप्याह ॥ **आत्मपदोदितेति** ॥ **तच्चेति** ॥ भगवत्प्रतीतिसाधनत्वमात्मगृहीतिरित्यत्र चतुर्थे वक्ष्यत इत्यर्थः ।

## तत्त्वसुबोधिनी

अनन्तरसङ्गतिं सूचयन् विषयमाह ॥ **प्रकृतेति** ॥ प्राप्तेश्च समंजसमित्यत्र युगपत्प्रतीतिविषयत्वेन प्रकृताः भगवद्गुणा इत्यर्थः । तथा च प्राप्तेरित्यत्र युगपत्प्रतीतिविषयत्वेन ये गुणाः प्राप्ताः ते उपास्या इत्यभिहिते शङ्काद्वयमुद्धितं फलातिशयनिर्णयाभावाद्विषयविशेषनिर्णया-

(तत्त्वसुबोधिनी)

भावाच्चाकर्तव्यतोपसंहारस्येति । तत्र फलातिशयाभावहेतुकोपसंहारस्य कर्तव्यता क्रमस्य विषय-विशेषनिर्णयाहेतुकक्षे प्राप्तावसरेण । पूर्वाधिकरणेन तमाक्षेपं परिहृत्यानन्तरमयमाक्षेपः परिह्रियते इत्यनन्तरसङ्गतिरिति भावः ॥ **सङ्ख्यानिर्देशाभ्यामिति** ॥ चतुः पञ्चषा इति सङ्ख्याक्लृप्तिः । आनन्दादय इति निर्देशक्लृप्तिः ॥ **सर्वमुमुक्षूणामिति** ॥ ब्रह्मादीनां केषांचिदानन्दादिगुणाः चतुःषष्ट्याधिकगुणोपासनासमर्थनमपि न सर्वेषां तत्सामर्थ्यं मनुष्योत्तमानां तदभावादिति भावः । न चायमपि न निर्णयः । 'आत्मेत्येव परं देवमुपास्य हरिमव्ययम् । केचिदत्रैव मुच्यन्ते' इत्यात्म-मात्रोपसकानामपि मुक्त्युक्तेरिति वाच्यम् । कर्मक्षयोत्क्रान्तिमार्गभोगलक्षणचतुर्विधमुक्तियोग्याना-मेवानन्दादिगुणनियतिसमर्थनात् । आत्मत्वमात्रोपासकानां नोत्क्रामन्ति इत्युक्तत्वेन तदयोग्य-त्वादिति भावः । ततः किमित्यत आह ॥ **अपेक्षितेति** ॥ अपेक्षितफलानुसारेण उपासनं कर्तव्यमित्यत्र प्रमाणमाह ॥ **तमिति** ॥

ननु सत्वादिगुणत्रयोपसानाफलस्य निर्दोषत्वज्ञानानन्दरूपस्य सर्वापेक्षितत्वेनास्तु तदुपासन-स्यावश्यकत्वम् । आत्मत्वोपासनाफलस्य स्वामित्वस्य सर्वमुमुक्ष्वपेक्षितत्वाभावेन कथं तदुपासन-स्यावश्यकत्वमित्यत आह ॥ **यदेति** ॥ स्वामित्वोपासने हि स्वस्य परमात्मा स्वामीति परमात्मना साकं स्वस्य स्वाम्यस्वामिरूपसम्बन्धानुस्मरणं भवति । तच्च भगवत्प्रीतिसाधनमित्यतः तदप्युपास्य-मित्यर्थः । ननु कथमस्य भगवत्प्रीतिसाधनत्वमित्यत आह ॥ **तच्चेति** ॥ तत् भगवत्प्रीतिसाधनत्वम् । चतुर्थे, आत्मेति तूपगच्छन्ति ग्राहयन्ति चेत्यत्रेत्यर्थः ।

## वाक्यार्थविवरणम्

**विशेषानुक्तिरिति** ॥ गुणैरुपास्य इत्येव सामान्यत उक्तेरेतैरेतावद्भिरिति विशेषानुक्तिरित्यर्थः । चतुःपञ्चषाणामिति सङ्ख्याक्लृप्तिर्न सम्भवतीत्याह ॥ **न हीति** ॥ केषाञ्चित् चतुष्पञ्चषाणां समुच्चये उपास्यत्वेन समुच्चये । युगपत्समुच्चयेनोपास्यत्वकथन इति यावत् । अन्येषां चतुष्पञ्चषेभ्यो व्यतिरिक्तानाम् । तथा च चतुष्पञ्चषा एवेति नियमासम्भवेन सर्वेषां सर्वगुणसमुच्चयः स्यादिति भावः ॥ **नेति** ॥ आनन्दादिनामका न, किन्त्वन्ये नामान्तरोपेता इत्यर्थः ॥ **तच्चेति** ॥ सत्त्वमित्यर्थः । स्वशब्देन भगवान् । **सम्बन्धः** । स्वामिभृत्यभावः ।

## वाक्यार्थमञ्जरी

ज्ञानसाधनेत्युपासनाविशेषणम् ॥ **उपासनामात्रोच्छेदेति** ॥ सामान्यनिर्णय एव विशेष-निर्णयादिति भावः ॥ **प्रकृतेति** ॥ प्राप्तेश्च समंजसमित्यत्र युगपत्प्रतीतिविषयत्वेन प्रकृतेत्यर्थः । निर्देशः एतादृशा इति निरूपणम् ॥ **पूर्वोक्तिरिति** ॥ भगवद्गुणानां मुमुक्षूपास्यत्वोक्तिरित्यर्थः । सङ्ख्यानिर्देशाभ्यामक्लृप्तत्वे उपास्यत्वायोगादिति भावः । चतुष्पञ्चषा इति सङ्ख्याक्लृप्तिः आनन्दादय इति निर्देशक्लृप्तिरिति ज्ञातव्यम् ॥ **केषाञ्चिदिति** ॥ यद्यानन्दादीनां चतुष्पञ्चषाणामुपास्यत्वं तर्हि सर्वेषां सर्वोपास्यत्वं स्यात् अविशेषादित्यर्थः ॥ **नैत इति** ॥ आनन्दादयो न किन्तु प्रकाशवीर्यादय एवेति वक्तुं शक्यत्वादित्यर्थः ।

**ॐ आनन्दादयः प्रधानस्य ॐ** ॥ प्रधानस्य मोक्षस्यार्थे आनन्दज्ञाननिर्दोषात्मत्वाख्याश्च-त्वारो गुणा उपास्या इत्यर्थः ॥ **असमर्थत्वादिति** ॥ अतो न केषाञ्चित्समुच्चयः इत्युक्तदोष इति भावः ॥ **तमिति** ॥ तं भगवन्तं यद्गुणविशिष्टतयोपासते तद्गुणवन्तो भवन्तीत्यर्थः । ननु सच्चिदानन्ददोपासनाफलस्य निर्दोषत्वज्ञानानन्दादिरूपस्य सर्वापेक्षिततत्वेनास्तु तदुपासनस्यावश्य-कत्वं आत्मत्वोपासनफलस्य स्वामित्वस्य सत्वेन कथं तदुपासनस्यावश्यकत्वमित्यत आह ॥ **आत्मपदेति** ॥ **तच्चेति** ॥ तदात्मत्वोपासनस्य भगवत्प्रीतिसाधनत्वं चतुर्थेऽध्याये । आत्मेति तूपगच्छन्ति ग्राहयन्तीत्यत्र वक्ष्यत इत्यर्थः ।

॥ इति आनन्दाद्यधिकरणम् ॥ ५ ॥

## ६. प्रियशिरस्त्वाधिकरणम्

**॥ ॐ प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॐ ॥ १३ ॥**

फलभेदार्थमुपचयापचययोर्भावान्न सर्वेषां प्रियशिरस्त्वादिगुणोपासा प्राप्तिः ।

'नैव सर्वगुणाः सर्वैरुपास्या मुक्तिभेदतः ।
विरिञ्चस्यैव यन्मुक्तावानन्दस्य सुपूर्णता' इति (हि) वाराहे ॥

### तत्त्वप्रदीपिका

भूम्नः क्रतुवज्ज्यायस्त्वमिति वक्ष्यमाणन्यायेन पूर्णानन्दः पूर्णज्ञान इत्याद्युपासनं प्राप्यते । तस्य च पूर्णानन्दस्याऽनन्दमयशब्दोदितस्य विशेषा उच्यन्ते 'तस्य प्रियमेव शिरः । मोदो दक्षिणः पक्षः । प्रमोद उत्तरः पक्षः । आनन्द आत्मा । ब्रह्म पुच्छं प्रतिष्ठा'इति । तेऽप्युपसंहर्तव्याः । चतुर्णां गुणानां साकल्येनोपासनीयत्वादित्यत आह– **प्रियशिरस्त्वादीत्यादिसूत्रम् ॥** एकैकस्मिन्नपि गुणे विशेपाणामुपचयापचयौ फलतारतम्यार्थं भवतः । अपचयः फलमात्राय भवति । न फलाभावाय । उक्तगुणोपास्तावुपचयोऽधिकफलाय भवति । अतो नापरेषां प्रियशिरस्त्वादिगुणविशेपोपास्तिः प्राप्यते । श्रवणोत्थं 'प्रियं' दर्शनोत्थो 'मोदः' भोगोत्थः 'प्रमोदः' स्वरूपभूत 'आनन्दः' । तत्तत्प्रवर्तकतया च तत्तद्व्यपदेशः ।

'शिरः प्रिये स्थितं तस्य परेयं प्रियनामकम् ।
मोदप्रमोदयोर्बाहू मोदनाच्च प्रमोदनात् ॥
मोदप्रमोदनामानावानन्दश्चाऽततत्वतः ।
मध्यमानन्दसंस्थं च ब्रह्म सृष्ट्यादि बृंहयत् ।
पुच्छं प्रधानवायौ च ब्रह्माख्ये संस्थितं सदा ॥
अभेदोऽप्यविशेपोऽपि परमैश्वर्ययोगतः ।
देहदेहिव देवासौ पञ्चधाऽवस्थितो हरिः' इति यजुस्संहितायाम् ॥

### तत्त्वप्रकाशिका

अत्र ब्रह्मज्ञानसाधनोपासने प्रियशिरस्त्वादिगुणानां साधारण्यनिरासादस्ति शास्त्रादिसङ्गतिः । साधारण्ये तूक्तवाधप्रसङ्गान्निरसनीयमेतत् । भगवद्गुणान्तर्गताः प्रियशिरस्त्वादिगुणाः श्रूयन्ते तस्य

(तत्त्वप्रकाशिका)

**प्रियमेव शिर इत्यादौ । त एवात्र विषयः । किं सर्वमुमुक्षूपास्या न वेति सन्देहः । द्विविधगुणप्रतीतिः सन्देहवीजम् । सर्वोपास्या इति पूर्वः पक्षः । प्रियशिरस्त्वादीनामानन्दादिविशेषत्वादानन्दादीनां च सर्वोपास्यत्वात् । अन्यथाऽऽनन्दादेः सम्यगनुपासनेनाऽमुक्तिप्रसङ्गात् । अतः प्रियशिरस्त्वादीनां सर्वोपास्यत्वान्न चत्वार एवेति नियम इति । सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ॥ प्रियेति ॥ नानन्दादिविशेषत्वेन सर्वेषां प्रियशिरस्त्वादिगुणोपासनयोग्यता वक्तव्या । विशेषावलम्बनेनोपासने सर्वेषां सर्वगुणोपास्तिप्रसङ्गात् । सर्वगुणानामपि गुणचतुष्टयविशेषत्वस्य वक्तुं शक्यत्वात् । न च सर्वेषां सर्वगुणोपास्तिरस्त्विति वाच्यम् । आनन्दश्रुतिसिद्धफलभेदसिद्ध्यर्थं गुणोपासनेऽपि तारतम्यस्यापेक्षितत्वादिति भावः । अत्रैव स्मृतिमाह ॥ नैवेति ॥ न च प्रियशिरस्त्वाद्यनुपासने मोक्षाभावः । 'यथायोग्यं गुणपूगानुपास्यफलं भवेन्मुक्तिगं नैव चान्यत् । नित्यैकाग्र्यव्यङ्ग्यताहेतुतश्च साक्षाद्दृशिर्नो तद्विशेषैः स्मृतेश्च' इति श्रुतेर्विशेषानुपासनेऽपि योग्यगुणोपासनेनैव फलप्राप्तेः । अतः प्रियशिरस्त्वादीनामसाधारण्याच्चत्वार एव सर्वोपास्या इति सिद्धम् ।**

## गुर्वर्थदीपिका

सम्यगनुपासनेनामुक्तिप्रसङ्गादित्यत्र सम्यगनुपासने सविशेषानन्दानुपासने सम्यगनुपासित-राजवदानन्द एव नायास्यतीति शङ्कितुराशयः । सर्वगुणानामपि गुणचतुष्टयविशेषत्वस्येत्यत्र गुणचतुष्टयान्तर्गतात्मत्वेऽन्तर्भावादित्यर्थः । नित्यैकाग्र्यव्यङ्ग्यताहेतुतश्चेत्यत्र एकाग्रस्य चित्तस्य भावः ऐकाग्र्यं ध्यानमिति यावत् । नित्यमैकाग्र्ये कृते सति यस्य गुणस्य व्यङ्ग्यता तस्यैवोपास्यतेति हेतोरित्यर्थः ।

## भावबोधः

**प्रियशिरस्त्वादिगुणानामिति** ॥ आनन्दस्योपास्यतया सर्वमुमुक्षुसाधारण्येऽभिहिते तद्विशेषस्य प्रियशिरस्त्वादेरपि साधारण्यशङ्कायां तन्निरासादनन्तरसङ्गतिरिति भावः ॥ **किं सर्वेति** ॥ अत्र प्रियशिरस्त्वादयो गुणाः सर्वमुमुक्षूपास्या भवन्त्युत न भवन्तीति चिन्ता । तदर्थं प्रियशिरस्त्वादीनां सर्वोपास्यानन्दादिविशेषत्वं सर्वेषां तदुपासनाप्रयोजकं भवत्युत **न भवतीति** ॥ तदर्थमुपासनायां किं तारतम्यं **नाङ्गीकार्यमुताङ्गीकार्यमिति** ॥ तदर्थं विशिष्योपासनाजनिते फले सर्वेषां योग्यताऽस्ति उत नास्तीति । तदर्थं विशिष्योपासनाभावेऽपि सामान्याकारोपासनेन मोक्षो न भवत्युत भवतीति ।

(भावबोधः)

प्रियशिरस्त्वादीनामानन्दादिविशेषत्वेनैव दर्शनात्तेषामपि सर्वोपसंहार्यत्वमिति न्यायविवरणं मनसि निधाय पूर्वपक्षमाह– **सर्वोपास्या इतीति** ॥ प्रियशिरस्त्वादीनामानन्दादिविशेषत्वादिति पूर्वपक्ष-हेतोस्तर्कपराहतिमाह– **विशेषावलम्बेनेति** ॥ इष्टापत्तिमाशङ्क्य तन्निषेधपूर्वकं फलभेदार्थमुप-चयापचययोः भावादिति भाष्यं व्याचष्टे– **न चेति** ॥ गुणोपासनेऽपीति भाष्ये शेषोक्तिः । फलभेदस्य प्रामाणिकत्वे स्यातां तेनोपासनोपचयापचयौ स एव कुत इत्यत उक्तम्– **आनन्दादि-श्रुतिसिद्धेति** ॥ विशेषत्वहेतोः पूर्वपक्ष्युक्तविपक्षबाधकतर्कमनूद्य तन्निषेधपूर्वकं तद्धेतुत्वेन सिद्धान्तन्यायविवरणं योजयति– **न चेत्यादिना** ॥

## भावदीपः

**साधारण्ये त्विति** ॥ सर्वमुमुक्षुसाधारण्य इत्यर्थः । फलसाम्यादिति पूर्वोक्तन्यायेनेति भावः । तेन पूर्वन्यायेन वा पूर्वोक्ताक्षेपेण वेह पूर्वपक्षप्रवृत्तेरवान्तरसङ्गतिरपि सूचिता ॥ **तस्य प्रियमेवेति** ॥ तस्यानन्दमयस्येत्यर्थः । आनन्दमयस्य भगवत्त्वं चानन्दमयोऽभ्यासादित्यत्र निर्णीतमिति भावः ॥ **द्विविधेति** ॥ सुखादेः सम्भृत्यादेश्च प्रतीतिरित्यर्थः । प्रियशिरस्त्वादीनामानन्दादिविशेषत्वेनैव दर्शनात्तेषामपि सर्वोपसंहार्यत्वमित्यन्यत्रोक्तपूर्वपक्षप्रतिज्ञाहेतू व्यनक्ति ॥ **सर्वोपास्या इति** ॥ एतेनोपसंहार्यत्वोक्तिर्भाष्यदिशोपासनोपलक्षणमिति सूचितम् । आनन्दविशेषत्वमानंदमयनयटीकायां व्यक्तम् । श्रवणोत्थं प्रियम् । दर्शोनोत्थं सुखं मोदः । भोगोत्थं सुखं प्रमोद इति तत्वप्रदीपोक्तिः ॥ **अन्यथेति** ॥ सविशेषानन्दानुपासन इत्यर्थः । फलोक्त्योपसंहरति ॥ **अत इति** ॥ सम्यगुपासनस्यैवानन्दानुभवरूपमुक्तिहेतुत्वात्सर्वोपास्यत्वमित्यर्थः ॥ पूर्वोक्तं प्रापकहेतुमनुवदन्नेव न सर्वेषामित्यादिभाष्यं व्याचष्टे ॥ **नानन्दादीति** ॥ प्रापकहेतुमतिप्रसङ्गेन निराह ॥ **विशेषेति** ॥ व्यावर्त्यचोद्यपूर्वं फलभेदार्थमित्यादिभाष्यं व्याचष्टे ॥ **न चेत्यादिना** ॥ फलभेदो मास्त्विति शङ्कानिरासायोक्तं **आनन्दश्रुतिसिद्धेति** ॥ 'सैषानन्दस्य मीमांसा' इत्यादिश्रुतिसिद्धेत्यर्थः । एवमानन्दादिविशेषत्वरूपपूर्वपक्षहेतुनिरसनपरतया फलभेदेत्यादिभाष्यं व्याख्याय तस्य हेतोः सहकारितया यो विपक्षे बाधकतर्कोऽन्यथेत्यादिना पूर्वत्रोपन्यस्तस्तन्निरसनपरतया न्यायविवरण एव श्रुत्युक्तिपूर्वमुक्तं हेतुं योजयति ॥ **न चेत्यादिना** ॥ उपास्य वर्तमानस्येति शेषः । मुक्तिगं फलं साक्षाद्दशिश्च भवेत् । तद्द्वयमप्युपासनया भवतीत्यत्र हेतुर्नित्येत्यादि । प्रियशिरस्त्वादि

(भावदीपः)

तद्विशेषस्मृतितोऽप्युक्तफलद्वयं भवतीति नेत्यर्थः । सूत्रार्थं हेतूकृत्य फलोक्त्योपसंहरति ॥ **अत इति** ॥ श्रुतिसिद्धफलभेदार्थं गुणोपासनोपचयापचययोरावश्यकत्वादित्यर्थः । व्यधिकरणे पञ्चम्यौ । असाधारण्यात् तद्योग्यविरिञ्चिमात्रोपास्यत्वादिति स्मृतिबलाद्भाति ।

## अभिनवचन्द्रिका

**प्रियशिरस्त्वादीनामिति** ॥ प्रियशिरस्त्वादीनाम् आनन्दादिविशेषघटितत्वादित्यर्थः ॥ **अन्यथेति** ॥ प्रियशिरस्त्वाद्यनुपासने तदेकदेशप्रियत्वाद्यनुपासनेन आनन्दादीनां सामस्त्ये-नोपासनाभावेन मुक्त्यभावप्रसङ्गादित्यर्थः । **विशेषावलम्बेनेति** ॥ आनन्दादिविशेषघटितत्वेन प्रियशिरस्त्वाद्युपासनाङ्गीकार इत्यर्थः ॥ **यथायोग्यमिति** ॥ स्वयोग्यान् गुणान् उपास्य स्थितस्य, मुक्तिगं फलं भवेत् । तदर्थम् अन्यत् स्वयोग्यातिरिक्तोपासनं नैवापेक्षितम् । ननु माभूत्फल-प्राप्त्यर्थमधिकगुणोपासनम् । अपरोक्षज्ञानार्थं तु अपेक्षितमित्यत उक्तम्— **नित्यैकेति** ॥ परमात्मनो नित्यैकाग्रताव्यङ्ग्यताहेतोः योग्योपासनेनैव अपरोक्षदृशिश्चोपपन्ना । न तु तद्विशेषैः प्रियशिर-स्त्वादिगुणैः स्मृतैर्ध्यातैः अपरोक्षदृशिरुपपन्ना । अयोग्योपासनस्यानर्थहेतुत्वादित्यर्थः ।

पूर्वपक्षस्तु— प्रियशिरस्त्वादयोऽपि सर्वोपास्या आनन्दादिविशेषघटितत्वात् । अन्यथा आनन्दादेः सम्यगनुपासितत्वेन मोक्षासिद्धिः स्यात् । ततश्च चत्वार एव गुणास्सर्वोपास्या इत्ययुक्तमिति ।

सिद्धान्तस्तु— न प्रियशिरस्त्वादयः सर्वोपास्याः । आनन्दादिविशेषत्वावलम्बनेन तेषामुपासने सर्वेषां सर्वगुणोपास्तिप्रसङ्गात् । सर्वगुणानामपि आनन्दादिचतुष्टयविशेषत्वस्य वक्तुं शक्यत्वात् । न च प्रियशिरस्त्वाद्यनुपासने मोक्षाऽभाव इति वाच्यम् 'यथायोग्यान् गुणपूगानुपास्य फलं भवेन्मुक्तिगं नैव चाऽन्यदिति श्रुतेर्विशेषानुपासनेऽपि योग्यगुणोपासनामात्रेण फलप्राप्तिसम्भवात् । अतः प्रियशिरस्त्वादीनामसाधारण्यात् चत्वार एव सर्वोपास्या इति सिद्धम् ।

## वाक्यार्थमुक्तावली

**उक्तबाधप्रसङ्गादिति** । चत्वार एवेत्युक्तबाधप्रसङ्गादित्यर्थः । अत एवाक्षेपिकी अनन्तर-सङ्गतिः ॥ **किमिति** ॥ प्रियशिरस्त्वादिगुणाः सर्वोपास्या भवन्त्युत नेति चिन्ता । तदर्थमानन्द-

(वाक्यार्थमुक्तावली)

विशेषाणां तेषामनुपासने मुक्त्यभावोऽस्ति न वेति । तस्य प्रियमेव शिर इति श्रुतिसूचनपूर्वं प्रियशिरस्त्वादीत्यानन्दादिविशेषग्रहणेन सूचितं विशेषदर्शनमित्युक्तन्यायं व्यनक्ति ॥ **प्रियशिर-स्त्वादीनामिति** ॥ प्रियशिरस्त्वमोदादिपक्षकत्वादीनां विज्ञानादीनां चानन्दज्ञानादि-विशेषत्वादित्यर्थः । प्रियशिरसो भावो हि प्रियशिरस्त्वम् । तत्र शिरोरूपं प्रियमेवेति युक्तमानन्दविशेषत्वमिति भावः । यद्वा आनन्दविशेषत्वादित्यस्यानन्दविशेषघटितत्वादित्यर्थः । न चत्वार एवेति विशाषमपहाय सामान्यतः चत्वार एवेत्युक्तनियमो नेत्यर्थः । सूत्रे प्रिय-शिरस्त्वादिशब्दः तदुपास्तिपर इति भावेन प्रवृत्तम् । न सर्वेषामित्यादिपूर्वपक्षप्रतिक्षेपरूपं प्रतिज्ञाभागं व्याचष्टे ॥ **आनन्दादिविशेषत्वेनेति** ॥ उपचयापचयौ हि भेद इत्यत्र भेद इति तादर्थ्ये सप्तमी । प्रधानस्येत्यस्ति । हिशब्दो हेत्वर्थे । आनन्दश्रुतिप्रसिद्धिद्योतकश्च । उपचयापचयौ वृद्धिह्रासौ आनन्दश्रुतिसिद्धौ । भाव्याविति शेषः । तथा च हि यस्मात्प्रधानस्य मोक्षाख्यस्य फलस्य भेदे भेदार्थे तारतम्यार्थमुपचयापचयौ गुणोपासायाः वृद्धिह्रासौ भाव्यौ तारतम्य-मावश्यकमिति यावत् । तस्मात् इत्यर्थ इति भावेन फलभेदार्थमुपचयापचययोः भाव्यत्वादिति भाष्यं प्रवृत्तम् । तदुक्तं प्रतिज्ञया न साक्षात्सम्बद्ध्यते । आनन्दश्रुतिसिद्धफलतारतम्यार्थमुपासना-तारतम्यस्याङ्गीकार्यत्वेऽपि प्रियशिरस्त्वाद्यनुपासायाः निर्हेतुकत्वात् गुणान्तरोपास्तितारतम्येन तदुपपत्तेरित्यतो नायं तत्र साक्षाद्धेतुरिति भावेन प्रतिज्ञार्थसाधनाय प्रियशिरस्त्वादीनामानन्दादि-विशेषत्वादिति पूर्वपक्षहेतोः तर्कपराहतिमाह ॥ **विशेषावलम्बनेनेति** ॥ प्रियशिरस्त्वादीनां आनन्दादिविशेषत्वेनोपासने सर्वेषां सर्वगुणोपास्तिः कुत इत्यत आह ॥ **सर्वगुणानामिति** ॥ सर्वज्ञत्वादेः प्रियशिरस्त्वादेरानन्दादौ निषेधमुखवेद्यानां सर्वेषां सप्तपदार्थेऽन्तर्भाववत् आत्मत्वे सर्वगुणान्तर्भावस्य वक्ष्यमाणत्वेन चतुष्टयविशेषणत्वस्य वक्तुं शक्यत्वादित्यर्थः । इष्टापत्तिमाशङ्क्य न सर्वेषां प्रियशिरस्त्वादिगुणोपासाप्राप्तिरिति भाष्यस्य प्रियशिरस्त्वादिसर्वगुणोपासाप्राप्तिरित्यर्थः । तत्र हेत्वाकाङ्क्षायां फलभेदार्थमिति सौत्रहेतुव्याख्यापरं भाष्यं योजयति ॥ **आनन्दश्रुतिसिद्धेति** ॥

ननु प्रियशिरस्त्वाद्यनुपासने कुतो मोक्षाभावः, अवान्तरविशेषात् सम्यगुपासनानामेव फलवत्वादित्याशङ्क्योपचयापचयावित्यनेनोपचयापचययुक्तस्वयोग्योपासनेनैव स्वयोग्यफलसिद्धिरिति सूचितं यथायोग्यमित्युक्तन्यायं न्यायविवरणोदाहृतप्रमाणोदाहरणपूर्वं विवृणोति ॥ **यथायोग्यमिति** ॥

(वाक्यार्थमुक्तावली)

स्वयोग्यान् गुणानुपास्य स्थितस्यैव मुक्तिगं फलं भवेत्। अन्यथाऽनुपासने मुक्तिगं फलं न भवेत्। ननु युगपत्स्वभुजवदनुपासनेऽपि तस्य प्रियमेव शिर इत्यादिशास्त्रवासनावतां आनन्दादि-विशेषस्मृतिमात्रेण तदपरोक्षे जाते सति फलं भवेदेवेत्यत उक्तम् ॥ **नित्येति** ॥ तद्विशेषैः स्मृतैरपि साक्षाद्दृशिर्न भवति । कुतः परमात्मगुणानामादरनैरन्तर्याभ्यां नित्यं मनःप्रणिधानरूपध्यानेनैव योग्यत्वमपरोक्षविषयत्वमित्येतस्मात्कारणादित्यर्थः ।

## तत्त्वसुबोधिनी

**उक्तबाधप्रसङ्गादिति** ॥ चत्वार एव गुणा उपास्या इत्युक्तबाधप्रसङ्गादित्यर्थः ॥ **प्रिया-शिरस्त्वादीति** ॥ आनन्दोपास्यतया सर्वमुमुक्षुसाधारण्ये विहिते तद्विशेषस्य प्रियशिरस्त्वादेरपि साधारण्याशङ्कायां तन्निरासादनन्तरसङ्गतिरिति भावः ॥ **अन्यथेति** ॥ विशेषविशिष्टानन्दाद्यनु-पासने इत्यर्थः । ननु प्रियशिरस्त्वादीनां आनन्दादिविशेषत्वात् तदुपासनावश्यकमेवेत्यत आह ॥ **विशेपावलम्बनेनेति** ॥ विशेषविशिष्टानन्दाद्युपासने इत्यर्थः । इष्टापत्तिमाशङ्क्य तन्निषेधपूर्वकं फलभेदार्थं उपचयापचययोः भावादिति भाष्यं व्याचष्टे ॥ **न चेति** ॥ गुणोपासनेऽपीति भाष्ये शेषोक्तिः । फलभेदस्य प्रामाणिकत्वे स्यातां तेनोपचयापचयौ । स एव कुत इत्यत उक्तम् ॥ **आनन्दश्रुतिसिद्धेति** ॥ **यथायोग्यानिति** ॥ उपस्थितस्येति शेषः । तेन समानकर्तृत्वोपपत्तिः । मुक्तिगं फलमपरोक्षज्ञानद्वारेति शेषः । अत्र हेतुमाह ॥ **नित्येति** ॥ आद्यश्चशब्दो हेत्वर्थः । द्वितीयोऽप्यर्थे । ततश्च यस्मादानन्दादीनां नित्यैकाग्र्ये नियतदाने व्यङ्ग्यताहेतुतः युगपत् व्यङ्ग्यता-लक्षणहेतुतः तद्गुणविशिष्टपरमात्मापरोक्षदृशिर्भवति । न त्वयोग्यैरानन्दादिविशेषैः प्रियशिरस्त्वाद्यैः स्मृतैरपि तस्मादिति पूर्वेण सम्बन्धः । स्मृतैरित्यनेनायोग्यानां ज्ञानमात्रमभ्युपेति । अन्यथा सर्ववेदान्तप्रत्ययेत्युक्तविरोधः ।

## वाक्यार्थविवरणम्

**उक्तबाधेति** ॥ चतुर्गुणोपासनानियमबाधेत्यर्थः ॥ **सर्वोपास्यत्वादिति** ॥ तथा च तद्विशेषस्य तत्प्राप्तमेवेति भावः ॥ **अन्यथेति** ॥ प्रियशिरस्त्वादेरनुपास्यत्वे ॥ **सम्यगिति** ॥ अवान्तर-विशेषसाहित्येनेत्यर्थः ॥ **अमुक्तीति** ॥ सम्यगानन्दाविर्भावरूपमुक्त्यभावेत्यर्थः ॥ **विशेपावलम्बे-**

(वाक्यार्थविवरणम्)

**नोपासने** ॥ अवान्तरविशेषसाहित्येनानन्दादेरुपासने । तत्कथमित्यत आह ॥ **सर्वेति** ॥ गुणचतुष्टयविशेषत्वस्य तत्प्रभेदत्वस्य ॥ **गुणोपासनेऽपीति** ॥ तथा च प्रियशिरस्त्वादीनां सर्वोपास्यत्वाप्राप्तिः कुतः । यतः भेदे अथात आनन्दस्येति आनन्दश्रुतिसिद्धफलभेदसिध्द्यर्थं तदुपासनेऽप्युपचयापचयौ उत्कर्षापकर्षौ सर्वेषामपेक्षितौ । तारतम्यमावश्यकमपेक्षितमिति याव-त्तस्मादिति सूत्रार्थः ॥ **स्यादिति** ॥ तद्विशेषास्तूपासनायोग्या इति शेषः । तथापि तदुपासने को दोष इत्यत आह ॥ **नित्येति** ॥ नित्यं भगवति मनसो यदैकाग्र्यं तच्चाश्चल्यहेतुत्वादित्यर्थः ॥ **असाधारण्यात्** ॥ सर्वसाधारण्येनोपास्यत्वाभावात् ।

## वाक्यार्थमञ्जरी

**प्रियशिरस्त्वादीति** ॥ उपकारजं सुखं प्रियं तदेव शिरो यस्य तस्य भावः प्रियशिरस्त्वं तदादीत्यर्थः ॥ **उक्तबाधेति** ॥ आनन्दादयश्चत्वार एवेत्युक्तबाधेत्यर्थः । सामान्यस्यैव सर्वोपास्यत्वं न विशेषस्येत्यत आह ॥ **अन्यथेति** ॥ विशेषोपासनस्यैव सम्यगुपासनात्वादिति भावः ।

**ॐ प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॐ** ॥ सर्वेषां मुमुक्षूणां प्रियशिरस्त्वाद्यप्राप्तिः प्रियशिरस्त्वादिगुणोपासनाप्राप्तिर्नास्ति कुतः हि यस्माद्भेदे फलतारतम्यार्थमुपचयापचयौ उपासनाया वृद्धिह्रासावपेक्षितौ तस्मादित्यर्थः ॥ **आनन्दादिश्रुतीति** ॥ 'ते ये शतं मानुषा आनन्दाः स एको मनुष्यगन्धर्वाणां' इत्याद्यानन्दतारतम्यप्रतिपादकश्रुतीत्यर्थः ॥ **यथा योग्यानिति** ॥ स्वयोग्यान् गुणसमुदायानुपास्यस्थितस्यैव मुक्तिगमकमपरोक्षज्ञानरूपं फलं भवेत् अन्यत्साधनं नैवास्ति कुतः भगवतो नित्यैकाग्र्यव्यंग्यताहेतुतः नित्यं चित्तस्य स्वविषयत्वाख्यज्ञानाख्योपासनैवापरोक्षविषयत्वा-न्निमित्तात् तद्विशेषैर्गुणविशेषैः प्रियशिरस्त्वादिभिरयोग्यैः स्मृतैर्ध्यातैरपि साक्षाद्दृष्टिरपरोक्षज्ञानं नो भवेदित्यर्थः । यद्वा मुक्तिगं फलं आनन्दादिकं कुत इत्यतस्तस्यापरोक्षज्ञानसाध्यत्वात्तस्य चोपासनासाध्यत्वादित्याशयेन नित्येत्याद्युक्तमिति ध्येयम् ।

॥ इति प्रियशिरस्त्वाधिकरणम् ॥ ६ ॥

## ७. इतराधिकरणम्

**॥ ॐ इतरे त्वर्थसामान्यात् ॐ ॥ १४ ॥**

इतरे गुणाः फलसाम्यापेक्षयोपसंहर्तव्याः ।

### तत्त्वप्रकाशिका

अत्रेश्वरसाक्षात्कारसाधनोपासने देवादीनां बहुगुणोपासनसमर्थनादस्ति शास्त्रादिसङ्गतिः । अन्यथोपसंहारोक्त्यनुपपत्तिप्रसङ्गात्तत्समर्थनीयम् । प्रकृतभगवद्गुणेषु चतुर्गुणाधिका विषयः । देवादिभिरुपास्या न वेति सन्देहः । फलाधिक्यं विशेषहेत्वदर्शनं च सन्देहबीजम् । चत्वार एव विरिञ्चेतरदेवादिभिरुपास्या नाधिका इति पूर्वः पक्षः । योग्या एव खलु गुणा उपास्याः । अयोग्योपासनस्यानर्थफलत्वात् । तत्र युज्यते चतुर्मुखस्य सर्वगुणोपासनम् । सर्वमुमुक्षूणां च चतुर्गुणोपासनयोग्यताया एव निर्णीतत्वात् । न च तथा मध्यमगुणेष्वस्यैतावन्तोऽस्यैतावन्त इति योग्यतानियमः शक्यते ज्ञातुं येनोपासनं स्यात् । न चोपासनाभ्यासे सति यस्य यावन्तो गुणा युगपत्प्रतीयन्ते तस्य तावन्त इति योग्यतानियमो ज्ञातुं शक्यत इति वाच्यम् । प्रागेव योग्यतानियमाज्ञानेऽयोग्योपासनप्रयत्नप्रसङ्गेनानर्थप्राप्तेः । अतो मध्यमगुणानामनुपास्यत्वात्तदुपसंहारविधानानुपपत्तिरिति । सिद्धान्तयत्सूत्रं पठित्वा व्याचष्टे **॥ इतरे त्विति ॥** चतुर्भ्यः सर्वेभ्यश्चेतरे मध्यमगुणा देवादिभिरुपसंहर्तव्या एव । न च योग्यताऽनिर्णीतिः । तत्तत्प्राप्यफलमपेक्ष्योपासने योग्यतानिर्णयोपपत्तेः । फलोपासनयोः साम्यात् । न च वाच्यं भविष्यत्फलानिर्णयेनोपास्तियोग्यताऽनिर्णयः । तेषां भाव्युत्कर्षं ज्ञात्वा ब्रह्मणोऽन्यस्य वा सर्वज्ञस्य गुरोस्तदनुसारिगुणनियमोपदेशोपपत्तेरिति भावः । तथा च श्रुतिः । 'यो यो भावो देवतानां विमुक्तौ तत्तत्प्राप्तौ सद्गुणा नीशितुश्च । ब्रह्मादिशत्यथतांस्ते विचिन्त्य तत्तद्भावं प्राप्नुवन्त्यात्मशक्त्या' इति । अतो मध्यमगुणानामपि देवाद्युपास्यत्वाद्युक्तं तदुपसंहाराभिधानमिति सिद्धम् ।

### गुर्वर्थदीपिका

अयोग्योपासनप्रयत्नप्रसङ्गेनेत्यत्रोपासनाकाले योग्यानामेव स्फुरणेऽप्युपासनात्प्राग्योग्यानामयोग्यानां च गुणानां श्रुतत्वात् स्मरणं भवत्येव । तथा च तेषामुपासनाप्रयत्नोऽपि भक्तिमतः

(गुर्वर्थदीपिका)
स्यादेव। एवं चायोग्यगुणोपासनाप्रयत्नेन 'अयोग्यमिच्छन्पुरुषः पतत्येव न संशयः' इति वचनान्महदवद्यं स्यादिति भावः । मध्यमगुणानामित्यस्य चतुर्णां सर्वगुणानां च मध्ये या सङ्ख्या दशविंशतिशतसहस्रादिरूपा तद्घटिता गुणा मध्यमगुणा इत्यर्थः ।

## भावबोधः

**देवादीनामिति** ॥ 'सर्वाभेदादन्यत्रेमे' इत्यत्र चतुर्मुखस्यैव वेदोक्तसकलगुणोपासनयोग्यत्वमुक्त्वा 'अनन्दादयः प्रधानस्य' इत्यत्र तद्व्यतिरिक्तानां सामान्यतो गुणचतुष्टयमात्रोपासनोक्तौ चतुर्मुखेतरदेवानामपि गुणचतुष्टयमात्रोपासनयोग्यता स्यादिति पूर्वपक्षोत्थानादनन्तरसङ्गतिः । प्रियशिरस्त्वाधिकरणस्य आनन्दादिविशेषविचाररूपत्वेन तदनन्तरमेव कर्तव्यत्वात् तद्व्यवधानस्यादोषत्वादिति भावः ॥ **देवादिभिरिति** ॥ अत्र वेदोक्तसर्वेभ्यः आनन्दादिचतुर्भ्यश्चान्ये भगवद्गुणाः विरिञ्चेतरदेवादिभिरनुपास्या उतोपास्या इति चिन्ता । तदर्थमस्यैतावन्त इति योग्यतानियमो नास्त्युतास्तीति । तदर्थं तावत्तावद्गुणोपासनायां फलविशेषनिर्णयो नास्त्युतास्तीति । तर्हि ब्रह्मणोऽन्येषां देवादीनां बहुगुणोपासनया कार्यं नास्ति । मध्ये नियमासिद्धेरिति न्यायविवरणं मनसि निधाय पूर्वपक्षमाह **चत्वार एवेत्यादिना** ॥ अनेन उपासनया कार्यं नास्तीत्यस्य न्यायविवरणांशस्य बहुगुणोपासना न कार्या किं तु चत्वार एवोपास्या इति तात्पर्यमुक्तं भवति । अत्र न्यायविवरणे मध्ये नियमासिद्धेरिति हेतुरुक्तः । स च बहुगुणोपासनाभावे तदा अप्रयोजकः स्यात् । यद्युपासनायां योग्यतानियमः प्रयोजकः स्यादित्यत आह– **योग्या एवेति** ॥ हेतुवाक्यं योजयति– **अस्यैतावन्त इति** ॥

ननु 'प्राप्तेश्च समञ्जसम्' इत्यत्र 'युगपत् स्वभुजौ यद्वत् ध्यायेत्तावत एव सः' इति योग्यतानिर्णायकस्योक्तत्वात् कथं अस्योत्थानमित्यतस्तदाशङ्क्य निषेधति– **न चेति** ॥ इतर इत्यस्य प्रतियोगिसापेक्षत्वात् भाष्ये च तस्य अनुक्तेः स्वयमाह– **चतुर्भ्यः सर्वेभ्यश्चेति** ॥ तथा च 'आनन्दादयः' इत्यत्र 'सर्वाभेदात्' इत्यत्र चोक्तानां चतुर्णां सर्वेषां च गुणानां प्रतियोगितयाऽन्वय इति भावः । तेषां भाव्युत्कर्षं ज्ञात्वा तदभिज्ञस्य ब्रह्मण एव गुणनियमोपपत्तेरिति न्यायविवरणं तन्निवर्तनीयाशङ्कानिरासपूर्वकं व्याचष्टे– **न च वाच्यमित्यादिना** ॥

(भावबोधः)

नन्वपरोक्षज्ञानात्पूर्वं सर्वेषां चतुर्मुखोपदेशाभावात् कथं ब्रह्मण एवोपदेष्टृत्वमुक्तमित्यत अन्येषु यथायोगं यथा ह्याचार्या आचक्षते तेषां विशेषोपदेशोपपत्तेरित्यन्वयात् ।

'तेषां विशेषमाचार्यो वेत्ति सर्वज्ञतां गतः'

इत्यादिश्रुतिस्मृत्यनुसारेण तदुपलक्षणपरमित्यभिप्रेत्याह– **अन्यस्य वा सर्वज्ञस्येति** ॥ ज्ञात्वोपदेशोपपत्तेरित्यन्वयात् । समानकर्तृत्वम् । तत्रोदाहृतं श्रुतिमुदाहरति– **तथा च श्रुतिरिति** ॥

## भावदीपः

ब्रह्मणोऽन्येषां देवानामपि बहुगुणोपासनया कार्यं नास्ति मध्ये नियमासिद्धेरिति न्यायविवरणोक्तिं हृदि कृत्वाऽऽह ॥ **देवादीनामित्यादि** ॥ तत्र देवानामिति पदं ऋषिगन्धर्वादिरुपलक्षणमिति भावः । समर्थनात्, चतुर्णामेवोपास्यत्वशङ्कानिरासेनेति भावः । एतेन पूर्वत्रोपसंहारनये सर्वोत्तमस्य ब्रह्मणः, पूर्वनयद्वये च मानुषाणां चोपासनानिर्णयोक्तावत्र मध्यमाधिकारिणामुपासनानिर्णयादिति वा योग्यगुणोपासनेनैव फलप्राप्तेरिति पूर्वोक्तन्यायेन चतुर्णा-मेवोपास्तिप्राप्तावत्र तन्निरासादिति वा पूर्वसङ्गतिरपि सूचिता ॥ **अन्यथेति** ॥

ननु देवादीनां बहुगुणोपास्त्यनिर्णयेऽपि ब्रह्माधिकारिकतया उपसंहारोक्तिर्युक्तैवेति कथं तदनुपपत्तिरिति चेन्मैवम् । यथाशक्ति सर्वोपसंहारस्य तत्राभिमतत्वेन देवाद्यधिकारिकगुणोप-संहारस्यापि तत्र प्राप्तत्वादत एव विहितत्वहेतूक्तिः प्राप्तेश्चेत्यत्र च ब्रह्मादयो भवन्तीत्यादि-भाष्योक्तिः ॥ **फलाधिक्यमिति** ॥ सर्वाभेदादन्यत्रेम इत्यत्रोक्तन्यायेनेति भावः । बहुगुणोपासनया कार्यं नास्तीत्यन्यत्रोक्तेर्भावमाह ॥ **चत्वार एवेति** ॥ ब्रह्मणोऽन्येषां देवानामित्यस्यार्थो **विरिञ्चेत-रेत्यादि** ॥ नाधिकाः न बहुगुणा इत्यर्थः । कुतोऽधिका नोपास्या इत्यतोऽयोग्योपासनत्वादिति हेतुमभिप्रेत्य तस्य व्याप्यतां व्यनक्ति ॥ **योग्या इति** ॥ कार्यं नास्तीत्युक्तिरुपलक्षणमित्युपेत्याह ॥ **अयोग्योपासनस्यानर्थफलत्वादिति** ॥ 'अचेतनासत्यायोग्यान्यनुपास्यान्यफलत्वविपर्ययाभ्याम्' इति साङ्कर्षणोक्तेरिति भावः । ब्रह्मणोऽन्येषामिति विशेषणतात्पर्यार्थमाह ॥ **तत्र युज्यत इति** ॥ चत्वार एवेत्यत्र हेतुमाह ॥ **सर्वेति** ॥

(भावदीपः)

ननु नाधिका उपास्यास्तदुपासनस्यायोग्योपासनत्वादित्यभिप्रेतो हेतुरसिद्ध इत्यतस्तदुपपादकत्वेन मध्ये नियमासिद्धेरित्युक्तिं व्याकुर्वन्नेव योजयति ॥ **न च तथा मध्यमेति** ॥ प्राप्तेश्च समञ्जसमित्यनेन गतार्थत्वमाशङ्क्य निराह ॥ **न चोपासनेति** ॥ फलोक्त्योपसंहरति ॥ **अत इति** ॥ अयोग्योपासनस्यानर्थत्वान्मध्यगुणोपासनयोग्यतानियमस्य च ज्ञातुमशक्यत्वादित्यर्थः । अनुपपत्तिः देवादीनामिति भावः । प्रागुक्तानन्दादिमात्रप्रतियोगिकत्वभ्रान्तिमितरपदस्य निरस्यन्नन्यत्रोक्तकर्त्रुक्तिपूर्वमितर इत्यादिभाष्यं व्याचष्टे ॥ **चतुर्भ्य इति** ॥ सर्वाभेदादित्यतः सर्वपदानुवृत्तिं मत्वाऽऽह ॥ **सर्वेभ्यश्चेति** ॥ सौत्रतुशब्दार्थ **एवेति** ॥ फलसाम्यापेक्षयेति भाष्यव्यावर्त्यशङ्कापूर्वं व्याचष्टे ॥ **न च योग्यतेति** ॥ फलापेक्षयेत्येव पूर्तौ साम्येत्युक्तितात्पर्यमाह ॥ **फलेति** ॥ तं यथा यथेति श्रुतेः । समान एवं चाभेदादित्यत्र तथा वक्ष्यमाणत्वाच्चेति भावः । तेषां भाव्युत्कर्षं ज्ञात्वा तदभिज्ञस्य ब्रह्मण एव गुणनियमोपदेशोपपत्तेरित्यन्यत्रोक्तं सूत्रभावार्थं शङ्कापूर्वं भाष्यसङ्गततयाऽत्र योजयति ॥ **न च वाच्यमित्यादिना** ॥ ब्रह्मण एवेत्युपलक्षणमिति मत्त्वोक्तम् **अन्यस्य वा सर्वज्ञस्येति** ॥ न्यायविवरणोक्तामेव श्रुतिमाह ॥ **तथा चेति** ॥ ब्रह्मा चतुर्मुखः । **दिशति** उपदिशतीत्यर्थः । फलोक्त्या सूत्रार्थमुपसंहरति ॥ **अत इति** ॥ तत्तत्प्राप्यफलापेक्षया योग्यतानिर्णयसम्भवादित्यर्थः ।

## अभिनवचन्द्रिका

**अन्यथेति** ॥ 'अन्यैर्यथाक्रमं चैव मानुषैः कैश्चिदेव तु' इति मध्यमसङ्ख्योपेतगुणोपसंहारोक्त्यनुपपत्तिप्रसङ्गादित्यर्थः । ननु यदि अयोग्योपासनमनर्थफलं तर्हि चतुर्मुखस्य सर्वगुणोपासनं न स्यादित्यत आह **तत्र युज्यत इति** ॥ योग्यत्वादेवेति भावः । ननु इतरदेवानामपि योग्यत्वादेव बहुगुणोपासनं भविष्यतीत्यत आह **सर्वमुमुक्षूणामिति** ॥ अस्तु योग्यत्वं तथापि न बहुगुणोपासनं युज्यते निर्णयाभावात् । किन्तु निर्णीतत्वाच्चतुर्गुणोपासनमेव युज्यत इति भावः । चतुर्गुणोपासनयोग्यतानिर्णयवत् मध्यमगुणोपासनयोग्यतानिर्णयोऽपि भविष्यतीत्यत आह **न च तथेति** ॥ **चतुर्भ्यः सर्वेभ्यश्चेतर इति** ॥ ननु चतुर्भ्य इतर इत्युपपन्नं न तु सर्वेभ्य इतर इति । एतेषां सर्वान्तःपातित्वेन तदितरत्वायोगात् । सर्वगुणेतरत्व च गुणुत्वमेव न स्यात् घटवदिति चेत्, न सर्वत्वचतुष्ट्वाभ्यां भिन्नधर्मावच्छिन्नत्वात् उपसंहर्तव्यत्वस्याभिमतत्वात् । तेषां भाव्युत्कर्षं ज्ञात्वेति ।

(अभिनवचन्द्रिका)

ननु किं सर्वज्ञानां तत्तत्प्राप्यफलमपेक्ष्य योग्यतानिर्णयेन, सर्वज्ञत्वात् साक्षादेव योग्यतानिर्णयः किं न स्यादिति चेत्, सत्यम् 'साक्षादेव योग्यतानिर्णयः सम्भवति' इति तथापि मध्यमगुणोपासकानां फलेच्छुत्वात्, गुरुणा फलमुपदिश्यैवोपासनायां ते प्रवर्तितव्या इति ज्ञापनाय, फलनिर्णयद्वारा योग्यतानिर्णयोक्तिः ।

पूर्वपक्षस्तु– विरिञ्चेतरदेवादिभिः चत्वार एव गुणा उपास्या नाधिकाः । सर्वमुमुक्षूणां चतुर्गुणोपासनयोग्यताया अनिर्णीतत्वात् । अधिकस्यानिर्णयात् । अतो मध्यमगुणानामनुपास्यत्वात् तदुपसंहारानुपपत्तिरिति ।

सिद्धान्तस्तु– चतुर्गुणाधिका गुणा देवादिभिरुपास्या एव । तदपेक्षिततत्प्राप्यफलनिर्णयं प्रथमतः कृत्वा, पश्चात्साधननिर्णयं विधाय, ब्रह्मणोऽन्यस्य वा सर्वज्ञस्य गुरोरुपदेशेन योग्यता-निर्णयोपपत्तेः । अतो मध्यमगुणानामपि देवाद्युपास्यत्वात् युक्तं तदुपसंहाराभिधानमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

**देवादीनामिति** ॥ सरस्वत्यवरदेवादीनामित्यर्थः ॥ **बहुगुणेति** ॥ प्रियशिरस्त्वादि-बहुगुणोपसंहारसमर्थनादित्यर्थः ॥ **अन्यथोपसंहारेति** ॥ प्राप्तेरित्यत्रान्यैर्यथाक्रमं चैवेति देवादीनां बहुगुणोपासनस्योक्तत्वात् पूर्वाधिकरणे मानुषाणां प्रियशिरस्त्वाद्यप्राप्तिमुक्त्वा शिवादीनां देवगन्धर्वान्तानां तत्सद्भावस्योक्तत्वात्तदनुपपत्तिप्रसङ्ग इत्यर्थः । स्पष्टमेतत् आनन्दमालायाम् । तथा च आक्षेपिकी अनन्तरसङ्गतिरिति भावः । चतुर्गुणाधिका इति । प्रियशिरस्त्वादिका इत्यर्थः ॥ **देवादिभिरिति** ॥ वेदोक्तसर्वेभ्य आनन्दादिभ्यः चतुर्भ्यश्चान्ये भगवद्गुणाः विरिञ्चेतरदेवादि-भिर्नोपास्या उतोपास्या इति चिन्ता । तदर्थं मध्यमगुणेषु अस्यैतावन्तोऽस्यैतावन्त इति निर्णायकं नास्त्युतास्तीति ॥ **फलाधिक्यमिति** ॥ उपचयापचयौ हि भेद इत्यनेन फलाधिक्येनोपचय-स्योक्तत्वात् देवादिभिरेते गुणाः उपास्या इति विशेषप्रमाणादर्शनाच्च सन्देह इत्यर्थः । सिद्धान्ते योग्यतानिर्णायकोक्त्या सूचितमयोग्योपासने कार्यलोप इत्युक्तन्यायं कार्यस्य फलस्य लोप इति व्यञ्जयन्पूर्वपक्षयति ॥ **योग्या एवेति** ॥ अनर्थफलवत्त्वादित्युपलक्षणम् । व्यर्थत्वादिति च बोध्यम् । कथं विरिञ्चेतरदेवादीनां देवगन्धर्वान्तानां मध्यमगुणोपासनेऽयोग्यता । तथात्वे चतुर्मुखस्य

(वाक्यार्थमुक्तावली)

सर्वगुणोपासने मानुषान्तानां चतुर्गुणोपासने चायोग्यतया तदभाव इत्यतस्तद्वैपरीत्यमाह **तत्र युज्यते चेति ॥** चतुर्मुखशब्देन तदनतिन्यूनसरस्वत्यादेर्ग्रहणम् । सर्वाभेदादन्यत्रेत्यत्र सर्वगुण्युक्तत्वेनोपासनादन्यत्रैव फले ब्रह्मादयो भवन्तीत्यादिशब्दप्रयोगात् । यद्यपि ब्रह्मैव सर्वगुणोपासकस्तथापि तदतिन्यूनब्रह्माण्यादिविषय आदिशब्द इति तत्त्वप्रदीपे व्याख्यतत्वाच्च **॥ निर्णीतत्वादिति ॥** सम्पूर्णफलेन ब्रह्मणः सर्वोपासनस्यापेक्षितसुखज्ञाननिर्दोषत्वस्वावरस्वामित्वफलेन चतुर्गुणोपासनस्य निर्णीतत्वादिति भावः ।

ननु प्राप्तेश्चेत्यत्र ध्यानकाले युगपत्स्वभुजवद्यावन्तो गुणाः उपस्थाप्यन्ते । तावतामुपासना इत्युक्तत्वाद्योग्यतानिर्णयोपपत्तेर्गतार्थमिदमधिकरणमित्यशङ्क्य निषेधति **॥ न चेति ॥** अनर्थप्राप्तेरित्यनेन कार्यलोप इत्युक्तन्यायः प्रकारान्तरेण विवृतो भवति । सूत्रे इतर इत्यत्रानन्दादय इत्यत्र सर्वाभेदादित्यत्र च उक्तानां सर्वेषां गुणानां च प्रतियोगितया सम्बन्धः । देवादिभिरिति शेषः । तुरवधारणे । उपसंहर्तव्या इत्यध्याहृतेन सम्बध्यते । अर्थसामान्यादिति ल्यब्लोपनिमित्ता पञ्चमी । उपासनस्य स्वस्वप्राप्यफलसाम्यमपेक्ष्येत्यर्थ इति भावेन व्याचष्टे । **चतुर्भ्य इति ॥ तत्प्राप्यफलमिति ॥** एतेन भव इत्युक्तन्यायः भवतीति भाव्यं फलं भवस्तदपेक्ष्येति दर्शितो भवति । उपासकानां भविष्यत्फलानिर्णयेऽपि सर्वज्ञानामुपदेशकानां भाविफलज्ञानसम्भवेन तदनुसारिगुणोपदेशे उपासकानामुपासने योग्यतानिर्णयोपपत्तिरिति भावेन परिहरति **॥ तेषामिति ॥** सर्वेषामपरोक्षात्पूर्वं ब्रह्मोपदेशाभावादुक्तं **अन्यस्य चेति ॥** तथा च तत्तत्प्राप्यफलसाम्यमपेक्ष्येतरेषां गुणानामुपसंहर्तव्यत्वं नामोपदेशकैः स्वावगतफलसाम्यमपेक्ष्य गुणोपदेशे योग्यताज्ञानेनेतरेषां गुणानामुपसंहर्तव्यत्वं विवक्षितमिति भावः । नन्वेतदधिकरणन्यायेन गुरूपदेशेन योग्यताज्ञानसम्भवात्प्राप्त्यधिकरणे युगपत्प्रतीतेरुपासनानियमप्रयोजकत्ववचनं व्यर्थमुयुक्तम् । प्रागेव योग्यतानियमाज्ञानेऽयोग्योपासाप्रयत्नदोषप्रसङ्गेनानर्थफलत्वात् । गुरूपदेशेन तज्ज्ञाने च तेनैव पूर्तिरिति चेन्न । उपासनाभ्यासदशायां युगपत्प्रतीतिरिवोपासनानियमप्रयोजिकोपासकान्तरङ्गत्वाद्गुरूपदेशोऽप्याश्वासजनकतया दार्ढ्यहेतुत्वाच्चायोग्यदोषपरिहाराय युगपत्प्रतीतिसाधनतया अपेक्षित इति न कश्चिद्दोषः । यो यो भाव इत्यत्र भावः फलोत्कर्षः । पूर्णात्वाविरोधिगुणस्वीकाराय सद्गुणानित्युक्तम् । आत्मशक्त्या विचार्येत्यन्वयः ।

## तत्त्वसुबोधिनी

**देवादीनामिति** ॥ 'सर्वाभेदादन्यत्रेमे' इत्यत्र चतुर्मुखस्यैव वेदोक्तसकलगुणोपासन-योग्यत्वमुक्त्वा आनन्दादयः प्रधानस्येत्यत्र तद्व्यतिरिक्तानां सामान्यतो गुणचतुष्टयमात्रोपासनोक्तौ चतुर्मुखेतरदेवानामपि गुणचतुष्टयमात्रोपासनायोग्यता स्यादिति पूर्वपक्षोत्थानादानन्तरसङ्गतिरिति भावः । प्रियशिरस्त्वाधिकरणस्यानन्दादिविशेषविचाररूपत्वेन तदनन्तरमेव कर्तव्यत्वात्, तद्व्यवधानस्यादोषत्वादिति भावः । पूर्वपक्ष इत्यनन्तरं योग्यतानियमाभावादिति शेषः । ननु बहुगुणोपासनाभावे योग्यतानियमाभावः तदाऽप्रयोजकः स्यात् इत्यत आह ॥ **योग्या एव हीति** ॥ ननु प्राप्तेश्चेत्यत्र युगपत्स्वभुजाविति योग्यतानिर्णयस्योक्तत्वात्कथमस्योपासनं इत्याशङ्क्य निषेधति ॥ **न चेति** ॥ इतर इत्यस्य प्रतियोगिसापेक्षत्वत्वाद्भाष्ये च तस्यानुक्तेः स्वयमाह ॥ **चतुर्भ्यः सर्वेभ्यश्चेति** ॥ तथा चानन्दादय इत्यत्र सर्वाभेदादित्यत्र चोक्तानां चतुर्णां सर्वेषां च गुणानां प्रतियोगितयात्र य इति भावः । ननु अपरोक्षज्ञानात्पूर्वं सर्वेषां चतुर्भ्यः स्वोपदेशाभावात् कथं ब्रह्मण एवोपदेष्टृत्वमित्यत आह ॥ **अन्यस्य वा सर्वज्ञस्येति** ॥ 'तेषां विशेषमाचार्यो वा' इति । सर्वज्ञतां गत इति स्मृतेरिति भावः । अत्र प्रमाणमाह ॥ **तथा चेति** ॥ सद्गुणान् पूर्णत्वा-विरोधिनः । आत्मशक्त्या विचिन्त्येत्यर्थः ।

## वाक्यार्थविवरणम्

देवादीनामिति ॥ विरिञ्चेतरेषाम् ॥ **युज्यत इति** ॥ तस्य सर्वमुमुक्षूत्तमत्वादिति भावः ॥ **सर्वमुमुक्षूणामिति** ॥ विरिञ्चादितरेषां मनुष्योत्तमपर्यन्तानाम् । तथा च तेषां चतुर्गुणोपासनानियम एवेति भावः ॥ **मध्यमगुणेष्विति** ॥ बहुगुणेषु मध्ये इति शेषः । विरिञ्चोपास्यसर्वगुणेभ्यः अर्वाक्तनत्वात् मनुष्योत्तमोपास्यचतुर्गुणेभ्यः उपरितनत्वाच्च बहुगुणानां मध्यमत्वमिति ज्ञेयम् । एतावन्तः उपासितुं योग्या इति शेषः ॥ **योग्यतेति** ॥ उपास्यत्वयोग्यतेत्यर्थः । **उत्कर्षं** मोक्षाख्यम् ॥ **ब्रह्मणोऽन्यस्य वेति** ॥ यथा प्रियव्रतराजस्य ब्रह्मा, ध्रुवस्य नारद इत्यादि ज्ञातव्यम् ॥ **सर्वज्ञस्य** ॥ योग्याताभिज्ञस्य ॥ **उक्तम्** ॥ गुणोपसंहारानुपसंहारपूर्वकमुपासनम् ।

## वाक्यार्थमञ्जरी

**उपसंहारोक्त्यनुपपत्तीति** ॥ एकस्मिन्प्रकरणेऽपि गुणचतुष्टयोक्तिसम्भवेन तदुपासनाय तत्र तत्रोक्तगुणानां युगपद्बुद्ध्यारोहरूपोपसंहारानपेक्षणादिति भावः ॥ **मध्यमेति** ॥ चतुष्टय-मध्यवर्तीत्यर्थः । प्राक् उपासनाभ्यासात् ।

**ॐ इतरे त्वर्थसामान्यात् ॐ** ॥ तुरेव इतरे मध्यमगुणाः देवादिभिरुपास्या एव कुतः अर्थे सामान्यात् अर्थे स्वस्वप्राप्यफले सामान्यात् साम्यमपेक्ष्येत्यर्थः ॥ **य इति** ॥ देवतानां यो यो भावः स्वभावविशेषो भविष्यति ब्रह्मा तं तं ज्ञात्वा तत्तत्प्राप्तौ तत्तत्प्राप्त्यर्थमीशतुः **सद्गुणान्** अधिकारिभ्य **आदिशति** उपदिशति । अथ ते अधिकारिणस्तान् गुणान् **विचिन्त्य** ध्यात्वा ज्ञानजन्य-परमात्मप्रसादेन **तत्तद्भावं** प्राप्नुवन्तीत्यर्थः ॥

**॥ इति इतराधिकरणम् (फलसाम्याधिकरणम्) ॥ ७ ॥**

## ८. आध्यानाधिकरणम्

उपसंहारानुपसंहारप्रमाणमाह —

**॥ ॐ आध्यानाय प्रयोजनाभावात् ॐ ॥ १९ ॥**

आध्यानार्थं हि सर्वे गुणा उच्यन्ते प्रयोजनान्तराभावात् ॥

'ज्ञानार्थमथ ध्यानार्थं गुणानां समुदीरणा ।
ज्ञातव्याश्चैव ध्यातव्या गुणास्सर्वेऽप्यतो हरेः ॥
नान्यत्प्रयोजनं ज्ञानाद्ध्यानात्कर्मकृतेरपि ।
श्रवणाच्चाथ पाठाद्वा विद्याभिः किञ्चिदिष्यत'। इति परमसंहितायाम् ।

'गुणाः सर्वेऽपि वेत्तव्या ध्यातव्याश्च न संशयः ।
नान्यत्प्रयोजनं मुख्यं गुणानां कथने भवेत् ॥
ज्ञानध्यानसमायोगाद्गुणानां सर्वशः फलं
मुख्यं भवेन्न चान्येन फलं मुख्यं कचिद्भवेत्' इति बृहत्तन्त्रे ॥

### तत्त्वप्रदीपिका

सर्वगुणोपसंहारोऽल्पोपसंहारश्च प्रमाणतः साधितौ, विषयविवेकेन चाविरोधं नीतौ । तयोस्तात्पर्यात्पुनः प्रमाणमाह– **आध्यानाय प्रयोजनाभावात् ॥** आस्वा धिया ध्यानार्थं हि सर्वे गुणा उच्यन्ते ।

### तत्त्वप्रकाशिका

अत्र परमात्मज्ञानसाधनोपासने गुणोपसंहारानुपसंहारसमर्थनादस्ति शास्त्रादिसङ्गतिः । अन्यथोक्तमयुक्तं स्यादिति समर्थनीयौ । प्रागुक्तौ गुणोपसंहारानुपसंहारौ विषयः । कर्तव्यौ न वेति सन्देहः । क्रियाद्वैविध्यदर्शनं सन्देहबीजम् । न कर्तव्याविति पूर्वः पक्षः । प्रमाणाभावात् । न च सर्वगुणोपसंहारे विधिरस्तीत्युक्तमिति । अनुपसंहारेऽपि मोक्षप्राप्तेरुक्तत्वात् । फलान्तरस्य चानपेक्षितत्वाद्व्यर्थविधेश्चानवधेयत्वात् । यदप्युक्तं सर्वविद्यानां भगवद्गुणाभिधायकत्वात्तदुपसंहारः

(तत्त्वप्रकाशिका)

कर्तव्य इति । तन्न । **गुणानां नानास्थानेष्वुक्तत्वेन तदभिधानस्योपसंहारार्थत्वाभावात्** । **गुणाभिधानस्योपसंहारार्थत्वे वा सर्वेप्येकत्रैवोच्येरन्** । उक्तं च वैफल्यम् । **यदपि प्रकरणभेदादनुपसंहार इति तदप्ययुक्तम्** । **प्रकरणेष्वेतावदेवोपास्यमित्युक्त्यभावात्** । अतः सर्वगुणोपसंहारानुपसंहारयोरयोगान्नोपासनं युक्तमिति । सिद्धान्तयन्नधिकरणतात्पर्यमाह ॥ **उपसंहारेति** ॥ सर्वगुणोपसंहारानुपसंहारयोः कर्तव्यत्वे प्रमाणमाहाऽस्मिन्नधिकरणे सूत्रकृदित्यर्थः । तत्रोपसंहारप्रमाणदर्शनार्थं सूत्रं पठित्वा व्याचष्टे ॥ **आध्यानायेति** ॥ कर्तव्यास्तावदुपसंहारः । सर्वविद्यानां भगवन्नामत्वेन तद्गुणाभिधायकत्वाद्गुणाभिधानस्य चाशेषगुणोपसंहारपूर्वक ध्यानार्थत्वादिति भावः । गुणाभिधानस्य ध्यानार्थत्वं कुत इत्यत आह ॥ **प्रयोजनेति** ॥ न च गुणोपसंहारो निष्फलः । विप्रकीर्णगुणानुपसंहृत्योपासकस्य तदनुसारिमुक्त्यानन्दातिशयलक्षणफलसद्भावात् । 'यावत्सेवा परे तत्त्वे तावत्सुखविशेषता' इति **स्मृतेः** । अत एव विशेषफलस्य दौर्लभ्याय नानास्थानेपूक्तिरुपपन्नेति । गुणाभिधानस्य ध्यानार्थत्वे स्मृतिं चाह ॥ **ज्ञानार्थमिति** ॥ **विद्याभिः** ब्रह्मकर्मविद्याभिः । एवं च गुणाभिधानस्य श्रवणपाठावपि प्रयोजनं न ध्यानमेवेत्यत आह ॥ **गुणो इति** ॥ श्रवणादेर्ज्ञानाद्यर्थत्वेन न तद्गुणकथनस्य मुख्यं प्रयोजनमिति भावः । तथापि ज्ञानस्य प्रयोजनत्वान्न ध्यानमेवेत्यत आह ॥ **ज्ञानेति** ॥ ज्ञानमपि ध्यानोपयोगितया प्रयोजनं न मुख्यमिति भावः । **अन्येन** ज्ञानमात्रेण । यद्यपि श्रवणादेर्जनलोकादिफलस्य प्रयोजनत्वसम्भवस्तथापि महाफलज्ञानसाधनत्वेन विहितस्य **न तत्फलमिति** ॥

## गुर्वर्थदीपिका

अतः सर्वगुणोपसंहारानुपसंहारयोरयोगादित्यत्र ब्रह्मण्युक्तसर्वगुणोपसंहारस्य तदितरदेवर्षिपितृचक्रवर्तिषूक्तानुपसंहारस्य च वैफल्यादयोगादित्यर्थः । सर्वापेक्षितफलस्य चतुर्गुणोपासनेनैव सिद्धेः ब्रह्मण्युक्तसर्वगुणोपसंहारस्तदितरेषूक्तानुपसंहारश्च नापेक्षित इति भावः । एवमपि विभागे चतुर्गुणोपसंहारस्य मोक्षे अवश्यापेक्षितफलसाधकत्वेन सर्वैः कर्तव्यत्वाच्चतुर्गुणोपसंहारस्तदितरगुणानुपसंहारश्चेत्युपसंहारानुपसंहारयोर्योग एव स्यान्न त्वयोग इति ज्ञेयम् । ज्ञानार्थमथ ध्यानार्थमित्यत्र ज्ञानपदेन श्रवणमननजनितज्ञानमुच्यते । श्रवणादेर्ज्ञानाद्यर्थत्वेनेत्यत्र श्रवणं ध्यानोपयोगिगुणज्ञानार्थम् । आदिपदेन मननं ज्ञातेऽर्थे ध्यानोपयोगिसंशयविपर्ययव्युदासार्थमित्यर्थः । ज्ञानमात्रेण श्रवणादिजनितज्ञानमात्रेण । मुख्यं फलमपरोक्षज्ञानम् ।

## भाववोधः

**गुणोपसंहारेति ।** 'उपसंहारोऽर्थाभेदात्' इति । 'न वा प्रकरणभेदात्' इत्युक्तयोः सर्वगुणोपसंहारानुपसंहारयोः व्याहतत्वशङ्काया अत्युल्बणतया 'प्राप्तेश्च' इत्यादिना 'इतरे त्वसामान्यात्' इत्यन्तेन सामान्यविशेषाभ्यामधिकाशङ्काविशेषोक्त्या प्रथमं तां परिहृत्येदानीं तत्र प्रमाणमुच्यतेत्यनन्तरसङ्गतिरिति भावः । कर्तव्यौ न वेति । अत्र गुणोपसंहारानुपसंहारौ किं न कर्तव्यौ उत कर्तव्याविति चिन्ता । तदर्थं तत्र प्रमाणं नास्त्युतास्तीति । तदर्थमुपसंहारानुपसंहारयोः प्रसाणत्वेनोक्तौ सर्वविद्यानां भगवन्नामत्ववचनं प्रकरणभेदश्चेत्येतौ न युक्तावुत युक्ताविति । तदर्थं विप्रकीर्णभगवद्गुणोक्त्यात्मेत्यवधारणयोः ध्यानमात्रप्रयोजकत्वान्ययोगव्यवच्छेदपरत्वे किं न युज्येते उत युज्येते इति । **विधिरस्तीति ।** प्रमाणत्वेनेति शेषः । 'उक्तं विधिशेषवत्' इत्यनेनेत्यर्थः । 'विधिशेषवत्' इत्यत्र विहितत्वेनोक्तो गुणोपसंहारः किं सफल उत निष्फलः । आद्येऽपि किं मोक्षफलक उतान्यफलक इति विकल्पं मनसि निधाय आद्यं निराकरोति– **अनुपसंहार इति ॥** 'आनन्दादयः प्रधानस्य' इत्यादावित्यर्थः । द्वितीयं निराकरोति– **फलान्तरस्येति ॥** विरक्तानामेवोपासनाधिकारित्वादिति भावः । तृतीयं दूषयति– **व्यर्थविधेरिति ॥ यदप्युक्तमिति ॥** 'संज्ञातश्चेत्तदुक्तमस्ति तु तदपि' इत्यत्रेत्यर्थः । तदुत्तरत्वेन नानावस्थानेषूक्तगुणानामनुपासनार्थत्वमिति न्यायविवरणं योजयति– **गुणानामिति ॥** नानास्थानेषूक्तेरप्रयोजकत्वपरिहारार्थं विपक्षे बाधकमाह– **गुणाभिधानस्येति ॥** अस्तु वा गुणाभिधानस्य उपसंहारार्थत्वं तथापि गुणोपसंहाराभावेऽपि मोक्षप्राप्तेः 'आनन्दादयः प्रधानस्य' इत्यादावुक्तत्वात् तदन्यफलस्य चानपेक्षितत्वात् विफलोऽसौ न कर्तव्य इत्यभिप्रेत्याह– **उक्तं चेति ॥ यदपीति ॥** उक्तमित्यनुवर्तते । 'न वा प्रकरणभेदात्' इत्यत्रेत्यर्थः ॥ **आध्यानायेति ॥** आङोऽर्थमाह– **अशेषगुणोपसंहारपूर्वकेति ॥** विप्रकीर्णगुणान् पिण्डीकृत्योपासितुः तादृशफलप्राप्तेरिति न्यायविवरणांशं तन्निवर्तनीयाशङ्कानिरासपूर्वकं व्याचष्टे– **न चोपसंहार इत्यादिना ॥** अनेन पिण्डीकृत्येत्येतदुपसंहृत्येति व्याख्यातम् ।

ननु उक्तमत्र गुणाभिधानस्य उपसंहारार्थत्वे सर्वेऽप्येकत्रैवोच्येरन्नित्येतत्परिहाराय प्रवृत्तस्य तथा ध्यानार्थमेव गुणानामुक्तिरित्युपपत्तिरिति न्यायविवरणांशस्याभिप्रायमाह– **अत एवेत्यादिना ॥** तथा च गुणानां नानास्थानेषु उक्तत्वमन्यथासिद्धमिति भावः । एतेन विहितत्वहेतुरपि समर्थितो

(भावबोधः)

भवति । अनुपसंहारे मोक्षमात्रसिद्धावपि तद्गतानन्दातिशयलक्षणफलासिद्धेः तद्योग्यान् प्रति सर्वगुणोपसंहारस्य **विधेयत्वादिति ॥ ब्रह्मकर्मविद्याभिरिति ॥** कर्मकृतेरित्यप्युक्तत्वादिति भावः ।

ननु श्रवणादेरमुख्यस्य फलान्तरस्यादर्शनात् कथं न चान्येन फलं मुख्यं क्वचिदुक्तमित्यत आह– **यद्यपीति ॥ श्रवणादिभिर्मध्यम इति ॥** मध्यमाञ्जनलोकादिरिति चोक्तत्वादिति भावः ।

## भावदीपः

**समर्थनादिति ॥** यद्यपि सर्वमध्यमगुणोपसंहारोऽल्पगुणोपसंहाररूपानुपसंहारश्च प्रमाणतः साधितौ । विषयभेदेनाविरोधं च नीतौ फलभेदश्चोक्तः । तथापि प्रागुक्तप्रमाणानामत्राक्षेप-समाधानाभ्यां दृढीकरणेन विशेषप्रमाणोक्त्या च तयोरिह समर्थनादित्यर्थः । एतेनेतरे त्वित्यन्तमुप-संहारः । न वेत्यादिनाऽल्पगुणोपसंहाररूपानुपसंहारश्च यः प्रकृतस्तयोरत्र प्रामाणिकत्वोक्त्या समर्थनमवसरप्राप्तमिति पूर्वसङ्गतिरपि सूचिता ॥ **प्रागुक्ताविति ॥** उपसंहार इति न वेति प्रागुक्तावित्यर्थः ॥ **क्रियेति ॥** सफलनिष्फलक्रिययोर्लोके कर्तव्यत्वाकर्तव्यत्वदर्शनमित्यर्थः ॥ **विधिरिति ॥** उपास्य एक इति विधिरित्यर्थः ॥ **उक्तत्वादिति ॥** आनन्दादय इत्यत्रेत्यर्थः ॥ **अनपेक्षितत्वादिति ॥** मुमुक्षुत्वादिति भावः । मुक्तावानन्दातिशयरूपं फलं तु प्रमाणशून्यमिति भावः । अनवधेयत्वात् अश्रद्धेयत्वादित्यर्थः ॥ **यदप्युक्तमिति ॥** संज्ञातश्चेत्तदुक्तमित्यत्रेति भावः । संज्ञातः संज्ञात्वत इति सौत्रहेत्वर्थोऽत्र गुणाभिधायकत्वादिति । नानास्थानेषूक्तेर्गुणानामनुपास्यत्व-मित्यन्यत्रोक्तं हेतुमाह ॥ **गुणानामिति ॥** सर्वविद्यानां भगवत्संज्ञात्वात्सर्वगुणोपसंहारः कार्य इत्ययुक्तं हेतोरप्रयोजकत्वात् । तथात्वे हि गुणानां नानास्थानेषूक्तिर्न स्यादित्यर्थः । कथं तर्ह्युक्तिः स्यादित्यत आह ॥ **गुणेति ॥** तथा चैकत्रैव सर्वगुणोक्तिरुपसंहारे प्रयोजिका न तु सौत्रः संज्ञात्वहेतुरिति भावः ।

ननु विप्रकीर्णोपसंहारेणैव फलप्राप्तेर्नानास्थानेषूक्तिः फलार्थतयोपपन्ना सती नानुपसंहार-कारणम् । येनैकत्रोक्तिरेवोपसंहारे कारणं न संज्ञात्वमिति स्यादिति चेत् । तत्किं फलमभिप्रेतं मोक्षाख्यं वा ततोऽन्यद्वा । नान्त्यः । तस्य मुमुक्षोरनपेक्षितत्वात् । आद्य आह **उक्तं चेति ॥** अनुपसंहारेऽपि मोक्षप्राप्तेरुक्तत्वादित्यनेनेत्यर्थः । मोक्षगतातिशयः फलमिति त्वप्रमाणिकमिति

(भावदीपः)

भावः । तर्ह्यस्त्वनुपसंहार एवेत्यत आह ॥ **यदपीति** ॥ न वा प्रकरणभेदादित्यत्रोक्तमित्यर्थः । फलोक्त्योपसंहरति ॥ **अत इति** ॥ उक्तदिशा प्रमाणाभावादित्यर्थः । संज्ञातश्चेत्तदुक्तमित्यत्रोक्त-साध्यहेतू एवोक्त्वा हेतोरुपसंहारकर्तव्यत्वे साध्ये प्रयोजकत्वोक्तिपरतया सूत्रभाष्ये व्याचष्टे ॥ **कर्तव्यस्तावदिति** ॥ वक्ष्यमाणानुपसंहारकर्तव्यत्वोक्त्यपेक्षया तावच्छब्दः । संज्ञात्वं परम्परया हेतुरिति भावेनोक्तं भगवन्नामत्वेनेत्यादि । तावता किमित्यतो भाष्यार्थं हेतुत्वेन योजयति ॥ **गुणाभिधानस्य चेति** ॥ आङोऽर्थोऽशेषगुणोपसंहारपूर्वकेति । विप्रकीर्णगुणान् पिण्डीकृत्यो-पासितुस्तत्सदृशफलप्राप्तेरिति न्यायविवरणं प्रागुक्तशङ्कानिरासकत्वेन विप्रकीर्णतयोक्तगुणोपसंहारो निष्फलोऽनुपसंहारेणापि मोक्षसिद्धेरित्यर्थः । उपासकस्य उपासनं कुर्वत इत्यर्थः ॥ **तदनुसारीति** ॥ एतेनासम्यक्त्वप्राप्यफलानुसारिध्यानायेत्याङोऽर्थान्तरं सूचितम् ।

अतिशयरूपफलसत्वे देवतानयभाष्योक्तं मानमाह ॥ **यावदिति** ॥ एत एव फलविशेष-सद्भावादेवेत्यर्थः । कर्मकृतेरित्युक्तत्वादाह ॥ **ब्रह्मकर्मविद्याभिरिति** ॥ स्मृतौ नान्यत्प्रयोजनं मुख्यमिति श्रवणात्तद्व्यावर्त्यमाह ॥ **श्रवणपाठावपीति** ॥ तथा च प्रयोजनान्तरभावादित्यसिद्धो हेतुरिति भावः । प्रकारान्तरेण हेत्वसिद्धिमाशङ्क्य निराह ॥ **तथापीति** ॥ ज्ञानमात्रेणाऽऽ-श्रवणादिजन्यध्यानोपयोगिज्ञानमात्रेणेत्यर्थः । ननु श्रवणादेर्ज्ञानार्थत्वेन न तद्गुणकथनस्य मुख्यं प्रयोजनमिति भाव इत्युक्तिरयुक्ता उपयोग्युपयोज्यभावापन्नयोर्ज्ञानध्यानयोर्मुख्यफलहेतुतया तद्वयं गुणोक्तेर्यथा मुख्यं प्रयोजनं तथा श्रवणाज्जनलोकादिरिति जिज्ञासानयभाष्योक्तदिशा श्रवणादेरपि जनलोकादिफलहेतुत्वात्तदपि गुणोक्तेरस्तु मुख्यं प्रयोजनम् । तथा च नान्यत्प्रयोजनं मुख्यमित्युक्तिरयुक्तेति भावेन शङ्कित्वा निराह ॥ **यद्यपीति** ॥ महाफलेति बहुव्रीहिः । महाफलं यज्ज्ञानं तदर्थत्वेन द्रष्टव्यः श्रोतव्य इति विहितस्य श्रवणादेरित्यर्थः । यद्वा विहितस्य गुणाभि-धानस्येत्यर्थः । न तत्फलं श्रवणादिकं फलं नेत्यर्थः । ज्ञानार्थमथ ध्यानार्थमित्यादौ विहित-स्येत्यर्थः । यद्वा स्मृतौ नान्येन फलमित्येव वाच्ये फलं मुख्यमित्युक्तमुख्यपदस्य कृत्यं व्यनक्ति ॥ **यद्यपीत्यादिना** ॥ विहितस्य श्रवणादेः । तत् जनलोकादिकं फलम् । न मुख्यमित्यर्थः ।

## अभिनवचन्द्रिका

**गुणोपसंहारानुपसंहारेति ॥** सर्वगुणोपसंहारकतिपयगुणोपसंहारयोः समर्थनादित्यर्थः । उपसंहारांशे प्रमाणाभावोऽसिद्ध इत्याक्षिप्य निषेधति– **न चेति ॥ व्यर्थविधेरिति ॥** इष्ट-साधनतारूपविध्यर्थ विधुरविधिप्रत्ययान्तस्याऽनवधेयत्वादित्यर्थः । अनुपसंहारेऽपि मोक्षप्राप्तेरुक्तत्वेन मोक्षासाधनोपसंहारस्य मोक्षसाधनताप्रतिपादकविधिवाक्यस्याप्रामाण्यमिति भावः । उक्तं च वैफल्यमिति । उपसंहारस्य व्यतिरेकव्यभिचारेण मोक्षार्थत्वं नेत्युक्तमित्यर्थः । निरर्थकोपसंहारार्थत्वं गुणाभिधानस्य न सम्भवतीति भावः । अनुपसंहारांशे प्रमाणाभावोऽसिद्ध इत्याशङ्क्य निषेधति **यदपीति ॥ उपंसहारानुपसंहारयोरिति ॥** सर्वगुणोपसंहारकतिपयमात्रोपसंहारयोरित्यर्थः । प्राप्तेश्च समञ्जसमिति न्यायेनेति । अधिकारिभेदेन उपसंहारानुपसंहारवत् अस्य वाक्यस्याधिकारिभेदेन अनभिमतव्यवच्छेदबोधकत्वं अन्यव्यवच्छेदबोधकत्वं च युज्यत इति भावः ।

पूर्वपक्षस्तु– सर्वगुणोपसंहारो न कर्तव्यः प्रमाणाभावात् । न च 'उपास्य एकः परतः परः' इति भाल्लवेयश्रुतौ सर्वगुणोपसंहारस्य विहितत्वात् कथं प्रमाणाभाव इति वाच्यम् । अनुपसंहारि-णामपि चतुर्गुणोपासकानां मोक्षस्य जायमानत्वात् । व्यभिचारिणश्च साधनत्वायोगेन असाधनं साधनतया प्रतिपादयतो वाक्यस्याऽप्रामाण्यात् । न च सर्वविद्यानां भगवद्गुणाभिधायकत्वेन तदुपसंहारः कर्तव्य इति वाच्यम् । गुणानां नानास्थानेषूक्तत्वेन तदभिधानस्योपसंहारार्थत्वाभावात्, उपसंहारस्य निष्फलत्वेन, गुणाभिधानस्य तदर्थत्वायोगाच्च । नापि कतिपयमात्रगुणोपसंहारो युक्तः । प्रमाणाभावात् । न च वाच्यं प्रकरणभेदः तत्र प्रमाणमिति तत्रैतावदेवोपास्यमित्यनुक्तत्वात् । ततश्च नोपासनं युक्तमिति ।

सिद्धान्तस्तु– कर्तव्य एवोपसंहारः । सर्वविद्यानां भगवन्नामत्वेन तद्गुणाभिधायकत्वात् । तस्य च प्रयोजनान्तराभावेनोपसंहारपूर्वकध्यानार्थत्वात् । न चोपसंहारो निष्फलः आनन्दातिशय-लक्षणफलसद्भावात् । तथा विरिञ्चेतरैः कतिपयगुणानुपसंहारेण कतिपयगुणोपसंहारः कार्यः । 'आत्मेत्येवोपासीत' (बृ.) इत्याद्यनुपसंहारप्रमाणस्य विद्यमानत्वात् । अतश्चोपसंहारानुपसंहारयोः कर्तव्यत्वात् उपासनं युक्तमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

**अन्यथोक्तमिति** ॥ उपसंहारोऽर्थभेदात्, संज्ञातश्चेत्तदुक्तम्, इतरेऽत्वर्थसामान्यात् इत्यन्तोक्तोपसंहारो न वा प्रकरणभेदादित्यादिनोक्तोऽनुपसंहारश्च न स्यादित्यर्थः । तथा चाव्यवहितेनाप्याक्षेपिकी सङ्गतिरिति भावः ॥ **कर्तव्याविति** ॥ उपसंहारानुपसंहारौ न कर्तव्यावुत कर्तव्याविति चिन्ता । तदर्थं पूर्वोक्तप्रमाणानां सावकाशत्वावद्विशेषप्रमाणं नास्त्युतास्तीति ॥ **विधिरस्तीति** ॥ विधिरूपप्रमाणमित्यर्थः । विहितो गुणोपसंहारः किं मोक्षफलक उत तदन्यफलकोऽथवा निष्फलक इति विकल्पं मनसि निधायाद्यं दूषयति ॥ **अनुपसंहारोऽपीति** ॥ आनन्दादयः प्रधानस्येत्यादावित्यर्थः । द्वितीयं निराकरोति । **फलान्तरस्येति** ॥ विरक्तानामेवोपासनाधिकारित्वादिति भावः । तृतीयं दूषयति ॥ **व्यर्थविधेरिति** ॥ **तदप्युक्तमिति** ॥ संज्ञातश्चेदित्यत्रेत्यर्थः । सिद्धान्ते नानोक्तेरुपसंहारार्थत्वोक्त्या लब्धं नानोक्तिरिति न्यायं सङ्गमयति ॥ **गुणानामिति** ॥ गुणानां नानास्थानेषूक्तत्वस्य प्रयोजकत्वमाशङ्क्य विपक्षे गुणानां नानास्थानेषूक्तत्वरूपहेतोरुच्छित्तिं बाधकमाह ॥ **गुणाभिधानस्येति** ॥ उपसंहारस्य निष्फलत्वेन गुणाभिधानस्योपसंहार्यत्वायोगाच्चेति । उपसंहारार्थत्वदूषणान्तरमाह ॥ **उक्तं चेति** ॥ अनुपसंहारेऽपि मोक्षप्राप्तेरित्यादिनात्रैवोक्तमित्यर्थः । आत्मशब्दाच्चेति सूत्रनिरस्यमनुपसंहारस्याकर्तव्यत्वमाशङ्कते ॥ **यदपीति** ॥ न वा प्रकरणभेदादित्यत्रोक्तमित्यनुवर्तते । संज्ञातेति सूत्रेऽभ्यधिकाशङ्कायां तत्परिहारायेदं सूत्रमिति भावेन तदर्थं तावदनुवदति ॥ **कर्तव्य इति** ॥

ननु गुणानां नानाविद्यासूक्तत्वमुपसंहारविरोधीत्युक्तमित्याशङ्क्य तत्परिहारकत्वेन प्रवृत्तं सूत्रं 'सर्वे गुणा उच्यन्ते' इत्यध्याहारेण व्याकुर्वद्भाष्यं व्याचष्टे ॥ **गुणाभिधानस्येति** ॥ आङोऽर्थमाह ॥ **अशेषगुणोपसंहारपूर्वकेति** ॥ उक्तं च वैफल्यमित्येतदाशङ्क्य निराकरोति **न चेति** ॥ तद्व्यतिरेकेणापि सर्वापेक्षितानन्दादिसिद्धेः गुणोपसंहारो निष्फल इति न चेत्यर्थः । कुतो नेत्यतः फलसाम्यमित्युक्तन्यायप्रदर्शकं आध्यानार्थमित्येतदेवासम्यगनुरूपफलजनकध्यानार्थमित्येवमर्थतया व्याचष्टे ॥ **विप्रकीर्णेति** ॥ तदुक्तं न्यायविवरणे । विप्रकीर्णगुणान्पिण्डीकृत्योपासितुः तत्सदृशफलप्राप्तेस्तथाध्यानार्थमेव गुणानामुक्तिरित्युपपत्तिरिति । तथाध्यानार्थमित्यस्य तथाविधध्यानार्थं तदनुसारिफलकध्यानार्थमित्यर्थः ।

(वाक्यार्थमुक्तावली)

ननूक्तमत्र गुणाभिधानस्योपसंहारार्थत्वे वा सर्वेष्वेकत्रैवोच्येरन् इत्येतत्परिहारायाप्याध्यानार्थमित्येतद्व्याचष्टे ॥ **अत एवेति** ॥ नानास्थानेषु विप्रकीर्णोक्तगुणोपासकस्य सेवातिशयानुसारिमौक्तानन्दातिशयाख्यफलसद्भावादेवेत्यर्थः । **दौर्लभ्यायेति** ॥ एकत्रोक्तो सौलभ्ये तत्फलातिशयो न स्यादिति भावः । एतेनातिदुर्लभानन्दातिशयफलकध्यानार्थं नानास्थानेषु सर्वगुणा उच्यन्ते । एकत्रोक्तौ फलदौर्लभ्यायोगादित्यर्थ उक्तो भवति । तथा च गुणानां नानास्थानेषूक्तत्वमन्यथासिद्धमिति भावः । एतेन विहितत्वहेतुरपि समर्थितो भवति । अनुपसंहारे मोक्षमात्रसिद्धावपि तद्गतानन्दातिशयसिद्धेः तद्योग्यान्प्रति सर्वगुणोपसंहारस्य **विधेयत्वादिति** ॥ ज्ञानध्यानसमायोगादित्यस्याङ्गाङ्गिभावेन समायोगादित्यर्थं मत्वाह **ज्ञानमपि ध्यानोपयोगितयेति** ॥

ननु यदुक्तं श्रवणादेर्ज्ञानार्थत्वेन श्रवणादिकं गुणादिकथनस्य मुख्यं प्रयोजनमिति । तदयुक्तम् । मध्यमाज्जनलोकादिरिति वचनात् । साक्षादामुष्मिकजनलोकादिफलकस्य श्रवणादेर्गुणकथनरूपमुख्यफलकत्वोपपत्तेरित्याशङ्क्य निषेधति ॥ **यद्यपीति** ॥ जनलोकादिः फलं यस्येति विग्रहः । प्रयोजनत्वसम्भवः । **गुणकथनप्रयोजनत्वसम्भवः** ॥ **महाफलेति** ॥ महन्मोक्षाख्यं फलं यस्य तन्महाफलम् । तच्च तज्ज्ञानं च महाफलज्ञानमपरोक्षज्ञानम् । परोक्षनिश्चयध्यानद्वारा तत्साधनत्वेन विहितस्य श्रवणादेर्न तज्जनलोकादिकं मुख्यफलमिति न तत्फलकं श्रवणादिकं गुणकथनस्य मुख्यं प्रयोजनमित्यर्थः । भावबोधे च ननु श्रवणादेर्मुख्यफलान्तरदर्शनात्कथं चान्येन फलं मुख्यं क्वचिदित्यत आह ॥ **यद्यपीत्यवतारितम्** ॥

## तत्त्वसुबोधिनी

गुणोपसंहारानुपसंहारयोः व्याहतत्वशङ्कायाः अत्युल्बणायाः प्राप्तेरित्यादिना इतरेत्वर्थसामान्यादित्यन्तेन तां परिहृत्य इदानीं तत्तप्रमाणमुच्यत इत्यनन्तरगतिरिति भावः । **विधिरस्तीति** ॥ प्रमाणत्वेनैवेति शेषः । उक्तं विधिशेषवदित्यनेनेत्यर्थः । विधिशेषवदित्यत्र विहितत्वेनोक्तो गुणोपसंहारः किं सफलः उत निष्फलः । आद्येऽपि किं मोक्षफलकः उत न फलक इति विकल्पं हृदि निधायाद्यं निराकरोति ॥ **अनुपसंहारेऽपीति** ॥ आनन्दादयः प्रधानस्येत्यादावित्यर्थः । द्वितीयं निराकरोति ॥ **फलान्तरस्येति** ॥ विरक्तानामेव उपासनाधिकारित्वादिति भावः ॥ **तृतीयं दूपयति** ॥ **व्यर्थविधेरिति** ॥ **यदप्युक्तमिति** ॥ संज्ञातश्चेतदुक्तमित्यत्रेत्यर्थः । नानास्थानेषु उक्तत्वेऽपि

(तत्त्वसुबोधिनी)

उपसंहारार्थत्वाभावः कुत इत्यत आह ॥ **गुणाभिधानस्येति** ॥ अस्तु वा गुणाभिधानस्योपसंहारार्थत्वं तथापि सर्वगुणोपसंहाराभावेऽपि मोक्षप्राप्तेः आनन्दादयः प्रधानस्येत्यादावुक्तत्वाद्विफलोऽसौ न कर्तव्य एवेत्यभिप्रेत्याह । उक्तं चेति ॥ **यदपीति** ॥ उक्तमित्यनुवर्तते न वा प्रकरणभेदादित्यत्रेत्यर्थः । आध्यानयेत्याङोऽर्थमाह ॥ **अशेषगुणोपसंहारेति** ॥

ननु उक्तमत्रगुणाभिधानस्य उपसंहारार्थत्वे सर्वेऽप्येकत्रैव उच्येरन्नित्यत आह ॥ **अत एवेति** ॥ विप्रकीर्णगुणोपसंहारपूर्वकोपासने यतः फलविशेषोऽत एवेत्यर्थः । ननु एकत्रैव सर्वे गुणाः वक्तव्या तदुपसंहारपूर्वकोपासने फलविशेषः स्यादेवेत्यत उक्तम् । विशेषफलस्य दौर्लभ्यायेति । फलविशेषस्य दुर्लभत्वेन सुलभसाधनेन तस्य प्राप्तिः । एक प्राप्तो हि सौलभ्यं स्यादिति भावः । तथा च नानास्थानेषु उक्तिरन्यथासिद्धेति भावः । एतेन विहितत्वहेतुरपि समर्थितः । अनुपसंहारे मोक्षमात्रसिद्धावपि तद्गतानान्दातिशयलक्षणफलविशेषासिद्धेः तद्योग्यान्प्रति उपसंहारस्य विधेयत्वादिति ॥ **ब्रह्मकर्मविधिभिरिति** ॥ कर्मकृतेरित्युक्तत्वादिति भावः । एवं च ब्रह्मविधिभिः ज्ञानात् ध्यानात्, श्रवणात्, पाठाच्च, अन्यत्प्रयोजनं नास्ति । एवं कर्मविधिभिः कर्मकृतेरन्यत्प्रयोजनं नास्तीति स्मृतियोजना सूचिता भवति । ज्ञानध्यानसमायोगादित्यत्र ज्ञानजन्यः यो ध्यानसमायोगः समीचीनो योगः तस्मादित्यर्थः । ननु श्रवणादेरमुख्यस्य फलान्तरदर्शनात्कथं न चान्येन फलं मुख्यं कचिदित्यक्तमित्यत आह ॥ **यद्यपीति** ॥ मध्यमाज्जनलोकादिरित्युक्तत्वादिति भावः ।

## वाक्यार्थविवरणम्

**अनवधेयत्वात्** ॥ अश्रद्धेयत्वात् । सर्वविद्यानामित्यनन्तरं भगवन्नामत्वेन नाम्नां चेत्येतावान् शेषः । गुणाभिधायकत्वादित्यनन्तरं गुणाभिधानस्य चोपसंहारार्थत्वादिति शेषः ॥ **उक्तम्** ॥ आनन्दादय इत्यत्र । वैफल्यं गुणोपसंहारस्येति शेषः ॥ **एतावदेवेति** ॥ तथा चान्यनिषेधाभावेन गुणान्तरोपसंहारोऽपि तत्राभिप्रेत एवेति भावः । ध्यानस्य सम्यक्त्ववाचिन आङोऽर्थोऽशेषगुणोपसंहारपूर्वकेति **कुत इति** ॥ प्रयोजनान्तरार्थत्वमेवास्त्विति भावः ॥ **अत एवेति** ॥ सेवाधिक्येन फलाधिक्यस्योक्तत्वादेवेत्यर्थः ॥ **नानास्थानेष्विति** ॥ एकत्रैवोक्तौ विप्रकीर्णगुणानामेकीकरणरूपोपसंहाराख्यसेवाधिक्याभावेन सर्वेषामेकप्रकारफलापत्तेरिति भावः । भाष्ये

(वाक्यार्थविवरणम्)

समुदीरणा यत इति शेषः । कुत इत्यत आह भाष्ये 'नान्यदिति, विद्याभिः' इतीति ब्रह्मविद्याभिर्ज्ञानाद्ध्यानाच्छ्रवणात्पाठाद्वाऽन्यत्प्रयोजनं नेष्यते । कर्मविद्याभिश्च कर्मकृतेः । कर्मानुष्ठानादन्यत्प्रयोजनं नेष्यत इति विवेकः ॥ **प्रयोजनमिति** ॥ श्रवणाच्चाथ पाठाद्वेत्युक्तत्वादिति भावः ॥ **न ध्यानमेवेति** ॥ तथा च ध्यानायेत्युक्तमसदिति भावः ॥ **तत्** । श्रवणादि । **ज्ञानस्य** । ज्ञानस्यापि । **प्रयोजनत्वात्** । गुणकथनप्रयोजनत्वात् । गुणानां च कथने वेदनाद् ध्यानाच्चान्यन्मुख्यप्रयोजनं नास्तीत्युक्तत्वादिति भावः ॥ **ज्ञानमपीति** ॥ तथा च सर्वशः सर्वेषां गुणानां ज्ञानध्यानसमायोगात् ।' ज्ञानध्यानयोः साहित्यान्मुख्यफलं भवेदित्यर्थः ॥ **ज्ञानमात्रेण** । ध्यानासहितश्रवणेन । मुख्यपदप्रयोजनं वक्तुमाह ॥ **यद्यपीत्यादिना** ॥ जनलोकादिरूपफलस्य जनलोकस्यादिः महर्लोक इत्यर्थः । श्रवणजनितमध्यमप्रसादस्य जनलोकादिफलकत्वस्य 'मध्यमाज्जनलोकादिः' इति प्रमाणसिद्धत्वादिति भावः । तथा चान्येन फलं न भवेदित्युक्तमयुक्तमिति हृदयम् । एतच्छङ्कावारणाय मुख्यपदमित्याशयेन तदभिप्रायमाह ॥ **तथापीति** ॥ **महाफलेत्यादि** ॥ मोक्षरूपं यन्महाफलं तद्धयज्ज्ञानं तत्साधनत्वेन 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यः' इति श्रुतिविहितस्य श्रवणादेरित्यर्थः । **तत्** जनलोकादि ।

## वाक्यार्थमञ्जरी

**उक्तमिति** ॥ 'उपसंहारोऽर्थाभेदात्' न वा प्रकरणभेदादिति सूत्राभ्यां क्रमेणोक्तं, तयोः कर्तव्यत्वमित्यर्थः ॥ **विधिरस्तीति** ॥ प्रमाणत्वेनेति शेषः । उक्तं विधिशेषवदित्यनेन विधिशेषवदित्यत्र विहितत्वेनोक्तो गुणोपसंहारः किं सफलः उत निष्फलः । आद्येऽपि किं मोक्षफलकं उतान्यफलकेति विकल्पं मनसि निधायाद्यं दूषयति ॥ **अनुपसंहारेऽपीति** ॥ 'आनन्दादयः प्रधानस्य' इत्यादावित्यर्थः । द्वितीयं निराकरोति ॥ **फलान्तरस्येति** ॥ फलान्तरे विरक्तानामेवोपासनाधिकारित्वादिति भावः । तृतीयं दूषयति ॥ **व्यर्थविधेरिति** ॥ अनादरणीयत्वादिति भावः ॥ **यदप्युक्तमिति** ॥ संज्ञातश्चेत्तदुक्तमित्यत्रेत्यर्थः । अस्तु वा गुणोपसंहारस्योपसंहारार्थत्वं तथापि सर्वोपसंहाराभावेऽपि मोक्षप्राप्तेरानन्दादयः प्रधानस्येत्यादावुक्तत्वात्तदन्यफलस्य चानपेक्षितत्वाद्विफलोऽसौ न कर्तव्य इत्यभिप्रेत्याह ॥ **उक्तं चेति** ॥ **यदपीति** ॥ उक्तमित्यनुवर्तते न वा प्रकरणभेदादित्यत्रेत्यर्थः ।

(वाक्यार्थमञ्जरी)

ॐ आध्यानाय प्रयोजनाभावात् ॐ ॥ सर्वगुणोक्तिराध्यानायासंमतात्सर्वगुणोपसंहारेण ध्यानार्थमेव कुतः, तद्विना प्रयोजनाभावात् ॥ **मुक्त्यानन्देति** ॥ मुक्तावानन्दातिशयेत्यर्थः । ननु गुणाभिधानस्योपसंहारार्थत्वे सर्वेप्येकत्रैवोच्चेरन्नित्यत आह ॥ **अत एवेति** ॥ ज्ञानार्थमेवेत्यादौ ज्ञानं परोक्षज्ञानं ज्ञानात्कर्मकृतेरपीत्युभयानुसारेणाह ॥ **ब्रह्मकर्मविद्याभिरिति** ॥ तत् श्रवणादि साक्षात्फलहेतुत्वाभावादिति भावः । **फलस्य** फलवतः ॥ **प्रयोजनत्वेनेति** ॥ गुणकथन-प्रयोजनत्वसम्भव इत्यर्थः । तथा च साक्षात्फलहेतुत्वान्मुख्यप्रयोजनत्वमिति भावः । विहितस्य श्रवणादेः तत् जनोलोकादिः ।

## सूत्रभाष्यम्

**॥ ॐ आत्मशब्दाच्च ॐ ॥ १६ ॥**

'आत्मेत्येवोपासीत' (बृ.उ.३-४७) इत्यनुपसंहारे प्रमाणम् ॥

## तत्त्वप्रदीपिका

'आत्मेत्येवोपासीत'इत्येतद्वाक्यं चतुर्गुणोपासनेऽप्यशक्तानत्यन्तावरान्मुमुक्षूनुपक्रम्यो-त्तरोत्तराधिकारिणो ब्रह्मपर्यन्तान्प्रति स्वस्वयोग्यगुणोपास्तिविधिपर्यवसायक-मुपदिदिक्षदल्पोप-संहारप्रमाणं समभिधत्त आत्मशब्दाच्चेति सूत्रमनुसरन् ॥

## तत्त्वप्रकाशिका

एवं सर्वगुणोपसंहारं प्रमाणेन समर्थ्यानुपसंहारं च समर्थयत्सूत्रं पठित्वा व्याचष्टे ॥ **आत्मेति** ॥ गुणान्तरव्यावृत्तिपूर्वकमात्मत्वस्योपासनाविधानादनुपसंहारोऽपि सिद्ध्यतीति भावः । नन्वव-धारणस्यायोगव्यवच्छेदकत्वेनोक्तत्वात्कथमन्ययोगव्यवच्छेदकत्वमिति । प्राप्तेश्च समञ्जसमिति न्यायेनाविरोधात् । अतो युक्तत्वादुपसंहारानुपसंहारयोरुपपन्नमुपासनमिति सिद्धम् ।

## गुर्वर्थदीपिका

'प्राप्तेश्च समञ्जसम्' इति न्यायेनाविरोधादित्यस्याऽऽत्मपदेन येषां सर्वगुणप्राप्तिस्तेषां व्यवच्छेद्य-गुणान्तराभावादेवकारः आत्मत्वविशेषणसङ्गत्याऽयोगव्यवच्छेदं करोति । येषां तु सकलगुण-

(गुर्वर्थदीपिका)

वाचकोऽप्यात्मशब्दस्तत्तद्योग्यतानुसारेण कतिपयगुणानेव तत्तच्चित्ते प्रापयति तान्प्रत्यात्मशब्दोदिता गुणास्तावन्त एव । अन्ये त्वात्मशब्देनाप्राप्तत्वात्तान्प्रत्यनात्मान एव । एवं चात्मेत्यात्मशब्द-प्राप्तस्वयोग्यगुणवानित्येवोपासीत न त्वात्मशब्दाप्राप्तगुणवानपीत्यात्मशब्दाप्राप्तगुणा एव व्यवच्छेद्या भवन्ति । अतः सकलगुणोपासकानां प्रागुक्तायोगव्यवच्छेदः । अन्येषां त्विदानीमुच्य-मानोऽन्ययोगव्यवच्छेद इत्युभयोरप्यविरोधादित्यर्थः । यथा सर्वपदवाच्यस्सर्वोऽप्यर्थ इति ज्ञानवति सर्वमेव भवता दृष्टमित्युक्ते सर्वमेव दर्शनायोगो यथा न भवति तथा भवता दृष्टमित्येव प्रत्येति । न त्वेवपदव्यवच्छेद्यमपि किञ्चित् साङ्केतिकसर्वपदवाच्यपुरुषविशेष एव सर्व इति ज्ञानवन्तं प्रति सर्व एव त्वया दृष्ट इत्युक्ते तदितरसर्वो व्यवच्छेद्यो भवति तद्वदिति भावः ।

## भावबोधः

अयोगव्यवच्छेदकत्वेनोक्तत्वादिति । भाष्ये आत्मेत्यवधारणमनात्मनिवृत्त्यर्थमित्युक्तत्वा-दित्यर्थः । 'प्राप्तेश्च समञ्जसम्'इति न्यायेनेति । आत्मत्वमनात्मत्वहानेनावश्यमुपास्यमेवेत्ययोग-व्यवच्छेदकत्वेऽप्यवधारणस्य,

'यस्य यावद्गुणाः स्पष्टं प्रतिभासन्त्युपासने ।
युगपत्स्वभुजौ यद्वत् ध्यायेत्तावत एव सः ॥'

इत्युक्तरीत्या आत्मशब्देन यस्य यावन्तो गुणाः युगपत्प्रतीयन्ते तेन तावन्त एवोपास्या न त्वन्य इत्यन्ययोगव्यवच्छेदकत्वमपि सम्भवतीति न तयोर्विरोध इति भावः । अत्राद्ये सूत्रे सर्वगुणोपसंहारस्य चतुर्मुखाधिकारिकत्वेन प्राधान्यात्तत्रादौ प्रमाणमुक्त्वा, द्वितीये तदितराधि-कारिकसर्वगुणानुपसंहारे प्रमाणोक्तिरिति सूत्रक्रम इति ज्ञेयम् ।

## भावदीपः

**प्रमाणेनेति** ॥ प्रयोजनान्तरशून्यत्वे सति सप्रयोजनकसर्वविद्यास्थगुणोक्त्यन्यथानुपपत्ति-रूपप्रमाणेनेत्यर्थः ॥ **समर्थयदिति** ॥ प्रमाणेनेत्यनुषङ्गः । परस्मैपदं प्राक्समाहितम् ॥ **गुणान्तरेति** ॥ आत्मेत्येवोपासीतेति वाक्यं चतुर्गुणोपासनेऽप्यशक्तानत्यन्ताधमान्मुमुक्षूनारभ्योत्तरोत्तराधिकारिणो ब्रह्मपर्यन्तान् प्रति स्वस्वयोग्यगुणोपास्तिविधिपर्यवसायकमल्पोपसंहारे प्रमाणमिति तत्वप्रदीपो-

(भावदीपः)

क्त्याऽल्पाधिकारि कात्मत्वादिरूपगुणाद्गुणान्तरेत्यर्थः ॥ **उक्तत्वादिति** ॥ अन्यथात्वं चशब्दादिति सूत्रभाष्ये इत्यर्थः । इतिशब्दानन्तरं चेन्नेति शेषः ॥ **इति न्यायेनेति** ॥ अधिकारिभेदेनोपसंहारानुपसंहारयोरविरोध इत्युक्तन्यायेनात्राप्यधिकारिविशेषान् प्रत्यात्मेत्युपासीतैवेति आत्मेत्येवोपासीतेति चोपदेशो विरोधाभावादित्यर्थः । अधिकरणतात्पर्यमुपसंहरति ॥ **अत इति** ॥ सावधारणात्मशब्दादिरूपप्रमाणवत्त्वाद्धेतोर्युक्तत्वादुपादेयत्वादित्यर्थः ।

## वाक्यार्थमुक्तावली

आत्मत्वमात्रोपासनविधायकात्मशब्दघटितात्मेत्येवोपासीतेति श्रुतेश्च नोपसंहार इति सूत्रार्थं मनसि निधाय व्याचष्टे ॥ **गुणान्तरेति** ॥ एतेन यदुक्तं प्रकरणेष्वेतावदेवोपास्यमित्युक्त्यभावादिति यत्पूर्वपक्षिणा शङ्कितं तदपहसितं ज्ञेयम् । प्राप्तेश्च समञ्जसमित्युक्तन्यायेनेति । अधिकारिभेदेनोपसंहारानुपसंहारसम्भववदस्य वाक्यस्यापि अधिकारिभेदेन अयोगव्यवच्छेदकत्वमन्ययोगव्यवच्छेदकत्वं युज्यत इति भावः । उत्तमाधिकारस्य प्रथमे समर्थनम् । द्वितीयेऽवराधिकारस्येति सूत्रक्रमः ।

## तत्त्वसुबोधिनी

**प्राप्तेश्चेति** ॥ आत्मत्वमनात्मत्वहानेनावश्यमुपास्यमेवेत्ययोगव्यवच्छेदकत्वेऽप्यवधारणस्य यस्य यावद्गुणाः युगपत्प्रतिभासन्ते तेन तावन्त एवोपास्याः न त्वन्ये इत्यन्ययोगव्यवच्छेकत्वमपि सम्भवतीति न तयोः विरोध इति भावः । अत्राद्ये सूत्रे सर्वगुणोपसंहारे प्रमाणोक्तिः । द्वितीयेऽनुपसंहारे तदुक्तिरिति सूत्रक्रमः ।

## वाक्यार्थविवरणम्

**गुणान्तरव्यावृत्तेति** ॥ अवधारणस्य अन्ययोगव्यवच्छेदकत्वादिति भावः ॥ **कथमिति** ॥ तथा चानुपसंहारप्रमाणत्वं न सम्भवतीति भावः ॥ **उक्तन्यायेनेति** ॥ ब्रह्मादीन्प्रत्ययोगव्यवच्छेदकत्वं मनुष्योत्तमान्प्रत्यन्ययोगव्यवच्छेदकत्वमित्यधिकारिभेदेनेत्यर्थः ।

## वाक्यार्थमञ्जरी

अनुपसंहारोऽप्यस्ति कुतः आत्मेत्येवोपासीत इत्यात्मत्वमात्रोपासनाविधायकात्मशब्दोपेत-श्रुतेरित्यर्थः ॥ **उक्तत्वादिति** ॥ आत्मेत्येवेत्यवधारणमनात्मत्वनिवृत्त्यर्थमिति भाष्येणेत्यर्थः ॥ **प्राप्तेश्च समंजसमिति न्यायेनेति** ॥ आत्मत्वमनात्मत्वहानेनावश्यमुपास्यमेवेत्ययोगव्यवच्छेद-कस्यावधारणस्य 'यस्य यावद्गुणाः स्पष्टं प्रतिभासन्त्युपासने । युगपत्स्वभुजौ यावद्ध्यायेत्तावत एव सः' इत्युक्तरीत्या आत्मशब्देन यस्य यावन्तो गुणाः युगपत्प्रतीयन्ते तेन तावन्त एवोपास्या इत्यन्ययोगव्यवच्छेदकत्वमपि सम्भवतीति न तयोर्विरोध इति भावः ।

॥ इति आध्यानाधिकरणम् ॥ ८ ॥

## ९. आत्मगृहीत्यधिकरणम्

॥ ॐ आत्मगृहीतिरितरवदुत्तरात् ॐ ॥ १७ ॥

न 'चानन्दादयः प्रधानस्य' इत्युक्तिविरोधः । यतः 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै.उ.२-१) 'विज्ञानमानन्दं ब्रह्म' (बृ.उ.५-९-२८) इतिवदेवाऽऽत्मशब्दगृहीतिः । 'अत्र ह्येते सर्व एकीभवन्ती' (बृ.उ.३-४-७) इत्युत्तरात् ।

'आनन्दानुभवत्वाच्च निर्दोषत्वाच्च भण्यते ।
नित्यत्वाच्च तथाऽऽत्मेति वेदवादिभिरीश्वर' इति (हि) बृहत्तन्त्रे ॥

### तत्त्वप्रदीपिका

कथमात्मेत्येवेत्यादिवाक्यमुक्तोपसंहारे प्रमाणं स्यात् । यावतैक एव गुणस्तस्मिन्प्रतीयत इत्यत आह– ॐ आत्मगृहीतिरितरवदुत्तरात् ॐ ॥ यथेतरेषु 'विज्ञानमानन्दं ब्रह्म'इत्यादिषु वचनेषु नैकगुणगृहीतिस्तद्वदितरयुक्तत्वेनैवाऽऽत्मशब्दगृहीतिः । आनन्दादयो गुणा विवक्षिता एवाऽत्मशब्देनेत्यर्थः । 'अत्र ह्येते सर्वे एकीभवन्ति' इत्युत्तराद्वाक्यात् । 'प्राणन्नेव प्राणो नाम भवति वदन्वाक्पश्यंश्चक्षुः शृण्वञ्छोत्रं मन्वानो मन' इत्युक्ता गुणा एवेति परामृश्यन्ते । अत्र ह्यात्मत्वगुण एते सर्वे गुणा एकं भवन्ति । एकमिति भेदाभावात् । भवन्तीति विशेषात् । 'प्राण' इत्यानन्दत्वं स्वामित्वं च ।

'प्रकृष्टानन्दरूपत्वात्प्राण इत्यभिधीयते । प्राणिप्रणयनादेष' इत्यादेः । प्रकृष्ट इति निर्दोषत्वं च लक्ष्यते ।

### तत्त्वप्रकाशिका

अत्रेश्वरापरोक्षज्ञानसाधनोपासनायामानन्दादिनियतिसमर्थनादस्ति शास्त्रादिसङ्गतिः । अन्यथोक्तानुपपत्तिप्रसङ्गात्सा समर्थनीया । प्रकृता भगवद्गुणा विषयः । किमानन्दादयश्चत्वारोऽपि सर्वमुमुक्षूपास्या उतात्मत्वमेवेति सन्देहः । उभयथोक्तिः सन्देहबीजम् । आत्मत्वमेव सर्वोपास्यमिति पूर्वः पक्षः । 'आत्मेत्येवोपासीत' इति सावधारणश्रुतेः । आनन्दादित्रयलोपेनात्मत्वमात्रेणोपासनस्य सुशक्यत्वात् । ईश्वरापरोक्ष्यसिद्धिगुणलाभाच्च । अत आत्मत्वस्यैव सर्वोपास्यत्वादानन्दादयः

(तत्त्वप्रकाशिका)

प्रधानस्येत्युक्तं श्रुत्यादिविरोधादयुक्तमिति । सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ॥ **आत्मेति** ॥ 'आत्मेत्येवोपासीत' इति सावधारणश्रुतिबलेनात्मत्वस्यैवावश्योपास्यत्वमभ्युपेत्यानन्दादयः प्रधान-स्येत्युक्तेः श्रुतिविरोधाभिधानं न युक्तम् । किं नामानन्दायश्चत्वारोऽप्युपास्या एव । कुतः । भवेदेतद्यदि श्रौतोऽयमात्मशब्दः स्वामित्वमात्रं वक्ति । नैतदस्ति । तेनानन्दादीनामपि गृहीतत्वा-त्सत्यज्ञानादिवाक्यवदेवेत्यर्थः । कुतोऽयमात्मशब्द आनन्दाद्यभिधायको न स्वामित्वमात्रवचन इत्यत आह ॥ **अत्रेति** ॥ अत्र आत्मत्वे । सर्वेऽप्यानन्दादयो गुणा अन्तर्भवन्तीत्यर्थः । आत्मशब्दस्य स्वामित्वमात्रानभिधायकत्वे स्मृतिं चाह ॥ **आनन्देति** ॥ अतो युक्तत्वाच्चतुर्गुणोपासनस्योक्तं युक्तमिति सिद्धम् ॥

## गुर्वर्थदीपिका

श्रुत्यादिविरोधादित्यत्राऽऽदिपदेन सुशक्यत्वादिति युक्तिर्गृह्यते । सत्यज्ञानादिवाक्यवदित्यत्र यथा 'सत्यं ज्ञानमनन्तं ब्रह्म' 'विज्ञानमानन्दं ब्रह्म'इति वाक्ये बहुगुणानां गृहीतिस्तथा आत्म-पदेनापि बहुगुणसङ्गृहीतिरित्यर्थः ।

## भावबोधः

**आनन्दादिनियतिसमर्थनादिति** ॥ यदि 'आत्मशब्दाच्च' इति पूर्वसूत्रे आत्मेत्येवेत्यवधारण-स्यान्ययोगव्यवच्छेदकत्वमङ्गीकृत्य तच्छिरस्कात्मशब्दस्य अनुपसंहारे प्रमाणत्वमङ्गीक्रियते । तर्ह्यात्मत्वमेवोपास्यं न तु आनन्दादयश्चत्वारोऽपीत्याक्षेपोत्थानादनन्तरसंङ्गतिरिति भावः । अत एवोक्तं भाष्ये 'न च आनन्दादयः प्रधानस्य' इत्युक्तिविरोध इति ॥ **किमानन्दादय इति** ॥ अत्र भगवद्गुणेषु किमात्मत्वमेव सर्वमुमुक्षूपास्यं उत आनन्दादयश्चत्वारोऽपीति चिन्ता । तदर्थं आत्मे-त्येवेत्यवधारणस्य अन्ययोगव्यवच्छेदकत्वं आनन्दादीनामप्युपास्यत्वे नोपपद्यते उतोपपद्यत इति । तदर्थं आत्मशब्दः किं स्वामित्वमात्रार्थक उतानन्दाद्यर्थकोऽपीति । उभयथोक्तिरिति । 'आन-न्दादयः प्रधानस्य' इति 'आत्मशब्दाच्च' इति उभयथोक्तिरित्यर्थः । आश्वापरोक्षाय आनन्दा-दीनामपि लोपेनात्मेत्येतावता पूर्यत इति न्यायविवरणं तात्पर्यतो व्याचष्टे– **आनन्दादीत्यादिना** ॥ **सुशक्यत्वादिति** ॥ 'एतावता पूर्यते' इत्यनेनेदं सूचितमिति ज्ञातव्यम् । आत्मशब्दार्थविशेषत्वात्

(भावबोधः)
आनन्दादीनामिति न्यायविवरणं तेनानन्दादीनामपि गृहीतत्वादित्यनेनोक्ततात्पर्यकम् ॥ **सत्यज्ञानादिवाक्यवदेवेति** ॥ यथैतद्वाक्यगतसत्यानन्दादिपदानां सत्यत्वाद्यभिधायकत्वम्, तथाऽऽत्मशब्दस्याप्यानन्दाद्यभिधायकत्वमिति भावः ।

## भावदीपः

**आनन्दादिनियतिसमर्थनादिति** ॥ आत्मशब्दाच्चेति पूर्वसूत्रोपात्तसावधारणात्मत्वोपासा श्रुत्या आनन्दाद्यनैयत्यशङ्कायां प्राप्तायां तन्निरासेनेति भावः । तेन तन्नैयत्यस्यानन्दादय इत्यत्रैव समर्थनात्पौनरुक्तिशङ्का निरस्ता । पूर्वसूत्रोक्तानुपसंहारप्रमाणेनानन्दसूत्रोक्तप्रमेयस्य विरोधशङ्का-निरसनाद्वा पूर्वत्राल्पाधिकारिणः प्रत्यात्मत्वमात्रमात्मशब्दो वक्तीत्यनुपसंहारे प्रमाणमुक्तमिह तु ततोऽधिकाधिकारिणं प्रति चतुरो गुणानित्युच्यते । ततोऽप्यधिकाधिकारिणं ब्रह्माणं प्रति तु सर्वान् गुणान् वक्तीत्युत्तरनयेऽभिधीयत इति वाऽत्र पूर्वसङ्गतिश्चोक्ता भवति ॥ **अन्यथेति** ॥ पूर्वसूत्रोक्त-श्रुतेश्चतुर्गुणपरत्वेन सावकाशत्वमुक्त्वा विरोधनिरासेन तदसमर्थने सति आनन्दसूत्रोक्तप्रमेयानु-पपत्तिप्रसङ्गादित्यर्थः ॥ **आत्मत्वमेवेति** ॥ स्वामित्वमेवेत्यर्थः ॥ **उभयथेति** ॥ आत्मशब्दा-च्चेत्यत्रात्मत्वमात्रस्यानन्दादय इत्यत्र चतुर्णामुपास्यत्वोक्तिरित्यर्थः । भाष्ये इत्युक्तिविरोध इत्यत्र इत्युक्तेः श्रुत्यादिविरोध इति विग्रहमुपेत्य तत्सूचितप्रतिज्ञाहेतू आह ॥ **आत्मत्वमेवेति** ॥ नन्वा-नन्दादिचतुर्भ्योऽधिकानामुपासने शक्त्यभावेन तस्य त्यागेऽपीहापेक्षितस्य शक्यस्यानन्दाद्युपासन-स्यानन्दनयोक्तस्य त्यागे को हेतुरित्यतः आश्वापरोक्ष्यायानन्दादीनामपि लोपेनात्मेत्येतावता पूर्वत इति न्यायविवरणमपिपदसूचितहेतूक्तिपूर्वमत्र योजयति ॥ **आनन्दादीति** ॥ भाष्यं फलानुवाद-परमित्युपेत्योपसंहरति ॥ **अत इति** ॥ श्रुतियुक्तिबलादित्यर्थः ॥ **श्रुत्यादिविरोधादिति** ॥ श्रुतियुक्तिविरोधादित्यर्थः ॥ परिष्कारपूर्वं न चेत्यादिभाष्यं व्याचष्टे ॥ **आत्मेत्येवेति** ॥ श्रुतिबलेन श्रुत्यादिबलेनेत्यर्थः । श्रुतीति श्रुत्यादीत्यर्थः । सूत्रभाष्ययोः श्रुतिगतयुक्तिमात्रपरत्वाच्छ्रुतीत्येवानु-वादः । युक्तिगतिस्तु सुशक्यत्वगुणलाभेऽपि सर्वेषां च मुमुक्षूणां फलसाम्यादपेक्षितेत्यानन्दन-योक्तन्यायेन स्वापेक्षितफलप्राप्त्यर्थत्वाच्चत्वारोऽप्युपास्या इति सुशक्यत्वादिकमप्रयोजकमित्येवं ध्येयेति भावः । भाष्यस्य फलितार्थमाह ॥ **किं नामानन्दादय इति** ॥ यत इत्यादिभाष्यार्थमाह ॥ **तेनेति** ॥ आत्मशब्देनेत्यर्थः । यथा सत्यज्ञानादिवाक्येषु अनेकगुणगृहीतिस्तथाऽऽत्मशब्देनाप्या-

(भावदीपः)

नन्दादीतरगुणयुक्तत्वेनैव स्वामित्वस्य गृहीतिरित्यर्थः । असम्भावनानिरासाय दृष्टान्तः । आत्मशब्दार्थविशेषत्वादानन्दादीनामित्यन्यत्रोक्त्यनुरोधेन भाष्यं व्याचष्टे ॥ **अत्रात्मत्व इति** ॥ वाजसनेये हि तृतीये पञ्चमब्राह्मणे प्राणन्नेव प्राणो नाम भवति । वदन्वाक्, पश्यंश्चक्षुः, शृण्वतश्श्रोत्रं, मन्वानो मन इति पूर्वत्र प्रकृष्टानन्दरूपत्वात्प्राण इत्यभिधीयत इत्यादेः प्राणशब्दोक्तमानन्दे प्रशब्दोक्तनिर्दोषत्वं चक्षुरादिशब्दोक्तज्ञानरूपगुणं चैत इति परामृश्यात्मत्वेऽन्तर्भावं वदति श्रुतिरित्यर्थः । फलोक्त्या सूत्रार्थमुपसंहरति ॥ **अत इति** ॥ उत्तरवाक्यबलेन आत्मशब्देन चतुर्णामपि गृहीत्या श्रुतिविरोधाभावाद्धेतोर्युक्तत्वादनवद्यत्वादिति व्यधिकरणे पञ्चम्यौ । उक्तं आनन्दादय इत्यत्रोक्तमित्यर्थः ।

## अभिनवचन्द्रिका

**ईश्वरापरोक्ष्येति** ॥ आत्मत्वमात्रोपासनायां शीघ्रमपरोक्षज्ञानं भवति । चतुर्गुणोपासने तु विलम्बेन भवतीति तदेव सर्वोपास्यमिति भावः ॥ **भवेत्तद्यदीति** ॥ वक्तीत्यतः परम् 'इति स्यात्' इति शेषः । सत्यज्ञानादिवाक्यवदेवेति ॥ सत्यज्ञानादिवाक्यगतसत्यादयः शब्दाः 'सत्त्वं जीवनमेव च । विशीर्णता च सत्त्वं स्यात्' इत्युक्तरीत्या यथा जीवकत्व विनाशकत्वाद्यनेकगुणवाचकाः, तथा आत्मशब्दोऽप्यनेकगुणवाचक इति भावः ।

पूर्वपक्षस्तु– आत्मत्वमेव सर्वोपास्यं नानन्दादयश्चत्वारः । 'आत्मेत्येवोपासीत' इति सावधारणवचनात् । इतरगुणहानेन आत्मत्वमात्रोपासनस्य सुशकत्वात् । शीघ्रेणेश्वराऽऽपरोक्ष्यसिद्धिगुणलाभाच्च । अत आत्मत्वस्यैव सर्वोपास्यत्वात्, 'आनन्दादयः प्रधानस्य' इत्युक्तमयुक्तमिति ।

सिद्धान्तस्तु– आनन्दादयश्चत्वारोऽप्युपास्या एव । आत्मशब्दस्य सत्यादिशब्दवत् 'अत्र ह्येते सर्व एकीभवन्ति' इत्युत्तरवाक्यबलात् बह्वर्थकत्वेन आनन्दाद्यभिधायकत्वात् । अतो विरोधाभावात् उक्तं युक्तमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

**आनन्दादिनियतिसमर्थनादिति** ॥ आत्मशब्दाच्चेत्युक्तरीत्या आत्मत्वमात्रमेवोपास्यम् । न त्वानन्दादयश्चत्वारोऽपीत्याक्षिप्यानन्दादिनियतिसमर्थनादनन्तरसङ्गतिरिति भावः ॥ **किमिति** ॥ अत्र भगवद्गुणेषु किमात्मत्वमेव सर्वमुमुक्षूपास्यमुतानन्दादयश्चत्वारोऽपीति चिन्ता । तदर्थं एवशब्द-शिरस्कात्मशब्दः स्वामित्वमात्रार्थ उतानन्दाद्यर्थकोऽपीति । न चानन्दादयः प्रधानस्येत्युक्तिविरोध इति । इत्युक्तेर्विरोधः श्रुतिविरोधो युक्तिविरोधश्च नेति श्रुतियुक्तिविरोधमाशङ्क्य निरासात् । आत्मगृहीतिरित्यत्रात्मपदेनानन्दादिग्रहणस्योत्तरवाक्यबलेन श्रुतिविरोधपरिहारार्थमुच्यमानत्वाच्च तदनुसारेण तावच्छ्रुतिविरोधेन पूर्वपक्षयति ॥ **आत्मेत्येवेति** ॥ अत्र ह्येते इत्युत्तरवाक्यबलेनात्म-शब्देनानन्दादिगुणग्रहणस्य वर्जनीयत्वेन लोपानुपपत्त्युक्त्या निरस्यं युक्तिविरोधमाह ॥ **आनन्दा-दीति** ॥ तन्निरस्यमासु ते इत्युक्तन्यायमप्याह ॥ **आस्विति** ॥ आनन्दादित्रयलोपेनेत्यनुवर्तते । सूत्रे आत्मेत्यात्मशब्दपरम् । आनन्दादीनामित्यनुवर्तते । आत्मशब्देनानन्दादीनां चतुर्गुणानां गृहीति-र्ग्रहणमुक्तिर्नात्ममात्रस्येत्यर्थः । कथमेकेनानेकग्रहणमित्यत उक्तम् ॥ **इतरवदिति** ॥ सत्यं ज्ञान-मनन्तं ब्रह्मेत्यादिवाक्येन यथा तथेत्यर्थः । आत्मशब्दस्यापि यौगिकत्वेन वाक्यतुल्यत्वात्प्रकृति-प्रत्ययभेदेनानेकगुणोक्तिः सम्भवतीति भावः । यद्वा ननु कथमात्मशब्देनानन्दज्ञानादिग्रहणम् । अशक्यत्वादित्यत इदमुदितम् । यथा सत्यज्ञानादिवाक्ये ज्ञानादिपदेन ज्ञानादिग्रहणं रूढत्वा-त्तथात्मशब्दस्यापि आनन्दानुभवाच्चेति वक्ष्यमाणत्वेन रूढत्वात् तेनानन्दादिग्रहणमिति भावः । यद्वा यथा सत्यज्ञानादिवाक्ये सत्यशब्दः 'सत्त्वं जीवनमेव हि । विशीर्णता च सत्वं स्यात्' इत्युक्तरीत्यानेकगुणपरः । ज्ञानं तु मनसा विज्ञानेनाप्युदाहृतमित्युक्तरीत्येत्यर्थः । ज्ञानशब्दोऽ-वान्तरविशेषपरः । आनन्दशब्दश्चानन्दपूर्णत्वाद्यर्थः । अनन्तत्वं तथानन्दमयवाचाप्युदाहृत-मित्युक्तेः । विज्ञानमानन्दमित्यत्राप्यानन्दशब्दः प्रियादि तद्विशेषपरः । तथात्मशब्दोऽप्यनेकगुणपर इति भावः । न दृष्टान्तमात्रेणार्थसिद्धिरित्यत आह ॥ **उत्तरादिति** ॥ अत्र ह्येते सर्व एकी-भवन्तीत्युत्तरवाक्ये । तत्र प्राणन्नेव प्राणो नामा भवति । वदन्वाक् । पश्यंश्चक्षुः । शृण्वन् श्रोत्रम् । मन्वानो मन इत्यादिपूर्ववाक्यप्रकृतानन्दादिगुणान् एत इति परामृश्यात्रात्मगुणे एकीभवन्ती-त्युक्तत्वात् । प्रकृष्टानन्दरूपत्वात्प्राण इत्युक्त्या प्राणपदेनानन्दलाभात् प्रेति निर्दोषत्वलाभात् प्राणः प्रणयनादेष इत्युक्त्या स्वामित्वस्यापि प्राणपदेन लाभात् । मान इत्यादिना ज्ञानादेरिति भावः ।

(वाक्यार्थमुक्तावली)

स्पष्टमेतत्तत्वप्रदीपे । तदेवं सूत्रार्थमभिप्रेत्य विशेष इत्युक्तसिद्धान्तन्यायं व्यञ्जयन् व्याख्याति ॥ **भवेदेतद्यदीत्यादिना** ॥ स्वामित्वमात्रानभिधायकत्व इति । आदेयमुपादेयम् । आनन्दं माति अनुभवतीत्यात्मा । आदेयमुपादेयमेवात्ति न तु दोषानिति निर्दोषत्वाच्चात्मा । आततत्वात् कालतो देशतश्च व्याप्तत्वान्नित्यत्वाच्चात्मेति श्रुत्यर्थः ।

## तत्त्वसुबोधिनी

**आनन्दादिनियतिसमर्थनादिति** ॥ यदि आत्मशब्दाच्चेति पूर्वसूत्रे आत्मेत्येवेत्यवधारणस्यान्ययोगव्यवच्छेदकत्वमंगीकृत्य तच्छिरस्थात्मशब्दस्यानुपसंहारे प्रमाणत्वमङ्गीक्रियते तर्हि आत्मत्वमेव उपास्यं न तु आनन्दादयश्चत्वारोऽपीत्याक्षेपोत्थानादनन्तरसङ्गतिरिति भावः ॥ **अन्यथेति** ॥ आनन्दादिनियतिसमर्थनाभावे आनन्दादयः प्रधानस्येत्युक्तानुपपत्तिः स्यादित्यर्थः ॥ **उभयथोक्तिरिति** ॥ **आनन्दादयः प्रधानस्येति** ॥ अत्मशब्दाच्चेत्युभयथोक्तिरित्यर्थः । आत्मेत्येवेति अवधारणस्यान्ययोगव्यवच्छेदकत्वादिति भावः । किं च आनन्दादित्रयलोपेन आत्मत्वमेव उपासितव्यं तदुपासनस्य सुशक्यत्वेन शीघ्रं आपरोक्ष्यसिद्धिहेतुभूतगुणस्यात्मत्वस्य लाभसम्भवादित्याह ॥ **आनन्दादीति** ॥ तर्हि आत्मेत्येवेति सावधारणश्रुतिविरोधः इत्याशयेन हेतुं पृच्छति ॥ **कुत इति** ॥ उत्तरमाह ॥ **भवेदेतदिति** ॥ सत्यज्ञानादिवाक्यवदेवेति । यथा एतद्वाक्यगतसत्यानन्दादिपदानां सत्यत्वाद्यभिधायकत्वं तथात्मशब्दस्याप्यानन्दाद्यभिधायकत्वमिति भावः ।

## वाक्यार्थविवरणम्

**उक्तेति** ॥ आनन्दादय इत्युक्तचतुर्गुणोपासनेत्यर्थः ॥ **श्रुत्यादीति** ॥ अन्ययोगव्यवच्छेदकावधारणयुक्ताया आत्मैवेति श्रुतेरित्यर्थः । आदिपदेनाऽऽश्वपरोक्षसिद्धिलक्षणगुणलाभरूपा युक्तिः ॥ **सत्यज्ञानादिवाक्यवदिति** ॥ यथा सत्यज्ञानादिवाक्ये आनन्दादेर्गृहीतिः विज्ञानादिवाक्ये सत्यत्वानन्तत्वादेर्गृहीतिस्तद्वदित्यर्थः । भाष्ये 'आनन्दानुभवात्' आनन्दरूपत्वादनुभवरूपत्वाच्चेत्यर्थः ।

## वाक्यार्थमञ्जरी

**उक्तेति** ॥ आनन्दादय इत्युक्तेत्यर्थः ॥ **उभयथोक्तिरिति** ॥ आनन्दादयः प्रधानस्येत्यात्मशब्दाच्चेत्युभयथोक्तिरित्यर्थः ।

ॐ आत्मगृहीतिरितरवदुत्तरात् ॐ ॥ आत्मशब्देनेतरगुणानां गृहीतिर्ग्रहणमस्ति कथमितरवत् यथा सत्यं ज्ञानमिति वाक्यगतसत्यादिपदानां सत्यत्वाद्यभिधायित्वं तथाऽस्यापि सच्चिदानन्दाभिधायकत्वं कुतः उत्तरात् तथाभिधायकादत्र ह्येत इत्युत्तरवाक्यादित्यर्थः ।

**॥ इति आत्मगृहीत्यधिकरणम् ॥ ९ ॥**

## १०. अन्वयाधिकरणम्

### ॥ ॐ अन्वयादिति चेत्स्यादवधारणात् ॐ ॥ १८ ॥

सर्वगुणानामन्वय आत्मशब्दे भवति । 'आप्तव्याप्तेरात्मशब्दः परमस्य प्रयुज्यत' इति वचनादिति चेत्सत्यम् । स्याच्चैवम् । आत्मेत्येव (बृ.उ.३-४-७) इत्यवधारणात् । अन्यथा सर्वोपसंहारवचनविरोधात् ।

### तत्त्वप्रदीपिका

तर्हि तावन्त एवेति नियन्तुं न शक्यते । सर्वगुणानामप्यात्मशब्दे वाच्यत्वेनान्वयात् । अतः कथमनुपसंहारप्रमाणत्वमिति चेत्सत्यम् । न तत्रैव प्रमाणम् । सर्वोपसंहारेऽपि प्रमाणमेव । आत्मेत्येवेति सर्वगुणपूर्ण इत्येवेत्यवधारणात् । एवमर्थानङ्गीकारे सर्वोपसंहारवचनविरोधात् ।

### तत्त्वप्रकाशिका

अत्र भगवद्दर्शनसाधनात्मशब्दोक्तगुणोपासनस्य सर्वैः कर्तव्यत्वसाधनादस्ति शास्त्रादिसङ्गतिः । अन्यथानुपसंहारप्रमाणौक्तिर्व्याहन्यत इति साधनीयम् । प्रकृतात्मशब्दोक्तगुणा एवात्र विषयः । सर्वोपास्या न वेति सन्देहः । गुणद्वैविध्यदर्शनं सन्देहबीजम् । पूर्वपक्षस्य सूत्र एवोक्तत्वात्तदुपन्यस्य पूर्वपक्षांशं तावद्व्याचष्टे ॥ **अन्वयादिति** ॥ आत्मशब्दोक्तगुणा न सर्वोपास्याः । आप्तव्याप्तेरिति तस्य सर्वगुणाभिधायकत्वोक्तेः । तथा चायं श्रुतचतुर्गुणोपासनस्य पुंसो विभ्रमकरो भवति । न त्वेवमुपासनं कार्यमिति निश्चायकः । न ह्युभयथा श्रुतवतोऽन्यतरस्मिन्नर्थे निश्चयो भवति । न च वाच्यं तस्य सर्वगुणाभिधायकत्वेऽपि स्वयोग्यं तदुक्तमुपास्यमिति । तथा सत्यवधारणविरोधात् । अत आत्मशब्दोक्तगुणानां सर्वोपास्यत्वाभावादनुपसंहारप्रमाणत्वानुपपत्तिरिति भावः । सिद्धान्तांशं व्याचष्टे ॥ **सत्यमिति** ॥ कथं परेणोक्तमभ्युपगम्यत इत्यत आह ॥ **स्यादिति** ॥ सर्वगुणाभिधायकत्वमात्मशब्दस्य यत्परेणोक्तं तत्तथा स्यादेवातो नाभ्युपगमो दोषाय । इयांस्तु विशेषः । सर्वगुणांश्चात्मशब्दो वदन् ब्रह्मादीन्प्रत्येव वदति नान्यान्प्रति । तथानुभवात् । अतस्तस्याविभ्रमकरत्वात्तदुक्तोपासनं सर्वेषां युक्तमिति भावः ।

(तत्त्वप्रकाशिका)

ननु ब्रह्मादीनामात्मशब्दः सर्वगुणान्ज्ञापयतीति कुतोऽन्यान्प्रतीव ब्रह्मादीन्प्रत्यल्पगुणाभिधायकः किं न स्यादित्यत आह ॥ **आत्मेति** ॥ अवधारणेऽपि किमायातमित्यत आह **अन्यथेति** ॥ अन्ययोगव्यवच्छेदकावधारणयुक्तात्मशब्दो ब्रह्मादीनधिकरोति ततस्तैरपि तदुक्तमेवोपास्यम् । तथा च यद्यसौ न तान्प्रति सर्वगुणानभिधत्ते तर्हि 'सर्वैर्गुणैरुपास्योऽसौ ब्रह्मणा परमेश्वरः' । इत्यादि-सर्वोपसंहारवचनविरोधः स्यात् । अतोऽसौ तेषां सर्वगुणाभिधायक इति भावः । तस्मादात्म-शब्दोक्तगुणोपासनं सर्वेषामस्तीत्युक्तमुपपन्नमिति सिद्धम् ।

## गुर्वर्थदीपिका

अन्यथाऽनुपसंहारप्रमाणत्वोक्तिरित्यस्य चतुर्मुखेतरेषामपि स्वयोग्यगुणानुपसंहारेऽप्यस्या एव श्रुतेः प्रमाणत्वोक्तिरित्यर्थः । आप्तव्याप्तेरित्यत्र आप्तव्यानामाप्तुं योग्यानां सर्वगुणानामाप्तेरित्यर्थः । प्रागात्मशब्देनैव सर्वगुणानामुक्तत्वं सिद्धवत्कृत्यावधारणस्य व्यवच्छेद्यान्तराभावादयोगव्यवच्छेद-परतोक्ता । इदानीम्'आत्मेत्येवोपासीत' न त्वात्मत्वं विहायेत्येवमाकारेणान्ययोगव्यवच्छेद-मङ्गीकृत्य ब्रह्माद्युपास्यसकलगुणानामप्यात्मशब्दवाच्यरूपमात्मत्वं बलादानयति । ब्रह्माद्युपास्यैक-गुणस्याप्यात्मत्वाभावे न त्वात्मत्वं विहायेत्यभिलषितान्ययोगव्यवच्छेदस्य भङ्गप्रसङ्गात् । अतो ब्रह्माद्युपास्याः सर्वेऽपि गुणाः आत्मशब्देनैव बोधनीया इति भावेनाह भगवान्भाष्यकारः 'आत्मेत्येवेत्यवधारणात्' इति । एवं च टीकोक्तान्ययोगव्यवच्छेदोऽपि आत्मत्वरहितगुण-योगव्यवच्छेद इति ज्ञेयम् ।

## भावबोधः

**आत्मशब्दोक्तगुणोपासनस्येति** ॥ यद्यात्मशब्देन आनन्दादेर्गृहीतेस्तेषां सर्वोपास्यत्वं तर्हि सर्वेषामपि गुणानां प्रतिपाद्यतया आत्मशब्देनान्वयात् सर्वेषामपि सर्वगुणोपासकत्वं स्यादिति पूर्वपक्षोत्थानादनन्तरसङ्गतिरिति भावः ॥ **सर्वोपास्या इति** ॥ अत्राऽऽत्मशब्दोक्ता गुणाः सर्वोपास्या न भवन्त्युत भवन्तीति चिन्ता । तदर्थं किमात्मशब्दो ब्रह्मादिसर्वाधिकारिणः प्रति सर्वगुणाभिधायक उत यो यावद्गुणोपास्तियोग्यस्तस्य तावद्गुणाभिधायक इति । आत्मशब्दो विभ्रमकर इति न्यायविवरणं सर्वगुणानामन्वय आत्मशब्दे भवतीति भाष्योक्तहेतोः साध्य-

(भावबोधः)

प्रतिपादकत्वेन व्याचष्टे– **तथा चेति ॥ न ह्युभयथेति ॥** 'सत्यो ज्ञानः परमानन्दरूप आत्मेत्येवं नित्यदोपासनं स्यात् । नान्यत् किञ्चित् समुपासीत धीरः' इति आत्मेत्येवेत्यन्ययोगव्यगच्छेद-परावधारणयुक्तात्मशब्दं च श्रुतवत इत्यर्थः । अवधारणोपपत्तेरिति सिद्धान्तयन्न्यायविवरणानु-रोधादाह– **न च वाच्यं तस्येति ॥ अवधारणविरोधादिति ॥** आत्मशब्दोक्तसर्वगुणानुपासने आत्मशब्दोक्तं उपास्यमेवेत्ययोगव्यवच्छेदपरावधारणविरोधः स्यादित्यर्थः ।

नन्वेवं तर्हि सर्वेषामपि सर्वोपास्तिः स्यादित्युक्तमित्याशङ्कापरिहारत्वेन गुणाधिका-नामधिकारिणां भगवद्गुणानधिकान् प्रकाशयतीत्यवधारणोपपत्तेरिति न्यायविवरणं योजयति । इयांस्त्वित्यादिना । अनेन गुणाधिकानामिति सावधारणम् । तथा च नान्येषां सर्वगुणान् प्रकाशयति । किं तु तत्तदुपासनयोग्यानेवेति लभ्यते । तथा च श्रुतचतुर्गुणोपासनं प्रति गुणचतुष्टयमेवात्मशब्दः प्रकाशयति; नाधिकम् । एवं सति अयोगव्यवच्छेदपरावधारणमप्युपपद्यत इति न्यायविवरणमप्युक्ततात्पर्यम् । तथा च सूत्रे 'स्यात्' इत्यतः परं ब्रह्मादीन्प्रत्येव नान्यान्प्रतीति शेषः । तत्र नान्यान्प्रतीत्यत्र हेतुतयाऽवधारणादित्येतदयोगव्यवच्छेदपरावधारणादिति न्यायविवरणेन व्याख्यातमिति ज्ञातव्यम् ।

## भावदीपः

**सर्वैः कर्तव्यत्वसाधनादिति ॥** फलितोक्तिरियम् । पूर्वोक्तदिशा आनन्दादिचतुर्णामिव सर्वयोग्यसर्वगुणानामप्यात्मशब्दोक्ततयाऽवधारणेन च सर्वगुणयुक्तत्वेनैवोपासनाप्राप्तौ तस्य सर्वायोग्यतया ब्रह्मादीतराकर्तव्यत्वशङ्कायां तस्योत्तमान् प्रत्येव सर्वगुणाभिधायकताकथनेन सर्वैः कर्तव्यत्वसाधनादित्यर्थः । एतेनात्मशब्देन चतुर्गुणानामुक्तेरानन्दादिचतुष्टयोपासनसमर्थनमयुक्तम् । सर्वगुणानामप्यात्मशब्दोक्ततयाऽवधारणेन तेषामेवोपास्यता प्राप्तेरिति शङ्कनात्पूर्वसङ्गतिरपि सूचिता ॥ **अनुपसंहारेति ॥** सर्वगुणोपसंहारभिन्नाल्पगुणोपसंहाररूपानुपसंहारे आत्मगृहीतिरित्यत्रात्म-शब्दाच्चेत्यत्र चेति वा आत्मशब्दाच्चेत्यत्रैव वा प्रमाणतयाऽऽत्मशब्दोक्तिर्व्याहन्येतेत्यर्थः ॥ **गुणद्वैविध्येति ॥** आनन्दादेः सर्वोपास्यत्वस्य प्रियशिरस्त्वादेरतादृक्त्वस्य दर्शनमित्यर्थः । साध्यमध्याहृत्य तत्र भाष्यं हेतुतया व्याचष्टे ॥ **आत्मेत्यादिना ॥** एतेन पूर्वस्मादात्मपदमनुवर्त्य आत्मशब्दे सर्वगुणानामन्वयादिति सूत्रस्य, भाष्यस्य तु इति वचनात्सर्वगुणानामन्वय आत्मशब्दे

(भावदीपः)

भवति । **तस्मात्तदुक्तगुणा न सर्वोपास्या** इति योजना सूचिता । व्याप्तिशब्दार्थश्च देशकालगुणापरिच्छेद इति भावः । यद्वा आप्तव्यानामाप्तुं योग्यानां गुणानामाप्तेः प्राप्तत्वादित्यर्थः । हेतोरसिद्धिनिरासायोक्तेरित्युक्तम् ।

नन्वथाप्यप्रयोजको हेतुः । आत्मशब्दस्य सर्वगुणाभिधायकत्वेऽपि तदुक्तगुणानां सर्वोपास्यत्वसम्भवादित्यतो हेतोरप्रयोजकत्वशङ्काव्युदासायाऽऽत्मशब्दो विभ्रमकर इत्यन्यत्रोक्ता-निर्णायकत्वहेतुमाह ॥ **तथा चेति** ॥ सर्वगुणाभिधायकत्वे सतीत्यर्थः । अयं आत्मशब्द इत्यर्थः । श्रुतेति बहुव्रीहिः । पूर्वोक्तदिशा अत्र ह्येते सर्व इति वाक्यशेषबलेनात्मेत्येवोपासीतेत्यात्मशब्देनैव चतुर्गुणोपासनं श्रावितमिति तेनैव श्रुतचतुर्गुणोपासनस्य पुरुषस्य ततोऽधिकं सर्वगुणानप्यात्म-शब्देनैव श्रुतवतः पुंसः किमात्मपदेनोक्ताश्चत्वार एवोपास्या उत तेनैवोक्तास्ततोऽधिकाः सर्वेऽपीति संदेहो भवति । द्वयोरप्यात्मपदेनोक्तत्वात् । यथा लोके श्वेतो धावतीत्युपासितव्यमित्युक्ते श्वेतः शुक्लो गच्छतीति श्वा इतो गच्छतीत्यनेकार्थश्रावयद्वाक्यं संदेहकरमेव न तु निर्णायकं तथैवेत्यर्थः । विभ्रमकरत्वं व्यनक्ति ॥ **न हीति** ॥ योग्यताविशेषेण निर्णयोपपत्तेरिति प्राप्ते-श्चेत्यत्रोक्तदिशा परिहृतमेतदिति भावेनाशङ्क्य सिद्धान्तहेतुसूचितविशेषशङ्कामाह ॥ **न च वाच्यमिति** ॥ **अवधारणेति** ॥ तेन सर्वगुणाभिधायकतया विभ्रमकरत्वादित्यर्थः । ब्रह्मा-द्युपास्यत्वेऽपि तदितरानुपास्यत्वात्सर्वोपास्यत्वाभावादित्युक्तम् । भाष्ये चशब्दोऽवधारण इत्युपेत्याह ॥ **तत्तथा स्यादेवेति** ॥ कथं तर्हि विभ्रमकरत्वनिरास इत्यतो गुणाधिकानामधिकारिणां भगवद्गुणानधिकान्प्रकाशयतीत्यन्यत्रोक्तं समाधिमाह ॥ **इयांस्त्विति** ॥ फलोक्त्या सूत्रार्थमुपसंहरति ॥ **तस्मादिति** ॥ अवधारणाऽन्यथानुपपत्त्याऽऽत्मशब्दस्य ब्रह्मादीन्प्रति सर्वगुणवाचित्वेऽपि तत्तदधिकारिणं प्रति तत्तद्योग्यगुणाभिधायकतया विभ्रमकरत्वाभावादित्यर्थः । इति हेतोरुक्त-मनुपसंहारप्रमाणमुपपन्नमित्यर्थः ।

## अभिनवचन्द्रिका

**आत्मशब्दोक्तगुणोपासनस्येति** ॥ आत्मशब्दस्य सर्वानुपासकान् प्रति तत्तद्योग्य-गुणाभिधायकत्वसमर्थनादिति भावः । **अन्यथेति** ॥ सर्वान् प्रति सर्वगुणाभिधायकत्व इत्यर्थः ॥ **प्रकृतात्मशब्दोक्तेति** ॥ अत्र बुध्या विवेकेन सर्वोपास्या गुणा विषयः । आत्मशब्दोक्ता न वेति

(भावबोधः)

प्रतिपादकत्वेन व्याचष्टे– **तथा चेति ॥ न ह्युभयथेति ॥** 'सत्यो ज्ञानः परमानन्दरूप आत्मेत्येवं नित्यदोपासनं स्यात् । नान्यत् किञ्चित् समुपासीत धीरः' इति आत्मेत्येवेत्यन्ययोगव्यवच्छेद-परावधारणयुक्तात्मशब्दं च श्रुतवत इत्यर्थः । अवधारणोपपत्तेरिति सिद्धान्तयन्न्यायविवरणानु-रोधादाह– **न च वाच्यं तस्येति ॥ अवधारणविरोधादिति ॥** आत्मशब्दोक्तसर्वगुणानुपासने आत्मशब्दोक्तं उपास्यमेवेत्ययोगव्यवच्छेदपरावधारणविरोधः स्यादित्यर्थः ।

नन्वेवं तर्हि सर्वेषामपि सर्वोपास्तिः स्यादित्युक्तमित्याशङ्कापरिहारत्वेन गुणाधिका-नामधिकारिणां भगवद्गुणानधिकान् प्रकाशयतीत्यवधारणोपपत्तेरिति न्यायविवरणं योजयति । इयांस्त्वित्यादिना । अनेन गुणाधिकानामिति सावधारणम् । तथा च नान्येषां सर्वगुणान् प्रकाशयति । किं तु तत्तदुपासनयोग्यानेवेति लभ्यते । तथा च श्रुतचतुर्गुणोपासनं प्रति गुणचतुष्टयमेवात्मशब्दः प्रकाशयति; नाधिकम् । एवं सति अयोगव्यवच्छेदपरावधारणमप्युपपद्यत इति न्यायविवरणमप्युक्ततात्पर्यम् । तथा च सूत्रे 'स्यात्' इत्यतः परं ब्रह्मादीन्प्रत्येव नान्यान्प्रतीति शेषः । तत्र नान्यान्प्रतीत्यत्र हेतुतयाऽवधारणादित्येतदयोगव्यवच्छेदपरावधारणादिति न्यायविवरणेन व्याख्यातमिति ज्ञातव्यम् ।

## भावदीपः

**सर्वैः कर्तव्यत्वसाधनादिति ॥** फलितोक्तिरियम् । पूर्वोक्तदिशा आनन्दादिचतुर्णामिव सर्वयोग्यसर्वगुणानामप्यात्मशब्दोक्ततयाऽवधारणेन च सर्वगुणयुक्तत्वेनैवोपासनाप्राप्तौ तस्य सर्वायोग्यतया ब्रह्मादीतराकर्तव्यत्वशङ्कायां तस्योत्तमान् प्रत्येव सर्वगुणाभिधायकताकथनेन सर्वैः कर्तव्यत्वसाधनादित्यर्थः । एतेनात्मशब्देन चतुर्गुणानामुक्तेरानन्दादिचतुष्टयोपासनसमर्थनमयुक्तम् । सर्वगुणानामप्यात्मशब्दोक्ततयाऽवधारणेन तेषामेवोपास्यता प्राप्तेरिति शङ्कनात्पूर्वसङ्गतिरपि सूचिता ॥ **अनुपसंहारेति ॥** सर्वगुणोपसंहारभिन्नाल्पगुणोपसंहाररूपानुपसंहारे आत्मगृहीतिरित्यत्रात्म-शब्दाच्चेत्यत्र चेति वा आत्मशब्दाच्चेत्यत्रैव वा प्रमाणतयाऽऽत्मशब्दोक्तिर्व्याहृन्येतेत्यर्थः ॥ **गुणद्वैविध्येति ॥** आनन्दादेः सर्वोपास्यत्वस्य प्रियशिरस्त्वादेरताद्दक्त्वस्य दर्शनमित्यर्थः । साध्यमध्याहृत्य तत्र भाष्यं हेतुतया व्याचष्टे ॥ **आत्मेत्यादिना ॥** एतेन पूर्वस्मादात्मपदमनुवर्त्य आत्मशब्दे सर्वगुणानामन्वयादिति सूत्रस्य, भाष्यस्य तु इति वचनात्सर्वगुणानामन्वय आत्मशब्दे

(भावदीपः)
भवति । **तस्मात्तदुक्तगुणा न सर्वोपास्या** इति योजना सूचिता । व्याप्तिशब्दार्थश्च देशकालगुणापरिच्छेद इति भावः । यद्वा आप्तव्यानामाप्तुं योग्यानां गुणानामाप्तेः प्राप्तत्वादित्यर्थः । हेतोरसिद्धिनिरासायोक्तेरित्युक्तम् ।

नन्वथाप्यप्रयोजको हेतुः । आत्मशब्दस्य सर्वगुणाभिधायकत्वेऽपि तदुक्तगुणानां सर्वोपास्यत्वसम्भवादित्यतो हेतोरप्रयोजकत्वशङ्काव्युदासायाऽऽत्मशब्दो विभ्रमकर इत्यन्यत्रोक्ता-निर्णायकत्वहेतुमाह ॥ **तथा चेति** ॥ सर्वगुणाभिधायकत्वे सतीत्यर्थः । अयं आत्मशब्द इत्यर्थः । श्रुतेति बहुव्रीहिः । पूर्वोक्तदिशा अत्र ह्येते सर्व इति वाक्यशेषबलेनात्मेत्येवोपासीतेत्यात्मशब्देनैव चतुर्गुणोपासनं श्रावितमिति तेनैव श्रुतचतुर्गुणोपासनस्य पुरुषस्य ततोऽधिकं सर्वगुणानप्यात्म-शब्देनैव श्रुतवतः पुंसः किमात्मपदेनोक्ताश्चत्वार एवोपास्या उत तेनैवोक्तास्ततोऽधिकाः सर्वेऽपीति संदेहो भवति । द्वयोरप्यात्मपदेनोक्तत्वात् । यथा लोके श्वेतो धावतीत्युपासितव्यमित्युक्ते श्वेतः शुक्लो गच्छतीति श्वा इतो गच्छतीत्यनेकार्थश्रावयद्वाक्यं संदेहकरमेव न तु निर्णायकं तथैवेत्यर्थः । विभ्रमकरत्वं व्यनक्ति ॥ **न हीति** ॥ योग्यताविशेषेण निर्णयोपपत्तेरिति प्राप्ते-श्चेत्यत्रोक्तदिशा परिहृतमेतदिति भावेनाशङ्क्य सिद्धान्तहेतुसूचितविशेषशङ्कामाह ॥ **न च वाच्यमिति** ॥ **अवधारणेति** ॥ तेन सर्वगुणाभिधायकतया विभ्रमकरत्वादित्यर्थः । ब्रह्मा-द्युपास्यत्वेऽपि तदितरानुपास्यत्वात्सर्वोपास्यत्वाभावादित्युक्तम् । भाष्ये चशब्दोऽवधारण इत्युपेत्याह ॥ **तत्तथा स्यादेवेति** ॥ कथं तर्हि विभ्रमकरत्वनिरास इत्यतो गुणाधिकानामधिकारिणां भगवद्गुणानधिकान्प्रकाशयतीत्यन्यत्रोक्तं समाधिमाह ॥ **इयांस्त्विति** ॥ फलोक्त्या सूत्रार्थमुपसंहरति ॥ **तस्मादिति** ॥ अवधारणाऽन्यथानुपपत्त्याऽऽत्मशब्दस्य ब्रह्मादीन्प्रति सर्वगुणवाचित्वेऽपि तत्तदधिकारिणं प्रति तत्तद्योग्यगुणाभिधायकतया विभ्रमकरत्वाभावादित्यर्थः । इति हेतोरुक्त-मनुपसंहारप्रमाणमुपपन्नमित्यर्थः ।

## अभिनवचन्द्रिका

**आत्मशब्दोक्तगुणोपासनस्येति** ॥ आत्मशब्दस्य सर्वानुपासकान् प्रति तत्तद्योग्य-गुणाभिधायकत्वसमर्थनादिति भावः । **अन्यथेति** ॥ सर्वान् प्रति सर्वगुणाभिधायकत्व इत्यर्थः ॥ **प्रकृतात्मशब्दोक्तेति** ॥ अत्र बुध्या विवेकेन सर्वोपास्या गुणा विषयः । आत्मशब्दोक्ता न वेति

(अभिनवचन्द्रिका)

सन्देह इति विषयसन्देहौ द्रष्टव्यौ ॥ **गुणद्वैविध्यदर्शनमिति** ॥ आनन्दादिगुणेषु केनचिच्छब्दे-नोक्तत्वं केनचिच्छब्देनानुक्तत्वं च दृश्यते तत्सन्देहबीजमित्यर्थः । एतेनात्मशब्दोक्तानां गुणानां सन्देहधर्मित्वेन तदन्यत्र सर्वोपास्यत्वस्यादर्शनात् गुणद्वैविध्यदर्शनं सन्देहबीजमित्ययुक्तमिति परास्तम् ॥ **आत्मशब्दोक्तेति** ॥ सर्वोपास्या गुणाः घटो घटशब्देनेव नासाधारण्येनात्मशब्दोक्ता इति भावः ॥ **आप्तव्याप्तेरिति** ॥ परमात्मना आत्मशब्दार्थं सर्वगुणानामाप्तत्वात् परमात्मनो वोधजननाय 'आत्मशब्दः प्रयुज्यत' इत्युक्त्या सर्वगुणानां आत्मशब्दप्रवृत्तिनिमित्तत्वं लभ्यत इति भावः ॥ **श्रुतचतुर्गुणोपासनस्येति** ॥ 'सच्चिदानन्द आत्मेति ब्रह्मोपासा विनिश्चिता' इति प्रमाणेन श्रुत चतुर्गुणोपासनस्य पुंसो विभ्रमकरो भवति विभ्रंशकरो भवतीत्यर्थः ॥ **न ह्युभयथेति** ॥ 'सच्चिदानन्द आत्मेति' चतुर्गुणोपासनं, 'आत्मेत्येवोपासीत' इति सर्वगुणोपासनं च, श्रुतवत इत्यर्थः ॥ **अवधारणेऽपीति** ॥ अनुपसंहारप्रमाणत्वाभावेनाऽवधारणस्य वैयर्थ्याख्यविरोधः स्यादित्यर्थः ॥ **अत इति** ॥ सर्वोपास्यानां गुणानां आत्मशब्दोक्तत्वाभावात् 'आत्मेत्येवोपासीत' इत्यस्याऽनुपसंहारप्रमाणत्वमनुपपन्नमिति भावः ।

पूर्वपक्षस्तु– सर्वोपास्या गुणा नाऽसाधारण्येनाऽऽत्मशब्दोक्ताः । तस्य सर्वगुणाभिधायकत्वात् । ततश्च नास्याऽनुपसंहारप्रमाणत्वमिति ।

सिद्धान्तस्तु– सत्यमात्मशब्दः सर्वगुणाभिधायकः तथापि न सर्वान् प्रति, किंनाम तत्तद्योग्य-तानुसारेण तांस्तान्प्रति गुणाभिधायकः । ततश्चात्मशब्देन यस्य यावन्तो गुणाः प्रतिभासन्ते तेन तावन्तो गुणा उपस्या इति आत्मशब्दोक्तगुणानां सर्वोपास्यत्वादुक्तं युक्तमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

यद्यानन्दादिगुणानामात्मशब्देन गृहीतिस्तर्हि तावन्त एवेति नियन्तुं शक्यते । सर्वगुणा-नामप्यात्मशब्देन वाच्यत्वेऽन्वयादिति तत्त्वप्रदीपरीत्या पूर्वाधिकरणसिद्धार्थावष्टम्भेन पूर्वपक्षोत्था-नादनन्तरसङ्गतिः ॥ **सर्वैरिति** ॥ ब्रह्मादिभिरुत्तमैरिव देवादिभिर्मध्यमैरधमैश्चेत्यर्थः ॥ **अन्यथेति** ॥ आत्मशब्दोक्तगुणोपासनस्य सर्वैरकर्तव्यत्वे उत्तमैरेव कर्तव्यत्वे च मध्यमाधमान् प्रति अन्ययोगव्यवच्छेदकावधारणयुक्तात्मशब्दः गुणान्तरव्यावृत्तिपूर्वमात्मत्वमात्रोपासनं विदधत्

**(वाक्यार्थमुक्तावली)**

अनुपसंहारे प्रमाणमित्यात्मशब्दाच्चेति व्याहन्येत । तदुक्तगुणोपासनस्यैव कर्तव्यत्वे तान्प्रत्यात्मशब्दोक्तगुणातिरिक्तगुणानुपसंहारप्रमापकत्वोक्त्यनुपपत्तेरिति भावः ॥ **सर्वोपास्या इति** ॥ आत्मशब्दोक्तगुणाः सर्वोपास्या न भवन्त्युत भवन्तीति चिन्ता । तदर्थमात्मशब्दः सर्वाधिकारिणः प्रति सर्वगुणाभिधायक उतोत्तमान्प्रत्येवेति ॥ **गुणद्वैविध्येति** ॥ **प्रियशिरस्त्वादीनामानन्दादीनां चेति** ॥ गुणद्वैविध्यदर्शनमित्यर्थः ॥ **सूत्रे प्रतिज्ञांशमध्याहरति** ॥ **आत्मशब्दोक्त इति** ॥ उत्तमैरेवोपास्या न सर्वैरित्यर्थः । अन्वयादित्यत्र आत्मशब्दाच्चेत्यत आत्मशब्द इति सप्तम्यन्ततयानुवर्तते । सर्वगुणानामिति योग्यतयान्वेति । तथा चात्मशब्दे गुणानामन्वयात् । तदपि कुतः? अन्वयात् । आप्तव्याप्तेरित्यन्वयवचनादिति भावेन हेत्वंशं व्याचष्टे ॥ **आप्तव्याप्तेरिति** ॥ यदाप्तव्यं कल्याणगुणजातं तस्याप्तेः प्राप्तेरित्यर्थः ।

नन्वात्मशब्दस्य सर्वगुणवाचकत्वेऽपि तदुक्तोपासनं किं न स्यादित्यतः नायमन्वयादित्युक्तो हेतुः साक्षात्साध्यसाधकः किन्तु आत्मशब्दोक्तगुणानां सर्वैरुपासितुमशक्यत्वेऽपि भ्रमाख्यो न्यायो हेतुः तदुपपादकतया अन्वयादिति सौत्रो हेतुरिति भावेनाह ॥ **तथा चेति** ॥ तथा चात्मशब्दस्य सर्वगुणाभिधायकत्वादयमात्मशब्दः श्रुतचतुर्गुणोपासकस्य 'सत्यो ज्ञानः परमानन्दरूप आत्मेत्येवं नित्यदोपासनं स्यात् । नान्यत्किञ्चित्समुपासीत धीरः' इति श्रुतचतुर्गुणोपासनस्य पुंसां विभ्रमकरो भवति । संशयहेतुरिति यावत् । तदेवोपपादयति **न हीति** ॥ शब्दात् सर्वगुणान् सत्यो ज्ञान इति चतुर्गुणांश्चोपासनार्थं श्रुतवत इत्यर्थः ॥ **स्वयोग्यमिति** ॥ सत्यो जीव इत्युक्तरीत्या स्वयोग्यं आत्मगृहीतिरित्युक्तरीत्या तदुक्तमुपास्यं नातोऽधिकमिति निश्चयो भवतीति न वाच्यमित्यर्थः ॥ **अवधारणेति** ॥ आत्मशब्दोक्तसर्वगुणानुपासने आत्मपदेन यावत्प्रतीतं तावदुपास्यमेवेत्ययोगव्यवच्छेदपरावधारणविरोधादित्यर्थः ।

ननु यद्युपसंहार एवावधारणस्यायोगव्यवच्छेदकत्वमुक्तं तथापि न तद्विरोधः । आत्मशब्दाच्चेति सूत्रटीकायां चतुर्मुखादीन्प्रत्ययोगव्यवच्छेदकत्वं अन्यान्प्रत्यन्ययोगव्यवच्छेदकत्वमिति व्यवस्थापितत्वादिति चेन्न । गुणाधिकानामधिकारिणां भगवद्गुणानधिकान् प्रदर्शयतीति अवधारणोपपत्तेः इत्येतदधिकरणन्यायविवरणे सिद्धान्तेऽवधारणस्याधिकारिभेदेनायोगव्यवच्छेदकत्वस्योच्यमानत्वेनागामिनं एतदभिप्रेत्य शिष्यहिताय प्राक्तनटीकायां समाहितत्वेऽप्येतदधिकरणे पुनराशङ्कोपपत्तेः

(अभिनवचन्द्रिका)

सन्देह इति विषयसन्देहौ द्रष्टव्यौ ॥ **गुणद्वैविध्यदर्शनमिति** ॥ आनन्दादिगुणेषु केनचिच्छब्देनोक्तत्वं केनचिच्छब्देनानुक्तत्वं च दृश्यते तत्सन्देहबीजमित्यर्थः । एतेनात्मशब्दोक्तानां गुणानां सन्देहधर्मित्वेन तदन्यत्र सर्वोपास्यत्वस्यादर्शनात् गुणद्वैविध्यदर्शनं सन्देहबीजमित्ययुक्तमिति परास्तम् ॥ **आत्मशब्दोक्तेति** ॥ सर्वोपास्या गुणाः घटो घटशब्देनेव नासाधारण्येनात्मशब्दोक्ता इति भावः ॥ **आप्तव्याप्तेरिति** ॥ परमात्मना आत्मशब्दार्थं सर्वगुणानामाप्तत्वात् परमात्मनो बोधजननाय 'आत्मशब्दः प्रयुज्यत' इत्युक्त्या सर्वगुणानां आत्मशब्दप्रवृत्तिनिमित्तत्वं लभ्यत इति भावः ॥ **श्रुतचतुर्गुणोपासनस्येति** ॥ 'सच्चिदानन्द आत्मेति ब्रह्मोपासा विनिश्चिता' इति प्रमाणेन श्रुत चतुर्गुणोपासनस्य पुंसो विभ्रमकरो भवति विभ्रंशकरो भवतीत्यर्थः ॥ **न ह्युभयथेति** ॥ 'सच्चिदानन्द आत्मेति' चतुर्गुणोपासनं, 'आत्मेत्येवोपासीत' इति सर्वगुणोपासनं च, श्रुतवत इत्यर्थः ॥ **अवधारणेऽपीति** ॥ अनुपसंहारप्रमाणत्वाभावेनाऽवधारणस्य वैयर्थ्याख्यविरोधः स्यादित्यर्थः ॥ **अत इति** ॥ सर्वोपास्यानां गुणानां आत्मशब्दोक्तत्वाभावात् 'आत्मेत्येवोपासीत' इत्यस्याऽनुपसंहारप्रमाणत्वमनुपपन्नमिति भावः ।

पूर्वपक्षस्तु– सर्वोपास्या गुणा नाऽसाधारण्येनाऽऽत्मशब्दोक्ताः । तस्य सर्वगुणाभिधायकत्वात् । ततश्च नास्याऽनुपसंहारप्रमाणत्वमिति ।

सिद्धान्तस्तु– सत्यमात्मशब्दः सर्वगुणाभिधायकः तथापि न सर्वान् प्रति, किंनाम तत्तद्योग्यतानुसारेण तांस्तान्प्रति गुणाभिधायकः । ततश्चात्मशब्देन यस्य यावन्तो गुणाः प्रतिभासन्ते तेन तावन्तो गुणा उपस्या इति आत्मशब्दोक्तगुणानां सर्वोपास्यत्वादुक्तं युक्तमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

यद्यानन्दादिगुणानामात्मशब्देन गृहीतिस्तर्हि तावन्त एवेति नियन्तुं शक्यते । सर्वगुणानामप्यात्मशब्देन वाच्यत्वेऽन्वयादिति तत्त्वप्रदीपरीत्या पूर्वाधिकरणसिद्धार्थावष्टम्भेन पूर्वपक्षोत्थानादनन्तरसङ्गतिः ॥ **सर्वैरिति** ॥ ब्रह्मादिभिरुत्तमैरिव देवादिभिर्मध्यमैरधमैश्चेत्यर्थः ॥ **अन्यथेति** ॥ आत्मशब्दोक्तगुणोपासनस्य सर्वैरकर्तव्यत्वे उत्तमैरेव कर्तव्यत्वे च मध्यमाधमान् प्रति अन्ययोगव्यवच्छेदकावधारणयुक्तात्मशब्दः गुणान्तरव्यावृत्तिपूर्वमात्मत्वमात्रोपासनं विदधत्

(वाक्यार्थमुक्तावली)

अनुपसंहारे प्रमाणमित्यात्मशब्दाच्चेति व्याहन्येत । तदुक्तगुणोपासनस्यैव कर्तव्यत्वे तान्प्रत्यात्मशब्दोक्तगुणातिरिक्तगुणानुपसंहारप्रमापकत्वोक्त्यनुपपत्तेरिति भावः ॥ **सर्वोपास्या इति** ॥ आत्मशब्दोक्तगुणाः सर्वोपास्या न भवन्त्युत भवन्तीति चिन्ता । तदर्थमात्मशब्दः सर्वाधिकारिणः प्रति सर्वगुणाभिधायक उतोत्तमान्प्रत्येवेति ॥ **गुणद्वैविध्येति** ॥ **प्रियशिरस्त्वादीनामानन्दादीनां चेति** ॥ गुणद्वैविध्यदर्शनमित्यर्थः ॥ **सूत्रे प्रतिज्ञांशमध्याहरति** ॥ **आत्मशब्दोक्त इति** ॥ उत्तमैरेवोपास्या न सर्वैरित्यर्थः । अन्वयादित्यत्र आत्मशब्दाच्चेत्यत आत्मशब्द इति सप्तम्यन्ततयानुवर्तते । सर्वगुणानामिति योग्यतयान्वेति । तथा चात्मशब्दे गुणानामन्वयात् । तदपि कुतः? अन्वयात् । आप्तव्याप्तेरित्यन्वयवचनादिति भावेन हेत्वंशं व्याचष्टे ॥ **आप्तव्याप्तेरिति** ॥ यदाप्तव्यं कल्याणगुणजातं तस्याप्तेः प्राप्तेरित्यर्थः ।

नन्वात्मशब्दस्य सर्वगुणवाचकत्वेऽपि तदुक्तोपासनं किं न स्यादित्यतः नायमन्वयादित्युक्तो हेतुः साक्षात्साध्यसाधकः किन्तु आत्मशब्दोक्तगुणानां सर्वैरुपासितुमशक्यत्वेऽपि भ्रमाख्यो न्यायो हेतुः तदुपपादकतया अन्वयादिति सौत्रो हेतुरिति भावेनाह ॥ **तथा चेति** ॥ तथा चात्मशब्दस्य सर्वगुणाभिधायकत्वादयमात्मशब्दः श्रुतचतुर्गुणोपासकस्य 'सत्यो ज्ञानः परमानन्दरूप आत्मेत्येवं नित्यदोपासनं स्यात् । नान्यत्किञ्चित्समुपासीत धीरः' इति श्रुतचतुर्गुणोपासनस्य पुंसां विभ्रमकरो भवति । संशयहेतुरिति यावत् । तदेवोपपादयति **न हीति** ॥ शब्दात् सर्वगुणान् सत्यो ज्ञान इति चतुर्गुणांश्चोपासनार्थं श्रुतवत इत्यर्थः ॥ **स्वयोग्यमिति** ॥ सत्यो जीव इत्युक्तरीत्या स्वयोग्यं आत्मगृहीतिरित्युक्तरीत्या तदुक्तमुपास्यं नातोऽधिकमिति निश्चयो भवतीति न वाच्यमित्यर्थः ॥ **अवधारणेति** ॥ आत्मशब्दोक्तसर्वगुणानुपासने आत्मपदेन यावत्प्रतीतं तावदुपास्यमेवेत्ययोगव्यवच्छेदपरावधारणविरोधादित्यर्थः ।

ननु यद्युपसंहार एवावधारणस्यायोगव्यवच्छेदकत्वमुक्तं तथापि न तद्विरोधः । आत्मशब्दाच्चेति सूत्रटीकायां चतुर्मुखादीन्प्रत्ययोगव्यवच्छेदकत्वं अन्यान्प्रत्यन्ययोगव्यवच्छेदकत्वमिति व्यवस्थापितत्वादिति चेन्न । गुणाधिकानामधिकारिणां भगवद्गुणानधिकान् प्रदर्शयतीति अवधारणोपपत्तेः इत्येतदधिकरणन्यायविवरणे सिद्धान्तेऽवधारणस्याधिकारिभेदेनायोगव्यवच्छेदकत्वस्योच्यमानत्वेनागामिनं एतदभिप्रेत्य शिष्यहिताय प्राक्तनटीकायां समाहितत्वेऽप्येतदधिकरणे पुनराशङ्कोपपत्तेः

(वाक्यार्थमुक्तावली)

॥ **अत इति** ॥ आत्मशब्दस्य **सर्वगुणाभिधायकत्वादित्यर्थः** ॥ **अनुपसंहारेति** ॥ आत्मशब्दोक्त-गुणोपासनाप्रसक्तौ हि तान्प्रत्यनुपसंहारप्रमापकत्वं स्यादिति भावः । सूत्रे स्यादिति वर्तते । तत्राद्यस्य परेणोक्तमनुपसंहाराप्रमाणत्वं स्यात् । अङ्गीक्रियते तन्मात्रप्रमाणत्वाभावादिति भावेन सत्यमित्येतद्व्याचष्टे ॥ **सिद्धान्तांशमिति** ॥ उक्तं च तत्वप्रदीपे । सत्यं न तत्रैव **प्रमाणमितीति** ॥ **इत्यतश्चाहेति** ॥ इत्यतः । द्वितीयं स्यात्पदं व्याचष्ट इत्यर्थः । स्याच्चैवं एवमपि स्यात् । तत्र हेतुत्वेनोक्तं यत्सर्वगुणाभिधायकत्वमात्मशब्दस्य तदपि स्यादेव । अत उक्ताभ्युपगमो न दोषायेति भाष्यार्थमाह ॥ **सर्वेति** ॥ यद्वा सत्यमित्यस्य परेणोक्तमात्मशब्दस्य सर्वगुणाभिधायकत्वमङ्गीक्रियत इत्यर्थः ॥ **कथमिति** ॥ प्रमाणाभावादिति भावः ॥ **तत्तथा स्यादेवेति** ॥ प्रामाणिकत्वादिति भावः । अतः प्रमितत्वेन वस्तुनः सत्यत्वात् ।

नन्वात्मशब्दस्य सर्वगुणाभिधायकत्वे आत्मशब्दोक्तगुणानां सर्वेषां सर्वोपास्यत्वप्रसङ्ग इत्यतः सूत्रे भाष्ये च स्याच्चैवमित्यतःपरं ब्रह्मादीन् प्रत्येव नान्यान् प्रतीति शेषः । तथा चैवं सर्वगुणाभि-धायकत्वं ब्रह्मादीन् गुणाधिकान् प्रत्येव नान्यान् प्रति स्यात् । अतो विभ्रमकरत्वात् स्याच्चैवं तदुक्तोपासनं स्यात् । सर्वेषां युक्तमित्यर्थमभिप्रेत्य गुणाधिक्यमित्युक्तन्यायं भाष्यारूढं दर्शयति ॥ **इयानिति** ॥ आत्मशब्देन गुणाभिधानविषये इयांस्तु विशेष इत्यर्थः ॥ **तथानुभवादिति** ॥ यद्यप्यल्पकानामपि आत्मशब्दात् बहुगुणप्रतीतिरस्ति । तथाप्यात्मशब्देन गुणानामुपासनार्थं युगप-त्प्रतीत्यभावादात्मशब्देन गुणप्रतीतेः एतादृशा एव विवर्जितत्वाददोषः । वक्ष्यति चैतत् । अन्यथा सर्वोपसंहारेति भाष्ये आत्मशब्दस्यान्यान्प्रतीव ब्रह्मादीन् प्रत्यल्पगुणाभिधायकत्वे गुणैस्सर्वैरुपास्योऽसावित्यादि सर्वोपसंहार एव च न विरोध उच्यते । तन्न सम्भवति शब्द-स्वाभाव्यात् । आत्मशब्दस्याल्पगुणाभिधायकत्वेऽपि वेदाद्युक्तसर्वगुणोपसंहारोपपत्तेः । किञ्चाव-धारणादित्यस्य कथमनेनोपपादनमित्यत आह ॥ **अन्ययोगव्यवच्छेदकेति** ॥ अत्रैवं तावद्योज्यम् । आत्मशब्दोक्तसर्वगुणोपासाविधिः ब्रह्मादीनप्यधिकरोति । विधेः सर्वसाधारणत्वात् । ततस्तैरपि तदुक्तमेवोपास्यम् । तथा च यद्यसौ न तान् प्रति सर्वगुणानभिधत्ते तर्हि सर्वैर्गुणैरित्यादिसर्वोप-संहारवचनविरोध इति । नन्ववधारणस्य ब्रह्मादीन् प्रत्ययोगव्यवच्छेदकत्वात् आत्मेत्येवेत्यात्म-शब्दोक्ताल्पगुणपरित्यागेनोपासनाविधानेऽपि सर्वोपसंहारवचनविरोध इत्यत उक्तम् । अन्ययोग-

(वाक्यार्थमुक्तावली)

व्यवच्छेदकावधारणयुक्तेति । अन्यान् प्रतीव आत्मशब्दस्य ब्रह्मादीन् प्रत्यल्पगुणाभिधायकत्वे अवधारणमप्यन्यान् प्रतीवान्ययोगमपि व्यवच्छिद्यात् । अर्धजरतीयानुपपत्तेः । आत्मशब्दस्य बहुगुणाभिधायकत्वे एव तदयोगस्यान्यत्र प्रसक्तत्वेन तद्व्यवच्छेदकत्वोपपत्तावपि स्वामित्वाद्यल्प-गुणाभिधायकत्वे तदयोगप्रसक्तेरभावेनान्ययोगव्यवच्छेदकत्वस्यैव त्वयाङ्गीकार्यत्वादिति भावः ।

## तत्त्वसुबोधिनी

**आत्मशब्दोक्तगुणोपासनस्येति** ॥ यदि आत्मशब्देनानन्दादिनां गृहीतेः तेषां सर्वोपास्यत्वं तर्हि सर्वेषामपि गुणानां प्रतिपाद्यतया आत्मशब्दोक्तत्वात् सर्वेषामपि सर्वगुणोपासकत्वं स्यादिति पूर्वपक्षोत्थानादनन्तरसङ्गतिरिति भावः ॥ **अन्यथेति** ॥ आत्मशब्दोक्तगुणोपासनस्य सर्वैः-कर्तव्यत्वाभावासमर्थने इत्यर्थः । अस्तु सर्वगुणाभिधायकत्वमित्यत आह ॥ **तथा चेति** ॥ कुतो न निश्चायक इत्यत आह ॥ **न हीति** ॥ 'सत्यो ज्ञानः परमानन्दरूप आत्मेत्येवं नित्यदोपासनं स्यात् । नान्यत्किञ्चित् समुपासीत धीरः' इति आत्मेत्येवेत्यन्ययोगव्यवच्छेदपरावधारणयुक्तात्म-शब्दत्वं च श्रुतवत इत्यर्थः ॥ **अवधारणविरोधादिति** ॥ आत्मशब्दोक्तसर्वगुणानुपासने आत्म-शब्दोक्तमुपास्यमेवेत्ययोगव्यवच्छेदपरावधारणविरोधः स्यादित्यर्थः । कथं सर्वोपसंहारविरोध इत्यत आह ॥ **अन्ययोगेति** ॥ अधमाधिकारिणः प्रति अन्ययोगव्यवच्छेकावधारणं युक्त इत्यर्थः । अस्य च सूत्रस्य आत्मशब्दोक्तमेवोपास्यमिति नियमश्चेत् आत्मशब्दे सर्वगुणानामन्वयात् सर्वोपास्यत्वं प्रतीयते इति श्रुतचतुर्गुणोपासनस्य पुंसो विभ्रम एवानेन भवति कथमुपासनं कार्यमिति ॥ तथा च नात्मशब्दोक्तमेवोपास्यमिति चेत् न स्यादवधारणात् स्यादुक्तात्मशब्दे सर्वगुणानामन्वय इति । तथा स्यादेव तत्तथैव तर्हि सर्वेषां सर्वगुणोपास्तिः स्यादित्यतो परब्रह्मादीन्प्रत्येव नान्यान्प्रतीति शेषः पूरणीयः । एवं चात्मशब्दे ब्रह्मादीन्प्रत्येव सर्वगुणाभिधायकः स्यान्नान्यान्प्रतीति । कुत एतदित्यत उक्तम् ॥ **अवधारणादिति** ॥ अयोगव्यवच्छेदपरावधारणादित्यर्थः । ब्रह्मादेः सर्वगुणोपास्तेः श्रुतिसिद्धत्वेन तान्प्रति अयोगव्यवच्छेदकत्वमेवावधारणस्येत्यक्षरार्थः ।

## वाक्यार्थविवरणम्

**अन्यथेति** ॥ आत्मशब्दोक्तगुणोपासनस्य सर्वकर्तव्यत्वाभावे ॥ **अनुपसंहारेति** ॥ आत्मशब्दाच्चेत्यत्र गुणान्तरव्यावृत्तिकथनपूर्वकं आत्मत्वस्य सर्वोपास्यत्वविधानेनानुपसंहारोऽपि

(वाक्यार्थविवरणम्)
सिद्ध्यतीति यदनुपसंहारप्रमाणत्वं सावधारणात्मशब्दस्योक्तं तद् व्याहतं स्यादित्यर्थः ॥ तस्य ॥ आत्मशब्दस्य भाष्ये ॥ **आप्तेति** ॥ गुणैराप्तेत्यर्थः । अयम् आत्मशब्दः ॥ **श्रुतेति** ॥ सत्यो ज्ञानः परमानन्दरूपः आत्मेत्येवं नित्यदेति श्रुत्यर्थः ॥ **विभ्रमेति** ॥ सर्वगुणोपासनं कार्यमुत चतुर्गुणोपासनमिति संशयेत्यर्थः । एवं चतुर्गुणत्वेन । तदेवोपपादयति ॥ **न हीति** ॥ **उभयथा** ॥ सर्वगुणाभिधायकत्वेन चतुर्गुणाभिधायकत्वेन च ॥ **श्रुतवतः** ॥ आत्मशब्दमिति शेषः ॥ **अन्यतरस्मिन्** ॥ चतुर्गुणोपासनरूपे ॥ **तदुक्तम्** ॥ आत्मशब्दोक्तम् ॥ **स्वयोग्यम्** ॥ गुणचतुष्टयम् ॥ **अवधारणेति** ॥ अयोगव्यवच्छेदपरावधारणेन तदुक्तसर्वगुणोपासनोक्तेस्तद्विरोध इत्यर्थः । तर्हि सर्वेषां सर्वगुणोपास्तिः स्यादित्यत आह ॥ **इयांस्त्विति** ॥ **तस्य** ॥ आत्मशब्दस्य ॥ **उक्तोपासनम्** ॥ आत्मशब्दोक्तगुणोपासनम् ॥ **ब्रह्मादीनिति** ॥

अयं भावः ॥ आत्मशब्दस्य सर्वान्प्रति सर्वगुणाभिधायकत्वमङ्गीकृत्य तदुक्तं स्वयोग्यमेवोपासितव्यमित्यङ्गीकारे ह्ययोगव्यवच्छेदपरावधारणविरोधः स्यात् । न चैवम् । किं नाम ब्रह्मादीन्प्रति सर्वगुणाभिधायी इतरान्प्रति तु चतुर्गुणाभिधाय्येव । आत्मशब्दवाच्यगुणत्वेनैवोपासीतेत्यन्ययोगव्यवच्छेदपरावधारणमुक्तात्मशब्दो ब्रह्मादीनधिकरोति । तावताऽपि तेषां बहुगुणोपसंहारसिद्धिः । तान्प्रति तस्य बहुत्वाभिधायकत्वात् । अयोगव्यवच्छेदकत्वेऽपि न दोषः । इतरान्प्रति तस्य चतुर्गुणाभिधायकत्वेन तदुक्तगुणोपासनासत्त्वात् । अयोगव्यवच्छेदकत्वेऽपि तेषां न सर्वगुणोपासनाप्राप्तिः । आत्मशब्दप्रकाशितयावद्गुणोपास्त्यङ्गीकारात् । तान्प्रत्यात्मशब्दप्रकाशितगुणानां चतुष्ट्वादेवेति ध्येयं सूत्रार्थस्तु सर्वगुणानामात्मशब्देऽन्वयादात्मशब्दोक्तगुणा न सर्वोपास्या इति चेत् । उच्यते ॥ **तर्हि स्यात्** ॥ सर्वगुणाभिधायकत्वमात्मशब्दस्य स्यादेव । तत्तु ब्रह्मादीन्प्रत्येव । इतरान्प्रति तु चतुर्गुणप्रकाशकत्वमेवेति शेषः । कुत इत्यत उक्तम् ॥ **अवधारणादिति** ॥ अन्ययोगव्यवच्छेदपरावधारणात् । तस्य तादृशावधारणं तु ब्रह्मादीनेवाधिकरोति । तथाऽयोगव्यवच्छेदपरस्त्वितरान् । न तस्यैतावता तेषां बहुगुणोपासनाप्रसङ्गः । आत्मशब्दप्रकाशितगुणवत्तयोपासीतेति आत्मशब्दप्रकाशितयावद्गुणोपासनाङ्गीकारात् ॥ **तेषाम्** ॥ आत्मप्रकाशितगुणानाम् ॥ **चतुष्ट्वादेवेति** ॥ **सर्वोपसंहारवचनेति** ॥ ब्रह्मणः सर्वगुणोपसंहारवचनेत्यर्थः ।

## वाक्यार्थमञ्जरी

प्रमाणत्वोक्तिः आत्मशब्दस्य तदुक्तानङ्गीकारे तस्यैवाप्रामाण्यप्राप्तेरिति भावः ॥ ॐ अन्वयादिति चेत्स्यादवधारणात् ॐ ॥ आत्मशब्दे सर्वगुणानामन्वयात् तस्य सर्वगुणवाचित्वादिति यावत् । तस्यानुपसंहारित्वमयुक्तमिति चेत्, स्यादात्मशब्दस्य सर्वगुणवाचित्वं किन्तु ब्रह्मादीन्प्रत्येव नान्यान्प्रति, कुतः अवधारणात् अन्ययोगव्यवच्छेदपरात्मेत्येवेत्यवधारणात् ॥ **आप्तव्याप्तेरिति** ॥ आप्तव्यानां गुणानामाप्तेः प्राप्तत्वादित्यर्थः ॥ **अयमिति** ॥ श्रुतआत्मेत्येवेत्यन्ययोगव्यवच्छेदक-पदावधारणयुक्तात्मशब्दयुक्त इत्यर्थः ॥ **श्रुतचतुर्गुणेति** ॥ 'सत्यो ज्ञानः परमानन्दरूप आत्मेत्येवं नित्यदोपासनं स्यात्' इति चतुर्गुणोपासनं श्रुतवत इत्यर्थः । **विभ्रमकरः** संशयजनकः ॥ **अवधारणविरोधादिति** ॥ आत्मशब्दोक्तसर्वगुणानुपासने आत्मशब्दोक्तमुपास्यमेवेत्ययोग-व्यवच्छेदपरावधारणविरोधादित्यर्थः । नन्वेवं तर्हि सर्वेषां सर्वगुणोपास्तिः स्यादित्यत आह ॥ **इयांस्त्विति** ॥ **अधिकरोतीति** ॥ स्वविहितकारितया सङ्गृह्णातीत्यर्थः ।

॥ इति अन्वयाधिकरणम् ॥ १० ॥

(वाक्यार्थविवरणम्)

सिद्ध्यतीति यदनुपसंहारप्रमाणत्वं सावधारणात्मशब्दस्योक्तं तद् व्याहतं स्यादित्यर्थः ॥ तस्य ॥ आत्मशब्दस्य भाष्ये ॥ **आप्तेति** ॥ गुणैराप्तेत्यर्थः । अयम् आत्मशब्दः ॥ **श्रुतेति** ॥ सत्यो ज्ञानः परमानन्दरूपः आत्मेत्येवं नित्यदेति श्रुत्यर्थः ॥ **विभ्रमेति** ॥ सर्वगुणोपासनं कार्यमुत चतुर्गुणोपासनमिति संशयेत्यर्थः । एवं चतुर्गुणत्वेन । तदेवोपपादयति ॥ **न हीति** ॥ **उभयथा** ॥ सर्वगुणाभिधायकत्वेन चतुर्गुणाभिधायकत्वेन च ॥ **श्रुतवतः** ॥ आत्मशब्दमिति शेषः ॥ **अन्यतरस्मिन्** ॥ चतुर्गुणोपासनरूपे ॥ **तदुक्तम्** ॥ आत्मशब्दोक्तम् ॥ **स्वयोग्यम्** ॥ गुणचतुष्टयम् ॥ **अवधारणेति** ॥ अयोगव्यवच्छेदपरावधारणेन तदुक्तसर्वगुणोपासनोक्तेस्तद्विरोध इत्यर्थः । तर्हि सर्वेषां सर्वगुणोपास्तिः स्यादित्यत आह ॥ **इयांस्त्विति** ॥ **तस्य** ॥ आत्मशब्दस्य ॥ **उक्तोपासनम्** ॥ आत्मशब्दोक्तगुणोपासनम् ॥ **ब्रह्मादीनिति** ॥

अयं भावः ॥ आत्मशब्दस्य सर्वान्प्रति सर्वगुणाभिधायकत्वमङ्गीकृत्य तदुक्तं स्वयोग्यमेवोपासितव्यमित्यङ्गीकारे ह्ययोगव्यवच्छेदपरावधारणविरोधः स्यात् । न चैवम् । किं नाम ब्रह्मादीन्प्रति सर्वगुणाभिधायी इतरान्प्रति तु चतुर्गुणाभिधाय्येव । आत्मशब्दवाच्यगुणत्वेनैवोपासीतेत्यन्ययोगव्यवच्छेदपरावधारणमुक्तात्मशब्दो ब्रह्मादीनधिकरोति । तावताऽपि तेषां बहुगुणोपसंहारसिद्धिः । तान्प्रति तस्य बहुत्वाभिधायकत्वात् । अयोगव्यवच्छेदकत्वेऽपि न दोषः । इतरान्प्रति तस्य चतुर्गुणाभिधायकत्वेन तदुक्तगुणोपासन्नासत्त्वात् । अयोगव्यवच्छेदकत्वेऽपि तेषां न सर्वगुणोपासनाप्राप्तिः । आत्मशब्दप्रकाशितयावद्गुणोपास्त्यङ्गीकारात् । तान्प्रत्यात्मशब्दप्रकाशितगुणानां चतुष्ट्वादेवेति ध्येयं सूत्रार्थस्तु सर्वगुणानामात्मशब्देऽन्वयादात्मशब्दोक्तगुणा न सर्वोपास्या इति चेत् । उच्यते ॥ **तर्हि स्यात्** ॥ सर्वगुणाभिधायकत्वमात्मशब्दस्य स्यादेव । तत्तु ब्रह्मादीन्प्रत्येव । इतरान्प्रति तु चतुर्गुणप्रकाशकत्वमेवेति शेषः । कुत इत्यत उक्तम् ॥ **अवधारणादिति** ॥ अन्ययोगव्यवच्छेदपरावधारणात् । तस्य तादृशावधारणं तु ब्रह्मादीनेवाधिकरोति । तथाऽयोगव्यवच्छेदपरस्त्वितरान् । न तस्यैतावता तेषां बहुगुणोपासनाप्रसङ्गः । आत्मशब्दप्रकाशितगुणवत्तयोपासीतेति आत्मशब्दप्रकाशितयावद्गुणोपासनाङ्गीकारात् ॥ **तेषाम्** ॥ आत्मप्रकाशितगुणानाम् ॥ **चतुष्ट्वादेवेति** ॥ **सर्वोपसंहारवचनेति** ॥ ब्रह्मणः सर्वगुणोपसंहारवचनेत्यर्थः ।

## वाक्यार्थमञ्जरी

प्रमाणत्वोक्तिः आत्मशब्दस्य तदुक्तानङ्गीकारे तस्यैवाप्रामाण्यप्राप्तेरिति भावः ॥ ॐ अन्वयादिति चेत्स्यादवधारणात् ॐ ॥ आत्मशब्दे सर्वगुणानामन्वयात् तस्य सर्वगुणवाचित्वादिति यावत्। तस्यानुपसंहारित्वमयुक्तमिति चेत्, स्यादात्मशब्दस्य सर्वगुणवाचित्वं किन्तु ब्रह्मादीन्प्रत्येव नान्यान्प्रति, कुतः अवधारणात् अन्ययोगव्यवच्छेदपरात्मेत्येवेत्यवधारणात् ॥ **आप्तव्याप्तेरिति** ॥ आप्तव्यानां गुणानामाप्तेः प्राप्तत्वादित्यर्थः ॥ **अयमिति** ॥ श्रुतआत्मेत्येवेत्यन्ययोगव्यवच्छेदकपदावधारणयुक्तात्मशब्दयुक्त इत्यर्थः ॥ **श्रुतचतुर्गुणेति** ॥ 'सत्यो ज्ञानः परमानन्दरूप आत्मेत्येवं नित्यदोपासनं स्यात्' इति चतुर्गुणोपासनं श्रुतवत इत्यर्थः । **विभ्रमकरः** संशयजनकः ॥ **अवधारणविरोधादिति** ॥ आत्मशब्दोक्तसर्वगुणानुपासने आत्मशब्दोक्तमुपास्यमेवेत्ययोगव्यवच्छेदपरावधारणविरोधादित्यर्थः । नन्वेवं तर्हि सर्वेषां सर्वगुणोपास्तिः स्यादित्यत आह ॥ **इयांस्त्विति** ॥ **अधिकरोतीति** ॥ स्वविहितकारितया सङ्गृह्णातीत्यर्थः ।

॥ इति अन्वयाधिकरणम् ॥ १० ॥

## ११. कार्याख्यानाधिकरणम्

### ॥ ॐ कार्याख्यानादपूर्वम् ॐ ॥ १९ ॥

'अलौकिकास्तस्य गुणा ह्युपास्या अलौकिकं मुक्तिकार्यं यतोऽस्य' इति कार्याख्यानादन्यत्रादृष्टा एव गुणा उपास्याः ।

### तत्त्वप्रदीपिका

मुक्तिकार्यस्यालौकिकत्वात् । तत्सम्पादकगुणा अप्यलौकिकत्वेनैवोपास्याः । अलौकिकत्वोपास्तिपरमेतदतो न परमत इत्यनेन पुनरुक्तिराशङ्कनीया ॥

### तत्त्वप्रकाशिका

अत्र ब्रह्मदर्शनसाधनोपासनायामलौकिकगुणोपसंहारसमर्थनादस्ति शास्त्रादिसङ्गतिः अन्यथोक्तालौकिकत्वासिद्धेः समर्थनीयः । प्रकृतभगवद्गुणा एव विषयः । किमलौकिका ध्येया लौकिका वेति सन्देहः । पूर्वोक्तिर्लोकदृष्टिश्च सन्देहवीजम् । लौकिका एव ध्यातव्या इति पूर्वः पक्षः । लौकिकानामध्याने ध्यानाभावप्रसक्तेः । अलौकिकानामननुभूतत्वेन ध्यानकालेऽप्रतीतेः । कर्तव्यं चेदं ध्यानम् । अतो लौकिका एव ध्यातव्याः । न चाविद्यमानं युक्तं ध्यातुमिति लौकिका एव ते ध्यानान्यथानुपपत्तेरिति । सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ॥ **कार्येति** ॥ अलौकिका एव गुणा ध्यातव्याः । तथा ध्यानेनैव मोक्षसम्भवात् । ध्यानकार्य(स्य)मोक्षस्यालौकिकत्वाख्यानात् । फलानुसारिध्यानस्य कर्तव्यतानियमादिति भावः । न चालौकिकगुणाप्रतीतिर्दोषः । इन्द्रादाविवोपदेशोपपत्तेः । अतोऽलौकिकत्वेनैव ध्यातव्या इति युक्तं पूर्वोक्तमिति सिद्धम् ।

### गुर्वर्थदीपिका

अलौकिकगुणोपसंहारसमर्थनादित्यत्रालौकिकगुणोपसंहारो नामालौकिका निरवधिका आनन्दज्ञानाद्या गुणा भगवति सन्तीति युगपन्मनसाऽनुचिन्तनमात्रं न तु मनोमयप्रतिमादर्शनवन्मनसा निर्माय दर्शनम् । भगवदलौकिकमूर्त्यापरोक्ष्येऽप्येषां विशिष्य दर्शनाभावात् किमुत ध्यानकाले । भगवदानन्दज्ञानादिगुणानां शिलादिप्रतिमास्विव जडमनोमयप्रतिमासु रचनायोगाच्च । एवं च ध्यानं

(गुर्वर्थदीपिका)

नाम सर्वज्ञगुरूपदेशेन स्वस्वबिम्बमूर्तिं ज्ञात्वाऽव्यक्तस्वभावायास्तस्या एव साक्षाद्ध्यानेऽसामर्थ्यात्तादृशीं काञ्चन मनोमयीं प्रतिमां विधाय तामेव मनसा निरन्तरं पश्येत् । तदन्तरीदृश्यलौकिकी भगवन्मूर्तिरस्तीति निरन्तरस्मरणं तस्मिन्भगवत्यलौकिकस्वयोग्यगुणानामपि यौगपद्येन निरन्तरानुस्मरणं ध्यानमुच्यते ।

ननु स्वातन्त्र्येण स्मरणसाधनं मन इत्युक्तत्वात् स्मरणमपि प्रत्यक्षमिति चेत्सत्यं स्वायोग्येषु बहिरर्थेषु संस्काराख्यालौकिकप्रत्यासत्त्या विषयीकरणात्स्वस्वकरणेन्द्रियसन्निकृष्टरूपादिज्ञानवन्न तन्मुख्यं प्रत्यक्षम् । अर्थशब्देनेन्द्रियविषया गृह्यन्त इत्युक्तत्वात्स्वस्वयोग्यविषयैः साक्षादेव सम्बद्धतत्तदिन्द्रियजन्यज्ञानमेव मुख्यं प्रत्यक्षं स्वातन्त्र्यं च बाह्येन्द्रियानपेक्षत्वमेव । नतु परनिरपेक्षतया बाह्यार्थविषयकत्वम् । मनसो बहिरस्वातन्त्र्यात् । अत एव लौकिकप्रत्यासत्यजन्यत्वेन परोक्षसदृशत्वात्परोक्षमिति चोच्यते । उक्तविधया स्मरणस्य कथञ्चिन्मानसप्रत्यक्षत्वाभावे प्रत्यक्षानुमितिशब्दरूपकेवलप्रमाणत्रयानन्तर्भूतत्वेन चतुर्थप्रमाणत्वापत्त्या प्रमाणत्रित्वभङ्गः स्यात् । तस्मात् 'देवर्षिपितृपनरा इति मुक्तास्तु पञ्चधा' इत्यत्र उपदेवानां देवेष्विव स्मरणस्याप्यलौकिकमानसप्रत्यक्षतया कथञ्चित्प्रत्यक्ष एवान्तर्भावो ज्ञेयः । साक्षान्मनोविषयस्तु दोषस्थलीयज्ञानाप्रामाण्यादिकं ध्यानपरिपाकानन्तरमविद्यापगमे सति परमात्मा च । एवं च मनसा भगवदपरोक्षज्ञानं नाम निरन्तरस्वानुस्मरणपरितुष्टभगवत्प्रसादादावरकाविद्यायाः कटवदपसरणे भगवत्प्रसादादेवोपोद्बलितशक्तिना मनसा दिव्याभरणभूषितकरचरणमुखकमलाद्युपेतभास्वरचिदानन्दात्मकालौकिकभगवन्मूर्तेरेव चक्षुषा घटादेरिव साक्षादीक्षणम् । इदमेव मोक्षसाधनम् । न तु स्मरणमात्रमित्यनुसन्धेयम् । वक्ष्यति चैतत् सूत्रकारः स्वयमेव 'विद्यैव तु निर्धारणात्'इति । वस्तुगत्या अलौकिकानामेव गुणानां लौकिकतया ध्यानं क्रियत इति शङ्कां वारयति **न चेति** ॥ इन्द्रादाविवेत्यस्य अलौकिकादाविन्द्रादयो यथा गुरूपदेशाज्ज्ञायन्ते तथा अलौकिकगुणानामपि प्रतीतिरित्यर्थः ।

## भावबोधः

**अलौकिकगुणेति** ॥ ब्रह्मादिमनुष्योत्तमान्ताधिकारिणां उपसंहर्तव्यगुणनिर्णये तेषामलौकिकत्वं विचार्यत इत्यनन्तरसङ्गतिरिति भावः ॥ **किमिति** ॥ अत्र भगवद्गुणाः किं लौकिका ध्येया उतालौकिका इति चिन्ता । तदर्थं लौकिकानामध्याने ध्यानं न सम्भवत्युत सम्भवतीति ।

(भावबोधः)

तदर्थमलौकिकानां प्रतीतिर्न सम्भवत्युत सम्भवतीति ॥ **पूर्वोक्तिरिति** ॥ 'परमतः सेतून्मान-सम्बन्धभेदव्यपदेशेभ्यः' इति पूर्वमलौकिकत्वोक्तिरित्यर्थः ॥ **लोकदृष्टिरिति** ॥ लोके लौकिकस्यैव पुत्रादेः ध्यानस्य दर्शनादिति भावः । 'परमतः' इत्यत्र भगवद्गुणानां अलौकिकत्वसमर्थनं, अत्र तु तेषामेवोपसंहर्तव्यत्वसमर्थनमिति तयोर्भेद इति ज्ञातव्यम् । अलौकिकगुणानामप्रतीतेः लौकिक-गुणाध्याने एतदपाकृतिरेवेति न्यायविवरणं मनसि निधाय पूर्वपक्षमाह– **लौकिकानामित्यादिना** ॥

ननु **'बुद्ध्यर्थः पादवत्'** इत्यत्र अनन्दादिपदप्रयोगस्य समर्थितत्वेनानुभवोपायस्योक्तत्वात् कथं पूर्वपक्षोत्थानमिति चेत्, न; अलौकिकत्वे व्युत्पत्त्ययोगेन तत्पदप्रयोगस्याप्यनुपपत्तेरिति तदाक्षेपेण पूर्वपक्षोत्थानात् । न च **'विद्वद्व्युत्पत्तितोऽपि च' 'तैस्तैः शब्दैश्च भण्यते'** 'युज्यते चोपदेशतः' इत्यनुव्याख्याने तत्रैव व्युत्पत्तिरपि समर्थितेति तद्दोषतादवस्थ्यमिति वाच्यम् । तस्य तदेतदधि-करणद्वयतात्पर्यकथनपरत्वोपपत्तेः । अत एवानुव्याख्याने एतदधिकरणस्य पृथग्व्याख्यानाभावः । अत एव चात्र टीकायां 'युज्यते चोपदेशतः' इत्यनुव्याख्यानोक्तामेव युक्तिं वक्ष्यति– **इन्द्रादा-विवोपदेशोपपत्तेरिति** ॥ विपर्यये पर्यवसानमाह– **कर्तव्यं चेदमिति** ॥ 'निदिध्यासितव्यः' इति श्रुतिविहितत्वादिति भावः ।

ननु अस्तु लौकिकानामेव ध्यानं, तथापि न भवद्गुणानां अलौकिकत्वहानिः । 'योषितमग्निं ध्यायीत' इतिवत्, अविद्यमानध्यानस्यापि सम्भवादित्यत आह– **न चाविद्यमानमिति** ॥ **लौकिका एवेति** ॥ तथा च 'परमतः' इत्युक्तं अलौकिकत्वमयुक्तमिति भावः । लोकविलक्षणा अत्युत्तमा इति ध्यानस्यैव प्रधानादिति न्यायविवरणाभिप्रायमाह– **तथा ध्यानेनैवेति** ॥ **अलौकिकत्वाख्या-नादिति** ॥ अनेन 'कार्याख्यानात्' इति सूत्रभाष्ययोः कार्यस्यालौकिकत्वाख्यानादिति मध्यम-पदलोपी समास इत्युक्तं भवति । **इन्द्रादाविवेति** ॥ यः सहस्राक्षः स इन्द्र इत्यादिवत् । साक्षात्कृत-भगवद्गुणानां यत्सर्वविषयं तदीश्वरज्ञानमित्याद्युपदेशेन तदविदुषामपि तत्प्रतीत्युपपत्तेरिति भावः ।

## भावदीपः

**अलौकिकगुणोपसंहारसमर्थनादिति** ॥ तेषां पूर्वमननुभूतत्वेनानुपसंहार्यत्वप्राप्तावुपदेशतोऽनु-भूतत्वकथनेनेति भावः । तेन पूर्वत्राधिकारिणां स्वस्वयोग्यगुणान्यगुणानामात्मशब्देनाप्रतीत्या

(भावदीपः)

तत्तन्मात्रगुणोपासनं युक्तमित्युक्तमयुक्तम् । योग्यानामपिं प्रागुक्तदिशा अलौकिकत्वेनात्म-शब्देनाप्यप्रतीतेः । लौकिकत्वे प्रागुक्तहानिरिति शङ्कनात्पूर्वसङ्गतिः सूचिता । यद्वा सावधारणात्मशब्दोऽयमनुपसंहार इवोपसंहारेऽपि प्रमाणमित्युक्तं पूर्वत्र । तथा चैतावता ग्रन्थेन प्रमाणोक्त्यादिनोपसंहारानुपसंहारयोः कर्तव्यत्वमुक्तं, इदानीं कीदृशा गुणा उपसंहार्याः लौकिका अलौकिका वेति चिन्तनात्पूर्वसङ्गतिः । अनुपसंहारस्याल्पगुणोपसंहाररूपत्वात् ॥ **उक्तेति** ॥ परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्य इत्यत्रोक्तेत्यर्थः । उपास्यत्वबलेनेश्वरगुणानां लौकिकत्व-प्राप्तावलौकिकत्वासिद्धेरित्यर्थः । पूर्वोक्तिः परमतः सेतून्मानेत्यत्रालौकिकत्वोक्तिरित्यर्थः । अलौकिकगुणानामप्रतीतेर्लौकिकगुणाध्याने तदपाकृतिरेव भवतीत्यन्यत्रोक्तपूर्वपक्षं विवृणोति ॥ **लौकिका एवेत्यादिना** ॥ तदपाकृतिरेवेत्यस्यार्थो ध्यानाभावप्रसक्तेरिति ॥ **अननुभूतत्वेनेति** ॥ तत्र प्रत्यक्षानुमानयोरप्रसक्तेः प्रसक्तस्य चशब्दस्य सङ्गतिग्रहसापेक्षत्वात्तस्य च सम्बन्धिज्ञानाधीनत्वा-च्छब्दरूपसम्बन्धिनः प्रत्यक्षत्वेऽप्यर्थरूपसम्बन्धिनः शब्दादन्येनाप्रतीतेः शब्दान्तरेण तत्प्रतीतौ तत्राप्येवमित्यनवस्थापत्त्या संकेतग्रहायोगेन शब्देनाप्यननुभूतत्वेनेत्यर्थः । अप्रतीतेरस्मरणादित्यर्थः ॥ **कर्तव्यं चेति** ॥ अन्यथा तज्जन्यसाक्षात्काराभावेन मोक्षासिद्धेरिति भावः ॥ **अत इति** ॥ अनुभवस्मरणयोरसम्भवादित्यर्थः । लौकिकत्वे हि समयप्रतिपत्तौ तु सादृश्यमुपधानमिति पद्धत्याद्युक्तदिशा प्रसिद्धज्ञानानन्दादिसादृश्येनेश्वरगुणेऽपि संकेतग्रहणसम्भवादिति भावः ।

ननु परमत इति नये बुध्यर्थः पादवदिति सूत्रटीकायां व्युत्पत्तिश्च सौवर्णे घटे घटशब्दस्येव किञ्चित्सादृश्येनैवोपपद्यत इत्युक्तदिशा लोकसादृश्येनालौकिकेऽपि व्युत्पत्तिस्तत्रैवोक्तेति चेन्न । अत्रत्यस्यैव तत्र शिष्यहितायोक्तत्वात् । अत एव तत्र न्यायविवरणं अलौकिकास्तस्य शब्दा-स्तथार्था इत्यादि । अत्र तु अप्रतीतेरिति । तत्वप्रदीपे तु लौकिकोपास्तिपरमेतत्, अतो न परमत इत्यनेन पुनरुक्तिरित्युक्तम् । नन्वस्तु भगवदीयानां गुणानामलौकिकत्वं तत्राऽसन्तोऽपि लौकिका एव गुणा ध्यातव्या भवन्त्वित्यत आह ॥ **न चाविद्यमानमिति** ॥ न प्रतीके न हि स इति चतुर्थे निरसिष्यमाणत्वादिति भावः ॥ **अदृष्टा एव गुणा उपास्या इति** प्रतिज्ञाभाष्यार्थमाह ॥ **अलौकिका एव गुणा ध्यातव्या इति** ॥ कुत इत्यतो लौकिकविलक्षणा अत्युत्तमा इति ध्यानस्यैव प्राधान्यादित्यन्यत्रोक्तहेतुमाह ॥ **तथा ध्यानेनैवेति** ॥ प्राधान्यादित्यस्य विवरणं **मोक्षसम्भवादिति** ॥

(भावदीपः)

कुत एवं लौकिकगुणध्यानेनाप्यस्तु मोक्ष इत्यतो भाष्योक्तहेतुं योजयति ॥ **ध्यानकार्येति** ॥ एतेनापूर्वमलौकिकगुणजातमुपास्यम् । अपूर्वस्यैव तत्कार्यस्य मोक्षस्याख्यानात्कथनादलौकिका इत्यादिश्रुताविति सूत्रार्थो दर्शितः ॥ **फलानुसारीति** ॥ 'यथा यथोपासते तदेव भवति' इति श्रुतेरिति भावः ॥ **इन्द्रादाविवेति** ॥ शास्त्रोक्तवस्तुनश्चैव व्युत्पत्तिः शास्त्रलिङ्गत इत्यभिमानिनयानुव्याख्यासुधयोरुक्तरीत्या यः सहस्राक्षः स इन्द्रः । यः पाशहस्तः स वरुण इत्यादौ वाक्यार्थमर्यादयोपस्थिते वस्तुनीन्द्रादिशब्दव्युत्पत्तिवदनुकूलवेदनीयो भगवद्गुणो यः स आनन्द इति साक्षात्कृतभगवद्गुणानां विदुषां उपदेशेनोपस्थितौ तत्र तत्पदशक्तिग्रहोपपत्तेरित्यर्थः । युज्यते चोपदेशात इत्यनुव्याख्यानसुधायां तथैवोक्तेः । फलोक्त्या सूत्रार्थमुपसंहरति ॥ **अत इति** ॥ ध्यानकार्यमोक्षस्यालौकिकत्वाख्यानादित्यर्थः । ध्यातव्या गुणा इति शेषः । सर्वत्र गुणपदं क्रियासाधारणधर्ममात्रपरं उपसंहारसूत्रभाष्यटीकायां गुणा इति विधिमुखवेद्या वेदोक्तधर्मा इत्युक्तेः । पूर्वोक्तं परमत इत्यत्रोक्तमित्यर्थः । यत्तु कश्चिदाह । ईशगुणानामलौकिकत्वेऽपि ध्येयगुणानां वासनामयत्वेनालौकिकत्वाभावादलौकिका ध्येया इत्युक्तिरयुक्तेति । तन्न । अलौकिकेशगुणानुभवजन्यवासनामया ध्येया इत्येव तदर्थस्याभिमतत्वात्संशयकोट्यादेरप्येवमेवार्थत्वात् ।

## अभिनवचन्द्रिका

**अन्यथेति** ॥ लौकिकध्यानेनैव महापुरुषार्थसिद्ध्यङ्गीकारे भगवद्गुणानामपि लौकिकत्वमेव स्यात् । भगवद्गुणान्यस्य महापुरुषार्थसाधनत्वानुपपत्तेरिति भावः । किमलौकिका ध्येया इति । किं लोकविलक्षणत्वेन ध्यातव्याः, उत लोकसदृशत्वेन ध्यातव्या इत्यर्थः ॥ **लौकिका एवेति** ॥ लोकसदृशा एवेत्यर्थः । **अलौकिकानामिति** ॥ आनन्दादिशब्दानां लौकिकेष्वेव गृहीतसङ्गतिकत्वेन ईश्वरानन्दादिग्राहकप्रमाणेन लौकिकानन्दादेरेवानुभवात् अलौकिकानुभवाभावेन ध्यानकाले लौकिकानां स्मृत्यनुपपत्तेरिति भावः ॥ **ध्यानकार्यस्येति** ॥ ननु 'अलौकिकास्तस्य गुणा ह्युपास्या' इति श्रुतौ ध्यानकार्यस्य मोक्षस्येव, ध्येयगुणानामपि अलौकिकत्वमुक्तमेव । ततश्च गुणानामलौकिकत्वाभिधानादलौकिका एव ध्येया इति वक्तव्यम्, न तु तत्कार्यस्य मोक्षस्य अलौकिकत्वाभिधानमाश्रयितव्यम् । लघु चैवं सति सूत्रं भवति 'आख्यानादपूर्वम्' इतीति चेत्, सत्यम् गुणानामलौकिकत्वाभिधानमेव हेतुतया वक्तुं युक्तमिति, तथापि श्रुतौ गुणाऽलौकिकत्वं

(अभिनवचन्द्रिका)

प्रतिज्ञाय, कार्याऽलौकिकत्वं हेतुतया उक्तमिति श्रुत्यनुसारिणा सूत्रकृतापि तथोक्तम् । सूत्रकाराभिप्रायस्य वर्णनीयत्वात् भाष्यकारटीकाकाराभ्यामपि तथैवोक्तमिति ॥ **इन्द्रादाविवेति** ॥ लक्षणमुखेन इन्द्रादेरिव उपदेशोपपत्तिरिति भावः । ननु अस्तु अलौकिकानां भगवद्गुणानां ज्ञानसम्भवः, तथापि ध्यानं तु लौकिकानामेव । चित्ते प्रतिबिम्बितस्य वासनामयस्य लौकिकत्वात्, तदवलोकनस्यैव ध्यानत्वात् । तथा चाऽलौकिकस्य ध्यानमिति व्याहतं वच इति चेत्, सत्यम् मानसवासनामयस्य वस्तुनो मनसावलोकनमेव ध्यानमिति, तथापि 'अलौकिकस्य ध्यानम्' इत्युपपन्नमेव, 'अलौकिकस्य ध्यानम्' इत्यनेन अलौकिकार्थानुभवजनितवासनोपादानकपदार्थाव-लोकनस्यैव विवक्षितत्वात् । भवति च वासनोपादानकार्यध्यानं वासनामयमुल्लिखदपि, लिङ्गज्ञानं लिङ्गिविषयमिव, वाक्यज्ञानं वाक्यार्थविषयमिव, अलौकिकार्थ विषयं च । तदुक्तम् 'तदुपासनं च भवति प्रतीमोपासनं यथा' इति ।

पूर्वपक्षस्तु– भगवद्गुणा लौकिकत्वेनैव ध्यातव्याः । अन्यथा अलौकिकानामननुभूतत्वात् वासनाभावेन स्मृतिरूपध्यानाभावप्रसङ्गात् कर्तव्यं च ध्यानम् । अतो लौकिका एव भगवद्गुणा इति ।

सिद्धान्तस्तु– अलौकिका एव भगवद्गुणा ध्यातव्याः । तद्ध्यानकार्यस्य मोक्षस्य अलौकिकत्वात् । न च– अलौकिकगुणाऽप्रतीतेर्ध्यानाभावप्रसङ्गः । लक्षणमुखेन इन्द्रादेरिवोप-देशेन तत्प्रतीत्युपपत्तेः । अतोऽलौकिका एव ध्यातव्या इति युक्तं पूर्वोक्तं भगवद्गुणानाम-लौकिकत्वमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

आत्मशब्देन सर्वेषां गुणप्रतीतिरुक्ता । तेषामलौकिकत्वे व्युत्पत्त्यभावेन शब्देन प्रतीत्ययोगात् लौकिका एव ध्येया इत्याक्षेपादनन्तरसङ्गतिः । प्रकृता भगवद्गुणा किं लोकसदृशा ध्यात-व्योतालौकिका इति चिन्ता । तदर्थं ध्यानकाले प्रतीत्यर्थमलौकिकानां शब्देनानुभवो नोपपद्यत उतोपपद्यत इति ॥ **पूर्वोक्तिरिति** ॥ परमतः सेतून्मानेति पूर्वमलौकिकत्वोक्तिरित्यर्थः ॥ **लौकिकदृष्टिश्चेति** ॥ लौकिकस्यैव सौन्दर्यादेर्भार्यादौ ध्यानदर्शनादिति भावः । अत्र तत्त्वप्रदीप-वाक्यम् । अलौकिकत्वेनोपास्तिपरमेतत् । अतोऽत्र परमत इत्यनेन न पुनरुक्तिरिति ।

(वाक्यार्थमुक्तावली)

अत्रापाकृतिरित्युक्तन्यायं दर्शयन् पूर्वपक्षयति । **अलौकिकानामित्यनेन** । अननुभूतत्वेनेति शब्दस्य तत्राव्युत्पन्नत्वेन शब्दतोऽननुभूतत्वे ध्यानकाले तत्स्मरणानुपपत्तेरिति भावः । विपर्यये पर्यवसानमाह ॥ **कर्तव्यं चेदमिति** ॥ निधिध्यासितव्य इति श्रुतिविहितत्वादिति भावः । नन्वस्तु लौकिकानामेव ध्यानं, तथापि भगवद्गुणानामलौकिकत्वहानिः । 'योषितमग्निं ध्यायीत' इतिवदविद्यमानध्यानस्यापि सम्भवादित्यत आह ॥ **न चाविद्यमानमिति** ॥ **लौकिका एवेति** ॥ तथा च परमत इत्युक्त-लौकिकत्वमयुक्तमिति भावः ।

ननु बुद्ध्यर्थः पादवदित्यत्राप्रसिद्धेऽप्यानन्दादिपदप्रयोगस्य समर्थितत्वात् कथं पूर्वपक्षो-त्थानमिति चेन्न । अलौकिकत्वे व्युत्पत्त्ययोगेन तत्पदप्रयोगस्यानुपपत्तेरिति तदाक्षेपेणोत्थानात् । न च 'विद्वद्व्युत्पत्तितोऽपि च । तैस्तैः शब्दैश्च भण्यन्ते युज्यते चोपदेशतः' इत्यनुव्याख्याने तत्रैव व्युत्पत्तिरपि समर्थिता इति तद्दोषतादवस्थ्यमिति वाच्यम् । तस्य तदेतदधिकरणद्वयतात्पर्य-कथनपरत्वोपपत्तेः । अत एवानुव्याख्याने एतदधिकरणस्य पृथग्व्याख्यानाभावः । अत एवात्र टीकायां 'युज्यते चोपदेशतः' इत्यनुव्याख्यानोक्तामेव युक्तिं वक्ष्यति । इन्द्रादाविवोपदेशेनो-पपत्तेरिति भावबोधे निपुणतरमुक्तम् ।

**सूत्रे गुणजातमित्यन्वेति** ॥ ध्येयमिति च कार्येऽप्यपूर्वत्वमर्थादन्वेति । गुणजातमपूर्वमन्यत्रा-दृष्टपूर्वमलौकिकमुपसंहृत्य ध्येयम् । कार्याख्यानात् मोक्षाख्यफलसम्भवादन्यथासम्भवात् । पुत्रध्यानेनैव कार्यविशेषोऽस्तीत्येतावता न पुत्रस्यालौकिकत्वमित्यत उक्तम् ॥ **कार्याख्यानादिति** ॥ कार्यस्य ध्यानकार्यस्य मोक्षस्यालौकिकत्वाख्यानादित्यर्थमभिप्रेत्य प्राधान्यमित्युक्तन्यायमलौकि-कत्वेन फलस्य प्राधान्यमिति व्यञ्जयन्व्याचष्टे ॥ **अलौकिका एवेत्यादिना** ॥ **इन्द्रादाविवेति** ॥ यत्सहस्राक्षः स इन्द्र इत्यादिवत् साक्षात्कृतभगवद्गुणानां यत्सर्वं विषयं तदीश्वरज्ञानमित्याद्युपदेशेन तदविदुषामपि तत्प्रतीत्युपपत्तेरिति भावः ।

## तत्त्वसुबोधिनी

**अलौकिकगुणेति** ॥ ब्रह्मादिमनुष्योत्तमानां अधिकारिणामुपसंहर्तव्यगुणनिर्णयाय तेषामलौकि-कत्वं विचार्यत इत्यनन्तरसङ्गतिरिति भावः ॥ **अन्यथोक्तेति** ॥ अलौकिकगुणोपासनसमर्थनाभावे

(तत्त्वसुबोधिनी)

परमत इत्युक्तालौकिकत्वमपि सिद्धेरित्यर्थः ॥ **लोकदृष्टेरिति** ॥ लोके लौकिकस्यैव पुत्रादेः ध्यानस्य दर्शनादिति भावः । परमत इत्यत्र तु भगवद्गुणानामलौकिकत्वसमर्थनमत्र तु तेषामेवोपसंहर्तव्यत्वसमर्थनमिति तयोर्भेद इति ज्ञातव्यम् ॥ लौकिकानामध्याने ध्यानाभावप्रसक्तिः कुत इत्यत आह ॥ **अलौकिकानामिति** ॥ न च बुध्यर्थः पादवदित्यत्राप्रसिध्येऽप्यानन्दादि-पदप्रयोगस्य समर्थितत्वात् । अनुभवोपायस्योक्तत्वात्कथं पूर्वपक्षोत्थानमिति वाच्यम् । अलौकिकत्वे व्युत्पत्ययोगेन तत्प्रयोगस्याप्यनुपपत्तेरिति तदाक्षेपेण पूर्वपक्षप्रवृत्तेः । न च व्युत्पत्तिश्च सौवर्णघट इत्यादिना तत्रैव समर्थितेति वाच्यम् । तस्य तदेतदधिकरणद्वयतात्पर्यकथनपरत्वोपपत्तेः । विपर्यये पर्यवसानमाह ॥ **कर्तव्यं चेति** ॥ निदिध्यासितव्य इति श्रुतिविहितत्वादिति भावः । नन्वस्तु लौकिकानामेव ध्यानं तथापि न भगवद्गुणानामलौकिकत्वहानिः । 'योषितमग्निं ध्यायीत' इतिवदविद्यमानस्यापि ध्यानसम्भवादित्यत आह ॥ **न चाविद्यमानमिति** ॥ **लौकिका एवेति** ॥ तथा च परमत इत्युक्तमलौकिकत्वमयुक्तमिति भावः ॥ **इन्द्रादिवदिति** ॥ यः सहस्राक्षः स इन्द्र इत्यादिवत्साक्षात्कृतभगवद्गुणानां यत्सर्वविषयं तदीश्वरज्ञानमित्याद्युपदेशवद्भिदूषणामपि तत्प्रतीत्यु-पपत्तेरित्यर्थः । अस्य च सूत्रस्य अलौकिकमेव गुणजातमुपास्यं कुत इत्यत उक्तम् ॥ **कार्याख्यानादिति** ॥ कार्यस्यालौकिकत्वाख्यानं कार्याख्यानमिति मध्यमपदलोपीसमासः । एवं च मोक्षरूपकार्यस्यालौकिकत्वाख्यानादित्यर्थः । अलौकिकं कार्यम् अलौकिककारणेन विना न सम्भवतीत्यक्षरार्थः ।

## वाक्यार्थविवरणम्

**उक्तालौकिकत्वेति** ॥ परमत इत्यत्र उक्तालौकिकत्वेत्यर्थः । लौकिकानामध्याने ॥ अलौकिकगुणध्यानाङ्गीकारे इत्यर्थः । कुत इत्यत आह ॥ **अलौकिकानामिति** ॥ ननु वस्तुतो अलौकिकानामेव लौकिकत्वेन विद्यमानध्यानाङ्गीकाराददोष इत्यत आह ॥ **न चेति** ॥ लौकिका एव वस्तुत इति शेषः । कार्याख्यानाद् ध्यानकार्यस्य मोक्षस्यालौकिकत्वाख्यानादपूर्वं लोक-विलक्षणमेव गुणजातमुपास्यमिति सूत्रार्थः । भाष्ये ॥ **मुक्तिकार्यम्** ॥ मुक्तिरूपध्यानार्थमित्यर्थः ॥ **न चेति** ॥ अयमर्थः । ज्ञानादिपदानां न भगवज्ज्ञानादिगुणेषु व्युत्पत्तिः सम्भवति । सम्बन्धस्य सम्बन्धिज्ञानसापेक्षत्वात् सम्बन्धिनां भगवद्गुणानां प्रत्यक्षेण दुरधिगमत्वात् । लिङ्गाभावेनानुमाना-

(वाक्यार्थविवरणम्)

योगात् । न च शब्दतस्तदवगमः । सत्यां व्युत्पत्तौ शब्दतस्तदवगमः सति च तस्मिन् व्युत्पत्तिरिति परस्पराश्रयत्वात् । न च शब्दविशेषस्यागृहीतसङ्गतिकस्यैव बोधकत्वम् । **एतददृष्टकल्पनाप्रसङ्गादिति** ॥ कुतो दोषो न चेदित्यतः 'शास्त्रोक्तवस्तुनश्चैव व्युत्पत्तिः शास्त्रलिङ्गतः' इत्यनुव्याख्यानं हृदि कृत्वाह ॥ **इन्द्रादाविवेति** ॥ यथा खलु लोके यथा मुद्गस्तथा, मुद्गपर्णी यथा माषस्तथा माषपर्णी, दीर्घग्रीवादिमान् पशुरुष्ट्र इति लक्षणान्युपादाय मुद्गपर्णीदिशब्दा व्युत्पाद्यन्ते तथा लोकविलक्षणेऽपीन्द्रादौ यः सहस्राक्षत्वादिमान् स इन्द्रादिशब्दार्थ इति शास्त्रोक्ततत्तद्देवतालक्षणान्युपादायोपदेशादिन्द्रादिशब्दव्युत्पत्तिः सुकरैव । सहस्रादिशब्दाश्च लोक एव गृहीतसङ्गतयः । समासस्य च वाक्यरूपत्वेन अपूर्वार्थोपस्थापकतया व्युत्पत्त्यपेक्षत्वाभावादेवं प्रकृतेऽपीश्वरगुणानामलौकिकत्वेऽपि यत्सर्वविषयं तदीश्वरज्ञानमित्येवमादिरूपेण शास्त्रोक्ततल्लक्षणमादाय विद्वदुपदेशतो व्युत्पत्तिः सम्भवत्येव । सर्वविषयादिशब्दानां लोके गृहीतसङ्गतिकत्वात् समासस्य वाक्यत्वेन अपूर्वार्थोपस्थापकतया व्युत्पत्त्यनपेक्षत्वादिति भावः ॥ **पूर्वोक्तम्** ॥ परमत इत्युक्तमलौकिकत्वम् ।

## वाक्यार्थमञ्जरी

**उक्तेति** ॥ 'परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः' इत्यनेनोक्तेत्यर्थः ॥ **लोकदृष्टिरिति** ॥ लोके लौकिकस्यैव पुत्रादेर्ध्यानदर्शनादिति भावः । न ध्यानाभावप्रसङ्गोऽलौकिकानां ध्यानसम्भवादित्यत आह ॥ **अलौकिकानामिति** ॥ विपर्यये पर्यवसानमाह ॥ **कर्तव्यं चेति** ॥ निदिध्यासितव्य इति श्रुतिविहितत्वादिति भावः । नन्वस्तु लौकिकानामेव ध्यानं तथापि न भगवद्गुणानामलौकिकत्वहानिः । 'योषितमग्निं ध्यायीत' इतिवदविद्यमानध्यानस्यापि सम्भवादित्यत आह ॥ **न चाविद्यमान एवेति** ॥ **लौकिका एवेति** ॥ तथा च परमत इत्युक्तमलौकिकत्वमयुक्तमिति भावः ।

ॐ **कार्याख्यानादपूर्वम्** ॐ ॥ भगवद्गुणजातमपूर्वमलौकिकं ध्येयं, कुतः कार्यस्य ध्यानकार्यस्य मोक्षस्याख्यानात् अलौकिकत्वाभिधानादित्यर्थः ॥ **इन्द्रादाविवेति** ॥ यः सहस्राक्षः स इन्द्र इतिवत्साक्षात्कृतभगवद्गुणानां यत्सर्वविषयं तदीश्वरज्ञानमित्याद्युपदेशेन तदविदुषामपि प्रतीतेरिति भावः ॥

॥ इति कार्या(ख्याना)धिकरणम् ॥ ११ ॥

## १२. समानाधिकरणम्

॥ ॐ समान एवञ्चाभेदात् ॐ ॥ २० ॥

अपूर्वत्वेऽपि समानानामेवोपसंहारः । न तु त्रिविक्रमत्वादीनां कादाचित्कानां पृथक्त्वेन । नित्यविक्रान्त्यादिष्वन्तर्भावात् ॥

### तत्त्वप्रदीपिका

सर्वानुपसंहारप्रमाणं सर्वोपसंहारार्थं चोक्तम् । योजनाभेदेन वह्वर्थत्वाद्वेदवाक्यानां ब्रह्मादि-पूत्तमाधिकारिषु तात्पर्याधिक्याच्च गुणानामुपास्तावित्थम्भावश्चोक्तः । इदनीमवान्तरोपसंहारप्रकारं दर्शयति ॥ समान एवञ्चाभेदात् ॥ अलौकिकत्वविषयस्य सर्वत्रानुचिन्तनीयत्वज्ञापनार्थमपूर्वत्वेऽ-पीत्युपरि चानुवर्णयति । समानानामेवोपसंहारो न तु क्रियासु विशेषोपसंहारः । नित्यक्रियास्वेव विशेषाणां कादाचित्कानामन्तर्भाव्योपास्तिसम्भवात् । अधिकारिविशेषश्चात्र विवेचनीयः ।

'ब्रह्मा सर्वैर्गुणैश्चैव क्रियासामान्यतश्च गीः ।
गुणसामान्यतो रुद्रो द्रव्यसामान्यतः परः' इति ह्यनुव्याख्याने ॥

### तत्त्वप्रकाशिका

अत्र भगवद्दर्शनसाधनोपासनस्य स्वसदृशफलप्रदत्वसमर्थनादस्ति शास्त्रादिसङ्गतिः । अन्यथार्थ-सामान्यादित्युक्तोपासनानुपपत्तेस्तत्समर्थनीयम् । प्रकृतगुणोपासनं विषयः । किं स्वानुसारिफलप्रदं न वेति सन्देहः । कृष्यादिक्रियासूभयथादृष्टिः सन्देहवीजम् । नोपासनं स्वानुसारिफलप्रदमिति पूर्वः पक्षः । ब्रह्माणीब्रह्मणोरुपासनस्य तदभावात् । तयोर्हि समं विषमं वोपासनं सम्भवति । न च फलं तादृशम् । स्थानैक्यस्य गुणतारतम्यस्य च सद्भावेन फलस्य समविषमत्वात् । न चोपासनमपि तादृगस्त्विति वाच्यम् । समविषमोपासनस्य विरुद्धत्वेनायुक्तत्वात् । अतो यथोपासनं फला-भावादितरे त्वर्थसामान्यादित्युक्तमयुक्तमिति । सिद्धान्तयत्सूत्रं पठित्वा व्याचष्टे ॥ समान इति ॥ नोक्तलिङ्गेनोपासनस्य स्वानुसारिफलप्रदत्वाभावः । ब्रह्माणीब्रह्मणोः फलवदुपासनस्यापि समविषम-त्वात् । ब्रह्माण्या हि सर्वगुणोपसंहारः क्रियासु च सामान्यक्रियोपसंहारोऽस्ति हिरण्यगर्भवत् । न तु तद्वत्त्रिविक्रमत्वादि । कदाचिदभिव्यक्तक्रियोपसंहारः सदा पृथक्त्वेनास्ति । किं तु

(तत्त्वप्रकाशिका)

**नित्यविक्रान्त्यादिसामान्यक्रियास्वन्तर्भाव एवेति । न च वाच्यं त्रिविक्रमत्वादिक्रियाणां लोकविलक्षणत्वेनात्याश्चर्यत्वात्कथं तदुपासनं ब्रह्माणी हास्यतीति । तासामपूर्वत्वेऽपि योग्यस्यैवोपास्यत्वात् । ब्रह्माण्याश्च नित्यं तदुपास्तियोग्यताभावादिति भावः ।**

## गुर्वर्थदीपिका

इति कार्याख्यानादिति वदता अलौकिककार्याख्यानादिति सूत्रार्थस्सूचितो भवति । एवं च पूर्वोक्तरीत्या गुणानामपूर्वत्वेऽपि समाने स्वयोग्यतायाः समाने ब्रह्मणा क्रियमाणबहुगुणोपासनया च समाने गुणसमूह एवोपसंहारः । न तु स्वायोग्यत्रिविक्रमत्वादिक्रियासु । तासामपि क्रियात्वेन समाने नित्यविक्रान्त्यादावभेदादुपसंहारः । न तु पृथक्त्वेनेति सूत्रस्य फलितार्थमाह **अपूर्वत्वेऽपीति** ॥ एवं च सौत्रश्चशब्दोऽप्यर्थोऽवधारणार्थश्चेत्युक्तं भवति ।

## भावबोधः

**स्वसदृशेति** ॥ 'कार्याख्यानादपूर्वम्' इत्यत्रोपासनस्य स्वानुसारिफलप्रदत्वनियमेन अलौकिकमोक्षार्थमलौकिकगुणोपासनं कर्तव्यमित्युक्ते उपासनस्य स्वानुसारिफलप्रदत्वमेव नास्तीत्याक्षेपोत्थानादनन्तरसङ्गतिरिति भावः । अर्थसामान्यादित्युक्तोपासनानुपपत्तेरिति तु कण्ठोक्ताक्षेपप्रदर्शनपरम् । यद्वा, यद्यपूर्वं भगवद्गुणजातमुपास्यं स्यात् तर्हि त्रिविक्रमत्वादीनामपि अपूर्वत्वाद्ब्रह्माण्युपास्यत्वं स्यात् । ततश्च ब्रह्माणीब्रह्मणोरुपासनयोः साम्ये फलसाम्याभावेन तेनोपासनस्य न स्वानुसारिफलमित्याक्षेपोत्थानात् अनन्तरसङ्गतिः । अत एवोक्तं भाष्ये अपूर्वत्वेऽपि समानानामेवेति ॥ **किमित्यादि** ॥ अत्र भगवद्गुणोपासनं किं स्वानुसारिफलप्रदं न भवत्युत भवतीति चिन्ता तदर्थं ब्रह्माणीब्रह्मणोः फलवदुपासनमपि समविषमं न सम्भवत्युत सम्भवतीति । तदर्थं त्रिविक्रमत्वादिक्रियाविशेषाणां ब्रह्माणीब्रह्मभ्यामनुपास्योपास्यत्वे न युज्येते उत युज्येते इति । ब्रह्मणश्च ब्रह्माण्याश्च स्थानैक्यं तारतम्यं च यथायोग्यगुणोपासनं मुक्तावाधिक्यं न भवतीत्यत्र लिङ्गमिति न्यायविवरणं मनसि निधाय पूर्वपक्षमाह– **नोपासनमिति** ॥ **स्थानैक्यस्येति** ॥ उभयोरपि सायुज्यभाक्त्वादिति भावः ॥ **गुणतारतम्यस्येति** ॥ आनन्दादितारतम्यस्य श्रुतिसिद्धत्वादिति भावः । समविषमोपासनायुक्तेरिति न्यायविवरणं तन्निवर्तनीयाशङ्कानिरासपूर्वकं व्याचष्टे– **न**

(भावबोधः)

**चोपासनमपीति** ॥ तादृक्फलवत्समविषममित्यर्थः ॥ **विरुद्धत्वेनेति** ॥ उभयोपासनस्य सर्वगुणक्रियावतारादौ साम्ये वैषम्यायोगाद्वैषम्ये च साम्यायोगादिति भावः ।

'यथाशक्ति स्मृतान् धात्रा गुणान् विष्णोः सरस्वती ।
स्मरेत् त्रैविक्रमाद्यास्तु नित्यविक्रान्तिपूर्वकाः ॥
कदाचिल्लोपयेद्देवी स्थानैक्यं न गुणैस्ततः ।
साम्यं तयोर्यथा विष्णोर्गुणोपासाफलं भवेत् ॥'

इति न्यायविवरणोदाहृतस्मृत्यनुसारेण न तु त्रिविक्रमत्वादीनामित्यादिभाष्यं योजयति– **ब्रह्माण्यादीत्यादिना** ॥ एतच्च 'क्रियाव्यक्त्यात्मनोः स्थितः' इत्यनुव्याख्यानानुसारेण बोध्यम् । 'कादाचित्कात्मनास्थिरः' इति अनेन अनित्यत्वं क्रियाणामभिधीयते । उत्तरसूत्रविरोधादित्यभिप्रेत्य 'कदाचिदभिव्यक्तानाम्' इति व्याख्यातम् । 'कदाचिल्लोपयेत्'इत्युक्तत्वात् 'सदा' इत्युक्तम् । पृथक् तेन त्रिविक्रमत्वादिविशेषाकारेणेत्यर्थः । नित्यविक्रान्त्यादिसामान्यक्रियास्विति । अनेन यथाशक्तिक्रिया देव्या इति न्यायविवरणमप्युक्ततात्पर्यं भवति ।

## भावदीपः

**स्वसदृशेति** ॥ पर्यवसितार्थोऽयमर्थसामान्यादित्यस्याक्षेपसमाधानरूपप्रयोजनाय वक्ष्यमाणन्यायविवरणानुरोधेनोक्तः । मुखतस्तु पूर्वत्रानन्दादिरूपगुणक्रियादिभगवद्धर्मोपास्तावलौकिकत्वरूपेत्थंभाव उक्तोऽत्र तु भगवत् क्रियारूपधर्मेष्वलौकिकेष्वप्यधिकारिभेदेन सामान्यरूपेत्थंभाव उच्यते । अत एव पूर्वानन्तर्यमस्येति ध्येयम् । अत्र न्यायविवरणे ब्रह्मणश्च ब्रह्माण्याश्च स्थानैक्यं गुणतारतम्यं च यथागुणोपासनं मुक्तावाधिक्यं न भवतीत्यत्र लिङ्गं समविषमोपासनाऽयुक्तेरिति ब्रह्माणीब्रह्मसम्बन्धिनोः फलोपासनयोर्वैरूप्यमुपासनायाः स्वानुसारिफलदत्वाभावे लिङ्गमित्युक्तं तत्प्रयोगेण व्यनक्ति ॥ **नोपासनमिति** ॥ तदभावात् स्वानुसारिफलदत्वाभावादित्यर्थः । कथमित्यतस्तदुभयसम्बन्ध्युपासनं तावदेकरूपमित्याह ॥ **तयोर्हीति** ॥ **सममिति** ॥ द्वयोरपि सर्वभगवद्गुणक्रियादिविषयमित्यर्थः ॥ **विषमं वेति** ॥ ब्रह्मणः सर्वगुणादिविषयं देव्यास्ततो न्यूनकतिपयगुणादिविषयमिति वा सम्भवतीत्यर्थः । उपासकेषु तथा दर्शनादिति भावः । समं विषमं

(भावदीपः)

नोपासनं सम्भवतीत्यपपाठः । तथात्वे न चोपासनमपीत्याद्युत्तरवाक्यास्वारस्यात् । किं तु **समं विपमं वोपासनं सम्भवति** इत्येव पाठः साधुः ॥ **तादृशमिति** ॥ द्वयोः समरूपमेवेति वा विषमरूपमेवेति वा एकैकं रूपं न भवतीत्यर्थः । कुत इत्यतः स्थानैक्यं गुणतारतम्यं चेत्यस्य भावमाह ॥ **स्थानैक्यस्येति** ॥ सायुज्यभाजामेकत्रैव भगवति स्थितेः प्राणो वा आशाया भूयान्, इत्यादिश्रुत्यादिना ज्ञानानन्दादिगुणतारतम्यस्य सिद्धेरिति भावः । प्रागुक्तहेतोरसिद्धिशङ्का-निरासकतया समविषमोपासनाऽयुक्तेरित्येतद् व्यनक्ति ॥ **न चेति** ॥ **तादृशमिति** ॥ समं विषमं चेति द्विरूपमित्यर्थः । फलोक्त्योपसंहरति ॥ **अत इति** ॥ ब्रह्माणीब्रह्मसम्बन्ध्युपासनाफलयो-र्वैरूप्यरूपलिङ्गादित्यर्थः । पूर्वपक्षप्रतिक्षेपरूपसाध्यहेतू अध्याहृत्य हेतूपपादकत्वेन समाना-नामित्यादिभाष्यार्थमाह ॥ **नोक्तलिङ्गेनेति** ॥ भाष्यस्य क्रियामात्रविषयत्वं मत्त्वा यथाशक्ति स्मृतान्धात्रा गुणान् विष्णोः सरस्वती । स्मरेदित्यन्यत्रोक्तस्मृत्यनुरोधेन गुणविषये साम्यमाह ॥ **सर्वगुणेति** ॥ हिरण्यगर्भवदितीहाप्यन्वेति ।

ननु कादाचित्कानां नित्यविक्रान्त्यादिष्वन्तर्भावादित्यागन्तुकविशेषाणां नित्यक्रियास्वन्त-र्भावोक्तिरयुक्ता भाष्ये इत्यतोऽभिव्यक्तित एव न स्वरूपत एव कादाचित्कत्वम् । येनोक्तदोषः स्यादिति भावेनाह ॥ **कदाचिदभिव्यक्तेति** ॥ शक्त्यात्मना स्थिरत्वादिति भावः । अपूर्वत्वेऽ-पीत्यनुवादसूचितशङ्कां व्यक्तीकृत्य निराह ॥ **न च वाच्यमिति** ॥ समानानामित्यस्य साधारणा-नामित्यर्थमुपेत्य व्याख्या कृता इदानीं योग्यानामित्यर्थमुपेत्याह ॥ **योग्यस्यैवेति** ॥ अत्र यद्यपि ब्रह्माणीब्रह्मणोरिव सायुज्यभाजामशेषाणामपि स्थानैक्यगुणतारतम्ययोः सत्वेन समविषमफलानु-रोधेनोपासनस्यापि 'ब्रह्मा सर्वैर्गुणैश्चैव क्रियासामान्यतश्च गीः । गुणसामान्यतो रुद्रो द्रव्यसामान्यतः परः' इत्यनुव्याख्यानोक्तदिशा समविषमत्वमप्यस्ति तथापि सम्बन्धादिति सूत्रे क्रियानित्यत्वोपपादनात्तदनुरोधेन ब्रह्माणीब्रह्मणोरेवोक्तिरित्याहुः ।

## अभिनवचन्द्रिका

**नोपासनमिति** ॥ ब्रह्मोपासनं स्वानुसारिफलप्रदस्वभावं नेत्यर्थः । तत्र हेतुमाह **ब्रह्माणी-ब्रह्मणोरिति** ॥ स्वानुसारिफलाजनकत्वादित्यर्थः । यज्जातीयेषु किञ्चित् असत्यपवादे यज्जनकं न भवति, तज्जातीयं सर्वं तज्जननस्वभावं न भवति । यथा कदळीकाण्डजननस्वभावविधुरं

(अभिनवचन्द्रिका)

वेत्रवीजमिति । व्याप्तिसद्भावात् स्वानुसारिफलप्रदत्वाभावहेतोः पक्षव्यापित्वाभावो न दोषाय । व्याप्तिसद्भावे पक्षमात्रव्यावृत्तस्यापि नदीपूरस्य वृष्ट्यनुमापकत्वदर्शनादिति भावः । स्वानुसारिफलाजनकत्वहेतोःसमुचितदेशे सिद्धिं व्युत्पादयितुं पीठिकामारचयति– **तयोर्हीति** ॥ **न च फलमिति** ॥ समं वा, विषमं वा, न भवतीत्यर्थः ॥ **विरुद्धत्वेनेति** ॥ आत्मशब्देन यावन्तो ब्रह्मधर्मा युगपत्प्रतीयन्ते, तेषामुपासनं ब्रह्माणीब्रह्मभ्यां कर्तव्यम् । तत्रात्मशब्देन ब्रह्मवदेव ब्रह्मधर्मा ब्रह्माण्याः प्रतीयन्ते चेत्, उभयोरुपासनं सममेव स्यात् न चेत्, विषममेव स्यात् । अतः सम-विषमत्वमुपासने विरुद्धमिति भावः ॥ **यथोपासनमिति** ॥ उपसनानुसारिफलनियमाभावादित्यर्थः ।

## वाक्यार्थमुक्तावली

**स्वसदृशेति** ॥ एतेन कार्याख्यानादित्यत्र मोक्षाख्यकार्यस्यालौकिकत्वात् अलौकिकगुणोपासनं कार्यम् । उपासनस्य स्वसदृशफलप्रदत्वादिति यदुक्तं तस्याक्षेपेण समाधानात् अनन्तरसङ्गतिरिति भावः । यद्वा यद्यपूर्वगुणजातमुपास्यं स्यात् तर्हि त्रिविक्रमत्वादीनामप्यपूर्वत्वात् ब्रह्माण्युपास्यत्वं स्यात् ततश्च ब्रह्माणीब्रह्मणोरुपासनासाम्ये फलसाम्याभावेन नोपासनस्य स्वानुसारिफलप्रदत्व-मित्याक्षेपेणोत्थानादनन्तरसङ्गतिः । अत एवोक्तं भाष्ये । **अपूर्ववत्वेऽपि समानानामेवेति** ॥ **किमिति** ॥ अत्र भगवद्गुणोपासनं स्वानुसारिफलप्रदं न भवत्युत भवतीति चिन्ता । तदर्थं ब्रह्माणीब्रह्मणोः फलवदुपासनमपि समविषमं न भवत्युत भवतीति । तदर्थं त्रिविक्रमत्वादिक्रियाणां ब्रह्माण्या नित्यमुपास्यत्वं ब्रह्मणोपास्यत्वमिति विशेषो नास्त्युतास्तीति । सिद्धान्ते लिङ्गस्या-सिद्ध्युक्त्या सूचितं लिङ्गमित्युक्तन्यायं दर्शयन्पूर्वपक्षयति ॥ **नोपासनमिति** ॥ ब्रह्मोपासनं स्वानुसारिफलप्रदस्वभावं नेत्यर्थः । कुतो नेत्यतो यद्ब्रह्मोपासनं तत्स्वानुसारिफलप्रदमिति व्याप्तेः ब्रह्माणीब्रह्मोपासने व्यभिचारादित्यत आह ॥ **ब्रह्माणीति** ॥ तदुपपादयति ॥ **तयोरिति** ॥ **स्थानैक्यस्येति** ॥ व्याप्तिस्थानैक्यस्येत्यर्थः । तदुक्तम् । 'ब्रह्मा सरस्वती वायुः मन आद्यभि-मानिनः । त्रय एते समा व्याप्तौ ब्रह्मेरौ गुणतोऽधिकौ' इति बृहद्भाष्ये । सत्यलोकादौ सर्वाधि-पत्येन स्थानैक्यस्येति वा । भावबोधे तु उभयोरपि सायुज्यभाक्त्वादिति भाव इत्युक्तम् ॥ **विरुद्ध-त्वेनेति** ॥ वैषम्ये साम्यायोगात्साम्ये वैषम्यायोगादिति भावः । पूर्वपक्षं प्रतिक्षिपन् सूत्रतात्पर्यमाह ॥ **नोक्तलिङ्गेनेति** ॥ ब्रह्माणीब्रह्मणोरुपासनव्यभिचारदर्शनलिङ्गेनेत्यर्थः ॥ **उपासनस्यापीति** ॥ तथा चोपासनस्य विषमत्वेन तत्समविषमफलं ददातीति व्यभिचारदर्शनमिति भावः ।

(वाक्यार्थमुक्तावली)

उपासनस्य समविषमत्वं दर्शयितुं सूत्रम् । तत्र चोऽप्यर्थेऽवधारणे च । चशब्दः समानेत्यनेनान्वेति । **विषयसप्तमी चेयम्** । उपसंहार इत्यनुवर्तते इत्याशयेन भाष्ये समानानामेव उपसंहार इत्युक्तम् । अवधारणव्यावर्त्यप्रदर्शनाय । न तु त्रिविक्रमत्वादीनां कादाचित्कानां पृथक्त्वेनेति । तत्र समानानामेवेत्यनेनोपसंहारस्योभयोः साम्यमुक्तं नन्वित्यादिना वैषम्यमिति भावेन समानशब्दस्य विशेष्यं दर्शयन् व्याचष्टे ॥ **ब्रह्माण्या हीति** ॥ **सर्वेति** ॥ स्वज्ञेयसर्वेत्यर्थः ॥ **सामान्यक्रियोपसंहार इति** ॥ नित्यविक्रान्त्यादिसामान्यक्रियोपसंहार इत्यर्थः । त्रिविक्रमत्वादीत्यादिपदेन रावणहनननवनीतभक्षणादि गृह्यते । उत्तरसूत्रानुसारेण कादाचित्कानामित्यस्यार्थमाह ॥ **कदाचिदभिव्यक्तानामिति** ॥ 'गुणांस्त्रैविक्रमाद्यांस्तु नित्यविक्रान्तिपूर्वकैः । कदाचिल्लोपयेद्देवी'इति न्यायविवरणानुसारेणाध्याहृतम् ॥ **सदेति** ॥ **पृथक्त्वेनेति** ॥ त्रिविक्रमत्वादिविशेषाकारेणेत्यर्थः ।

ननु त्रैविक्रमादिक्रियाणां तत्त्वेनानुपासने वाण्यास्तदनुपासनमेव भवेदित्याशङ्क्य तत्परिहारायाभेदादपृथक्करणादन्तर्भावादिति प्रवृत्तं भाष्यं व्याचष्टे ॥ **किन्त्वित्यादिना** ॥ नित्यविक्रान्तिर्नाम नित्यसञ्चारः । नित्यं चरन्ती लोकसाक्षिणावित्यादेः । आदिपदेन रमारमणादिनित्यव्यक्तक्रियान्तरग्रहणम् । एतेषां सामान्यत्वं नाम सर्वदा फलोन्मुखत्वेन व्यक्तत्वम् । त्रिविक्रमत्वादि कदाचिद्व्यक्तमिति विशेषक्रिया । यद्वा नित्यविक्रान्त्यादिरूपासु नित्यमनन्तक्रियाः सन्तीति सामान्यत उपास्यासु क्रियासु त्रिविक्रमत्वादीनामन्तर्भावात्सामान्याकारेणैवोपास्तिः । न तु पृथक्त्वेन विशेषाकारेणेत्यर्थः । तदुक्तं नयचन्द्रिकायाम् । घटस्रष्टा पटस्रष्टेत्यादिविहाय स्रष्टेत्यादीति । सूत्रे एवं चेत्यनेनापूर्वमित्युक्तमपूर्वत्वं परामृश्यत इति भावेन प्रवृत्तमपूर्वत्वेति भाष्यं गुणानां सामान्यक्रियाणां चोपसंहार इति विशेष्यमनुक्त्वा समानानां स्वयोग्यतासमानासु अशक्यानामिति समानपदप्रयोगे च निमित्तं वदन् यथाशक्तिक्रियेत्युक्तन्यायं योग्यतानुसार्येवोपासा क्रियेति सूत्रभाष्यारूढं दर्शयति ॥ **न च वाच्यमित्यादिना** ॥ त्रिविक्रमत्वं लोकमानार्थं भगवत्कृतपादविक्षेपक्रिया ।

## तत्त्वसुबोधिनी

कार्याख्यानादपूर्वमित्यत्रोपासनस्य स्वानुसारिफलप्रदत्वनियमेनालौकिकमोक्षार्थं अलौकिकगुणोपासनं कर्तव्यमित्युक्ते उपासनस्य च अनुसारिफलप्रदत्वमेव नास्तीत्याक्षेपोत्थानादनन्तरसङ्गतिरिति भावः । अर्थसामान्यादिति तु कण्ठोक्ताक्षेपप्रदर्शनपरम् । यद्वा यद्यपूर्वं भगवद्गुणजातमुपास्यं तर्हि त्रिविक्रमत्वादीनामप्यपूर्वत्वात् ब्रह्माण्युपास्यत्वं स्यात् ततश्च ब्रह्माणीब्रह्मणोरुपासनासाम्ये फलसाम्याभावेन नोपासनस्यानुसारिफलप्रदत्वमित्याक्षेपोत्थानादनन्तरसङ्गतिः । अन्यथेति स्वसदृशफलदत्वासमर्थने इत्यर्थः । तदभावात् । स्वानुसारिफलप्रदत्वात् ॥ **स्थानैक्यस्येति** ॥ उभयोरपि सायुज्यभाक्त्वादिति भावः ॥ **गुणतारतम्येति** ॥ आनन्दादितारतम्यस्य श्रुतिसिद्धत्वादिति भावः । तादृक् फलवत्समविषयमित्यर्थः ॥ **विरुद्धत्वेनेति** ॥ उभयोपासनस्य सर्वगुणक्रियावत्तारादौ साम्ये वैषम्यायोगादित्यर्थः । कथमुपासनस्य समविषयत्वमित्यतः तद्दर्शयति ॥ **ब्रह्माण्या हीति** ॥ कादाचित्कामिति उक्तनित्यत्वप्रतीतिः स्यादतः तदर्थमाह ॥ **कदाचिदभिव्यक्तेति** ॥ कदाचित्तस्यापि विशेषमूलक्रियोपसंहारोऽस्तीत्यत सदैवेत्युक्तम् । पृथक्त्वेन त्रिविक्रमत्वादिविशेषाकारेणेत्यर्थः ।

## वाक्यार्थविवरणम्

**तदभावादिति** ॥ स्वानुसारिफलप्रदत्वाभावादित्यर्थः । तदुपपादयति ॥ **तयोरिति** ॥ तादृशं समं विषमं वा फलं कुतो वक्तुं न सम्भवतीत्यत आह ॥ **स्थानैक्येति** ॥ ब्रह्माणीब्रह्मणोरुभयोरपि सायुज्यभाक्त्वेन तल्लक्षणं फलं तावत्सममस्ति । सरस्वत्यपेक्षया शतगुणाधिक्यं ब्रह्मणः श्रुतिसिद्धमस्तीति गुणातारतम्यलक्षणं फलं विषममप्यस्ति । एवं च यदि तयोः सममुपासनं स्यात्तदोपासनानुसारिस्थानैक्यलक्षणफलस्य युक्तत्वेऽपि गुणातारतम्यलक्षणविषमफलसम्भवेऽपि स्थानैक्यरूपसमफलासम्भवादित्यर्थः । एवं तर्हि समविषमोभयफलानुरोधादुपासनमपि तयोः समविषमरूपमेवास्त्वित्याशङ्कते ॥ **न चेति** ॥ उक्तलिङ्गेन । फलस्य समविषमत्वरूपलिङ्गेन । नन्वेकविषयकोपासनस्य समत्वं विषमत्वं च विरुद्धमित्यतो गुणविषये समोपासनम् । क्रियाविषये च विषमोपासनमिति विषयभेदान्न विरोध इत्याह ॥ **ब्रह्माण्या हीति** ॥ ब्रह्माण्या हिरण्यगर्भवत्सर्वगुणोपसंहारोऽस्तीत्यन्वयः । तथा च तयोः स्थानैक्यलक्षणं समफलं युक्तमिति हृदयम् ।

(वाक्यार्थविवरणम्)

सामान्यक्रियापदग्रहणव्यावर्त्यमाह ॥ **न त्विति** ॥ **तद्वत्** ॥ हिरण्यगर्भवत् ॥ **पृथक्त्वेन** ॥ सामान्यक्रियान्तर्भावेन । 'कदाचिल्लोपयेद्देवी' इति नित्यविक्रान्त्यादिष्वन्तर्भावलोपेन त्रिविक्रमत्वादिविशेषाकारेण कदाचित्क्रियोपसंहारस्य श्रुतिसिद्धत्वात् सदेत्युक्तम् ॥ **नित्येति** ॥ हे नित्यविक्रान्त, इत्येव सामान्यतः क्रियोपसंहारस्तन्मध्ये त्रिविक्रमत्वादिकादाचित्कक्रियाणा-मप्यन्तर्भाव इति ध्येयम् । अपूर्वत्वेऽपि लोकविलक्षणत्वेऽपि । सूत्रे चशब्द एवार्थे । एवम् ॥ **अभेदात्** ॥ भेदाभावात् । भेदेनोपसंहाराभावात् । तथा च त्रिविक्रमत्वादिक्रियाणामपूर्वत्वेऽपि समान एव योग्यक्रियाविषय एवोपसंहारः । तद्व्यावर्त्यमाह ॥ **एवमिति** ॥ एवं ब्रह्मवत् त्रिविक्रमत्वादीनां भेदेन पृथक्त्वेनोपसंहारस्याभावादिति सूत्रार्थः ।

## वाक्यार्थमञ्जरी

**इत्युक्तोपासनेति** ॥ तदुक्तफलोपासनेत्यर्थः ॥ **समं विपमं वेति** ॥ समविषमयोरन्यतर-दित्यर्थः । तादृशमुभयान्यतरत् ॥ **स्थानैक्यस्येति** ॥ उभयोरपि सायुज्यभाक्त्वादिति भावः ॥ **गुणतारतम्यस्येति** ॥ आनन्दादितारतम्यस्य श्रुतिसिद्धत्वादिति भावः ॥ **तादृशमिति** ॥ फलवत्समविषमोभयरूपमित्यर्थः ॥ **विरुद्धत्वेनेति** ॥ उभयोपासनस्य सर्वगुणक्रियावतारादौ साम्ये वैषम्यायोगात्, वैषम्ये साम्यायोगादिति भावः ।

ॐ **समान एवं चाभेदात्** ॐ ॥ एवञ्च एवमपि त्रिविक्रमादिक्रियाविशेषाणामपूर्वत्वेऽपि समाने नित्यविक्रान्त्यादिसामान्यक्रियायामभेदादन्तर्भावेनैवतद्ध्यानं ब्रह्माण्याकार्यं न पृथगित्यर्थः ॥ **उक्तलिङ्गेनेति** ॥ स्थानैक्यगुणतारतम्यरूपेणेत्यर्थः । त्रैविक्रमाद्यास्तु नित्यविक्रान्तिपूर्वकं कदाचि-ल्लोपयेद्देवीत्युक्तत्वादाह ॥ **सदेति** ॥ **पृथक्त्वेनेति** ॥ त्रिविक्रमत्वादिविशेषाङ्गीकारेणेत्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ सम्बन्धादेवमन्यत्रापि ॐ ॥ २१ ॥**

**परमात्मसम्बन्धित्वेन नित्यत्वात् त्रिविक्रमत्वादिष्वप्युपसंहार्यत्वं युज्यते ।**

**'गुणास्त्रैविक्रमाद्याश्च (स्तु) संहर्तव्या न संशयः ।**
**विरिञ्चस्यैव नान्येषां स हि सर्वगुणाधिकः' इति (हि) बृहत्तन्त्रे ॥**

## तत्त्वप्रदीपिका

कादाचित्कव्यक्तीनामपि शक्त्यात्मना नित्यत्वान्नित्यव्यक्तवदेवोपसंहार्यत्वं युज्यते ।

## तत्त्वप्रकाशिका

भवेदेतद्ब्रह्माणीब्रह्मणोः समविषमोपासनं यदि ब्रह्मणः सदा त्रिविक्रमत्वादिक्रियोपसंहारो भवेत् । न चासौ युज्यते । तासामनित्यत्वेन ध्यानकालेऽभावात् । अविद्यमानध्यानस्य चायोगादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ **सम्बन्धादिति** ॥ युज्यते त्रिविक्रमत्वादिविषयेऽप्युपसंहारो हिरण्यगर्भस्य सर्वदा । 'गुणक्रियादयो विष्णोः स्वरूपं नान्यदिष्यते' इत्यादेस्त्रिविक्रमत्वादीनां परमात्मैक्येन नित्यत्वादिति भावः । सम्बन्धस्तादात्म्यम् । अत्र स्मृतिं चाह ॥ **गुणा इति** ॥ अतो यथोपासनं मुक्तौ फलमित्यस्याविरुद्धत्वादुक्तं युक्तमिति सिद्धम् ।

## गुर्वर्थदीपिका

त्रिविक्रमत्वादीनामिति वदता भाष्यकारेणादिपदेनानाद्यनन्तकालेषु क्रियमाणकंसहननजरासन्धवधरावणवधहिरण्यकशिपुहननाद्यनन्तकादाचित्कक्रियाः सङ्गृह्यन्ते । एवं चोपासनाया बहुविषमत्वादानन्देऽपि शतगुणावरत्वमिति ज्ञेयम् । परमात्मैक्येन नित्यत्वादित्यत्र शक्त्यात्मना नित्यत्वादित्यर्थः ।

## भावबोधः

ननु यदि त्रिविक्रमत्वादीनां परमात्मैक्यं कथं तर्हि तत्सम्बन्धस्तेषामित्यत आह– **सम्बन्ध इति** ॥ अत्र प्रथमसूत्रेण ब्रह्माण्याः क्रियासङ्कोचेन ब्रह्माणीब्रह्मणोः समविषमोपासनमित्युक्ते क्रियाणामनित्यत्वात् ब्रह्मणोऽपि क्रियोपासनाऽसम्भवात्, कथं समविषमोपासनमित्याक्षेपसमाधानं द्वितीयेन कृतमिति सूत्रक्रमः ।

## भावदीपः

**अनित्यत्वेनेति** ॥ एषा च शङ्का कादाचित्कानामिति यथाश्रुतभाष्यमनुरुध्योत्थिता । कदाचिदभिव्यक्तेति टीकोक्तिस्तु सम्बन्धसूत्रसिद्धत्वमभिप्रेत्येति ध्येयम् । प्रतिज्ञांशभाष्यं व्याचष्ट

(भावदीपः)

।। **युज्यत इति** ।। सूत्रे नित्यत्वादिति वाच्ये सम्बन्धादित्युक्तिर्नित्यत्वे युक्तिसूचनायेति भावेन भाष्ये परमात्मसम्बन्धित्वेन नित्यत्वादित्युक्तं तद्व्याचष्टे ।। **त्रिविक्रमत्वादीनां परमात्मैक्येन नित्यत्वादिति** ।। नित्यत्वं च शक्त्यात्मनेति भावः । क्रियायाः शक्तिव्यक्तिप्रकारश्चाऽत्ता चराचरेत्यत्राऽनुभाष्यसुधयोर्व्यक्तः । ऐक्यासिद्धिनिरासाय तत्वनिर्णयान्तोदाहृतश्रुत्युक्तिः ।। **गुणक्रियादय इति** ।। आदिपदेन अतो मिथो विभेदो न तेषां कश्चित्कदाचन । स्वरूपेऽपि विशेषोऽस्ति स्वरूपत्ववदेव तु । भेदाभावेऽपि तेनैव व्यवहारश्च वर्तत इति श्रुतिशेषस्येव देशः सर्वत्र पुरुषः स्वतन्त्रः कालनित्यता । इत्यादिषु स्वसम्बन्धो यथैव गुणरूपिणः । गुणित्वं गुणभोक्तृत्वं स्याद्विष्णोस्तच्च स स्वयम् इत्यादिस्मृतेरपि ग्रहः । तेनैक्यादित्येव वाच्ये सूत्रे सम्बन्धादित्युक्तिरैक्येऽपि विशेषबलात्तत्सम्बन्धित्वव्यवहाराविरोधसूचनाय । अत एव भाष्ये सम्बन्धित्वेनेत्युक्तिरिति सूचितम् । सौत्रसम्बन्धपदेन भेदभ्रान्तिं निराह ।। **सम्बन्ध इति** ।। **अत्रेति** ।। उपसंहार्यत्वं युज्यत इत्यर्थे ।। **अत इति** ।। **ब्रह्माणीब्रह्मसम्बन्धिनोः** फलोपासनयोरेकरूपत्वादिति । अयं च सूत्रस्य फलितार्थः ।। **उक्तमिति** ।। इतरे त्वर्थसामान्यादित्युक्तमित्यर्थः ।। **युक्तमिति** फलोक्तिः ।

## अभिनवचन्द्रिका

**ध्यानकालेऽभावादिति** ।। गुणानामुपसंहारो नाम अत्रैते गुणाः सन्तीति विज्ञानम् । ध्यानकाले च तेषामभावात् त्रिविक्रमत्वादयो ब्रह्मणि सन्तीति सदोपसंहारो न युज्यत इति भावः । एतेन ध्यानकाले तेषामभावेऽपि आसीदिति स्मरणसम्भवात् ध्यानाभावोपपादनाय त्रिविक्रमत्वादीनां ध्यानकालेऽसत्त्वोपपादनमयुक्तमिति परास्तम् । सन्तीति विज्ञानस्यैवोपसंहारत्वेनाऽऽसीदिति ज्ञानस्याऽनुपसंहारत्वात् ।

पूर्वपक्षस्तु– भगवदुपासनं न स्वानुसारिफलप्रदस्वभावम् । ब्रह्माणीब्रह्मोपासने स्वानुसारिफलजनकत्वाभावात् । न हि यज्जातीयं यज्जनकं न भवति, तज्जातीयं तज्जननस्वभाववदिति शक्यते वक्तुम् । वेत्रबीजस्य कदळीकाण्डजननस्वाभाव्यापातात् । न च हेतोः समुचितदेशसिद्ध्यभावः शङ्कनीयः । तयोर्हि उपासनं समं विषमं वा, भवेत् । न तु समविषमम् ।

(अभिनवचन्द्रिका)

विरुद्धत्वात् । फलं तु समविषमं, स्थानसाम्येऽपि गुणतारतम्यसद्भावात् । अत उपासनानुसारिफलनियमाभावात्, 'इतरे त्वर्थसामान्यात्' इत्युक्तमयुक्तम् ।

सिद्धान्तस्तु– उपासनं स्वानुसारिफलप्रदमेव । ब्रह्माणीब्रह्मणोरुपासनस्य समविषमत्वेन, तयोरुपासनानुसारिफलस्यैव भावात् । तथा हि ब्रह्माणी हि ब्रह्मवत् सर्वान् गुणानुपसंहृत्यैवोपास्ते । त्रिविक्रमत्वादींस्तु नित्यविक्रान्त्यादिक्रियास्वन्तर्भाव्यैव । न तु पृथक् । योग्यताविरहात् । ब्रह्मा तु त्रिविक्रमत्वादींस्तु सदोपसंहृत्योपास्ते, त्रिविक्रमत्वादिरपि ब्रह्मस्वरूपत्वान्नित्य एव । अतो यथोपासनं मुक्तौ फलसद्भावात् उक्तं युक्तमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

समानपदेन प्रस्तुतनित्यविक्रान्त्यादिभ्योऽन्यत्र त्रिविक्रमत्वादिविषयेऽप्येवं उपसंहारः कार्यः । सम्बन्धात् नित्येशतादात्म्यात् तासां नित्यत्वादिति सूत्रार्थः । अत्राद्ये ब्रह्माणीब्रह्मणोः समविषमोपासनसमर्थनम् । द्वितीये ब्रह्मणोऽपि त्रिविक्रमत्वादिविषये सङ्कोचं सरस्वत्या इवाशक्यसमाधानमिति सूत्रक्रमः ।

## तत्त्वसुबोधिनी

ननु यदि त्रिविक्रमत्वादीनां परमात्मैक्यं तर्हि कथं तत्सम्बन्धस्तेषामित्यत आह ॥ **सम्बन्ध इति** ॥ अत्राद्यसूत्रस्यायमर्थः । ब्रह्मणा समान एव ब्रह्माण्या गुणोपसंहारः च शब्दात् त्रिविक्रमत्वादिक्रियाणां विशेषतो नोपसंहारः, विशेषतो नोपसंहारश्चेत् तर्हि कथमुपसंहार इत्यत उक्तं **अभेदादिति** ॥ नित्यविक्रान्त्यादिसामान्यक्रियान्तर्भाव्यादेवेत्यर्थः । तथा च तदन्तर्भूतत्वेनैवोपसंहार इति । द्वितीयसूत्रस्य तु अन्यत्रापि त्रिविक्रमत्वादिष्वपि एवमुपसंहार्यत्वम् । तासामनित्यत्वात् कथमेतदित्यत उक्तं सम्बन्धादिति परमात्मना सहैक्यादित्यर्थः । तथा च नित्यत्वाद्युज्यते उपसंहार्यत्वमित्यक्षरार्थः ।

## वाक्यार्थविवरणम्

समविषमेति गुणोपसंहारविषये समोपासनं क्रियोपसंहारविषये विषमोपासनम् ॥ **युज्यत इति** ॥ तथा च एवं गुणोपसंहारवदन्यत्राऽपि त्रिविक्रमत्वादिक्रियाविषयेऽपि उपसंहारो युज्यते । कथम् ॥ **सम्बन्धात्** ॥ भगवता तादात्म्यलक्षणसम्बन्धसत्त्वेन तासां नित्यत्वादिति सूत्रार्थः ।

## वाक्यार्थमञ्जरी

अन्यत्रापि त्रिविक्रमत्वादिक्रियाविशेषेऽपि एवमुपसंहारः कार्यो विरिञ्चेन । तासामीशेन सम्बधात् तादात्म्यान्नित्यत्वादित्यर्थः । ननु यदि त्रिविक्रमत्वादीनां परमात्मैक्यं कथं तर्हि तत्सम्बन्धस्तेषां सम्बन्धस्य भेदसापेक्षत्वादित्यत आह ॥ **सम्बन्ध इति** ॥

**॥ इति समानाधिकरणम् ॥ १२ ॥**

## १३. विशेषाधिकरणम्

**॥ ॐ न वा विशेषात् ॐ ॥ २२ ॥**

न वाऽऽत्मशब्देन सर्वगुणगृहीतिः । अधिकारिविशेषात् ।

### तत्त्वप्रदीपिका

अधिकारिविशेषात्सर्वोपसंहारश्चानुपसंहारश्चोक्तः । इदानीमात्मशब्दोऽप्यधिकारिविशेषापेक्षया गुणविशेषसमर्पक इत्याह– **न वाऽऽत्मशब्देन सर्वगुणगृहीतिः सर्वान्प्रति ॥** अधिकारिविशेषात् ।

### तत्त्वप्रकाशिका

अत्रेश्वरदर्शनसाधनात्मशब्दोक्तगुणोपासनस्य सर्वैः कर्तव्यतासमर्थनादस्ति शास्त्रादिसङ्गतिः । अन्यथोक्तमयुक्तं स्यादतः समर्थनीया । प्रकृतात्मशब्दोक्तगुणा एव विषयः । सर्वोपास्या न वेति सन्देहः । गुणद्वैविध्यमेव सन्देहबीजम् । नात्मशब्दोक्तगुणाः सर्वोपास्या इति पूर्वः पक्षः । आत्मशब्दस्य सर्वगुणाभिधायकत्वात् । उक्तमत्रोत्तमाधिकारिणः प्रत्येव सर्वगुणाभिधायको न सर्वान् प्रतीति । सत्यम् । तथाप्यस्यैतावन्त एवोच्यन्त इति प्रातिस्विकनियमाभावेनोपासनाऽसम्भवात् । न च सम्भवति हि कदाचिद्बहुगुणान् कदाचिदल्पानपि बोधयतीति । अत आत्मशब्दोक्तगुणानां सर्वोपास्यत्वाभावादनुपसंहारप्रमाणत्वोक्तिरयुक्तेति । सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ॥ **न वेति ॥** युक्तमेव सर्वेषामात्मशब्दोक्तगुणोपासनम् । तस्य सर्वान्प्रति सर्वगुणाभिधायकत्वाभावात् । कुतः । तस्य सर्वगुणाभिधानशक्तावप्यधिकारिसामर्थ्यविशेषात्तद्योग्याभिधायकत्वात् । न्यूनाधिकोक्तिसम्भवेन प्रातिस्विकनियमाभावादुपासनानुपपत्तिरिति न वाच्यम् । यस्य यावन्तो गुणा आत्मशब्देन युगपत्प्रतीयन्ते तेन तावन्तो ध्यातव्या इति व्यवस्थोपपत्तेः । आत्मशब्देन गुणप्रतीतिरियमेवाभिसंहित्ययोग्यप्रतीतिर्न प्रतीतिरिति भावः ।

### भावबोधः

ननु इदम् 'अन्वयादिति चेत्, स्यादवधारणात्' इत्यनन्तरमेव कर्तव्यम् । आत्मशब्दस्य गुणाभियकत्वविचारपरत्वादिति चेत्, न, तथा सति 'न वा प्रकरणभेदात्' इत्यस्य 'उपसंहारोऽर्था-

(भावबोधः)

भेदात्' इत्येतच्छेषपरत्ववदस्यापि 'अन्वयात्' इत्यधिकरणशेषत्वविज्ञानप्रसङ्गात् । ततश्च तन्मा विज्ञायीत्यधिकरणभेदज्ञापनाय 'कार्याख्यानात्' इत्यनेन व्यवधाने कर्तव्ये उक्तरीत्या तत्सङ्गतस्य 'समानं एवं चेत्' इत्यस्य तदानन्तर्ये स्थिते तदधिकरणद्वयेन व्यवधानस्यादोषत्वात् ।

नन्वस्यापि 'अन्वयात्' इत्येतच्छेषतया अधिकरणैक्यं भवतु को दोषः? इति चेत्, न; 'अन्वयात्' इति चेदित्यनेनाभिप्रेतस्य विभ्रमकरत्वस्य उत्तरत्वनिर्वाहाय 'स्यादवधारणात्' इत्यस्य ब्रह्मादीन् प्रत्येव आत्मशब्दः सर्वगुणाभिधायको नान्यान् प्रतीत्यभिप्रायकत्वे वक्तव्ये तावतैवा-कङ्क्षापूर्तेः 'न वा विशेषः' इत्यस्य वैयर्थ्यप्रसङ्गात् । ननु 'स्यादवधारणात्' इत्यनेन प्रामाणिक-त्वात् परोक्तमात्मशब्दस्य सर्वगुणाभिधायकत्वं स्वीकृत्य 'न वा विशेषात्' इत्यनेन विभ्रमकरत्वं निरस्यत इत्यधिकरणैक्यमयुक्तमिति चेत्, न, तथा सति अनेन सूत्रद्वयेन आत्मशब्दस्य महदल्प-गुणाभिधायकत्वप्रतिपादनेन विभ्रमकरत्वनिरासोऽप्यात्मशब्देनास्यैतावन्त एव चोच्यत इति प्रातिस्विकव्यवस्थित्यभावेन पुनरात्मशब्दोक्तगुणोपासनं न सर्वेषामुपपन्नमिति शङ्कापरिहारार्थं 'प्राप्तेश्चासमञ्जसम्' इतिवदधिकरणान्तरकरणप्रसङ्गात् । न चैवम् 'अङ्गेषु यथाश्रयभावः' 'न वा तत्सहभावश्रुतेः' इत्यनयोः विरोधपरिहाराय अधिकारिभेदेन व्यवस्थाप्रतिपादकमधिकरणान्तरमपि करणीयमिति वाच्यम्, 'समाहारात्' इति सूत्रेण अङ्गाश्रितत्वेन देवतोपासनस्य देवाधिकारिक-त्वोक्त्या 'न वा तत्सहभावश्रुतेः' इत्युक्ततदुपासनाभावस्य देवव्यतिरिक्तविषयत्वस्य सुज्ञानत्वात् ।

ननु विभ्रमकरत्वनिरासाय आत्मशब्दस्य अल्पगुणाभिधायकत्वं प्रतिपादयदिदमेव सूत्रं योग्यताविशेषात् आत्मशब्दः अस्यैतावन्त एव गुणान् प्रतिपादयतीति आत्मशब्दस्य व्यवस्थयैव गुणप्रतिपादकत्वं प्रतिपादयतीति शङ्काद्वयं युगपदेव परिह्रियत इति चेत्, न; विभ्रमकरत्वनिरासाय आत्मशब्दस्य महदल्पगुणाभिधायकत्वोक्तिव्यतिरेकेण अनवस्थिति लक्षणयुक्त्यनुदयेन प्रागेव तन्निरासस्यासङ्गतत्वात् ।

ननु 'स्यादवधारणात्' 'न वा विशेषात्' इति सूत्राभ्यामात्मशब्दस्य महदल्पगुणाभि-धायकत्वप्रतिपादनेन विभ्रमकरत्वं निरस्य 'दर्शयति चेत्' इत्यनेन प्रातिस्विकव्यवस्थिति-प्रतिपादनेनाव्यवस्था निराकर्तुं शक्यत इति चेत्, न; 'दर्शनाच्च' इति सूत्रस्य 'न वा तत्सहभावश्रुतेः' इत्युक्तार्थे प्रमाणमात्रप्रदर्शनपरत्ववदस्यापि श्रुतिरूपप्रमाणमात्रपरत्वेन

(भावबोधः)

चारितार्थ्यात् । अत एवोक्तं तत्त्वप्रकाशिकायां युक्तिसिद्धार्थं श्रुत्यापि समर्थयत्सूत्रमिति । अनेनैवाभिप्रायेण 'स्यादवधारणात्' इत्यस्यैवात्मशब्दस्य महदल्पगुणाभिधायकत्वप्रतिपादकत्व-मङ्गीकृत्य तथापि व्यवस्थाभावादुक्तमयुक्तमिति अभ्यधिकाशङ्काहेतुत्वेन अनवस्थितिरूप-पूर्वपक्षन्यायो योग्यताविशेषाद्व्यवस्थयैव आत्मशब्दस्य महदल्पगुणाभिधायकत्वं प्रागुक्तमभिसंहित-मित्यभ्यधिकाशङ्कानिरासकत्वेन सन्धिरूपसिद्धान्तन्यायश्च अनुव्याख्यानेऽभिहितौ विवृतौ च न्यायविवरणे इति मनसि निधाय एतदधिकरणसम्बन्धित्वेन तन्न्यायविवरणवाक्यं टीकाकारै-र्योजितम् ॥ **सर्वोपास्या इति** ॥ अत्र आत्मशब्दोक्ता गुणाः सर्वोपास्या न भवन्त्युत भवन्तीति चिन्ता । तदर्थमात्मशब्दस्य प्रागुक्तं महदल्पगुणाभिधायकत्वं कदाचिदल्पगुणान् कदाचिद्बहुगुणान् प्रतिपादयतीत्यव्यवस्थितं वोतास्यैतावन्त एव प्रतिपादयतीति व्यवस्थितं वेति । तदर्थं व्यवस्थापक-प्रमाणं नास्त्युत अस्तीति । आत्मशब्देनास्य पुरुषस्यैतावन्तो गुणा उच्यन्ते, इति न्यायविवरणं योजयति–**तथापीति** ॥

ननु शब्दस्य पुरुषव्युत्पत्त्यनुसारेण गुणाभिधायकत्वमिति प्रातिस्विकनियमोपपत्तिरित्यत आह– **कदाचिदिति** ॥ कालभेदेन व्युत्पत्तेः वैशद्यावैशद्यसम्भवेन बहुगुणध्यानायोग्यानां कदाचि-द्बहुगुणान् तद्योग्यानां तु कदाचिदल्पान् गुणान् बोधयतीति । अस्यैतावन्त एवेत्यादिनियमो न सम्भवतीत्यर्थः । यस्य यावन्तोऽर्था युगपत्प्रतीयन्ते तस्य तावन्त इति सन्धेरिति न्यायविवरणं योजयति– **यस्य यावन्त इति** ॥ अभिसंहितेत्यनेन 'सन्धिः' इति 'अभिसन्धिः' इति व्याख्यातम् । अयोग्यप्रतीतिः व्युत्पत्तिवशेन जाता, न प्रतीतिः । ध्यानोपयोगित्वेन विवक्षिता प्रतीतिर्न भवतीत्यर्थः । अत्र प्रथमसूत्रेण आत्मशब्दस्य व्यवस्थया गुणाभिधायकत्वे युक्तिमभिधाय, द्वितीये तदुपोद्बलकश्रुतिप्रमाणोक्तिरिति सूत्रक्रमः ॥

## भावदीपः

**सर्वैः कर्तव्यता समर्थनादिति** ॥ आत्मशब्दात्तत्तदधिकार्यभिमतगुणमात्रप्रतीत्यनियमेन सर्वैर-कर्तव्यत्वशङ्काप्राप्ताविति योज्यम् । तेनात्मेत्येवोपासीतेत्यवधारणेनाऽऽत्मपदोक्तगुणानामवश्यो-पास्यत्वादात्मपदेन च ब्रह्माण्यभिमतगुणेभ्यो न्यूनाधिकगुणोक्तेरपि सम्भवेन सर्वगुणानां क्रिया-

(भावदीपः)

सामान्यमात्रस्य चोक्तिनियमाभावाद् ब्रह्माण्याः प्रागुक्तसर्वगुणोपसंहारः क्रियासामान्योपसंहारश्चायुक्त इति शङ्कनात्पूर्वसङ्गतिरन्वयादित्यनेनापुनरुक्तता च ज्ञेया ॥ **उक्तमयुक्तमिति** ॥ आत्मशब्दाच्चेत्यत्रोक्तमनुपसंहारमानत्वमात्मशब्दस्यायुक्तमित्यर्थः । ब्रह्माण्युपसंहारस्यापि क्रियासु संकोचेनानुपसंहाररूपत्वादिति भावः ॥ **गुणद्वैविध्यमिति** ॥ द्वैविध्यदर्शनमित्यर्थः । पूर्ववद् व्याख्येयम् । अन्वयादिति चेदित्यत्रोक्तावेव प्रतिज्ञाहेतू आह ॥ **नात्मेति** ॥ **सर्वगुणेति** ॥ आप्तव्याप्तेरित्यादेरिति भावः । **तत्रोक्तमेव सिद्धान्तीयपरिहारमाशङ्कते** ॥ **उक्तमिति** ॥ आत्मशब्देनास्य **पुरुषस्यैतावन्तो** गुणा उच्यन्त इति **व्यवस्थित्यभाव** इत्यन्यत्रोक्ताभ्यधिकाशङ्कां व्यनक्ति ॥ **सत्यमित्यादिना** ॥ **उपासनेति** ॥ उपासनस्यासम्भवादित्यर्थः । प्रातिस्विकनियमाभावं व्यनक्ति ॥ **न च सम्भवति हीति** ॥ **फलोक्त्योपसंहरति** ॥ **अत इति** ॥ आत्मपदेन तत्तदधिकारिणः प्रति तत्तदभिमतगुणमात्राभिधाननियमाभावादित्यर्थः । प्रमाणत्वोक्तिरात्म-शब्दस्येति भावः । येन ब्रह्माण्याः प्रागुक्तक्रियाविशेषानुपसंहारो युक्तः । स्यादिति भावः । प्रतिज्ञां बहिरेवोक्त्वा हेतूक्तिपरत्वेन न वेति भाष्यार्थं योजयति ॥ **युक्तिमिति** ॥ **कुत इति** ॥ सर्वाभिधानशक्तत्वात्तदभिधायकत्वाभावः कुत इत्यर्थः । हेतूपपादकत्वेनाधिकारिविशेषादित्येतद् व्याचष्टे ॥ **तस्येत्यादिना** ॥ यस्य यावन्तो अर्था युगपद्ध्यातुं शक्यन्ते तस्य तावन्त इति सिद्धेरिति न्यायविवरणोक्तं प्रागुक्तशङ्कानिवर्तकत्वेन योजयति ॥ **न्यूनाधिकेति** ॥ प्रतीयते ध्यानकाल इत्यर्थः । नन्वात्मशब्दाच्चेत्यत्राऽऽत्मेत्येवोपासीतेत्यात्मशब्दात्प्रतीतानेव गुणा-नुपासीतेत्यर्थस्योक्तिः कथमित्यत आह ॥ **आत्मशब्देनेति** ॥ **इयमेवेति** ॥ ध्यानकाले युगपद्यावतां प्रतीतिः इयमेव न तु व्युत्पत्तिबलाद्यदा कदाचिज्जायमानाऽयोग्यगुणप्रतीतिरित्यर्थः । एवं चाऽऽत्मशब्दो बह्वर्थकोऽपि ध्यानकाले तत्तद्योग्यानेव गुणान् ब्रह्मब्राह्माण्यादीन्प्रति प्रकाशयतीति न कोऽपि दोष इति भावः ।

## अभिनवचन्द्रिका

**आत्मशब्दोक्तगुणोपासनस्येति** ॥ सर्वोपास्यानां गुणानां सङ्ख्यानिर्देशपरिच्छेदेन आत्मशब्दोक्तत्वसमर्थनादित्यर्थः । **प्रकृतात्मशब्देति** ॥ सर्वोपास्या गुणा विषयः । सङ्ख्यानिर्देशाभ्यां आत्मशब्दोक्ताः सन्त उपास्या न वेति सन्देह इत्यर्थः । एतेन आत्मशब्दोक्ता गुणाः सङ्ख्यानिर्देशाभ्यां क्लृप्ता न वा ? न द्वितीयः । विषयनिर्णयाभावेन विचारानुदयप्रसङ्गात् । आद्येऽपि किं

(अभिनयचन्द्रिका)

चत्वार एवेति निर्णयः, उत सर्वेऽप्यात्मशब्दोक्ता इति ? नाद्यः 'सर्वगुणाभिधायकत्वात्' इत्युत्तरग्रन्थविरोधात् । न द्वितीयः । सर्वेषां सर्वगुणोपासनानधिकारस्य निश्चितत्वेन सन्देहानुदय-प्रसङ्गादिति परास्तम् । योग्यताभेदेन सङ्ख्यानिर्देशाभ्यां क्लृप्तगुणेषु एतद्विधिबोध्यत्वाबोध्यत्व-सन्देहाङ्गीकारात् ॥ **गुणद्वैविध्यमेवेति** ॥ आनन्दादिगुणेषु केनचिच्छब्देनानुक्तत्वं, केनचिदुक्तत्वं च दृश्यते । तत्सन्देहबीजमित्यर्थः । एतेन सर्वगुणेषु आत्मशब्दोक्तत्वाङ्गीकारात् गुणद्वैविध्यमेव नास्तीति गुणद्वैविध्याभिधानमयुक्तमिति परास्तम् । नात्मशब्दोक्तगुणा इति । सर्वोपास्या गुणाः सङ्ख्यानिर्देशाभ्यां नैतद्विधिबोध्या इति पूर्वपक्ष इत्यर्थः ॥ **आत्मशब्दस्येति** ॥ एतद्विधेः निर्देशेन गुणानन्त्याभिधायकत्वेन, परिच्छेदेन दशपञ्चादिसङ्ख्याऽनभिधायकत्वादित्यर्थः । उत्तरं शङ्कते **उक्तमत्रेति** ॥ उत्तमातिरिक्तान् प्रति आनन्त्यानभिधायकत्वात् परिच्छेदेन सङ्ख्याभिधायकत्व-मुपपद्यत इति भावः । अभ्युपगमेन समाधत्ते **सत्यमिति** ॥ वस्तुतस्तु तदुक्तमसम्भावितमेवेत्याह **न चेति** ॥ स्वभावानपायादिति भावः । 'सम्भवति हि' इति पाठे तु चतुर्गुणोपासकं प्रति कदाचित्तद्योग्यान्, अल्पान् गुणान् अवबोधयति । कदाचित्तु अधिकव्युत्पत्तिवशेन अयोग्यानपि बहून् गुणान् बोधयतीति, हि यस्मात्सम्भवति अतः प्रातिस्विकनियमोऽयुक्त इत्यर्थो बोध्यः ॥ **युक्तमेवेति** ॥ सङ्ख्यापरिच्छेदेन सर्वोपास्यगुणानाम् आत्मेति विधिबोध्यत्वं युक्तमेवेत्यर्थः । ननु आत्मशब्दस्य आनन्त्याभिधायकत्वात् कथं परिच्छेदेन गुणाभिधायकत्वमित्यत आह– **तस्येति** ॥ किं सर्वगुणाभिधानसामर्थ्याभावात्, सर्वान् प्रति गुणाभिधायकत्वाभाव इति पृच्छति– **कुत इति** ॥ **तस्य सर्वगुणेति** ॥ अस्त्येव सर्वगुणाभिधाने आत्मशब्दस्य शक्तिः, तथापि न सर्वान् प्रति सर्वगुणानभिधत्ते । 'तत्त्वमस्यादिवाक्यस्य तत्तद्योग्यतावशेन प्रमाऽप्रमाजनकत्ववत्, आत्मशब्द-स्यापि तत्तदधिकाररूप सहकारिविशेषसमवधानेन तत्तद्योग्यगुणाभिधायकत्वादिति भावः । ननु आत्मशब्देन प्रतीता गुणा ध्यातव्या इति सूत्रकृतोऽभिप्रेतं, तत्कथं आत्मशब्देन कालान्तर-प्रतीतानां सूत्रकारविरुद्धमध्यातव्यत्ववचनमित्यत आह– **आत्मशब्देनेति** ॥ आत्मशब्देन कालान्तरे जातापि अयोग्यगुणप्रतीतिः उपसंहारोपयोगिनी प्रतीतिरिति नाऽभिसंहितेत्यर्थः ॥

पूर्वपक्षस्तु– न 'आत्मेत्येवोपासीत' इति विधिः सर्वाधिकारिसाधारणः । अनन्तगुणाभि-धायकाऽऽत्मशब्दघटितत्वात् । न चाऽऽत्मशब्दस्य उत्तमान् प्रति सर्वगुणाभिधायकत्वेऽपि

(अभिनवचन्द्रिका)

तदितरान् प्रति तदभावात्, तत्तद्योग्यगुणमात्राभिधायकत्वात् सर्वसाधारण्यमुपपन्नमिति वाच्यम् असम्भवात् । न हि शब्दो बुद्धिमान्, येनोत्तमत्त्वादधिकारिविशेषं प्रति सर्वगुणान् बोधयित्वा, अनुत्तमत्वादपरं प्रति अल्पानेव बोधयतीति स्यात् । ततश्च अनुपसंहारप्रमाणत्वोक्तिरयुक्तेति ।

सिद्धान्तस्तु– विधिरयं सर्वाधिकारिसाधारणः । तांस्तान् प्रति तत्तद्योग्यगुणाभिधायकत्वात् । न चाऽसम्भवः । अधिकारमपेक्ष्य 'तत्त्वमस्यादिवाक्यस्य प्रमाऽप्रमाजनकत्ववत्, सर्वगुणाभिधायकस्याप्यात्मशब्दस्य तत्तद्योग्यतामपेक्ष्यैव गुणबोधकत्वसम्भवात् । चतुर्गुणोपासकस्य आत्मशब्दात् पञ्चमगुणस्याप्यवबोधसम्भवेन, प्रातिस्विकानियमाऽयोगात् उपासनाऽनुपपत्तिरिति न वाच्यम् । यस्य 'युगपत्स्वभुजाविव आत्मशब्देन यावन्तो गुणाः प्रतीयन्ते तावन्त एवोपास्या इति नियमसम्भवात् । 'सर्वान् गुणान् आत्मशब्दो ब्रवीति ब्रह्मादीनामितरेषां न चैवम्' इति श्रुतेश्च । तस्मादात्मशब्दोक्तगुणानां सर्वोपास्यत्वात् उक्तं युक्तमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

त्रिविक्रमत्वादीनां ब्रह्माण्याः पृथगनुपासनवदात्मशब्दोक्तगुणानामपि सर्वैः पृथगुपासितुमशक्यत्वान्न तेषां सर्वैरुपास्यत्वमित्याक्षेपोत्थानात् अनन्तरसङ्गतिः ॥ **अन्यथोक्तमिति** ॥ अन्वयादित्यत्रोक्तमित्यर्थः ॥ **सर्वोपास्या इति** ॥ आत्मशब्दोक्तगुणाः सर्वोपास्या न भवन्त्युत भवन्तीति चिन्ता । तदर्थमात्मशब्दः सर्वान् प्रति सर्वगुणाभिधायक उतोत्तमान् प्रत्येवेति । तदर्थमात्मशब्देनास्यैतावन्त एवोच्यत इति प्रातिस्विकगुणोक्तिनियामकं नास्त्युतास्तीति ॥ **सर्वगुणाभिधायकत्वादिति** ॥ तथा च श्रुतचतुर्गुणोपासनस्य पुंसो विभ्रमकरत्वादुपासनानिश्चय इति भावः । स्यादवधारणादित्यत्र ब्रह्मादीन् गुणाधिकान् प्रत्येव सर्वगुणाभिधायकत्वं स्यान्नान्यान् प्रतीति गुणाधिक्यन्यायावष्टम्भेन विभ्रमकरत्वस्य निरस्तत्वात् गतार्थतेत्याशङ्क्य व्यवस्थितिलक्षणन्यायावष्टम्भेनाभ्यधिकशङ्कामाह ॥ **उक्तमत्रेत्यादिना** ॥ **अस्यैतावन्त इति** ॥ आत्मशब्देनास्य मनुष्योत्तमस्यैतावन्तश्चत्वार इत्यादिप्रातिस्विकनियमाभावेनेत्यर्थः ॥ **प्रातिस्विकनियमाभावमुपपादयति** ॥ **न सम्भवतीति** ॥ कांश्चित्प्रति कदाचिद्बहुगुणान् तदन्यान् प्रति तु कदाचिदल्पगुणानित्यर्थः । व्याकरणादिपरिश्रमादात्मशब्दनिर्वचनरूपप्रमाणपरिचयभावाभावरूपदशाविशेष-

(वाक्यार्थमुक्तावली)

मादायैकं प्रत्येव बहुगुणाल्पगुणप्रकाशनस्यात्मशब्देन सम्भवात् कांश्चिदल्पगुणानेवेत्यादि व्यवस्थानुपपन्ना । तथा च यस्य यत्प्रतीयते तदेव तेनोपास्यमित्ययोगव्यवच्छेदासम्भवात् आत्मशब्दोक्तस्य न सर्वोपास्यत्वमिति पूर्वपक्ष्यभिप्रायः ।

नन्वभ्यधिकशङ्कयास्य प्रवृत्तत्वेऽन्वयादित्येतदानन्तर्यं युक्तमिति चेन्न, गुणानामलौकिकत्वे व्युत्पत्त्यनुपपत्त्यात्मशब्देन गुणोक्तिरयुक्ता । आत्मशब्दोक्तत्वे लौकिकत्वायोग इत्यात्मशब्देन गुणप्रतिपादनमित्याक्षिप्य कार्याख्यानादित्यत्र समाधानात् । गुणोक्तौ तारतम्याक्षेपात् गुणोक्तिरेव नेत्यस्य प्रथमप्राप्तत्वेन कार्याधिकरणस्यैतदपेक्षया प्राथम्यं समान एवं चेत्यस्यैवं चापूर्वत्वेऽपीति परामर्शाय तदानन्तर्यम् । यथाशक्तिक्रियेत्युक्ततत्सिद्धान्तन्यायावष्टम्भेन सर्वैरात्मशब्दोक्तगुणानामुपासितुमशक्यत्वमाशङ्क्य समाधानादस्य तदानन्तर्यमिति न्यायप्राप्तत्वात् । न वा प्रकरणभेदादित्यस्योपसंहारनयशेषत्ववदस्यापि अन्वयादित्यधिकरणशेषत्वेनैकाधिकरणत्वं युक्तमिति चेन्न गायत्र्यधिकरणस्य ज्योतिरधिकरणशेषत्वे वक्तुं शक्यत्वेऽपि पृथङ्न्यायसूचकत्वात्पृथगधिकरणत्ववत् प्रकृतेऽप्युपपत्तेरिति दिक् । विस्तरस्तु भावबोधे । सूत्रे बहिरेव परमसाध्यं दर्शयति ॥ **युक्तमेवेति** ॥

ननु सर्वेषामात्मशब्दोक्तगुणोपासनमयुक्तम् । आत्मशब्दस्य सर्वान्प्रति सर्वगुणाभिधायकत्वेन विभ्रमकरत्वादित्यतः सर्वान्प्रति सर्वगुणाभिधायकत्वं असिद्धमिति न वेति सूत्रखण्डेनोच्यते । तच्चात्मगृहीतिरित्यपि सर्वेषां सर्वगुणानामिति लभ्यते । वाशब्दो व्यवस्थितविकल्पे । तथा च न वा सर्वेषां सर्वगुणानामात्मपदेन गृहीतिरिति तदर्थं मनसि कृत्वा व्याचष्टे । **तस्य सर्वान् प्रतीति** ॥ नन्वभिधायकत्वं हि शब्दशक्तिः । सा च स्वरूपभूता । पुरुषशक्तिं नापेक्षते । तथा च कुतः सर्वान् प्रति सर्वगुणाभिधायकत्वाभाव इत्याक्षिपति ॥ **कुत इति** ॥ तत्परिहारकत्वेन विशेषादित्यस्याधिकारिविशेषादिति भाष्यं व्याचष्टे ॥ **तस्येति** ॥ अधिकारिसामर्थ्यतारतम्येन तत्तदुपासनायोग्यगुणाभिधायकत्वादित्यर्थः । शब्दस्वाभाव्यान्न सर्वगुणाभिधानशक्तावप्यधिकारिसामर्थ्यतारतम्येन तस्मादेव शब्दात् स्वयोग्यमात्रप्रतीतिरिति भावः ।

ननु शब्दाद्गुणप्रतीतावयं प्रातिस्विकनियमो युक्तः । मनुष्योत्तमान् प्रति चतुर्गुणानेव तदुपासनायोग्यानेव वक्ति । गन्धर्वादीन् प्रति तत्सिद्धान् प्रियशिरस्त्वादीन् वक्ति । देवादीन् प्रति

(वाक्यार्थमुक्तावली)

सम्भृत्यादींश्च वक्तीति न्यूनाधिकोक्तेरयोगात् आत्मशब्दनिरुक्तिः व्याकरणादिना मानुषादीनामपि अधिकगुणप्रतीतेः आनुभाविकत्वादित्याशङ्क्य निषेधति ॥ **न्यूनाधिकेति** ॥ कुतो वाच्यमित्यतः सन्धिरित्युक्तन्यायप्रदर्शकमधिकारिविशेषादित्येतदेव भावबोधेन विवृणोति ॥ **यस्य यावन्त इति** ॥ आत्मशब्देन युगपद्यस्य यावन्तः प्रतीयन्ते तावन्तस्तेन ध्यातव्या इत्यधिकारिविशेषात् सन्धिः समाधानं व्यवस्थेति न्यायार्थ इति भावः ।

नन्वात्मशब्देन ध्यानकाले यावन्तो युगपत्प्रतीयन्ते तावतामुपास्यत्वेन विवक्षितत्वे व्युत्पत्तिवशेनात्मशब्दस्य यावद्गुणप्रत्यायकत्वं तावतामुपास्यत्वमिति प्रागुक्तमयुक्तं स्यादित्यतः तस्यायमभिसन्धिरिति भावेनाह ॥ **आत्मशब्देनेति** ॥ **इयमेवेति** ॥ ध्यानकाले आत्मशब्दार्थानुभवजनितसंस्कारवशेन युगपत्प्रतीतिरेव, न त्वनुभवकाले व्युत्पत्त्यतिशयजन्या गुणप्रतीतिरित्यर्थः । नन्वात्मशब्देन व्युत्पत्तिदशायां सर्वेषां स्वयोग्यगुणप्रतीतिवत् सर्वेषां गुणानां ध्यानकाले युगपत्प्रतीतौ पुनरव्यवस्थेत्यत आह ॥ **अयोग्यं प्रति न प्रतीतिरिति भाव इति** ॥ अयोग्यं प्रति गुणानां न युगपत्प्रतीतिरित्यर्थः । अयोग्यप्रतीतिर्न प्रतीतिरिति भावबोधोपात्तपाठे तु अयोग्यप्रतीतिर्व्युत्पत्तिवशेन जाता । न प्रतीतिर्ध्यानोपयोगित्वेन विवक्षिता प्रतीतिर्न भवतीति भावः ।

## तत्त्वसुबोधिनी

न चेदमधिकरणमन्वयादित्यनन्तरमेव कर्तव्यं आत्मशब्दस्य गुणाभिधायकत्वविचारपरत्वादिति वाच्यम् । तथा सति अन्वयादित्यधिकरणशेषत्वपीडनस्य समान एवेत्यस्य तदानन्तर्यस्थिते अधिकरणद्वयेन व्यवधानस्यादोषत्वात् । न च भवत्वस्य तच्छेषत्वमिति वाच्यम् । अन्वयादिति चेदित्यनेनाभिप्रेतविभ्रमकरत्वपरिहाराय सत्स्यादित्यनेनैव पूर्तेः न चेत्यस्य वैयर्थ्यप्रसङ्गात् । न च स्यादित्यनेन परोक्तात्मशब्दस्य सर्वगुणाभिधायकत्वं स्वीकृत्य न वेत्यनेन विभ्रमकरत्वं निरस्यत इत्यधिकरणैक्यमिति वाच्यम् । तथा सति अनेन सूत्रद्वयेन विभ्रमकरत्वनिरासेऽपि आत्मशब्देनास्य एतावन्त एवोच्यन्त इति प्रातिस्विकव्यवस्थित्यभावेन पुनरात्मशब्दोक्तगुणोपासनं न सर्वेषां उपपन्नमिति शङ्कापरिहारार्थं अधिकरणान्तरकरणप्रसङ्गादिति । अन्यथोक्तमयुक्तं स्यादिति । कर्तव्यताऽसमर्थने आत्मशब्दोक्तमुपास्यं स्यादित्यर्थः ॥ **शङ्कते उक्तमिति** ॥

(तत्त्वसुबोधिनी)

ननु शब्दस्य पुरुषव्युत्पत्त्यनुसारेण गुणाभिधायकत्वमिति प्रातिस्विकनियमोपपत्तेरित्यत: आह ॥ **सम्भवति हीति** ॥ कालभेदेन वैशद्यावैशद्यसम्भवेन बहुगुणाध्यानायोग्यानां कदाचिद्बहुधा गुणान् तद्योग्यानां तु कदाचिदल्पान् बोधयतीति । अस्यैतावन्त एव इति नियमो न सम्भवतीत्यर्थ: । आत्मशब्देनापि योग्यप्रतीतिरेव विवक्षितेत्याह ॥ **आत्मशब्देनेति** ॥ **अयोग्यप्रतीतिरिति** ॥ अयोग्यतत्प्रतीतिर्व्युत्पत्तिवशेन जाताऽपि न प्रतीति: ध्यानोपयोगित्वेन विवक्षितार्थप्रतीतिर्न भवतीत्यर्थ: ।

अत्राद्यसूत्रेणात्मशब्दस्य व्यवस्थया गुणाभिधायकत्वकथनम् । द्वितीये तदुपोद्बलित-श्रुतिरूपप्रमाणोक्तिरिति सूत्रक्रम: ।

## वाक्यार्थविवरणम्

ननु सर्वगुणाभिधायकत्वेऽपि सर्वेषां सर्वगुणोपास्तिप्रसङ्गो नास्तीत्याशङ्कते ॥ **उक्तमत्रेति** ॥ स्यादवधारणादित्यनेनैवेत्यर्थ: ॥ **उपासनेति** ॥ आत्मशब्दोक्तगुणोपासनेत्यर्थ: । उपासना-सम्भवमेवोपपादयति ॥ **सम्भवति हीति** ॥ बहुगुणान् अल्पाधिकारिण: प्रत्यपि बुद्धि-वैशद्यवशादिति शेष: । अल्पान् गुणान् उत्तमाधिकारिण: प्रत्यपि बुद्ध्यवैशद्यवशेनेति शेष: ॥ **अनुपसंहारेति** ॥ गुणान्तरव्यावृत्तिकथनपूर्वकमात्मत्वस्य सर्वोपासनविधानादनुपसंहार प्रमाणत्व-मात्मशब्दाच्चेत्युक्तमयुक्तमित्यर्थ: ॥ **तत्तद्योग्येति** ॥ तत्तदुपासनायोग्यगुणेत्यर्थ: ॥ **न्यूनाधिकेति** ॥ सम्भवतीत्युक्तरीत्येत्यर्थ: ॥ **प्रातिस्विकनियमेनेति** ॥ **अस्यतावन्त** इति प्रातिस्विकनियमेनेत्यर्थ: । व्युत्पत्तिवशादधिकगुणप्रतीतौ कथमित्यत आह ॥ **आत्मशब्देनेति** ॥ इयमेवेति युगपत्प्रतीति-रेवेत्यर्थ: ॥ **अयोग्येति** ॥ अयोग्यगुणेत्यर्थ: ॥

## वाक्यार्थमञ्जरी

उक्तं अनुपसंहारप्रमाणत्वम् ॥ **उक्तमत्रेति** ॥ अन्वयादित्यत्रेत्यर्थ: ॥ **प्रातिस्विकेति** ॥ प्रतिव्यक्तिगतेत्यर्थ: । ननु शब्दस्य पुरुषव्युत्पत्त्यनुसारेण गुणाभिधायकत्वमिति प्रातिस्विक-नियमोपपत्तिरित्यत आह ॥ **न च सम्भवतीति** ॥ कालभेदेन व्युत्पत्तेर्वैशद्यावैशद्यसम्भवेन बहुगुणध्यानयोग्यानां कदाचिद्बहुगुणान् तद्योग्यानां तु कदाचिदल्पगुणान्बोधयतीत्यतोऽस्यैतावन्त एवेत्यादिनियमो न सम्भवतीत्यर्थ: ।

(वाक्यार्थमञ्जरी)

ॐ न वा विशेषात् ॐ ॥ आत्मशब्देन सर्वगुणगृहीतिर्न वास्तु कुतः विशेषात् योग्यताविशेषादित्यर्थः ॥ **अयोग्येति** ॥ अयोग्यप्रतीतिर्व्युत्पत्तिवशेन जाताऽपि गुणप्रतीतिर्न प्रतीतिः, ध्यानोपयोगित्वेन विवक्षितप्रतीतिर्न भवतीत्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ दर्शयति च ॐ ॥ २३ ॥**

**'सर्वान्गुणानात्मशब्दो ब्रवीति ब्रह्मादीनामितरेषां न चैव' इति (च) भाल्लवेयश्रुतिः ।**

## तत्त्वप्रदीपिका

**सर्वान्गुणानात्मशब्दो ब्रवीति ब्रह्मणः । ब्रह्माण्यादीनां शतं शतमूनान् । क्रमादतिन्यूनत्वायोग्यताया अवरेषामल्पगुणानेव ।**

## तत्त्वप्रकाशिका

**युक्तिसिद्धार्थं श्रुत्याऽपि समर्थयत्सूत्रं पठित्वा तां श्रुतिमुदाहरति ॥ दर्शयति चेति ॥ सर्वान् स्वयोग्यान्बहून्ब्रवीतीत्यस्य युगपत्प्रकाशयतीत्यर्थः । तस्मादात्मशब्दोक्तगुणानां सर्वोपास्यत्वादुक्तं युक्तमिति सिद्धम् ।**

## गुर्वर्थदीपिका

सम्भवति हि कदाचिद्बहुगुणानित्यस्य नानार्थमजानतोऽल्पगुणव्युत्पन्नस्य प्रागेकार्थबोधको यः शब्दः स एव तस्यैव सम्यग्व्युत्पत्तिदशायां बह्वर्थबोधकोऽपि ज्ञायते । न हि आतनोतीत्यात्मा आततत्वादात्मा आदत्त इत्यात्मेत्यादयः स्वामित्वव्यतिरिक्ता अप्यर्थाः कदाचिन्मानुषैरपि प्रौढैर्न प्रतीयन्त इत्यस्ति । अतः कथं प्रागुक्ताप्राप्तिरेव निर्णेयेति भावः । आत्मशब्देन गुणप्रतीतिरियमेवेत्यस्येयं निदिध्यासोः पुरुषस्य ध्यानकाले युगपद्यावदात्मशब्देन प्रतीयते इयमेवेत्यर्थः । अयोग्यप्रतीतिर्न प्रतीतिरित्यत्रायोग्यप्रतीतिरुक्तविधया ध्यानायोग्यस्य गुणस्य स्वव्युत्पत्तिबलाद्यदा कदाचिज्ज्ञायमाना प्रतीतिरित्यर्थः । एवं च यस्य मानुषस्य स्वामित्वमेवोपासनायोग्यं तस्योपासनाकाले बह्वर्थकोऽप्यात्मशब्दः स्वामित्वमेव दर्शयति । एवमन्येषामपि ध्यानकाले स्वस्वयोग्यानेव

(गुर्वर्थदीपिका)
दर्शयति । अतो नात्मशब्दो भ्रामक इति भावः । यद्यपि 'अन्वयादिति चेत्स्यादवधारणात्' इत्यधिकरणस्य 'न वाविशेषात्'इत्यधिकरणस्य च पूर्वपक्षसिद्धान्तयोरधिकप्रकारता । तथापि तात्विकदेवतानामुपासनायां स्वस्वयोग्यताज्ञानमप्यनादिकालमारभ्य स्वसामर्थ्यविशेषादेवास्ति । न तु तज्ज्ञापनार्थमपि गुर्वाकाङ्क्षेति सूचयितुमात्मशब्दस्य तत्तद्योग्यगुणाभिधायकत्वे श्रुतिं च प्रमाणीकर्तुमधिकरणान्तरारम्भः । अत एव 'विशेषात्'इति सूत्रखण्डस्य अधिकारिविशेषादिति भाष्यम् । सामर्थ्यविशेषादित्यर्थः । युक्तिसिद्धार्थं श्रुत्याऽपि साधयत्सूत्रमिति च टीका ।

## भावदीपः

**युक्तिसिद्धेति** ॥ अधिकारिसामर्थ्यविशेषरूपयुक्तिसिद्धेत्यर्थः । सूत्रे चशब्दादाह ॥ **श्रुत्यापीति** ॥ **समर्थयदिति** ॥ साधुत्वं पूर्ववत् । सर्वानित्यस्य स्वयोग्यानित्युक्त्वा तस्यैव प्रतिपदमाह ॥ **बहूनिति** ॥ न त्वसंकुचितसर्वानित्यर्थः । श्रुतौ गुणपदेन भगवद्धर्मा अभिमताः । तेन क्रियादेरपि ग्रहः ॥ **युगपत्प्रकाशयतीत्यर्थ इति** ॥ अन्यथा प्रकृतानुपयोग इति भावः । सूत्रार्थ फलोक्त्योपसंहरति ॥ **तस्मादिति** ॥ आत्मशब्दस्याधिकारिविशेषेण तत्तद्योग्यमात्रप्रत्यायकत्वादित्यर्थः ॥ **उक्तमिति** ॥ अनुपसंहारमानत्वमात्मशब्दस्येत्यर्थः ।

## वाक्यार्थमुक्तावली

**युक्तिसिद्धार्थमिति** ॥ विशेषादिति युक्तिसिद्धं न चेत्युक्तमात्मशब्दस्य सर्वान् प्रति सर्वगुणाभिधायकत्वाभावं स्पष्टा श्रुतिरपि दर्शयतीति सूत्रार्थ इति भावः । अत्राद्ये युक्तिः । द्वितीये तदुपोद्बलकश्रुतेरुक्तिरिति सूत्रक्रमः ।

## वाक्यार्थमञ्जरी

इतरेषां सर्वगुणाप्रतिपादनं सर्वान् गुणानिति श्रुतिर्दर्शयतीत्यर्थः ॥ **स्वयोग्यानिति** ॥ न निरुपचरितसर्वानिति भावः ॥ **युगपदिति** ॥ व्युत्पत्तिवशात्तेषामपि क्रमेण योग्यगुणप्रतीतिसम्भवादिति भावः ।

॥ इति विशेषाधिकरणम् (नानाधिकरणम्) ॥ १३ ॥

## १४. सम्भृत्यधिकरणम्

### ॥ ॐ सम्भृतिद्युव्याप्त्यपि चातः ॐ ॥ २४ ॥

सम्भृतिद्युव्याप्त्यपि देवादीनामुपसंहर्तव्ये नान्येषाम् । अत एव योग्यताविशेषात् ।

'देवादीनामुपास्यास्तु भृतिव्याप्त्यादयो गुणाः ।
आनन्दाद्यास्तु सर्वेषामन्यथाऽनर्थकृद्भवेदिति (च) ब्रह्मतर्के ॥

### तत्त्वप्रदीपिका

सम्भृतिद्युव्याप्त्यादयो गुणा अपि देवादीनामुत्तरेषामुपसंहर्तव्या नाऽनन्दादय एव । अपिशब्दाद्वीर्यैश्वर्यादयोऽपि ग्राह्याः । द्वित्वमात्रव्यावृत्त्यर्थं किलाप्रगृह्यासूत्रयत् । भृतिव्याप्त्यादयो गुणा इति हि प्रमाणवचनम् ॥

### तत्त्वप्रकाशिका

अत्र ब्रह्मदर्शनसाधनोपासने सर्वेषां सम्भृत्यादिगुणोपासननिवारणादस्ति शास्त्रादिसङ्गतिः । अन्यथा चतुर्गुणनियमभङ्गप्रसङ्गान्निवारणीयं तत् । 'उक्षा स द्यावापृथिवी बिभर्ति' 'एष हि सर्वेषु लोकेषु भाति' इत्यादौ प्रतीते प्रकृतभगवद्गुणान्तर्गते सम्भृतिद्युव्याप्ती विषयः । किं सर्वमुमुक्षूपास्ये उत नेति सन्देहः । द्विविधगुणप्रतीतिरेव संदेहबीजम् । सर्वोपास्ये इति पूर्वः पक्षः । सर्वेषां मुमुक्षुत्वसाम्यात् । मोक्षे च स्वाधमभरणस्य प्रकाशव्याप्तेश्च सर्वापेक्षितत्वात् । फलं चोपासनानुसार्येव भवति । 'यादृशो भावितस्त्वीशस्तादृशो जीव आभवेत्' इत्यादेः । न चैवं सर्वगुणोपास्तिः । सर्वेषां सर्वगुणापेक्षाभावात् । अतः सम्भृतिद्युव्याप्त्योः सर्वोपास्यत्वाच्चतुर्गुणोपास्तिनियमो न युक्त इति । सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ॥ **सम्भृतीति** ॥ अपिपदान्नञः समाकर्षः । चशब्द एवार्थः । सम्भृतिद्युव्याप्ती न सर्वोपास्ये किं तु देवाद्युपास्ये एव । अधिकारियोग्यतायां विशेषसद्भावात् । देवादीनामेव तदुपास्तियोग्यता नान्येषामिति योग्यतैवोपास्तिनियमप्रयोजिका न फलापेक्षेति भावः । यच्च प्रकाशादिमात्रमपेक्षितं तच्च भगवद्रूपप्रतीत्यविनाभूतप्रकाशादिनैव लभ्यते । ननु सम्भृत्यादि-गुणोपास्तिर्देवादीनामेव योग्येति कुतोऽन्येषामयोग्यतायामप्युपासने को विरोधः फलसिद्धेरित्यत आह ॥ **देवादीनामिति** ॥ अतः सर्वेषां सम्भृत्यादिगुणोपासाभावान्नोक्तनियमभङ्ग इति सिद्धम् ॥

## गुर्वर्थदीपिका

यच्च प्रकाशादिमात्रमपेक्षितमित्यत्र प्रकाशे मुक्तौ स्वयोग्यप्रकाशः । आदिपदेन स्वावरभरणं च गृह्यते । भगवद्रूपप्रतीत्यविनाभूतप्रकाशादिनेत्यत्र प्रकाशपदेनानन्तसूर्यकोटिप्रकाशस्यापि भगवतस्तत्तद्ध्यातृयोग्यतानुसारेण प्रदीपप्रभावद्वा उद्यत्सूर्यमण्डलप्रभावद्वा ध्यानरूपप्रतीत्यविनाभूततयोल्लिख्यमानप्रकाशो गृह्यते । आदिपदेन भगवद्ध्यानदशायां तत्रैवावरणभूतब्रह्मादीनां भरणं गृह्यते । अत एव 'उद्यद्भास्वत्समाभासः' 'ब्रह्मवायुशिवाहीशविपैः शक्रादिकैरपि । सेव्यमानः' 'युक्ताः प्रदीपवर्णाश्च' 'ध्यायेद्धरिन्मणिनिभं हरितोपलाभम्'इत्यादीन् ध्यानश्लोकान् पठति । एवं प्रकारेण सूत्रे समित्युपसर्गसूचितं विश्वरूपतया द्यावापृथिवीभरणं महाप्रकाशश्च व्यावर्त्यते ।

## भावबोधः

**सम्भृत्यादिगुणोपासनेति** ॥ अत्र पूर्वं 'विशेषात्' इत्युक्तं योग्यताविशेषरूपसिद्धान्तन्याय एव अत्रापि 'अतः' इति सिद्धान्तन्यायत्वेन अतिदिश्यत इत्यनन्तरसङ्गतिरिति भावः । किं सर्वेत्यादि । अत्र सम्भृतिद्युव्याप्ती सर्वमुमुक्षूपास्ये भवत उत योग्यतैवेति । तदर्थमेतद्गुणोपासनेऽपि अपेक्षितं प्रकाशादिरूपं फलं सामान्योपासनेन न भवत्युत भवतीति । मुमुक्षव इत्याद्यविशेषात् । भरणस्य द्युतेश्च सर्वेषामपेक्षितत्वाच्च सम्भृतिद्युव्याप्ती अपि सामान्ये इति न्यायविवरणं मनसि निधाय पूर्वपक्षमाह– **सर्वोपास्ये इत्यादिना** ॥ मोक्षमात्रस्यानन्दाद्युपासनेनैव सिद्धेः नैतदुपासनं मुमुक्षुत्वं प्रति प्रयोजकमित्यत आह– **मोक्षे चेति** ॥ एतदयोग्येष्वतिप्रसक्तमिति मुमुक्षुत्वं चोक्तम् ।

'गुण्याकारस्मृतेरेव द्युतिमात्रं प्रतीयते ॥'

इति न्यायविवरणोदाहृतं वचनं मनसि निधायाह– **यच्च प्रकाशादिमात्रमिति** ॥ अन्यथा अनर्थकृद्भवेदिति एतन्निवर्तनीयमाह– **अन्येषामयोग्यतायामपीति** ॥ **देवादीनामिति** ॥ भाष्योदाहृतं प्रमाणमुपलक्षणम् । 'सत्यो ज्ञानः परमानन्दरूपः' इत्यादिन्यायविवरणोदाहृतं प्रमाणमपि ग्राह्यम् ।

## भावदीपः

**निवारणादिति** ॥ फलसाम्यादपेक्षितेत्यानन्दादय इत्यत्रोक्तन्यायेनापेक्षितसम्भरणद्युव्याप्तिप्राप्त्यर्थं तयोरपि सर्वोपास्यत्वशङ्कायामधिकारिविशेषादिति प्रागुक्तयुक्त्यैव तन्निवारणादित्यर्थः। तेनास्य पूर्वानन्तर्यसङ्गतिरपि सिद्धेति ज्ञेयम् । भाष्येऽनुक्तेः स्वयमनयोः श्रौतत्वं दर्शयति ॥ **उक्षेति** ॥ श्रुत्यर्थस्तु पूर्वपादे प्रकृतैतावत्त्वमित्यत्र व्यक्तः ॥ **एष हीति** ॥ चक्षुरन्तस्स्थ इत्यर्थः । एतच्चाक्षिविद्यास्थं वाक्यमन्तर उपपत्तेरित्यत्र ब्रह्मपरत्वेन निर्णीतमिति भावः । **सम्भृतिः** सम्यग्भरणम् । **द्युव्याप्तिर्नाम** दिवा प्रकाशेन व्याप्तिः ॥ **द्विविधेति** ॥ पूर्वत्रेवात्रार्थो ध्येयः । मुमुक्षव इत्यविशेषाद्भरणस्य द्युतेश्च सर्वेषामपेक्षितत्वाच्च सम्भृतिद्युव्याप्ती अपि सामान्ये इत्यन्यत्रोक्तप्रतिज्ञाहेतू आह ॥ **सर्वोपास्ये इति** ॥ ततश्च किमित्यतो द्वितीयहेतुमाह ॥ **मोक्षे चेति** ॥ ततोऽपि किमित्यतोऽर्थसामान्यादित्युक्तन्यायमाह ॥ **फलं चेति** ॥ तृतीयस्कन्धतात्पर्योक्तस्मृतिं चाह ॥ **यादृश इति** ॥ उक्तहेतूनां तर्कपराहतिमाशङ्क्य निराह ॥ **न चैवमिति** ॥ मुमुक्षूणां मुक्तावपेक्षितफलानुसार्युपासनस्य कर्तव्यत्वे सतीत्यर्थः । फलोक्त्योपसंहरति ॥ **अत इति** ॥ सम्भरणप्रकाशव्याप्त्योर्मुक्तिगतयोर्मुमुक्षुमात्रापेक्षितत्वादित्यर्थः ।

सम्भृतिद्युव्याप्ती अपि नान्येषामुपसंहार्ये इति भाष्यं सूत्रारूढं कर्तुं सूत्राक्षरार्थमाह ॥ **अपिपदादिति** ॥ अत एवेति भाषणादाह ॥ **चशब्द इति** ॥ **सर्वोपास्येन** चेत्तदुपासनं निरधिकारिकमेव स्यादिति शङ्कानिरासार्थं पूर्वभाष्यमित्युपेत्य तद्योजयति ॥ **किं तु देवादीति** ॥ देवादीनामिति स्मृत्यनुरोधाद्भाष्ये देवपदमुपलक्षणमिति भावः । उपास्य एवेति भाषणादाह ॥
**चशब्द इति** ॥ सर्वोपास्येन चेत्तदुपासनं निरधिकारिकमेव स्यादिति शङ्कानिरासार्थं पूर्वभाष्यमित्युपेत्य तद्योजयति ॥ **किं तु देवादीति** ॥ देवादीनामिति स्मृत्यनुरोधाद्भाष्ये देवपदमुपलक्षणमिति भावः । उपास्य एवेति फलितोक्तिः । द्विवचनोक्त्या सूत्रे समाहारद्वन्द्वेन वा प्रकृतिभावमनाश्रित्य वा निर्देश इति सूचितम् । स्मृतौ बहुवचनमादिपदं च वक्ष्यमाणवेधादिपरमिति भावः । तत्वप्रदीपे तु अपिरैश्वर्यादिगुणान्तरसमुच्चये । अत एव स्मृतौ भृतिव्याप्त्यादय इत्युक्तिरित्युक्तम् । अत एवेत्यादि व्याचष्टे ॥ **अधिकारीति** ॥ स च विशेषोऽन्येषामप्यस्तु विशेषाभावे वाऽस्त्वपेक्षामात्रेणोपासनमित्यतः स्मृत्यनुरोधेनैवकारसूचितभावमाह ॥ **देवेति** ॥ योग्यतैवेति च ॥

(भावदीपः)

अपेक्षितप्राप्तिर्वा कथं भवेदित्यत आह ॥ **यच्चेति** ॥ उद्यद्भास्वत्समाभास इति । युक्ता: प्रदीपवर्णाश्चेत्याद्युक्तदिशा भगवद्ध्यानरूपप्रतीतिविषयप्रकाशेन, विपैः शक्रादिकैरपि सेव्यमान इति सपरिवारध्यानेन किंचिद्भरणस्य सम्भवादित्यर्थः । गुण्याकारस्मृतेरेव द्युतिमात्रं प्रतीयत इति न्यायविवरणोक्तस्मृतेरिति भावः । पूर्वोत्तरार्धव्यावर्त्ये क्रमेणाह ॥ **नन्विति** ॥ सूत्रार्थं फलोक्त्योपसंहरति ॥ **अत इति** ॥ **योग्यताविशेषाभावादिति** ॥ अत इति सूत्रांशतात्पर्यार्थः । देवादीनामेव तदुपासनयोग्यताविशेषसद्भावादिति वा अर्थः ॥ **उक्तनियमेति** ॥ चतुर्गुणनियमेत्यर्थः ।

## अभिनवचन्द्रिका

**सर्वेषामिति** ॥ उपलक्षणमेतत् । देवादीनां सम्भृत्यादिगुणोपासनसमर्थनादित्यपि ग्राह्यम् । किं सर्वमुमुक्षूपास्ये इति ॥ उपलक्षणमेतत् किं चतुर्मुखमात्रोपास्ये, उत देवादिभिरपीति सन्देह इत्यपि ग्राह्यम् ॥ **सर्वोपास्ये इति** ॥ उपलक्षणमेतत् । देवाद्यनुपास्ये प्रमाणाभावादिति पूर्वपक्ष इत्यपि ग्राह्यम् । अपि पदान्नञः समाकर्ष इति । ननु नञोऽनुवृत्तेः सापेक्षत्वादेव ज्ञातुं शक्यत्वादपिपदं व्यर्थम् । किञ्चापिपदात् नञःसमाकर्षादपि सूत्रे नञः प्रयोग एव वरः, प्रतिपत्तिलाघवात् । नञः प्रयोगे तु झटिति नञर्थप्रतिपत्तिः । अपि पदप्रयोगे तु नञोऽनुवृत्तिप्रतिपत्तिद्वारा तदर्थप्रतिपत्तिरिति । अपि च अपिशब्दान्नञः समाकर्ष इति कथमिदं विज्ञायते । किम् अपिशब्दाल्लाङ्गलादिना तृणादीनामिव नञः समाकर्षो भवति, उत अन्येनैव जायमानो नञः समाकर्षः प्रदीपादिना तृणादीनां समाकर्ष इव विज्ञायत इति । यद्याद्यः न तर्हि राजानो हस्त्यश्वं बिभृयुः । अपीत्येवोक्त्वा परकीयराज्यादेः समाकर्षकर्तारो भवेयुः । न हि अपिशब्दात् नञः समाकर्षो भवति । न राज्यादेरिति राज्ञामाज्ञाऽस्ति । द्वितीयेऽपि वक्तव्यम्, किं व्याप्तिबलेन, उताऽन्यथा । नाद्यः तदभावात् । द्वितीये तु अतिप्रसङ्ग इति चेत्, सत्यम् । सापेक्षत्वात् नञोऽनुवृत्तिर्ज्ञातुं शक्यते । तथापि नाऽपिपदवैयर्थ्यम् । अन्तरङ्गज्ञापकाभाव एव बहिरङ्गस्याऽनुसर्तव्यत्वात् । अन्यथा क्वापि वाक्येऽहमादिशब्दप्रयोगो न स्यात् । उत्तमपुरुषप्रयोगादिनैव तस्य सर्वत्र ज्ञातुं शक्यत्वात् । सूत्रकारा हि यस्यानुवृत्तिमिच्छन्ति तत्र किञ्चिल्लिङ्गमासज्य तदनुवृत्तिं ज्ञापयन्ति । यथाऽऽहपाणिनिः 'स्वरितेनाधिकारः' इति, यस्य पदस्य बहुष्वनुवृत्तिमिच्छन्ति तत्पदं स्वरितत्वेनोच्चारयन्ति । यस्य तु क्वचिदेवानुवृत्तिमिच्छन्ति, तस्यानुवृत्तिस्थले चशब्दादिप्रयोगेण तत् विशेषयन्ति ।

(अभिनवचन्द्रिका)
यथाहुः 'चानुकृष्टं न सर्वत्र' इति । यदत्रोक्तम् अपिपदप्रयोगेण नञोऽनुवृत्तिज्ञापनात्, नञः प्रयोग एव वरः प्रतिपत्तिलाघवादिति । तन्न अल्पाक्षरेषु सूत्रेषु शब्दाभावस्यैवाऽनुसर्त्तव्यत्वेन प्रतिपत्तिलाघवस्याऽननुसर्तव्यत्वात् । 'सम्भृतिद्युव्याप्ती न चात' इति पाठे ईकारो द्विमात्रो, नेति व्यञ्जनमर्धमात्रम् । अकारस्त्वेकमात्र इति सार्धत्रिमात्रा भवन्ति 'सम्भृतिद्युव्याप्त्यपि चात' इति पाठे ईकारादेशो यकारस्त्वर्धमात्रः, आकारस्त्वेकमात्रः, पीति सार्धमात्रमिति त्रिमात्रा भवन्ति । एवञ्चास्मिन् पाठेऽर्धमात्रालाघवं भवति । सूत्रकारास्तु मात्रालाघवं पुत्रोत्सवादपि बहु मन्यन्ते, ज्ञापकपक्षस्यैवाङ्गीकृतत्वेन न कारकपक्षोक्तदोषः । यदपि ज्ञापकत्वपक्षे व्याप्तिरस्ति न वेत्यादि तदपि न । पूर्वाचार्यसङ्केतबलेनैव सूचकत्वाङ्गीकारात् । यथाहुः 'व्यर्थं सत्किञ्चिदिष्टं ज्ञापयति' इति । यच्च **प्रकाशादीति** ॥ अत्र प्रकाशस्य प्रतीत्यविनाभूतत्वं तद्विषयत्वमेव विवक्षितं नान्यदिति द्रष्टव्यम् । उपसंहरति– **अत इति** ॥ उपलक्षणमेतत् । देवादीनां सम्भृत्युपासनाधिकारसद्भावात् न मनुष्येभ्योऽतिशयाभाव इति ।

अत्रेमौ पूर्वपक्षौ- तथा हि । अत्रैके चोदयन्ति । सम्भृतिद्युव्याप्ती सर्वेषां मनुष्यादीनामुपास्ये मुमुक्षुत्वात् देवादिवत् । तत्फलयोः स्वाधमभरणप्रकाशव्याप्त्योर्भाव्यत्वात् । न चैवं सर्वगुणोपास्तिप्रसङ्गः । तत्फलानिच्छुत्वात् । ततश्च चतुर्गुणोपासननियमभङ्ग इति ।

अन्ये पुनरेवं मन्यन्ते । देवादयो न सम्भृतिद्युव्याप्त्युपासनायोग्याः । प्रमाणाभावात् । न च मुमुक्षुत्वात्तदुपासनाधिकारसिद्धिरिति वाच्यम् । यदि मुमुक्षुत्वाद्देवाः सम्भृत्त्याद्युपासनाधिकारिणः स्युः तर्हि मनुष्या अपि तथा स्युः अविशेषादिति तर्कबाधात् । अत एव । न तत्फलेच्छुत्वाद्देवानामधिकारसिद्धिः । ततश्च न देवानां मनुष्येभ्योऽतिशयसिद्धिरिति ।

अत्रेमौ सिद्धान्तौ । सम्भृतिद्युव्याप्ती न सर्वोपास्ये । मनुष्याणां तदुपासनायोग्यताविरहात् । न च मुक्तावपेक्षितप्रकाशाद्यसिद्धिः । भगवद्रूपप्रतीतिविषयीकृतप्रकाशादिनैव तत्सिद्धेः । ततश्च नोक्तचतुर्गुणनियमभङ्ग इत्येकः सिद्धान्तः ।

अपरस्तु देवादयः सम्भृत्त्याद्युपासनावन्तः । देवाधिकारेऽन्याधिकारात् विशेषसद्भावात् । 'देवादीनामुपास्यास्तु भृतिव्याप्त्यादयो गुणाः । आनन्दाद्यास्तु सर्वेषामन्यथाऽनर्थकृद्भवेत्' इति वचनात् । ततश्च सम्भृत्त्याद्युपासनासद्भावात् नाऽतिशयभङ्ग इति सिद्धम् ।

## वाक्यार्थमुक्तावली

अत्र पूर्वं विशेषादित्युक्तयुक्तिः, दर्शयति चेत्युक्तप्रमाणबलं, अत्रापि अत इति सिद्धान्तसाधकत्वेनातिदिश्यत इत्यातिदेशिकी अनन्तरसङ्गतिः ॥ **किं सर्वेत्यादि** ॥ सम्भृतिद्युव्याप्ती सर्वोपास्ये न भवत उत भवत इति चिन्ता । तदर्थं गुणोपासायां फलापेक्षैव प्रयोजिका उत तद्योग्यतैवेति । अत्रात इति योग्यताविशेषेण सिद्धान्तकरणाल्लब्धमविशेषितेत्युक्तन्यायं विशदयन् पूर्वपक्षयति ॥ **सर्वेषामिति** ॥ एतेनाविशेषितमुमुक्षुत्वस्य सर्वसाम्यमिति विवृतं भवति । मोक्षमात्रस्यानन्दाद्युपासनेनैव सिद्धेर्न तदुपासने मुमुक्षुत्वं प्रयोजकमित्यतः प्रकारान्तरेण विवृणोति ॥ **मोक्षे त्विति** ॥ तेन स्वाधमभरणस्य प्रकाशव्याप्तेश्च विशेषता सामान्येन सर्वापेक्षितत्वमिति विवृतं भवति । अस्तूत्तरणादेः सर्वापेक्षितत्वं, तावता कथमुपास्यत्वमित्यतः अविशेषताफलोपासनयोरित्यर्थतया तदेव व्यनक्ति ॥ **फलं चेति** ॥ नञः समाकर्ष इति । तेन भाष्ये नान्येषामिति लभ्यत इति भावः । चशब्द एवार्थ इति । तेन भाष्ये अत एवेत्युक्तमिति भावः । देवादीनामिति भाष्यमुत्सूत्रमित्यत उत्थापिताकाङ्क्षाशामकतया सम्भृतिद्युव्याप्ती अपि नान्येषामुपसंहर्तव्ये इति भाष्यं तावद्योजयति ॥ **सम्भृतीति** ॥ तदुपर्याकाङ्क्षामुत्थापयति ॥ **किन्त्विति** ॥ भगवद्रूपेति । भगवद्रूपध्याने प्रतीतप्रकाशादिनैव इत्यर्थः । तदुक्तं गुण्याकारस्मृतेरेव द्युतिमात्रं प्रतीयते । न व्याप्तिर्जगदस्मृत्येति । अन्यथाऽनर्थकृद्भवेदित्येतन्निवर्तनीयामाह । **अन्येषामयोग्यतायामपीति** ॥ **इत्यत आहेति** ॥ इत्यतः प्रमाणबलमित्युक्तन्यायं विशदयन् प्रमाणमाहेत्यर्थः ।

ननु सूत्रे नञोऽनुवृत्तिः उपपद्यत इति अपिपदं व्यर्थम् । सर्वत्रानुवृत्तिस्थले तदभावात् । अपिपदस्थाने नञः प्रयोगसम्भवेनायासवैयर्थ्याच्च । अपीत्युक्तेनेत्यर्थज्ञापनप्रकारनिरूपणाच्चेति चेन्न । अनुवृत्तिर्हि आकाङ्क्षावशाज्ज्ञाप्यते । निराकाङ्क्षे तदभावात् । आकाङ्क्षापेक्षयापि पदमन्तरङ्गम् । आत्मशब्दस्य सर्वगुणाभिधायकत्वं नेत्युक्त्वा सम्भृतिद्युव्याप्ती अपीति समुच्चायकापिपदप्रयोगनिषेधस्यैव समुच्चायकत्वज्ञापनात् नेत्यनुवृत्तिलाभात् । तदभाव एवाकाङ्क्षामात्रस्यानुसरणीयत्वात् । राम आगतो लक्ष्मणश्चेत्यादाव्यवहितानुवृत्तिस्थले चशब्दादज्ञापकत्वस्य च सर्वैरङ्गीकृतत्वाच्च । सम्भृतिद्युव्याप्ती न चात इत्येवं प्रयोगापेक्षया सम्भृतिद्युव्याप्त्यपि चात इति प्रयोगे अक्षरलाघवा-

भावेऽपि मात्रालाभस्य विद्यमानत्वेन तथा प्रयोगसम्भवात् । ईकारो द्विमात्रा । नेति व्यञ्जनमर्धमात्रा । अकारस्त्वर्धमात्रेति त्रिमात्रा भवन्ति । एवं चास्मिन् पाठे अर्धमात्रालाघवमिति । यद्वा सूत्रे द्विवचनमहिम्ना टीकायामेवं व्याख्यतत्वेऽपि सम्भृतिद्युव्याप्त्यादयो गुणा इत्यादिशब्दात् अपिशब्देन वीर्यौदार्यादयो गृह्यन्ते । अतोऽपिशब्दस्य केवलमनुकर्ष ज्ञापनयैव चारिताथ्याभावादवैयर्थ्यम् । तदुक्तं तत्वप्रदीपे । अपिशब्दात् वीर्यौदार्यादयो गृह्यन्ते द्वित्वमात्राव्यावृत्त्यर्थं किलाप्रगृह्यासूत्रयत् । द्युतिव्याप्त्यादयो गुणा इति प्रमाणवचनमित्यलम् । विस्तरस्त्वन्यत्रानुसन्धेयः ।

## तत्त्वसुबोधिनी

**सम्भृत्यादिगुणोपासनेति** ॥ अत्राप्यत इति सिद्धान्त न्यायत्वेनातिदिश्यत इति अनन्तर-सङ्गतिरिति भावः । मोक्षमात्रस्यानन्दाद्युपासनेनैव सिद्धेः नैतदुपासनं मुमुक्षुत्वप्रयोजकमित्यत आह ॥ **मोक्षे चेति** ॥ यत्तदयोग्येषु अतिप्रसक्तमिति मुमुक्षुत्वं चोक्तम् । ननु सम्भृत्यादिगुणोपास्त्यभावे स्वाधमभरणादि कथं स्यादित्यत आह ॥ **यच्चेति** ॥ देवादीनामिति भाष्योदाहृतप्रमाणमुपलक्षणम् । सत्यो ज्ञानः परमानन्दरूप इत्यपि ग्राह्यम् ।

## वाक्यार्थविवरणम्

**व्याप्तीति** ॥ प्रकाशेन द्यादिलोकव्याप्तींत्यर्थः ॥ आ ॥ सम्यक् ॥ **सर्वगुणेति** ॥ सर्वगुणापेक्षासद्भावेनेत्यर्थः । ननु फलापेक्षैव तदुपास्तिप्रयोजिकेत्यत आह ॥ **योग्यतैवेति** ॥ ननु मोक्षे देहे प्रकाशापरपर्यायकान्तेरपेक्षितत्वात् प्रकाशतो द्युव्याप्तिरूपगुणोपासनाभावे च तत्प्राप्तेर-योगात्तद्गुणोपासने वाच्ये चतुर्गुणोपासनानियमभङ्ग एवेति चेत्तत्राह ॥ **यच्चेति** ॥ भगवद्रूपं भगवद्देहः । उपासनाकाले यदा भगवद्रूपं प्रतीयते तदा तत्प्रकाशरूपमेव प्रतीयते । अतो भगवद्रूप-प्रतीत्यविनाभूतप्रकाशेनैव प्रकाशादि लभ्यतेऽतो न तदर्थं प्रकाशतो द्युव्याप्त्यादिगुणोपासना-पेक्षितेत्याशयः ॥ यथोक्तम् ॥ 'गुण्याकारस्मृतेरेव द्युतिमात्रं प्रतीयते' (न्यायविवरणे) इत्यादि ॥ **अयोग्यतायामिति** ॥ तद्गुणोपास्तियोग्यताया अभावेऽपि ॥ **आहेति** ॥ न फलसिद्धिः किन्त्वनर्थ एवेत्याहेत्यर्थः ।

## वाक्यार्थमञ्जरी

उक्षाः भक्ताभिलषितसेचकः । मोक्षमात्रस्य आनन्दाद्युपासनेनैव सिद्धेः न मुमुक्षुत्वं, तदुभयोपासनं तदुभयप्रयोजकमित्यत आह ॥ **मोक्षे चेति** ॥ **फलं चेति** ॥ अतो नोपासनाभावे तदुभयलाभ इति भावः । यादृशः यद्गुणविशिष्टः भावितः ध्यातः आसम्यगुपास्तिः प्रसज्यत इति शेषः ।

ॐ सम्भृतिद्युव्याप्त्यपि चातः ॐ ॥ सम्भृतिः सम्यग् भरणं द्युव्याप्तिः प्रकाशेन व्याप्तत्वं तेन सर्वोपास्ये कुतः, अतश्च योग्यताविशेषादेवेत्यर्थः ॥ **भगवद्रूपेति** ॥ ध्यानकाले प्रतीयमानं भगवद्रूपं न प्रकाशेन विना प्रतीयेत किंतु यत्किंचित्प्रकाशयुतमेव अतस्तदुपासनेनैव तदपेक्षितप्रकाशलाभ इत्यर्थः ।

॥ इति सम्भृत्यधिकरणम् ॥ १४ ॥

## १५. पुरुषविद्याधिकरणम्

**यस्यां विद्यायां महागुणा उच्यन्ते सोत्तमानामितरान्येषामिति चेन्न—**

**।। ॐ पुरुषविद्यायामपि चेतरेषामनाम्नानात् ॐ ।। २५ ।।**

पुरुपसूक्तोक्तविद्यायामपि केषाञ्चिद्गुणानामनाम्नानात् ।

'सर्वतः पौरुषे सूक्ते गुणाः विष्णोरुदीरिताः ।
तत्रापि नैव सर्वेऽपि तस्मात्कार्योपसंहृतिः' इति ब्रह्मतर्के ।।

### तत्त्वप्रदीपिका

यस्मिन्वेदप्रकरणे महासङ्ख्या गुणा उच्यन्ते, वहुगुणा इत्यर्थः, तदुत्तमाधिकारिणामित्यत आह– **पुरुषविद्यायामपि चेतरेषामनाम्नानात् ।** पुरुषसूक्तमित्युक्ता विद्या पूरुपसूक्तोक्तविद्या ।

### तत्त्वप्रकाशिका

अत्रेश्वरसाक्षात्कारसाधनोपासने सर्वतो गुणोपसंहारसमर्थनादस्ति शास्त्रादिसङ्गतिः । अनुपसंहारे सर्वज्ञानवैयर्थ्यप्रसङ्गात्समर्थनीयोऽसौ । प्रकृतसार्वत्रिकगुणोपसंहारो विपयः । कर्तव्यो न वेति सन्देहः । क्रियाद्वैविध्यदर्शनं सन्देहवीजम् । पूर्वपक्षयति ।। **यस्यामिति** ।। न सर्वतो गुणोपसंहारः कर्तव्यः । व्यर्थत्वात् । न च स्वस्वयोग्यगुणोपासनाय सर्वत उपसंहार इति वाच्यम् । सार्वत्रिकगुणोपसंहारमन्तरेणाऽपि तत्सम्भवात् । ये हि वहुगुणोपासनयोग्यास्तेषां तादृग्विद्याभिरुपास्तिरुपपद्यते । अत उपसंहारवैयर्थ्यान्न सर्वज्ञानोपयोग इति भावः । पूर्वपक्षं प्रतिपेधति ।। **नेति** ।। हेतुतया सूत्रं पठित्वा व्याचष्टे ।। **पुरुषेति** ।। कर्तव्य एव सर्वतो गुणोपसंहारः । सर्वगुणोपास्तियोग्यानामप्यधिकारिणां भावात् । एकस्यामेव विद्यायां सर्वगुणानामनुक्तत्वात्सर्वविद्योत्तमायामपि पुरुपसूक्तमित्युक्तविद्यायां केपाञ्चिदेव गुणानां पठितत्वात्केपाञ्चिदपठितत्वादिति भावः । भवेदुपसंहारस्य कर्तव्यता यदि स्यात्पुरुषसूक्तस्य सर्वविद्योत्तमत्वम् । तत्रापि केपाञ्चिद् गुणानामनुक्तत्वम् । तदेव कुत इत्यत आह ।। **सर्वत इति** ।। न च वाच्यमेकस्यामेव विद्यायां सर्वगुणानुक्तेरस्तु चतुर्मुखस्य सर्वगुणोपसंहारः । अन्येपां तु महदल्पगुणाभिधायकविद्याभिरेवोपास्तिसम्भवादुपसंहारो व्यर्थ इति । सङ्ख्यासाम्यसम्भवेऽप्येकस्यामेव विद्यायां स्वापेक्षितगुणोक्तिनियमाभावात् । अतः सर्वतो गुणोपसंहारस्य कर्तव्यत्वादुक्तमुपपन्नमिति सिद्धम् ।

## गुर्वर्थदीपिका

तत्रापि नैव सर्वेऽपीत्यस्य मानुषापेक्षितज्ञानानन्दादिगुणानामकथनादिति भावः । इदं चोपलक्षणं 'सत्यं ज्ञानमनन्तम्' इति वाक्ये ज्ञानमात्रस्य कथनादानन्दादेरकथनात् 'विज्ञानमानन्दम्' इति वाक्ये ज्ञानानन्दयोरेव कथनात् स्वामित्वनिर्दोषत्वयोरकथनात् । एवं च मानुषाणामपि यदा सर्वोपसंहारोऽपेक्षितस्तदा किमु वाच्यं, देवादीनामित्यपि द्रष्टव्यम् ।

## भावबोधः

**सर्वतो गुणोपसंहारसमर्थनादिति** ॥ तत्तदुपासनायोग्यगुणनिर्णयेन ब्रह्माद्यधिकारिणां स्वस्वयोग्यगुणोपसंहारस्य कर्तव्यत्वे व्यवस्थिते तत्रावसरप्राप्तस्य स्वस्वायोग्यस्य गुणप्रतिपादकविद्याभ्यो गुणोपसंहारस्य कर्तव्यत्वसमर्थनादनन्तरसङ्गतिः । कर्तव्यो न वेत्यादि । 'उपसंहारोऽर्थाभेदात्' इत्युक्तः सर्वगुणोपसंहारः सर्वविद्याभ्यो न कर्तव्य उत कर्तव्य इति चिन्ता । तदर्थं ब्रह्मादीनामुपास्या गुणा पुरुषसूक्ताद्येकैकस्यामेव विद्यायामुच्यन्ते उतानेकास्विति । उपसंहारस्य अप्रयोजनतेति न्यायविवरणानुसारेणाह– **व्यर्थत्वादिति** ॥ ये हि बहुगुणोपासनयोग्या इति । 'यस्यां विद्यायां' इत्यादिभाष्यव्याख्यानपरेणानेन क्वचिद्बहुगुणाः क्वचिदल्पगुणाः श्रुतिष्वेवोच्यन्त इति न्यायविवरणमप्युक्तार्थं भवति ।

नन्वस्तु पुरुषविद्यायामपि इतरेषामनाम्नानम् । तथापि तत्र यावन्तो गुणाः प्रतिपाद्यन्ते तावन्त एवोपास्यन्तां किं सर्वविद्याभ्यो गुणोपसंहारेण इत्याशङ्कापरिहारार्थं प्रवृत्तं 'गुणाः सर्वे ब्रह्मणैव हि उपास्याः नान्यैर्देवैः किमु सर्वैर्मनुष्यैः' इति श्रुतेः सर्वगुणोपासकस्यापि अधिकारिणोऽभावादिति न्यायविवरणं मनसि निधायाह– **सर्वगुणोपास्तियोग्यानामिति** ॥ अत्र न्यायविवरणे ब्रह्मणैवेति श्रुत्यनुसारेण ऋजुगणविवक्षयाधिकारिण इत्येकवचनप्रयोगेऽपि तद्व्यक्तिबाहुल्यापेक्षयाऽत्र अधिकारिणामिति ज्ञातव्यम् । नन्वस्तु सर्वगुणोपसंहर्तॄणां अधिकारिणां सद्भावः तथापि तेषां सर्वगुणाभिधायकैकविद्ययोपास्तिः सम्भवतीति न सर्वविद्याभ्यो गुणोपसंहारः कर्तव्यः इत्याशङ्कापरिहारार्थं प्रवृत्तमेकत्राऽपृथक्सर्वगुणानुक्तेरिति न्यायविवरणं मनसि निधायाह– **एकस्यामेवेति** ॥ नन्वेकस्यां सर्वगुणानुक्तिः कुत इत्यतः कैमुत्येन तत्सिद्धिरित्यर्थप्रतिपादकतया पुरुषसूक्तेत्यादिभाष्यं

(भाववोपः)

न्यायविवरणेन संयोजयति– **सर्वविद्येति** । कथमनेन कैमुत्यद्योतनमित्यतः सूत्रभाष्यगतापि-पदाभिप्रायकथनार्थं सर्वविद्येत्युक्तम् ।

ननु पुरुषसूक्तमेव गुणप्रतिपादकविद्या न तु तत्र तादृशविद्यान्तरोक्तिः अदर्शनात् । तत्कथं पुरुषसूक्तोक्तविद्यायामित्युक्तमित्यतो व्याचष्टे– **पुरुषसूक्तमित्युक्तविद्यायामिति** ॥

'सर्वतः पौरुषे सूक्ते गुणा विष्णोरुदीरिताः ॥'

इति स्मृत्यनुसारेणं सूत्रे'अनाम्नानाच्च'इति 'च'शब्दसम्बन्ध इत्यभिप्रेत्य तत्समुच्चितमर्थमाह– **केपाश्चिदेवेति** ॥ उदाहृतन्यायविवरणगतस्याऽपृथगित्यस्य तन्निवर्तनीयाशङ्काप्रदर्शनपूर्वकमभिप्राय-माह– **न च वाच्यमित्यादिना** ॥ चतुर्मुखस्येत्यनन्तरं सर्वविद्याभ्य इति शेषः ॥ **स्वापेक्षितेति** ॥ अनेनाऽपृथगित्यस्य संकल्प्येत्यर्थ उक्तो भवति ।

## भावदीपः

**सर्वतो गुणेत्यादि** ॥ एकत्रैव श्रुतौ सर्वगुणानामुक्त्या सार्वत्रिकोपसंहारवैफल्यशङ्कायां तदनुक्तिकथनेन सार्वत्रिकगुणोपसंहारसमर्थनादित्यर्थः । तेनोपसंहारोऽर्थाभेदादित्यादिना न पुनरुक्तता । तथा योग्यताविशेषादित्युक्तयुक्त्या सम्भृत्यादेर्देवाद्युपास्यत्वेऽपि दर्शयति चेत्यत्रात्म-शब्दो ब्रह्मादीनां युगपत्सर्वगुणान् प्रकाशयतीत्युक्तदिशा तत्तदधिकारिणां विवक्षितस्वस्वयोग्य-गुणानामेकैकत्र श्रुतावुक्त्या तन्मात्रोपासनेनोपपत्तौ सार्वत्रिकगुणोपसंहारो विफल इति शङ्कनाद्वा सम्भृत्यादेः सर्वायोग्यतया चतुर्गुणोपास्तेरेव सर्वयोग्यत्वे यथाशक्ति सर्वेषां सर्वपरिज्ञानोक्तिरयुक्ता । एकैकविद्याभ्यासेनैव सर्वेषां स्वस्वविवक्षितगुणोपसंहारसम्भवेन तद्वैयर्थ्यादिति शङ्कनाद्वा पूर्वसङ्गतिरपि सिद्धा ध्येया । यद्वा ब्रह्मणा सर्वगुणैर्देवादिभिर्बहुगुणैर्मानुषैश्चतुर्भिरित्येवमियता ग्रन्थेनोपास्त्युक्ताविह सर्ववेदान्तनयोक्तं यथाशक्ति सर्वेषां सर्वपरिज्ञानं सर्वेषामपि यथायोग्यं गुणोपसंहारसमर्थनेन समर्थ्यत इति वा सङ्गतिः ॥ **अनुपसंहार इति** ॥ विक्षिप्य नानास्थानेषूक्ता-नामेकबुद्ध्युपारूढत्वरूपोपसंहाराभावे । यथाशक्ति सर्वपरिज्ञानवैयर्थ्यादित्यर्थः । उपसंहारस्या-प्रयोजनतेति न्यायविवरणोक्तिलब्धप्रतिज्ञाहेतू आह ॥ **न सर्वत इति** ॥ हेतूपपादकत्वेन भाष्य-मवतार्य व्याचष्टे ॥ **न च स्वस्वेति** ॥ फलोक्त्योपसंहरति ॥ **अत इति** ॥ सार्वत्रिकगुणोपसंहार-मन्तरेण स्वस्वयोग्यगुणोपसंहारसम्भवादित्यर्थः ।

(भावदीपः)

सर्वगुणोपासकस्याप्यधिकारिणो भावादेकत्रापृथक् सर्वगुणानुक्तेर्बलादुपसंहारानतेरित्यन्यत्रोक्त-प्रतिज्ञाहेतू वक्ति ॥ **कर्तव्य एवेति** ॥ **भावादिति** ॥ गुणाः सर्वे ब्रह्मणैव ह्युपास्या नान्यैर्देवैः किमु सर्वैर्मनुष्यैरित्यन्यत्रोक्तश्रुतेरिति भावः । नन्वप्रयोजको हेतुः । एकविद्ययाऽपि सर्वगुणोपास्ति-सम्भवादित्युक्तत्वादित्यत एकत्रेत्यादेरर्थमाह ॥ **एकस्यामेवेति** ॥ असिद्धो हेतुरित्यतः कैमुत्य-न्यायसिद्धत्वमुक्तहेतोरभिप्रेत्य भाष्यं योजयति ॥ **सर्वविद्येति** ॥ अपिपदलब्धोऽयमर्थः । असम्भवनिरासाय स्मृत्यनुरोधेनोक्तम् । पुरुषसूक्तमित्युक्तेति । केषाञ्चिदनाम्नानादित्युक्तिलब्धार्थमाह ॥ **केषाञ्चिदेवेत्यादि** ॥ पूर्वोत्तरार्धव्यावर्त्ये आह ॥ **यदि स्यादित्यादि** ॥ पृथक्शब्दतात्पर्यं शङ्कापूर्वं व्यनक्ति ॥ **न च वाच्यमिति** ॥ **सङ्ख्येति** ॥ स्वाभिमतगुणसङ्ख्यासमचतुः-पञ्चादिसङ्ख्याकानामाम्नानेऽपीत्यर्थः । सूत्रार्थं फलोक्त्योपसंहरति ॥ **अत इति** ॥ सर्वविद्योत्तम-पुरुषसूक्तानाम्नानसिद्धादेकत्रैव क्वापि श्रुतौ विवक्षितसर्वगुणानाम्नानादित्यर्थः ॥ **कर्तव्यत्वादिति** ॥ विहितत्वादिप्रागुक्तयुक्त्या कर्तव्यत्वादित्यर्थः ॥ **उक्तमिति** ॥ सर्वपरिज्ञानमित्यर्थः ।

## अभिनवचन्द्रिका

**सार्वत्रिकगुणोपसंहार इति** ॥ विप्रकीर्णस्थानोक्तगुणोपसंहार इत्यर्थः । भाष्ये पुरुष-सूक्तोक्तविद्यायामित्यत्र पुरुषसूक्ते उक्तविद्यायामिति भ्रमनिरासायाह– **पुरुषसूक्तमित्युक्तेति** ॥ पुरुषसूक्तशब्दवाच्यायां विद्यायामित्यर्थः । **गुणोक्तिनियमाभावादिति** ॥ येषां तु अपेक्षित-गुणानामेकस्यामेव विद्यायां लाभः, न तैर्विप्रकीर्णगुणोपसंहृतिः कार्येति सूचयति नियमग्रहणेन ।

पूर्वपक्षस्तु– न विप्रकीर्णगुणोपसंहृतिः कार्या प्रयोजनाभावात् । न च स्वयोग्यगुणोपासनाय उपसंहृतिरिति वाच्यम् । उत्तमानां बहुगुणाभिधायकैकविद्योक्तगुणोपसंहारमात्रेण मन्दानामल्प-गुणाभिधायकैकविद्योक्तगुणोपसंहारमात्रेणैव तत्सिद्धेः । अतः उपसंहारवैयर्थ्यात् न सर्वज्ञानोपयोग इति ।

सिद्धान्तस्तु– कार्यैव विप्रकीर्णगुणोपसंहृतिः । सर्वगुणोपासकानामुत्तमानां भावात् । सर्वोत्तमायामपि पुरुषविद्यायां सर्वगुणानामनाम्नानात्, मन्दापेक्षितानामपि एकत्रोक्तिनियमाभावाच्च । अतः सर्वतो गुणोपसंहारस्य कर्तव्यत्वादुक्तमुपपन्नमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

**सर्वतो गुणोपसंहारेति** ॥ विप्रकीर्णस्थानोक्तगुणोपसंहारसमर्थनादित्यर्थः ॥ **प्रकृत इति** ॥ पूर्वाधिकरणे प्रकृतः 'उक्षा स द्यावापृथिवी बिभर्ति एष सर्वेषु भाति' इत्यादिविप्रकीर्णसर्वविद्योक्तगुणोपसंहार इत्यर्थः । देवादीनामुपास्यास्तु भृतिव्याप्त्यादयो गुणाः । सर्वैर्गुणैर्देवगणा उपासन्त इति भाष्यन्यायविवरणयोः सर्वविद्योक्तगुणोपसंहारस्य प्रकृतत्वस्य स्पष्टत्वादनन्तरसङ्गतिः ॥ **कर्तव्य इति** ॥ अत्र विप्रकीर्णस्थानोक्तगुणोपसंहारो न कर्तव्य उत कर्तव्य इति चिन्ता । तदर्थमेकैकविद्यायां सर्वे गुणा उच्यन्ते न वेति । भाष्ये एकैकविद्ययोपास्तिपर्याप्त्युक्त्या सूचितं तदुपपाद्यमप्रयोजकतेत्युक्तन्यायं विशदयति ॥ **व्यर्थत्वादिति** ॥ सार्थक्यमाशङ्क्य वैय्यर्थ्योपपादकतया भाष्यं व्याचष्टे ॥ **न चेत्यादिना** ॥ **स्वोत्तमानामिति** ॥ भाष्ये उत्तमानामुपास्त्यै सा विद्या गुणसमर्पिकेत्यर्थः ।

ननु उपसंहारनये विहितत्वेन हेतुना विप्रकीर्णस्थानोक्तगुणोपासनस्य साधितत्वात् गतार्थमेतदधिकरणमिति चेत् व्यर्थाविधेरनवधेयत्वेन तस्याप्यत्राक्षेपात् । न च विप्रकीर्णगुणोपासनस्याधिकफलहेतुत्वमुक्तमिति न वैय्यर्थ्यमिति वाच्यम् । तत्र सर्वापेक्षितमोक्षस्यानन्दाद्युपासनेनैव लाभात् । विप्रकीर्णगुणोपासनं व्यर्थमित्याशङ्क्यानन्दातिशयहेतुत्वादवैय्यर्थ्यमिति फलमुखवैय्यर्थ्यस्य परिहृतत्वेऽप्यत्रैकस्यामेव विद्यायां बहुगुणप्रमापनसम्भवाद्विद्यान्तरवैय्यर्थ्यमिति प्रमाणमुखवैय्यर्थ्यमाशङ्क्य परिहारादगतार्थतैवेति ज्ञेयम् ।

सूत्रे उपसंहार इत्यस्ति । अपिशब्दोऽनौचित्यस्य कैमुत्यस्य च द्योतकः । यदात्त्युत्तमायामपि विद्यायां सर्वगुणाभिधानं तदा किं वाच्यं विद्यान्तरे **सर्वगुणाभिधानमिति** ॥ अनाम्नानाच्चेति चशब्दसम्बन्धः । तेन सर्वगुणोपास्तियोग्याधिकारिभावः समुच्चीयते । केषांचिदाम्नानं च समुच्चीयते । तथा च सर्वोपास्तियोग्यानामधिकारिणां प्रमाणप्रमितत्वात् एकस्यामेव विद्यायां केषांचिदाम्नानादितरेषामनाम्नानाच्चेत्यस्य कैमुत्यप्रमाणप्रमितत्वात् तदुभयान्यथानुपपत्तिवलात् सार्वत्रिकगुणोपसंहारः कार्य इति सूत्रार्थमानतिरित्युक्तन्यायप्रदर्शनपूर्वकमाह ॥ **कर्तव्य एवेत्यादिना** ॥ उक्तं च न्यायविवरणे । सर्वगुणोपासकस्याप्यधिकारिणो भावात् एकत्र पृथक् सर्वगुणानुक्तेश्च बलादुपसंहारोपपत्तेरिति ॥ **पुरुषसूक्तमित्युक्तेति** ॥ प्रसिद्धेत्यर्थः । भाष्ये पौरुषसूक्ते

(वाक्यार्थमुक्तावली)

सर्वतः सर्वत्र प्रत्यृचं प्रतिपदं प्रत्यक्षरमित्यर्थः । सर्वतः सर्वविद्याभ्यः आधिक्येनेति वा । सूत्रे सर्वेषामनाम्नानादित्यनुक्त्वा इतरेषां केषांचिदनाम्नानादित्युक्त्या व्यावर्त्य चोद्यमाशङ्क्य निषेधति ॥ **न च वाच्यमिति** ॥ **अन्येषामिति** ॥ महतां बहुगुणाभिधायकविद्याभिः अल्पकानां कतिपय-गुणाभिधायकविद्याभिरित्यर्थः ॥ **स्वापेक्षितेति** ॥ एतेन केषांचिदित्यस्य स्वापेक्षितमध्ये केषांचिदित्यर्थः । तथा चैतदवभासार्थमितरेषामित्युक्तमिति भावः ।

## तत्त्वसुबोधिनी

**सर्वतो गुणोपसंहारेति** ॥ तत्तदुपासनयोग्यानां गुणनिर्णये ब्रह्मादीनां स्वयोग्यगुणोप-संहारकर्तव्यत्वे व्यवस्थिते । तत्रावसरप्राप्तस्वस्वोपास्यगुणप्रतिपादकविद्याभ्यो गुणोपसंहारस्य कर्तव्यत्वसमर्थनादनन्तरसङ्गतिरिति भावः । गुणोपसंहारमन्तरेण कथमुपासनमित्यत आह ॥ **ये हीति** ॥ नन्वस्तु पुरुषविद्यायामितरेषामनाम्नानम् । तथापि तत्र यावन्तो गुणाः प्रतिपाद्यन्ते तावन्त एव उपास्यन्तां किं सर्वविद्याभ्यो गुणोपसंहारेणेत्यत आह ॥ **सर्वगुणोपास्तीति** ॥ नन्वस्तु सर्वगुणोपसंहर्तॄणां अधिकारिणां सद्भवः तथापि तेषां सर्वगुणाभिधायकैकविद्ययोपास्तिः सम्भव-तीति न सर्वविद्याभ्यो गुणोपसंहारः कर्तव्यः इत्याशङ्क्याह ॥ **एकस्यात्मनेति** ॥ नन्वेकस्यां सर्वगुणानुक्तिः कुत इत्यत आह ॥ **सर्वविद्येति** ॥ कथमनेन कैमुत्यद्योतनमित्यतः सूत्रभाष्य-गतापिपदाभिप्रायकथनार्थं सर्वविद्येत्युक्तम् । ननु पुरुषसूक्तं गुणप्रतिपादकविद्या न तु तादृश-विद्यान्तरोक्तिः अदर्शनात् अतः कथं पुरुषसूक्तोक्तविद्यायामित्युक्तमित्यतो व्याचष्टे ॥ **पुरुषसूक्त-मित्युक्तविद्यायामिति** ॥ सर्वतः पौरुषेयसूक्ते गुणा इति स्मृत्यनुसारेण सूत्रेऽनाम्नाच्चेति चशब्द-सम्बन्ध इत्यभिप्रेत्य तत्समुच्चितमर्थमाह ॥ **केषाञ्चिदेवेति** ॥ चतुर्मुखस्येत्यनन्तरं सर्वविद्याभ्य इति शेषः । **सङ्ख्यासाम्यसम्भवेऽपीति** ॥ उपासकस्य विंशतिगुणाधिकारित्वे विद्यायामपि विंशति-गुणोक्त्या सङ्ख्यासाम्यसम्भवेऽपीति ।

## वाक्यार्थविवरणम्

**सर्वत इति** ॥ विप्रकीर्णनानास्थानेषूक्तस्वयोग्यगुणोपसंहारेत्यर्थः ॥ **सर्वज्ञानेति** ॥ सर्वशास्त्रोक्तगुणज्ञानेत्यर्थः ॥ **तत्सम्भवात्** ॥ स्वस्वयोग्यगुणोपासनसम्भवात् । तदेव वाक्यं

(वाक्यार्थविवरणम्)

दर्शयति ॥ **ये हीति** ॥ **सर्वत इतीति** ॥ पौरुषे सूक्ते सर्वतः सर्वत्र प्रतिपदमित्यर्थः ॥ **सङ्ख्या-साम्येति** ॥ दशगुणोपासनायोग्यः कश्चित् । विद्यायामपि कस्याश्चिद्दशैव गुणाः उक्ता इत्येवं सङ्ख्यासाम्यसम्भवेऽपि तद्विद्योक्तास्ते दश गुणा उपास्यत्वेनैतदपेक्षिततया एतद्योग्या इति नियमाभावेन सर्वतो गुणोपसंहारोऽपेक्षित इत्यर्थः ॥ **उक्तम्** ॥ सर्वज्ञानम् ।

## वाक्यार्थमञ्जरी

**प्रकृत इति** ॥ उपसंहारोऽर्थाभेदादित्यत्रेत्यर्थः । ननूपसंहाराभावे कथं तत्र तत्रोक्तगुणोपासनं बुद्धौ युगपदनारोहादित्यत आह ॥ **ये हीति** ॥

ॐ पुरुषविद्यायामपि चेतरेषामनाम्नानात् ॐ ॥ अपि सर्वविद्योत्तमायां पुरुषविद्यायां पुरुष-सूक्तोक्तविद्यायां इतरेषां केचिद्गुणानां अनाम्नानात् अपठितत्वात्केषाञ्चिदेव पठितत्वान्नैकत्र सर्वगुणोक्तिरित्यर्थः । ननु पुरुषसूक्तमेव गुणप्रतिपादकविद्या न तु तत्र तादृशविद्यान्तरोक्तिः । अदर्शनात् तत्कथं पुरुषसूक्तोक्तविद्यायामित्युक्तमित्यतो व्याचष्टे ॥ **पुरुषसूक्तमित्युक्तेति** ॥ पुरुषसूक्तमित्येवं प्रमाणान्तरोक्तविद्यायामित्यर्थः । चतुर्मुखस्येत्यनन्तरं सर्वविद्याभ्य इति शेषः ॥ **सङ्ख्यासाम्येति** ॥ स्वोपास्यगुणसमसङ्ख्याकगुणान्तरप्रतिपादनस्यापि सम्भवेन स्वोपास्यानामेव तत्रोक्तनियमाभावादित्यर्थः ।

॥ इति पुरुषविद्याधिकरणम् ॥ १५ ॥

## १६. वेधाद्यधिकरणम्

॥ ॐ वेधाद्यर्थभेदात् ॐ ॥ २६ ॥

'भिन्धि विद्धि शृणीहीति फलभेदेन सर्वशः ।
यत्यादीनां तेष्वयोगान्नाधिकारैकता भवेत् ।
अयोग्योपासनादीयुरनर्थं चार्थनाशनम्'इति बृहत्तन्त्रे ॥

### तत्त्वप्रदीपिका

इतश्च नाधिकारिणामेकरूपता ॥ **वेधाद्यर्थभेदात्** ॥ 'ताभिर्विध्यहृदये यातुधानात्' 'अग्ने त्वचं यातुधानस्य भिन्धि' 'प्रपर्वाणि जातवेदः श्रुणीहि' इत्याद्युपासनस्य दुष्टनाशनत्वेन फलवैलक्षण्यात् । यत्यादीनां तन्निग्रहायोग्यत्वाच्च ।

### तत्त्वप्रकाशिका

अत्रेश्वरसाक्षात्कारसाधनोपासने भेदनादिगुणानां सर्वोपसंहार्यत्वनिरासादस्ति शास्त्रादिसङ्गतिः । तेषां सर्वोपसंहार्यत्वे प्रागुक्तनियमभङ्गप्रसङ्गात्तन्निरसनीयमेव । 'अग्ने त्वचं यातुधानस्य भिन्धि । तं प्रत्यञ्चमर्चिषाविध्यमर्मन् । पराशृणीहि तमसा यातुधानान्' इत्यादौ श्रुता भेदनादयो गुणा विषयः । सर्वोपास्या न वेति सन्देहः । गुणद्वैविध्यदर्शनं सन्देहबीजम् । वेधादिसर्वोपास्यमिति पूर्वः पक्षः । दुष्टजननिग्रहफलत्वात् । तस्य च सर्वसज्जनापेक्षितत्वात् । 'प्राणस्त्वा वंशो हास्यतीत्येनं ब्रूयात्' । 'आततायिनमायान्तं हन्यादेवाविचारयन्' इति श्रुतिस्मृत्योर्विधानाच्च । अतो वेधादीनां सर्वोपास्यत्वान्न चतुर्गुणोपासननियम इति । सिद्धान्तयत्सूत्रं पठति ॥ **वेधादीति** ॥ न वेधादीनां सर्वोपास्यत्वं यत्याद्युपास्यत्वाभावात् । वेधाद्युपासनफलस्य हिंसाया यत्यादियोग्यफला-द्विलक्षणत्वात् । अयोग्योपासनस्य चानर्थफलत्वादिति सूत्रार्थः । अत्र स्मृतिं चाह ॥ **भिन्धीति** ॥ **शृणीहि** जहि । भिन्द्धिविद्धि शृणीहीत्येवंरूपेषूपासनेषु सर्वशो नाधिकारसाम्यं भवेत् । एतदुपासनं सर्वाधिकारिसमं न भवेदित्यर्थः कुतः । यत्यादीनां तेषूपासनेष्वयोग्यत्वात् । कस्मात् । एतदुपासनफलानां यत्यादिफलाद्विलक्षणत्वात् । अयोग्योपासनाच्चाऽनर्थादिप्राप्तेरित्यर्थः । प्राणस्त्वेत्यादिवचनान्यन्याधिकारिविषयाणीति ज्ञातव्यम् । अतो वेधादीनां सर्वोपास्यत्वा-भावान्नाभिहितनियमो भज्यत इति सिद्धम् ।

## गुर्वर्थदीपिका

प्रागुक्तनियमभङ्गप्रसङ्गादित्यस्य चतुर्गुणोपासननियमभङ्गप्रसङ्गादित्यर्थः । इत्यादौ श्रुता भेदनादयो गुणा इत्यत्रोक्तश्रुतीनामयमर्थः । हे अग्ने अग्निनामकपरमात्मन् हरसा परनिर्हरण-सामर्थ्येन शार्ङ्गमुक्तशरेण यातुधानस्य त्वचं भिन्धि विदारय । हिंसा हिंसनशीला अशनिः तव वज्रमपि हरसा हरत्यनेनेति हरः परनिर्हरणसामर्थ्यं तेन एनं यातुधानं हन्तुम् । हे अग्ने यः यतमानः कापट्येन प्रयत्नं कुर्वन् पीयूषं त्वया परिवेष्यमाणममृतं तितृप्सात् पीत्वा तृप्तिमिच्छेत् । प्रत्यञ्चं परिवेषणकाले तवाभिमुख्येन वर्तमानं तं दैतेयमर्चिषा भास्वरचक्रेण मर्मन् यस्य छेदेन म्रियते पुरुषः तन्मर्म कण्ठनाळादिकं तस्मिन्मर्मणि विध्यवेधनं कुरु शिरच्छेदं कुरु । हे अग्ने तपसा ज्वाला यातुधानान् पराशृणीहि 'शृ पाक' इति धातोः दह, भस्मीकुरु । हरसा परनिर्हरणसमर्थेन तवायुधेन रक्षः राक्षसान्तरमपि पराशृणीहि सम्यग्भस्मीकुर्विति । यत्याद्युपास्यत्वाभावादित्यत्र यद्यपि यत्यादीनां ध्यानात्प्राक्प्राणायामकरणे पापपुरुषशोषणदहनादिकमस्ति । तथापि ध्यानकाले स्वयोग्यगुणानेवोपासते । न तु भेदनादिकमिति ।

### भावबोधः

**भेदनादीनामिति** ॥ नन्वत्रापि वेधादीनामनुपास्यत्वप्रतिपादनेन 'सम्भृतिद्युव्याप्तिवेधात् 'इति एकेनैव योगेन अनुपास्यत्वप्रतिपादनसम्भवेन किं योगविभागेनेति चेत्, न । पूर्वाधिकरणे अपेक्षितफलांशस्य अन्यथासिद्ध्यैव उपासनाऽयोग्यत्वस्य इह तु सर्वथा फलायोग्यत्वेन उपासनाऽ-योग्यत्वस्य उपपादनमिति वैचित्र्यप्रदर्शनाय योगविभागस्यावश्यकत्वात् । तर्हि तदनन्तरमेव कुतो न कृतमिति चेत्, न । तथात्वे सम्भृत्यधिकरणपूर्वपक्षसिद्धान्तन्यायव्यतिरेकेण एतदधिकरणे तयोर-भावेनास्य तच्छेषत्वप्रतीतिप्रसङ्गात् । तद्भेदज्ञापनार्थमेव 'पुरुषविद्यायाम्' इत्यनेन **व्यवधानकरणा-दिति** ॥ 'तं प्रत्यञ्चं' 'पराशृणीहि' इति वाक्ययोर्व्यत्यासेन उदाहरणं तु 'भिन्धि विद्ध्य शृणीहि' इति स्मृत्यनुसारेणेति ज्ञातव्यम् । सर्वोपास्या इत्यादि । अत्र भेदादयो गुणाः सर्वोपास्या भवन्त्युत न भवन्तीति चिन्ता । तदर्थं यत्यादीनां तदुपासनयोग्यतास्ति उत नास्तीति । तदर्थं तदुपासना-जनितफलं यत्यादीनां योग्यमुत अयोग्यमिति । अनुव्याख्यानोक्तयोः 'अविशेषप्रमाणबलं' इति पूर्वपक्षसिद्धान्तन्याययोः सम्भृत्यधिकरणैतदधिकरणोभयसम्बन्धित्वमभिप्रेत्य, तौ न च मुमुक्षवः,

(भावबोधः)

इत्यविशेषाद्धरणस्य द्युतेश्च सर्वेषामपेक्षितत्वाच्च सम्भृतिद्युव्याप्ती सामान्ये इत्यादिन्यायविवरणेन विवृतौ द्युतेश्चेति 'च'शब्दस्यानुक्तदुष्टनिग्रहसमुच्चायकत्वात् । सम्भृतिद्युव्याप्ती इत्यस्योपलक्षणत्वात् । इत्यादिप्रमाणबलादिति 'आदि'शब्देन 'भिन्धि विद्धि' इत्येतदधिकरणभाष्योदाहृतप्रमाणसङ्ग्रहादित्यभिप्रेत्य सर्वेषामपेक्षितत्वादिति न्यायविवरणमत्रापि योजयति । तस्य च सर्वजनानामपेक्षितत्वादिति ।

ननु फलापेक्षायामपि अविहितत्वेन अकर्तव्येत्यत आह– **प्राणस्त्वा वंश इति** ॥ सम्भृतीत्यत्र 'अपि'पदेन अनुकृष्टस्य **नञः मण्डूकप्लुतिवदत्रानुवृत्तिरित्यभिप्रेत्य 'नाधिकारैकता'** इति स्मृत्यनुसारेण 'वेधात्' इति सौत्रप्रतिज्ञाभागं व्याचष्टे– **न वेधादीनामिति** ॥ अत्र 'अर्थभेदात्'इत्यस्य साक्षाद्धेतुत्वासम्भवात् यत्यादीनां तेष्वयोगादिति स्मृत्यनुसारेण साक्षाद्धेतुमाह– **यत्याद्युपास्यत्वाभावादिति** ॥ **अयोग्येति** ॥ अनेन सर्वेषां फलापेक्षत्वाविशेषादित्यस्य हेतोर्बाधितविषयत्वमुक्तं भवति ।

## भावदीपः

**सर्वोपसंहार्यत्वनिरासादिति** ॥ सम्भृतिनयपूर्वपक्षन्यायेन तथात्वशङ्कायां तत्रत्यसिद्धान्तन्यायेनैव तथात्वनिरसनमित्यर्थः । न च तर्हीदं व्यर्थमभ्यधिकाशङ्कयाऽस्य प्रवृत्तेः । न चैवं तदानन्तर्यमस्य शङ्क्यम् । पूर्वत्र सर्वगुणोपसंहाराधिकारिणोऽभावेन तस्य तथोपसंहारस्य विहितत्वादिना कार्यत्वे सिद्धे तर्हि भेदनाद्युपसंहारोऽपि विहितत्वात्कार्य एवेति शङ्काभिप्रायेण वा पूर्वत्र सर्वेषां यथायोग्यं सर्वतस्तदुपसंहारोक्तौ तर्हि वेधाद्यपि विहितत्वाद्योग्यमेवेत्युपसंहार्यमिति शङ्काशयेन वा पूर्वानन्तर्योपपत्तेः ॥ **प्रागुक्तेति** ॥ चतुर्गुणनियमेत्यर्थः । **अग्ने** विष्णो । **मर्मन्** मर्मणि । **शृणीहि** हिंसय **भिन्धि** विध्य शृणीहीति स्मृत्यनुसारात् श्रुतिक्रमो ध्येयः । सम्भृतिनयोक्तन्यायमाह ॥ **तस्य चेति** ॥ फलस्योपासनानुकारित्वादिति भावः । तेनागतार्थत्वाय विशेषहेतुमाह ॥ **प्राणस्त्वेति** ॥ प्राणो मुख्यप्राणो भगवांश्च त्वां हास्यति । प्राणविहीनो भवेत्येनं प्राणोपासकनिन्दकं ब्रूयात्प्रतिवदेत्प्राणोपासक इति । प्राणोपासकस्यात्मनिन्दकानिष्टकरवचनस्यैतरेयके विहितत्वात्स्मृतौ च साक्षाद्धननस्य विधानाच्च तत्फलहेतूपासनमवश्यं कार्यमित्यर्थः । 'अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्रदारापहारी च षडेते आततायिनः' इत्युक्तलक्षणमाततायिनमित्यर्थः ।

(भावदीपः)

एतेन न हिंस्यादिति वचननिषिद्धहिंसाफलकमुपासनं श्येनयागादेरिवानर्थहेतुत्वादकर्तव्यमेवेति निरस्तम् । तस्य विहितेतरपरत्वेन निषिद्धफलकत्वाभावात् । अपहायापवादविषयमुत्सर्गस्य प्रवृत्तेः । एतेनैवानन्दाद्यास्तु सर्वेषामन्यथानर्थकृदित्यादिविरोधोऽपि प्रत्युक्तः । विहितेतरसम्भृत्यादि गुणोपासनानिषेधपरत्वोपपत्तेरिति भावः ।

**फलोक्त्योपसंहरति ॥ अत इति ॥** अपेक्षितत्वाद्विहितत्वाच्च दुर्जनवेधादेरित्यर्थः । वेधादीनां भगवदीयानामित्यर्थः । अन्यथाऽपेक्षितफलाप्राप्तेरिति भावः । सूत्रे वेधादीति व्यस्तं समस्तं चेत्युपेत्य व्यस्तपक्षे स्मृत्यनुरोधेन प्रतिज्ञाहेतू व्यनक्ति **॥ न वेधादीनामिति ॥** नञो मण्डूकप्लुत्त्यानुकर्ष इति भावः । कुतो यत्यनुपास्यत्वमित्यतः समस्तपक्षार्थमाह **॥ वेधेति ॥** वेधाद्यर्थस्येत्यस्यार्थो वेधाद्युपासनफलस्य हिंसाया इति । **भेदात्** इत्यस्य विलक्षणत्वादिति । योग्यतालब्धस्य प्रतियोगिन उक्तिर्यत्यादियोग्यफलादिति । तावता यत्यनुपास्यत्वं कुत इत्यतोऽयोग्येत्यादिस्मृतिशेषोक्तदिशा भावार्थमाह **॥ अयोग्येति ॥** स्वयोग्यफलविलक्षणफलहेतूपासनस्येत्यर्थः । स्मृतिं व्याचष्टे **॥ शृणीहीति ॥ कस्मादिति ॥** अयोग्यत्वं कुत इत्यर्थः । प्रागुक्तश्रुतिस्मृत्योर्गतिमाह **॥ प्राण इति ॥ अन्येति ॥** यत्यन्येत्यर्थः । 'विष्णुना वंशभूतेन सहितं वायुना सह । न शक्नोषीति मामात्थ हास्यतस्त्वामतो हि तौ ॥ ज्ञानसामर्थ्यवानित्थं ब्रूयाद्देवादिरुत्तम इत्याद्यैतरेयभाष्यस्मृतेरिति भावः । स्मृतिरपि क्षत्रियपरेत्यर्थः । एतेन वेधादेर्यत्यनुपास्यत्वे तदुपासनं निरधिकारिकमिति निरस्तम् । देवगन्धर्वाद्यधिकारिकत्वोपपत्तेः । अत एव प्राक् भृतिव्याप्त्यादय इत्युक्तिरिति भावः **॥ अत इति ॥** फलभेदेन यत्याद्यनुपास्यत्वादित्यर्थः । यत्तु नीलवर्णषट्कोणमण्डलमध्यस्थेत्यादि । तत्तु प्रद्युम्नसंकर्षणकर्तृकपापपुरुषशोषणदाहप्रार्थनमेव । न ध्यानमिति यत्याद्यधिकारिकमपि न दोषावहम् । मुनीनां रामकर्तृकरक्षोवधप्रार्थनमिवेत्याहुः ।

## अभिनवचन्द्रिका

**अग्ने त्वचमिति ॥ हे अग्ने यातुधानस्य त्वचं भिन्धि ॥** भेदनं कुरु । तं प्रत्यञ्चं । **प्रत्यग्गतिं** वैरिणम् । **अर्चिषा मर्मन्** मर्मणि । **विध्य** ताडय । **तपसा** यातुधानान्, पराशृणीहि जहीत्यर्थः ।

(अभिनवचन्द्रिका)

पूर्वपक्षस्तु– 'अग्ने त्वचं यातुधानस्य भिन्धि' इत्यादिनोक्ता भेदनादिगुणाः सर्वोपास्याः । तत्फलस्य दुष्टनिग्रहस्य सर्वापेक्षितत्वात् । अतो वेधादीनां सर्वोपास्यत्वात् न चतुर्गुणोपासननियम इति ।

सिद्धान्तस्तु– न वेधादयः सर्वोपास्याः । तत्फले छेदनादौ यत्यादीनामनधिकारात् । तदुक्तम् 'भिन्धि विद्धि शृणोहिति फलभेदेन सर्वशः । यत्यादीनां तेष्वयोगात् नाऽधिकारैकता भवेत् ॥ अयोग्योपासनादीयुरनर्थं चाऽर्थनाशनम्' इति । अतो वेधादीनां सर्वोपास्यत्वाभावात् नाऽभिहित-नियमो भज्यत इति सिद्धम् ।

## वाक्यार्थमुक्तावली

यद्येकस्यामेव विद्यायां स्वापेक्षितगुणोक्तिनियमाभावेन विद्यान्तरस्थमुपास्यं तर्हि मानुषादीनां सर्वेषामप्यपेक्षितवेधादिकमपि तं प्रत्यञ्चमर्चिषा विध्यमर्मन् इत्यादिविद्यान्तरस्थमुपास्यं प्रसज्येत न तु 'सत्यो ज्ञानः परमानन्दरूप आत्मेत्येवं नित्यदोपासनं स्यात्'इति विधोक्तं गुणचतुष्टयमेव । अपेक्षितानामेकत्रोक्तिनियमाभावात् । नान्यत्किञ्चित्समुपासीतेति निषेधस्तु अनपेक्षितगुणनिषेधपर इत्याक्षेपोत्थानादनन्तरसङ्गतिः ॥ **अग्ने त्वचमिति** ॥ यद्यपि रक्षोघ्नसूक्ते 'ताभिर्विध्य हृदये यातुधानानग्ने त्वचं यातुधानस्य भिन्धि । प्रपर्वाणि जातवेदश्शृणीहि' इति प्रथमप्राप्तानि, क्रमिक-वाक्यानि तथापि भिन्धि विध्य शृणीहीति भाष्यानुसारेण द्वितीयस्य भिन्धीत्यस्य प्रथममुपादानम् । विद्धीति मध्यमपुरुषोपादानात् ताभिर्विध्य इति वाक्यमनुपादाय तं प्रत्यञ्चमिति वाक्यग्रहणम् । पराशृणीहीत्यस्य तं प्रत्यञ्चमित्यतः पूर्वत्वेऽपि विद्धि शृणीहीत्यनुसारेणानन्तरग्रहणम् । तं प्रत्यञ्चमिति वाक्यापेक्षया पराशृणीहीत्यस्याव्यवहितपूर्वत्वात्तस्यैवोपादानं न तु तत्पूर्वस्य प्रपूर्वा-णीत्यस्येति ज्ञेयम् । भाष्योपात्तप्रमाणे सूत्रमतिक्रम्य भेदस्य प्रथमग्रहणं तु अग्ने त्वचमिति कर्तृनामनिर्देशेन वस्तु निर्देशरूपत्वात् प्राधान्यविवक्षया । सूत्रे तु ताभिर्विध्य इति प्रथमवाक्यानु-सारेणेति विवेकः ॥ **सर्वोपास्या इति** ॥ अत्र भेदादयो गुणाः सर्वोपास्या न भवन्त्युत भवन्तीति चिन्ता । तदर्थं यत्यादीनां तत्फलयोग्यता अत एव तदुपासनायोग्यता अस्ति न वेति । सिद्धान्ते फलभेदोक्त्या सूचितं न्यायमालायां न्यायविवरणे च सम्भृत्यधिकरणपूर्वपक्षन्याय एवात्रानुसन्धेय इत्याशयेन पृथगनुक्तमविशेषतेत्युक्तन्यायं दर्शयन् पूर्वपक्षयति **वेधादीति** ॥ **तस्य चेति** ॥ तेन

(वाक्यार्थमुक्तावली)

फलस्य दुष्टनिग्रहस्य सर्वापेक्षणीयत्वेनाविशेषतेति विवृतो भवति । नन्विदमधिकरणं सम्भृत्यधिकरणेनैव गतार्थम् । तत्र योग्यतैवोपास्तिनियमप्रयोजिका न फलापेक्षेति । अत इति सूत्रखण्डेनैव निरस्तत्वाद्विषयवाक्यभेदेनाधिकरणभेदे शास्त्रापर्यवसानप्रसङ्गादित्यतोऽभ्यधिक-शङ्कामाह ॥ **प्राणस्त्विति ॥ विधानादिति ॥** फलस्यैव विधानादित्यर्थः । यस्मिन् द्यौः पृथिवी चान्तरिक्षम् । तमेवैकं जानथ प्रकाशवान्नाम स यो ह वै प्रकाशवानित्युपास्ते प्रकाशवानस्मिंल्लोके भवतीत्यादौ सम्भृत्याद्युपासनाविधानेऽपि हन्यादितिवत् स्वाधमभरणादिसम्पादयेदिति विध्यभावादिति भावः ।

सूत्रे नेत्यनुवर्तते । वेधादीति व्यस्तम् । वेधाद्यर्थेति समस्तं च पदम् । भिद्यतेऽनेनेति भेदो वैलक्षण्यम् । ततश्च वेधादि न सर्वोपास्यं तदुपासनं सर्वैस्त्याज्यमिति यावत् । कुतः वेधादि न यत्यादिभिरुपासितुं योग्यं तदपि कुतः फलेन योग्यतानिर्णयात् । वेधाद्यर्थस्य वेधाद्युपासनाफलस्य हिंसायाः यदि अर्थाद्यत्यादियोग्यफलाद्विलक्षणत्वात् । अयोग्यस्यापि गुणस्योपासना किन्न स्यादिति चेत् अर्थभेदात् । भेदोऽत्र विरोधः । स्वाभिलषितविरुद्धप्रयोजनस्यानर्थस्य प्राप्तेः । यद्वा अर्थभेदो नाशः । अर्थनाशप्राप्तेरिति भावेन सूत्राक्षरार्थमाह ॥ **न वेधादीनामित्यादिना** ॥ सम्भृत्यधिकरणे सर्वेषां स्वाधमभरणादिफलयोग्यत्वमङ्गीकृत्य तदर्थं द्युव्याप्त्यादेर्द्रव्यान्तर्भावेनोपास्तिमभ्युपगम्य प्रमाणबलेन पृथगुपासनायोग्यता निषिद्धा । इह तु सर्वेषां दुष्टनिग्रहफलापेक्षाभावेन फलयोग्यतां निषिध्योपासनायोग्यता निषिद्ध्यत इति महान्भेदः । अत्र स्मृतिमिति प्रमाणबलमित्युक्तन्यायप्रदर्शनायेति भावः ।

## तत्त्वसुबोधिनी

न चात्रापि वेधादीनामनुपास्यत्वप्रतिपादनसम्भृतिद्युव्याप्तिवेधादीति एकेनैव योगेनानुपास्यत्वप्रतिपादनसम्भवे किं योगविभागेनेति वाच्यम् । पूर्वाधिकरणेऽपेक्षितफलाशयस्यान्यथासिद्धौ चोपासनयोग्यत्वस्य तु हेतुसर्वथाफलायोग्यत्वेन उपासनायोग्यत्वस्य उपादानमिति वैचित्र्यप्रदर्शनाय योगविभागस्यावश्यकत्वात् । तर्हि तदनन्तरमेव कुतो न कृतमिति वाच्मम् । तथात्वे सम्भृत्यधिकरणपूर्वपक्षसिद्धान्तन्यायव्यतिरेकेण एतदधिकरणे तयोरभावेन अस्य तच्छेषत्वप्रतीतिप्रसङ्गात् । तद्भेदज्ञापनार्थमेव पुरुषविद्यायामित्यनेन व्यवधानकरणादिति । तं च प्रत्यपरा शृणीहीति वाक्ययोः व्यत्यासेनोदाहारणं तु 'भिन्धि श्रुणीहि' इति स्मृत्यनुसारेणेति ज्ञातव्यम् ॥ **प्रागुक्तेति** ॥

(तत्त्वसुबोधिनी)

आनन्दादय प्रागुक्तेत्यर्थः । अस्तु ततः किमित्यत आह ॥ **तस्येति** ॥ दुष्टजननिग्रहस्येत्यर्थः । ननु फलापेक्षायामपि अविहितत्वेनाकर्तव्येत्यत आह ॥ **प्राणस्त्वावंश इति** ॥ सम्भृतीत्यत्रापि-पदेनानुकृष्टस्य नञो मण्डूकस्तुतिवदत्रानुवृत्तिरित्यभिप्रेत्य 'नाधिकारिकता' इति स्मृत्यनुसारेण सौत्रं प्रतिज्ञाभागं व्याचष्टे ॥ **न वेधादीति** ॥ अत्रार्थभेदादित्यस्य साक्षाद्धेतुत्वासम्भवात् यत्यादिनामिति स्मृत्यनुसारेण साक्षाद्धेतुमाह ॥ **यत्याद्युपास्यत्वाभावादिति** ॥ **अयोग्येति** ॥ एवं च सर्वेषां फलापेक्षत्वाविशेषादित्यस्य हेतोः बाधितविषयत्वादिति भावः । अप्रतीतार्थत्वात् स्मृतिं व्याचष्टे ॥ **भिन्धीत्यादिना** ॥ फलभेदेनेत्यस्यार्थमाह ॥ **एतदिति** ॥ तर्हि प्राणस्त्वेत्यादिवचनानां का गतिरित्यत आह ॥ **प्राणस्त्वेत्यादीति** ॥

## वाक्यार्थविवरणम्

त्वचं देहम् । **प्रत्यञ्चं** विरुद्धाचरणवन्तं यातुधानम् । **अर्चिषा** सामर्थ्येन ॥ **मर्मन्** । मर्मणि विद्ध्य विद्धीत्यर्थः । यातुधानान् स्वतपसा स्वसार्थ्येन परा शृणीहि पराजहि हनेत्यर्थः ॥ **वेधादि** वेधकर्तृत्वादि ॥ **दुष्टजनेति** ॥ वेधादिकर्तृत्वोपासनस्येति शेषः । दुष्टजननिग्रहफलकत्वादित्यर्थः ॥ **तस्य चेति** ॥ दुष्टजननिग्रहरूपफलस्येत्यर्थः । शालावंशवत् चक्षुश्श्रोत्राद्याधारत्वाद्वंशः प्राणः । त्वाहास्यतीति प्रियस्वत्यर्थः ॥ **विधानात्** ॥ उक्तदुष्टजननिग्रहस्येति शेषः । तथा च तदनुसार्युपासनं कार्यमेवेति भावः । सम्भृतीति सूत्रे अपिपदाकृष्टनञोऽत्र सूत्रे वेधादीत्यनन्तरं मण्डूकप्लुत्याऽन्वय इत्याशयेनेत्युक्तम् । अर्थस्य अर्थादिति द्वेधा पदच्छेदमभिप्रेत्याह ॥ **वेधाद्युपासनफलस्येति** ॥ विलक्षणफलत्वेऽप्युपासना किं न स्यादित्यत आह ॥ **अयोग्येति** ॥ श्रु हिंसायामिति धातुमभिप्रेत्य शृणीहि जहीत्युक्तं हनेत्यर्थः । साम्यमित्येकताशब्दार्थः । फल-भेदेनेत्यस्यार्थ **एतदुपासनाफलानामिति** ॥

## वाक्यार्थमञ्जरी

॥ **नियमेति** ॥ चतुष्टयनियमेत्यर्थः ॥ **अग्न इति** ॥ स्वतो न गच्छतीत्यगं विश्वं नयतीत्यग्नि-नामन् हरे यातुधानस्य राक्षसस्य त्वचं शरीरं भिन्धि विदारयेत्यर्थः ॥ **तं प्रत्यञ्चमिति** ॥ प्रत्यञ्चं प्रत्यक्स्थितं तं राक्षसमर्चिषा विष्फुलिङ्गेन **मर्मन्** मर्मस्थले **विद्ध्य** वेधयित्वेत्यर्थः ॥ **परेति** ॥ परा परेण तपसा तुष्टस्त्वं यातुधानान् शृणीहि जहीत्यर्थः । ननु फलापेक्षायामप्यविहितत्वात् ।

(वाक्यार्थमञ्जरी)

अकर्तव्यत्वमित्यत आह ॥ **प्राण इति** ॥ इतरप्राणाधारविनशप्रधानवंशस्थानीयो प्राणः मुख्य-प्राणस्त्वा त्वां हास्यति त्यजिष्यति त्वं मरिष्यसीति यावत् इत्येनं ब्रूयादित्यर्थः ॥ **आततायिनमिति** ॥ 'अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्रदारापहर्ता च षडैते ह्याततायिनः' इत्युक्तेः । शस्त्रपाणिरित्यनन्तरं हन्तुमुद्यत इति शेषः ।

ॐ वेधाद्यर्थभेदात् ॐ ॥ वेधभेदनादिगुणजातं न सर्वोपास्यं, कुतः अर्थभेदात् अर्थस्य तत्फलस्य भेदात् विलक्षणत्वादित्यर्थः । फलात् अहिंसारूपात् आकाङ्क्षाक्रमेण स्मृतिर्व्याचष्टे ॥ **भिन्धि विद्धीत्यादिना** ॥ एकताशब्दार्थः साम्यमिति साधारण्यमित्यर्थः । तत्तात्पर्यमाह ॥ **एतदिति** ॥

॥ इति वेधाद्यधिकरणम् ॥ १६ ॥

## १७. हान्यधिकरणम्

मुक्तस्योपासना कर्तव्या न वेत्यतो ब्रवीति —

॥ ॐ हानौ तूपायनशब्दशेषत्वात्कुशाछन्दस्तुत्युपगानवत्तदुक्तम् ॐ ॥ २७ ॥

नियतस्वाध्यायानन्तरं स्वेच्छया कुशाग्रहणस्तुत्युपगानवदेव मोक्ष उपासनादिः । 'ब्रह्मविदाप्नोति परम्' (तै.उ. ३-१०) इति मोक्षवाक्यशेषत्वादितरेषाम् । तच्चोक्तम्— 'एतत्सामगायन्नास्ते' (तै.उ. ३-१०) इत्यादि । ब्रह्मतर्के च

'मुक्ता अपि हि कुर्वन्ति स्वेच्छयोपासनं हरेः ।
नियमानन्तरं विप्राः कुशाद्यैरप्यधीयते' इति ॥

'कृष्णो मुक्तैरिज्यते वीतमोहैः'इति च भारते ॥

### तत्त्वप्रदीपिका

मुक्तस्योपासना कर्तव्या न वेति निरूप्यते । न कर्तव्येति प्राप्तम् । विध्यभावात् । प्रयोजनाभावाच्च । मोक्षार्थं ह्युपासना । तत्पर्यन्तं च विधेयत्वम् । अतः कुतो मुक्तस्योपासनाप्राप्तिः । कर्तव्यैवेत्यपरः पक्षः । मुक्तस्यापि परतन्त्रत्वात् । तदा तदा विशेषभोगापेक्षयोपास्तिसम्भवादिति । अत आह– **हानौ त्वित्यादि सूत्रम् ॥** आसंसारहानेर्विहितत्वात्प्रयोजनाय क्रियते । तद्धानौ मोक्षेतूपासना स्वेच्छया क्रियते न कर्तव्यत्वात् । न हि तत्र विधिः । मोक्षवाक्यशेषत्वादुपास्तिविधिवाक्यानां मोक्षमुत्पाद्य कृतार्थत्वात् । तस्य च प्राप्तप्राप्यफलस्य साधनानिच्छुत्वात् । न च परतन्त्रत्वेऽपि तदा तदोपास्त्यधीनो मुक्तभोगः । सङ्कल्पादेवेति वक्ष्यमाणत्वात् । न च न क्रियते । 'एतत्साम गायन्नस्ते' 'ऋचां त्वः पोपमास्ते पुपुष्वान्'इत्यादि श्रुतेः ।

'मुक्ता अपि हि कुर्वन्ति स्वेच्छयोपासनं हरेः' इति स्मृतेश्च । उपगानं साम्ना । स्तुतिरन्यैः । कुशाद्यैरित्यादिशब्देन प्राङ्मुखत्वादि ॥

## तत्त्वप्रकाशिका

**अत्र ब्रह्मज्ञानसाधनोपासनस्य मुक्तावप्यनुवृत्तिसमर्थनादस्ति शास्त्रादिसङ्गतिः । मुक्तावुपासन-सिद्धौ तस्य प्रागतिशयेन कर्तव्यतासिद्धेस्तत्समर्थनीयम् । तत्र विषयसंशयौ दर्शयति ॥ मुक्तस्येति ॥ प्रकृतोपासना विषयः । मुक्तेन क्रियते न वेति सन्देहः । प्राप्तफलत्वं क्रियान्तरश्रुतिश्च सन्देहवीजमिति भावः । मुक्तस्येत्यनेनैव पूर्वपक्षोऽपि सूच्यते । न मुक्तेनोपासना क्रियते । तथा हि । किं मुक्तस्योपासना कर्तव्या न वा । नोभावपि कल्पौ । फलप्राप्तिप्रसङ्गात् । तथा चापूर्णताप्रसक्तेः । आद्ये विधिवद्धत्वेन मुक्तेः संसारसमानधर्मतापत्तेश्च । द्वितीये अविहितत्वादेव करणं च नोपपद्यते । अतः सोपाधिकमेवोपासनमिति भक्तिर्व्यर्थेति भावः । सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ अत इति ॥ अस्त्येव मोक्षे भगवदुपासना । न च विधिवद्धत्वेन संसारसमानधर्मत्वं मुक्तेः । विनाऽपि विधिं स्वेच्छयोपासनाभ्युपगमात् । न चैवं तत्करणस्यानुपपत्तिः । नियतब्रह्मयज्ञानन्तरमपि कुशैराच्छन्देन स्वेच्छयैव द्विजन्मनां मन्त्रसामाध्ययनादिदर्शनादिति भावः । अस्ति चेदुपासनं मुक्तानां तत्कुतः स्वेच्छया, विधित एव किं न स्यादित्य आह ॥ ब्रह्मेति ॥ न मुक्तस्योपासनं विधिनिवन्धनम् । सर्वोपासनाविधीनां मोक्षवाक्यशेषत्वात् । ब्रह्मज्ञानेन मोक्ष इत्युक्ते तत्कथं भवेदित्यपेक्षायां तादर्थ्येन उपासनाविधयः प्रवृत्ताः । मोक्षसिद्ध्यर्थं प्रवृत्ता विधयः कथं मुक्तविषया भवेयुरिति भावः । भवेदियं चिन्ता यदि मुक्तस्योपासनमेव स्यात्तदेव कुत इत्यत आह ॥ तच्चेति ॥ तच्चोपासनं स्वेच्छयेत्यत्र स्मृतिमाह ॥ ब्रह्मतर्के चेति ॥ किं च मुक्तानां यज्ञादिकर्माप्यास्ति किमुतोपासनमिति भावेनाह ॥ कृष्ण इति ॥**

## गुर्वर्थदीपिका

क्रियान्तरश्रुतिरित्यस्य 'जक्षन् क्रीडन्नममाणः' इत्यादिनोक्तभक्षणादिक्रियान्तरश्रुतिरित्यर्थः । फलप्राप्तिप्रसङ्गादित्यस्योपासनायाः कर्तव्यत्वे तज्जन्यसमीचीनफलप्राप्तिः । अकर्तव्यत्वे निषिद्ध-तत्करणेन मुक्तौ विपरीतफलप्राप्तिरित्यर्थः । अतस्सोपाधिकमेवोपासनमित्यत्र सोपाधिकं यावन्मुक्तिक्रियमाणत्वात्संसारोपाधिकमित्यर्थः ।

## भावबोधः

प्रागतिशयेन कर्तव्यतासिद्धेरिति । वेधाद्यर्थभेदादिति योग्यफलकमेवोपासनं कर्तव्यं नायोग्यफलकमित्युक्त्याऽर्थादुपासनस्य सोपाधिकत्वप्राप्तावतिशयेन कर्तव्यत्वाभावाक्षेपोदयेऽत्र

(भावबोधः)

तन्निरास इत्यनन्तरसङ्गतिरिति भावः ॥ **विषयसंशयौ दर्शयतीति** ॥ कर्तव्या न वेत्यस्य क्रियमाणा न वेत्यर्थ इति भावः ॥ **मुक्तेनेति** ॥ अत्र उपासना किं मुक्तेन न क्रियते उत क्रियत इति चिन्ता । तदर्थमुपासनाफलेन नियतोत न नियतेति । तदर्थमुपासनाविधयः किं मुक्तानप्यधि-कुर्वन्त्युत नेति । तदर्थं उपासनाविधीनां मोक्षवाक्यमात्रशेषत्वं न सम्भवत्युत सम्भवतीति । तदर्थं उपासनाविधीनां मोक्षार्थत्वं वदन् तदन्यार्थत्वमप्यस्ति उत मोक्षमात्रार्थत्वमिति । तदर्थं मुक्तानां फलान्तरं नास्त्युतास्तीति । तदर्थं मुक्तानामुपासनाफलाभावे न युक्तोत तदभावेऽपि युक्तेति । मुक्तस्योपासना कर्तव्या विहिता न वा । नोभावपि कल्प्यौ । मुक्तत्वादेवेति मुक्तस्येत्यादि-भाष्यस्यार्थान्तरमभिप्रेत्याह– **मुक्तस्येत्यनेनैव** इत्यादिना । तमेव पूर्वपक्षं मुक्तावुपासनाभावे फलादिकमपि स्यादिति न्यायविवरणानुसारेण प्रपञ्चयति– **तथा हीति** ॥ **कर्तव्या न वेति** ॥ विहिता वा क्रियते, उताविहिता क्रियत इत्यर्थः ॥ **फलप्राप्तिप्रसङ्गादिति** ॥ कृष्यादेस्तद्विधि-विषयपुरुषानुष्ठितस्येव तद्विध्यविषयपुरुषानुष्ठितस्यापि धान्यादिफलकत्वदर्शनादिति भावः । इष्टापत्तिपरिहाराय गतादिपदार्थमाह– **तथा चेति** ॥ तत्रत्य 'आदि' पदस्यार्थान्तरमाह– **आद्य इति** ॥ अनेन भाष्ये मुक्तस्येत्यनेनोक्तमुक्तत्वहेतुरपि समर्थितो भवति । अत्र सूत्रे 'हानौ' इत्यस्य संसारहानिरूपमोक्षार्थत्वं तदनन्तरमुपासनादिविशेष इत्यभिप्रेत्य सौत्रप्रतिज्ञाभागव्याख्यानरूपं मोक्ष उपासनादीति भाष्यं व्याचष्टे– **अस्त्येवेति** ॥ अत्र उपासनादीत्यादिपदं कर्मपरं तच्च कैमुत्येन मुक्तावुपासनासाधनार्थम् । अत एव 'कृष्णो मुक्तैः' इत्युदाहृतं प्रमाणं तथैवावतारयिष्यतीति ज्ञातव्यम् ॥ **स्वेच्छयेति** ॥ अनेन भाष्ये स्वेच्छयेत्येतदुपासनादीत्यनेनाऽपि सम्बध्यत इत्युक्तं भवति । अत एव समस्तमपि पृथक्कृत्य व्याख्यातम् । विध्यभावे नियमेनोपसनाकरणानुपपत्तिः । कारणाभावादित्याशङ्कापरिहारः संस्काराख्यकारणसत्त्वादिति न्यायविवरण एवोक्तो ज्ञातव्यः ।

ननु कुशाग्रहणस्यापि नियतस्वाध्याये विहितत्वेनैव कारणात् कथं दृष्टान्तत्वमित्यतो भाष्ये नियतस्वाध्यायानन्तरमित्युक्तमित्याशयेन तद्व्याचष्टे– **नियतब्रह्मयज्ञेति** ॥ **कुशैरिति** ॥ कुशाग्रहणेनेत्यर्थः । अनेन यथाश्रुतसूत्रे विग्रहो दर्शितः । भाष्ये तु स्वेच्छया कुशाग्रहणस्तुत्युप-गानवदिति, आच्छन्दकुशस्तुत्युपगानवदिति सम्बन्धः प्रदर्शित इति ज्ञातव्यम् । स्वेच्छयेति भाष्यानुसारेण विग्रहं सूचयन् सौत्र'च्छन्द'पदमुपादाय व्याचष्टे– **आच्छन्देनेति** ॥ सौत्र'स्तु'शब्दः

(भावबोधः)

'एवार्थः' इत्यभिप्रेत्य भाष्ये स्तुत्युपगानवदेव चेति सम्बन्धः प्रदर्शितः । तेनापि विधिव्यवच्छेदकत्वमेव ध्वनितमित्यभिप्रेत्याह– **स्वेच्छयैवेति** ॥ स्तुत्युपगानेत्यस्यार्थो **मन्त्रसामेति** ॥ **तत्कृत इति** ॥ दृष्टान्तमात्रेण मुक्तोपासनस्य विधिनिबन्धनत्वाभावासिद्धेरिति भावः । अत्र उपायनशब्दस्य सामीप्यादिमोक्षार्थत्वं इतरेषामित्यध्याहार इत्याशयेन मोक्षवाक्यशेषत्वादितरेषामिति व्याख्यातं भाष्ये ।

ननूपासनायाः साक्षान्मोक्षजनकत्वाभावेन कथं तद्विधीनां मोक्षवाक्यशेषत्वमित्यतः तद्घटयितुं 'ब्रह्मविदाप्नोति परम्' इतिवाक्यं चोदाहृतमित्यभिप्रेत्य तद्भाष्यं व्याचष्टे– **न मुक्तस्योपासनमित्यादिना** ॥

नन्वत्र मुक्तानामुपासनमेव साध्यते । न तु कर्मापि । असङ्गतत्वात् । तथा च 'कृष्णो मुक्तैरिज्यते' इति प्रमाणोदाहरणमसङ्गतमित्याशङ्कापरिहाराय तत्सङ्गतत्वेन व्याख्याति– **किञ्चेति** ॥

## भावदीपः

**समर्थनादिति** ॥ वैफल्यादिना भावशङ्कायां श्रुतिस्मृतिबलेन संस्काराख्यकारणसत्त्वयुक्त्या च समर्थनादित्यर्थः । तस्य कृत्यमाह ॥ **मुक्ताविति** ॥ एतेन पूर्वत्रोत्तमाधममध्यमानामुपास्यगुणा निर्णीताः । अधुना तूपासनं सर्वैरवश्यं कर्तव्यमिति कैमुत्यन्यायेनोपपाद्यत इत्यवान्तरसङ्गतिरप्यस्य सूचिता ॥ **प्रकृतेति** ॥ यदर्थं गुणोपसंहारो निर्णीतः । यस्याश्च समान इति सूत्रे स्वसदृशफलकत्वमुक्तं सोपासनाविषय इत्यर्थः ॥ **क्रियान्तरेति** ॥ जक्षन् क्रीडन् इत्यादिक्रियान्तरश्रुतिरित्यर्थः । न चैवं मुक्तस्योपासनाऽस्ति न वेति वा, मुक्तेन क्रियते न वेति वा भाषणं स्यादित्यत आह ॥ **मुक्तस्येत्यनेनैवेति** ॥ इत्यादिवाक्येनैवेत्यर्थः । भाष्यं चात्यर्थविस्तरमित्युक्तेरिति भावः । भाष्यसूचितप्रतिज्ञामाह ॥ **न मुक्तेनेति** ॥ कुत इत्यतो हेतुं वक्तुं भाष्यं प्रश्नपरतया व्याचष्टे ॥ **किं मुक्तस्येति** ॥ विधिबलात्क्रियते विध्यभावेऽपि वा क्रियत इति कोट्योरर्थः । भाष्ये शेषमाह ॥ **नोभावपीति** ॥ तथा च कोटिद्वयासम्भवान्न मुक्तेनोपासनं क्रियत इत्यर्थः । कुतः कोटिद्वयासम्भवो येन मुक्तस्योपासनं स स्यादित्यतः मुक्तावुपासनाभावे फलादिकमपि स्यादित्यतिप्रसङ्ग इत्यन्यत्रोक्तं हेतुमाह ॥ **फलप्राप्तीति** ॥ आद्ये विहितस्य फलव्याप्तत्वान्नित्यकर्मणोऽप्यफलत्वाभावात् । द्वितीये

(भावदीपः)

प्रयोजनमनुद्दिश्येति न्यायादिति भावः । एतेन विध्युपाधिना वा तदभावेन वा मुक्तस्योपासनाभावं फलं स्यादिति न्यायविवरणवाक्यार्थो दर्शितः । इष्टापत्तिनिरासाय फलादिकमित्यत्रादिपदार्थं व्यनक्ति ॥ **तथा चेति** ॥ ब्रह्म वेद ब्रह्मैव भवतीत्यादिनोक्तपूर्णत्वव्याघात इत्यर्थः । 'इत्यतिप्रसङ्गः' इत्यन्यत्रोक्तातिप्रसङ्गं सौत्रदृष्टान्तभागव्यावर्त्यं क्रमेण व्यनक्ति ॥ **आद्य इति** ॥ **द्वितीय इति च** ॥ **करणं च नोपपद्यत इति** ॥ कृतिरपि न युक्तेत्यर्थः । न केवलमपूर्णतापत्तिरिति चार्थः । तेन भोजनादिवदविहितस्यापि करणं युक्तमिति निरस्तम् । तत्र तृप्तिरूपफलवदिह फलभावेऽपूर्णतापत्तेरुक्तत्वादिति भावः । एवं भाष्यन्यायविवरणवाक्ये संयोज्य पूर्वपक्षयित्वा फलोक्त्योपसंहरति ॥ **अत इति** ॥ अविहितस्य निष्फलस्य च करणानुपपत्तेर्विधिफलोभयोपाधिकमेवोपासनमिति भक्तिपादोक्तमाहात्म्यज्ञानपूर्वकस्नेहरूपा भगवद्भक्तिर्व्यर्था । विध्यादिज्ञानादेव विहितानुष्ठानसम्भवादित्यर्थः ।

केचित्तु सोपाधिकमित्यस्य फलोपाधिकमित्यर्थ इत्याहुः । अन्ये तु संसारोपाधिकमित्यर्थ इत्याहुः । मोक्ष उपासनादीति प्रतिज्ञांशं व्याचष्टे ॥ **अस्त्येवेति** ॥ छन्दत इत्याकर्षणाद्वा दृष्टान्तोक्तिलब्धं वा हेतुं व्यावर्त्यपूर्वमाह ॥ **न चेति** ॥ एतेन स्वेच्छयेत्यस्योपासनादीत्यत्राप्यन्वयः सूचितः । नियतेत्यादिभाष्यं व्यावर्त्यपूर्वं व्यनक्ति ॥ **न चैवमिति** ॥ स्तुत्युपगानशब्दार्थो मन्त्रसामाध्ययनेति । उपगानसाम्ना स्तुतिरन्यैरिति तत्वप्रदीपे । ब्रह्मविदित्यादिभाष्यं शङ्कानिर्वतकतयोपयोगं वदन् व्याचष्टे ॥ **अस्ति चेदित्यादिना** ॥ साध्यमध्याहृत्याह ॥ **नेति** ॥ **तादर्थ्येनेति** ॥ 'आत्मा वा अरे द्रष्टव्यः' इत्यादिदर्शनानुवादेन श्रोतव्य इत्यादिविधानादिति भावः ॥ **ब्रह्मतर्के चेतीति** ॥ तत्र कुशाद्यैरित्यादिशब्देन प्राङ्मुखत्वादिग्राह्यमित्युक्तं तत्वप्रदीपे । कृष्ण इत्यादेरसांगत्यं निराह ॥ **किं चेति** ॥ एतेनोपासनादीति भाष्यस्थादिपदार्थो विवृतः ।

## अभिनवचन्द्रिका

**हानौ** मोक्षे, उप समीपे, **अयनं** गमनं मोक्ष इति यावत् । तस्य **शब्दः** 'ब्रह्मविदाप्नोतिपरम्' इति वाक्यम्, तच्छेषत्वादुपासनाविधीनाम् । **कुशैः** कुशग्रहणेन, **आछन्देन** स्वेच्छया. नियतब्रह्मयज्ञानन्तरं ब्राह्मणैः क्रियमाणस्तुत्त्युपगानवत्, मुक्तकर्तृकमुपासनं मन्तव्यम् । न च मोक्षे उपासनमेव नास्तीति वाच्यम् । यस्मात्, तत् उपासनम्, 'एतत्सामगायन्नास्ते' इति मोक्षे उक्तमिति सूत्रार्थः ।

(अभिनवचन्द्रिका)

**अनुवृत्तिसमर्थनादिति** ॥ फलरूपत्वेनानुवृत्तिसमर्थनादित्यर्थः ॥ **प्रागतिशयेनेति** ॥ ज्ञानसाधनत्वमात्रेण कर्तव्यत्वसिद्धावपि तस्य फलरूपत्वानुसन्धानपूर्वकं अतिबहुमानेन कर्तव्यत्वाऽसिद्धेरित्यर्थः । एतेन उपासनस्य ज्ञानाभ्यर्हितसाधनत्वेनाऽतिशयेन कर्तव्यतासिद्धिसम्भवात् तदर्थं मुक्तावनुवृत्तिसाधनं व्यर्थम् । किञ्च मुक्तावनुवृत्तिरपि अतिशयेन कर्तव्यतासिद्धिं प्रति अप्रयोजकत्वात् असमर्थनीयेति परास्तम् । तत्समर्थनस्य बहुमानातिशयजननार्थत्वात् । अनपरोक्षिणामपरोक्षज्ञानसाधनमप्युपासनम् अपरोक्षिणाऽनुष्ठितमानन्दातिशयहेतुर्भवति । मुक्तेनाऽनुष्ठीयमानं तु तस्याऽऽनन्दरूपमेव भवतीत्यादिरूपमहिमवर्णने बहुमानातिशयोत्पादात् । हेतुं वक्तुं पृच्छति **किं मुक्तस्येति** ॥ विहिता न वेत्यर्थः ॥ **नोभावपीति** ॥ उभावपि कल्पौ न तवाऽनुकूलावित्यर्थः । कल्पद्वये बाधकमाह **फलप्राप्तिप्रसङ्गादिति** ॥ प्राप्तव्यफलत्वप्रसङ्गादित्यर्थः । प्राप्तव्याभावे विध्यसम्भवात् आद्ये प्राप्तव्यफलत्वप्रसङ्गः । द्वितीयेऽपि प्रेक्षावतः प्राप्तव्याभावे प्रवृत्त्ययोगात् । प्राप्तव्यफलत्वप्रसङ्गो दुर्वार इति भावः । इष्टापत्तिवारणायाह **तथा चेति** ॥ मुक्तस्य प्राप्तव्यसद्भावेऽपूर्णत्वं स्यादिति भावः । आद्ये बाधकान्तरं चाऽस्तीत्याह **आद्य इति** ॥ 'नोभावपि' इति पूर्वेण सम्बन्धः । कल्पद्वयेऽपि अपूर्णत्वलक्षणबाधकसद्भावात्, आद्ये मुक्तेः संसारत्वापत्तिरूपबाधकान्तरसद्भावाच्च, नोभावपि कल्पौ तवानुकूलाविति भावः ।

ननु द्वितीयपक्षो ममाऽनुकूलः । न चापूर्णत्वप्रसङ्गः । प्राप्तव्यफलानङ्गीकारात् । न च प्रवृत्त्यनुपपत्तिः विष्टिगृहीतवत् कस्यचिद्भयादेव प्रवृत्त्युपपत्तेरित्यत आह **द्वितीय इति** ॥ चशब्द एवार्थे । द्वितीयपक्षे केनचित्पुरुषेण विपक्षे दण्डप्रदर्शनपूर्वकम्, अविहितत्वादेव 'उपासनं कर्तव्यम्' इत्यनुक्तत्वादेव करणमेव नोपपद्यत इत्यर्थः । इदमुक्तं भवति । आद्ये कल्पे सिद्धान्तिनः मुक्तेनोपासना क्रियत इति साधनाय प्रवृत्तिरुपपद्यते । परस्तु बाधकवशान्न सिध्यति । द्वितीये तु उपासनासाधनाय प्रवृत्तिरेव नोपपद्यते असम्भावितत्वात्, सम्भावितस्यैव साधनार्हत्वात् । ततश्च द्वितीयोऽपि न तवाऽनुकूल इति । एतेन अविहितस्यापि लोके फलाय करणदर्शनात् 'अविहितत्वादेव करणं नोपपद्यत' इत्ययुक्तमिति परास्तम् ॥ **भक्तिर्व्यर्थेति** ॥ आदरो व्यर्थ इत्यर्थः । मास्तु मुक्तस्येति । मास्तु मुक्तस्योपासनं विधिवाक्यकारितम् । तथापि स्वेच्छयैवोपासनादौ प्रवृत्तिरिति नाऽभ्युपगन्तव्यम् । उपासनाऽनिष्टनिवृत्त्योः कार्यकारणभावग्राहकप्रत्यक्षेणैव

(अभिनवचन्द्रिका)

प्रवृत्त्युपपत्तेः फलानुसन्धानमन्तरा इच्छामात्रस्य प्रवर्तकत्वादर्शनात् । अथवा पुनरस्तु विधिवाक्येनैव प्रवृत्तिः । न च मोक्षवाक्यशेषस्योपासनाविधेः उपासनाया मोक्षसाधनत्व एव तात्पर्यात् । न फलान्तराय प्रवर्तकत्वमुपपन्नमिति वाच्यम् । उभयत्रापि तात्पर्यसम्भवादित्याशङ्कां परिहरत्सूत्रं व्याचष्ट इत्यर्थः ।

पूर्वपक्षस्तु– न मुक्तेनोपासना क्रियते । तथा हि इदं तावदयं प्रष्टव्यः । मुक्तस्योपासनं विधीयते उत नेति । न तावदाद्यकल्पाश्रयणेनोपासनं मुक्तस्य वक्तुं शक्यम् । फलप्राप्तिप्रसङ्गात्, मुक्तत्वाभावप्रसङ्गाच्च । नापि द्वितीयकल्पाऽऽश्रयेण उपासनं शक्यमभ्युपगन्तुं प्राप्तव्यफलप्रसङ्गात् । प्राप्तव्यमन्तरा प्रेक्षावत्प्रवृत्त्यनुपपत्तेः, ततश्च सोपाधिकमेवोपासनमिति मुक्तिसाधनत्वादेवोपासनं कार्यम् । न तूपासने आदरातिशय इति ।

सिद्धान्तस्तु– अनुष्ठीयत एव मुक्तैरुपासनम्, 'एतत्सामगायन्नास्ते' इति वचनात् । न च विधिवद्धत्वेन संसारसमानधर्मत्वं मुक्तेः । विनाऽपि विधिं स्वेच्छयैवोपासनमित्यङ्गीकारात् । दृश्यते च नियतब्रह्मयज्ञस्वाध्यायानन्तरमपि स्वेच्छयैव कुशैराच्छन्दनेन द्विजन्मनामध्ययनादि । न च अनिष्टपरिहारार्थत्वमेव तस्य किं नाभ्युपगम्यत इति वाच्यम् । साम्पराये तर्तव्याऽभावात् । तदुक्तम् 'तीर्णो हि सर्वान् शोकान् हृदयस्य भवति' इति । किञ्च मुक्तैर्यागाद्यपि अनुष्ठीयते । किमुत उपासनम् । तदुक्तं 'कृष्णो मुक्तैरिज्यते वीतमोहैः' इति । अतो मुक्तावपि उपासनाऽनुवृत्तेः निरुपाधिकं तत् संसारे कर्तव्यमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

**मुक्तावुपासनासिद्धाविति ॥** वेधाद्यर्थभेदादिति योग्यफलकमेवोपासनं कार्यम् । नायोग्य-फलकमित्युक्त्यार्थादुपासनस्य फलोपाधिकत्वप्राप्तौ फलप्राप्त्यनन्तरं मुक्तावुपासनासिद्धौ तस्य प्रागतिशयेन कर्तव्यतासिद्धेरित्याक्षेपोत्थानादनन्तरसङ्गतिरिति भावः । ननु मुक्तावुपासनासिद्धावपि ज्ञानात्पूर्वं ज्ञानानन्तरमानन्दातिशयार्थमादरनैरन्तर्याभ्यामवश्यानुष्ठेयत्वात् कथमतिशयेनाकर्तव्यत्व-मिति चेदतिशयेनाकर्तव्यत्वं नाम निरुपाधिकतयाकर्तव्यत्वस्य विवक्षितत्वात् । न तु निरुपाधिकतयाकर्तव्यत्वमिष्टमेव । एकान्तानां तत्करणस्य फलोपाधिकत्वादिति चेन्न

(वाक्यार्थमुक्तावली)

निरुपाधिकतयाकर्तव्यत्वं मुक्तावप्यनुवर्त्यतया केवलं परोपाधिकमेव न भवतीति बुद्ध्याऽननुष्ठेयत्वं विवक्षितम् । तथा मुक्तावुपासनासिद्धौ एवंविधबुद्धेर्भ्रमत्वप्रसङ्गेन तादृशबुद्धिपूर्वमकर्तव्यत्व-प्रसङ्गादिति पर्यवस्यति । वक्ष्यति चातो मुक्तावप्यनुवृत्तेर्निरुपाधिकं तत्संसारे कर्तव्यमेवेति सिद्धमिति । कर्तव्या न वेत्यस्य क्रियमाणा न वेत्यर्थं मनसि निधायाह ॥ **मुक्तेनेति** ॥ उपासना मुक्तेन क्रियत उत न क्रियत इति चिन्ता । तदर्थं मुक्तस्योपासना विहिता न वेति । अन्यतरनिर्णयो न सम्भवत्युत सम्भवतीति ॥ **क्रियान्तरश्रुतिरिति** ॥ फलानुभवातिरिक्तसामगानादिशास्त्राभ्यास-लक्षणक्रियान्तरश्रुतिरित्यर्थः ॥ **मुक्तस्येत्यनेनैवेति** ॥ मुक्तस्योपासना कर्तव्या न वेत्यनेनैव वाक्येनेत्यर्थः । मुक्तस्येत्यनेनातिप्रसङ्गलक्षणपूर्वपक्षन्यायस्य विपर्यये पर्यवसाने युक्तिमात्रोक्त्या न्यायस्य साक्षादनुक्तत्वात् सूच्यत इत्युक्तम् । मुक्तस्योपासना न कर्तव्येत्यंशं साध्यप्रदर्शकतया व्याचष्टे ॥ **न मुक्तेनेति** ॥ कुतो नेत्यतो भाष्यं विकल्पपरतया योजयति ॥ **तथा हीति** ॥ **कर्तव्या न वेति** ॥ विहिता न वेत्यर्थः । तत्र नेत्यंशं पक्षद्वयप्रतिक्षेपकतया योजयति ॥ **नोभावपीति** ॥ कुतो नेत्यतो मुक्तस्येति विपर्यये पर्यवसानेन सूचितं 'अतिप्रसङ्ग' इत्युक्तन्यायं व्यनक्ति ॥ **फलप्राप्तिप्रसङ्गादिति** ॥ विहितानुष्ठाने सफलस्याविहितकरणे दुष्फलस्य प्राप्तिप्रसङ्गादित्यर्थः । इष्टापत्तिमाशङ्क्यातिप्रसङ्गन्यायं प्रकारान्तरेण विवृणोति । **तथा चेति** । फलप्राप्त्यङ्गीकार इत्यर्थः । न चापूर्णत्वं युक्तम् । मुक्तत्वादिति विपर्यये पर्यवसानं च द्रष्टव्यमिति भावः । अतिप्रसङ्गं च प्रकारान्तरेण विवृणोति ॥ **आद्य इति** ॥ अस्मिन्पक्षे यदि विधिबद्धः स्यात् तदा मुक्तत्व-व्याघातः । अस्ति च मुक्तत्वमिति मुक्तत्वस्य साक्षाद्विपर्यये पर्यवसानमिति द्रष्टव्यम् ॥ **द्वितीय इति** ॥ अस्मिन्पक्षे मुक्तस्याविधिबद्धस्योपासनाकरणं च नैव सम्भवतीति साक्षाद्भाष्योक्तमुक्तत्वस्य हेतुत्वमुक्तं भवति । तदेतत्सर्वमभिप्रेत्योक्तं न्यायविवरणे । मुक्तावुपासनाभावेऽफलादिकमपि स्यादित्यतिप्रसङ्ग इति ॥ **सोपाधिकमेवेति** ॥ मुक्तानामभावात् केवलं फलोपाधिकत्वेन स्वाभाविकमित्यर्थः ।

सूत्रे तुशब्दोऽवधारणे ॥ **अस्तीत्यध्याहृतेनान्वेति** ॥ विधिबन्धं विना स्वेच्छयेति संसारा-द्विशेषद्योतकश्च । अत एव हानाविति विधिबन्धहानाविति संसारसमानधर्मत्वव्यावृत्तये मुक्तिस्वरूपं निरूपितम् । तदुक्तं च तत्त्वप्रदीपे । आसंसारहानेर्विहितत्वात् प्रयोजनाय क्रियते । तद्धानौ

(वाक्यार्थमुक्तावली)

तूपासना स्वेच्छया क्रियत इति । तुशब्दश्चशब्दार्थे । तदित्यनेन सम्बद्ध्यते तदुपासनं च शब्दात् कर्म चेत्यर्थः । अत एव भाष्ये उपासनादीत्युक्तम् । तथा च हानौ तु संसाराद्विशेषेण स्वेच्छयात्रोपासनाद्यस्त्येवेति । आद्यपक्षोक्तदोषपरिहारकतया हानौ तदित्यंशं व्याकुर्वन्मोक्षे उपासनादीति भाष्यं व्याचष्टे ॥ **अस्त्येवेति** ॥ तर्हि द्वितीयपक्षोक्तदोष इत्याशङ्क्य निषेधति ॥ **न चैवमिति** ॥ अविधिबद्धत्व इत्यर्थः । कुत इत्यतस्तत्परिहाराय कुशाच्छन्द इत्ययं सूत्रखण्डः प्रवृत्तः । अत्राप्यवधारणार्थतुशब्दो बुद्ध्या विवेकेन च्छन्देत्यनेनान्वेति । स्तुत्युपगानवदेवेत्यन्वेति । तद्वदेवोपासनादिकार्यं न तस्मात् कश्चिद्विशेषः । अन्यथा तत्कारणमपि न स्यादिति भावेन प्रवृत्तं नियतस्वाध्याय इत्यादिभाष्यं व्याचष्टे ॥ **नियतब्रह्मयज्ञेति** ॥ स्तुतिर्मन्त्रः । उपगानं साम तदध्ययनमत्र लक्ष्यत इति भावः । स्वकाले विधिनियतस्वाध्यायानन्तरं संस्काराख्यकारणवशेन कुशग्रहणपूर्वमध्ययनवत् मुक्तानामपि संस्कारवशेनोपासनाकरणमुपपद्यत इति भावः । एतेन कारणमित्युक्तन्यायोऽपि सूत्रारूढो भवति । अङ्गभूतकुशग्रहणमपि स्वेच्छयेति भावेन भाष्ये बुद्ध्या विवेकेनाच्छन्देत्यस्य पूर्वं टीकायां सूत्रानुसारेणाङ्गाङ्गिभावस्फोरणाय कुशैराच्छन्देनेति सहयोगो व्याख्यातः । इतरेषामित्यध्याहृतस्यार्थः सर्वोपासनाविधीनामिति । मोक्षशब्दशेषत्वादिति वाच्ये उपायनेत्युक्तिस्तु अयनेन ज्ञानेन उप समीपेऽयनं गमनं मोक्षवाक्यार्थस्फोरणायोक्तम् । तदप्युपासनाविधीनां मोक्षवाक्यशेषत्वस्फोरणायेति भावेनाह ॥ **ब्रह्मज्ञानेनेति** ॥ तदुक्तमित्यत्रापि वार्थस्तुशब्दोऽन्वेति । तथा च तदुपासनश्रुतावुक्तम् । चशब्दात् तत्स्वेच्छायत्तत्वं च ब्रह्मतर्के उक्तमिति सूत्रार्थपरं भाष्यमवतार्य व्याचष्टे । **भवेदियमित्यादिना । किमुतोपासनमिति भावेनेति ।** किमुतोपासनमिति भावेनोपासनादिकार्यमित्यादिशब्देन मुक्तौ कर्मापि क्रियत इत्युक्तेऽर्थे स्मृतिमाहेत्यर्थः । एतेन तच्चोक्तमित्यत्र चशब्दात् मुक्तौ कर्मास्तीत्येतदप्युक्तमित्यर्थ उक्तो भवति ।

## तत्त्वसुबोधिनी

**प्रागतिशयेनेति** ॥ वेदाद्यर्थभेदादियोग्यफलकत्वे उपासनं कर्तव्यं नायोग्यफलकमित्युक्त्या उपासनस्य सोपाधिकत्वप्राप्तावतिशयेन कर्तव्यत्वाभावाक्षेपोदयेऽत्र तन्निरास इत्यनन्तरसङ्गतिरिति भावः ॥ **विषयसंशयाविति** ॥ कर्तव्या न वेत्यस्य क्रियमाणा न वेत्यर्थ इति भावः । मुक्तस्योपासना कर्तव्या विहिता न वा विहिता नोभावपि कल्पौ मुक्तत्वादेवेति मुक्तस्येति

(तत्त्वसुबोधिनी)

भाष्यस्यार्थन्तरमाह ॥ **मुक्तस्येत्यनेनैवेति** ॥ सूचितं पूर्वपक्षं प्रपञ्चयति ॥ **तथा हीति** ॥ कर्तव्या न वेति विहिता वा क्रियते न वा विहिता क्रियत इत्यर्थः ॥ **फलप्राप्तिप्रसङ्गादिति** ॥ कृष्णादेः तद्विधिविषयपुरुषानुष्ठितस्यैव तद्विध्यविषयपुरुषानुष्ठितस्यापि धान्यादिफलकत्वदर्शनादिति भावः । इष्टापत्तिमाशङ्क्याह ॥ **तथा चेति** ॥ अत्र सूत्रे हानावित्यस्य संहारहानिरूपमोक्षार्थत्वे तदनन्तरं उपासनादिति शेष इत्यभिप्रेत्य सौत्रप्रतिज्ञाभागव्याख्यानरूपं मोक्षोपासनादीति भाष्यं व्याचष्टे ॥ **अस्त्वेवेति** ॥ अत्र भाष्ये उपासनादिरित्यादिपदं कर्मपरं तच्च कैमुत्येन मुक्तोपासनार्थम् ॥ **स्वेच्छयेति** ॥ एवं च भाष्ये स्वेच्छयेत्येतदुपासनादि इत्यनेनापि सम्बध्यते ।

ननु न कुशाहरणस्यापि नियत स्वाध्यायो विहितत्वेनैवकरणात् कथं दृष्टान्तत्वमित्यभिप्रेत्य प्रवृत्तं नियते भाष्यं व्याचष्टे । नियत ब्रह्म यज्ञेति । कुशैरिति कुशाग्रहणेनेत्यर्थः । आच्छेदपदं व्याचष्टे ॥ **आच्छन्देनेति** ॥ सौत्रस्तुशब्दः एवार्थ इत्यभिप्रेत्य भाष्ये स्तुत्युपगानवदेवेति सम्बन्धः । प्रतशितस्त्वेनापि विधिव्यवच्छेदकत्वमेव ध्वनितमित्यभिप्रेत्याह ॥ **स्वेच्छयैवेति** ॥ स्तुत्युप-गानेत्यस्यार्थो मन्त्रसामेति तत्कुतः इति । दृष्टान्तमात्रेण मुक्तोपासनस्य विधिनिबन्धत्वाभावा-सिद्धेरिति भावः । अत्रोपासनाशब्दस्य सामीप्यादिमोक्षार्थत्वे इतरेषामित्यध्याहार इत्याशयेन मोक्षवाक्यशेषत्वादितरेषामिति व्याख्यातं भाष्ये । ननूपासनायाः साक्षान्मोक्षजनकत्वाभावेन कथं तद्विधीनां मोक्षवाक्यशेषत्वं इत्यतः तद्घटयितुं 'ब्रह्मविदाप्नोति परं' इति वाक्यं उदाहृतमित्यभिप्रेत्य तद्भाष्यं व्याचष्टे ॥ **न मुक्तोपासनमिति** ॥ मोक्षवाक्यशेषत्वमुपासनाविधीनामुक्तं प्रकटयति ॥ **ब्रह्मज्ञानेनेति** ॥ नन्वत्र मुक्तानामुपासनमिति मोक्षवाक्यशेषत्वं उपासनमेव साध्यते न तु कर्मापि, असङ्गतत्वात् । तथा च 'कृष्णो मुक्तैः' इति प्रमाणोदाहरणं असङ्गतमित्याशङ्क्य तत्सङ्गतत्वेन व्याख्याति ॥ **किं चेति** ॥

## वाक्यार्थविवरणम्

**तस्य प्रागतिशयेनेति** ॥ यदि मोक्षे उपासना भवेत् तर्हि मोक्षेऽपि निरुपाधिकतया उपासनायाः क्रियमाणत्वात् प्रागपि संसारावस्थायां निरुपाधिकतयैव कर्माद्यपेक्षया अतिशयेन कर्तव्यत्वं स्यात् । मोक्ष उपासनाया असिद्धौ प्रागवस्थायां क्रियमाणोपासनस्य सोपाधिकत्वप्राप्त्या नातिशयेन कर्तव्यत्वसिद्धिरिति भावः । प्राप्तफलत्वं निषेधकोटिप्रापकम् । यज्ञादिक्रियाश्रवणेन

(वाक्यार्थविवरणम्)

तद्वदुपासनापि कर्तव्येति विधिकोटिप्रापकम् ॥ **कर्तव्येति** ॥ कर्तव्यतया विहितैव क्रियते न वा अविहितैव क्रियत इत्यर्थः ॥ **फलप्राप्तीति** ॥ कृष्यादिकर्तव्यतया तदकर्तव्यतया च विहितानां शूद्राणां ब्राह्मणानां च तत्करणे फलदर्शनादित्यर्थः । समुदायेन दूषयित्वा प्रत्येकं च दूषणमाह ॥ **आद्य इति** ॥ आद्ये विहितत्वात् कर्तव्येत्याद्यपक्षे, द्वितीये अविहितैव क्रियत इति द्वितीयपक्षे अविहितस्य करणे अनर्थाख्यफलप्रसङ्ग उक्तः । इदानीमविहितत्वात् करणमेव नोपपद्यत इत्युच्यत इति भेदः ॥ **सोपाधिकमेवेति** ॥ फलप्राप्त्यपेक्षया तत्प्राप्तिपर्यन्तमेव कर्तव्यं, न तु तदनन्तरमपीत्यर्थः ॥ **भक्तिर्व्यर्थेति** ॥ भक्तिपूर्विकोपासना व्यर्थेत्यर्थः । न हि वेतनाद्युपाधिना क्रियमाणराजसेवायां भृत्यादेर्भक्तिर्दृष्टेत्यर्थः । अनुपपत्तिः अविहितत्वादेवेति शेषः ॥ **मन्त्रसामेति** ॥ तथा च मन्त्रेण स्तुतः । साम्ना उपगानमिति ध्येयम् ॥ **विधितः** ॥ विधिबद्धत्वेन । मोक्षेत्युपगानशब्दार्थः ॥ **तादर्थ्येन** ब्रह्मज्ञानार्थत्वेन ॥ **मुक्तविषयाः** ॥ मुक्तस्य स्वबद्धत्वापादकाः ॥ **तच्चेतीति** ॥ तथा च तच्चोपासनं मुक्तानां श्रुतावुक्तमित्यर्थः । भाष्ये एतत्साम सर्वत्र समत्वात् साम तत् । गायन् तद्विषयकोपासनं कुर्वन्नास्त इत्यपि श्रुत्यर्थोऽभिप्रेत इति ध्येयम् । स्मृतौ कुशाग्रैः । कुशग्रहणेनेत्यर्थः ॥ **कृष्ण इति** ॥ कृष्णशब्दो मूलरूपभगवद्वाचीति प्रागेवोक्तमिति हृदयम् । भाष्ये हानावित्यस्य व्याख्यानं मोक्ष इति सर्वदुःखहानिरूपत्वादित्याशयः ।

## वाक्यार्थमञ्जरी

**अतिशयेनेति** ॥ तथात्वे तस्य मोक्षार्थमेवानुष्ठितव्यत्वेन सोपाधिकत्वप्राप्तेरित्यर्थः ॥ **क्रियान्तरेति** ॥ यज्ञादिक्रियाश्रवणमित्यर्थः ॥ **कर्तव्या न वेति** ॥ विहिता वा क्रियते उताविहिता वा क्रियत इत्यर्थः ॥ **फलप्राप्तिप्रसङ्गादिति** ॥ कृष्यादेस्तद्विधिविषयपुरुषानुष्ठितस्येव तद्विध्यविषयपुरुषानुष्ठितस्यापि धान्यादिफलकत्वदर्शनादिति भावः । इष्टापत्तिं परिहरति ॥ **तथा चेति** ॥

ॐ हानौ तूपायनशब्दशेषत्वात्कुशाच्छन्दस्तुत्युपगानवत्तदुक्तम् ॐ ॥ हानौ संसारहानिरूपमुक्तौ उपासनमस्त्येव कुतः यतस्तदुक्तं तत् मुक्तोपासनं, एतत्सामगायन्निति श्रुत्युक्तं तदपि स्वेच्छया न विधितः उपासनाविधीनामुपायनशब्दशेषत्वात् । उपायनं मोक्षः तस्य शब्दः ब्रह्मविदाप्नोतीति वाक्यं तच्छेषत्वात् तदर्थोपयुक्तार्थपरत्वात् विध्यभावे स्वेच्छामात्रेण कथं तत् कुशाच्छन्दस्तुत्युपगानवत् कुशैः कुशग्रहणेनाच्छन्देन स्वेच्छया स्तुतिर्मन्त्रः उपगानं साम

(वाक्यार्थमञ्जरी)

तदुभयाध्ययनवदित्यर्थः ॥ **तत्कृत इति** ॥ दृष्टान्तमात्रस्यासाधकत्वादिति भावः । शेषोक्तिं व्यनक्ति ॥ **ब्रह्मज्ञानेनेति** ॥ अप्रयोजकत्वं परिहरति ॥ **मोक्षसिद्ध्यर्थं चेति** ॥ विधेः फलावसानत्वादिति भावः । एवं मुक्तोपासनस्य विधिनिबन्धनत्वाभावमङ्गीकृत्य स्वेच्छयैवोपासनमित्येतन्न युक्तमित्युक्तम् । इदानीं तस्य विधिनिबन्धनत्वेऽपि न दोष इत्यत आह ॥ **किं चोपासनेति** ॥ उपायनशब्दशेषत्वादित्यनेन मुक्तोपासनस्य मोक्षफलकत्वाभावसिद्धावपि फलान्तरार्थत्वाभावासिद्धेरिति भावः ।

## सूत्रभाष्यम्

**॥ ॐ साम्पराये तर्तव्याभावात्तथा ह्यन्ये ॐ ॥ २८ ॥**

**स्वेच्छया इत्यङ्गीकर्तव्यम् । मुक्तस्य तीर्णत्वात् । 'तीर्णो हि तदा सर्वांश्छोकान्हृदयस्य भवति' (बृ. उ. ६-३-२२) इति ह्यन्ये पठन्ति ।**

**वायुप्रोक्ते च–**

**'स्थितप्रज्ञत्वमाप्ता ये ज्ञानेन परमात्मनः ।**
**ब्रह्मलोकं गतास्सर्वे ब्रह्मणा च परं गताः ।**
**तीर्णतर्तव्यभागाश्च स्वेच्छयोपासते परम्' इति ॥**

## तत्त्वप्रदीपिका

हृद्ययनाद्धृदयः परमेश्वरः । तदा स्वदृष्ट्याऽपि परमेश्वरस्यैव भवति । तर्तव्यो भागस्तर्तव्यभागः ।

## तत्त्वप्रकाशिका

मास्तु मुक्तस्य विधिनिबन्धनोपासनं तथाऽपि न स्वेच्छया मोक्षे तदा तदा प्राप्तानिष्टपरिहारार्थत्वोपपत्तेः । न हि निष्फलां स्वेच्छयैव प्रवृत्तिं पश्यामः । किं चोपासनाविधीनां मोक्षार्थत्वं मुक्तावनिष्टपरिहारार्थत्वं च किं न स्यादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ **साम्पराय इति** ॥ मुक्तस्योपासनं स्वेच्छयैवेत्यङ्गीकारार्थं न त्वनिष्टपरिहारार्थम् । 'तीर्णो हि' इति श्रुतेस्तस्य तर्तव्यानिष्टस्यैवाभावात् । फलाभावेऽपि क्रियेश्वरक्रियावदुपपद्यत इति भावः । सर्वहृद्गतस्य विष्णोः

(तत्त्वप्रकाशिका)

**शेषभूतो भवतीत्यर्थः । अत्र स्मृतिं चाह ॥ वायुप्रोक्ते चेति ॥ स्थितप्रज्ञत्वमपरोक्षज्ञानित्वम् । ज्ञानेन परोक्षेण । अतो मुक्तावप्युपासनानुवृत्तेर्निरुपाधिकं तत्संसारे कर्तव्यमेवेति सिद्धम् ।**

## गुर्वर्थदीपिका

मास्तु मुक्तस्येत्यादिवाक्यस्य यथा रागतः प्राप्ते भोजने विध्यभावेऽपि तदा तदा प्राप्तक्षुत्परिहारार्थं तत्क्रियते न तु स्वेच्छया तथेत्यर्थः । किञ्चेति वाक्यस्य यथा बहुदूरयात्रया धर्मपीडितस्य माध्याह्निकं स्नानं विधिपरिपालनार्थं धर्मनिवारणार्थं च तथेत्यर्थः ।

## भावबोधः

न हि निष्फलां स्वेच्छयैव प्रवृत्तिं पश्याम इति । मुक्ता अपि हीति ब्रह्मतर्कवाक्ये उपासनस्येच्छानिमित्तकत्वश्रवणेऽपि निष्फलत्वाश्रवणात् नियतस्वाध्यायानन्तरस्तुत्युपगानादौ कुशाग्रहणस्य इच्छानिमित्तकत्वेऽपि अदृष्टरूपफलसद्भावान्न तद्विरोध इति भावः । एवं मुक्तौ उपासनस्य विधिनिबन्धनत्वाभावमङ्गीकृत्य न स्वेच्छयैवोपासनमित्युनुपपन्नमित्युक्तम् । इदानीं तस्य विधिनिबन्धनत्वेऽपि न दोष इत्याह– **किं चेति ॥** उपासनशब्दस्य शेषत्वादित्यनेन मुक्तोपासनस्य मोक्षफलकत्वाभावसिद्धावपि फलान्तरार्थत्वाभावासिद्धेरिति भावः । इति श्रुतेरिति । उपलक्षणमेतत् । 'न हीयते यत्र गत्वा न वर्धते' इति न्यायविवरणोदाहृतमपि वचनं ग्राह्यम् । न हि निष्फलामित्युक्तमुद्धरति– **फालाभावेऽपीति ॥ हृद्गतस्येति ॥** अनेन हृद्ययनाद्धृदयमित्युक्तं भवति । षष्ठ्यर्थसम्बन्धमेवाह– **शेपभूत इति ॥** ननु स्वस्य स्वज्ञानसाधनत्वाभावेन कथं परमात्मनो ज्ञानेन स्थितप्रज्ञत्वमाप्ता इत्युच्यन्त इत्यतो व्याचष्टे– **स्थितप्रज्ञत्वमित्यादिना ॥** अत्राद्ये मुक्तोपासनस्य स्वेच्छामात्रनिबन्धनत्वप्रतिपादनम् । द्वितीये तस्यैवोपपादनम् । यद्यप्यत्र पूर्वसूत्रात् 'हानौ' इत्यनुवृत्तिः सम्भवति । तथापि तद्विवरणार्थं पुनः 'साम्पराय' इत्युक्तम् ।

## भावदीपः

**प्राप्तानिष्टेति ॥** तदा तदा प्राप्तव्यभोगविशेषार्थत्वं तु न शङ्कार्हं संकल्पादेव तच्छ्रुतेरिति मुक्तस्य संकल्पादेव तत्प्राप्तेर्वक्ष्यमाणत्वात् । अतः सूत्रादौ तर्तव्याभावादित्येवोक्त्या

(वाक्यार्थमञ्जरी)

तदुभयाध्ययनवदित्यर्थः ॥ **तत्कुत इति** ॥ दृष्टान्तमात्रस्यासाधकत्वादिति भावः । शेषोक्तिं व्यनक्ति ॥ **ब्रह्मज्ञानेनेति** ॥ अप्रयोजकत्वं परिहरति ॥ **मोक्षसिद्ध्यर्थं चेति** ॥ विधेः फलावसानत्वादिति भावः । एवं मुक्तोपासनस्य विधिनिबन्धनत्वाभावमङ्गीकृत्य स्वेच्छयैवोपासनमित्येतन्न युक्तमित्युक्तम् । इदानीं तस्य विधिनिबन्धनत्वेऽपि न दोष इत्यत आह ॥ **किं चोपासनेति** ॥ उपायनशब्दशेषत्वादित्यनेन मुक्तोपासनस्य मोक्षफलकत्वाभावसिद्धावपि फलान्तरार्थत्वाभावासिद्धेरिति भावः ।

## सूत्रभाष्यम्

### ॥ ॐ साम्पराये तर्तव्याभावात्तथा ह्यन्ये ॐ ॥ २८ ॥

**स्वेच्छया इत्यङ्गीकर्तव्यम् । मुक्तस्य तीर्णत्वात् । 'तीर्णो हि तदा सर्वाञ्छोकान्हृदयस्य भवति' (बृ. उ. ६-३-२२) इति ह्यन्ये पठन्ति ।**

**वायुप्रोक्ते च–**

**'स्थितप्रज्ञत्वमाप्ता ये ज्ञानेन परमात्मनः ।**
**ब्रह्मलोकं गतास्सर्वे ब्रह्मणा च परं गताः ।**
**तीर्णतर्तव्यभागाश्च स्वेच्छयोपासते परम्' इति ॥**

## तत्त्वप्रदीपिका

हृदयनाद्धृदयः परमेश्वरः । तदा स्वदृष्ट्याऽपि परमेश्वरस्यैव भवति । तर्तव्यो भागस्तर्तव्यभागः ।

## तत्त्वप्रकाशिका

मास्तु मुक्तस्य विधिनिबन्धनोपासनं तथाऽपि न स्वेच्छया मोक्षे तदा तदा प्राप्तानिष्टपरिहारार्थत्वोपपत्तेः । न हि निष्फलां स्वेच्छयैव प्रवृत्तिं पश्यामः । किं चोपासनाविधीनां मोक्षार्थत्वं मुक्तावनिष्टपरिहारार्थत्वं च किं न स्यादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ **साम्पराय इति** ॥ मुक्तस्योपासनं स्वेच्छयैवेत्यङ्गीकारार्थं न त्वनिष्टपरिहारार्थम् । 'तीर्णो हि' इति श्रुतेस्तस्य तर्तव्यानिष्टस्यैवाभावात् । फलाभावेऽपि क्रियेश्वरक्रियावदुपपद्यत इति भावः । सर्वहृद्गतस्य विष्णोः

(तत्त्वप्रकाशिका)

**शेषभूतो भवतीत्यर्थः । अत्र स्मृतिं चाह ॥ वायुप्रोक्ते चेति ॥ स्थितप्रज्ञत्वमपरोक्षज्ञानित्वम् । ज्ञानेन परोक्षेण । अतो मुक्तावप्युपासनानुवृत्तेर्निरुपाधिकं तत्संसारे कर्तव्यमेवेति सिद्धम् ।**

## गुर्वर्थदीपिका

मास्तु मुक्तस्येत्यादिवाक्यस्य यथा रागतः प्राप्ते भोजने विध्यभावेऽपि तदा तदा प्राप्तक्षुत्परिहारार्थं तत्क्रियते न तु स्वेच्छया तथेत्यर्थः । किञ्चेति वाक्यस्य यथा बहुदूरयात्रया धर्मपीडितस्य माध्याह्निकं स्नानं विधिपरिपालनार्थं धर्मनिवारणार्थं च तथेत्यर्थः ।

## भावबोधः

न हि निष्फलां स्वेच्छयैव प्रवृत्तिं पश्याम इति । मुक्ता अपि हीति ब्रह्मतर्कवाक्ये उपासनस्येच्छानिमित्तकत्वश्रवणेऽपि निष्फलत्वाश्रवणात् नियतस्वाध्यायानन्तरस्तुत्युपगानादौ कुशाग्रहणस्य इच्छानिमित्तकत्वेऽपि अदृष्टरूपफलसद्भावान्न तद्विरोध इति भावः । एवं मुक्तौ उपासनस्य विधिनिबन्धनत्वाभावमङ्गीकृत्य न स्वेच्छयैवोपासनमित्युनुपपन्नमित्युक्तम् । इदानीं तस्य विधिनिबन्धनत्वेऽपि न दोष इत्याह– **किं चेति ॥** उपासनशब्दस्य शेषत्वादित्यनेन मुक्तोपासनस्य मोक्षफलकत्वाभावसिद्धावपि फलान्तरार्थत्वाभावासिद्धेरिति भावः । इति श्रुतेरिति । उपलक्षणमेतत् । 'न हीयते यत्र गत्वा न वर्धते' इति न्यायविवरणोदाहृतमपि वचनं ग्राह्यम् । न हि निष्फलामित्युक्तमुद्धरति– **फालाभावेऽपीति ॥ हृद्गतस्येति ॥** अनेन हृद्ययनाद्धृदयमित्युक्तं भवति । षष्ठ्यर्थसम्बन्धमेवाह– **शेषभूत इति ॥** ननु स्वस्य स्वज्ञानसाधनत्वाभावेन कथं परमात्मनो ज्ञानेन स्थितप्रज्ञत्वमाप्ता इत्युच्यन्त इत्यतो व्याचष्टे– **स्थितप्रज्ञत्वमित्यादिना ॥** अत्राद्ये मुक्तोपासनस्य स्वेच्छामात्रनिबन्धनत्वप्रतिपादनम् । द्वितीये तस्यैवोपपादनम् । यद्यप्यत्र पूर्वसूत्रात् 'हानौ' इत्यनुवृत्तिः सम्भवति । तथापि तद्विवरणार्थं पुनः 'साम्पराय' इत्युक्तम् ।

## भावदीपः

**प्राप्तानिष्टेति ॥** तदा तदा प्राप्तव्यभोगविशेषार्थत्वं तु न शङ्कार्हं संकल्पादेव तच्छ्रुतेरिति मुक्तस्य संकल्पादेव तत्प्राप्तेर्वक्ष्यमाणत्वात् । अतः सूत्रादौ तर्तव्याभावादित्येवोक्त्या

(भावदीपः)

तद्व्यावर्त्यमेवोक्तम् । ननु गानव्याख्यानादौ शिरोहस्तादिचेष्टावन्निष्फलैवास्तु । 'अङ्गचेष्टा यथा पुंसः काश्चिदुद्देशवर्जिताः' इत्युक्तेरित्यत आह ॥ **न हीति** ॥ **प्रवृत्तिमिति** ॥ आयाससाध्य-प्रवृत्तिमित्यर्थः । उपासनं तु चित्तैकाग्र्यादिरूपत्वादायाससाध्यमिति भावः । नन्वेवं तादर्थ्ये-नोपासनाविधयः प्रवृत्ता इति पूर्वोक्तं मोक्षहेतुज्ञानार्थत्वेनोपासनवाक्यशेषत्वमयुक्तम् । अनिष्ट-परिहारार्थत्वे मुक्तविषयत्वस्यापि प्राप्तेरित्यत आह ॥ **किं चेति** ॥ एतच्च शङ्काद्वयं सूत्रे तर्तव्याभावोक्त्यैव निरस्तं भवतीति भावेनोक्तम् ॥ **इत्याशंङ्कां परिहरदिति** ॥ भाष्यं व्याचष्टे ॥ **मुक्तस्येति** ॥ हिर्हेतावित्युपेत्याह ॥ **श्रुतेरिति** ॥ कथं तर्हि क्रियेत्यतः उपासनायाः संस्काराख्य-कारणस्य सत्त्वादिति न्यायविवरणभावमाह ॥ **ईश्वरक्रियावदिति** ॥ अङ्गचेष्टा कुशाग्रहरणस्तु-त्युपगानादिरादिपदार्थः । चित्तैकाग्र्यादिसाध्यत्वेऽपि स्वाभाविकत्वान्न फलापेक्षेति भावः । श्रौतहृदयशब्दस्य हृद्ययनादिति व्युत्पत्तिमुपेत्यार्थमाह ॥ **सर्वहृद्गतस्येति** ॥ अत इति ॥ मुक्तोपासनस्येश्वरक्रियावदैच्छिकत्वादित्यर्थः ॥

## वाक्यार्थमुक्तावली

ननु हानावित्युक्त्यैव सर्वानिष्टहानेरुक्तत्वात् नेदं चोद्यमवकाशमर्हतीत्यत आह ॥ **न हि निष्फलमिति** ॥ तथा चान्यथानुपपत्त्या पुरुषार्थेऽपि स्वर्गे भाविपातशङ्कया प्राप्तक्लेशवत् प्राप्तानिष्टपरिहारार्था प्रवृत्तिरिति भावः । एवमुक्तोपासनस्य विधिनिबन्धनत्वाभावमङ्गीकृत्यापि न स्वेच्छाधीनत्वमित्युक्तम् । अधुनानिष्टपरिहाराय विधिनिबन्धनत्वमेवास्त्वित्याह ॥ **किञ्चेति** ॥ सूत्रे तदाच्छन्देनैवेति पदद्वयानुवृत्तिमभिप्रेत्य प्रवृत्तं भाष्यं व्याचष्टे ॥ **मुक्तस्येति** ॥ हि यस्मात् तथा तर्तव्यानिष्टाभाववत्त्वेनान्ये शाखिनो मुक्तिं पठन्ति । अतः साम्पराये तर्तव्याभावात् स्वेच्छयै-वोपासनमिति सूत्रार्थ इति भावः । हानावित्यनुवृत्तावपि पुनः साम्पराय इत्युक्तिः सम्यक्परस्मिन् नयनं सम्परायः । स एव साम्परायः । न तु स्वर्गाद्ययनवत् सम्भावितक्लेशः । ब्रह्मप्राप्ति-रूपत्वादिति तर्तव्याभावोपपादनायेति ज्ञेयम् । न हि निष्फलमित्युक्तिमुद्धरति ॥ **फलाभावेऽपीति** ॥ कथमिदं भाष्यलब्धमित्यतो हृदयस्य भवतीत्यनेन लब्धमिति भावेन तद्व्याचष्टे ॥ **सर्वेति** ॥ हृदयस्य गच्छतीति हृदयं बिम्बभूतं ब्रह्म । तस्य शेषभावो नामाभिव्यक्तप्रतिबिम्बभावः । तथा च फलाभावेऽपि क्रियाबिम्बभूतेश्वरक्रियावदिच्छयैवोपपद्यत इति लक्ष्यत इति भावः । तीर्णः

(वाक्यार्थमुक्तावली)
तर्तव्यभागो यैस्ते तीर्णतर्तव्यभागाः । अत्राद्योक्तस्य मोक्षे स्वेच्छयैवोपासनस्याक्षेपेण द्वितीयं समाधानमिति सूत्रक्रमः ।

## तत्त्वसुबोधिनी

**न हि निष्फलमिति** ॥ मुक्ता अपि हीति वाक्ये उपासनस्येच्छानिमित्तकत्वश्रवणेऽपि निष्फलत्वाश्रवणान्नियतस्वाध्यायानन्तरं स्तुत्युपगानादौ कुशाग्रहणस्य इच्छानिमित्तकत्वेऽपि अदृष्टरूपफलसद्भावान्न तद्विरोध इति भावः । एवं मुक्तोपासनस्य विधिनिबन्धनत्वाभावमङ्गीकृत्य स्वेच्छयैवोपासनमित्यनुपपन्नमित्युक्तम् । इदानीं तस्य विधिनिबन्धनत्वेऽपि न दोषः इत्याह ॥ **किं चेति** ॥ उपासनाशब्दशेषत्वादित्यनेन मुक्तोपासनस्य मोक्षफलकत्वाभावसिद्धावपि फलान्तरार्थत्वाभावसिद्धेरिति भावः ॥ **इति श्रुतेरिति** ॥ 'न हीयते यत्र गत्वा यत्र गत्वा न बध्यते' इत्यपि ग्राह्यम् । न हि निष्फलमित्युक्तं उद्धरति ॥ **फलाभावेऽपीति** ॥ **हृद्गतस्येति** ॥ अनेन हृद्ययनात् हृदयमित्युक्तं भवति । षष्ठ्यर्थसम्बन्धमेवाह ॥ **शेषभूत इति** ॥ ननु स्वस्य साधनत्वाभावेन कथं परमात्मनो ज्ञानेन स्थितप्रज्ञत्वमाप्ता इत्युच्यते इत्यतो व्याचष्टे ॥ **स्थितप्रज्ञत्वमित्यादिना** ॥ अत्राद्ये मुक्तोपासनस्य स्वेच्छया मात्रनिबन्धनत्वप्रतिपादनं अस्य च सूत्रस्यात्र उपासनादिति शेषः । आसंसारहानेः विहितत्वात् प्रयोजनाय क्रियते । तद्धानौ संसारहानिरूपमोक्षे स्वेच्छयैव उपासनादिमुक्तेन क्रियते । अत्र दृष्टान्तः कुशाच्छन्दस्तुत्युपगानवदिति । स्तुतिश्च उपगानं च स्तुत्युपगाने कुशैः आच्छन्दस्तुत्युपगाने तयोरिवेति तद्वत् । एवं च नियतब्रह्मयज्ञानन्तरं द्विजन्मनां कुशैः कुशाग्रहणेन कुशाग्रहणपूर्वकं आच्छन्देन स्वेच्छयैव स्तुत्युपगानवत् मन्त्रसामाध्यदनवत् इत्यर्थः । नन्वस्ति चेदुपासनं तर्हि विधित एव तत्किं न स्यात् इत्यत उक्त उपायनशब्दशेषत्वादिति । उपायनं मोक्षः तत्प्रतिपादकं 'ब्रह्मविदाप्नोति परं' इति वाक्यं उपायनशब्दः तच्छेशत्वादितरेषां विधीनामित्यर्थः । तथा च मोक्षसिध्यर्थप्रवृत्तविधीनां न मुक्तविषयत्वमिति भावः । मुक्तस्योपासनमेव कुत इत्यत आह ॥ **तदुक्तमिति** ॥ तदुपासनं मुक्तौ क्रियते इति श्रुत्युक्तमित्यक्षरार्थः । द्वितीये तस्यैवोपपादनम् । यद्यप्यत्र पूर्वसूत्रात् हानावित्यस्यानुवृत्तिः सम्भवति तथापि तद्विवरणार्थं पुनः साम्पराय इत्युक्तम् ।

## वाक्यार्थविवरणम्

उपासनादीति शेषोक्तिः । विधिबन्धेनोपासाऽभावेऽपि स्वेच्छयैवास्त्वित्यत आह ॥ **तथाऽपीति** ॥ न स्वेच्छयेत्यनन्तरं किन्त्विति शेषः । ननु स्वेच्छया निष्फला प्रवृत्तिर्न दृष्टेति चेत्तत्राह ॥ **फलाभावेऽपीति** ॥ साम्पराये मोक्षे तर्तव्यानिष्टाभावात् उपासनं स्वेच्छयैवेत्यङ्गी-कार्यमिति सूत्रखण्डार्थः । शेषभूतः भृत्यः । अनुवृत्तेरित्यनन्तरं निरुपाधिकतयेति शेषः ।

## वाक्यार्थमञ्जरी

नानिष्टपरिहारार्थमुक्तोपासनं कुतः साम्पराये मोक्षे तर्तव्यस्य निरसनीयस्यानिष्टस्यैवाभावात् कुतः हि यस्मादन्ये शाखिनस्तथा पठन्तीत्यर्थः । न हि निष्फलमित्युक्तदोषं निरस्यति ॥ **फलाभावेऽपीति** ॥ **हृद्गतस्येति** ॥ अनेन हृद्यनाद्धृदयमित्युक्तं भवति षष्ठ्यर्थसम्बन्धमेवाह ॥ **शेषभूत इति** ॥ तद्भृत्यत्वादिसम्बन्धविशेषवान् भवतीत्यर्थः ॥

॥ इति हान्यधिकरणम् (पा.मुक्तोपासनाधिकरणम्) ॥ १८ ॥

## १८. छन्दाधिकरणम्

कर्मापि कुर्वन्ति न वेत्यत आह —

॥ ॐ छन्दत उभयाविरोधात् ॐ ॥ २९ ॥

स्वेच्छया कुर्वन्ति न वा । बन्धप्रत्यवाययोरभावात् ।

### तत्त्वप्रदीपिका

उपासनं स्वेच्छया कुर्वन्त्येवेत्युक्तम् । कर्मापि कुर्वन्ति न वेत्यधुना निरूप्यते । कर्मापि कुर्वन्त्येव पूर्वोक्तन्यायेनेत्याकाङ्क्षायां कुर्वन्ति न वेत्याह ॥ **छन्दत उभयाविरोधात्** ॥ स्वेच्छया कुर्वन्ति न वा कुर्वन्ति । करणे बन्धाभावात् । अकरणे प्रत्यवायाभावात् ।

### तत्त्वप्रकाशिका

अत्र मुक्तानां भगवत्कर्मणि नियमाभावसाधनादस्ति शास्त्रादिसङ्गतिः । अन्यथा कर्मोपासनयोर्नियमे नोपासनस्य प्रागाधिक्यं सिध्येदतोऽसौ वारणीयः । प्रासङ्गिकत्वान्नाध्यायादिसङ्गतिः । विषयसंशयौ दर्शयति ॥ **कर्मेति** ॥ प्रकृता मुक्ता एव विषयः । किमुपासनावन्नियमेन कर्म कुर्वन्ति न वेति सन्देहः । उभयथाऽपि विरोधादर्शनं सन्देहवीजमिति भावः । नियमेन कर्म कुर्वन्तीति पूर्वः पक्षः । कर्मणोऽपि भगवत्पूजारूपत्वात् । तेषां च कर्मकरणशक्तेः सद्भावात् । शक्तिसद्भावेऽपि भगवत्पूजात्मककर्मनियमाभावश्चेदुपासनेऽप्यनियमः स्यादविशेषात् । अतो मुक्तानां कर्मोपासनयोः साम्यात्प्रागपि न कर्मणोऽतिशयेनोपासनं कार्यमिति ॥ सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ **आहेति** ॥ न मुक्तानां कर्मणि नियमः । कर्मकरणशक्तावपि स्वेच्छानुसारेण कदाचित्कर्म कुर्वन्ति कदाचिन्न कुर्वन्ति । कुतः । अवश्यकरणे विधिवन्धाभावात् । अकरणे च प्रत्यवायाभावादिति भावः ।

### भावबोधः

**भगवत्कर्मणि नियमाभावसाधनादिति** ॥ पूर्वाधिकरणे कैमुत्येन मुक्तस्योपासनासाधनाय तस्य कर्माप्यस्तीत्युक्ते तर्हि उपासनाकर्मणोरुभयोरपि भगवत्पूजात्मकत्वाविशेषात्, करणे साम्यं

(भाववोधः)

स्यादिति शङ्कोदये तन्निरासोऽत्र क्रियत इत्यनन्तरसङ्गतिरिति भावः ॥ **किमित्यादि** ॥ अत्र मुक्ताः किं नियमेन कर्म कुर्वन्ति उत नेति चिन्ता। तदर्थं मुक्तानां कर्मकरणनियमः सम्भवत्युत न सम्भवतीति। तदर्थं मुक्तानां विधिबन्धप्रत्यवायाभावो नास्त्युतास्तीति। तदर्थं विधिबन्धप्रत्यवायत्वे मुक्तेः पुरुषार्थत्वमुपपन्नं उतानुपपन्नमिति। तथा सम्भावकमात्रेणार्थनिश्चयायोगेन कर्मकरणानियमे निश्चायकं प्रमाणं नास्त्युतास्तीति। तदर्थमुपासनानियमवत् कर्मकरणनियमे विशेषहेतुरस्त्युत नास्तीति। कर्मकरणशक्तेरप्यदूरत्वात्तत्संश्रयनियम इति न्यायविवरणं मनसि निधाय पूर्वपक्षमाह– **नियमेनेत्यादिना** ॥ अनेन तत्संश्रयनियमो नित्यशः कर्मकरणसंश्रयनियम इति व्याख्यातो भवति। न्यायविवरणोक्तस्य शक्तिसद्भावमात्रस्य न कर्मकरणसाधकत्वमिति प्रसङ्गादित्यत उक्तं **कर्मणोऽपीति** ॥

## भावदीपः

**नियमाभावसाधनादिति** ॥ पूर्वोक्तन्यायेनोपासनवन्नियमशङ्कायां तद्वैषम्योक्त्या नियमाभाव-साधनादित्यर्थः। तेन पूर्वसिद्धान्तन्यायेनेह पूर्वपक्षोत्थानादापवादिक्यवान्तरसङ्गतिरपि सूचिता। फलमाह ॥ **अन्यथेति** ॥ नोपासनस्येति पदच्छेदः ॥ **प्रागिति** ॥ मुक्तेः प्राक्संसारदशायामित्यर्थः ॥ **प्रासङ्गिकत्वादिति** ॥ मुक्त्यर्थोपासनस्य मुक्तावप्यनुवृत्त्युक्तौ मुक्त्यर्थकर्मणोऽपि तथात्वस्य बुद्धिस्थत्वादिति भावः ॥ **नाध्यायादीति** ॥ अत एव प्राक् भगवत्कर्मणीति शास्त्रसङ्गतिमात्र-व्युत्पादनं कृतमिति भावः। एतच्च मुखतो व्युत्पादनमपेक्ष्योक्तम्। फलतस्तु प्रकृतस्य ज्ञानसाधनो-पासनस्य प्रागाधिक्यसिध्यर्थत्त्वादध्यायपादयोरप्यस्त्यन्तर्भाव इति ध्येयम्। एतेन मुक्तप्रकृतिचिन्ता-रूपत्वाच्चतुर्थेऽस्य निवेशः स्यादिति निरस्तम्। भोक्त्रापत्तेरित्यस्येव फलतोऽत्र निवेशोपपत्तेरिति। भाष्ये पूर्वभाष्यान्मुक्तपदमनुवर्त्याह ॥ **प्रकृता मुक्ता इति** ॥ अपिपदार्थं व्यनक्ति ॥ **उपासनावदिति** ॥ **विरोधेति** ॥ विधिबन्धप्रत्यवाययोरदर्शनमित्यर्थः। कर्मकरणशक्तेरप्यदूरत्वात्तत्संश्रयनियम इत्यन्यत्रोक्तपूर्वपक्षं भाष्यशेषतया योजयंस्तत्संश्रयनियम इति प्रतिज्ञार्थमाह ॥ **नियमेनेति** ॥ कृष्णो मुक्तैरिति पूर्वभाष्यलब्धं हेतुमाह ॥ **कर्मणोऽपीति** ॥ नन्वर्थी समर्थो विद्वानधिक्रियत इति न्यायान्मुक्तानां सिद्धार्थत्वेनार्थित्वाभावेऽपि सिद्धवैदुष्याणां कुशाच्छन्दस्तुत्युपगानेश्वरक्रियादिव-त्स्वेच्छयोपासनावत्कर्मकृतिसम्भवेऽपि सामर्थ्येन भाव्यमित्यतो न्यायविवरणोक्तहेतुमाह ॥ तेपां

(भावदीपः)

**चेति** ॥ प्राक्तन्याः स्वरूपशक्तेः मुक्तावलोपादिति भावः । कर्मकरणशक्तेरपीत्यपिपदभावमाह ॥ **शक्तीति** ॥ एतेन प्रागुक्तहेत्वोरप्रयोजकत्वमुद्धृतम् । फलोक्त्योपसंहरति ॥ **अत इति** ॥ उपासन इवेश्वरपूजारूपकर्मकरणेऽपि शक्तिसद्भावादिति भावः ॥ भाष्यं पूर्वपक्षनिषेधपरतया व्याचष्टे ॥ **न मुक्तानामिति** ॥ बन्धेत्यादिभाष्यं व्याचष्टे ॥ **कुत इत्यादिना** ॥ ननु विधिबन्धयोरभावे तूष्णीमवस्थानमेव कुतो नेति चोद्यं भगवत्पूजारूपत्वादिति प्रागेव प्रत्युक्तमिति भावः ।

## अभिनवचन्द्रिका

**उभयथाऽपि विरोधादर्शनमिति** ॥ पक्षद्वये बाधकादर्शनमित्यर्थः ॥ **अवश्यकरण इति** ॥ नियमेनाऽनुष्ठानप्रयोजकविधिबोध्यफलापेक्षाभावादित्यर्थः । ननु फलापेक्षाभावेऽपि अकरणप्रयुक्त-प्रत्यवायपरिहारार्थं नियमेनाऽनुष्ठानमित्यत आह– **अकरण इति** ॥

## वाक्यार्थमुक्तावली

**भगवत्कर्मणीति** ॥ कृष्णो मुक्तैरिज्यते । सोमेनानन्दं जनयन्नित्यादिस्मृतिश्रुत्यर्थमीमांसाया अत्र करणात् शास्त्रसङ्गतिरित्यर्थः । अन्यथेत्यस्य विवरणं कर्मोपासनयोर्नियम इति । पूर्वाधिकरणे कैमुत्येनोक्तस्योपासनासाधनाय तस्य कर्माप्यस्तीत्युक्ते तर्ह्युपासनाकर्मणोरुभयोरपि भगवत्पूजात्मकत्वाविशेषात् करणे साम्यं स्यादिति शङ्कोदये तन्निरासोऽत्र क्रियत इत्यनन्तरसङ्गतिरिति भावः ॥ **प्रासङ्गिकत्वादिति** ॥ कैमुत्यन्यायोपपादनाय मुक्तकर्मणि पूर्वाधिकरणे प्रसक्ते किं नियमेन कुर्वन्तीति स्मारितस्यानुपेक्षयात्र विचारादिति भावः । ननु मुक्तोपासनस्य साधनत्वाभावेऽपि तद्विचारस्य प्रागतिशयेनोपासनस्य कर्तव्यत्वोपपादकत्वेन साधनाध्यायसङ्गतिवत् मुक्तौ क्रियमाण-कर्मविचारस्य मुक्तिसाधनविचाररूपत्वाभावेऽपि कर्मापेक्षयोपासनस्य प्रागतिशयेन कर्तव्यत्वोपपाद-कत्वेनाध्यायादिसङ्गतिरस्त्विति चेन्न । कर्मणः पूर्वाधिकरणविचार्योपासनवदेतदध्यायविचार्य-साधनचतुष्टयजातीयत्वाभावेन अनन्तर्भावात् । केवलं स्मृतस्योपेक्षायां प्रागतिशयेनोपासनस्य कर्तव्यत्वासिद्धेरुपेक्षणानर्हत्वमात्रेण तद्विचारादिति भावः ॥ **किमित्यादि** ॥ मुक्ताः नियमेन कर्म कुर्वन्ति न वेति चिन्ता । तदर्थं कर्मणो भगवत्पूजारूपत्वात् मुक्तानां तत्करणशक्तिसद्भावा-च्चोपासनादविशेष उत विशेषोऽस्तीति । सिद्धान्ते विधिबन्धप्रत्यवायाभावेन कर्मकरणशक्तेर-

(वाक्यार्थमुक्तावली)
प्रयोजकत्वेन कर्मणि नियमाभावोक्त्या सूचितमदूरसंशय इत्युक्तन्यायं कर्मकरणशक्तेरदूरत्वात्संशय इति न्यायविवरणानुसारेण विशदयति । नियमेनेत्यादिना ॥ **भगवत्पूजेति** ॥ भगवत्पूजायाश्च भगवल्लालसैस्त्यक्तुमयोगादिति भावः । नित्यज्ञानस्वरूपत्वादिति भाष्ये विशेषोक्त्या तद्व्यावर्त्य-मुपासनाविशेषमाह ॥ **शक्तीति** ॥ तुशब्देन सूचितं कर्म चात्रान्वेति । तथा च हानौ मुक्तौ कर्म छन्दत इच्छाधीनं कदाचित्कुर्वन्ति । कदाचिन्नित्यं नियतमिति यावत् । कुत उभयथा करणेऽकरणे चोभयाविरोधात् बन्धप्रत्यवायलक्षणोभयबाधकाभावादिति सूत्रार्थं स्पष्टयति ॥ **न मुक्तानामिति** ॥

## तत्त्वसुबोधिनी

**भगवत्कर्मणीति** ॥ पूर्वाधिकरणे कैमुत्येन मुक्तस्य उपासनासाधनाय तस्य कर्माप्यस्तीत्युक्ते तर्हि उपासनाकर्मणो उभयोरपि भगवतः पूजात्मकत्वाविशेषात् करणे साम्यं स्यादिति शङ्कोदयेन तन्निरासोऽत्र क्रियते इत्यनन्तरसङ्गतिरिति भावः । ननु उपासनापादे कर्मणि नियमा-भावसाधनमसङ्गतं इत्यत आह ॥ **प्रासङ्गिकत्वादिति** ॥

## वाक्यार्थविवरणम्

**भगवत्कर्मणीति** ॥ भगवद्विषयकयज्ञादिकर्मविषये ॥ **कर्मोपासनयोर्नियम इति** ॥ उपासनवत् कर्मणोऽपि नियमेन कर्तव्यत्व इत्यर्थः । प्राङ्मुक्तेरिति शेषः । आधिक्यं कर्मणः सकाशात् । नियमेन कर्म न कुर्वन्तीति वदन् प्रष्टव्यः कर्मणो भगवत्पूजारूपत्वाभावात् तत्र कुर्वन्तीति वा, तत्करणे शक्त्यभावाद्वा । नाद्य इत्याह ॥ **कर्मणोऽपीति** ॥ न द्वितीय इत्याह ॥ **तेषां चेति** ॥ **अविशेषात्** ॥ भगवत्पूजात्मके कर्तव्यत्वाविशेषात् । कर्मणः सकाशात् ॥ **कुत इति** ॥ नियमेन कुर्वन्तीत्येव किं न स्यादिति भावः । एवं वदन् प्रष्टव्यः अवश्यं कर्म कर्तव्यमित्येवं विधि-सद्भावान्नियमेन तस्य कर्तव्यता उत नियमेनाकरणप्रत्यवायसद्भावाद्वेति विकल्पं हृदि निधायोभयं क्रमेण निराह ॥ **अवश्येत्यादिना** ॥ तथा च उभयाविरोधात् अवश्याकरणे च विधिबन्ध-प्रत्यवायरूपविरोधाभावादित्यर्थः । उभयेत्यस्य व्याख्या विधिबन्धेत्यादि ।

## वाक्यार्थमञ्जरी

**प्रासंगिकत्वादिति** ।। मुक्तावुपासनस्य नियमेन कर्तव्यत्वसमर्थने कर्मविषये तत्स्मरणादिति भावः ।।

ॐ छन्दत उभयाविरोधात् ॐ ।। मोक्षे कर्मकरणं छन्दतः स्वेच्छयैव कुतः उभयोर्विधिवन्ध-प्रत्यवाययोर्विरोधाभावादिति भावः ।

## सूत्रभाष्यम्

**।। ॐ गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः ॐ ।। ३० ।।**

**वन्धप्रत्यवायाभावे हि मोक्षस्यार्थवत्त्वम् । अन्यथा मोक्षत्वमेव न स्यात् ।**

**'कदाचित्कर्म कुर्वन्ति कदाचिन्नैव कुर्वते ।**
**नित्यज्ञानस्वरूपत्वान्नित्यं ध्यायन्ति केशवम् ।**
**तीर्णतर्तव्यभागा ये प्राप्तानन्दाः परात्मनः ।**
**प्रत्यवायस्य बन्धस्याप्यभावात्स्वेच्छया भवेत्' इति हि ब्रह्माण्डे ।।**

## तत्त्वप्रदीपिका

गतेरित्यादिसूत्रम् ।। करणेन चाकरणेन च स्थितौ सम्भवत्यां हि परमात्मगतिरूपस्य मोक्षस्यार्थवत्त्वम् । तत्सम्भवश्च बन्धप्रत्यवायाभावे । तर्हि किमित्युपासनं सदा कुर्वन्तीत्यत आह– 'नित्यज्ञानस्वरूपत्वान्नित्यं ध्यायन्ति केशवम्' इति । नित्यभगवद्दृष्टिरूपत्वान्मुक्ता नित्यमुपासते । सभक्तिका भगवद्दृष्टिरूपास्तिर्भवति । पूर्वं चिरतरनिरन्तरोपास्त्या हि भगवन्तमैक्षन्त । पश्चादानन्द-रूपिणी सा स्वत एवानुवर्तते ।

## तत्त्वप्रकाशिका

ननु मुक्तानां विधिवन्धप्रत्यवायाभाव एव कुतो येन कर्माऽनियमः स्यादित्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे ।। **गतेरिति** ।। न मुक्तानां विधिवन्धप्रत्यवायौ विद्येते । विधिवन्धप्रत्यवायाभावेनैव मुक्तेः पुरुपार्थत्वात् । अन्यथा संसारसमानधर्मत्वेन मोक्षत्वविरोधादिति भावः । न च

(तत्त्वप्रकाशिका)

**वैलक्षण्यान्तरेण मोक्षत्वोपपत्तिः । संसारसद्भावे तद्वैलक्षण्यस्य व्याहतत्वात् । मुक्तानां कर्मण्य-नियमश्चेदुपासनेऽपि तथा स्यादविशेषादित्याशङ्कां परिहर्तुमुक्तार्थे स्मृतिं चाह ॥ कदाचिदिति ॥ विध्याद्यभावेऽप्यनिष्टनिवृत्त्यर्थमानन्दप्राप्त्यर्थं वा कर्मनियमः किं न स्यादित्यत आह ॥ तीर्णेति ॥**

## गुर्वर्थदीपिका

नित्यज्ञानस्वरूपत्वादित्यत्र नित्यमभिव्यक्तज्ञानस्वरूपत्वात् । ज्ञानाभिव्यक्त्यभावे चेतनत्वमेव न स्यात् । क्रिया तु बहुशः शक्त्यात्मना तिष्ठति । कदाचिद्व्यक्त्यात्मना । ईश्वरसृष्ट्यादिक्रियावत् । अतो ज्ञानरूपेण सन्नेव सदाऽस्ति । न तु क्रियेति भावः । तथा च श्रुतिः 'ऋचां त्वः पोषमास्ते पुपुष्वान्गायत्रं त्वो गायति शक्करीषु । ब्रह्मात्वो वदति जातविद्यां यज्ञस्य मात्रां विमिमीत उत्व' इति विशेषेण मिमीत इत्युक्त्या ध्यान एव तेषां तात्पर्यं न कर्मणि । 'अरंहितो भवति वाजिनाय' इति च । मन आदीन्द्रियाणां सुखव्यञ्जकत्वेन परमात्मनो हितत्वात् हितं च न कोऽपि मुञ्चति तेन मनःप्रियं सर्वदा शृण्वते मन्वते ध्यायन्ति चेति भावः । किञ्चेहापि श्रवणाद्युपासनां विना कर्मकरणे तत्कर्म रक्षसां भागः किल । अतः कर्मणो रक्षकत्वादुपास्तिरेव बलवती । सोपास्तिर्मुक्तावपि कथं न बलवती । तदुक्तं भागवते 'न यत्र श्रवणादीनि रक्षोघ्नानि स्वकर्मसु । कुर्वन्ति सात्वतां पत्युर्यातुधान्यश्च तत्र हि' 'मन्त्रतस्तन्त्रतच्छिद्रं देवकालार्हवस्तुतः । सर्वं करोति निश्छिद्रमनुसङ्कीर्तनं तव' इति च ।

## भावबोधः

**वैलक्षण्यान्तरेणेति ॥** स्वरूपानन्दाविर्भावादिरूपेणेत्यर्थः । स्मृतिं चाहेति । तथा च कर्मोपासनयोर्विशेषसद्भावेनाविशेषाभावात् । आपादकासिद्ध्या तर्कस्याभासत्वेन शक्तिसद्भाव-रूपहेतोरप्रयोजकत्वं स्मृतिबाधश्चेति भावः ।

## भावदीपः

प्रागुक्तशङ्कानिवर्तकतया भाष्यं व्याचष्टे **॥ न मुक्तानामिति ॥** एतेनात्र पूर्वस्मादुभया-विरोधपदानुवृत्तिरिति हिर्हेताविति च सूचितम् । हेतोरप्रयोजकत्वनिरासपरभाष्यं व्याचष्टे

(भावदीपः)

।। **अन्यथेति** ।। विध्यादिभाव इत्यर्थः । हेतूच्छित्तिरेव विपक्षे बाधिकेति भावः । बाधकतर्के आपाद्यस्यान्यथोपपत्त्या व्याप्तिवैकल्यमाशङ्कते ।। **न चेति** ।। सुखभोक्तृत्वदुःखाभोक्तृत्वादिनेत्यर्थः ।। **अविशेषादिति** ।। विधिप्रत्यवायशून्यत्वस्येश्वरपूजात्वस्य चोभयत्र तुल्यत्वादित्यर्थः ।। **उक्तार्थे स्मृतिं चाहेति** ।। कर्म कुर्वन्ति न वेत्यर्थेन केवलमुभयाविरोधरूपा युक्तिरस्ति । स्मृतिं चेति चार्थः । स्मृतौ नित्यज्ञानस्वरूपत्वान्नित्यं ध्यायंतीत्यनेनोक्तशङ्कापरिहार इति भावः । सद्भक्तिर्भगवद्दृष्टिरूपोपास्तिर्भवति । 'पूर्वं चिरंतरनिरन्तरोपास्त्या हि भगवन्तमैक्षन्त पश्चादानन्दस्वरूपिणी सा स्वत एवानुवर्तते' इति तत्वप्रदीपोक्तं तात्पर्यं ध्येयम् । उक्तं च न्यायविवरणे । उपासानाख्ये कार्ये नित्यकृतिसंस्कारो न तथा कर्मणीति कार्यवैषम्यादिति ।

## अभिनवचन्द्रिका

**संसारसमानधर्मत्वेनेति** ।। संसारसमव्याप्तविधिबन्धप्रत्यवायलक्षणधर्मवत्त्वेन मुक्त्यवस्थाया मोक्षत्वं न स्यादित्यर्थः । विधिबन्धप्रत्यवायसमानाधिकरणावस्थायाः संसारत्वनियमेन मोक्षस्य संसारत्वमेव स्यात् न मुक्तित्वमिति भावः । एतेन गोसमानधर्मत्वेऽपि गवयस्य गवयत्ववत्, संसारसमानधर्मत्वेऽपि मोक्षत्वसम्भवात्, 'मोक्षत्वविरोधात्' इत्ययुक्तमिति परास्तम् । माभूद्विधिवन्धप्रत्यवायभावाभावाभ्यां मुक्तिसंसारयोः वैलक्षण्यं, तथापि मोक्षत्वं नानुपपन्नम् । सदुःखत्वनिर्दुःखत्वाभ्यामेव वैलक्षण्यसद्भावादिति मन्दाशङ्कां निषेधति **न चेति** ।। मन्दाशङ्कानिरासाय स्वाभिसन्धिमुद्घाटयति– **संसारेति** ।। मोक्षावस्थायाः, विधिबन्धप्रत्यवायसमानाधिकरणावस्थायाः संसारत्वनियमबलेन संसारत्वसिद्धौ संसारवैलक्षण्यं व्याहतमित्यर्थः । एतेन भूतले घटसद्भावेऽपि तद्गतपटस्य तद्वैलक्षण्यवत् मुक्तजीवे संसारसद्भावेऽपि तन्निष्ठमुक्तेः संसारवैलक्षण्यसम्भवात् वैलक्षण्यस्य व्याहतत्वादित्ययुक्तमिति परास्तम् । संसरारशब्दस्य भावप्रधानत्वात् ।। **उक्तार्थे स्मृतिमाहेति** ।। कर्मोपासनयोः भगवत्पूजात्मकत्वाऽविशेषेऽपि शक्यत्वेऽपि, उपासनमेव नियमेन कुर्वन्ति न कर्मेत्यभ्युपगन्तव्यं, तथा स्मृतिसिद्धत्वादिति भावः ।

## वाक्यार्थमुक्तावली

**कुत इति** ।। कुतःप्रमाणादित्यर्थः । उभयथा बन्धप्रत्यवाययोरभावेनैव गतेः परमात्मगतिरूपमोक्षस्यार्थवत्वं पुरुषार्थवत्वम् । अन्यथा बन्धादिसद्भावसंसारगतेरिव गतेः ।

(वाक्यार्थमुक्तावली)
भावप्रधानमेतत् । **गतित्वस्य मोक्षत्वस्य विरोधः** । हि यस्मात् तस्मात् पुरुषार्थत्वान्यथानुपपत्त्या गतेरुभयथा बन्धप्रत्यवायाभाववत्त्वमिति भावेन व्याचष्टे ॥ **न मुक्तानामिति** ॥ **मुक्तेःपुरुपार्थत्वादिति** ॥ यद्यपि भाष्ये सूत्रे च विधिबन्धप्रयुक्तफलातिशयस्य प्रत्यवायशब्दोक्तफलह्रासस्य चाभावेनैव ब्रह्मगतेः पुरुषार्थत्वमुक्तम् । टीकायां पुरुषार्थवत् गतेः पुरुषार्थत्वविवक्षया मुक्तेः पुरुषार्थत्वादित्युक्तमित्यविरोधः ॥ **वैलक्षण्यान्तरेणेति** ॥ स्वरूपानन्दाविर्भावरूपेणेत्यर्थः । एतेन भाष्ये मोक्षत्वमेव न स्यादिति सर्वथा मोक्षत्वप्रतिक्षेपकैवकारार्थ उक्तो भवति ॥ **इत्याशङ्कायामिति** ॥ कार्यवैशेष्याख्यन्यायेन परिहरन्नित्यर्थः ॥ **नित्यज्ञानस्वरूपत्वादिति** ॥ भगवद्विषयकत्वेन नित्याभिव्यक्तज्ञानस्वरूपत्वादित्यर्थः । स्वेच्छया भवेदित्यत्र कर्मेति वर्तते ।

## तत्त्वसुबोधिनी

वैलक्षण्यान्तरेणेति स्वरूपानन्दाविर्भादिरूपेणेत्यर्थः ॥ **स्मृतिं चाहेति** ॥ तथा च कर्मोपासनयोः विशेषसद्भावेनाविशेषाभावादापादकासिध्या तर्कस्याभासत्वेन शक्तिसद्भावरूपहेतोः अप्रयोजकत्वं स्मृतिबाधश्चेति भावः ।

## वाक्यार्थविवरणम्

**अन्यथा** ॥ विधिबन्धप्रत्यवाययोः सत्त्वे ॥ **वैलक्षण्यान्तरेणेति** ॥ संसारसमानधर्मत्वेऽपीति शेषः । विधिबन्धप्रत्यवायभावाभावव्यतिरिक्तेन आनन्दाभिव्यक्तितदभावरूपेण ॥ **संसारसद्भावे** ॥ वन्धप्रत्यवायसद्भावेन संसारसमानधर्मत्वसद्भावे ॥ **तद्वैलक्षण्यस्य** ॥ तस्मात् संसारानन्दादि व्यक्त्यव्यक्तिरूपोक्तवैलक्षण्यस्य ।

## वाक्यार्थमञ्जरी

न मोक्षे विधिबन्धप्रत्यवायौ कुतः हि यस्माद्गतेर्मोक्षस्यार्थवत्वं पुरुषार्थत्वमुभयथा विधिवन्धप्रत्यवायाभावत्वेनैवास्ति तस्मात् अन्यथा तत्रापि विधिबन्धप्रत्यवायसत्वे मोक्षत्वविरोध इत्यर्थः ॥ **मोक्षत्वविरोधादिति** ॥ संसाररूपप्रतियोगितन्निवृत्तिरूपमोक्षयोर्वैलक्षण्यस्यावश्यकत्वादिति भावः ।

## सूत्रभाष्यम्

**॥ ॐ उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥ ३१ ॥**

**उपपन्नश्चैवम्भावः । प्राप्तत्वात्तल्लक्षणस्य फलस्य । यथा लोके विध्यर्थत्वेन विष्णु क्रमणादिकं कृत्वा समाप्तकर्मेच्छया करोति न करोति च ।**

## तत्त्वप्रकाशिका

**ननु विध्याद्यभावो मुक्तानां कर्मानियमसम्भावनायैव भवति नोपपादनाय । ईश्वरकर्मणि व्यभिचारात् । अतस्तदुपपादकाभावादनुपपन्नोऽसावित्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे ॥ उपपन्न इति ॥ कदाचित्कुर्वन्ति न वेत्ययं भावो मुक्तानामुपपन्नश्च । परंपरया कर्मफलस्य मोक्षस्य प्राप्तत्वात् । फलस्य च स्वप्राप्त्यनन्तरं स्वसाधननियमनिवारणलक्षणत्वात् । यथा यागविधिपूर्तिफलसाधनविष्णुक्रमणादिनियमो न पूर्त्यनन्तरमपीति भावः । इदमुक्तं भवति । मुक्ता न कर्मनियमवन्तः । विशेषहेत्वभावे सति प्राप्ततत्फलत्वाद्यजमानवदिति । अतो मुक्तस्य कर्मनियमाभावात् संसारेऽप्युपासनमाधिक्येन कर्तव्यमिति सिद्धम् ।**

## गुर्वर्थदीपिका

नोपपादनायेत्यत्रोपपादनाय कर्मनियमनसाधनाय । ईश्वरे विध्यभाववति काले काले नियमेनावतारादिकर्तरि च व्यभिचारादित्यर्थः । अङ्गीकृत्येदमुदितं वस्तुतस्त्ववतरणादिकमपि कादाचित्कमेव । ज्ञानं तु सर्वज्ञे प्रलयेऽपि वेदानुसन्धातरि सार्वकालीनम् । एवं च भगवन्निदर्शनादेव मुक्तानां ज्ञानरूपा भगवदुपास्तिरेव सार्वकालिकीति कथं न सिद्ध्यतीति ज्ञातव्यम् । विष्णुक्रमणं नाम यागकर्तुः प्राङ्नित्यमेव विष्णुमुद्दिश्य क्रियमाणं कर्म । नियमनिवारणलक्षणत्वादिति वदताऽल्पाक्षरत्वादर्थोपलब्धेरित्येवालं किं लक्षणपदेनेति शङ्कापरिहारोऽपि सूचितः । प्राप्तेऽपि फले कुतो न पुनः साधनमनुष्ठेयमित्याशङ्क्य स्वप्राप्त्यनन्तरं पुनः साधनानुष्ठाननियमनिवारकत्वस्य फलासाधारणधर्मत्वादिति हेतुविशेषसूचनाय लक्षणपदं सूत्र इति भावः । विशेषहेत्वभावे सति प्राप्ततत्फलत्वादित्यत्र सन्ध्यावन्दनविधिपूर्तिफलकाचमने सकृत्कृतेऽपि शूद्रदर्शने सति पुनः करणदर्शनाद्विशेषहेत्वभावे सतीत्युक्तम् ।

## भावबोधः

**ईश्वरकर्मणीति** ॥ मुक्ता न यज्ञादिकर्मकरणनियतिमन्तस्तत्करणाकरणयोर्विधिबन्धप्रत्यवाय-शून्यत्वादित्यनुमाने यो यत्कर्मकरणाकरणयोर्विधिबन्धप्रत्यवायरहितः स तत्करणनियतिमान्नेति सामान्यव्याप्तिर्वक्तव्या । सा चायुक्ता । सृष्ट्यादिकरणाकरणयोः विधिबन्धप्रत्यवायरहितस्या-पीश्वरस्य तत्करणनियम एवास्तीति व्यभिचार इति भावः ॥ **विशेषहेत्वभावे सतीति** ॥ मुक्तां नियमेन क्रियमाणायामुपासनायां व्यभिचारपरिहारार्थं विशेषहेत्वभावे सतीत्युक्तम् । न च विशेषणासिद्धिः । उपासनाकरणनियमे नित्यज्ञानस्वरूपत्वसंस्कारपाटवरूपविशेषहेतोरिवात्र तदभावात् । तदुक्तं न्यायविवरणे 'उपासनाख्यकार्ये नित्यकृतिसंस्कारो न तथा कर्मणीति कार्यवैशेष्यादिति । अत्र प्रथमसूत्रे मुक्तानां कर्मकरणानियमे विधिबन्धप्रत्यवायाभावरूप-सम्भावकोक्तिः । द्वितीये तस्यासिद्धिशङ्कापरिहारः । तृतीये निश्चायकप्रमाणोक्तिरिति सूत्रक्रमः ॥

## भावदीपः

**ईश्वरकर्मणीति** ॥ विध्यादेरभावेऽपि ईश्वरेण नियमेन सृष्ट्यादिकर्मकरणदर्शनाद्व्यभिचार इत्यर्थः ॥ **अत इति** ॥ उभयाविरोधस्य केवलं सम्भावकत्वादित्यर्थः ॥ **उपपादकेति** ॥ प्रागुक्तस्मृतिस्तु कर्मानियमोक्तिपरैव न तूपपादिका । तत्र युक्त्यनुक्तेरिति भावः ॥ **असाविति** ॥ कर्मानियम इत्यर्थः । भाष्यं व्याचष्टे ॥ **कदाचिदिति** ॥ न केवलं सम्भावितः किंतूपपन्नश्च युक्तिसिद्धश्चेत्यर्थः ॥ **परम्परयेति** ॥ उत्क्रमिष्यत एवंभावादित्युक्तदिशा कर्मणा ज्ञानमातनो-तीत्यादेर्ज्ञानद्वारेत्यर्थः । तेन विद्यैव त्विति वक्ष्यमाणविरोधः प्रत्यूढः । लक्षणशब्दो निमित्तवाचीति भावः । अयं चार्थः सूत्रादौ तदर्थोऽनुपलब्धेरित्यनुक्त्वा तल्लक्षणार्थेत्युक्त्या कर्मजन्यदर्शनफलस्येति सूचनाल्लब्धः । ईक्ष दर्शनांकनयोरिति धातोरिति ध्येयम् । लक्षणपदप्रयोगभावमाह ॥ **फलस्य चेति** ॥ तल्लक्षणार्थप्राप्तेरिति वा लब्धेरिति वा वक्तव्ये ज्ञाने रूढोपलब्धिपदप्रयोगस्तु तदर्थस्य सुखविशेषस्याप्युपलब्धेरनुभूयमानत्वात्तदर्थमपि न कर्मनियमो मुक्तानामिति सूचयितुम् । अत एव पूर्वस्मृतौ प्राप्तानन्दा इत्युक्तिः । विष्णुक्रमणं नाम विष्णुमुद्दिश्य क्रियमाणकर्मविशेषः ॥ **विशेष-हेत्वभावे सतीति** ॥ उपास्तौ तु नित्यज्ञानस्वरूपत्वादिविशेषहेतुरस्तीति न तत्कर्तरि व्यभिचारः । नापीश्वरे सृष्ट्यादिकर्तरि व्यभिचारः । न प्रयोजनवत्त्वादित्यत्रोक्तदिशा आप्तकामत्वेऽपि

(भावदीपः)

परप्रयोजनार्थत्वदयालुत्वादिविशेषहेतुभावादिति भावः । तथा कृतकर्मणोऽपि लोके विशेषहेतुना पुनः क्रियमाणस्नानाचमनादिकर्मवत्यपि व्यभिचाराभावो ज्ञेयः । न च प्राप्ततत्फलत्वे तृप्तस्य भोजनवत्त्वमिव कर्मकृत्यभाव एव स्यादिति शङ्क्यम् । भगवत्पूजात्वेन पूर्वसंस्कारसत्वाच्चेतर-कृतिवैषम्यादिति भावः ॥ **अत इति** ॥ भगवत्पूजात्वेऽप्यवश्यकृतौ विध्याद्यभावादित्यर्थः ।

## अभिनवचन्द्रिका

**उपपन्नश्चेति** ॥ उपपत्तिसिद्धश्चेत्यर्थः । तामेवोपपत्तिमाह **परम्परयेति** ॥ अप्रयोजको हेतुरित्यत आह **फलस्य चेति** ॥ फलस्य स्वप्राप्त्यनन्तरं स्वसाधनविषये यन्नियमनं प्रवर्तकत्वं, तस्मात् निवारणलक्षणत्वात् निवृत्तस्वभावत्वादित्यर्थः । ततश्च मोक्षलक्षणफलस्य स्वसाधनकर्मण्यप्रवर्तकत्वे इच्छैव प्रवर्तिकेति स्वेच्छया करोति न करोति चेति वक्तव्यत्वात्, नाऽप्रयोजको हेतुरिति भावः ॥ **यथायागेति** ॥ यथा यागपूर्तिलक्षणफलात् अधिकारिणो यागपूर्त्यनन्तरं यागविधिपूर्तिसाधन-विष्णुक्रमणादिनियमो न भवतीत्यर्थः । यागपूर्त्यनन्तरं यजमानो विष्णुक्रमणशब्दवाच्यां देवयात्रां स्वेच्छयैव करोति न फलप्रेरित इति भावः । प्राप्तफलत्वमुपासनायां व्यभिचारीत्यत आह– **इदमुक्तं भवतीति** ॥ अत्र उपासनायां व्यभिचारवारणाय विशेषहेत्वभावे सतीति विशेषणम् । उपासनायां मोक्षात्प्राक् कर्मणोऽतिशयेनाऽविच्छिन्नतया अनुष्ठितत्वात्, संस्कारपाटवलक्षणहेतुविशेषो विद्यते इति हेत्वभावात् न व्यभिचार इति भावः ।

पूर्वपक्षस्तु– मुक्ता नियमेनाऽनुष्ठानवन्तः विष्णुपूजात्मकत्वात् कर्मणः, शक्तत्वाच्च तेषाम् । अन्यथा नियमेन उपासनमपि न कुर्युरविशेषात् । अतो मुक्तानां कर्मोपासनयोः साम्यात् प्राक् न कर्मणोऽतिशयेनोपासनं कार्यमिति ।

सिद्धान्तस्तु– न मुक्तानां कर्मणि नियमः । अपि तु स्वेच्छया कदाचित् कुर्वन्ति कदाचिन्न कुर्वन्ति । नियमेनाऽनुष्ठानप्रयोजकयोर्विधिबन्धप्रत्यवाययोरभावात् । ननु मुक्तानां विधिबन्ध-प्रत्यवायाभाव एव कुतः । येन कर्मण्यनियम इति चेत्, तदभावाङ्गीकार एव मुक्तेः पुरुषार्थत्वात् । अन्यथा तन्न स्यात् । ननु विध्याद्यभावो मुक्तानां कर्मानियमसम्भावनायैव भवति न तूपपादनाय । ईश्वरकर्मणि व्यभिचारात् । अत उपपादकाभावात् अनुपपन्नोऽसाविति चेत्, उच्यते । उपपन्न एव

(अभिनवचन्द्रिका)
स्वेच्छया कदाचित्कर्म कुर्वन्ति, कदाचिन्नेत्येवं भावः । तत्फलस्य मोक्षस्य प्राप्तत्वात् । फलस्य च प्राप्त्यनन्तरमप्रवर्तकत्वात् । यथा हि- लोके यागपूर्तिलक्षणफलस्य यागपूर्त्यनन्तरं विष्णुक्रमणादौ न प्रवर्तकत्वम्, किन्तु इच्छाया एव प्रवर्तकत्वम् । अयमत्र प्रयोगः मुक्ता न कर्मानुष्ठाननियमवन्तः, विशेषहेत्वभावे सति प्राप्ततत्फलत्वात् यजमानवदिति । अतो मुक्तस्य कर्मनियमाभावात् संसारेऽप्युपासनमाधिक्येन कर्तव्यमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

**ईश्वरकर्मणीति** ॥ मुक्तकर्म न नियतं विधिबन्धादिशून्यैरनुष्ठीयमानत्वादिति हेतोः नियमानुष्ठीयमाने सृष्ट्याद्यैश्वर्यकर्मणि व्यभिचारादित्यर्थः ॥ **अयं भाव इति** ॥ छन्दतः कर्मेत्यत्र प्रकृतत्वादयमिति परामर्श इति भावः ॥ **उपपन्नश्चेति** ॥ न केवलं सम्भावितः किन्तूपपत्ति-सिद्धश्चेत्यर्थः । तामेवोपपत्तिं दर्शयितुं तदर्थोपलब्धेरित्यंशं तदर्थस्य कर्मफलस्योपलब्धेः प्राप्तत्वादिति व्याचष्टे ॥ **परम्परयेति** ॥ अप्रयोजको हेतुरित्यतः तल्लक्षणस्येत्येतदर्थशब्दित-फलविशेषणतया व्याचष्टे ॥ **फलस्य चेति** ॥ साधनानियमस्य प्रकृतत्वात् तदेव स्वप्राप्त्यनन्तरं स्वसाधननियमनिवारणमेव लक्षणासाधारणधर्मो यस्य तस्य फलस्येत्यर्थः । तथा च फल-प्राप्त्यनन्तरमपि साधननियमे तस्य फलत्वमेव न स्यादिति नाप्रयोजकत्वं हेतोरिति भावः । लोकवदित्यस्य लोकप्रसिद्धस्य यजमानस्येवेत्यर्थं मनसि निधाय व्याचष्टे ॥ **यथायागेति** ॥ यथा लोके यजमानस्य यागविधिपूर्तिलक्षणफलसाधनविष्णुक्रमणशब्दवाच्यदेवयात्रानियमो न पूर्त्यनन्तर-मपि किन्तु केवलभगवत्प्रीत्यर्थः स्वेच्छया भवति न भवति च तथेत्यर्थः । उपासनायां व्यभिचार-वारणाय विशेषहेत्वभावे सतीति विशेषणम् । उपासनाकरणनियमे नित्यज्ञानस्वरूपत्वसंस्कार-पाटवातिशयरूपविशेषहेतोरिवान्यतराभावात् । तदुक्तं न्यायविवरणे । उपासनाख्ये कार्ये नित्यकृतिसंस्कारो न तथा कर्मणीति ॥ **कार्यवैशेष्यादिति** ॥ अत्राद्ये मुक्तानां कर्मनियमे सम्भावकस्य । द्वितीये तदसिद्धिपरिहारस्य । तृतीये निश्चायकस्योक्तिरिति सूत्रक्रमः ।

## तत्त्वसुबोधिनी

**ईश्वरकर्मणीति** ॥ मुक्ताः न यज्ञादिकर्मकरणनियतिमन्तः तत्करणाकरणयोः विधिबन्ध-प्रत्यवायशून्यत्वादित्यनुमाने यो यज्ञकरणाकरणयोः विधिबन्धप्रत्यवायरहितः स तत्कारण-

(तत्त्वसुबोधिनी)

नियतिमात्रेति सामान्यव्याप्तिपूर्वकव्याप्त्या वा, मुक्तसृष्ट्यादिकारणाकारणयोः विधिबन्धप्रत्यवायरहितस्य ईश्वरस्य तत्करणानियम एवास्तीति व्यभिचारादिति भावः । प्राप्तत्वेऽपि कुतो न तदर्थं उपासना इत्यत आह ॥ **फलस्य चेति** ॥ विशेषहेत्वभावे सति इति मुक्तैः निश्चयेन क्रियमाणायां उपासनायां व्यभिचारपरिहारार्थं विशेषहेतुत्वभावे सतीत्युक्तम् । न च विशेषणासिद्धिः । उपासनाकरणनियमे नित्यज्ञानस्वरूपत्वसंस्कारप्राप्तिरूपविशेषहेत्वभावे सतीति वात्र तदभावात् । अत्र प्रथमसूत्रे मुक्तानां कर्मकरणानियमे विरोधाभावरूपसम्भावकोक्तिः । द्वितीये तस्यासिद्धिशङ्कापरिहारः । तृतीये निश्चायकप्रमाणोक्तिरिति सूत्रक्रमः ।

## वाक्यार्थविवरणम्

**विध्याद्यभावः** ॥ विधिबन्धप्रत्यवाययोरभावः । **असौ** कर्मानियमः । तल्लक्षणस्य फलस्येत्यस्य व्याख्यानम् ॥ **परम्परयेत्यादि** ॥ ज्ञानद्वारेत्यर्थः । उपलब्धेरित्यस्य व्याख्यानं प्राप्तत्वादिति । स्वसाधनं स्वस्य यत् साधनम् ॥ **विधिपूर्तिफलेति** ॥ तल्लक्षणफलेत्यर्थः ॥ **विष्णुक्रमणम्** ॥ विष्णुक्रमणसञ्ज्ञकेष्टिः । भाष्ये ॥ **विध्यर्थत्वेनेति** ॥ विष्णुक्रमणरूपो यागः कर्तव्य इति विधिः कियत्पर्यन्तमित्युक्ते एतत्कर्मसमाप्तिपर्यन्तं विष्णुक्रमणेष्ट्या कर्मसमाप्त्यनन्तरं यागविधिः पूर्यते । तेन यागविधिपूर्तिलक्षणफलसाधनत्वेन विष्णुक्रमणब्राह्मणभोजनादिकं कृत्वा समाप्तं समापितं कर्म येन 'असौ समाप्तकर्मा पुरुषस्तदनन्तरमपि स्वेच्छया पुनः विष्णुक्रमणादिकं करोति न करोति चेति भाष्यार्थः ।

॥ **यजमानवदिति** ॥ यः प्राप्तफलः स तत्करणनियमवान् न, यथा प्राप्तयज्ञादिफलो यजमानो न तत्कर्मकरणनियमवानित्यर्थः । मुक्तैर्नियमेन क्रियमाणोपासनायां व्यभिचारवारणाय विशेषहेत्वभावे सतीत्युक्तम् । तत्र तु नित्यं ध्यायन्तीति वचनस्यैव विशेषहेतोः **सत्त्वादिति भावः** ॥ **आधिक्येन** ॥ कर्मापेक्षयेति शेषः ।

## वाक्यार्थमञ्जरी

**उपपादनाय** साधनाय ॥ **ईश्वरकर्मणीति** ॥ मुक्ता न यज्ञादिकर्मकरणनियमवन्तः तत्करणाकरणयोर्विधिबन्धप्रत्यवायशून्यत्वादित्यनुमाने यो यत्करणाकरणयोर्विधिबन्धप्रत्यवायरहितः स न

(वाक्यार्थमञ्जरी)

तत्करणनियतिमानिति सामान्यव्याप्तिर्वक्तव्या सा च न युक्ता । सृष्ट्यादिकरणाकरणयोर्विधिबन्धप्रत्यवायरहितस्यापीश्वरस्य तत्कर्म कुर्वन्तीत्ययमर्थ उपपन्नो युक्तः कुतः तल्लक्षणार्थोपलब्धेः तत्कर्मलक्षणं निमित्तं यस्य मोक्षस्य तद्रूपार्थस्य प्रयोजनस्योपलब्धेः प्राप्तत्वात्कथं लोकवत्, यथा लोके यागविधिपूर्वकं कृतस्य विष्णुक्रमणस्य कर्मणः न तत्पूर्त्यनन्तरमपि करणं तथेत्यर्थः । प्रयोगप्रकारमाह ॥ **इदमुक्तमिति** ॥ मुक्तैर्नियमेन क्रियमाणायामुपासनायां व्यभिचारवारणाय विशेषहेत्वभावे सन्तीत्युक्तम् । तत्र नित्यज्ञानस्वरूपत्वसंस्कारपाटवादिविशेषहेतुरस्तीति भावः ।

**॥ इति छन्दाधिकरणम् ॥ १८ ॥**

## १९.अनियमाधिकरणम्

**॥ ॐ अनियमः सर्वेषामविरोधाच्छब्दानुमानाभ्याम् ॐ ॥ ३२ ॥**

प्राप्तज्ञानानामपि केषाञ्चिन्मुक्तिप्राप्तिः केषाञ्चिन्न, यथोपसंहारनियम इति न मन्तव्यम्।

'सर्वे गुणा ब्रह्मणैव ह्युपास्या नान्यैर्देवैः किमु सर्वैर्मनुष्यैः'

इत्युपसंहारविरोधादन्यत्राविरोधात्। 'न कश्चिद्ब्रह्मवित्सृतिमनुभवति मुक्तो ह्येव भवति तस्मादाहुः सृतिहेती'इति कौण्डिन्यश्रुतेश्च। यथा केषाञ्चिन्मोक्ष एवमन्येषामित्यनुमानाच्च।

### तत्त्वप्रदीपिका

अनियम इत्यादिसूत्रम् ॥ यथा गुणोपसंहारः केषाञ्चिदेव केषाञ्चिन्नेति नियमः। एवं ब्रह्मदर्शिनामपि केषाञ्चिन्मोक्षः केषाञ्चिन्नेति नियमोऽस्तु। उपपद्यते चायोग्यत्वादनिच्छया। तथा च भागवते– 'कामं भवेम वृजिनैर्निरयेषु नष्टाश्चेतोऽलिवद्यदि हि ते पदयो रमेते'इत्यादीति न मन्तव्यम्। उक्तनियमे प्रमाणाभावात्। सर्वेषां मोक्षे प्रमाणसद्भावात्। भागवतावाक्यस्योत्तमानां भक्तेरेवात्यन्तापेक्षणीयत्वपरत्वात्।

### तत्त्वप्रकाशिका

अत्रेश्वरदर्शनसाधनोपास्तिमतामुत्पन्नज्ञानानां मोक्षानियमसाधनादस्ति शास्त्रादिसङ्गतिः। अन्यथोपासने निःशङ्कप्रवृत्त्यभावप्रसङ्गात्समर्थनीयः। प्रकृतो मोक्ष एव विषयः। किमनियमेन सर्वज्ञानिप्राप्य उत केषाञ्चिदस्ति केषाञ्चिन्नेति सन्देहः। फलद्वैविध्यदर्शनं सन्देहबीजम्। नियम इति पूर्वः पक्षः। ज्ञानिष्वपि केषाञ्चिन्मुक्त्ययोग्यत्वसम्भवात्। अयोग्यानां तत्प्राप्त्ययोगात्। यथा खलूपासकेष्वपि योग्यानामेव सर्वगुणोपसंहारो नायोग्यानामिति नियमः। अतः सर्वेषां ज्ञानिनां मोक्षाभावान्न निःशङ्कोपासनं कर्तव्यमिति। सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ॥ **अनियम इति** ॥ प्राप्तज्ञानानामपि केषाञ्चिन्मोक्षः केषाञ्चिन्नेत्युपासनवन्नियमो नास्ति किं तु सर्वेषामपि प्राप्तज्ञानानामस्ति मोक्षः। उपसंहारे निषेधेन नियमोपपत्तेरत्र पुनस्तदभावेन नियमायोगादिति भावः। निषेधाभावेऽपि साधकाभावान्नियम एवेत्यत आह ॥ **नेति** ॥ विप्रतिपन्ना ज्ञानिनो

(तत्त्वप्रकाशिका)

**नियतमोक्षाः ज्ञानित्वात् सम्प्रतिपन्नवदिति भावः । न चैतदुपसंहारानुमानसमानयोगक्षेममिति वाच्यम् । बाधकशून्यत्वाच्छ्रुतिमूलत्वाच्च । न च केषाञ्चिन्मुक्त्ययोग्यत्वसम्भवान्नियम इति युक्तम् । साधकबाधकभावाभावाभ्यां ज्ञानिनां कस्यापि मोक्षायोग्यताभावावगमात् । अतो ज्ञानिनां मोक्षस्य नियतत्वात् निःशङ्कोपासनं कर्तव्यमिति सिद्धम् ।**

## गुर्वर्थदीपिका

अनियमेनेत्यस्याऽस्यैव भवति न त्वन्यस्येति नियमं विनेत्यर्थः । निमय इति पूर्वः पक्ष इत्यत्र नियमः कस्यचिदेव भवति न तु सर्वस्येति नियम इत्यर्थः । उपसंहारानुमानसमानयोगक्षेम-मित्यत्रोपसंहारानुमानं नाम सर्वे सर्वगुणोपासकाः ज्ञानार्थित्वाद्ब्रह्मवदित्यनुमानमिति भावः ।

## भावबोधः

**मोक्षेऽनियमसाधनादिति** । पूर्वाधिकरणे मुक्तानामवश्यं कर्मानुष्ठेयमिति नियमाभावे हेतुत्वेनोक्तस्याविरोधस्यैवात्र केषाञ्चिदेव ज्ञानिनां मोक्षोनान्येषामिति नियमाभावेऽपि हेतुकरणा-दनन्तरसङ्गतिरिति भावः । **किमित्यादि** ॥ अत्र मोक्षः किमनियमेन सर्वज्ञानिप्राप्यः उत नियमेन कैश्चिदेव ज्ञानिभिरिति चिन्ता । तदर्थमुपासकेषु केषाञ्चित् सर्वगुणोपसंहारनिषेधवज्ज्ञानिष्वपि केषाञ्चिन्मुक्तिनिषेधोऽस्त्युत नास्तीति । **तदर्थमुपासकेषु** सर्वेषु गुणोपसंहारयोग्यत्वरूपविशेष-सद्भाववज्ज्ञानिष्वपि मुक्तियोग्यत्वरूपविशेषोऽस्त्युत नास्तीति । **फलद्वैविध्येति** ॥ स्वर्गादौ तत्साधकसर्वप्राप्यत्वस्य ज्ञाने च कैश्चिदेव प्राप्यत्वस्य दर्शनादिति भावः । अयोग्यताख्यविशिष्ट-कारणात् तज्ज्ञानिष्वपि केषाञ्चिन्मोक्षो न भवतीति नियत इति न्यायविवरणं मनसि निधाय पूर्वपक्षमाह– **नियम इति पूर्वपक्ष इति** ॥ यथोपसंहार इति भाष्यानुसारेणाह– **यथा खल्विति** ॥ **साधकेति** ॥ साधकशब्देनात्रोक्तश्रुत्यनुमानवज्ज्ञानिनां मोक्षं ददात्येवेश्वरः स्वभावादिति न्यायविवरणोक्ता युक्तिरपि ग्राह्या ॥ **कस्यापीति** ॥ अनेनायोग्यानां ज्ञानस्यैवानुपपत्तेरिति न्यायविवरणमुक्ततात्पर्यम् ।

## भावदीपः

**मोक्षानियमेति** ॥ पूर्वत्र फलरूपस्य कर्मणोऽनियमोक्तौ फलरूपमुक्तेरपि पुम्भेदेन केषाञ्चिदस्ति केषाञ्चिन्नेत्यनियमः स्यात् । उपसंहारे तथा दर्शनादिति शङ्कायां सर्वेषामपीत्यनियमसाधनादित्यर्थः । तेन पूर्वसङ्गतिरपि सिद्धा ज्ञेया । भाष्ये प्राप्तज्ञानानामित्युक्तेरुत्पन्नज्ञानानामित्युक्तम् । तर्हि ज्ञानपादे निवेशः स्यादित्यत पूर्वांशः । तावत्येवोक्ते सर्वथापि तु त एवेति वक्ष्यमाणविरोधादुत्पन्नज्ञानानामित्यप्युक्तिः ॥ **प्रकृत इति** ॥ हानौ त्वित्यादिनेति भावः ॥ **फलेति** ॥ फलरूपोपासने नियमः फलरूपे कर्मण्यस्तित्वनास्तित्वरूपोऽनियम इति नियमानियमरूपद्वैविध्यदर्शनमित्यर्थः । भोजनात्तृप्तिफलं सर्वप्राप्यम् । ज्योतिष्टोमादिफलं तु तत्कारियोग्यायोग्यसाधारणसर्वाप्राप्यं दृष्टमिति द्वैविध्यदर्शनमिति वार्थः । केषाञ्चिन्नेत्यन्तप्रतिज्ञाभाष्यार्थमाह ॥ **नियम इतीति** ॥ अत एव पूर्वत्र सन्देहे उत नियम इति वाच्ये तद्विवरणेन केषाञ्चिदित्यादिना नियमकोटिरुक्ता । कुत इत्यतोऽयोग्यतारूपविशेषकारणादित्यन्यत्रोक्तहेतुमाह ॥ **ज्ञानिष्वपीति** ॥ तृतीयस्कन्धे कामं भवेम वृजिनैर्निरयेषु नष्टाश्चेतोऽलिवद्यर्हि ते पदयो रमेत इत्यादिकुमारोक्तेरिति भावः । यथेत्यादिभाष्यार्थमाह ॥ **यथा खल्विति** ॥ **इति नियम इति** ॥ प्राप्तेश्चेत्यत्र तथैवोक्तेरिति भावः । फलोक्त्योपसंहरति ॥ **अत इति** ॥ केषाञ्चिन्मुक्त्ययोग्यत्वसम्भवादित्यर्थः । प्राग्विवृतमेव भाष्यार्थमनुवदति ॥ **प्राप्तेति** ॥ यथेत्यादिभाष्यस्योपसंहारपदमुपसंहारपूर्वकोपासनपरं सर्वे गुणा इति श्रुत्यनुरोधादिति भावेनोपासनवदित्युक्तम् । भाष्ये नेत्यनन्तरं इति नियम इति शेषं मत्वोक्तम् ॥ **नियम इति** ॥ भाष्यार्थं पर्यवसानगत्या सूत्रारूढं करोति ॥ **किन्त्विति** ॥ सर्वेषामित्यस्यार्थविवरणं **प्राप्तेति** ॥ अनियमशब्दार्थोऽस्ति मोक्ष इति । गतेरनियम इति गतिपदानुवृत्तिरिति भावः । सर्व इत्यादिभाष्यभावमाह ॥ **उपसंहार इति** ॥ नान्यैरिति निषेधेनेत्यर्थः ॥ **अत्र पुनरिति** ॥ सर्वज्ञानिनां मोक्षोऽस्तीत्यत्रेत्यर्थः । यथेत्यादिना लब्धमनुमानं व्यनक्ति ॥ **विप्रतिपन्ना इति** ॥ अनुमानस्य पश्चादुक्तेरुपयोगं व्यावर्त्यपूर्वमाह ॥ **न चैतदिति** ॥ विप्रतिपन्नाः सर्वोपसंहारवन्तः उपासकत्वात्सम्प्रतिपन्नवदित्यनुमानं यथा नान्यैरित्यादिश्रुतिविरुद्धं निर्मूलं च तथेदमिति न वाच्यमित्यर्थः । बाधकाभावसाधकयोरप्युक्तेरुपयोगं व्यावर्त्यपूर्वमाह ॥ **न चेति** ॥ **मोक्षायोग्यताभावावगमादिति** ॥ भागवतवाक्यं तु भक्तेरेवात्यपेक्षणीयत्वपरमिति भावः । फलोक्त्या सूत्रार्थमुपसंहरति ॥ **अत इति** ॥ बाधकाभावसाधकयोर्भावादित्यर्थः ।

## अभिनवचन्द्रिका

**मुक्त्ययोग्यत्वसम्भवादिति ॥** ज्ञानिष्वपि स्वोत्तमद्रोहेण, तच्छापेन वा, मुक्त्ययोग्यत्वस्योत्पादादित्यर्थः । एतेन अयोग्यत्वसम्भवादित्युक्त्यैव तन्निश्चयाऽभावप्राप्त्या संदिग्धासिद्धेन हेतुना नियमसाधनमयुक्तमिति परास्तम् ।

पूर्वपक्षस्तु– न सर्वेषां ज्ञानिनां मोक्षः । केषाञ्चिज्ज्ञानिनां स्वोत्तमद्रोहशापाभ्यामयोग्यतोत्पादात् । न ह्ययोग्यानां तत्प्राप्तिः सम्भवति । तथा सति अयोग्यानामपि सर्वगुणोपसंहारप्रसङ्गात् । अतः सर्वेषां ज्ञानिनां मोक्षाऽभावात् न निःशङ्कतयोपासनं कर्तव्यमिति ।

सिद्धान्तस्तु– अस्त्येव सर्वेषां ज्ञानिनां मोक्षः । तथा हि– केषाञ्चिदेव मोक्षो, न सर्वेषामितिवदन्प्रष्टव्यः, किं बाधकसद्भावात् न सर्वेषां मोक्ष इत्युच्यते, उत साधकाभावात् । नाद्यः तदभावात् । न चाऽयोग्यतोत्पादको बाधकः 'ये ज्ञानविषयाः शापाः मुक्तिगाश्चाधिकारिणाम् । कादाचित्कास्ते भवन्ति नैव ते सार्वकालिकाः' । इति वचनविरोधेन, योग्यतोत्पादानङ्गीकारात् । न द्वितीयः 'न कश्चिद्ब्रह्मवित्सृतिमनुभवति मुक्तो ह्येव भवति' इति श्रुतेः, विप्रतिपन्ना ज्ञानिनो मोक्षवन्तो ज्ञानित्वात्संप्रतीपन्नवदित्यनुमानाच्च । न चोपसंहारानुमानसमानयोगक्षेममिदमनुमानमिति वाच्यम् बाधकाभावात्, श्रुतिमूलत्वाच्च । अतो ज्ञानिनां मोक्षस्याऽनियतत्वात् निःशङ्कमुपासनं कर्तव्यमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

नन्वज्ञानिनां मोक्षनियमसाधनस्य ज्ञानमाहात्म्यवर्णनरूपत्वेन चतुर्थपादान्तर्भावः स्यान्न त्वत्रेत्यत आह ॥ **अन्यथेति** ॥ ज्ञानमाहात्म्यस्याप्यत्रावर्णने ज्ञानसाधनीभूतोपासने निश्शङ्कप्रवृत्त्यभावप्रसङ्गात् । तथा च कर्मापेक्षयोपासनस्याधिक्येन कर्तव्यत्वासिद्धेः पूर्वाधिकरणफलाक्षेपादत्र समर्थनीयमेतदित्यनन्तरसङ्गतिरिति भावः । यद्वा मुक्तानां साधनविशेषकर्मानियमवत् साधनविशेषवतां फलानियम इति शङ्कानिरासादनन्तरसङ्गतिः ॥ **किमिति** ॥ मोक्षोऽस्यैव ज्ञानिनो नान्यस्येति नियमेन कैश्चिदेव प्राप्य उतोक्तनियममपहाय सर्वज्ञानिप्राप्य इति चिन्ता । तदर्थमुपासकेषु मध्ये केषाञ्चिदुपसंहारायोग्यत्वात् ज्ञानिष्वपि मुक्तत्वं केषाञ्चिदस्ति न वेति

(वाक्यार्थमुक्तावली)

॥ **फलद्वैविध्येति** ॥ स्वर्गादेरामुष्मिकस्य तत्साधकसर्वप्राप्यत्वाभावस्यैहिकस्य तत्साधकसर्वप्राप्यत्वस्य च दर्शनमित्यर्थः । तमोयोग्यानामामुष्मिकप्राप्तिनिषेधात् प्राप्तज्ञानानामपीत्यणुभाष्यानुसारेण पूर्वपक्षयति ॥ **नियम इति** ॥ **पूर्वः पक्ष इदि** ॥ प्राप्तज्ञानानामपि केषांचिन्नेति मुक्तौ पुरुषनियम इत्यर्थः । कुत इत्यतस्तद्धेतुत्वेन प्राप्तसाधनानामपि केषाञ्चिन्मुक्तियोग्यानामेव मुक्तिः केषाञ्चिन्मुक्त्ययोग्यानां न मुक्तिरिति भाष्य एवोक्तम् । विशिष्टकारणमित्युक्तन्यायमयोग्यताख्यविशिष्टकारणादिति न्यायविवरणानुसारेण विवृणोति ॥ **ज्ञानिष्वपीति** ॥ यथोपसंहारनियम इत्युत्तरभाष्यानुसारेणाह ॥ **यथा खल्विति** ॥

सूत्रे गतिरित्यनुवर्तते । किन्त्वित्यध्याहारः । गतिरिति च विपरिणम्यते । भाष्येऽपि न मन्तव्यमित्यतः किन्तु सर्वेषामित्यध्याहारः । अविरोधादित्यस्य निषेधाभावादित्यर्थ इति भावेन व्याचष्टे । **प्राप्तज्ञानानामित्यादिना** ॥ **साधकाभावादिति** ॥ प्रमेयस्य प्रमाणाधीनत्वादनियमे तदभावेऽपि नियम एवेत्यतः श्रुत्यनुमाने दर्शयन् सूत्रखण्डं व्याचष्ट इत्यर्थः । एवं बाधकाभावश्रुत्योर्विवक्षितार्थे स्वतन्त्रहेतुत्वमिति व्याख्यायानुमानोपोद्बलकत्वमपीति भावेन तद्व्यावर्त्यमाह ॥ **न चैतदुपसंहार इति** ॥ विप्रतिपन्ना उपासनोपसंहारनियतिमन्तः उपासकत्वाच्चतुर्मुखवदित्युपसंहारानुमानेत्यर्थः । अयोग्यताख्यविशिष्टकारणमित्युक्तन्यायबाधस्य विद्यमानत्वादविरोधोऽसिद्ध इत्याशङ्क्य नियमेन मोक्षेऽयोग्यताख्यविशिष्टकारणलक्षणबाधकसद्भावान्नियम इति न मन्तव्यम् । सर्वेषामपि ज्ञानिनां मोक्षयोग्यताङ्गीकारेऽविरोधात् । बाधकाभावात् श्रुत्यनुमानलक्षणसाधकसद्भावाच्च । तथा च योग्यताख्यविशिष्टकारणस्यैवाभावात्सर्वेषां मोक्षेन तद्विरोध इति भावेन सूत्रभाष्ये प्रकारान्तरेण व्याचष्टे । **न च केषाञ्चिदित्यादिना** ॥ **साधकेति** ॥ साधकशब्देन श्रुत्यनुमानयोर्ग्रहणाच्छ्रुतौ न कश्चित् ब्रह्मवित्सृतिमनुभवति तस्मादाहुः सृतिहेती' इति ब्रह्मज्ञानस्य संसारविरोधिहेतुत्वोक्त्या ब्रह्मणश्च छेदकस्वभावता न किन्तु स्वभाव इत्युक्तसिद्धान्तन्यायोऽपि दर्शितो भवति । तदुक्तं न्यायविवरणे । ज्ञानिनां मोक्षं ददात्येवेश्वरः **स्वभावादिति** ॥ उक्तं च 'ज्ञानासिमादाय तरति पारम्'इत्यादौ ।

## तत्त्वसुबोधिनी

**मोक्षानियमेति** ॥ पूर्वाधिकरणे मुक्तानां अवश्यं कर्मानुष्ठेयमिति नियमाभावहेतुत्वेनोक्तस्याविरोधस्यैवात्र केषाञ्चिदेव ज्ञानिनां मोक्षो नान्येषामिति नियमाभावेऽपि हेतूकरणादनन्तरसङ्गतिरिति भावः ॥ **अन्यथेति** ॥ नियमासाधनेत्यर्थः ॥ **फलद्वैविध्येति** ॥ स्वर्गादौ तत्साधकसर्वप्राप्यत्वस्य ज्ञाने च कैश्चिदेव प्राप्यत्वस्य दर्शनादिति भावः । ननु सर्वे ज्ञानिनः सर्वगुणानुपसंहरन्ति ज्ञानित्वात् चतुर्मुखादिवत् इत्युपसंहारसाधकानुमानयोगक्षेममेतदित्याशङ्क्य निषेधति । **न चेति** ॥

## वाक्यार्थविवरणम्

**अन्यथेति** ॥ मोक्षाख्यफलनियमाभावादित्यर्थः ॥ **अनियमेनेति** ॥ कैश्चिज्ज्ञानिभिः प्राप्यः कैश्चिज्ज्ञानिभिरप्राप्यः इत्येवं नियमं विनेत्यर्थः । अस्ति मोक्ष इति वर्तते ॥ **नियम इति** ॥ ज्ञानिष्वपि केषाञ्चिदेव योग्यानां ज्ञानिनां मोक्षो भवति । केषाञ्चिदयोग्यानां नैव भवतीत्येवं रूपो नियम इत्यर्थः । प्राप्तज्ञानानामपि मध्ये ॥ **अत्र पुनस्तदभावेनेति** ॥ ज्ञानिनां सर्वेषां मोक्षोक्तौ निषेधाभावेनेत्यर्थः । तथा च सर्वेषां प्राप्तज्ञानानामनियमः । न चोपासनवन्नियम इति वाच्यम् । अविरोधात् । सर्वेषामनियमेनोपसंहारपूर्वकोपासने निषेधप्रमाणरूपविरोधवदत्र तदभावादिति सूत्रार्थः ॥ **साधकेति** ॥ सर्वेषां ज्ञानिनां मोक्षानियमसाधकेत्यर्थः । भाष्ये सृतिं हन्तीति सृतिहा इत्याहुरित्यर्थः ॥ **एतत्** ॥ ज्ञानिनां नियमेन मोक्षसाधकानुमानम् ॥ **उपसंहारानुमानेति** ॥ विप्रतिपन्नाः सर्वेऽप्युपासकाः गुणोपसंहारवन्तः उपासकत्वात् सम्प्रतिपन्नवदित्यनुमानेत्यर्थः ॥ **वाधकेत्यादि** ॥ ज्ञानिनां मोक्षानियमसाधकानुमानस्येत्यर्थः ॥ **श्रुतिमूलत्वाच्चेति** ॥ 'न कश्चित्' इति श्रुतिमूलकत्वादित्यर्थः । उपसंहारानुमानं तु न श्रुतिमूलकं प्रत्युत 'सर्वे गुणा ब्रह्मणैव' इति श्रुतिबाधितं चेति भावः ॥ **साधकेति** ॥ ज्ञानिनां मध्ये कस्यापि मोक्षायोग्यताया अभावे 'न कश्चित्' इति श्रुत्यादिरूपसाधकप्रमाणभावात् बाधकप्रमाणस्याभावाच्च योग्यता योग्यताभावावगम इत्यर्थः ।

## वाक्यार्थमञ्जरी

**अनियमसाधनादिति** ॥ केषाञ्चिदस्ति केषाञ्चिन्नास्तीति व्यवस्थाभावसाधनादित्यर्थः ॥ **फलद्वैविध्येति** ॥ स्वर्गादौ तत्साधकसर्वप्राप्यत्वस्य ज्ञाने च कैश्चिदेव प्राप्यत्वस्य च दर्शनादिति भावः ।

(वाक्यार्थमञ्जरी)

ॐ अनियमः सर्वेषामविरोधाच्छब्दानुमानाभ्याम् ॐ ॥ सर्वेषां ज्ञानिनां मोक्षेऽनियमः उक्तव्यवस्था नास्ति कुतः अविरोधात् अनियमाङ्गीकारे विरोधाभावात् । प्रत्युत न कश्चिदिति श्रुत्या ज्ञानित्वानुमानाभ्यामनियमस्य सिद्धत्वादित्यर्थः ॥ **उपसंहारानुमानेति** ॥ विप्रतिपन्नाः सार्वत्रिकगुणोपसंहारिणो मोक्षाधिकारित्वाद्ब्रह्मवदित्याभासानुमानेन न तुल्यमित्यर्थः ॥ **बाधकेति** ॥ साधकबाधकभावाभाववदित्यर्थः ॥ **साधकेति** ॥ श्रुत्यादिरूपेत्यर्थः ॥

**॥ इति अनियमाधिकरणम् ॥ १९ ॥**

## २०. यावदधिकरणम्

### ॥ ॐ यावदधिकारमवस्थितिराधिकारिकाणाम् ॐ ॥ ३३ ॥

यथा यथाऽधिकारो विशिष्यते एवं मुक्तावानन्दो विशिष्यते । 'मनुष्येभ्यो गन्धर्वाणां गन्धर्वेभ्य ऋषीणामृषिभ्यो देवानां देवेभ्य इन्द्रस्य इन्द्राद्रुद्रस्य रुद्राद्ब्रह्मण एष ह्येव शतानन्द' इति चतुर्वेदशिखायाम् । अध्यात्मे च—

'ज्ञानं चोपासनं चैव मुक्तावानन्द एव च ।
यथाधिकारं देवानां भवन्त्येवोत्तरोत्तरम्'इति ॥

### तत्त्वप्रदीपिका

यद्यनियमेन सर्वेषां ज्ञानिनां मोक्षस्तर्ह्यकिञ्चित्करोऽसौ योग्यताविशेषः स्यादित्यत आह– यावदधिकारमवस्थितिराधिकारिकाणाम् । 'आधिकारिका' मोक्षाधिकारिणः । यावान्यावानधिकारो योग्यता तेषां तावति तावत्यानन्दादिगुणगणे स्वरूपात्मकेऽवस्थितिर्भवति । न च 'मनुष्येभ्यो गन्धर्वाणामि''त्यादि वचनस्य पूर्वोक्तानन्दश्रुतिविरोधः । सङ्क्षेपस्य विस्तराविरोधात् ।

### तत्त्वप्रकाशिका

अत्र भगवज्ज्ञानसाधनोपासनाधिकारिणामुपासनेऽधिकारनियमसमर्थनादस्ति शास्त्रादिसङ्गतिः । अन्यथा 'प्राप्तेश्च' इत्यादेरनुपपत्तेरसौ समर्थनीयः । प्रकृतोपास्तिमन्तो विषयः । उपासनाधिकारनियतिमन्तो न वेति सन्देहः । पूर्वोक्तिर्लौकिकक्रियायामदृष्टिश्च सन्देहबीजम् । नोपासनावन्तोऽधिकारनियतिमन्त इति पूर्वः पक्षः । उपासनाधिकारनिमये प्रमाणाभावात् । न च मुक्तावानन्दतारतम्यमुपासनाधिकारनियमे प्रमाणमिति वाच्यम् । उपासनादिप्रयत्नतारतम्येनैव तस्योपपत्तेरुपासनाऽधिकारनियमाप्रयोजकत्वात् । अभ्युपगम्य चेदमुच्यते । मुक्तावानन्दतारतम्यमेवानुपपन्नम् । तथात्वे मुक्तानां द्वेषेर्ष्यादिदोषप्रसङ्गात् । न चात्र प्रमाणमस्ति । आनन्दश्रुतिस्तु संसारविषयतयोपपद्यते । अत उपास्त्यधिकारनियमाभावात्प्राप्तेश्च समञ्जसमित्याद्ययुक्तमिति । सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ॥ **यावदिति** ॥ अस्त्येवोपासनाधिकारे नियमो मुक्तावानन्दतारतम्यस्य भावात् । मुक्तावानन्दतारतम्यस्य चोपासनाधिकारनियमानुसारित्वादिति भावः । ननु मुक्तावानन्दतारतम्यमेव

(तत्त्वप्रकाशिका)

**कुतो येनोपासनाधिकारनियम इत्यत आह ॥ मनुष्येभ्य इति ॥ मुक्तावानन्दतारतम्यमुपासनादिप्रयत्नेन सम्भवत्यतो नोपासनाऽधिकारनियमं प्रयोजयतीत्यत आह ॥ अध्यात्मे चेति ॥** अधिकारनियमेनैव मुक्तावानन्दतारतम्यं नोपासनादिप्रयत्नेनैव तस्याप्युपासनाधिकारनियमानुसारित्वादिति भावः । कथञ्चिदधिकाराधिकयत्ने विघ्नो भवति । 'स्वाधिकाराधिको यत्नः प्रायशो नोपपद्यते । कथञ्चिदधिके यत्ने दोषः कश्चित्समापतेत्' इति वचनात् ।

## गुर्वर्थदीपिका

उपासनाधिकारनियम इत्यत्रास्यैतावत्येवाधिकारोऽस्यैतावत्येवाधिकार इति नियम इत्यर्थः । उपासनादिप्रयत्नतारतम्येनेत्यत्र स्वसाध्यशत्रुहनने प्रयत्नं कुर्वत्यपि राज्ञां प्रीतिदर्शनादिति मन्दाशङ्कया पूर्वपक्षारम्भः । वस्तुतस्तु हननादिकारिणा सामर्थ्येन क्रियमाणशस्त्रवङ्गशस्त्रनिपातनाख्यप्रयत्नस्यान्यैः कर्तुमशक्यत्वात्प्रयत्नोऽपि तत्तदधिकारिणामेव । तदुदितफलमपि तेषामेव । असमर्थस्य केवलमभिगमनादिरूपप्रयत्नोऽप्यल्प एव । फलं च तुच्छमप्रेक्षावानेव दिशति । प्रेक्षावांस्तु स्वासाध्ये कर्मणि प्रयतमानं प्रेक्ष्य हसत्येव न तु प्रसीदतीति द्रष्टव्यम् ।

## भावबोधः

**अधिकारिनियमसमर्थनादिति** ॥ 'अनियमः सर्वेषां' इति सर्वज्ञानिनामनियमेनैव मोक्षो न केषाञ्चिदेवेति नियमः । तत्र मानाभावादित्युक्ते तर्हि तद्वदेव सर्वेषां मुक्तानामानन्दादयः अनियमेनैकप्रकारा एव स्युः न तु केषाञ्चिदधिकाः केषाञ्चिदल्पा इति नियमः । आनन्दश्रुतेः संसारिविपयत्वेन तत्र प्रमाणाभावात् । ततश्च तत्साधनोपासनमपि सर्वेषामेकप्रकारमेव स्यान्न तु तत्र तारतम्यम् । फलवैचित्र्यरूपमानाभावादित्याक्षेपोत्थानादनन्तरसङ्गतिरिति भावः । **उपासनेत्यादि** । अत्रोपास्तिमन्तः तदधिकारनियतिमन्तो न भवन्त्युत भवन्तीति चिन्ता । तदर्थं मुक्ता आनन्दतारतमवन्तो न भवन्ति उत भवन्तीति । तदर्थं मुक्तावानन्दतारतम्ये प्रमाणं नास्त्युतास्तीति । तदर्थं 'अथात आनन्दस्य मीमांसा' इत्यादिश्रुतिः किं संसारिमातत्रविषयोत मुक्तिविषयाऽपीति । तदर्थं मुक्ततारतम्यं द्वेषेर्ष्याद्यापादकं भवत्युत न भवतीति ॥

ननु 'वृद्धिह्रासभाक्त्वं' इत्युक्तरीत्या मौक्तानन्दतारतम्यस्यैव अधिकारतारतम्ये हेतुत्वोपपत्तेः कथं प्रमाणाभाव इत्यत आह– **न च मुक्ताविति** ॥ तद्धेतुप्रतिपादकतया प्रयत्नानुसारिणो

(भाववोधः)

मुक्तावाधिकारिकानन्दादय इति न्यायविवरणं व्याचष्टे– **उपासनादीति** ॥ 'अक्षरधियां' इति द्वितीयसूत्रनिवर्तनीयमाह– **अभ्युपगम्य चेति** ॥ ननु 'दर्शनाच्च' इति अनेन मुक्तावानन्दतारतम्य-सद्भावे 'अथात आनन्दस्य मीमांसा' इत्यादिश्रुतेरुक्तत्वेन कथं तत्र प्रमाणाभाव इत्यत आह– **आनन्दश्रुतिस्त्विति** ॥ अत्र सूत्रे 'आधिकारिक' इति ब्रह्मादिपुरुषविशेषस्य संज्ञा । आधिकारि-काणां ब्रह्मानन्दानां मुक्तावानन्दादिगुणतारतम्येनावस्थितिर्यावदधिकारं अधिकारानुसारेणैवेति सूत्रार्थमभिप्रेत्य प्रवृत्तं यथा यथेत्यादिभाष्यं व्याचष्टे– **अस्त्येवेत्यादिना** ॥ अधिकारानुसारित्वा-त्प्रयत्नस्येति न्यायविवरणानुसारेण स्मृत्यभिप्रायमाह– **अधिकारेति** ॥ 'च'शब्दः परस्परसमुच्चये यथाधिकारमेव उपासनमुपासनादिप्रयत्न उत्तरोत्तरं भवति । यथोपासनमेव ज्ञानं यथा ज्ञानमेव मुक्तावानन्द इति स्मृतियोजना सूचिता ।

ननु 'वसिष्ठसाम्यं समभीप्समानं प्रच्यावयन्निच्छया शापमाप' इत्यादिना माण्डव्यादीना-मधिकाराधिकयत्नदर्शनात् कथमेतदित्यतः प्रवृत्तं कथञ्चिदधिके यत्ने तत्साधनादिवस्तूनां दूषण-प्राप्तेरिति न्यायविवरणं मनसि निधायाह– **कथञ्चिदिति** ॥ यमं प्रति शापदानादिरूपो विघ्नो भवतीत्यर्थः । अत्र न्यायविवरणोदाहृतं प्रमाणं पठति– **अधिकारेति** ॥

## भावदीपः

**अधिकारनियमेति** ॥ अस्यैतावती योग्यताऽस्य त्वेतावतीत्येवं योग्यतानियम इत्यर्थः ॥ **समर्थनादिति** ॥ पूर्वत्रोपासनायाः फलानियमे उक्ते यद्यनियमेन ज्ञानिनां मोक्षस्तर्ह्यकिञ्चित्करोऽसौ योग्यताविशेषः स्यात् । तत्प्रयोजकफलतारतम्यस्यान्येनैवोपपत्तेरिति शङ्कायां तन्नियमसमर्थना-दित्यर्थः । तेन पूर्वोक्ते तर्कपराहतिशङ्कनात्पूर्वसङ्गतिर्ध्येया । तथैव तत्वदीपोक्तेः ॥ **अन्यथेति** ॥ योग्यतानियमासमर्थने सति प्राप्तेश्च समञ्जसमित्यत्रोपसंहारानुपसंहारयोरधिकारिभेदेन सामञ्जस्य सर्वभेदादित्यत्र फलभेदेन तयोस्तथात्वस्य, आनन्दादय इत्यत्र चतुर्णामेव सर्वोपास्यत्वस्य, प्रियशिरस्त्वाद्यप्राप्तिरित्यादौ प्रियशिरस्त्वादेः सर्वोपास्यत्वाभावस्य चोक्तिर्न स्यात् । तत्सर्व-स्याप्यधिकारभेदहेतुकत्वादित्यर्थः । पूर्वोक्तिः प्राप्तेश्चेत्याद्युक्तिरित्यर्थः ॥ **लौकिकेति** ॥ भोजन-कृष्यादिक्रियायामधिकारनियमस्यादृष्टिरित्यर्थः । प्रयत्नानुसारिणोऽनुक्तावाधिकारिकानन्दादय इति न्यायविवरणोक्तिं प्रमाणाभावोपपादकतया योजयति ॥ **प्रमाणाभावादित्यादिना** ॥ आद्यसूत्र-

(भावदीपः)

व्यावर्त्यचोद्यमन्यत्रोक्तं प्रपञ्च्य द्वितीयसूत्रव्यावर्त्यचोद्यमाह ॥ **अभ्युपगम्य चेदमिति** ॥ मुक्तौ तारतम्यमभ्युपगम्य प्रयत्नेनान्यथासिद्धत्वमुच्यत इत्यर्थः । प्रमाणसिद्धार्थे बाधकमकिञ्चित्करं स्वयमेवाभासीकरिष्यतीत्यत आह ॥ **न चात्रेति** ॥ मुक्तनामानन्दादितारतम्ये प्रमाणं च नास्ति न केवलं बाधकमस्तीत्येवेति चार्थः ।

ननु भक्तिपाद एव वृद्धिह्रासभाक्त्वमिति नये गुणसूत्रे दर्शनाच्चेत्यत्राथात आनन्दस्येति श्रुतिरेव तत्र मानमित्युक्तमित्यतः तदुपमर्दिकाधिकाशङ्कामाह ॥ **आनन्देति** ॥ **अत इति** ॥ प्रमाणाभावादित्यर्थः । इत्याद्ययुक्तमिति फलोक्तिः ॥ मुक्तौ तारतम्यमेव नेत्येतदग्रे निरसिष्यन्मौक्ततारतम्य प्रमाणकत्वमधिकारनियमस्याह ॥ **अस्त्येवेति** ॥ काकस्य कार्ष्ण्याद्धवलः प्रासाद इतिवत् हेतुसाध्ययोर्वैयधिकरण्यनिरासाय यथा यथेत्यादिभाष्यस्य फलितार्थमाह ॥ **मुक्ताविति** ॥ एतेनाधिकारिकाणां मोक्षाधिकारिणां मुक्तावानन्दाद्यवस्थितिर्यावदधिकारमधिकारानुसारिणीति सूत्रे भाष्ये च मौक्ततारतम्यस्याधिकारानुसारित्वोक्तेरुपयोगो दर्शितः ॥ **इत्यत आहेति** ॥ यद्यप्येषा शङ्का दर्शनाच्चेत्यत्र प्रागेव श्रुत्युक्त्या निरस्ता । मुक्ताविति पदं तत्रेवात्रापि नास्ति । प्रत्युत तद्विरुद्धा च । तथाप्यस्य सङ्क्षेपत्वाद्विस्तरोक्तमत्र ग्राह्यम् । तत्राऽस्पष्टमेतदनुरोधेन स्पष्टयितव्यमिति श्रुत्यन्तरोक्तिरित्यदोषः । स्मृत्युक्तेरुपयोगाय व्यावर्त्यचोद्यमाह ॥ **मुक्ताविति** ॥ इत्यत आहेति ॥ स्मृतौ यथाधिकारमित्युक्त्या शङ्कानिरास इति भावः । ननु स्मृतौ यथाधिकारमित्युक्तावपि कथं शङ्कानिरासः । युक्तेरनुपन्यासादित्यतोऽधिकारानुसारित्वात्प्रयत्नस्येत्यन्यत्रोक्तं हेतुं भावार्थतया योजयति ॥ **अधिकारेति** ॥ न्यायविवरणोक्तमेवाह ॥ **कथञ्चिदित्यादिना** ॥ **विघ्न इति** ॥ पृथ्वादेः शततमाश्वमेधादिक्रतुविघ्नदृष्टेरिति भावः ॥ **दोष इति** ॥ चन्द्रसुग्रीवविविदमैन्दादिरेवोदाहरणं ध्येयम् ।

## अभिनवचन्द्रिका

**द्वेषेर्ष्यादीति** ॥ द्वेषोऽप्रीतिः । ईर्ष्या असहिष्णुता । आदिशब्देन गुणेषु दोषाविष्करणलक्षणाऽसूयादेर्ग्रहणम् । अत्र गुणसूत्रम् 'अक्षरधियां त्वविरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम्' इति । अक्षरधियामविरोधो विरोधाभावः निर्दोषत्वादिना भगवत्समत्वात् । अन्यथा

(अभिनवचन्द्रिका)

भगवतोऽपि **तत्प्रसङ्गः** । **तेभ्य** उत्तमेभ्योऽधमानामुत्कर्षाभावात् । उत्तमानुग्रहप्राप्तपरमैश्वर्यादिमत्त्वाच्चेति यावत् । तद्यथा गुरुप्रसादप्राप्तोत्कर्षवन्तः शिष्याः न तद्द्वेषिण इति सूत्रार्थः ।

## वाक्यार्थमुक्तावली

यद्यनियमेन ज्ञानिनां मोक्षस्तर्हि तद्वदेव मुक्तभोगेऽपि योग्यतायामविशेषः स्यात् । तथा च तत्साधनमुपासनमपि सर्वेषामेकप्रकारेण स्यादित्याक्षेपादनन्तरसङ्गतिस्तत्त्वप्रदीपोक्ता ज्ञेया । **उपासनाधिकारेति** । उपास्तिमतः उपासनायां योग्यतानियतिमन्तो न भवन्त्युत भवन्तीति चिन्ता । तदर्थं तदुपासकत्वेनाभिमतं मुक्तावानन्दतारतम्यमेवाप्रामाणिकत्वाद्द्वेषेर्ष्यादिदोषप्रसञ्जकत्वाच्चासिद्धम् । सिद्धत्वे वा प्रयत्नतारतम्येनान्यथासिद्धमुत प्रामाणिकं द्वेषेर्ष्याद्यप्रसञ्जकमनन्यथासिद्धमिति । ननु वृद्धिह्रासभाक्त्वमित्यत्रोक्तं मुक्तावानन्दतारतम्यममुपासनाधिकारनियममन्तरेणानुपपद्यमानं तत्रार्थापत्तिरूपं प्रमाणं भविष्यतीत्यशङ्क्य निषेधति ॥ **न चेति** ॥ कुतो न वाच्यमित्यतो यावदधिकारमधिकारानुसारेणैवानन्दतारतम्यम् । न तु प्रयत्नतारतम्येनेति सूत्रखण्डव्यावर्त्यप्रयत्नतारतम्यमादायार्थापत्तेरन्यथोपपत्तिं चेष्टेत्युक्तन्यायं प्रदर्शयन्नाह ॥ **उपासनादीति** ॥ आदिपदेन तत्साधनश्रवणादितत्साध्यमपरोक्षज्ञानं चोपासनायां योग्यताविशेषाभावेऽपि तद्विषये प्रयत्नतारतम्येनापरोक्षज्ञानतारतम्ये मौक्तानन्दतारतम्युपपद्यते । उपासनाप्रयत्नतारतम्यमपि तद्धेतुश्रवणादिप्रयत्नतारतम्येनैव दृष्टेनैवोपपत्तौ अदृष्टकल्पनानुपपत्तेरिति भावः । अक्षरधियामिति द्वितीयसूत्रनिरसनीयामाशङ्कामाह ॥ **अभ्युपगमेति** ॥

ननु वृद्धिह्रासनये दर्शनाच्चेत्यत्र मुक्तावानन्दतारतम्यसद्भावेऽथात आनन्दस्य मीमांसेति आनन्दश्रुत्युक्तेः कथं प्रमाणाभाव इत्यत आह ॥ **आनन्दश्रुतिस्त्विति** ॥ सूत्रे गताविति विपरिणम्यानुवर्तते । आधिकारिकाणामधिकारायोग्यता तदनुसार्यनुष्ठाने शीलं येषां ते आधिकारिकाः । शीलमिति सूत्राट्ठक् । तेषां मोक्षाधिकारिणां ब्रह्मादीनां यावदधिकारम् । यावदवधारण इत्यव्ययीभावः । अधिकारानुसारेणैवोपासनायोग्यतानुसारेणैव गतावानन्दादिरूपे मोक्षे स्थितिः तारतम्येनावस्थानम् । न तूपासनाप्रयत्नतारतम्येन । येनान्यथोपपत्त्याधिकारनियमो न स्यादिति सूत्रार्थं मनसि निधायाह ॥ **अस्त्येवेति** ॥ सूत्रे यावदधिकारानुसारेणैव न तु

(वाक्यार्थमुक्तावली)

प्रयत्नानुसारेण । कुत इत्यतः आधिकारिकाणामित्यनेनाधिकारानुसारेणैवानुष्ठानशीलं येषाम् । न त्वाधिकारिको यत्न इति योग्यतातारतम्याभावे प्रयत्नतारतम्यस्यैवायोगादिति सूचितम् । तत्र प्रमाणपरतयोत्तरभाष्यमवतार्य व्याचष्टे । **मुक्तानामित्यादिना** । उपासनादिप्रयत्नेनेत्युक्त्या भाष्ये ज्ञानोपासनापादाभ्यां तत्र यत्नलक्षणेत्युक्तं भवति । भाष्ये देवानामिति मोक्षयोग्यानामित्यर्थः । ननु यथाधिकारमेव प्रयत्न इत्ययुक्तम् । माण्डव्यादीनां वसिष्ठसाम्येऽधिकाराधिकप्रयत्नदर्शनादित्याशङ्क्य कथञ्चिद्यत्नप्रसक्तावपि यथाधिकारमेव यत्नः पूर्णो भवति । अन्यथा विघ्नसम्भवादिति भाष्यार्थं मत्वा दूषणमित्युक्तन्यायं च दर्शयन् प्रमाणमाह ॥ **कथञ्चिदिति** ॥

## तत्त्वसुबोधिनी

**अधिकारनियमसमर्थनादिति** ॥ अनियमः सर्वेषामित्यत सर्वज्ञानिनामनियमेनैव मोक्षो न तु केषाञ्चिदेवेति नियमः तत्र मानाभावादित्युक्ते तर्हि तद्वदेव सर्वेषां मुक्तानां आनन्दादयो नियमेनैकप्रकाराः स्युः न तु केषाञ्चिदधिकाः केषाञ्चिदल्पाः इति नियमः आनन्दश्रुतेः संसारिविषयत्वेन तत्र प्रमाणाभावात् । तच्च तत्साधनोपासनमपि सर्वेषामेकप्रकारमेव स्यान्न तु तत्तारतम्यं फलवैचित्र्यरूपं मानाभावादित्याक्षेपोत्थानादनन्तरसङ्गतिरिति भावः । **अन्यथेति** । तत्रानन्दादिनियमस्योक्तत्वादिति भावः ॥ **पूर्वोक्तिरिति** ॥ **प्राप्तेश्चेति** ॥ पूर्वोक्तिरित्यर्थः ।

ननु वृद्धिह्रासभाक्त्वमित्युक्तरीत्या मौक्तानन्दतारतम्यस्यैवाधिकारतारतम्ये हेतुत्वोपपत्तेः कथं प्रमाणाभाव इत्याशङ्क्य निषेधति ॥ **न च मुक्ताविति** ॥ मुक्तावानन्दतारतम्यमङ्गीकृत्य उपासनादिप्रयत्नतारतम्येनैव तस्य उपपत्तिरित्युक्तम् । इदानीं तदेव न युज्यते इत्याह ॥ **अभ्युपगम्यं चेति** ॥ ननु द्वेषेर्ष्यादि तत्र नास्त्येवेत्यतः प्रमाणाभावेन तदभावो वक्तुं अशक्य इत्याह ॥ **न चेति** । ननु दर्शनाच्च इत्यनेन मुक्तौ आनन्दतारतम्यसद्भावे 'आथात आनन्दस्येति श्रुतेः उक्तत्वेन कथं तत्र प्रमाणाभाव इत्यत आह ॥ **आनन्दश्रुतिस्तु इति** ॥ अत्र सूत्रे आधिकारिकेति ब्रह्मादिपुरुषविशेषस्य संज्ञा । आधिकारिका मोक्षाधिकारिणः इति तत्वप्रदीपोक्तेः । आधिकारिकाणां ब्रह्मादीनां मुक्तावनन्दादिगुणतारतम्येन स्थितिः यावदधिकारं अधिकारानुसारेणैवेति सूत्रार्थः इत्यभिप्रेत्य यथा यथेति भाष्यं व्याचष्टे ॥ **अस्त्येवेति** ॥ **अधिकारेति** ॥ अनेन चशब्दः

(अभिनवचन्द्रिका)

भगवतोऽपि तत्प्रसङ्गः । तेभ्य उत्तमेभ्योऽधमानामुत्कर्षाभावात् । उत्तमानुग्रहप्राप्तपरमैश्वर्यादिमत्त्वाच्चेति यावत् । तद्यथा गुरुप्रसादप्राप्तोत्कर्षवन्तः शिष्याः न तद्वेषिण इति सूत्रार्थः ।

## वाक्यार्थमुक्तावली

यद्यनियमेन ज्ञानिनां मोक्षस्तर्हि तद्वदेव मुक्तभोगेऽपि योग्यतायामविशेषः स्यात् । तथा च तत्साधनमुपासनमपि सर्वेषामेकप्रकारेण स्यादित्याक्षेपादनन्तरसङ्गतिस्तत्त्वप्रदीपोक्ता ज्ञेया । **उपासनाधिकारेति** । उपास्तिमतः उपासनायां योग्यतानियतिमन्तो न भवन्त्युत भवन्तीति चिन्ता । तदर्थं तदुपासकत्वेनाभिमतं मुक्तावानन्दतारतम्यमेवाप्रामाणिकत्वाद्द्वेषेर्ष्यादिदोषप्रसञ्जकत्वाच्चासिद्धम् । सिद्धत्वे वा प्रयत्नतारतम्येनान्यथासिद्धमुत प्रामाणिकं द्वेषेर्ष्याद्यप्रसञ्जकमनन्यथासिद्धमिति । ननु वृद्धिह्रासभाक्त्वमित्यत्रोक्तं मुक्तावानन्दतारतम्यममुपासनाधिकारनियममन्तरेणानुपपद्यमानं तत्रार्थापत्तिरूपं प्रमाणं भविष्यतीत्यशङ्क्य निषेधति ॥ **न चेति** ॥ कुतो न वाच्यमित्यतो यावदधिकारमधिकारानुसारेणैवानन्दतारतम्यम् । न तु प्रयत्नतारतम्येनेति सूत्रखण्डव्यावर्त्यप्रयत्नतारतम्यमादायार्थापत्तेरन्यथोपपत्तिं चेष्टेत्युक्तन्यायं प्रदर्शयन्नाह ॥ **उपासनादीति** ॥ आदिपदेन तत्साधनश्रवणादितत्साध्यमपरोक्षज्ञानं चोपासनायां योग्यताविशेषाभावेऽपि तद्विषये प्रयत्नतारतम्येनापरोक्षज्ञानतारतम्ये मौक्तानन्दतारतम्युमुपपद्यते । उपासनाप्रयत्नतारतम्यमपि तद्धेतुश्रवणादिप्रयत्नतारतम्येनैव दृष्टेनैवोपपत्तौ अदृष्टकल्पनानुपपत्तेरिति भावः । अक्षरधियामिति द्वितीयसूत्रनिरसनीयामाशङ्कामाह ॥ **अभ्युपगमेति** ॥

ननु वृद्धिह्रासनये दर्शनाच्चेत्यत्र मुक्तावानन्दतारतम्यसद्भावेऽथात आनन्दस्य मीमांसेति आनन्दश्रुत्युक्तेः कथं प्रमाणाभाव इत्यत आह ॥ **आनन्दश्रुतिस्त्विति** ॥ सूत्रे गताविति विपरिणम्यानुवर्तते । आधिकारिकाणामधिकारायोग्यता तदनुसार्यनुष्ठाने शीलं येषां ते आधिकारिकाः । शीलमिति सूत्राट्ठक् । तेषां मोक्षाधिकारिणां ब्रह्मादीनां यावदधिकारम् । यावदवधारण इत्यव्ययीभावः । अधिकारानुसारेणैवोपासनायोग्यतानुसारेणैव गतावानन्दादिरूपे मोक्षे स्थितिः तारतम्येनावस्थानम् । न तूपासनाप्रयत्नतारतम्येन । येनान्यथोपपत्त्याधिकारनियमो न स्यादिति सूत्रार्थं मनसि निधायाह ॥ **अस्त्येवेति** ॥ सूत्रे यावदधिकारानुसारेणैव न तु

(वाक्यार्थमुक्तावली)

प्रयत्नानुसारेण । कुत इत्यतः आधिकारिकाणामित्यनेनाधिकारानुसारेणैवानुष्ठानशीलं येषाम् । न त्वाधिकारिको यत्न इति योग्यतातारतम्याभावे प्रयत्नतारतम्यस्यैवायोगादिति सूचितम् । तत्र प्रमाणपरतयोत्तरभाष्यमवतार्य व्याचष्टे । **मुक्तानामित्यादिना** । उपासनादिप्रयत्नेनेत्युक्त्या भाष्ये ज्ञानोपासनापादाभ्यां तत्र यत्नलक्षणेत्युक्तं भवति । भाष्ये देवानामिति मोक्षयोग्यानामित्यर्थः । ननु यथाधिकारमेव प्रयत्न इत्ययुक्तम् । माण्डव्यादीनां वसिष्ठसाम्येऽधिकाराधिकप्रयत्नदर्शनादित्याशङ्क्य कथञ्चिद्यत्नप्रसक्तावपि यथाधिकारमेव यत्नः पूर्णो भवति । अन्यथा विघ्नसम्भवादिति भाष्यार्थं मत्वा दूषणमित्युक्तन्यायं च दर्शयन् प्रमाणमाह ॥ **कथञ्चिदिति** ॥

## तत्त्वसुबोधिनी

**अधिकारनियमसमर्थनादिति** ॥ अनियमः सर्वेषामित्यत सर्वज्ञानिनामनियमेनैव मोक्षो न तु केषाञ्चिदेवेति नियमः तत्र मानाभावादित्युक्ते तर्हि तद्वदेव सर्वेषां मुक्तानां आनन्दादयो नियमेनैकप्रकाराः स्युः न तु केषाञ्चिदधिकाः केषाञ्चिदल्पाः इति नियमः आनन्दश्रुतेः संसारिविषयत्वेन तत्र प्रमाणाभावात् । तच्च तत्साधनोपासनमपि सर्वेषामेकप्रकारमेव स्यान्न तु तत्तारतम्यं फलवैचित्र्यरूपं मानाभावादित्याक्षेपोत्थानादनन्तरसङ्गतिरिति भावः । **अन्यथेति** । तत्रानन्दादिनियमस्योक्तत्वादिति भावः ॥ **पूर्वोक्तिरिति** ॥ **प्राप्तेश्चेति** ॥ पूर्वोक्तिरित्यर्थः ।

ननु वृद्धिह्रासभाक्त्वमियुक्तरीत्या मौक्तानन्दतारतम्यस्यैवाधिकारतारतम्ये हेतुत्वोपपत्तेः कथं प्रमाणाभाव इत्याशङ्क्य निषेधति ॥ **न च मुक्ताविति** ॥ मुक्तावानन्दतारतम्यमङ्गीकृत्य उपासनादिप्रयत्नतारतम्येनैव तस्य उपपत्तिरित्युक्तम् । इदानीं तदेव न युज्यते इत्याह ॥ **अभ्युपगम्यं चेति** ॥ ननु द्वेषेर्ष्यादि तत्र नास्त्येवेत्यतः प्रमाणाभावेन तदभावो वक्तुं अशक्य इत्याह ॥ **न चेति** । ननु दर्शनाच्च इत्यनेन मुक्तौ आनन्दतारतम्यसद्भावे 'आथात आनन्दस्येति श्रुतेः उक्तत्वेन कथं तत्र प्रमाणाभाव इत्यत आह ॥ **आनन्दश्रुतिस्तु इति** ॥ अत्र सूत्रे आधिकारिकेति ब्रह्मादिपुरुषविशेषस्य संज्ञा । आधिकारिका मोक्षाधिकारिणः इति तत्वप्रदीपोक्तेः । आधिकारिकाणां ब्रह्मादीनां मुक्तावनन्दादिगुणतारतम्येन स्थितिः यावदधिकारं अधिकारानुसारेणैवेति सूत्रार्थः इत्यभिप्रेत्य यथा यथेति भाष्यं व्याचष्टे ॥ **अस्त्येवेति** ॥ **अधिकारेति** ॥ अनेन चशब्दः

(तत्त्वप्रबोधिनी)
परस्परसमुच्चये **यथाधिकार्येवोपासनं** उपासनादिप्रयत्नः उत्तरोत्तरं **सम्भवति, यथोपासनमेव ज्ञानं, यथा ज्ञानमेव मुक्तावानन्द इति स्मृतियोजना** सूचिता ॥ **तस्यापीति** ॥ उपासनादिप्रयत्नस्यापीत्यर्थः । ननु वसिष्टसाम्यं समभीप्समानं प्रच्यावयन्निच्छया शापमाप इत्यादिना माण्डव्यादीनां अधिकाराधिकप्रयत्नस्य दर्शनात्कथमेतदित्यत आह ॥ **कथञ्चिदिति** ॥ यमं प्रति शापदानादिरूपो विघ्नो भवतीत्यर्थः । अत्र प्रमाणमाह ॥ **अधिकारेति** ॥

## वाक्यार्थविवरणम्

**अधिकारनियमेति** ॥ योग्यतानियमेत्यर्थः ॥ पूर्वोक्तिः प्राप्तेश्चेत्युक्तिः ॥ **लौकिकेति** ॥ कृष्यादिक्रियायामधिकारिभिरेव कर्तव्यत्वस्यादृष्टेरधिकारनियमवन्तो न भवन्तीत्यर्थः ॥ उपासनादिप्रयत्नः उपासनादिरूपजीवप्रयत्नः ॥ **तस्य** ॥ आनन्दतारतम्यस्य ॥ **नियमेति** ॥ नियमे आनन्दतारतम्यस्याप्रयोजकत्वादित्यर्थः ॥ **अभ्युपगम्य** ॥ मुक्तावानन्दतारतम्यमिति शेषः ॥ **इदम्** ॥ तस्योपासनाधिकारनियमाप्रयोजकत्वम् ॥ **अत्र** ॥ मुक्तावानन्दतारतम्ये । तस्यापि उपासनादिरूपप्रयत्नतारतम्ये प्रयोजकत्वोपपत्तौ किमुपासनादिप्रयत्नतारतम्येनेति भावः ।

## वाक्यार्थमञ्जरी

**अधिकारनियमेति** ॥ केषाञ्चिदेव सर्वगुणोपासनं न सर्वेषामिति व्यवस्थेत्यर्थः । अदृष्टिः नियतिः ॥ **न चात्रेति** ॥ प्रमाणं चेत्यन्वयः । 'अथानन्दस्य मीमांसा'इत्यानन्दतारतम्यश्रुतिरेव तत्र प्रमाणमित्यत आह ॥ **आनन्दश्रुतिरिति** ॥

ॐ यावदधिकारमवस्थितिराधिकारिकाणां ॐ ॥ आधिकारिकाः ब्रह्मादिजीवविशेषाः । तेषां यावदधिकारमधिकारानुसारेणैव मुक्ताववस्थितिः तारतम्येनावस्थानम् । न तूपासनाप्रयत्नतारतम्येनेत्यर्थः । ननु वसिष्ठसाम्यं समभीप्समानं प्रच्यावयन्निच्छया शापमापेत्यादिना माण्डव्यादीनां अधिकाराधिकप्रयत्नदर्शनात्कथमेतदित्यत आह ॥ **कथञ्चिदिति** ॥ यमं प्रति शापप्रदानादिरूपो विघ्नो भवतीत्यर्थः । वचनात् न्यायविवरणे ।

## सूत्रभाष्यम्

**॥ ॐ अक्षरधियां त्वविरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ॐ ॥ ३४ ॥**

न चासमत्वेन विरोधो भवति । ब्रह्मधीत्वा (ब्रह्माधीनत्वात्. पा) द्दोषाभाव-साम्यादुत्तमेभ्योऽन्येषां भावाच्च । औपसदवच्छिष्यवत् (सच्छिष्यवत्) । उक्तं च तुरश्रुतौ—

'नानाविधा जीवसङ्घा विमुक्तौ न चैव तेषां ब्रह्मधियां विरोधः ।
दोषाभावाद्गुरुशिष्यादिभावाल्लोकेऽपि नासौ किमु तेषां विमुक्तेः इति ॥

## तत्त्वप्रदीपिका

मुक्तावानन्दादिगुणतारतम्याभ्युपगमे नीचोच्चानां सहावस्थायिनां मत्सरानादरादिभिः परस्पर-विरोधः स्यादित्यत आह– **अक्षरधियामित्यादिसूत्रम्** ॥ अक्षयगुणगणधाम्नि परमानन्दरूपे परमाश्चर्यरूपे यथेष्टानन्दभोजके भगवति स्थितधियां कुतोऽसमत्वेऽपि विरोधः । रागद्वेषादि-दोषाभावसाम्याच्च । अन्यथा ब्रह्मदर्शनमेव न स्यात् । रागमत्सरादिव्यपोहेन बहुजन्मसु निरन्त-रोपासकानां हि तद्भवति । यैश्च मत्सराद्विरोध आशङ्क्यते तेभ्य एवावरेषां ज्ञानानन्दादिगुणभावाच्च तत्रोत्कर्षो हर्षमाधत्ते । सच्छिष्यवत् ॥

## तत्त्वप्रकाशिका

ननु मुक्तावानन्दतारतम्यमेव नोपपद्यते । असमत्वे मुक्तानां परस्परविरोधप्राप्तेः । लोके तथा दर्शनात् । श्रुतयस्तु संसारिविषया इत्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे ॥ **अक्षरेति** ॥ न मुक्तानामसमत्वेऽपि विरोधः । विरोधे विषयलम्पटत्वमत्सरादिदोषित्वानुपकारित्वानां प्रयोज-कत्वात् । न चैतानि मुक्तेषु विद्यन्ते । तेषां ब्रह्मधीत्वान्निर्दोषत्वात्परस्परोपकारित्वाच्चेति भावः । ननु विरोधिष्वसाम्यं विषयलम्पटत्वादि च दृश्यते तत्कथं निश्चिनुमो दोषनिबन्धन एव विरोधो न त्वसाम्यनिमित्त इति तत्राह ॥ **औपसदवदिति** ॥ दोषासमत्वयोः क्वचिद्विरोधिषु समावेशेऽपि दोषाणामेव विरोधप्रयोजकत्वनिश्चयो युज्यते । असमयोरपि गुरुशिष्ययोर्दोषाभावेन विरोधा-भावदर्शनात् । अन्यथा तत्र व्यभिचार इति भावः । अत्र श्रुतिं चाह ॥ **उक्तं चेति** ॥ अत एवानन्दश्रुतेरमुक्तविषयत्ववर्णनं प्रत्युक्तम् । तथा च स्मृतिः । 'नरादिब्रह्मपर्यन्तं विमुक्तानां

(तत्त्वप्रकाशिका)

शतोच्छ्रयः । **अप्यानन्दे मिथोऽप्युक्तस्त्वध्वर्यूणां श्रुतौ पृथक्' इति । तस्मादुपासनाधिकारे नियमादुक्तमुपपन्नमिति सिद्धम् ।**

## भावबोधः

**ब्रह्मधीत्वादिति** । ब्रह्मज्ञानस्य विषयवैराग्यजन्यत्वेन तेषां विषयलम्पटत्वासम्भव इत्यर्थः । तथा च अक्षरधियामित्येतद्धेत्वर्थगर्भविशेषणमिति भावः । गुरुशिष्यादिभावादिति श्रुत्यनुसारेण उत्तमेभ्योऽन्येषां भावादिति भाष्यं व्याचष्टे– **परस्परोपकारित्वाच्चेति** । **अत एवेति** । बाधकस्य परिहृतत्वादेवेत्यर्थः । बाधकाभावमात्रेण मुक्तपरत्वनिर्णयाभावात् साधकं किमित्यत आह– **तथा चेति** ॥ अत्राद्ये अधिकारतारतम्ये फलतारतम्यरूपहेतूक्तिः । द्वितीये बाधकोद्धारेण हेत्वसिद्धि-परिहार इति सूत्रक्रमः ।

## भावदीपः

प्रागुक्तशङ्कामेवानुवदति ॥ **नन्विति** ॥ **श्रुतयंस्त्विति** ॥ अत्रोक्ताः प्रागुक्तास्तत्सदृशा अन्याश्चेत्यर्थः । स्मृतिस्तु युक्तिविरोधाज्जीवन्मुक्त्यादिपरेति भावः । न चेत्यादिभाष्यं व्याचष्टे ॥ **न मुक्तानामिति** ॥ भाष्योक्तहेतूनामप्रयोजकत्वशङ्कानिरासाय विरोधप्रयोजकाभावोपपादकतया व्याचष्टे ॥ **विरोध इत्यादिना** ॥ **ब्रह्मधीत्वादिति** ॥ दोषित्वे तदेव न स्यात् । रागमत्सरादित्यागेन बहुजन्मसु निरन्तरोपासकानामेव ब्रह्मदर्शनोपपत्तेरिति भावः ॥ **परस्परेति** ॥ एतेन भाष्ये अन्येषां भावाच्चेत्यत्र ज्ञानादिगुणरूपोपकारस्येति शेषः सूचितः । दृष्टान्तोक्तेरुपयोगं व्यनक्ति ॥ **नन्वित्यादिना** ॥ तात्पर्योक्त्या शङ्कां निराह ॥ **दोपासमत्वयोरिति** ॥ **अत्रेति** ॥ दोषित्वमेव विरोधे प्रयोजकम् । न त्वसमत्वं व्यभिचारात् । तच्चेह नेत्यविरोध एवेत्यस्मिन्नर्थ इत्यर्थः ॥ **श्रुतिं चेति** ॥ न केवलं ब्रह्मधीत्वादियुक्तिरिति चार्थः ॥ **अत एवेति** ॥ स्पष्टश्रुतिसमाख्याना-द्बाधकाभावादेव चेत्यर्थः । कस्य कस्य कियानधिकार इत्यत आनन्दश्रुतेर्मुक्तपरत्वाय प्रथमाध्याय-बृहद्भाष्योक्तहरिवंशस्पष्टस्मृतिं चाह ॥ **तथा चेति** ॥ शतोच्छ्रय इत्यनन्तरं निःशेषदोषहीनानां नित्यानन्दैकभोगिनाम् इत्यर्धस्य प्रकृतानुपयोगादनुक्तिः ॥ **अध्वर्यूणामिति** ॥ सैषानन्दस्य मीमांसा इति तैत्तिरीयश्रुतावित्यर्थः । फलोक्त्या सूत्रद्वयार्थमुपसंहरति ॥ **तस्मादिति** ॥ निर्बाधप्रमाणसिद्ध-मुक्ततारतम्यस्य प्राक्तनयोग्यतातारतम्यनिमित्तकत्वादित्यर्थः ॥ **उक्तमिति** ॥ प्राप्तेश्चेत्यादिनोक्त-मित्यर्थः ।

## अभिनवचन्द्रिका

**विरोध इति ॥** विरोधे द्वेषेर्ष्यादौ स्वविषये परस्य परविषये स्वस्य वा लंपटत्वम्, तथा स्वस्य परोत्कर्षप्रयुक्तचित्ततोदः परस्य स्वेष्टविघातित्वरूपाऽपराधित्वं चेत्येतानि प्रयोजकानि । एतेषामनुपकारित्वं सहकारि । विषयलाम्पट्यादिसद्भावेऽपि उपकारिणि विद्वेषादर्शनादिति विवेकः ॥ **तेषामिति ॥** मुक्तानां ब्रह्मज्ञानित्वेन अवाप्तकामत्वात् परस्परविषयलम्पटत्वाभावः । अविद्यादुःखादिदोषाभावात् मात्सर्यापकारित्वाद्यभावः । परस्परोपकारित्वस्य प्रमाणसिद्धत्वेन अनुपकारित्वलक्षणसहकारिणोऽप्यभाव इति भावः । एतेन पूर्वपक्षिणा द्वेषेर्ष्यादेरापादितत्वात् विरोधमात्रनिराकरणेन सिद्धान्ताभिधानमयुक्तम् । तथा मत्सरादिदोषाभावोपपादनाय निर्दोषत्वाभिधानमयुक्तम् । साध्यावैशिष्ट्यात् । तत एव अनुपकारित्वाभावोपपादनाय परस्परोपकारित्वादित्यभिधानमयुक्तम् । अनुपकारित्वाभावस्योपकारित्वरूपत्वादिति परास्तम् ।

पूर्वपक्षस्तु- नोपासनावन्तोऽधिकारनियमवन्तः प्रमाणाभावात् । न च मुक्तौ आनन्दतारतम्यान्यथानुपपत्तिः प्रमाणमिति वाच्यम् । तारतम्यस्य प्रामाणिकत्वेऽपि उपासनाप्रयत्नतारतम्येनैवाऽन्यथासिद्धेः । वस्तुतस्तु तारतम्यमेव नास्ति । तत्प्रमाणस्य संसारिपरत्वात् । मुक्तौ तारतम्याङ्गीकारे द्वेषेर्ष्यादिप्रसक्तेश्च । अत उपास्त्यधिकारनियमाभावात् 'प्राप्तेश्च समञ्जसम्' इत्याद्ययुक्तमिति ।

सिद्धान्तस्तु- अस्त्येव नियमः । अयमेतद्गुणोपासने योग्योऽयं तु नेति । तेन विना श्रुत्युक्तानन्दतारतम्यस्य कथमप्ययोगात् । न चोपासनाप्रयत्नतारतम्येनैवोपपत्तिः । प्रयत्नतारतम्यस्यापि योग्यतातारतम्याधीनत्वात् । तदुक्तम् 'अधिकाराधिको यत्नः प्रायशो नोपपद्यते । कथंचिदधिके यत्ने दोषः कश्चित्समापतेत्' इति । न च विरोधप्रसङ्गः । विरोधे हि विषयलांपट्यं, मात्सर्यादयो, अनुपकारित्वं, चेति हेतवः । न च ते मुक्तेषु सम्भवन्ति । ब्रह्मधीत्वात्, निर्दोषत्वाच्च । अनुपकारित्वमपि नास्ति । प्रतियोगिसत्त्वस्य प्रमाणासिद्धत्वात् । तस्मादुपासनाधिकारे नियमात् उक्तमुपपन्नमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

**विरोधापत्तेरिति ॥** कलहेन वध्यघातुकभावादिविरोधापत्तेरित्यर्थः । सूत्रे तुशब्दश्चशब्दार्थे । न केवलं तारतम्यमनन्यथासिद्धं विरोधश्च । तदङ्गीकारे विरोधश्च न इति तदर्थः । यावदधिकारमवस्थित्येत्यनुवर्तते । तस्यार्थो भाष्ये समत्वेनेति । गतावाधिकारिकाणामित्यप्यनुवर्तते । तथा च मुक्तावाधिकारिकाणां ब्रह्मादीनामसमत्वेन तारतम्येनाङ्गीकृते न निमित्तेन परस्परं वध्यघातुकभावादिविरोधश्च नास्तीति सूत्रार्थमभिप्रेत्याह ॥ **न मुक्तानामिति** ॥ कुतो नेत्यत आह ॥ **विरोध इति** ॥ विषयलम्पटत्वं रागातिरेकः मात्सर्यं न मद्वशोऽसाविति चित्ततोदः । तदुक्तं सङ्ग्रहरामायणे 'न मद्वशोऽसाविति चित्ततोदं मात्सर्यमार्याः प्रवदन्ति' इति । आदिपदेन द्वेषेर्ष्यासन्तापपरेष्टप्रतिघातेच्छाप्रयत्नेच्छाद्याः तन्मूलकारणाविद्याश्च सुधोक्ताः गृह्यन्ते ।

यद्यपि कामस्यापि दोषत्वात् मत्सरादिदोषित्वात् पृथग्विषयलम्पटत्वस्य प्रयोजकत्वोक्तिरनुपपन्ना । तथापि 'काम एष क्रोध एष रजोगुणसमुद्भवः' इत्युक्तरीत्या कामस्यातिवैरत्वात् 'रसोऽप्यस्य परं दृष्ट्वा निवर्तते' इति ब्रह्मज्ञानैकनाश्यत्वात् पृथगुपादानम् । प्रयोजकत्वादिति विषयातिशयवत् सुविषयलम्पटानां स्वेषां तदलाभेनैतेषु मात्सर्येण तेषां तदवमता स्यादित्यवमतबुद्धिरूपद्वेषेण तत्रातिशयासहनरूपे द्वेषेर्ष्यासन्तापेन तदिष्टप्रतिघातेच्छाप्रयत्नाभ्यां ममायमनुपकारीति बुद्ध्या च परस्परप्रहारवधादिरूपविरोधो भवतीति तेषां विरोधव्यापकत्वादित्यर्थः । ततश्च किमित्यतो व्यापकभावोपपादनाय अक्षरधियां सामान्यभावाभ्यामित्युक्तम् । तत्राक्षरधियामित्येतद्धेतुगर्भविशेषणमिति भावेन ब्रह्मधीत्वादित्युक्तम् । सामान्यं साम्यम् । प्रकरणाद्दोषाभावस्येति लक्ष्यते । एकस्य दोषित्वेऽपि विरोधो भवत्येवेत्यतो दोषाभावादिति वाच्ये साम्यादित्यधिकोक्तिः । सर्वेषामपि दोषाभावादित्यर्थः । तदुक्तमनुव्याख्याने । दोषाभावश्च सर्वश इत्यादि । तत्र ब्रह्मधीत्वं विषयलम्पटाभावसूचकम् । विरक्तानामेव च ज्ञानम् इति गीताभाष्योक्तेः । विषयवैराग्याभावे ज्ञानस्यैवानुदयात् ब्रह्मज्ञानेन सुतरां तन्निवृत्तेः । 'रसोऽप्यस्य परं दृष्ट्वा निवर्तते' इत्युक्तेः । सामान्यपदोक्तमात्सर्यादिदोषाभावं प्रत्युपपादकं च । मात्सर्यादित्यागाभावे ज्ञानानुदयेन साक्षात्कारात्प्रागेव प्राचुर्येण नाशस्य तदनन्तरं तन्मूलभूताविद्यया साकं नाशस्य मुक्तौ च बाह्यान्तःकरणरूपोपाधेरेवापगतत्वात् प्रारब्धवशेन प्राप्तस्येशतोऽप्यनवशेषस्य वक्तव्यत्वात् ।

(वाक्यार्थमुक्तावली)

तदुक्तमनुव्याख्याने 'निश्शेषगतदोषाणां बहुभिर्जन्मभिः पुनः । स्यादापरोक्ष्यं हि हरेः द्वेषेर्ष्यादिस्ततः कुतः' इति । तद्भावादित्यत्र तदिति तन्त्रम् । तेभ्यस्तेषां तस्य भावादिति । तेभ्यो मात्सर्यादिविषयतया प्रसञ्जितेभ्य उत्तमेभ्यस्तेषामवराणां तस्य प्रकृतब्रह्मज्ञानादिलक्षणोपकारस्य भावादिति भावेन भाष्ये उत्तमेभ्योऽन्येषां भावाच्चेत्युक्तमिति भावेन व्याचष्टे ॥ **न चैतानी-त्यादिना** ॥ औपसदवदित्यत्रोपसदेवौपसदः । स्वार्थेऽण् प्रत्ययः । षष्ठ्यर्थे च वतिः । शिष्यस्य गुराविवाविरोध इत्यर्थं मनसि निधाय भाष्ये औपसदवच्छिष्यवदित्युक्तम् । तद्व्यावर्त्यशङ्कापूर्वं व्याचष्टे ॥ **नन्वित्यादिना** ॥ यद्यपि भाष्यकोशेषु सच्छिष्यवदिति पाठो दृश्यते । तथापि सुधायां शिष्यवदित्येव पाठस्योपात्तत्वात् तदनुसारेणास्माभिर्व्याख्यातम् । यद्वौपसदवदित्यत्र आ आ इत्याङ्द्वयम् । उपसीदतीति उपसीदः । समासान्तोऽकारप्रत्ययः । आ उपसदः ओपसदः । आ ओपसदः औपसद इति गुणो वृद्धिश्च । आङ्द्वयेन च शिष्यस्य सत्वं लभ्यते । अत एवानुव्याख्याने 'अतस्सच्छिष्यवत्तेषां नैवेर्ष्यादिः कथञ्चन इत्युक्तम्' इति ज्ञेयम् ॥ **अत्र श्रुतिं चेति** ॥ उपपत्तिसिद्धेऽर्थे श्रुतिं चेत्यर्थः । तेन तच्चोक्तमिति भाष्ये तदुक्तं चेत्यर्थः । सूत्रे चार्थस्तु-शब्दः । तदित्यनेनापि सम्बद्ध्यत इत्युक्तं भवति ॥ **अत एवेति** ॥ बाधकस्य परिहृतत्वादे-वेत्यर्थः । यद्वा 'जीवसङ्घा विमुक्तौ नानाविधास्तारतम्योपेताः' इति स्पष्टश्रुतिसद्भावादेवेत्यर्थः । गुरुशिष्यादिसद्भावादित्यादिपदेन स्वामिभृत्यभावो लभ्यते । एतच्च तत्त्वप्रदीपवाक्योदाहरण-पूर्वकमन्यत्र व्यक्तम् । अध्वर्यूणां याजुषाणाम् । अत्राद्येऽधिकारतारतम्ये फलतारतम्याख्यहेतूक्तिः । द्वितीये बाधकोद्धारेण हेत्वसिद्धिपरिहार इति सूत्रक्रमः ।

## तत्त्वसुबोधिनी

**ब्रह्मधीत्वादिति** ॥ ब्रह्मज्ञानस्य विषयवैराग्यजन्यत्वेन तेषां विषयलम्पटत्वासम्भव इत्यर्थः । तथाचाक्षरधियामित्येतद्धेतुगर्भविशेषणमिति भावः ॥ **अन्यथेति** ॥ असाम्यस्यैव विरोधप्रयोजकत्वे इत्यर्थः ॥ **तत्रेति** ॥ गुरुशिष्ययोरित्यर्थः ॥ **अत एवेति** ॥ बाधकस्य परिहृतत्वादेवेत्यर्थः । बाधकाभावमात्रेण वस्तुनिर्णयाभावात् साधकं किमित्यत आह ॥ **तथा चेति** ॥ अत्राद्ये अधिकारतारतम्ये फलतारतम्यरूपहेतूक्तिः द्वितीये बाधकोद्धारेण हेत्वसिद्धिपरिहार इति सूत्रक्रमः ।

## वाक्यार्थमुक्तावली

**विरोधापत्तेरिति ॥** कलहेन वध्यघातुकभावादिविरोधापत्तेरित्यर्थः । सूत्रे तुशब्दश्चशब्दार्थे । न केवलं तारतम्यमनन्यथासिद्धं विरोधश्च । तदङ्गीकारे विरोधश्च न इति तदर्थः । यावदधिकारमवस्थित्येत्यनुवर्तते । तस्यार्थो भाष्ये समत्वेनेति । गतावाधिकारिकाणामित्यप्यनुवर्तते । तथा च मुक्तावाधिकारिकाणां ब्रह्मादीनामसमत्वेन तारतम्येनाङ्गीकृते न निमित्तेन परस्परं वध्यघातुकभावादिविरोधश्च नास्तीति सूत्रार्थमभिप्रेत्याह **॥ न मुक्तानामिति ॥** कुतो नेत्यत आह **॥ विरोध इति ॥** विषयलम्पटत्वं रागातिरेकः मात्सर्यं न मद्वशोऽसाविति चित्ततोदः । तदुक्तं सङ्ग्रहरामायणे 'न मद्वशोऽसाविति चित्ततोदं मात्सर्यमार्याः प्रवदन्ति' इति । आदिपदेन द्वेषेर्ष्यासन्तापपरेष्टप्रतिघातेच्छाप्रयत्नेच्छाद्याः तन्मूलकारणाविद्याश्च सुधोक्ताः गृह्यन्ते ।

यद्यपि कामस्यापि दोषत्वात् मत्सरादिदोषित्वात् पृथग्विषयलम्पटत्वस्य प्रयोजकत्वोक्तिरनुपपन्ना । तथापि 'काम एष क्रोध एष रजोगुणसमुद्भवः' इत्युक्तरीत्या कामस्यातिवैरत्वात् 'रसोऽप्यस्य परं दृष्ट्वा निवर्तते' इति ब्रह्मज्ञानैकनाश्यत्वात् पृथगुपादानम् । प्रयोजकत्वादिति विषयातिशयवत् सुविषयलम्पटानां स्वेषां तदलाभेनैतेषु मात्सर्येण तेषां तदवमता स्यादित्यवमतबुद्धिरूपद्वेषेण तत्रातिशयासहनरूपे द्वेषेर्ष्यासन्तापेन तदिष्टप्रतिघातेच्छाप्रयत्नाभ्यां ममायमनुपकारीति बुद्ध्या च परस्परप्रहारवधादिरूपविरोधो भवतीति तेषां विरोधव्यापकत्वादित्यर्थः । ततश्च किमित्यतो व्यापकभावोपपादनाय अक्षरधियां सामान्यभावाभ्यामित्युक्तम् । तत्राक्षरधियामित्येतद्धेतुगर्भविशेषणमिति भावेन ब्रह्मधीत्वादित्युक्तम् । सामान्यं साम्यम् । प्रकरणाद्दोषाभावस्येति लक्ष्यते । एकस्य दोषित्वेऽपि विरोधो भवत्येवेत्यतो दोषाभावादिति वाच्ये साम्यादित्यधिकोक्तिः । सर्वेषामपि दोषाभावादित्यर्थः । तदुक्तमनुव्याख्याने । दोषाभावश्च सर्वश इत्यादि । तत्र ब्रह्मधीत्वं विषयलम्पटाभावसूचकम् । विरक्तानामेव च ज्ञानम् इति गीताभाष्योक्तेः । विषयवैराग्याभावे ज्ञानस्यैवानुदयात् ब्रह्मज्ञानेन सुतरां तन्निवृत्तेः । 'रसोऽप्यस्य परं दृष्ट्वा निवर्तते' इत्युक्तेः । सामान्यपदोक्तमात्सर्यादिदोषाभावं प्रत्युपपादकं च । मात्सर्यादित्यागाभावे ज्ञानानुदयेन साक्षात्कारात्प्रागेव प्राचुर्येण नाशस्य तदनन्तरं तन्मूलभूताविद्यया साकं नाशस्य मुक्तौ च बाह्यान्तःकरणरूपोपाधेरेवापगतत्वात् प्रारब्धवशेन प्राप्तस्येशतोऽप्यनवशेषस्य वक्तव्यत्वात् ।

**(वाक्यार्थमुक्तावली)**

तदुक्तमनुव्याख्याने 'निश्शेषगतदोषाणां बहुभिर्जन्मभिः पुनः । स्यादापरोक्ष्यं हि हरेः द्वेषेर्ष्यादिस्ततः कुतः' इति । तद्भावादित्यत्र तदिति तन्त्रम् । तेभ्यस्तेषां तस्य भावादिति । तेभ्यो मात्सर्यादिविषयतया प्रसञ्जितेभ्य उत्तमेभ्यस्तेषामवराणां तस्य प्रकृतब्रह्मज्ञानादिलक्षणोपकारस्य भावादिति भावेन भाष्ये उत्तमेभ्योऽन्येषां भावाच्चेत्युक्तमिति भावेन व्याचष्टे ॥ **न चैतानी-त्यादिना** ॥ औपसदवदित्यत्रोपसदेवौपसदः । स्वार्थेऽण् प्रत्ययः । षष्ठ्यर्थे च वतिः । शिष्यस्य गुराविवाविरोध इत्यर्थं मनसि निधाय भाष्ये औपसदवच्छिष्यवदित्युक्तम् । तद्व्यावर्त्यशङ्कापूर्वं व्याचष्टे ॥ **नन्वित्यादिना** ॥ यद्यपि भाष्यकोशेषु सच्छिष्यवदिति पाठो दृश्यते । तथापि सुधायां शिष्यवदित्येव पाठस्योपात्तत्वात् तदनुसारेणास्माभिर्व्याख्यातम् । यद्वौपसदवदित्यत्र आ आ इत्याङ्द्वयम् । उपसीदतीति उपसीदः । समासान्तोऽकारप्रत्ययः । आ उपसदः ओपसदः । आ ओपसदः औपसद इति गुणो वृद्धिश्च । आङ्द्वयेन च शिष्यस्य सत्वं लभ्यते । अत एवानुव्याख्याने 'अतस्सच्छिष्यवत्तेषां नैवेर्ष्यादिः कथञ्चन इत्युक्तम्' इति ज्ञेयम् ॥ **अत्र श्रुतिं चेति** ॥ उपपत्तिसिद्धेऽर्थे श्रुतिं चेत्यर्थः । तेन तच्चोक्तमिति भाष्ये तदुक्तं चेत्यर्थः । सूत्रे चार्थस्तु-शब्दः । तदित्यनेनापि सम्बद्ध्यत इत्युक्तं भवति ॥ **अत एवेति** ॥ बाधकस्य परिहृतत्वादे-वेत्यर्थः । यद्वा 'जीवसङ्घा विमुक्तौ नानाविधास्तारतम्योपेताः' इति स्पष्टश्रुतिसद्भावादेवेत्यर्थः । गुरुशिष्यादिसद्भावादित्यादिपदेन स्वामिभृत्यभावो लभ्यते । एतच्च तत्त्वप्रदीपवाक्योदाहरण-पूर्वकमन्यत्र व्यक्तम् । अध्वर्यूणां याजुषाणाम् । अत्राद्येऽधिकारतारतम्ये फलतारतम्याख्यहेतूक्तिः । द्वितीये बाधकोद्धारेण हेत्वसिद्धिपरिहार इति सूत्रक्रमः ।

## तत्त्वसुबोधिनी

**ब्रह्मधीत्वादिति** ॥ ब्रह्मज्ञानस्य विषयवैराग्यजन्यत्वेन तेषां विषयलम्पटत्वासम्भव इत्यर्थः । तथाचाक्षरधियामित्येतद्धेतुगर्भविशेषणमिति भावः ॥ **अन्यथेति** ॥ असाम्यस्यैव विरोधप्रयोजकत्वे इत्यर्थः ॥ **तत्रेति** ॥ गुरुशिष्ययोरित्यर्थः ॥ **अत एवेति** ॥ बाधकस्य परिहृतत्वादेवेत्यर्थः । बाधकाभावमात्रेण वस्तुनिर्णयाभावात् साधकं किमित्यत आह ॥ **तथा चेति** ॥ अत्राद्ये अधिकारतारतम्ये फलतारतम्यरूपहेतूक्तिः द्वितीये बाधकोद्धारेण हेत्वसिद्धिपरिहार इति सूत्रक्रमः ।

## वाक्यार्थविवरणम्

**असमत्वे** तारतम्ये । तथा च मुक्ताः परस्परविरोधवन्तः, असमत्वाल्लौकिकपुरुष-वदित्यनुमानमुक्तं भवति । तर्ह्यानन्दतारतम्यप्रतिपादकश्रुतीनां का गतिरित्यत आह ॥ **श्रुतयस्त्विति** ॥ **विरोधे विषयलम्पटत्वेऽपि** ॥ तथा च विषयलम्पटत्वादिदोषवत्त्वमुपाधि-रित्युक्तं भवतीति ज्ञेयम् । उपाधेः साधनव्यापकत्वमाशङ्क्य निषेधति ॥ **न चेति** ॥ कुत इत्यत आह– **तेषामित्यादि** ॥ 'उत्तमेभ्योऽन्येषां भावाच्च' इत्यस्यार्थः– **परस्परेति** ॥ एवं श्रुतावपि गुरुशिष्यभावादित्यस्य गुरुत्वशिष्यत्वाभ्यां परस्परोपकारित्वभावादित्यर्थो द्रष्टव्यः । तथा च ब्रह्मधीत्वादिना पक्षे दोषाभावनिश्चयेन साधनाव्यापकत्वनिश्चय इति भावः । विरोधिषु दृष्टान्तीभूतविरोधवल्लौकिकपुरुषेषु ॥ **दोषेति** ॥ दोषरूपोपाधीत्यर्थः ॥ **असाम्येति** ॥ तद्रूपहे-त्वित्यर्थः । **प्रयोजकत्वनिश्चयः** उपाधित्वनिश्चयः । असमयोरपीत्युक्त्या विरोधेऽसाम्यस्या-प्रयोजकत्वमुक्तमिति ध्येयम् । **दोषाभावेनेति** ॥ तथा च दोषस्यैव विरोधे प्रयोजकत्वमिति हृदयम् । **अन्यथेति** । विरोधे असाम्यस्यैव प्रयोजकत्वे ॥ **तत्रेति** ॥ विरोधशून्यगुरुशिष्ययोर-साम्यहेतौ व्यभिचार इत्यर्थः । अत्र भाष्ये शिष्यवदिति व्याख्यानमयुक्तम् । क्वचिच्छिष्याणामपि गुरौ द्वेषदर्शनादिति चेत् । सत्यम् । सच्छिष्यवदित्यभिप्रेतत्वात् । यथोक्तमनुव्याख्याने– 'अतस्सच्छिष्यवत्तेषां नैवेर्ष्यादि कथञ्चन' इति । अत एव द्वेषेर्ष्यादिप्रसङ्गरूपबाधकस्य परिहृत-त्वादेव । अध्वर्यूणां श्रुतौ तैत्तरेयशाकायाम् । भाष्ये 'विमुक्तेः' विमुक्तत्वादित्यर्थः ।

## वाक्यार्थमञ्जरी

अक्षरधियां ब्रह्मज्ञानिनां चतुर्मुखादीनां तु असमत्वेऽप्यविरोधः परस्परं विरोधो नास्ति, कुतः ब्रह्मज्ञानित्वादेव । किञ्च सामान्यतद्भावाभावाभ्यां सामान्यात् मत्सरादिदोषाभावसाम्यात् । तथा तद्भावात् तदिति तन्त्रं तेभ्यः उत्तमेभ्यः तस्य ज्ञानोपदेशाख्योपकारस्य तेषां नीचानां भावात् सत्वात् कथं औपसदवत् शिष्यवत् कुतः तदुक्तं तत् असमत्वेऽपि विरोधाभाव इत्येतत् नानाविधा इति श्रुत्युक्तमित्यर्थः ॥ **ब्रह्मधीत्वादिति** ॥ ब्रह्मज्ञानस्य विषयवैराग्यजन्यत्वेन तेषां विषय-लम्पटत्वासम्भव इत्यर्थः । अन्यथा समत्वस्यैव प्रयोजकत्वे ॥ **अत एवेति** ॥ बाधकस्य परिहृतत्वादेवेत्यर्थः । कथं बाधकाभावमात्रेण मुक्तपरत्वनिर्णय इत्यत आह ॥ **तथा चेति** ॥ अध्वर्यूणां श्रुतौ नरादिब्रह्मपर्यन्तं मुक्तानामानन्दो मिथः शतोच्छ्रयः पृथक्पृथगित्यन्वयः ॥

॥ इति यावदधिकरणम् ॥ २१ ॥

## २१. इयदामननाधिकरणम्

॥ ॐ इयदामननात् ॐ ॥ ३५ ॥

नामाद्यारभ्य प्राणान्तमुत्तरोत्तरमुत्तमत्वमुक्तम् । न प्राणात्किञ्चिद्भूय उक्तम् । तथाऽपि पूर्ववत्स्यादि(दपी)ति न वाच्यम् । 'प्राणो वाव सर्वेभ्यो भूयान्न हि प्राणाद्भूयान्प्राणो ह्येव भूयांस्तस्माद्भूयान्नाम' इति कौण्ठरव्यश्रुतेः ।

### तत्त्वप्रदीपिका

अवसितः प्रासङ्गिको मुक्तविषयो विचारः । इदानीमधिकारितारतम्यस्य विश्रान्तिस्थानमाह– इयदामननात् ॥ नामवाङ्मनःसङ्कल्पचित्तध्यानविज्ञानबलान्नापेजाऽकाशस्मराशाप्राणा नामादि-प्राणान्ताः । तत्र चोक्तमनुव्याख्याने–

'उपा स्वाहा च पर्जन्यो मित्रोऽग्निर्वरुणो विधुः ।
प्रवहोऽनिरुद्ध इन्द्रोमे रुद्रो वाणी च मारुतः ।
उत्तरोत्तरतस्त्वेते गुणैः सर्वैश्च मुक्तिगाः' इत्यादि बृहत्संहितावचनम् ।

'इन्द्रादनन्तरः प्राण आहङ्कारिकः' इति च । 'वाग्वाव नाम्नो भूयसी' 'मनो वाव वाचो भूयः' 'सङ्कल्पो वाव मनसो भूयान्' इत्यारभ्य प्राणान्तमुत्तरेषामुत्तमत्वमुक्तं छन्दोगश्रुतौ । न च तथा तत्र प्राणात्किञ्चिद्भूय उक्तम् । तथाऽपि पूर्ववत्स्याच्चेत्किं निवारकम् । न ह्यत्रानुक्तिरभावे प्रमाणम् । प्रमाणान्तरेण तत्सद्भावसम्भवादिति न वाच्यम् । श्रुत्यन्तरे प्राणादुत्तमोऽन्यो नास्तीत्यामननात् ।

### तत्त्वप्रकाशिका

अत्र ब्रह्मज्ञानसाधनोपासनाधिकारिणां प्राणावधित्वसमर्थनादस्ति शास्त्रादिसङ्गतिः । निरवधि-कत्वे ब्रह्मण एव सर्वगुणोपास्तियोग्यत्वं न स्यादतस्तत्समर्थनीयम् । ये भगवदुपासकाः प्रकृतास्त एव च्छन्दोगश्रुतौ नामादिप्राणपर्यन्तं तारतम्येनोक्ताः प्राणादुत्तमो नोक्तः । त एवोपासनाधिकारिणो विषयः । किं प्राणावसाना न वेति सन्देहः । अनुक्तेरुभयथापि दर्शनं सन्देहबीजम् । नाधिकारिणः प्राणावसाना इति पूर्वः पक्षः । नामादीनां सोत्तरत्वदर्शनात्प्राणादप्युत्तमाधिकारिसाधनसौलभ्यात् प्राणः स्वोत्तमाधिकारियुक्तः । अधिकारित्वान्नामादिवदिति । यद्यपि छन्दोगश्रुतौ नामाद्यारभ्य

(तत्त्वप्रकाशिका)

**प्राणान्तमुत्तरोत्तरमाधिक्यमुक्त्वा प्राणादुत्तमो नोक्तः । तथाप्यनुमानेन प्राणादप्युत्तमाङ्गीकारे न दोषः । प्रमाणादनुक्तेर्दुर्बलत्वात् । अतोऽधिकारिणां प्राणावसानत्वाभावाद्धिरण्यगर्भ एव सर्वगुणोपास्तियोग्य इत्ययुक्तमिति । सिद्धान्तयत्सूत्रं पठित्वा व्याचष्टे ॥ इयदिति ॥ नामादिवत्प्राणादधिकोऽधिकारी न साध्यः । किं त्वियदेवाधिकारिणां प्राणावसानत्वमेव । 'प्राणो वाव सर्वेभ्यो भूयान्' इति श्रुतेरिति भावः ॥**

## गुर्वर्थदीपिका

ननु महतां गणनापङ्क्तौ स्यादपि कस्यचिदश्रद्धेयस्यानुक्तिः । सर्वाधिकारिभ्योऽप्युत्तमस्यावश्यापेक्षितस्य कथमनुक्तिः । तस्मात्प्रकृतेऽनुक्तिरेव बलीयसीति चेत्सत्यम् । परमाप्ततमेन व्यासेनैव सर्वोत्तमत्वस्थापकतयाऽत्यावश्यकस्य हरेः कैलासगमनं लीलेत्यर्थस्यासुरजनमोहनार्थमनुक्तिदर्शनेन सति कस्मिंश्चित्कारणे उत्तमस्याप्यनुक्तिसम्भवादिति भावेनोक्तं अनुक्तेर्दुर्बलत्वादिति ।

## भावबोधः

**अधिकारिणामिति ॥** 'यावदधिकारं' इत्यधिकारतारतम्येऽभिहिते तत्र निरवधिकत्वसावधिकत्वसंशये प्राणावसानत्वरूपसावधिकत्वसमर्थनात् अनन्तरसङ्गतिरिति भावः ॥ **किमित्यादि ॥** अत्रोपासनाधिकारिणः प्राणावसाना न भवन्त्युत भवन्तीति चिन्ता । तदर्थं प्राणादुत्तमाधिकारिसद्भावे प्रमाणं नास्त्युतास्तीति । तदर्थं प्राणादप्युत्तमाधिकारिसाधकमनुमानं 'प्राणो वा सर्वेभ्यो भूयान्' इति श्रुतिबाधितं न भवत्युत भवतीति । तदर्थमीश्वरस्य प्राणादुत्तमत्वश्रुत्यविरोधायावश्यं संकोचनीयः सर्वेभ्य इति श्रौतोऽयं सर्वशब्दः कतिपयाधिकारिव्यतिरिक्तसर्वार्थक उत ईश्वरमात्रव्यतिरिक्त सर्वार्थक इति । 'अन्तरा भूतग्रामवत्' इति सूत्रानुसारि एकस्मादेको विशिष्टो दृष्ट एवेति प्राणाद्विशिष्टजीवाभावे दृष्टवैरूप्यमिति दोष इति न्यायविवरणं मनसि निधायाह– **नामादीनामिति ॥** इति श्रुतेरिति । उपलक्षणमेतत् । 'यः सर्वमवजानीयां' इत्यादिन्यायविवरणोदाहृता श्रुतिरपि ग्राह्या ।

## भावदीपः

**प्राणावधित्वेति** ॥ प्रागुक्तयोग्यतानियमस्य निरवधिकत्वशङ्कायां सावधिकत्वरूपविशेषचिन्तनात्पूर्वसङ्गतिरिति भावः ॥ **सर्वगुणेति** ॥ 'सर्वे गुणा ब्रह्मणैव ह्युपास्या' इत्यादिश्रुतिसिद्धमिति भावः ॥ **प्रकृता इति** ॥ आधिकारिकाणां मोक्षाधिकारिणामित्यनेन प्रकृता इत्यर्थः ॥ **छन्दोगेति** ॥ सप्तमे ॥ **नामादीति** ॥ नामवाङ्मनःसङ्कल्पचित्तध्यानविज्ञानबलान्नाप्तेज-आकाशस्मराशाप्राणशब्दिताः । 'उषा स्वाहा च पर्जन्यो मित्रोऽग्निर्वरुणो विधुः । प्रवहोऽनिरुद्ध इन्द्रोमे रुद्रो वाणी च मारुत' इत्यनुभाष्योक्तेरुषाप्रभृतिदेवा उत्तरोत्तरमुत्तमत्वेनोक्ता इत्यर्थः । यथा भूतग्रामेत्यादिभाष्यभावमाह ॥ **नामादीनामिति** ॥ ननु प्राणादुत्तमानुक्तिविरोधादनुमानाभासोऽयमित्यत उक्तशङ्कानुवादनिरासपरं नामाद्यारभ्येत्यादिभाष्यं विवृणोति ॥ **यद्यपीति** ॥ पूर्ववत्स्यादिति भाष्याभिप्रेतहेतुमाह ॥ **प्रमाणादनुक्तेर्दुर्बलत्वादिति** ॥ फलोक्त्योपसंहरति ॥ **अत इति** ॥ अधिकस्यानुमानसिद्धत्वादित्यर्थः ॥ **पूर्ववत्स्यादिति** न वाच्यमिति भाष्यं सौत्रप्रतिज्ञाभागस्य फलितार्थपरमिति भावेन व्याचष्टे ॥ **नामादिवदिति** ॥ **प्राणो वावेति** ॥ यद्यपि श्रुतौ न मुख्यप्राणलिङ्गमस्ति तथाऽपि भाष्यकारोक्तिप्रामाण्यात्पूर्वत्रोत्तरत्र वा श्रुतिशेषे मुख्यवायुलिङ्गमनुमेयमिति वा ब्रह्मपरत्वेऽपि ऐतरेयभाष्योक्तदिशा सर्वत्र वायुपरत्वमप्यस्तीति वाऽभिप्रायः ।

## अभिनवचन्द्रिका

**ब्रह्मण एवेति** ॥ ब्रह्मण एव सर्वगुणोपास्तियोग्यत्वमिति यत्प्रागुक्तं तत्र स्यादित्यर्थः ॥ **नामादिवदिति** ॥ नामादिवदिति दृष्टान्तं प्रदर्श्य प्राणादधिकोऽधिकारी न साध्य इत्यर्थः ।

## वाक्यार्थमुक्तावली

**प्राणावधित्वेति** ॥ पूर्वाधिकरणे मनुष्योत्तममारभ्य प्राणान्तमधिकारितारतम्ये कथिते प्राणादप्यधिकः स्यादित्याक्षेपोत्थानादनन्तरसङ्गतिः ॥ **नामादिप्राणेति** ॥ नामवाङ्मनःसङ्कल्पचित्तज्ञानविज्ञानबलान्नाप्तेज आकाशस्मरणप्राणशब्दवाच्याः उषास्वाहापर्जन्यमित्राग्निवरुणविधुप्रवहानिरुद्धाहङ्कारिकप्राणेन्द्रोमारुद्रवाणीमारुतान्ता इत्यर्थः । किमिति । अत्राधिकारिणः प्राणावसाना न भवन्त्युत भवन्तीति चिन्ता । तदर्थं प्राणादप्युत्तमाधिकारिसाधकमनुमानं प्राणो वाव

(वाक्यार्थमुक्तावली)

सर्वेभ्यो भूयानिति श्रुतिबाधितं न भवत्युत भवतीति । तदर्थं सर्वशब्दस्य विष्णाविवान्यत्र सङ्कोच उतासङ्कोच इति । नामाद्यारभ्येति भाष्येऽन्तराभूतग्रामवदिति सूत्रानुसारेण पूर्वपक्षमुद्धाट्य निषेधात् दृष्टवैरूप्यमित्युक्तन्यायप्रदर्शकतया पूर्ववदस्यापीत्यंशं व्याचष्टे । **नामादीनामिति** । ननु भूमनये प्राणाद्भूयसोऽनुक्त्या तस्यैव भूमत्वमित्याक्षेपे सत्यं **भूयसोऽनुक्तिरिति** ॥ तथा तदन्तर्गतस्य हरेर्भूमत्वमित्युक्तत्वात् कथमनुमानेन तदुत्तमाधिकारिसाधनमित्यतः तस्याक्षेपोऽयमिति भावेन भाष्ये नामाद्यारभ्येत्युक्तम् । तत्र तथापीत्यस्यानुसारेणादौ यद्यपीति संयोज्य व्याचष्टे । **यद्यपीत्यादिना** ।

सूत्रेऽधिकारिणामिति वर्तते । अधिकार्युत्तमत्वेन प्रकृतप्राणावधित्वमियदिति परामृश्यत इति भावेन वाच्यमित्यतः परं भाष्येऽध्याहार्यभागं दर्शयन् व्याचष्टे । **किन्त्वित्यादिना** । प्राणाद्येवेति श्रुतिः हि यस्मात् प्राणः सर्वेभ्यो भूयान् तस्माद्भूयान्नामेत्यर्थः । उपलक्षणमेतत् । आमनना-दित्येतदर्थतया यः सर्वमेव जानीयादिति प्रतिक्रियाविधायकश्रुतिरपि भाष्ये द्रष्टव्या । तेन प्रतिक्रियाविरोधश्चेत्युक्तन्यायोऽपि सूत्रभाष्यारूढो भवति । तत्र चशब्देन भाष्योपात्तश्रुतेर्ग्रहणात् । तदुक्तं शङ्कराचार्यैः सम्बन्धदीपिकायाम् । चकाराद्विवरणगतप्रतिक्रियाविरोधादित्यादिशब्दाच्च 'प्राणो वाव सर्वेभ्यो भूयान्' इत्यादिश्रुतिर्गृह्यत इति ।

## तत्त्वसुबोधिनी

**अधिकारिणामिति** ॥ यावदधिकारमित्यधिकारतारतम्येऽभिहिते तन्निरवधिकत्वसावधिकत्व-संशये प्राणावसानत्वरूपसावधिकत्वसमर्थनादनन्तरसङ्गतिरिति भावः ॥ **स्वोत्तमेति** ॥ स्वोत्तमयुक्त इत्येतावन्मात्रसाधने विष्णुरूपोत्तममादाय सिद्धसाधनमुक्तम् ॥ **अधिकारीति** ॥ तथापि प्राणा-दुत्तमाधिकार्यनुक्तेरनुक्तिबाधोऽनुमानस्येत्यत आह ॥ **प्राणादिति** ॥ प्रमाणानुक्त्योर्मध्ये प्रमाणस्य प्रबलत्वादनुमानेन प्राणादुत्तमाधिकारी स्वीकार्य एवेति भावः ।

## वाक्यार्थविवरणम्

निरवधिकत्वे प्राणावसानत्वाभावे ॥ **ब्रह्मण एवेति** ॥ प्राणस्यैव भाविब्रह्मत्वादेवमुक्तम् । एवं च तदुत्तमस्यैवाधिकारिणस्तत्स्यादिति भावः ॥ **उभयथेति** ॥ विद्यमानस्याप्यनुक्तिरविद्यमानत्वा-दप्यनुक्तिर्दृष्टेति भावः ॥ **नोक्त इति** ॥ तथा च तस्यैवाधिकार्युत्तमत्वमिति भावः ॥ **प्रमाणात्** ॥ उक्तानुमानरूपात् ॥ **इत्युक्तमिति** ॥ तदुत्तम एव तद्योग्य इति भावः ।

## वाक्यार्थमञ्जरी

**प्राणावसानत्व इति** ॥ प्राणावधिकत्वेत्यर्थः । निरवधिकत्वे प्राणावधिकत्वाभावे ॥ नामादीति ॥ नामवाङ्मनःसङ्कल्पचित्तज्ञानविज्ञानबलान्नाप्तेज आकाशस्मराशाप्राणाः क्रमेणोत्तम-त्वेनोक्ता इत्यर्थः ॥ उभयथासत्वे सत्वेऽपि ॥ **सोत्तरत्वेति** ॥ सोत्तमत्वेत्यर्थः ।

**ॐ इयदामननात् ॐ** ॥ उपासनाधिकारिणां इयत् प्राणावधिकत्वमेव कुतः आमननात् प्राणो वावेति श्रुतौ तथोक्तत्वादित्यर्थः ।

## सूत्रभाष्यम्

### ॥ ॐ अन्तरा भूतग्रामवदिति चेत्तदुक्तम् ॐ ॥ ३६ ॥

यथा भूतग्राम एकस्मादेक उत्तमोऽस्त्येव, एवं प्राणादपि परमात्मानमन्तरा वियत इति चेन्न । प्राणादुत्तमाभावे प्रमाणमुक्तम् । अन्यत्रोत्तमाभावे न प्रमाणम् । दृश्यते चान्यत्रोत्तमत्वम् ।

## तत्त्वप्रदीपिका

अन्तरेत्यादिसूत्रम् ॥ अनुमानात्प्राणादुपरि परमात्मनोऽर्वाक्कश्चित्सिद्ध्यतीति चेन्न । तदभावे प्रमाणमुक्तम् । तद्विरुद्धमनुमानमाभासः स्यात् । दृष्टान्तभूते भूतग्रामे उत्तमाभावे न प्रमाणम् । दृश्यते च भूतग्राम एकैकस्मादेकैकस्योत्तमत्वम् । उक्तं च नामादिप्राणपर्यन्त उत्तमत्वं श्रुतौ ॥

## तत्त्वप्रकाशिका

उक्तमाक्षिप्य समादधत्सूत्रं पठित्वाऽऽक्षेपांशं तावद् व्याचष्टे ॥ **अन्तरेति** ॥ न प्राणस्य सर्वाधिकार्युत्तमत्वं युक्तम् । भूतसमूहे नामादावेकस्मादेको विशिष्टो दृष्ट एवेति तद्दृष्टान्तेन प्राणादप्युत्तमस्य साधयितुं शक्यत्वात् । न च विष्णोरुत्तमत्वेन सिद्धसाधनम् । परमात्मानं श्रियं च विनोत्तमस्य साध्यत्वात् । यद्येवमपि न प्राणादुत्तमस्तर्हि नामादिभ्योऽप्युत्तमो न स्यादिति भावः । परिहारांशं व्याचष्टे ॥ **नेति** ॥ नानुमानेन प्राणादुत्तमः साध्यः । 'प्राणो वाव सर्वेभ्यो भूयान्' इति प्राणादुत्तमाभावे प्रमाणस्योक्तत्वेनानुमानस्य बाधितविषयत्वादिति भावः । प्राणादुत्तमाभावे नामादेरप्युत्तमो न स्यादधिकारित्वाविशेषादित्यत आह ॥ **अन्यत्रेति** ॥ न

(तत्त्वप्रकाशिका)

**केवलमन्यत्रोत्तमाभावे प्रमाणाभावः किं तु 'वाग्वाव नाम्नो भूयसी' इत्याद्युत्तमसद्भावे प्रमाणं चास्तीत्याह ॥ दृश्यते चेति ॥**

## गुर्वर्थदीपिका

अनुमानस्य बाधितविषयत्वादित्यत्र 'न प्राणाद्भूयान्' इति श्रुत्यैवोत्तमाभावस्य कथितत्वादिहानुक्तिरभावादेव न तु कारणान्तरात् । अतोऽनुक्तिरपि श्रुत्युपबृंहिता प्राणादुत्तमाभावं साधयतीति ज्ञेयम् ।

## भावबोधः

अन्यत्रोत्तमाभावेन प्रमाणमित्यादिभाष्यनिरसनीयं विपक्षे बाधकतर्कमाह– **यद्येवमपि न प्राणादुत्तम इति ॥ प्रमाणं चेति** । तथा च बाधकसाधकाभावलक्षणविशेषसद्भावादविशेषोऽसिद्ध इति भावः ।

## भावदीपः

उक्तमाक्षिप्येत्येतद्व्यञ्जयन् फलोक्तिपूर्वं यथेत्यादि चेदित्यन्तभाष्यं व्याचष्टे ॥ **न प्राणस्येति** ॥ **शक्यत्वादिति** ॥ प्रागुक्तदिशेति भावः । परमात्मानमन्तरेत्युपलक्षणं मत्त्वाह ॥ **परमात्मानं श्रियं च विनेति** ॥ हेतोरप्रयोजकत्वनिरासाय प्राणाद्विशिष्टजीवाभावे दृष्टवैरूप्यमिति न्यायविवरणोक्तं तात्पर्यतो योजयति ॥ **यद्येवमिति** ॥ **तर्हीति** ॥ **अविशेषादिति** भावः ॥ **प्रमाणं चेति** ॥ तथा च साधकबाधकभावाभावरूपविशेषभावादधिकारित्वाविशेषेऽपि वैरूप्यं न दोषायेति भावः ।

## अभिनवचन्द्रिका

**उक्तमाक्षिप्येति** ॥ नाधिकारिणां प्राणावसानत्वं, प्राणः परमेश्वरमन्तरा स्वोत्तमयुक्तः अधिकारित्वात्, नामादिवदित्यनुमानेन प्राणादुत्तमस्य सिद्धत्वात् । न च श्रुतिबाधः । यदि प्राणः स्वोत्तमशून्यः स्यात्तर्ह्युपदेशकाभावेन उपासनाधिकार्येव न स्यादिति तर्कसहकृतत्वेन, श्रुतितो हीनबलत्वाभावात् । इत्यभ्यधिकाशङ्कया उक्तमाक्षिप्येत्यर्थः ॥ **एकस्मादेक इति** ॥ शिष्याद्गुरुरित्यर्थः । **न च विष्णोरिति** ॥ विष्णुरेव तद्गुरुरिति सिद्धसाधनमिति न वाच्यमित्यर्थः ।

(अभिनवचन्द्रिका)

परमात्मानं **विनेति** ॥ गुरूपदेशमन्तरा तद्दर्शनायोगेन न तस्य गुरुत्वमुपपद्यत इति भावः ॥ **यद्येवमपीति** ॥ यदि प्राणस्याधिकारित्वेऽपि प्राणादुत्तमगुरुर्नाभ्युपगम्यते तर्हि नामादीनामपि उत्तमो गुरुर्न स्यादिति भावः ॥ **नानुमानेनेति** ॥ परमेश्वरव्यतिरिक्त उत्तमो न साध्यः । श्रुतिविरोधेनाऽनुमानस्य बाधितविषयत्वात् । न चोपदेशकाभावेनोपासनाधिकारित्वाभाव इति तर्कसहकृतत्वेन नानुमानस्य । श्रुतिबाधः व्यासकपिलादिरूपिणो भगवत एव गुरुत्वेन तर्कस्याऽऽभासत्वादिति भावः । **प्राणादुत्तमाभाव इति** ॥ यदि प्राणस्य विष्णुरेवोपदेशक इत्यङ्गीकृत्य, विष्णुव्यतिरिक्तः प्राणादुत्तमो नाभ्युपगम्यते, तर्हि नामादीनामपि स एव गुरुरस्तु । ततश्च तारतम्यं न स्यादिति भावः ।

पूर्वपक्षस्तु– नाऽधिकारिणः प्राणावसानाः । 'प्राणः स्वोत्तमाधिकारिनियम्यः अधिकारित्वात् नामादिवत्' इत्यनुमानविरोधात् । अतोऽधिकारिणां प्राणावसानत्वाभावात् हिरण्यगर्भ एव सर्वगुणोपास्तियोग्य इत्युक्तमयुक्तमिति ।

सिद्धान्तस्तु– प्राणावसानत्वमेवाधिकारिणाम् । 'प्राणो वाव सर्वेभ्यो भूयान्' इत्यामननात् । न चानुमानविरोधः । तस्य बाधितविषयत्वात् । ननु 'प्राणो वाव सर्वेभ्यो भूयान्' इति श्रुतिबलेन न प्राणस्य सर्वोत्तमत्वं शक्यं वक्तुम् । तथा सति ईश्वरद्वयायोगेन प्राणपरमात्मनोरैक्यप्रसङ्गादिति चेत्, न । छन्दोगश्रुत्युक्तप्रकारेण सर्वशब्दस्य संकोचमङ्गीकृत्य प्राणस्य सर्वाधिकार्युत्तमत्वं, ततो महालक्ष्म्याः, ततः परमात्मन उत्तमत्वमित्यङ्गीकारात् । अतोऽधिकारिणां प्राणावसानत्वात् स एव सर्वगुणोपास्तियोग्य इति सिद्धम् ।

## वाक्यार्थमुक्तावली

अत्र दृष्टान्तबलात् प्राणः साधिकः । अधिकारित्वादिति साध्यहेतू सम्बध्येते ॥ **अक्षरमिति विभागेनान्वेति** ॥ तथा च भूतग्रामवदधिकारित्वात् प्राणः अक्षरं ब्रह्म अन्तरा विना साधिक इति सूत्रार्थं मनसि निधाय सूत्रार्थं विवृण्वन्नन्तरेत्यस्य कृत्यं च वदन् भाष्ये परमात्मानमित्यस्य प्राणाद्विशिष्टजीवाभावेन प्रमाणमिति न्यायविवरणानुसारेणोपलक्षणत्वं मत्वा व्याचष्टे । **न प्राणस्येत्यादिना** । नन्वधिकारिणां प्राणावधित्वे श्रुत्योक्ते कथमन्तरा भूतग्रामवदित्यनुमानावष्टम्भेन

पूर्वपक्षः । श्रुतेरनुमानस्य दुर्बलत्वादित्यतोऽनुकूलतर्कसहितत्वेनानुमानस्यापि प्रबल्यादिति भावेनान्यत्रोत्तमाभावेन प्रमाणमित्येतन्निरस्यमनुकूलतर्कमाह ॥ **यद्येवमिति** ॥ तदुक्तमित्यत्र नेत्यग्रेतनमाकृष्यते । तदिति तन्त्रम् । तत्र प्राणादधिकाभावे तत्प्रमाणं प्राणो वाव सर्वेभ्य इत्युक्तमिति भावेन व्याचष्टे ॥ **नानुमानेनेति** ॥ नानुमानं बाधितम् । तर्कसाहाय्येन प्रबलत्वादित्याशङ्कते ॥ **प्राणादिति** ॥ अन्यत्रोत्तमाभाव इत्यनेन तत् तत्रान्यत्र नामादौ उत्तमाभावे तत्प्रमाणं नोक्तमिति सूत्रखण्डार्थ उक्तो भवति । दृश्यते चेत्यस्यान्यत्र भूतग्रामे एकैकस्मादेकैकस्योत्तमत्वं दृश्यते चेत्यर्थः । तदनुसारेण तदुक्तमित्यस्यापि तत् तत्र भूतग्रामे एतत् एकैकस्मादेकैकस्योत्तमत्वमुक्तमित्यर्थः । तथा च तर्कस्य बाध इति भावः ।

## तत्त्वसुबोधिनी

प्राणादुत्तमाधिकार्यस्वीकारे बाधकमाह ॥ **यद्येवमिति** ॥ **प्रमाणं चेति** ॥ तथा च बाधकसाधकभावाभावलक्षणविशेषसद्भावादविशेषोऽसिद्ध इति भावः ।

## वाक्यार्थविवरणम्

**साधयितुम्** ॥ उक्तानुमानेन ॥ **एवमपीति** ॥ प्राणादुत्तमत्वसाधकेऽनुमाने सत्यपीत्यर्थः । न स्यादधिकारित्वाविशेषादिति भावः ।

## वाक्यार्थमञ्जरी

भूतानां नामादीनां ग्रामवत् समुदायवत् प्राणोऽप्यन्तरा परमात्मानं विना अन्योत्तमोपेत इति चेन्न, कुतः, तदुक्तं तदिति तन्त्रं तत्र प्राणाधिकाभावे तत् प्रमाणं प्राणो वावेत्युक्तं यत् इत्यर्थः ॥ **वाग्वेति** ॥ वाक् स्वाहादेवीनाम्ना उषायाः सकाशाद्भूयसी श्रेष्ठेत्यर्थः ॥

## सूत्रभाष्यम्

**॥ ॐ अन्यथा भेदानुपपत्तिरिति चेन्नोपदेशवत् ॐ ॥ ३७ ॥**

**प्राणस्य सर्वोत्तमत्वे परमात्मना भेदानुपपत्तिरिति चेन्न । श्रुत्युपदिष्टवदुपपत्तेः । अन्येभ्यः प्राणस्योत्तमत्वं तस्मात्परमात्मनो ह्युपदिष्टम् ।**

## तत्त्वप्रदीपिका

अन्यथेत्यादि सूत्रम् ॥ प्राणस्य सर्वोत्तमत्वमुच्यते चेत्परमात्मनस्तस्य भेदोऽनुपपन्नः । सर्वोत्तमद्वयायोगादिति चेन्न । श्रुत्युपदेशानुसारेणाङ्गीकारे भेदोपपत्तेः ।

## तत्त्वप्रकाशिका

उक्तमाक्षिप्य समादधत्सूत्रमुपन्यस्याऽऽक्षेपांशं तावद्व्याचष्टे ॥ **अन्यथेति** ॥ यदुदितं प्राणो वाव सर्वेभ्यो भूयान् इति श्रुतेः प्राणादुत्तमोऽधिकारी नास्तीति तदयुक्तम् । तथा हि । किमयं सर्वशब्दो निरुपचरितसर्वार्थ उत संकुचितार्थः । नाद्यः । तथा सति प्राणस्य निरुपचरितसर्वोत्तमत्वप्राप्तेः । तथा सति सर्वोत्तमद्वयाऽयोगाद्यः प्राणपरमात्मनोः श्रुत्यादिसिद्धो भेदः सोऽनुपपन्नः स्यात् । नाऽपि द्वितीयः । सर्वशब्दस्य संकुचितार्थत्वे कतिपयाधिकारिव्यतिरिक्तसर्वार्थस्यापि वक्तुं शक्यत्वात् । अतो नैतच्छ्रुत्या प्राणादुत्तमाधिकारिणोऽभावः सिध्यतीति भावः । परिहारांशं व्याचष्टे ॥ **नेति** ॥ युक्तमेवैतच्छ्रुत्या प्राणादुत्तमाधिकार्यभावसाधनम् । सर्वशब्दस्य संकुचितार्थत्वात् । न चोक्तदोषप्राप्तिः । श्रुत्युक्तप्रकारेणैव संकोचोपपत्तेरिति भावः । किं तच्छ्रुत्युपदिष्टमित्यत आह ॥ **अन्येभ्य इति** ॥ सर्वेभ्यः प्राणस्य तस्माच्च विष्णोरुत्तमत्वं छन्दोगश्रुतावुक्तमतो विष्णुव्यतिरिक्तसर्वार्थत्वं श्रुतेः स्यान्नान्यथेति भावः । अतोऽधिकारिणां प्राणावसानत्वात्स एव सर्वगुणोपास्तियोग्य इति सिद्धम् ।

## भावबोधः

अन्येभ्य इत्यस्य कतिपयाधिकारिव्यतिरिक्तसर्वार्थकत्वस्यापि सम्भवाद्विवक्षितासिद्धेराह– **सर्वेभ्य इति** ॥ अधिकारिभ्य इत्यर्थः ॥ **विष्णुव्यतिरिक्तेति** । ह अत्र सर्वत्र श्रियोऽपि परमात्मकोटावेव प्रवेशो द्रष्टव्यः । अत्राद्ये अधिकारिणः प्राणावसानत्वे श्रुतिरूपप्रमाणोक्तिः । द्वितीये परोक्तानुमानमाशङ्क्य तद्बाधकत्वेन स्वपक्षसाधकत्वेनोक्तायाः 'सर्वेभ्यः' इति श्रुतेरेवातिदेशः । तृतीये श्रौत 'सर्व'शब्दस्यासङ्कुचितार्थत्वे बाधकमाशङ्क्य विवक्षितसंकोचितार्थत्वप्रतिपादनमिति सूत्रक्रमः ।

## भावदीपः

उक्तमाक्षिप्येत्येतद्व्यनक्ति ॥ **यदुदितमिति** ॥ **श्रुत्यादीति** ॥ आत्मत एष प्राणो जायते । द्वौ प्राणावित्यादिश्रुतिस्मृतिसिद्ध इत्यर्थः । अत इति भेदानुपपत्त्यादिपरामर्शः । पूर्वसूत्रेऽन्तरेत्युक्तावपि तदुक्तमित्यनेनोपात्तश्रुतावुक्तदिशा विकल्पोदयेनान्तरेत्यस्याक्षेपेणेयं शङ्का युक्तेति भावः । भाष्ये नेति भेदानुपपत्तिचोद्यनिषेधे तात्पर्यमाह ॥ **युक्तमेवेति** ॥ **छन्दोगेति** ॥ नामादिप्राणान्त-तारतम्योक्तिपरप्रागुक्तश्रुतावित्यर्थः ॥ **अत इति** ॥ विवक्षितार्थस्य छन्दोगश्रुतावुक्तत्वादित्यर्थः । फलोक्त्या **करणार्थमुपसंहरति** ॥ **अत इति** ॥ प्राणो वावेत्यादिश्रुतिरूपसाधकभावात् द्वितीय-तृतीयोक्तबाधकाभावाच्चेत्यर्थः । अत्राद्ये प्रबलश्रुत्युक्तावपि द्वितीये दुर्बलानुमानशङ्का युक्ता । श्रुतेरनुपपन्नार्थकत्वस्य तृतीये शङ्क्यमानत्वेन सावकाशत्वादिति भावः ।

## वाक्यार्थमुक्तावली

अन्यथा प्राणादुत्तमाधिकार्यभावे 'प्राणो वाव सर्वेभ्यः' इति श्रुतौ सर्वशब्दस्यासङ्कुचित-वृत्तित्वमङ्गीकृत्यास्यैव सर्वोत्तमत्वे भेदानुपपत्तिः । अक्षरशब्देन प्रस्तुतस्य ब्रह्मणः प्राणस्य च भेदानुपपत्तिरित्याद्यपक्षोत्तरत्वेन व्याचष्टे ॥ **नाद्य इति** ॥ अन्यथा सर्वशब्दस्य सङ्कुचितार्थत्वं कतिपयाधिकारिव्यतिरिक्तसर्वोत्तमत्वस्य श्रुत्यर्थत्वेन वक्तुं शक्यत्वात् । सर्वशब्दस्य श्रीदेवी-व्यतिरिक्तसर्वार्थत्वं न कतिपयाधिकार्यतिरिक्तसर्वार्थत्वमिति सर्वशब्दसङ्कोचे भेदानुपपत्तिरिति सूत्रस्यार्थमभिप्रेत्य परमात्मनेत्यंशं परित्यज्य द्वितीयं प्रतिक्षिपति ॥ **न द्वितीय इति** ॥ **न चोक्तदोष इति** ॥ द्वितीयपक्षोक्तसङ्कोचवैजात्यानुपपत्तिरित्युक्तदोष इत्यर्थः । उपदेशवदित्यत्रो-पपत्तेरिति योज्यम् । यथा श्रुतावुपदेशास्तथा सङ्कोचोपपत्तेः । कल्पकसद्भावे सङ्कोचवैजात्यकल्प-नोपपत्तेरिति भावः । अत्राद्येऽधिकारिणां प्राणावधित्वश्रुत्युक्तिः । द्वितीयेऽनुकूलतर्कवत्त्वेन प्रवलानुमानविरोधमाशङ्क्यानुमानतर्कयोर्बाधोक्तिः । तृतीये श्रौतसर्वशब्दस्यासङ्कुचितवृत्तित्वे वाधकमाशङ्क्य विवक्षितसंकुचितार्थत्वप्रतिपादनमिति सूत्रक्रमः ।

## तत्त्वसुबोधिनी

अन्येभ्य इत्यस्य कतिपयव्यतिरिक्तसर्वार्थत्वस्यापि सम्भवेन विवक्षितासिद्धेराह ॥ **सर्वेभ्य इति** ॥ अधिकारिभ्य इत्यर्थः ॥ **विष्णुव्यतिरिक्तेति** ॥ अत्र सर्वत्र श्रियोऽपि परमात्मकोटावेव

(तत्त्वसुबोधिनी)

प्रवेशो द्रष्टव्यः । अत्राद्ये सूत्रे श्रुतिरूपप्रमाणोक्तिः । द्वितीये सर्वेभ्य इति श्रुतेरेवातिदेशः । तृतीये श्रौतसर्वशब्दस्य संकुचितार्थप्रतिपादनमिति सूत्रक्रमः ।

## वाक्यार्थविवरणम्

**सर्वोत्तमद्वयेति** ॥ सर्वोत्तमवस्तुद्वयेत्यर्थः ॥ सङ्कुचितार्थत्वे । परमात्मव्यतिरिक्तसर्वपरत्वेन सङ्कुचितार्थत्वे ॥ **कतिपयेति** ॥ नामादिमध्येऽपि कतिपयेत्यर्थः ॥ **शक्यत्वादिति** ॥ तथा चैवमपि सङ्कोचः कार्यः प्रमाणाभावस्याविशिष्टत्वादिति भावः ॥ **सङ्कुचितेति** ॥ परमात्मव्यतिरिक्त-परत्वेनेत्यर्थः ॥ **उक्तदोषेति** ॥ नामादिष्वपि कतिपयाधिकारिव्यतिरिक्तसर्वार्थत्वस्यापि वक्तुं शक्यत्वादित्युक्तदोषेत्यर्थः ।

## वाक्यार्थमञ्जरी

अन्यथा प्राणादधिकाभावे तस्यैव सर्वोत्तमत्व इति यावत् भेदानुपपत्तिः सर्वोत्तमेन ब्रह्मणा श्रुतिसिद्धभेदो न स्यादिति चेन्न, उपदेशवत् । अन्येभ्यः प्राणस्येति श्रुत्युपदिष्टप्रकारेण प्राणो वाव सर्वेभ्यो भूयानिति सर्वशब्दस्य संकोचोपपत्तेरित्यर्थः ॥ **कतिपयाधिकारीति** ॥ तथा च न तस्य नामाद्या शान्ताधिकार्युत्तमत्वस्य भवदभिलषितस्य सिद्धिरिति भावः । सर्वेभ्यः अधिकारिभ्यः ॥ **विष्णुव्यतिरिक्तेति** ॥ अत्र सर्वत्र श्रियोऽपि ब्रह्मकोटावेव प्रवेशो द्रष्टव्यः ।

॥ इति इयदामननाधिकरणम् ॥ २२ ॥

## २२.व्यतिहाराधिकरणम्

नेति चेन्न —

**॥ ॐ व्यतिहारो विशिंषन्ति हीतरवत् ॐ ॥ ३८ ॥**

उक्तं प्राणात्परमात्मन उत्तमत्वं पूर्वोक्ताध्याहारेण 'एष तु वा अतिवदति' (छां.उ.७-१६) इति विशिंषन्ति हि । यथेतरेषु विशेषणम् ।

'उत्तमत्वं हि देवानां मुक्तावपि हि मानवात् ।
तेभ्यः प्राणस्य तस्माच्च नित्यमुक्तस्य वै हरेः' इति (च) बृहत्तन्त्रे ।

### तत्त्वप्रदीपिका

न प्राणात्परमात्मन उत्तमत्वं तत्रोक्तमिति चेन्न । व्यतिहारो विशिंषन्ति हीतरवत् । उपदिष्टमेव तत्र प्राणात्परमात्मन उत्तमत्वं पूर्वोक्तप्रश्नप्रतिवचनाध्याहारेण 'अस्ति भगवः प्राणाद्भूय इति, प्राणाद्वाव भूयोऽस्तीति, तन्मे भगवान्ब्रवीत्विति, वाग्वाव नाम्नो भूयसी'इत्यादि । अध्याहारयुक्तिमाह– 'एष तु वा अतिवदति' इति विशिंषन्ति हीति । अयमर्थः । 'अतिवाद्यसीति, अतिवाद्यस्मीति ब्रूयान्नापह्नुवीत'इत्युक्तात्प्राणातिवादिनः सत्यातिवादिनं विशिंषन्ति च्छन्दोगाः, 'एष तु वा अतिवदति यः सत्येनातिवदति' इति । एवं विशिंषन्तः प्राणात्सत्यं विशिंषन्ति हि । यथेतरेषु वागादिषु नामादिभ्यो विशेषणं भेदादिज्ञापनं एवमेतत्सत्यस्य परमात्मत्वे ।

### तत्त्वप्रकाशिका

अत्र भगवज्ज्ञानसाधनोपासनाधिकारिणः प्राणात्परमेश्वरस्योत्तमत्वसमर्थनादस्ति शास्त्रादिसङ्गतिः । अन्यथोपासनायोगात्समर्थनीयम् । प्रकृतो विष्णुरेवात्र विषयः । प्राणादुत्तमो न वेति सन्देहः । प्राणस्य हिरण्यगर्भत्वाद्विप्रतिपत्तिः सन्देहबीजम् ॥ पूर्वपक्षयति ॥ नेति ॥ न विष्णोः प्राणादुत्तमत्वम् । छन्दोगश्रुतौ प्राणस्यैव सर्वोत्तमत्वेनोक्तत्वात् । अथोच्येत । प्राणानन्तरमपि 'एष तु वा अतिवदति यः सत्येनातिवदति' इति सत्यपदेनोदितस्य विष्णोराधिक्यमुच्यत इति । मैवम् । 'अस्ति भगवः प्राणाद्भूय इति प्राणाद्वाव भूयोऽस्तीति तन्मे भवान्ब्रवीतु' इति सत्यं वा व प्राणाद्भूत

(तत्त्वप्रकाशिका)

इति प्रकरणान्तरवत्प्रश्नप्रतिवचनाभावात् । कारणविशेषमन्तरेण प्रकरणभेदकल्पनायोगात् । सत्यपदेन प्राण एवोच्यते । अतः प्राणादुत्तमत्वाभावाद्विष्णोर्न तदुपासनं सर्वैः कार्यमिति भावः । पूर्वपक्षं प्रतिषेधति ॥ **नेति** ॥ कुतो नेत्यतः सूत्रं पठित्वा व्याचष्टे ॥ **व्यतिहार इति** ॥ श्रुतौ प्राणस्यैव सर्वोत्तमत्वोक्तेर्न विष्णोस्तदुत्तमत्वमिति न युक्तम् । 'एष तु वा अतिवदति यः सत्येनातिवदति' इति सत्यपदोदितस्य विष्णोः प्राणादुत्तमत्वस्योक्तत्वात् । प्रश्नाद्यभावात् प्राणविशेषणमेव तदिति न वाच्यम् । प्रश्नाद्यध्याहारस्य कर्तुं शक्यत्वात् । न चाध्याहारकारणाभावादेकप्रकरणत्वमेव युक्तमिति वाच्यम् । 'स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नतिवादी भवति' इति प्राणवादिनोऽतिशयितवस्तुवादित्वेनातिवादित्वमुक्तम् । ततश्च 'एष तु वा अतिवदति यः सत्येनातिवदति' इति सत्याख्यवस्तु वदतोऽप्यतिवादित्वमुच्यते । तत्र प्राणातिवादितः सत्यातिवादी तुशब्देन विशिष्यते । तेन ज्ञायतेऽन्योऽयमन्योऽसाविति । अतः प्रकरणभेदकसद्भावाद्युक्तं प्रश्नाद्यध्याहारेण सत्यस्य प्राणादुत्तमत्वव्याख्यानमिति भावः ।

ननु कथमेतद्विशेषणं प्रकरणभेदकं येन प्रश्नाद्यध्याहारं प्रतिपद्येमहीत्यत आह ॥ **यथेति** ॥ यथा 'खलु वाग्वाव नाम्नो भूयसी' इत्यादिविशेषणं प्रकरणभेदकं वाचो नामाधिक्यवाचकत्वात्तथैतदपि भेदकं भवत्येव । यः सत्यं वदति स तु प्राणातिवादिनोऽपि विशेषेणातिशयितं वस्तु वक्तीति प्राणात्सत्यस्याधिक्यवाचकत्वादिति भावः । अत्र स्मृतिं चाऽऽह ॥ **उत्तमत्वमिति** ॥ अतो विष्णोः प्राणादुत्तमत्वाद्युक्तं तदुपासनमिति सिद्धम् ।

## गुर्वर्थदीपिका

प्राणस्य हनुमदादिरूपस्य रामवशत्वेऽपि विप्रतिपत्त्यभावात्कथं पूर्वपक्षोत्थानमित्यत उक्तं प्राणस्य **हिरण्यगर्भत्वादिति** ॥ **पूर्वोक्ताध्याहारेणेति** वदता **वि** विशेषेण **अति** अतिशयितापेक्षितवाक्यस्याहारः योग्यतयाऽन्यत आहरणं व्यतिहार इति सौत्रव्यतिहारपदस्यार्थस्सूचितः । एकप्रकारत्वे पूर्ववाक्यादावृत्तिः स्यात् । अत्र त्वपेक्षितप्रश्नप्रतिवचनवाक्यस्य 'अस्ति भगवः प्राणाद्भूय' इत्यादिरूपेणान्यादृशत्वादध्याहार एवेति भावः । तर्ह्यल्पाक्षरत्वाध्याहार इति किमिति नोक्तमिति चेन्न । यत्किञ्चिदधिकवाक्याहरणं निवारयितुं वीत्युपसर्गदानम् । विशेषश्च प्रकृतार्थानुकूलत्वम् । तस्मादतिमेधाव्यलौकिकः सूत्रकारो न लौकिकानुसारीति ज्ञेयम् ।

## भावबोधः

**प्राणात्परमेश्वरस्येति ॥ पूर्वसूत्रे** 'उपदेशवत्' इति प्राणात् परमात्मन उत्तमत्वस्योपदिष्टत्वात् तदविरोधेनैव 'सर्वेभ्यः' इति श्रौत'सर्व'शब्दार्थो ग्राह्य इत्यभिहिते तदेव कथमित्याक्षेपोत्थानादनन्तरसङ्गतिरिरिति भावः । अत एव भाष्ये 'नेति चेत्' इति पूर्वसूत्रोक्तमेवाक्षिप्तम् ॥ **प्राणादित्यादि ॥** अत्र विष्णुः किं प्राणादुत्तमो न भवत्युत भवतीति चिन्ता । तदर्थं 'वाग्वाव नाम्नो भूयसि' इत्यादिदेवतातारतम्यप्रतिपादकच्छन्दोगश्रुतौ प्राणाद्विष्णोरुत्तमत्वप्रतिपादकं नास्त्युतास्तीति । **'सत्येन' इति वाक्यगतः 'सत्य'शब्दः** किं प्राणपरः उत विष्णुपर इति । तदर्थं प्रकरणान्तरवत् 'अस्ति भगवः प्राणाद्भूयः' इत्यादिप्रश्नप्रतिवचनाध्याहारः किं न कर्तव्य उत कर्तव्य इति । तदर्थः तदध्याहारे ज्ञापकं नास्त्युतास्तीति । न विष्णोः प्राणादुत्तमत्वमिति । अनेन विष्णोरपि ततः परत्वमिति न्यायविवरणानुसारेण तस्माद्विष्णोरुत्तमत्वमिति प्रागुक्तमनुवृत्य तेन सम्बन्धः प्रदर्शितो भवति । प्राणस्यैवोन्नतिप्रतीतिरिरिति न्यायविवरणं व्याचष्टे– **छन्दोगेति ॥** 'अस्ति भगवः प्राणाद्भूयः' इति प्रश्नाद्यभावादिति न्यायविवरणांशं तन्निवर्तनीयाशङ्कानिरासपूर्वकं व्याचष्टे– **अथोच्येतेति ॥ प्रकरणान्तरवदिति ॥** 'अस्ति भगवन्नाम्नो भूय इति' 'नाम्नो वाव भूयोऽस्तीति' 'तन्मे भगवान् ब्रवीतु' इति 'वाग्वाव नाम्नो भूयसि' इत्यादिनामवागादिप्रकरणान्तरवदित्यर्थः । अनेन सौत्र'इतरवत्'इत्यस्यार्थ उक्तो भवति ।

ननु प्रश्नप्रतिवचनाश्रवणेऽपि तदध्याहारेण 'यः सत्येन' इत्यादेः प्रकरणान्तरत्वं सम्भवतीत्यतः 'विशिंषन्ति' इति सूत्रनिवर्तनीयाशङ्कामाह– **कारणविशेषमिति ॥** प्रश्नाध्याहारस्य कर्तुं शक्यत्वादित्यादिना पूर्वोक्ताध्याहारेणेत्यादिभाष्यव्याख्यानपरेण 'एष तु वा अतिवदति' इति विशेषणात् प्रतिवचनप्रतिसन्धानोपपत्तेरिति न्यायविवरणमप्युक्ततात्पर्यं भवति ।

## भावदीपः

**प्राणादिति ॥** उपदेशवदिति पूर्वसूत्रखण्डे प्राणाद्विष्णोरुत्तमत्वं श्रुत्युपदिष्टतयाऽभिमतं तन्नेति शङ्कायां तत्समर्थनादित्यर्थः । तेन पूर्वेणाक्षेपिकी सङ्गतिरप्यस्य सिद्धा ज्ञेया । उपासकचिन्तानन्तरमुपास्यचिन्तनाद्वा पूर्वसङ्गतिर्ध्येया । अत्र प्राणादित्यादिनैव पूर्तावधिकारिण इत्यन्तोक्तिः

(भावदीपः)

शाख्रादिसङ्गत्युपपादनाय । फलमाह ॥ **अन्यथेति** ॥ प्राणाद्विष्णोरुत्तमत्वासमर्थने प्राणस्यैव सर्वोत्तमत्वप्राप्तावन्यस्योपास्यस्याभावात्प्राणस्य च स्वयं बद्धत्वेन गौणश्चेदिति सूत्रे न हि गौणात्मनिष्ठस्य मोक्ष इत्युक्तदिशा अन्यमोचकत्वायोगान्मोक्षार्थप्रवृत्तोपासनायोगादित्यर्थः । यद्वा सर्वोत्तमत्वासमर्थने सच्चिदानन्द आत्मेति यत्सर्वसाधारणमुपासनमुक्तं तदयुक्तं स्यात् । स्वामित्वरूपात्मत्वस्याभावादित्यर्थः । क्वचित्तदुपासनायोगादित्येव पाठः ॥ **प्रकृत इति** ॥ पूर्वसूत्रादौ भेदप्रतियोगित्वादिनाऽक्षरपदेन प्रकृत इत्यर्थः । यस्योत्तमत्वं वाच्यं स एवेत्येवार्थः ॥ **हिरण्यगर्भत्वादिति** ॥ 'वायुरेव यतो ब्रह्मपदं नियमतो व्रजेत् । सहैव जननेऽप्यस्मात्पूर्वं वायोर्जनिं वदेत्' इति आद्याध्यायबृहद्भाष्योक्तस्मृतेरिति भावः । विप्रतिपत्तिः, वादिविप्रतिपत्तिः । हिरण्यगर्भोत्तमत्त्ववादिन एव प्राणोत्तमत्त्ववादिन इति भावः । एतेनात्र तारतम्योक्तिपरश्रुतौ श्रीतत्त्वानुक्तेर्गतेर्वक्ष्यमाणत्त्वेऽपि हिरण्यगर्भानुक्तिः कुत इति चोद्यानवकाशः । प्राणोक्त्यैव तदुक्तेः । तदागमस्य स्मृतिनयादौ निरासेऽपि श्रुत्यवष्टंभेन विप्रतिपत्तिरित्यर्थः । सर्वश्रुतीनां विष्णूत्कर्ष एव गतिसामान्यस्य संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत इत्यादौ द्वितीयादावेव सिद्धत्वेऽप्यधिकाशङ्कयाऽस्योत्थानमिति ध्येयम् । काङ्क्षितानुवृत्त्या नेति चेदिति शङ्काभाष्यं व्याचष्टे ॥ **न विष्णोरिति** ॥ कुत इत्यतः प्राणस्यैवोन्नतिप्रतीतेरित्यन्यत्रोक्तं हेतुं व्यंजयन्नाह ॥ **छन्दोगेति** ॥ अस्ति भगवः प्राणाद्भूय इति प्रश्नाद्यभावादित्यन्यत्रोक्तमेव हेतुं शङ्कानिवर्तकतयाह ॥ **अस्ति भगव इति** ॥ **प्रकरणान्तरवदिति** ॥ नामवागादिपूर्वप्रकरणेष्विवेत्यर्थः । संज्ञाभेद एव प्रकरणभेदकल्पकोऽस्त्वित्यत आह ॥ **कारणविशेषमित्यादि** ॥ **अत इति** ॥ छन्दोगश्रुतौ तथा प्रतीतेरित्यर्थः ॥ **तदुपासनमिति** ॥ आनन्दादय इत्यत्रोक्तात्मत्वशब्दितसर्वोत्तमत्वोपासनमित्यर्थः ॥ सम्बन्धभाष्यस्थनञोऽर्थमाह ॥ **इति न युक्तमिति** ॥ कुत इत्यतः प्राणात्परमात्मन उत्तमत्वमिति भाष्यार्थहेतुतया व्यनक्ति ॥ **एष त्विति** ॥ प्रश्नाद्यध्याहारेणेति भाष्यस्य व्यावर्त्यपूर्वमर्थमाह ॥ **प्रश्नेत्यादिना** ॥ व्यावर्त्यपूर्वं एष त्विति भाष्यं व्याचष्टे ॥ **न चेति** ॥ **ततश्चेति** ॥ ततोऽपि प्राणातिवादित्ववादिनः सकाशादपीत्यर्थः । तत्र प्राणातिवादिन इति पञ्चमी ॥ **तेनेति** ॥ सत्यवादिनः तुशब्देन विशेषणकरणेन प्राणोऽन्यः सत्योऽन्य इति ज्ञायते । प्राणसत्ययोर्भेदाभावे तद्वादिनोर्भेदायोगादिति भावः । भाष्यमेवं व्याख्याय व्युत्क्रमेणोपसंहरति ॥ **अत इति** ॥ यस्माद्विशिंषन्ति छन्दोगा अत इत्यर्थः । एतेन भाष्यादौ हिर्हेताविति सूचितम् ॥ **अत्रेति** ॥ प्राणाद्धरेरुत्तमत्व इत्यर्थः ॥ **स्मृतिं चेति** ॥

(भावदीपः)

न केवलं प्रकरणभेदकं विशेषणमिति चार्थः ॥ **अत इति** ॥ प्रश्नाद्यध्याहारेण सत्यपदेन विष्णोरुक्तत्वादित्यर्थः । तदुपासनं सर्वोत्तमत्वरूपात्मत्वोपासनमित्यर्थः ।

## अभिनवचन्द्रिका

**प्राणस्य हिरण्यगर्भत्वादिति** ॥ प्राणपदेन हिरण्यगर्भस्य विवक्षितत्वात् तस्य च सर्वोत्तमत्वेन कैश्चिदङ्गीकृतत्वात् विप्रतिपत्तिः सन्देहबीजमित्यर्थः ॥ **प्राणस्यैवेति** ॥ यद्यपि प्राणस्य सर्वोत्तमत्वेनोक्तत्वादित्येवालम्, तथापि छन्दोगश्रुतौ प्राणपदेन विष्णुं विवक्षित्वा, तस्य सर्वोत्तमत्वाभिधानात् असिद्धं प्राणस्य सर्वोत्तमत्वमिति शङ्कानिरासाय प्राणस्यैवेत्येवकारः । प्राणविशेषणमेव **तदिति** ॥ 'सत्येनातिवदति' इति सत्यपदोक्तं सत्यत्वं प्रश्नाद्यभावात् प्राणविशेषणमेवेत्यर्थः । प्रश्नाद्यभावोऽसिद्ध इत्याह– **प्रश्नाद्यध्याहारस्येति** ॥ मन्त्रद्रष्ट्रा उच्चारणेनाऽनभिव्यक्तीकृतस्यापि तदभिप्रेतस्य प्रश्नप्रतिवचनस्य निश्चेतुं शक्यत्वादित्यर्थः ॥ **न चाध्याहारेति** ॥ मन्त्रद्रष्टुः प्रश्नप्रतिवचनवाक्यं विवक्षितमित्यत्र प्रमाणाभावेन प्रकरणविच्छेदकप्रश्नाद्यभावात् एकप्रकरणत्वमेव युक्तमिति न वाच्यमित्यर्थः । अनिश्चितत्वात्प्रश्नप्रतिवचनयोः भेदकत्वासम्भवेऽपि भेदकान्तरसद्भावात् प्रकरणभेद एव युक्त इत्याह– **'स वा एष' इत्यादिना** ॥ **तेनेति** ॥ तुशब्देन प्रकरणनिश्चयद्वारा प्राणपदोक्तोऽन्यः, सत्यपदोक्तोऽन्य इति निश्चीयत इत्यर्थः । **अत इति** ॥ अत इत्यस्य विवरणम्– **प्रकरणभेदकसद्भावादिति** ॥ प्रायपाठबलादिति शेषः । ततश्च प्रकारणभेदकसद्भावेन प्रायपाठबलात् ऋष्यभिप्रेतप्रश्नप्रतिवचनवाक्यानुसन्धानेन सत्यस्य प्राणादुत्तमत्वप्रतिपादनं युक्तमित्यर्थः । एतेन प्रश्नप्रतिवचनाभावात् न सत्यस्य प्राणादुत्तमत्वमिति शङ्कित अविद्यमानवाक्याध्याहारेण प्राणादुत्तमत्वव्याख्यानमयुक्तमिति परास्तम् । उच्चारणेन ज्ञापितानामिव प्रायपाठज्ञापितयोरपि प्रश्नप्रतिवचनयोः सत्यत्वात् ॥ **भाष्ये उक्तमिति** ॥ मन्त्रद्रष्ट्रा पूर्वोक्तप्रश्नप्रतिवचनसदृशप्रश्नप्रतिवचनाध्याहारेण अनुसन्धानेन विष्णोः प्राणादुत्तमत्वमुक्तमित्यर्थः । तुशब्दस्य प्रतिपाद्यविशेषणत्वाभावेन कथं प्रकरणभेदकत्वमित्याशङ्कते टीकायां– **ननु कथमेतद्विशेषणमिति** ॥

पूर्वपक्षस्तु– न विष्णोः सर्वोत्तमत्वं युक्तम् । प्राणस्याशोत्तमत्वमुक्त्वा, तदुत्तमानभिधानात् । न हि सत्यपि प्राणादुत्तमे तदनभिधाने कारणमस्ति । येनाऽनुक्तिमगणय्य प्राणादुत्तमत्वं विष्णोः

(अभिनवचन्द्रिका)

प्रतीमः । न च सत्यपदोदितस्य विष्णोः प्राणादुत्तमत्वमुक्तमिति वाच्यम् । प्रकरणभेदकाभावेन सत्यत्वस्य प्राणविशेषणत्वात् । ततश्च न विष्णोः सर्वोपास्यत्वमिति ।

सिद्धान्तस्तु– युक्तमेव विष्णोः सर्वोत्तमत्वम् । 'एष तु वा अतिवदति यः सत्येनातिवदति' इति सत्यपदोदितस्य विष्णोः प्राणादुत्तमत्वाभिधानात् । न च नामादाविव प्रश्नप्रतिवचनाभावात् न श्रुतेः प्राणादुत्तमत्वाभिधाने तात्पर्यमिति वाच्यम् । प्रायपाठबलेन प्रश्नप्रतिवचनस्याऽनुमातुं शक्यत्वात् । न च प्रकरणभेदकाभावात् न प्रश्नप्रतिवचनाध्याहार इति वाच्यम् । तुशब्दस्य प्रकरणभेदकस्य सद्भावात् । ततश्च प्रश्नप्रतिवचनानुसन्धानपूर्वकं मन्त्रद्रष्ट्रा विष्णोः प्राणादुत्तमत्वस्योक्तत्वेन तस्य सर्वोपास्यत्वं युक्तमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

नेति चेन्नेति भाष्ये एव प्राणात्परमात्मन उत्तमत्वं नोपदिष्टमिति पूर्वाक्षेपेणोत्थानादनन्तरसङ्गतिः ॥ **प्राणादिति** ॥ अत्र प्राणाद्विष्णुरुत्तमो न भवत्युत भवतीति चिन्ता । तदर्थं प्राणादुपरि सत्यपदोक्तः प्रश्नाद्यभावात्प्राण एवोत तदध्याहारेण **विष्णुरिति** ॥ तस्मात्परमात्मन उत्तमत्वमिति पूर्वानुवृत्त्या नेत्यंशं व्याचष्टे ॥ **विष्णोरिति** ॥ कुतो नेत्यत उन्नतिरित्युक्तन्यायप्रदर्शकतया तस्मात्परमात्मन उत्तमत्वमुपदिष्टमित्यन्तानुवृत्त्या नेत्यस्यार्थान्तरमाह ॥ **छन्दोगेति** ॥ एवशब्देन लब्धस्य विष्णोस्सर्वोत्तमत्वेनानुक्तत्वादिति हेतोरसिद्धिमाशङ्कते **अथेति** । तत्परिहाराय नेत्येतत्प्रकारान्तरेण व्याचष्टे ॥ **मैवमिति** ॥ सत्यपदेन विष्णोरुक्तिः नेत्यर्थ इति भावः । कुतो नेत्यतो व्यतिहार इतरवदित्यंशव्यावर्त्यपूर्वपक्षमाह ॥ **अस्तीति** ॥ एतेन नेत्यस्य प्रश्नप्रतिवचनेनेत्यर्थो भवति ।

ननु प्रश्नप्रतिवचनाश्रवणेऽपि तदध्याहारेण यः सत्यपदेनेत्यादेः प्रकरणान्तरत्वं सम्भवतीत्यतो न प्रकरणान्तरकल्पनं युक्तम् । यतो न तत्कल्पकमिति नेत्यस्यार्थान्तरं मत्वा विशिंषन्तीति सूत्रखण्डव्यावर्त्याशङ्कामाह ॥ **कारणविशेषेति** ॥ पूर्वपक्षफलप्रदर्शकतयापि नेत्येतद्व्याचष्टे ॥ **अत इति** ॥ सूत्रे उपदेश इत्यनेन लब्धमुपदिष्टं प्राणात्परमात्मन उत्तमत्वमिति वाक्यमादाविवान्वीयते । तच्च नेत्युक्तपूर्वपक्षप्रतिक्षेपे हेतुरिति भावेन प्रवृत्तमुक्तमिति भाष्यं व्याचष्टे ॥ **श्रुताविति** ॥ प्रतिसन्धिरित्युक्तन्यायप्रदर्शकस्येतरव्यतिहार इत्यस्य हि यतः इतरवद्विशेषणापेक्षितस्यात्यधिकस्य

(वाक्यार्थमुक्तावली)

प्रश्नादेर्हार आहार अध्याहार इति यावत् । कर्तव्यः । अतः प्राणात्परमात्मन उत्तमत्वमुक्तमित्यन्वयमभिप्रेत्यार्थ उक्तः । **पूर्वोक्ताध्याहारेणेति** । पूर्वोक्तिवत् प्रश्नप्रतिवचनाध्याहारेणेत्यर्थः । अध्याहारेण प्रकरणविच्छेदकारणमुक्तं विशिंषन्ति हीति । हि यस्मात् प्राणवादिनः अतिवादित्वमुक्त्वा एष तु वाऽतिवदति यः सत्येनातिवदतीति प्राणातिवादिनः सकाशात्सत्यवादिनं तुशब्देन विशिंषन्ति यः सत्यं वदति स तु प्राणस्यातिशयवस्तुवादिनोऽपि विशेषेणातिशयवस्तुवादीति विशिष्टं ज्ञापयन्तीत्यर्थः । एवं सत्यवादिनं विशिंषन्तः प्राणात्सत्यमपि विशिंषन्ति । अतः प्रकरणभेदसद्भावात् व्यतिहारः । व्यतिहारेण च प्राणात्सत्यस्योत्तमत्वमिति भावेन प्रवृत्तं प्रश्नाध्याहारेणेति भाष्यं व्याचष्टे । प्रश्नाद्यभावादित्यादिना भाव इत्यन्तेन । **प्रश्नाध्याहारेणेति** । पूर्वोक्तवदिति पूरणीयम् ॥ **तेनेति** ॥ तुशब्देन सत्यातिवादिनो विशेषितत्वेन सत्यात्प्राणस्यापि विशेषितत्वात्प्राणोऽप्यन्यः सत्योऽप्यन्य इति इतरवदिति दृष्टान्तांशस्येतरवद्विशिंषन्ति इत्यत्रापि सम्बन्धं यथा प्रश्नादिना नामादितो वागादिकं विशिंषन्ति तथा तुशब्देन प्राणात्सत्यं विशिंषन्तीत्यर्थं च मत्वा यथेतरेष्विति भाष्यं व्यावर्त्यपूर्वं व्याचष्टे । **नन्वित्यादिना** ॥ **स्मृतिं चेति** ॥ हिशब्दसूचितमिति शेषः ।

## तत्त्वसुबोधिनी

**प्राणात्परमेश्वरस्येति** ॥ पूर्वसूत्रे **उपदेशवदिति** ॥ प्राणात्परमात्मनः उत्तमत्वस्योपदिष्टत्वात्तदविरोधेनैव सर्वेभ्य इति वाक्यस्य सर्वशब्दस्यार्थो ग्राह्य इत्यभिहिते तदेव कथमित्याक्षेपोत्थानादनन्तरसङ्गतिरिति भावः । **अन्यथेति** । ईश्वरस्योत्तमत्वाभावे इत्यर्थः । **विप्रतिपत्तिरिति** । हिरण्यगर्भः सर्वोत्तम इति केषांचनामतं अपरेषां विष्णुः सर्वोत्तम इति । एवं च विप्रतिपत्तेः मध्यस्थस्य संशयो भवतीत्यर्थः ॥ **प्रकारणान्तरवदिति** ॥ अस्ति भगवो नाम्नो भूय इति । नाम्नो वा भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति वाग्वाव नामो भूयसीत्यादिना नामवागादिप्रकरणान्तरवदित्यर्थः । अनेन सौत्रेतरवदित्यस्यार्थ उक्तो भवति । ननु प्रश्नवचनाश्रवणेऽपि तदध्याहारेण यः सत्येनेत्यादेः प्रकरणान्तरत्वं सम्भवतीत्यत आह ॥ **कारणविशेषमिति** ॥ तुशब्दरूपविशेषणस्य कथं भेदकत्वं इत्यतः तत्सम्भवाय तदर्थमाह ॥ **यः सत्यमिति** ॥

## वाक्यार्थविवरणम्

**विप्रतिपत्तिरिति** ॥ हरिहरहिरण्यगर्भाणां त्रयाणामपि समत्वस्य कैश्चिदभिधानादिति भावः । नन्वेवं विप्रतिपत्तौ हिरण्यगर्भादुत्तमो न वेति सन्देहोपपत्तावपि प्राणादुत्तमो न वेति सन्देहः कथमुपपद्यत इत्यत उक्तं प्राणस्य **हिरण्यगर्भत्वादिति** ॥ प्रश्नप्रतिवचनाभावादित्यन्वयः । तत्र व्यतिरेकदृष्टान्तः ॥ **प्रकरणान्तरवदिति** ॥ नामादिप्रकरणे यथा प्रश्नप्रतिवचने स्तस्तथाऽभावादिति भावः । ननु प्रकरणभेदकप्रश्नाद्यध्याहारेण प्राणाद्विष्णोरेवाधिक्यं वक्तव्यमित्यत आह ॥ **प्रकरणेति** ॥ प्राणप्रकरणयस्सत्येनेतिप्रकरणयोरित्यर्थः ॥ **भेदेति** ॥ भिन्नार्थप्रतिपादकत्वेत्यर्थः ॥ **प्राण एवेति** ॥ तथा च सत्यवं प्राणस्य विशेषणमित्यर्थः ॥ **तदितीति** ॥ सत्यपदमित्यर्थः । तथा च सत्यपदोदितो न विष्णुरिति भावः ॥ **अध्याहारेति** ॥ अध्याहारं कृत्वा भिन्नप्रकरणत्वकल्पने कारणाभावादित्यर्थः ॥ **ततश्चेति** ॥ प्राणातिवादिनः सकाशात् ॥ अयम् । प्राणपदोदितः । असौ । सत्यपदोदितः । सूत्रे सप्तम्यर्थे वतिरित्याशयेन भाष्ये यथेतरेष्वित्युक्तम् । 'स तु' इत्यत्रत्यः तुशब्दः प्राणातिवादिनोऽपीत्यतः परं योज्यः । तस्य व्याख्यानं **विशेषेणेति** ॥

## वाक्यार्थमञ्जरी

वादिविप्रतिपत्तेर्हिरण्यगर्भविषय एव सद्भावादाह ॥ **प्राणस्येति** ॥ **एष तु वेति** ॥ योऽधिकारी सन्निर्दोषश्चासौ यो नियामकश्चेति सत्यो विष्णुस्तेनातिवदति तमतिशयितं वक्तीति यावत् स एषः प्रागुक्तप्राणातिवाद्यपेक्षया तु विशेषेणातिवदतीत्यर्थः ॥ **अस्ति भगव इति** ॥ नामवागादि-प्रकरणान्तरेऽस्ति भगवो नाम्नो भूय इति नाम्नो वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति नारद-प्रश्नवत् 'वाग्वाव नाम्नो भूयसी' इति सनत्कुमारप्रतिवचनवच्चास्ति, 'भगवः प्राणाद्भूय' इत्यादि-प्रश्नस्य 'सत्यं वाव'इत्यादि परिहारस्य चाभावादित्यर्थः । सत्यपदं विष्णुपरमेव नेत्याह ॥ **सत्यपदेनेति** ॥ ननूक्तभंग्या प्रश्नाद्यध्याहारेण यःसत्येनेत्यादेः प्रकरणान्तरत्वात् कथं सत्यपदं प्राणपरमित्यत उक्तम् ॥ **कारणविशेषमिति** ॥

ॐ व्यतिहारो विशिंषन्ति हीतरवत् ॐ ॥ सत्यप्रकरणे प्रश्नप्रतिवचनयोर्व्यतिहारोऽध्याहारः कार्यः कुतः इतरवत् प्रश्नप्रतिवचनाभ्यां नामादितो वागादिकमिव प्राणात्सत्यं तुशब्देन विशिंषन्ति

(वाक्यार्थमञ्जरी)

व्यावर्तयन्ति छन्दोगा हि यस्मात्तस्मादित्यर्थः ॥ **स वा इति** ॥ स एषोऽधिकारी एवं विजानानः शृण्वन् मन्वानो विचारयन् पश्यन् ध्यायन्नतिवादी प्राणाख्योत्तमवस्तुवादी भवतीत्यर्थः । अयं सत्योऽसौ प्राण एकवस्तुज्ञानिनस्तारतम्यायोगादिति भावः । एतत् तुशब्दाख्यम् ॥ **प्राणात्सत्यस्येति** ॥ प्राणात्सत्यस्योत्तमत्वाभावे तद्वादिनस्तद्वाद्यपेक्षया आधिक्यायोगादिति भावः ।

**॥ इति व्यतिहाराधिकरणम् ॥ २३ ॥**

## २३. सत्याद्यधिकरणम्

कृतिर्निष्ठां विज्ञानमित्यादीनां भेदाद्बहव उत्तमा इति चेन्न —

**॥ ॐ सैव हि सत्यादयः ॐ ॥ ३९ ॥**

सत्यादिगुणास्तस्या एव परदेवतायाः स्वरूपभूताः । ब्रह्मतर्के च —

'नामादिप्राणपर्यन्ताद्यो हि सत्यादिरूपवान् ।
तस्मै नमो भगवते विष्णवे सर्वजिष्णव' इति ॥
'सत्याद्या अहमात्मान्ता यद्गुणास्समुदीरिताः ।
तस्मै नमो भगवते यस्मादेव विमुच्यत' इति चाध्यात्मे ॥

### तत्त्वप्रदीपिका

'सत्यं त्वेव विजिज्ञासितव्यं' 'विज्ञानं त्वेव विजिज्ञासितव्यं' 'मतिस्त्वेव विजिज्ञासितव्या' इत्यादिना प्राणादुपर्युपदिश्यमानानामुपर्युपरि विशेषत एव जिज्ञास्यत्वेनोच्यमानानां सत्यविज्ञानमतिश्रद्धानिष्ठाकृतिसुखभूमाहंकारात्मनामन्योन्यभेदात्परमात्मनोऽपि बहव उत्तमाः स्युः। अन्यथा विशेषणं भेदोपपादकं न स्यादित्यत आह– **सैव हि सत्यादयः ॥** या ब्रह्मादीना-मुपास्यत्वेन प्रपञ्चितगुणा या चाक्षरशब्देन स्वदर्शिनामविरोधनेत्री समभिहिता या च प्राणा-त्प्रतिपादिताधिक्या तस्या एव परमदेवातायाः स्वरूपाणि सत्यादीनि । न त्वत्रान्य उच्यन्ते, परमत्वादेव । तदुत्तमे प्रमाणाभावात् । 'तत्तेजोऽसृजत'इत्युक्त्वा 'सेयं देवता' इतिवन्न विरोधः स्त्रीलिङ्गोक्त्यो कृतिर्निष्ठेत्यादिशब्दवाच्यत्वमप्युचितमिति ज्ञापयतः ।

'स्त्रीगुणाः पुङ्गुणाश्चैव नपुंसकगुणा अपि ।
यदधीना व्यत्ययः स्याल्लिङ्गानां तत्र सर्वशः ।
कः किं कं तत्सर्वमात्माऽदितिर्देवादयस्ततः' इति लिङ्गनिर्णये ॥

तस्य च बहुगुणानामुपास्यानामत्र प्रकटनीयत्वाद्बहुवचनमविरुद्धम् । विशेषणस्य च स्वरूपभेदानापादकत्वेऽपि विशेषमात्रमापाद्य कृतकृत्यत्वम् । 'एप तु वा अतिवदति' इति भेदानुक्तौ सर्वश्रुतिसिद्धप्राणपरमात्मभेदाभावप्रसङ्गः ।

(वाक्यार्थमञ्जरी)

व्यावर्तयन्ति छन्दोगा हि यस्मात्तस्मादित्यर्थः ॥ **स वा इति** ॥ स एषोऽधिकारी एवं विजानानः शृण्वन् मन्वानो विचारयन् पश्यन् ध्यायन्नतिवादी प्राणाख्योत्तमवस्तुवादी भवतीत्यर्थः । अयं सत्योऽसौ प्राण एकवस्तुज्ञानिनस्तारतम्यायोगादिति भावः । एतत् तुशब्दाख्यम् ॥ **प्राणात्सत्यस्येति** ॥ प्राणात्सत्यस्योत्तमत्वाभावे तद्वादिनस्तद्वाद्यपेक्षया आधिक्यायोगादिति भावः ।

**॥ इति व्यतिहाराधिकरणम् ॥ २३ ॥**

## २३. सत्याद्यधिकरणम्

कृतिर्निष्ठां विज्ञानमित्यादीनां भेदाद्बहव उत्तमा इति चेन्न —

**॥ ॐ सैव हि सत्यादयः ॐ ॥ ३९ ॥**

सत्यादिगुणास्तस्या एव परदेवतायाः स्वरूपभूताः । ब्रह्मतर्के च —

'नामादिप्राणपर्यन्ताद्यो हि सत्यादिरूपवान् ।
तस्मै नमो भगवते विष्णवे सर्वजिष्णव' इति ॥
'सत्याद्या अहमात्मान्ता यद्गुणास्समुदीरिताः ।
तस्मै नमो भगवते यस्मादेव विमुच्यत' इति चाध्यात्मे ॥

### तत्त्वप्रदीपिका

'सत्यं त्वेव विजिज्ञासितव्यं' 'विज्ञानं त्वेव विजिज्ञासितव्यं' 'मतिस्त्वेव विजिज्ञासितव्या' इत्यादिना प्राणादुपर्युपदिश्यमानानामुपर्युपरि विशेषत एव जिज्ञास्यत्वेनोच्यमानानां सत्यविज्ञानमतिश्रद्धानिष्ठाकृतिसुखभूमाहंकारात्मनामन्योन्यभेदात्परमात्मनोऽपि बहव उत्तमाः स्युः। अन्यथा विशेषणं भेदोपपादकं न स्यादित्यत आह– **सैव हि सत्यादयः** ॥ या ब्रह्मादीनामुपास्यत्वेन प्रपञ्चितगुणा या चाक्षरशब्देन स्वदर्शिनामविरोधनेत्री समभिहिता या च प्राणात्प्रतिपादिताधिक्या तस्या एव परमदेवातायाः स्वरूपाणि सत्यादीनि । न त्वत्रान्य उच्यन्ते, परमत्वादेव । तदुत्तमे प्रमाणाभावात् । 'तत्तेजोऽसृजत'इत्युक्त्वा 'सेयं देवता' इतिवन्न विरोधः स्त्रीलिङ्गोक्त्यो कृतिर्निष्ठेत्यादिशब्दवाच्यत्वमप्युचितमिति ज्ञापयतः ।

'स्त्रीगुणाः पुङ्गुणाश्चैव नपुंसकगुणा अपि ।
यदधीना व्यत्ययः स्याल्लिङ्गानां तत्र सर्वशः ।
कः किं कं तत्सर्वमात्माऽदितिर्देवादयस्ततः' इति लिङ्गनिर्णये ॥

तस्य च बहुगुणानामुपास्यानामत्र प्रकटनीयत्वाद्बहुवचनमविरुद्धम् । विशेषणस्य च स्वरूपभेदानापादकत्वेऽपि विशेषमात्रमापाद्य कृतकृत्यत्वम् । 'एष तु वा अतिवदति' इति भेदानुक्तौ सर्वश्रुतिसिद्धप्राणपरमात्मभेदाभावप्रसङ्गः ।

(तत्त्वप्रदीपिका)

'अतिवादी प्राणवादी सत्यवादी विशेषतः ।
स सत्यो भगवान्विष्णुः यन्निर्दोषो नियामकः ॥
विशिष्टज्ञानरूपश्च सामान्यज्ञानरूपकः ।
नित्यश्रद्धास्वरूपश्च तथैव स्थैर्यरूपकः ॥
स एव सर्वकर्ता च सम्पूर्णानन्दरूपकः ।
स च सर्वगुणैः पूर्णो भूमेत्युच्चार्यते ततः ॥
यदधीनं विना नान्यत्किञ्चिदस्ति कुतश्चन ।
स भूमोक्तोऽतिपूर्णत्वादन्यदल्पमितीर्यते ॥
स सर्वगुणसम्पूर्णः सर्वदेशेषु सर्वदा ।
स्वतन्त्रः सर्ववस्तूनि तदधीनानि सर्वशः' इति परमसारे ॥

## तत्त्वप्रकाशिका

अत्र भगवदापरोक्ष्यसाधनोपासनाधिकारिणः प्राणाद्विष्णोरेवोत्तमत्वसाधनादस्ति शास्त्रादिसङ्गतिः । अनेकेषामुत्तमत्वे प्रागुक्तमयुक्तं स्यादित्येकस्यैवोत्तमत्वं समर्थनीयम् । प्रकृतः प्राण एव विषयः । किं तस्मात्सत्यपदोदितविष्णुरेवोत्तमः किमन्योऽप्यस्तीति सन्देहः । विष्णुरुत्तम इत्युक्तेरुभयथा सम्भवः सन्देहबीजम् । पूर्वपक्षयति ॥ **कृतिरिति** ॥ न केवलं प्राणात्सत्यपदोक्तो विष्णुरेवोत्तमोऽपि तु बहवोऽप्युत्तमाः सन्ति । सत्यादप्युपरि विज्ञानमतिश्रद्धानिष्ठाकृतिसुखभूमाहङ्कारात्मनामुक्तत्वात् । न च विज्ञानादीनां सत्येनाभेदान्न बहूनामुत्तमत्वं प्राणादिति वाच्यम् । तेषामभेदोक्त्यादिकारणविशेषं विना प्राणं विहायाभेदग्रहणस्यान्याय्यत्वात् । अतः प्राणादपि बहूनामुत्तमत्वात्तस्य विष्णुं विना सर्वोत्तमत्वं विष्णोर्निरुपचरितसर्वोत्तमत्वं च न युक्तमिति भावः । पूर्वपक्षं प्रतिषेधति ॥ **नेति** ॥ तत्र हेत्वाकाङ्क्षायां सूत्रमुपन्यस्य व्याचष्टे ॥ **सैवेति** ॥ न प्राणादधिका बहव इति युक्तम् । यस्मात्सत्यादयोऽहंकारात्मान्ताः सा ईश्वराख्या परदेवतैव न तु ततो भिन्नाः । न च वाच्यमभेदानुक्तेर्भेद एव तेषामिति । 'सत्यं भगवो विजिज्ञासे' इति सत्याख्यस्य भगवतो गुणजिज्ञासायां तद्गुणत्वेन तदविनाभूतज्ञानस्योक्तत्वात् । तथोत्तरत्रापि विज्ञानादिकथनस्याऽसङ्गतत्वादिति भावः । अत्र कृतिनिष्ठाद्यनुसारेण स्त्रीलिङ्गप्रयोगः । अत एव शङ्काभाष्ये विज्ञानस्यादित्वेऽपि कृतिर्निष्ठेत्युक्तम् । अत्रैव हिशब्दसूचितां स्मृतिमाह ॥ **ब्रह्मतर्के चेति** ॥ नन्वस्तु भूमान्तानां भगवद्गुणत्वोक्त्याऽभेदो न त्वहङ्कारात्मनोस्तयोरभेदानुक्तेरित्यत आह ॥ **सत्याद्या इति** ॥

(तत्त्वप्रकाशिका)

**पूर्ववदभेदानुक्तावप्यहंकारात्मनोरस्त्येव भगवत्स्वरूपत्वमित्यत्र हेतुर्यस्मादिति । 'स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नात्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स्वराड् भवति' इत्यहंकारात्मज्ञानान्मोक्षः श्रूयते । मोक्षश्च भगवज्ज्ञानादेव । अतस्तयोस्तत्स्वरूपत्वमिति भावः । किं च 'स एवाऽधस्तात्' इत्यादिनोदितं यद्भूम्नः पूर्णत्वं तदेवाहंकारात्मनोरुच्यते । 'अहमेवाधस्तादात्मैवाधस्तात्' इति तथा श्रुत्यन्तरे सर्वेषामपि पूर्णत्वमुच्यते 'सत्यं पूर्णम्' इत्यादिना । अतः सत्यादीनामात्मान्तानां भगवत्स्वरूपत्वेन स एव प्राणादुत्तम इत्युक्तमुपपन्नमिति सिद्धम् ।**

## गुर्वर्थदीपिका

अत एव शङ्काभाष्य इत्यत्रात एवेत्युपलक्षणम् । सम्भावितब्रह्माऽभेदेभ्यो ज्ञानादिभ्योऽप्यनित्यक्रियारूपकृतेरसम्भावितब्रह्माभेदत्वेन पूर्वपक्षप्रापकत्वात्तस्या एवादौ ग्रहणमित्यपि ग्राह्यम् । सूत्रकारोऽपि स्त्रीलिङ्गपदवाच्यगुणानां बहुत्वात्तत एव तेषां ब्रह्मण्यसम्भव इति शङ्कानिवारणाय च सा परदेवतेति विशेष्यं निर्देष्टुं सैवेत्याह । न त्वहंकारात्मनोरित्यस्य 'सत्यं भगवो विजिज्ञासे' इतिवद्भूम्नां भगवो विजिज्ञास इत्यभेदज्ञापकप्रश्नाभावादित्यर्थः । इदं चोपलक्षणम् । 'अथात अहमादेशः' 'अथात आत्मादेशः' इत्युभयोरपि प्रकरणान्तरत्वोक्त्या भेदबोधकसम्भवाच्चेति द्रष्टव्यम् । यद्यप्युपसंहारवाक्योक्ता मुक्तिः सत्याद्यात्मान्तसकलभगवद्गुणज्ञानस्यापि फलरूपतयाऽन्वेति । तथाऽप्यहङ्कारात्मनो भगवद्गुणत्वे ज्ञापकान्तराभावादिदमेव ज्ञापकमिति भावेनोक्तमहङ्कारात्मज्ञानादिति ।

## भावबोधः

**प्राणाद्विष्णोरेवेति** । पूर्वसूत्रे प्रश्नाद्यध्याहारेण 'यः सत्येनातिवदति' इति वाक्यस्य प्राणाद्विष्णोरुत्तमत्वप्रतिपादकत्वोक्तौ तन्न्यायेनैव 'यदा वै विजानात्यथ सत्यं वदति न विजानन् सत्यं वदति विजानन्नेवं सत्यं वदति विज्ञानं त्वेव विजिज्ञासितव्यं' इत्यादिवाक्यानामपि सत्यादिभ्यो विज्ञानादीनामुत्तमत्वप्रतिपादकत्वस्य वक्तुं शक्यत्वात् । न विष्णोरेव प्राणादुत्तमत्वमित्याक्षेपोत्थानादनन्तरसङ्गतिरिति भावः । **किं तस्मादिति** । अत्र किं प्राणो विष्ण्वाद्यनेकोत्तमयुक्त उत विष्णुमात्रोत्तमयुक्त इति चिन्ता । तदर्थं 'यदाह वै विजानाति' इत्यादीनि

(भाववोधः)

वाक्यानि किं विष्ण्वन्यप्रतिपादकानि उत विष्णोरेव प्रतिपादकानीति । तदर्थं तेषां विष्ण्वभेदज्ञापकं नास्त्युतास्तीति । सत्यादीनामभेदानुक्तेरन्यत्वमिति न्यायविवरणं तन्निरसनीयाशङ्कानिरासपूर्वकं योजयति– **न च विज्ञानादीनामित्यादिना ॥** प्राणं विहायेति वदता अभेदोक्त्यादिविशेष-कारणाभावेऽपि यद्यभेदोऽङ्गीक्रियते तर्हि प्राणस्यापि सत्येनाभेदः स्यादित्यतिप्रसङ्गः सूचितो भवति । सत्यादय आत्मान्ताः सा परदेवतेति वक्तव्ये सत्यादिगुणाः तस्या एव परदेवतायाः स्वरूपभूता इति वचनं 'यदाह वै विजानाति' इत्यादि वाक्यस्यास्य विज्ञानादीनां सत्यादि-स्वरूपभूतगुणप्रतिपादकत्वेन अभेदानुक्तिरूपपूर्वपक्षहेतोरसिद्धिज्ञापनार्थं इत्यभिप्रायेण तद्भाष्यं व्याचष्टे– **सत्यं भगव इत्यादीनामिति ॥ अभेदानुक्तेरिति ॥** 'सत्यं भगवो विजिज्ञासे' इति सत्यादिरूपभगवद्गुणजिज्ञासायां 'यदाह वै विजानाति' इत्यादिविज्ञानादीनां तद्गुणत्वेनोपदेशवत् 'भूमानं भगवो विजिज्ञासे' इति भूम्नो गुणजिज्ञासायां 'यत्र नान्यत् पश्यति' इत्यादिना दृश्यत्वादे-रेवोपदेशेनाहंकारस्य तद्गुणत्वोपदेशाभावात् तथा 'अहंकारं भगवः' इत्येवंरूपस्य जिज्ञासावाक्यस्य तद्गुणत्वेनात्मोपदेशस्य चाभावादिति भावः । अत्रैव 'हि' शब्दसूचितां न्यायविवरणोदाहृतां श्रुतिं चाह– **श्रुत्यन्तर इति ॥**

## भावदीपः

अत्रापि सङ्गत्युपपादनायाधिकारिण इत्यन्तोक्तिः । फलमाह ॥ **अनेकेषामिति ॥ प्रागुक्त-मिति ॥** तेभ्यः प्राणस्य तस्माच्चेत्यादिना सर्वस्मात्प्राणस्योत्तमत्वं ततो विष्णोर्निरुपचरितमुत्तमत्वं यत्प्रागुक्तं तदयुक्तं स्यादित्यर्थः । एतेन प्रागुक्तप्रमेयसमर्थनात्पूर्वसङ्गतिरपि सूचिता ॥ **प्रकृत इति ॥** विष्णूत्कर्षावधित्वेन सर्वाधिकार्युत्तमत्वेन च प्रकृत इत्यर्थः । बहवोऽप्युत्तमा इति भाष्योक्त-प्रतिज्ञार्थमाह ॥ **न केवलमिति ॥** कुत इत्यतः स्वयं हेतुमाह ॥ **सत्यादपीति ॥** विज्ञानं त्वेव विजिज्ञासितव्यं, मतिस्त्वेव विजिज्ञासितव्येत्यादिनोक्तत्वादित्यर्थः । भाष्योक्तहेतुं योजयितुमाह ॥ **न चेति ॥** भाष्योक्तहेतोर्निर्बीजत्वनिरासाय सत्यादीनामभेदानुक्तेरन्यत्वमित्यन्यत्रोक्तबीजं व्यंजयन् कृतीत्यादिभाष्यभावार्थमाह ॥ **तेषामिति ॥** विज्ञानादीनामित्यर्थः । भाष्ये कृत्यादित्वेन निर्देशस्य कृत्यमग्रे व्यक्तम् ॥ **फलोक्त्योपसंहरति ॥ अत इति ॥** सत्यादीनामभेदानुक्त्या यतो भेदोऽत इत्यर्थः । सूत्रार्थस्य पूर्वपक्षनिषेधहेतुत्वं पूर्वपक्षनिषेधपूर्वं सूत्रार्थोक्त्या व्यनक्ति ॥ **न प्राणादिति ॥**

(भावदीपः)

स्त्रीलिङ्गनिर्वाहार्थमुक्तं **परदेवतेति** तच्छब्दस्य प्रकृतपरामर्शद्योतनायेश्वराख्येति । **सर्वेशात्प्राणा-त्परत्वेनोत्तमत्वेन** पूर्वत्र प्रकृतेत्यर्थः । सैत्रैवकारव्यावर्त्यमाह ॥ **न त्विति** ॥ भाष्यं व्यावर्त्य-शङ्कानिरासपूर्वं व्याचष्टे ॥ **न च वाच्यमिति** ॥ भगवो भगवन् हे सनत्कुमार । मतुवसो रु सम्बुद्धौ छन्दसि । जिज्ञासायां नारदस्येति शेष. ! यदा वै विजानात्यथ सत्यं वदति नाविजानन् सत्यं वदतीत्यादिश्रुतिशेषार्थः ॥ **तदविनाभूतेति** ॥ सूत्रे सेति भाष्ये तस्या एवेति च स्त्रीलिङ्गोक्तौ बीजमाह ॥ **अत्रेति** ॥ सूत्रादावित्यर्थः ॥ **कृतिर्निष्ठेत्युक्तमिति** ॥ अन्यथा हि छान्दोग्ये सत्यानन्तरं विज्ञानमतिश्रद्धानिष्ठाकृत्यादीनामुक्तेर्विज्ञानं मतिः श्रद्धेत्यादीनामित्युक्तिर्भाष्ये स्यादिति भावः ।

न चैवमपि मतिः श्रद्धानिष्ठाकृतिरित्यादीनामित्युक्तिः स्यादिति शङ्क्यम् । सत्यं पूर्णं कृतिः पूर्णा, निष्ठा पूर्णा, श्रद्धा पूर्णेत्यादिन्यायविवरणोक्तश्रुत्यन्तरानुरोधेन कृतिर्निष्ठेत्यादिनिर्देशात् । पत्यादिशब्देभ्य इति निर्देशवत् । केचित्तु कृतिरित्येकदेशद्वारा प्रकृतिशब्दस्मारणेन प्रकृतिनयोक्ता व्यवहितप्रसवहेतुपरमपुरुषात्सत्यपदार्थादन्यत्वमित्यपि शङ्काव्युदासायेत्याहुः । तत्वप्रदीपे तु 'स्त्रीगुणाः पुंगुणाश्चैव नपुंसकगुणास्तथा । यदधीना व्यत्ययः स्याल्लिङ्गानां तत्र सर्वशः' इति स्मृतेरुपास्यगुणानामत्र प्रकटनीयत्वात्कृत्याद्यपेक्षया स्त्रीलिङ्गोक्तिरित्युक्तम् ॥ **न त्वहंकारेति** ॥ तत्र भूमानं भगवो विजिज्ञास इति प्रश्नेऽहंकारोपदेशाप्रवृत्तेरहंकारं 'भगवो विजिज्ञास' इति तद्गुण-जिज्ञासादेरश्रवणाच्चेति भावः । हेतुत्वं व्यनक्ति ॥ **स वा एष इति** ॥ आत्मरतिरित्यत्रात्मशब्दो विष्णुवाची ॥ **भगवज्ज्ञानादेवेति** ॥ 'तमेवं विद्वानमृत' इत्यादेरिति भावः । ननु विज्ञानादेः सत्याभेदे विज्ञानं त्वेव विजिज्ञासितव्यं, मतिस्त्वेव विजिज्ञासितव्येत्यादिना उत्तरोत्तरस्य पूर्वपूर्वस्माद्विशेषणम् । अथातोऽहंकारादेश, अथात आत्मादेश इति प्रकरणविच्छेदकोक्तिश्च कथं युज्येतान्यथा प्राणात्सत्यस्याऽपि विशेषणं भेदकं न स्यादित्यतः स्मृत्युक्तयुक्तिं व्यक्तीकृत्य सैवेत्येवकारसूचितं छान्दोग्यभाष्योक्तं युक्त्यन्तरं चाऽऽह ॥ **किञ्चेति** ॥ **तदेवेति** ॥ एवमप्यह-मादेरविष्णुत्वे धर्मोपपत्तेश्चेति भूम्नो विष्णुत्वहेतोर्व्यभिचारः स्यात् । अथात इत्युक्तिस्तु अथ-शब्दस्य रूपान्तरापेक्षया युज्यतेऽतःशब्दस्तत्प्रसादादिति छान्दोग्यभाष्यदिशा युक्तेति भावः ॥ **श्रुत्यन्तर इति** ॥ न्यायविवरणोक्त इत्यर्थः । सर्वेषां सत्याद्यात्मान्तानामित्यर्थः । एवं च

(भावदीपः)

सत्यादीनामैक्ये प्रमिते सति यत्तु शब्दादिना विशेषणमुक्तं तत्तु तत्वप्रदीपोक्तदिशा भेदप्रतिनिधि-विशेषमात्रेणोपपन्नमिति भावः ॥ **अत इति** ॥ पूर्वपूर्वगुणजिज्ञासाया उत्तरोत्तरस्य प्रवृत्तत्वादह-मात्मनोर्भगवल्लक्षणवत्त्वाच्चेत्यर्थः । विवृतं चाऽहंकारस्य ब्रह्मत्वं न्यायामृते अहमर्थस्यानात्मत्वभङ्गे ।

## अभिनवचन्द्रिका

**विष्णोरेवोत्तमत्वसाधनादिति** ॥ प्राणादुत्तमेषु भेदनिर्वाह्यबहुत्वसमानाधिकरणोत्तमत्व-निरासादस्ति शास्त्रादिसङ्गतिरित्यर्थः । एतेन विष्णोरेवोत्तमत्वसाधनादित्ययुक्तम् । प्राणादुत्त-मत्वेनाशङ्कितानां विज्ञानादीनां प्राणोत्तमत्वस्य निराकर्तुमशक्यत्वादिति परास्तम् । विष्णोरेवेत्यनेन विज्ञानादिषु परमात्मभेदनिर्वाह्यबहुत्वसमानाधिकरणप्राणोत्तमत्वनिरासादित्यर्थस्याभिमतत्वात् ॥ **प्राण एव विषय इति** ॥ संशयकोट्यवधिरित्यर्थः । एतेन अस्याधिकरणस्य विष्णुविषयत्वात् प्राणो विषय इति कथनमयुक्तमिति परास्तम् । एककोटिकमनेकधर्मिकं संशयमाह– **किं तस्मादिति** ॥ प्राणोत्तमत्वं भेदनिर्वाह्यबहुत्वेन सह सत्यादिष्वस्ति न वेति सन्देह इति भावः ॥ **विष्णुरुत्तम इत्युक्तेरिति** ॥ 'एष तु वा अतिवदति' इति विष्णोरुत्तमत्वोक्तेरित्यर्थः । **बहवोऽप्युत्तमा इति** ॥ भेदनिर्वाह्यबहुत्वोपेता इत्यर्थः । विज्ञानादीनां प्राणोत्तमत्वे युक्तिमाह **सत्यादप्युपरीति** ॥ तेषु भेदनिर्वाह्यबहुत्वाऽसिद्धिं शङ्कते **न चेति** ॥ **तेषामिति** ॥ यद्यपि अभेदोक्त्यादिकारणविशेषं विनेत्येतावदेवालम्, तथापि यद्यभेदोक्त्यादिकारणं विना विज्ञानादीनां सत्यादभेदोऽङ्गीक्रियते तर्हि प्राणेनापि विज्ञानादीनामभेदोऽङ्गीक्रियताम्, अविशेषादित्यतिप्रसङ्गसूचनाय प्राणं विहा-येत्युक्तम् ॥ **तत्र हेत्वाकाङ्क्षायामिति** ॥ परस्परं भेदनिर्वाह्यबहुत्वसमानाधिकरणप्राणाधिक्योपेता इति न युक्तमित्यर्थः । एतेन सत्यादीनां प्राणाधिकत्वात् न प्राणाधिका बहव इत्ययुक्तमिति परास्तम् ॥ **यस्मादिति** ॥ परस्परभेदाभावात् विशिष्टाभाव इति भावः । यद्यपि आत्मान्ता इति वक्तव्यम्, तथापि येषामात्मनो विष्णुत्वनिश्चयः तान्प्रति अहङ्कारान्ताः सा परदेवतेति वक्तव्यम् । येषां तु आत्मन्यपि सन्देहः, तान्प्रति आत्मान्ताः सेति वक्तव्यमिति ज्ञापनाय अहङ्कारात्मान्ता इत्युक्तम् ॥ **गुणजिज्ञासायामिति** ॥ पूर्णगुणस्यापि कृष्णस्य कृष्णकेशत्ववत् भगवद्रूपस्यापि विज्ञानस्य सत्याख्यभगवद्गुणत्वस्यापि भावात्, सत्याविनाभूत विज्ञानाख्यरूपस्य सत्याख्यभगव-द्गुणत्वेनोक्तत्वात् गुणगुणिनोश्चाभेदात् गुणत्वोक्त्यैवाभेदलाभ इति भावः । इदमुक्तं भवति 'सत्यं

(अभिनवचन्द्रिका)

भगवो विजिज्ञास' इति नारदेन पृष्टः सनत्कुमारः 'यदा वै विजानात्यथ सत्यं वदति' इति सत्याविनाभूतं विज्ञानाख्यं रूपमाह । न चेदं यथाश्रुतं तत्प्रश्नोत्तरं भवति । तेन मन्यामहे विज्ञानगुणकः सत्य इत्येवं विस्पष्टाभिधाने अयोग्यानामपि प्रतीतिः स्यात् । अवश्यवेद्यं रूपान्तरं च अप्रस्तावितं स्यात्, तन्माभूदिति सत्याविनाभूतम् अवश्यवेद्यं विज्ञानाख्यं रूपं सत्यस्य गुणोऽपि भवतीत्याशयेन 'यदा वै विजानाति इत्याद्युपदिष्टमिति । एतेन विज्ञानस्य सत्यगुणत्वेनोक्तिः श्रुतावनुपलम्भात्, गुणत्वेनोक्तत्वादित्ययुक्तमिति परास्तम् । ननु सूत्रे सेतिऽस्त्रीलिङ्गप्रयोगोऽनुपपन्नः । सर्वत्र ब्रह्मणः प्रकृतत्वेन ब्रह्मशब्दानुसारेण नपुंसकलिङ्गप्रयोगस्यैव युक्तत्वादित्यत आह **अत्रेति ॥** कृतिनिष्ठादीनां स्त्रीत्वात् अस्त्रीभूतस्य ब्रह्मणः न कृत्याद्यैक्यमिति शङ्कानिरासाय, परमात्मनोऽपि स्त्रीरूपत्वात् न तदैक्यमनुपपन्नमिति सूचनाय स्त्रीलिङ्गप्रयोग इति भावः । भाष्ये नामादीति । नामादिप्राणपर्यन्तात् वर्गात् य अधिक इत्यर्थः । टीकायां तयोरभेदानुक्तेरिति । 'अथात अहङ्कारादेशः, अथात आत्मादेशः' इत्येव प्रारब्धत्वेन 'न सत्यं भगवो विजिज्ञास' इत्यादिवत् प्रश्नोत्तरयोरभावादार्थिकगुणत्वोक्तेरभावेनाऽभेदानुक्तेरित्यर्थः ।

पूर्वपक्षस्तु- न केवलं प्राणात्सत्यपदोक्तो विष्णुरेवोत्तमः अपि तु बहवः । सत्यादप्युपरि विज्ञानमतिश्रद्धानिष्ठाकृतिसुखभूमाहङ्कारात्मनामुक्तत्वात् । न च सत्यादीनामभेदः प्रमाणाभावात् । अतः प्राणादपि बहूनामुत्तमत्वात् तस्य विष्णुं विना सर्वोत्तमत्वं विष्णोर्निरुपचरितसर्वोत्तमत्वं न युक्तमिति ।

सिद्धान्तस्तु- न प्राणादधिका बहव इति युक्तं, सत्यादीनां सर्वेषां परदेवतात्वात् । न च अभेदोक्त्यभावः । 'सत्यं भगवो विजिज्ञास' इति प्रश्ने 'यथा वै विजानाति' इति तन्व्याप्तार्थान्तरोपदेशस्य कथमप्ययोगेन विज्ञानस्य सत्यगुणत्वाभिप्रायत्वात् । गुणस्य च गुणभिन्नत्वात् । एवमुत्तरत्रापि द्रष्टव्यम् । न चाऽहङ्कारात्मनोर्गुणप्रश्नोत्तराभावेन भूमाभेदाऽसिद्धत्वात् । एवमुत्तरत्रापि द्रष्टव्यम् । न चाऽहङ्कारात्मनोर्गुणप्रश्नोत्तराभावेन भूमाभेदाऽसिद्धिरिति वाच्यम् 'स वा एष एवम्' इत्यादिना अहङ्कारात्मज्ञानान्मोक्षाभिधानात् । 'स एवाधस्तात्' इति पूर्णत्वाभिधानाच्च । किं च सर्वेषां सत्यादीनां श्रुत्यन्तरे 'सत्यं पूर्णम्' इत्यादिना पूर्णत्वं भगवल्लक्षणमुच्यते । ततोऽपि सर्वेषां परमात्मैक्यम् । अतः सत्यादीनामात्मान्तानां भगवत्स्वरूपत्वेन स एव प्राणादुत्तम इत्युक्तमुपपन्नमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

प्रश्नाद्यध्याहारेण प्राणात्सत्यस्योत्तमत्वे तदध्याहारेण सत्यापेक्षया विज्ञानादेरुत्तमत्वं स्यात् । विज्ञानादेरभेदोक्त्यभावेऽपि सत्याभेदस्वीकारे प्राणस्यैव सत्येन विज्ञानाभेदः स्यादिति समान-न्यायेन आक्षेपादनन्तरसङ्गतिः ॥ **किमिति** ॥ अत्र किं प्राणः सत्याख्यविष्णुनेवानेकैरुत्तमैर्युक्त उत सत्याख्यविष्णुनैवोत्तमेन युक्त इति चिन्ता । तदर्थं विज्ञानादीनां सत्याभेदो न सम्भवत्युत सम्भवतीति । कृतिर्निष्ठा ज्ञानमित्यादीनामित्यनन्तरं शेषमाह ॥ **उक्तत्वादिति** ॥ भेदादित्ये-तदवतार्य व्याकुर्वंस्तदुपपादकतयानुक्तिरित्युक्तन्यायं योजयति ॥ **न चेत्यादिना** ॥ उक्त्या-दीत्यादिपदेन लिङ्गमुच्यते । अन्यायत्वमुपपादयितुं प्राणं विना विज्ञानादीनां सत्येनाभेदस्वीकारं सर्वत्र हिशब्दो यस्मादित्यर्थ इत्यभिप्रेत्य व्याचष्टे । ॥ **यस्मादिति** ॥ **सत्यादय इति** ॥ सत्यविज्ञानमतिश्रद्धानिष्ठाकृतिसुखभूमाहंकारात्मन इत्यर्थः । भाष्ये सत्यादयः साक्षरशब्देन प्रकृता परदेवतैव इति व्याख्यातव्ये सत्यादयो गुणा इति व्याख्यानेन व्यावृत्तिमाशङ्क्य निषेधति ॥ **न चेति** ॥ **अभेदसिद्धेरिति** ॥ अहिकुण्डलाधिकरणन्यायेनेति भावः । तथा चानुक्तिरूप-पूर्वपक्षहेतोरसिद्धिः । अक्षरशब्देन प्रकृतत्वादिति वक्तव्ये सेति स्त्रीलिङ्गप्रयोगे नियामकमाह ॥ **अत्रेति** ॥ कृतिर्निष्ठा इत्युक्तमिति । निष्ठाया आदित्वेऽपि कृत्युपपाद्यत्वात् कृतेरादितो ग्रहणम् । सत्यादीनां गुणगुणिभावो विना भावप्रकारश्च 'पूर्णत्वात्सुखरूपोऽसौ सर्वकर्ता सुखत्वतः । कर्तृत्वात् सुस्थिरश्चासौ स्थिरत्वादास्थिकस्तथा । आस्तिकत्वाच्च मन्तासौ विज्ञाता च ततो हरिः । विज्ञातृत्वाच्च निर्दोषो सर्वस्यापि नियामकः' इति च्छान्दोग्यभाष्यादाववगन्तव्यः । अत्र यद्वक्तव्यं तत्सर्वमन्यत्रानुसन्धेयम् । स्मृतिं चेति । न केवलं गुणत्वादभेदसिद्धिः । न केवलं हिशब्दो हेतुसूचकः स्मृतिसूचकश्चेति वा । नामादिप्राणपर्यन्तादुपरि सत्यादिरूपवानिति योज्यम् । सत्यादि-रुपवानिति सत्यादिनामकगुणस्वरूपवान् । तन्नामकरूपवांश्चेत्यर्थः ॥ **तयोरभेदानुक्तेरिति** ॥ सत्यं भगवो विजिज्ञासेत्यादिना सत्यादिगुणप्रश्ने यदा वै विजानात्यथ सत्यं वदतीत्यादिना सत्यं भगवो विजिज्ञासेति 'यो वै भूमा तत्सुखम्' इत्यन्तेन प्रश्नवचनेन सत्यादिभूमान्तानां गुणत्वोक्त्या-भेदोक्तिवत्, भूमानं भगवो विजिज्ञासेति भूम्नो जिज्ञासायां यत्र नान्यत्पश्यतीत्यादिना स एवाधस्तादित्यादिना च सर्वं स्वातन्त्र्यपूर्णत्वादेस्तल्लक्षणत्वोक्त्या तद्गुणत्वेनाहंकारोपदेशाभावात् ।

(वाक्यार्थमुक्तावली)
तथाहंकारं भगवो विजिज्ञासेति गुणजिज्ञासावाक्यस्यैवाभावेन आत्मनः तद्गुणत्वस्य सुतरामभावादिति भावः ॥ **पूर्ववदिति** ॥ गुणप्रश्नप्रतिवचनाभ्यामित्यर्थः । **अहंकारात्मनोरिति** ॥ अहंकारात्मनोरस्त्येव भगवत्स्वरूपत्वमित्यत्र मोचकत्वाख्यभगवल्लक्षणतो भगवतोऽनूनत्वाख्यो न्यायः यस्मादित्यत्रोच्यत इत्यर्थः । नन्वहमात्मनोर्लक्षणैक्येन ब्रह्मत्वेऽपि गुणत्वं न श्रूयते । प्रश्नप्रतिवचनाभावादित्यतो यद्गुणा इत्यस्य घटनामाह ॥ **किञ्चेति** ॥ गुणलक्षणलक्षितत्वात् गुणत्वमिति भावः । इति चेतिशब्दात् हिशब्दसूचिता न्यायविवरणोपात्ता श्रुतिः समुच्चीयत इति भावेनाह **तथेति** ॥

## तत्त्वसुबोधिनी

पूर्वसूत्रे प्रश्नाद्यध्याहारेण यः सत्येनातिवदतीति वाक्यस्य प्राणाद्विष्णोरुत्तमत्वे प्रतिपादकोक्तौ तन्न्यायेनैव यदा वै विजानातीति, अथ सत्यमित्यादिवाक्यानामपि सत्यादिभ्यो विज्ञानाना-मुत्तमत्वप्रतिपादकत्वस्य वक्तुं शक्यत्वाच्च विष्णोरेव प्राणादुत्तमत्वमित्याक्षेपोत्थानादनन्तर-सङ्गतिरिति भावः । अभेदोक्त्यादिरूपकारणविशेषं विनेत्यर्थः । नन्वभावेऽप्यस्तु सत्यपदोक्तस्य विष्णोः विज्ञानादिपदोक्तेनाभेद इत्यत उक्तम् ॥ **प्राणं विहायेति** ॥ अभेदोक्त्यादिकारणविशेषा-भावेऽपि यद्यभेदोऽङ्गीक्रियते तर्हि प्राणस्यापि सत्येनाभेदः स्यादिति प्रसङ्गः स्यादित्यर्थः । सत्यादय आत्मान्ताः सा परदेवतेति वक्तव्ये सत्यपि गुणास्तस्या एव परं देवतायाः स्वरूपभूता इति वचनं यदा वै विजानात्यथ सत्यमित्यादिवाक्यस्य विज्ञानादीनां सत्यादिस्वरूपभूतगुण-प्रतिपादकत्वेनाभेदानुक्तिरूपपूर्वपक्षहेतोरसिद्धिः ज्ञापनार्थमित्यभिप्रायेण तद्भाष्यं व्याचष्टे ॥ **सत्यं भगव इति** ॥ **अन्यथेति** ॥ सत्यपदोक्तस्य विज्ञानादिपदोक्तेनाभेदाभाव इत्यर्थः । ननु सत्यादेः नपुंसकत्वात्तदनुसारेण सूत्रे नपुंसकलिङ्गमेव प्रयोक्तव्यं एवं च कथं स्त्रीलिङ्गप्रयोग इत्यत आह **अत्रेति** ॥ **अत एवेति** ॥ यतः कृत्याद्यनुसारेण स्त्रीलिङ्गप्रयोगोऽत एवेत्यर्थः ॥ **अभेदानुक्ते-रिति** ॥ सत्यं भगवो जिज्ञास इति सत्यगुणजिज्ञासायां विज्ञानादीनां तद्गुणत्वकथनवत् भूमा न भगवो विजिज्ञास इति भूम्नो गुणजिज्ञासायां यत्र नान्यदित्याद्यटत्वादेरेवोपदेशेनाहंकारस्य तद्गुण-त्वोपदेशाभावात् तथाहंकारभगवो इत्येवं रूपस्य जिज्ञासावाक्यस्य तद्गुणत्वेनात्मोपदेशस्य वाऽभावादिति भावः । अत्रैव सौत्रहिशब्दसूचितां श्रुतिमाह ॥ **तथा श्रुत्यन्तर इति** ॥

## वाक्यार्थविवरणम्

**तेषामिति** ॥ तेषां विज्ञानादीनां सत्येनाभेदोक्त्यादौ विशेषकारणेन भाव्यम् । तं विना विज्ञानादीनां सत्येनाभेदग्रहणस्यान्याय्यत्वादिति योज्यम् । अत्रातिप्रसङ्गसूचनाय प्राणं विहायेत्युक्तम् । कारणविशेषाभावेऽपि यद्यभेदोक्तिस्तर्हि प्राणेनाप्यभेदः स्यात् । अतः प्राणं विहाय तेषामेव ग्रहणमन्याय्यमिति भावः ॥ **बहूनाम्** ॥ उपर्युपर्याम्नातानाम् ॥ **तस्येति** ॥ प्राणस्येत्यर्थः ॥ **विष्णुं विनेति** ॥ सत्यपदोक्तविष्णूपर्याम्नातविज्ञानाद्युत्तमत्वाभावादिति भावः ॥ **विष्णोरिति** ॥ विज्ञानाद्युत्तमत्वाभावादिति भावः ॥ **तदिति** ॥ सत्याख्यभगवदित्यर्थः । तदविनाभूतज्ञानस्य तद्गुणत्वेनोक्तत्वादित्यन्वयः ॥ **गुणेति** ॥ सत्याख्यविष्णोर्गुणान्तरेत्यर्थः ॥ **अविनाभूतेति** ॥ सत्याख्यविष्ण्वविनाभूतेत्यर्थः ॥ **अभेदेति** ॥ सत्याख्यभगवतेत्यर्थः ॥ **अन्यथा** ॥ एवं गुणोक्त्यभिप्रायाभावे ॥ **अत्र** ॥ सूत्रे । कुतस्तथा ज्ञायत इत्यत आह ॥ **अत एवेति** ॥ सूत्रे कृतिर्निष्ठेत्याद्यनुसारेण स्त्रीलिङ्गप्रयोग इति ज्ञापनार्थमेवेत्यर्थः ॥ **विज्ञानस्येति** ॥ श्रुतौ विज्ञानस्य आदित्वेन तदनुसारेण विज्ञानादीनां भेदादिवक्तव्यमित्यर्थः ॥ **ब्रह्मतर्के चेतीति** ॥ यः सत्यादिरूपवान् हरिः नामादिप्राणपर्यन्तात् अधि अधिक इत्यर्थः ॥ **भगवद्गुणत्वोक्तेति** ॥ सैव हीति सूत्रेण विज्ञानादिभूमान्तानां सत्याख्यभगवद्गुणोक्त्या भगवता अभेदोऽस्त्वित्यर्थः । गुणगुणिनोरभेदादित्याशयः ॥ **अभेदेति** ॥ सत्याख्यभगवतेति शेषः ।

## वाक्यार्थमञ्जरी

प्रागुक्तं विष्णुं विना प्राणस्योत्तमत्वम् ॥ **निरुपचरितेति** ॥ विज्ञानाद्युत्तमत्वादिति भावः । ॐ सैव हि सत्यादयः ॐ । सत्यादयो दश सा परदेवतैवेत्यर्थः । विजिज्ञासे विशेषेण ज्ञास्यामि ॥ **तद्गुणत्वेनेति** ॥ विज्ञानात्मकस्य रूपस्य विशेषबलेन सत्यगुणत्वमविरुद्धमिति भावः ॥ **तदविनाभूतेति** ॥ तदा वै विजानात्यथ सत्यंवदति नाविजानन्सत्यं वदतीत्यन्वयव्यतिरेकोक्तिपूर्वकं विज्ञानोक्तेरित्यर्थः ॥ **तथोत्तरत्रापीति** ॥ विज्ञानं भगवो विजिज्ञास इत्यादिजिज्ञासायां तद्गुणत्वेन यदा वै मनुतेऽथ विजानाति नामत्वाविजानातीत्यादिनामत्वाद्यभिधानादित्यर्थः ॥ **अभेदानुक्तेरिति** ॥ सत्यं भगवो विजिज्ञासेत्यादिना सत्यादिभगवद्गुणविजिज्ञासायां यदा ह वै विजानादित्यर्थः ॥ **अभेदानुक्तेरिति** ॥ यदा ह वै विजानाति इत्यादिना विज्ञानादीनां सत्यादिगुणत्वेनोपदेशवत्

(वाक्यार्थमञ्जरी)

भूमानं भगवो विजिज्ञास इति भूमाख्यभगवद्गुणजिज्ञासायां यत्र नान्यत्पश्यतीत्यादिना दृश्यत्वादेरेवोक्तत्वेन तद्गुणत्वेनाहंकारस्योपदेशाभावात्तथात्मनस्तद्गुणत्वेनोपदेशाभावादिति भावः ॥ **स वा एष इति** ॥ स एषोऽधिकारी एवं शृण्वन्नेवं मन्वानः एवं ध्यायन्नेवं पश्यन् मुक्तः सन्नात्मरतिः परमात्मना रतिरलम्बुद्धिर्यस्य स तथोक्तः । परमात्मना क्रीडत इत्यात्मक्रीडः परमात्मना स्वयं स्त्रीरूपः सन् मिथुनीभवतीत्यात्ममिथुनः । परमात्मनैवाभिव्यक्तः स्वरूपानन्दो यस्यासावात्मानन्दः स्वातन्त्र्यात्स्वोभगवानेव राट् आज्ञापयिता प्रत्यक्षो भवतीति स्वराडित्यर्थः ॥ **अहङ्कारात्मज्ञानादिति** ॥ एतद्वाक्यस्य तदुभयान्तिमप्रकरणत्वादिति भावः । **अहमेवाधस्तादित्यादिप्रतीकद्वयं** **पूर्णमित्यादीत्यादिशब्देन विज्ञानं पूर्णमित्यादिग्राह्यम्** ।

॥ इति सत्याद्यधिकरणम् ॥ २३ ॥

## २४. अथ कामाधिकरणम्

प्रकृतेरपि जन्मादेः संसारप्राप्तेः किमिति नामादिष्वपाठ इत्यत्रोच्यते—

**॥ ॐ कामादितरत्र तत्र चाऽऽयतनादिभ्यः ॐ ॥ ४० ॥**

स्वेच्छयैव मूलस्थाने स्थिताऽन्यत्र च अवतारान्करोतीश्वरेच्छानुसारेण। 'सर्वायतना सर्वकाला सर्वेच्छा न सर्वज्ञान बद्धा बन्धिका सैषा प्रकृतिरविकृतिः'इति वत्सश्रुतेः।

'नामादयस्तु बद्धत्वान्मोचकत्वात्परोऽपि च।
उभयोरप्यभावेन यथाऽव्यक्तं न तूदितम्॥
श्रुतौ तथा जीवपरावुच्येते किञ्चनेतरत्।
नोच्यते च तदा तत्त्वद्वयं वै समुदाहृतम्' इति ब्रह्मतर्के।

### तत्त्वप्रदीपिका

'यतः प्रसूता जगतः प्रसूती' 'मम योनिरप्स्वन्तः समुद्रे' 'सदेव सोम्यदमग्र आसीत्' इत्यादिना चित्प्रकृतेरपि प्राणादिवज्जन्मलयाद्याशङ्कायामाह— **कामादित्यादि सूत्रम्**॥ ईश्वरेच्छानुसारेण वर्तमानया स्वेच्छयैव मूलस्थाने तेन सहैव स्थिताऽन्यत्र च सहावतारान्करोति। सर्वं तदिच्छयैवेति सर्वेच्छा। सर्वः पूर्णत्वाद्विष्णुरिति वाऽर्थः। तस्यायतनमेवास्या आयतनं तत्काल एव कालस्तस्मादेवेच्छा चेति 'सर्वायतना सर्वकाला सर्वेच्छा' च। सा स्वयं कचिदपि न वद्धा वन्धका च जीवानाम्। अथापि नामादिभ्यः परस्तात्परमात्मनोऽवस्ताद्वक्तव्या सेत्यत आह— **'नामादयस्तु बद्धत्वात्'इत्यादि।** बद्धत्वमोचकत्वयोरुभयोरप्यभावेन यथा येन प्रकारेण योजनायामव्यक्तं नेवोदितं श्रुतौ तस्मिन्योजनाप्रकारे प्राणपर्यन्तो जीवराशिः सत्यादिगुणकः परश्चैवोच्येते। नान्यत्किञ्चित्। अव्यक्तस्यावद्धत्वेन परतत्वेऽन्तर्भावात्। तदा तस्मिन्पक्षे तत्वद्वयमेवोक्तमिति। एवं च प्रकारान्तरेणापि योजनाऽस्तीति गम्यते। येन प्रकारेणाव्यक्तशव्दशव्दता स्वरमणपरतन्त्राऽक्षतगुणगणलक्षणा सा महालक्ष्मीरत्र संलक्ष्यते। स्वयं च सूत्रं सैव हि सत्यादय इति तदभिमुखमिव च प्रतिभाति। 'यथाऽव्यक्तं न तूदितम्'इत्यादिकमुदाहारद्भिरिह भट्टारकैश्च तां कटाक्षेण वीक्ष्यमाणामभिप्रेक्षामहे। सा च देवी प्रस्तुतैव भगवत्प्रस्तावे। अनादिकालभगवत्सम्वन्धित्वादिति ह्याह। भूमादिगुणत्वमुभयथाऽपि विष्णोरेवेति भूमा

(तत्त्वप्रदीपिका)

विष्णुरेवेत्युक्तं पुरस्तात् । श्रीगुणेषूदितेष्वपि सत्यादिषु तेषां भूमा विष्णुरेवेत्यर्थः । न हि भगवतोऽन्यत्र सत्यज्ञानादीनां गुणानां परिपूर्तिः । न च 'यत्र नान्यत्पश्यति' इत्यादिना सर्वस्वातन्त्र्यादिधर्मोपपत्तिरन्यत्रेति च तत्रैवाऽवोदितम् । अन्तरालेऽनुक्तिपक्षेऽपि नोपासनीया सेति मा भूच्छङ्केत्यत्रैवोपासनापादे प्रस्तौति देवीं प्राणप्रसूतिम् । प्राणादुपरि सहैव भगवता मुमुक्षूणामभिध्यातव्येति । नामादिप्राणपर्यन्तानामपि परिवारभूतानामुत्तरोत्तरतो विशेषादुपास्तिपूजादिकं विवक्षितम् । किं पुनरखिलेश्वरस्यातिप्रियतमाया विरिञ्चमुखनिखिलसुरवरपुरस्सरसज्जनसन्ततसेव्याया देव्याः । उक्तं चानुव्याख्याने–

'तारतम्येन तद्भक्तेष्वपि भक्तिर्विनिश्चयात् ।
कर्तव्यैषाऽपि तद्भक्तिर्लोकवेदानुसारतः ॥
यो हि भक्तः प्रधाने स्यात्तदीयेष्वपि भक्तिमान् ।
दृश्यतेऽसौ नियमतो विपरीतो विपर्यये ॥
व्यभिचारो यदि क्वापि भक्तिह्रासोऽत्र कल्प्यते ।
भक्तिदोषो ह्यसौ यन्न तद्भक्तेष्वपि भक्तिमान् ॥
तारतम्येन तेष्वद्धा भक्तिर्दृष्टानुसारतः ।
विष्णुप्रसादानुसारात्कार्या दोषास्तदन्यथा ॥
स्वप्रीत्यनुसृतौ प्रीतिर्लोकेऽप्यद्धैव दृश्यते ।
तारतम्यपरिज्ञानमप्येतेनैव साधनम् ॥
लक्ष्मीविरिञ्चवाणीशगिरिजेन्द्रा गिराम्पतिः ।
सूर्यादयश्च क्रमशो भगवत्प्रीतिगोचराः ॥
तेषु भक्तिः क्रमेणैव कार्या नित्यं मुमुक्षुभिः ।
सर्वेऽपि गुरवश्चैव पुरुषस्य सदैव हि ।
तस्मात्पूज्याश्च नम्याश्च ध्येयाश्च परितो हरिम् ॥
इति षाड्गुण्यवचनादप्येषोऽर्थोऽवसीयते ।
हरिभक्तिः क्रमेणैव तदीयेषु हरिस्मृतिः ॥
हरिस्तुतिस्तत्स्मृतिश्च तत्स्तुतिर्हरिपूजनम् ।
तत्पूजाऽविहितत्याग इति भक्तेः क्रमेण हि ॥
नियमात्साधनान्येव नित्यसाध्यानि चाखिलैः ।
इति प्रवृत्तवचनं साधनस्य विनिर्णयः' ॥ इत्यादि ॥

## तत्त्वप्रकाशिका

अत्र भगवद्दर्शनसाधनोपासने श्रियोऽनधिकारित्वसमर्थनादस्ति शास्त्रादिसङ्गतिः । अन्यथाऽधिकारिणां प्राणावसानत्वासिद्धेस्तत्साधनीयम् । प्राणपरमात्मप्रसङ्गसन्निधापिता श्रीरत्र विषयः । अधिकारिणी न वेति सन्देहः । चेतनद्वैविध्यदर्शनं सन्देहबीजम् । पूर्वपक्षयति ॥ **प्रकृतेरिति** ॥ भवत्येव प्रकृतिरधिकारिणी साधुत्वे सति संसारित्वात् । न च तस्याः संसारित्वाभावः । सीतारुक्मिण्यादिरूपायास्तस्या जन्ममरणादिदर्शनात्संसारप्राप्तेः । किं च सा कृतार्था न वा । आद्ये भगवदुपासनं न स्यात् । द्वितीये कथमसंसारित्वं तस्याः । अतः संसारित्वेन प्रकृतेरप्यधिकारोऽस्त्येव । अधिकारित्वे च तस्याः किमिति नामादिष्वपाठः । किं तु तत्पाठोऽध्याहर्तव्य एव । स च भवन्प्राणादुपर्येव भवेत् । तथा च नाधिकारिणां प्राणावसानत्वमिति भावः । सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ **अत्रेति** ॥ न प्रकृतेरधिकारित्वम् । तस्या बद्धत्वाभावात् । न च जन्मादेः संसारित्वप्राप्तिः । जननादेरवतारादित्वेन संसारहेतुत्वाभावात् । न च जन्माद्येव किं न स्यादिति वाच्यम् । जननेऽपि मूलरूपेण भगवत्समीपे स्थितत्वात् । नापीन्द्रादिवत् । स्वेच्छयैव जनने कर्मनिमित्तत्वाभावात् । न च स्वेच्छानुसारित्वे स्वातन्त्र्यम् । ईश्वरेच्छानुसारित्वात् । मूलरूपेण भगवत्समीपे स्थिता स्वेच्छयाऽवतारान्करोतीत्येतत्कुतः । सर्वगतत्वाद्यभिधायकश्रुतेरिति भावः । सर्वमिच्छाधीनं यस्याः सा सर्वेच्छा । अविकृतिरित्यचेतनप्रकृतिं व्यावर्तयति । नन्वेवमसंसारित्वेनाऽनधिकारित्वेऽपि प्रकृतेः कुतो नामादिष्वपाठः । भगवद्भक्ततारतम्यकथनावसरे तदुक्तेरावश्यकत्वात् । अन्यथा तदभावप्रसङ्गादित्यत आह ॥ **नामादयस्त्विति** ॥ यथा बद्धमोचकत्वविवक्षयैव नामादीनां परमात्मनश्चोक्तिस्तदुभयाभावेन प्रकृतेरनुक्तिर्न त्वभावात् । तथा बद्धमोचकत्वाभिप्रायेणैव 'द्वा सुपर्णा' इत्यादिश्रुतौ जीवेश्वरावुच्येते न तु जडम् । तदा तत्त्वद्वयमेवोक्तं ज्ञातव्यं न तु जडाभाव इत्यर्थः ।

## गुर्वर्थदीपिका

तस्या बद्धत्वाभावादित्युपलक्षणम् । ईश्वरवत्सर्वदेशव्यापित्वाद्देहसहिताया एव सार्वकालीनत्वाद्बन्धकमायायाश्च स्वेच्छाधीनत्वात्सर्वदैकस्वभावत्वादविकारत्वाच्चेति सूत्रोक्तास्सर्वेऽपि हेतवोऽनधिकारित्वे द्रष्टव्याः । जननेऽपीत्यस्य प्रादुर्भावेऽपीत्यर्थः । ईश्वरेच्छानुसारित्वादित्यत्र तदिच्छाया अपीति शेषः ।

## भावबोधः

**श्रियोऽनधिकारित्वसमर्थनादिति ॥** व्यतिहाराधिकरणे प्राणादुपरितनस्य सत्यस्य विष्णुत्वे समर्थिते तदुपरितनानां विज्ञानादीनां विष्णुत्वज्ञापकाभावेन विष्णोरप्यन्येषामुत्तमत्वमिति तारतम्य-कथनावसरे श्रियः कुतो न पाठ इति च शङ्काद्वय उत्पन्ने आद्यशङ्काया अतिविरोधित्वेन 'सैव हि' इत्यत्र तां परिहृत्य द्वितीयाऽत्र परिह्रियत इत्यनन्तरसङ्गतिरिति भावः ॥ **अधिकारिणीति ॥** अत्र श्रीरधिकारिणी भवत्युत न भवतीति चिन्ता । तदर्थं सा किं संसारिणी भवत्युत न भवतीति । तदर्थं सीतारुक्मिण्यादिरूपेण भूमौ भवनं किं तस्याः कर्मनिबन्धनमुत स्वेच्छामात्रनिबन्धनमिति । तदर्थं नित्यमुक्तत्वे तस्याः किं भगवदुपासनं न युक्तमुत युक्तमिति ॥ **साधुत्वे सतीति ॥** नित्यसंसारितमोयोग्यव्यावृत्त्यर्थं साधुत्वग्रहणम् । मुक्तादिव्यावृत्त्यर्थं संसारिग्रहणम् । श्रियोऽप्रयत्नत्वादनुपासनं संसारो वेति न्यायविवरणं योजयति– **किं चेत्यादिना ॥** अत्राप्रयत्नत्वं कृतार्थत्वम् । अत्र सूत्रे 'कामात्' इत्यंशस्य स्वेच्छेश्वरेच्छारूपोभयार्थत्वम् अवधारणार्थककामा-दित्यनेन सम्बन्धसमुच्चयार्थस्य च 'इतरत्र च' इत्यन्वयः । तत्र स्थितेतरत्रावतारान् करोतीति शेष इत्यभिप्रेत्य प्रवृत्तं स्वेच्छयैवेत्यादिभाष्यं व्याचष्टे– **जननादेरित्यादिना ॥ सर्वगतत्वादिति ॥** अनेन सर्वमापतनमाश्रयो यस्याः सा सर्वापतनेति विग्रहः प्रदर्शितो भवति । सर्वचेतनेच्छास्वरूपत्वस्य दुःखादिसर्वविषयकेच्छावत्त्वस्य वा सम्भवादाह– **सर्वमिति ॥**

## भावदीपः

**श्रियोऽनधिकारित्वेति ॥** प्राणादिवत्संसारितया अधिकारित्वशङ्कायामिति भावः । तेन प्राणादुपरि श्रुतस्य सर्वस्य सत्यादेर्विष्णुत्वे सिद्धे तर्हि श्रियोऽप्यधिकारितया प्राणादूर्ध्वमध्याहारः स्यादिति शङ्कोत्थानाद्वा मोच्यमोचकचिन्तानन्तरमनुभयरूपस्य श्रीतत्वस्य चिन्तनाद्वा पूर्वसङ्गतिः सूचिता ॥ **चेतनद्वैविध्येति ॥** ईशतदितररूपानधिकार्यधिकारिद्विविधचेतनदर्शनमित्यर्थः । भाष्ये प्राप्तेरित्यनन्तरमधिकारसम्भवादिति शेषं मत्वाऽऽकाङ्क्षामनुरुध्य व्युत्क्रमेण व्याचष्टे ॥ **भवत्येवेति ॥** उपासन इत्यनुकर्षः । मुक्त्ययोग्यानां मुक्तानां च निरासाय साधुत्व इत्यादिविशेषणद्वयम् । जन्मादेरित्यादिपदार्थो **मरणेति** ॥ जन्ममृतिदुःखेर्ष्यादिदर्शनादित्युपलक्षणम् । 'यतः प्रसूता जगतः प्रसूती' 'मम योनिरप्स्वंतस्समुद्र' इत्यादौ श्रवणादित्यपि ध्येयम् । एवमाद्यसूत्रव्यावर्त्यं भाष्योक्तं

(भावदीपः)

व्यक्तीकृत्य द्वितीयसूत्रव्यावर्त्यं श्रियोऽप्रयत्नत्वादनुपासनं संसारो वेत्यन्यत्रोक्तं व्यनक्ति ॥ किञ्चेति ॥ **न स्यादिति** ॥ तथा च यद्यदर्चितमित्यादिवाक्यविरोध इति भावः । **द्वितीय इति** ॥ एतेन न्यायविवरणं विकल्पमुखेन योज्यमिति दर्शितम् । किमित्यादिभाष्यं व्याकुर्वन् फलोक्त्योपसंहरति ॥ **अत इति** ॥ जन्मादिदर्शनाद्यदर्चितमित्यादावुपासनादर्शनाच्चेत्यर्थः ॥ **प्राणावसानत्वमिति** ॥ इयदित्यत्रोक्तमित्यर्थः ।

भाष्ये श्रियोऽवताराद्युक्तेरुपयोगघटनाय पूर्वपक्षं निराह ॥ **नेति** ॥ **अवतारादित्वेनेति** ॥ अवतारतिरोधाननटनवंचनादिरूपत्वेनेत्यर्थः । एतेन भाष्येऽवतारानिति बहुवचनमाद्यर्थ इति सूचितम् । उपलक्षणं वा । मूलेत्यादेरुपयोगं व्यनक्ति ॥ **न च जन्माद्येवेति** ॥ स्वेच्छयै-वेत्यस्योपयोगं वदन्नर्थमाह ॥ **नापीन्द्रेति** ॥ यथेन्द्रादेरंशिनो मूलस्थाने स्थितस्यैवांशेन कर्मवशादर्जुनादित्वेन जन्मादिकं तथा किं न स्यादित्यपि नेत्यर्थः । ईश्वरेत्यादेर्व्याख्या न च स्वेच्छेति । श्रुतिस्थपदानामुपयोगायाह ॥ **मूलेत्यादि** ॥ इच्छाशब्दमिच्छाधीने लाक्षणिकं मत्वा सर्वमिच्छाधीनं यस्या इति विग्रहोक्तिः । एतेन सर्वायतनेत्यादिरपि बहुव्रीहिरिति सूचितम् ॥ **पदद्वयकृत्यमचेतनेति** ॥

नन्वियं श्रुतिः प्रकृतिश्च प्रतिज्ञादृष्टान्तेतिनये टीकायामुदाहृत्य ब्रह्मपरत्वेन निर्णीतेति कथमत्र श्रीतत्वपरत्वेनोक्तिरिति चेत्सत्यम् । अथापि 'अस्माकं परमुख्यार्थो भगवानेक एव तु । मुख्यमात्रतया रूढं सर्वमभ्युपगम्यते' इत्यानुमानिकपादीयानुभाष्योक्त्यार्थान्तरस्यापि भावाददोषः । एवं तत्र तत्र ज्ञेयम् । श्रुतौ सर्वायतनेत्युक्तावपि सूत्रे श्रुतिसूचनमात्रार्थत्वादायतनादिभ्य इत्येवोक्तम् । स्मृत्यर्थमाह ॥ **यथेत्यादिना** ॥ तत्वप्रदीपे तु यथा येन प्रकारेण योजनायामव्यक्तं नैवोदितं श्रुतौ तथा तस्मिन्योजनाप्रकारे प्राणान्तो जीवराशिः सत्यादिगुणकः परश्चैवोच्यते न त्वन्यत् किञ्चिदव्यक्तस्याबद्धत्वेन परतत्वेऽन्तर्भावात्तदा तस्मिन्पक्षे जीवपराख्यं तत्त्वद्वयमेवोक्तमिति प्रकृत-छन्दोगश्रुतिव्याख्यानमात्रपरतया स्मृत्यर्थमुक्त्वा तेन प्रकारान्तरेण श्रुतियोजना सूचितेत्युपेत्य सैव हि सत्यादय इत्यस्य सैव लक्ष्मीरेव सत्यादयः सत्यविज्ञानमतिश्रद्धानिष्ठाकृतिसुखान्तास्सर्वे भूमादिस्तु विष्णुरेवेत्यर्थमुक्त्वा सत्यादिगुणकत्वं श्रियोऽपि योजितम् । अत एव सैवेति सूत्रे स्त्रीलिङ्गप्रयोग इत्युक्तम् ।

## अभिनवचन्द्रिका

आद्ये भगवदुपासनं न स्यादिति । नियमेनेति शेषः । एतेन कृष्णेन क्रियमाणरुद्रोपासनवदसुरजनमोहाय महालक्ष्म्या उपासनमुपपन्नमिति परास्तम् । न चैवमपि मुक्तवदुपपत्तिः । संसारित्वानङ्गीकारे मोक्षार्थोपासनाभ्यासाभावेन मुक्तवत्संस्कारपाटवाभावात् । ननु न प्रकृतिरधिकारिणी । नामादिष्वपठितत्वात् । न ह्यधिकारित्वाविशेषे प्रकृतेरेव परित्यागे हेतुरस्तीति शङ्कोत्तरत्वेन 'किमिति नामादिष्वपाठ' इति भाष्यं योजयति– **अधिकारित्वे चेति** ॥ पूर्वोक्तयुक्त्या अधिकारित्वे सिद्धे नामादिष्वपाठ एव किमित्यङ्गीक्रियत इत्यर्थः । नामादिष्वपठितत्वहेतुरसिद्ध इति भावः । यदि नामादिषु महालक्ष्म्याः पाठः तर्हि किमित्यश्रवणमिति शङ्कायाः किमुत्तरमिति पृच्छति– **किं त्विति** ॥ उत्तरमाह **तत्पाठ इति** ॥ पाठशब्दोऽत्र वाक्यपरः । तत्प्रतिपादकं वाक्यं 'अस्ति भगवः प्राणाद्भूय' इति प्रश्नप्रतिवचनवत् अध्याहर्तव्यमेवोक्तं न तूच्चारितं ततश्चाश्रवणं न दोषायेति भावः ॥ **स्वेच्छयैवेति** ॥ स्वेच्छयैव जायमाने रुग्मिण्यादिजनने कर्मनिमित्तत्वाभावादित्यर्थः । तटस्थः शङ्कते– **नन्वेवमिति** ॥ **इत्यत आहेति** ॥ पूर्वोक्ताऽऽशङ्कापरिहारोद्देशेनाप्रवृत्तमपि ब्रह्मतर्कवाक्यम् । अर्थादुक्तशङ्कापरिहारस्यापि सिद्धेस्तदर्थं तद्वाक्यमुदाजहारेत्यर्थः । एतेन ब्रह्मतर्कवाक्यस्य जीवेश्वरावेव तत्वतया निर्दिष्टौ, न तु जडं, तच्चायुक्तं प्रामाणिकस्य परित्यागे कारणाभावादित्याशङ्कापरिहारकत्वात्, प्रकृतेः नामादिष्वपाठः कुत इत्याशङ्कापरिहाराय 'आह' इत्ययुक्तमिति परास्तम् । तद्वचनस्य साक्षादेतच्छङ्कापरिहारकत्वाभावेऽपि अर्थात्तत्परिहारस्यापि सिद्धेः तदुदाहरणस्योचितत्वात् ।

## वाक्यार्थमुक्तावली

अत्र रमाया नित्यमुक्तत्वे भगवदनूनत्वात् सत्यादीनामिव तदुपासकत्वानुपपत्तेः संसारित्वमिति पूर्वन्यायेन पूर्वपक्षोत्थानादनन्तरसङ्गतिः । अत्र श्रीरधिकारिवर्गनिविष्टा न वेति चिन्ता । तदर्थं संसारिणी न वेति । तदर्थं सीतादिरूपायास्तस्याः भूमौ जननं कर्मनिबन्धनप्राकृतशरीरसम्बन्धरूपमुत स्वेच्छामात्रेणाभिव्यक्तरूपमिति । तदर्थं स्वेच्छाकृतव्यक्तिमात्रत्वेन नित्यमुक्तत्वे तत्कारणमुपासनाख्यं दृश्यमानं कार्यं च सम्भवत्युत न सम्भवतीति । जन्मादिकं संसारित्वे तत्तदधिकारित्वे हेतुः । अधिकारित्वं च नामादिष्वपाठादाक्षेपकमिति भावेन भाष्यार्थं वदन्

(वाक्यार्थमुक्तावली)

आद्यसूत्रनिरस्यं पूर्वपक्षमाह । **भवत्येवेत्यादिना** ॥ नित्यसंसारितमोयोग्यव्यावृत्त्यर्थं साधुत्वे सतीत्युक्तम् । भगवत्प्रियत्वे सतीत्यर्थः । मुक्तव्यावृत्त्यर्थं संसारित्वादिति । द्वितीयसूत्रनिरस्यं पूर्वपक्षमप्रयत्नमिति न्यायप्रदर्शनपूर्वमाह ॥ **आद्येति** ॥ आप्तकामत्वेन प्राप्तव्यप्रयोजनेच्छायाः प्रयत्नायोगात् । श्रुतं भगवदुपासनं न स्यादिति भावः । फलोद्देशेन प्रयत्नमङ्गीकृत्य कृतार्थत्वा-भावेऽस्मदादेरिव संसारित्वमेव स्यात् । कथमसंसारित्वम् । कारणाभावादिति तृतीयसूत्रनिरस्यं पूर्वपक्षमाह ॥ **द्वितीय इति** ॥ एतेन भाष्ये जन्मादेरित्यादिपदेन कृतार्थत्वाभावोऽपि गृह्यते । तथा चाद्ये वाधकस्य विद्यमानत्वेनादिपदोक्तकृतार्थत्वाभावात् संसारप्राप्तेः कथमसंसारित्वमिति भाष्यार्थ उक्तो भवति ॥ **अत्रोच्यत इति** ॥ भाष्यस्यात्र पूर्वपक्ष्युक्ते प्रकृतेरधिकारित्वे उक्तहेतोरसिद्धिरुच्यत इत्यर्थं मत्वा पूर्वपक्षं प्रतिक्षिपति ॥ **न प्रकृतेरिति** ॥

सूत्रे कामादित्यावर्तते । चशब्द एवार्थे समुच्चये च । प्राणविष्णुप्रसङ्गसन्निधापिता श्रीरन्वेति । तथा च कामादीश्वराधीनात् कामादेव स्वेच्छयैव न कामतः । तत्रेशसमीपे मूलरूपेण स्थिता इतरत्र च भूमाववतरतीति शेषः । कुतः । आयतनादिभ्यः । अनेनायतनादिबोधकश्रुतिर्गृह्यते । सर्वगतत्वादिबोधकश्रुतेरित्यभिप्रेत्य प्रवृत्तं स्वेच्छयेत्यादिभाष्यं आकाङ्क्षाक्रमेण व्याचष्टे ॥ **जननादेरित्यादिना** ॥ जननमरणयोः जनिप्रत्यक्षगोचरत्वतदगोचरत्वरूपत्वेनेत्यर्थः । एतेना-न्यत्रावतारान् करोतीत्येतदुपलक्षणमिति व्याख्यातं भवति ॥ **न च जन्माद्येवेति** ॥ अस्मदादि-वदिति शेषः ॥ **जननेऽपीति** ॥ तथा च नास्मदादिवज्जननमिति भावः । इन्द्रादीनां मूलरूपेण स्वर्गादौ भगवत्समीपे स्थितानामपि अर्जुनादिरूपेणोत्पत्तिर्दृष्टेत्याशङ्क्याह ॥ **नापीति** ॥ सर्वमायतनं यस्याः सा सर्वायतना । सर्वेऽपि काले आश्रयो यस्याः सा सर्वकाला । सर्वा अवस्था जगतो यस्याः सा सर्वावस्था इति श्रुत्यर्थः । अविकृतिरित्यचेतनप्रकृतिरिति । सर्वेच्छा सर्वज्ञेत्यनेनैवाचेतनप्रकृतिः व्यावर्तितेति चेन्न । सत्वात्सञ्जायते ज्ञानमित्यादिना चेतनप्रकृतेः इच्छाद्यात्मना परिणामात् तद्विवक्षया भेदाभिप्रायेण सर्वेच्छाद्युपपद्यत इति शङ्कितापि । अतोऽ-विकृतिरिति विशेषणमिति भावः ॥ **तदभावप्रसङ्गादिति** ॥ नियामकविशेषणमन्तरेण तारतम्य-प्रसङ्गे प्राणपरमात्मनोर्मध्ये श्रियोऽभावप्रसङ्गः । न चैतद्युक्तम् । प्रमाणान्तरप्राप्तत्वात् । अतो मध्ये तदनुक्तौ नियामकं वाच्यमित्यर्थः । स्मृतौ परोऽपि चेत्यनन्तरमुच्यत इति शेषः ।

(वाक्यार्थमुक्तावली)

**बन्धमोचकत्वाभिप्रायेणैवेति** । तयोरन्यः पिप्पलं स्वाद्वत्तीति बद्धत्वस्य सखायौ उपकार्योपकारिणाविति परमात्मनो बन्धान्मोचकत्वस्याभिप्रेतत्वादिति भावः । इतरत् किञ्चनेत्यस्यार्थो न तु जडमिति ॥ यद्यपि नापि चित्प्रकृतिरित्यपि वक्तव्यम् । तथापि द्वा सुपर्णेत्यत्र बुद्धिजीवावुच्येते इत्यपव्याख्यानिरासोद्देशेन स्मृतेः प्राप्तत्वान्न तु जडबुद्ध्याख्यमित्युक्तं ज्ञेयम् । **तद्वयमिति** । 'ईश्वरः प्रकृतिजीवो जडं चेति चतुष्टयम् । पदार्थानां समुद्दिष्टं' इति बृहदारण्यकभाष्योक्तरीत्या तत्वचतुष्टयमध्ये ईश्वरजीवाख्यं तत्वद्वयमेवोक्तमित्यर्थः ।

## तत्त्वसुबोधिनी

**श्रियोऽनधिकारित्वसमर्थनादिति** ॥ व्यतिहाराधिकरणे प्राणादुपरितनस्य सत्यस्य विष्णुत्वे समर्थिते तदुपरितनानां विज्ञानानन्दानां विष्णुत्वज्ञापकाभावेन विष्णोरप्यन्येषामुत्तमत्वमिति तारतम्यकथनावसरे श्रियः कुतो न पाठ इति शङ्काद्वयोत्पन्ने आद्यशङ्कायाः अतिविरोधित्वेन सैव हीत्यनेन तां परिहृत्य द्वितीयात्र परिह्रियत इत्यनन्तरसङ्गतिरिति भावः ॥ **अन्यथेति** ॥ अनधिकारित्वसमर्थनाभावे इत्यर्थः । **साधुत्वे सतीति** । नित्यसंसारितमोयोग्यव्यावृत्यर्थं साधुत्वग्रहणम् । मुक्त्यादिव्यावृत्यर्थं **संसारित्वे सतीति** । अत्र सूत्रे कामादित्यस्येच्छा ईश्वरेच्छारूपोभयार्थत्वं अवधारणार्थकशब्दस्य स्वेच्चार्थकनामादित्यनेन सम्बन्धः । समुच्चयार्थस्य चेतरत्रेत्यन्वयः । तत्रस्थिते तत्रावतारान्करोतीति शेष इत्यभिप्रेत्य प्रवृत्तं स्वेच्छयैवेत्यादिभाष्यं व्याचष्टे ॥ **जननादेरिति** । अत्रावतारो नामेश्वरज्ञानादिवदभूत्वा भवनम् । आदिपदेनान्यप्रत्यक्षविषयत्वमित्यवधेयम् । अङ्गीकृत्याह । **जननेऽपीति** । वस्तुतो जननं नास्त्येव तथापि तदङ्गीकारेऽपि न त्वदिष्टसिद्धिरित्यर्थः । तथापि मूलरूपेण भगवत्समीपे स्थितस्यापीन्द्रस्य जन्मादिवत्वेन बद्धत्ववत् श्रियोऽपि बद्धत्वं स्यादित्याशङ्क्य निषेधति । **नापि इन्द्रादिवदिति** । उत्तरमाह ॥ **स्वेच्छयैवेति** ॥ **सर्वगतत्वादीति** ॥ अनेन सर्वं आयतनं आश्रयो यस्याः सा सर्वायतनेति विग्रहः सूचितो भवति । सर्वचेतनेच्छास्वरूपस्य दुःखादिसर्वविषयकेच्छावत्वस्य वा सम्भवादाह ॥ **सर्वमिति** ॥

## वाक्यार्थविवरणम्

तमोयोग्येषु व्यभिचारवारणाय साधुत्वे सतीत्युक्तम् । मुक्तेषु तद्वारणाय संसारित्वादित्युक्तम् ।। **कृतार्थेति** ।। कृतकृत्या नित्यमुक्तेत्यर्थः । प्राप्तप्राप्तव्यत्वं कृतकृत्यत्वम् । भगवदुपासनं तया क्रियमाणं न स्यादित्यर्थः । **अवतारादिरूपत्वेन** ।। प्रादुर्भावादिरूपत्वेन । आदिपदेन मरणस्य भूलोकपरित्यागाप्रत्यक्षत्वरूपत्वेनेति ग्राह्यम् ।। **इन्द्रादिवदिति** ।। तेषां मूलरूपेण स्थितत्वेऽपि भूमौ अंशेन जननं कर्मनिमित्तकं प्रसिद्धं तद्वदित्यर्थः । भाष्ये सर्वकाला सर्वस्मिन् काले स्थिता नित्येत्यर्थः ।। **तत्त्वद्वयम्** ।। जीवेश्वररूपम् ।।

## वाक्यार्थमञ्जरी

**प्राणावसानत्वासिद्धेरिति** ।। अधिकारित्वे च तस्याः प्राणोपर्येव वक्तव्यत्वादिति भावः ।। **सन्निधापितेति** ।। तस्यास्तदुभयमध्यस्थत्वादिति भावः । साधुत्वे सतीति तमोयोग्यव्यावृत्तये विशेषणं मुक्तव्यावृत्तये विशेष्यम् । **कृतार्था** मुक्ता ।

श्रीः कामात् ईशेच्छानुसारि स्वेच्छयैव तत्रेशसमीपे मूलरूपेण स्थिता इतरत्र भूम्यादाववतरति कुतः आयतनादिभ्यः सर्वमायतनमाश्रयो यस्याः सा तथेति सर्वगतत्वादिप्रतिपादकशब्देभ्य इत्यर्थः । जननेऽपीति जन्मवतां च मनुष्याणां नैवंभाव इति भावः ।। **नापीति** ।। तेषां मूलरूपेण सतामेवार्जुनादिरूपेण जननादिति भावः ।। **कर्मेति** ।। तेषाञ्च जनने कर्मैव निमित्तमिति भावः । सर्वचेतनेच्छास्वरूपत्वस्य दुःखादिसर्वविषयेच्छावत्त्वस्य वा सम्भवादाह ।। **सर्वमिति** ।। **अविकृतिः** विकाररहिता ।। **तदभावेति** ।। प्रकृत्यभावेत्यर्थः । कृतकृत्यत्वेन मुक्तत्वेन यत्कृष्णपदाब्जं सात्वतैः पञ्चरात्रैः ।।

## सूत्रभाष्यम्

**।। ॐ आदरादलोपः ॐ ।। ४१ ।।**

**अवद्धत्वेऽपि भक्तिविशेषादेवोपासनाद्यलोपस्तस्या भवति ।**

**'यथा श्रीर्नित्यमुक्ताऽपि प्राप्तकामाऽपि सर्वदा ।**
**उपास्ते नित्यशो विष्णुमेवं भक्तो हरेर्भवेत्' इति बृहत्तन्त्रे ।**

## तत्त्वप्रदीपिका

अस्तु सा स्वयमुपास्या, न तूपास्ते कदाचिदप्यबद्धत्वात् । जीवानां तु बन्धमुक्त्यर्थ-मनारतोपासनावासनावशाद्युज्यते मुक्तावुपास्तिरित्यत आह– **आदरादलोपः ॥** सर्वतोऽनादि-भक्त्याधिक्यादेव देव्या उपासनापूजाद्यलोपः । तथा च भागवते 'तुलसीभिरीशमभ्यर्चति' इत्यादि । अतः श्रीब्रह्मवाय्वादिभिरुपास्यो भगवांस्तत्परिवृतत्वेन चान्यैरिति स्थितम् । प्राणवचनेनैव ब्रह्मणोऽपि सिद्धत्वाद्वायुत्वादनन्तरत्वाद्ब्रह्मपदस्य ।

'वायुरेव यतो ब्रह्मपदं नियमतो व्रजेत् ।
सहैव जननेऽप्यस्मात्पूर्वं वायोर्जनिं वदेत् ।
क्वचित्तु ब्रह्मणः पूर्वं प्रधान्यात्तत्पदस्य च' इति ब्रह्मतर्के ॥

## तत्त्वप्रकाशिका

ननु रमाया असंसारित्वे कृतकृत्यत्वेन भगवदुपासनाभावः स्यात् । न चाऽसौ युक्तः । 'यदर्चितं ब्रह्मभवादिभिः सुरैः श्रिया च देव्या मुनिभिश्च सात्वतैः' । इत्यादिप्रमाणसिद्धत्वादित्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे ॥ **आदरादिति ॥** प्रकृतेरसंसारित्वेन कृतकृत्यत्वेऽपि भगवदुपासना-भावो न प्रसज्यते । निरुपाधिकभक्त्यतिशयेनोपासनोपपत्तेरिति भावः । 'आदरो भजनं भक्तिर्बहुमानं च सेवनं' इत्यभिधानम् । अत्रैव स्मृतिं चाह ॥ **यथेति ॥** अन्योऽपि हरेर्भक्तः । एवं निरुपाधिकभक्त्युपासको भवेदित्यर्थः ।

## गुर्वर्थदीपिका

कारणाभावादित्यस्य स्वसाम्यभिया भगवतोऽकारणत्वकारणाभावादित्यर्थः ।

## भावबोधः

**निरुपाधिकभक्त्यतिशयेनेति** ॥ उपलक्षणमेतत् । संस्कारपाटवात् नित्योपासोपपत्तेश्चेति न्यायविवरणोक्तमपि ग्राह्यम् ।

ननु लक्ष्मीवदितरेषां अनाद्यनन्तकालेषु एकप्रकारेण उपासनाभावात् कथं एवमित्युक्तं इत्यतो व्याचष्टे– **एवं निरुपाधिकेति** ॥

## भावदीपः

**यदर्चितमिति ॥ दशमस्कन्धगतम्** । आदिपदेन 'वापीषु विद्रुमतटीष्वमलामृताप्सु प्रेष्यान्विता निजवने तुलसीभिरीशम् । अभ्यर्चती स्वलकमुन्नसमीक्ष्य वक्त्रमुच्छेषितं भगवतेत्यमतांग यच्छ्रीः' इत्यादितृतीयस्कन्धस्थवाक्यग्रहः । तस्या इत्येतदर्थं वदन्नेवाबद्धत्वेऽपीत्यादिभाष्यार्थमाह ॥ **प्रकृतेरिति** ॥ अलोपपदमाकृष्यार्थमाह ॥ **भगवदुपासनाभावो नेति** ॥ भक्तीत्यादिभाष्यं व्याचष्टे ॥ **निरुपाधिकेति** ॥ फलाद्युपाधिरहितेत्यर्थः । आदरस्य भक्तित्वे एकादशस्कन्धतात्पर्ये त्रयोदशाध्यायोक्तवाक्यमाह ॥ **आदर इति** ॥ **अत्रैवेति** ॥ अबद्धत्वेऽप्युपासनं प्रकृतेरस्तीत्यत्रेत्यर्थः ॥ **स्मृतिं चेति** ॥ न केवलमादरादुपपद्यत इति चार्थः । अन्य इति शेषोक्तिः । सर्वसाम्यं निराह ॥ **एवमिति** ॥

## वाक्यार्थमुक्तावली

**असंसारित्वमिति** ॥ नित्यमुक्तत्वमित्यर्थः ॥ **कृतकृत्यत्वेनेति** ॥ आप्तकामत्वेनेत्यर्थः । पूर्वसूत्रात् चशब्दोऽनुवर्तते । तेन पूर्वसूत्रोक्तमबाध्यत्वं कृतकृत्यत्वं च समुच्चीयते । प्रकृतिरविकृतिरिति प्रकृतत्वात्प्रकृतेरित्यन्वेति । अवधारणार्थश्चशब्द आदरादित्यनेनान्वेति । प्रकरणादुपासनाया इति लक्ष्यत इति भावेन प्रवृत्तमबद्धत्वेऽपीति भाष्यं यथा श्रीर्नित्यमुक्तापि प्राप्तकामापि सर्वदेति स्मृत्यनुसारेण व्याचष्टे ॥ **प्रकृतेरिति** ॥ भक्तिविशेषादेव न तु फलोपाधिनेत्येवमाकारेण सूचितमुक्तम् ॥ **निरुपाधिकेति** ॥ भक्तिविशेषादित्युक्त्यैव संस्कारपाटवमित्युक्तन्यायोऽपि दर्शितः । अत एव भाष्ये विशेषपदग्रहणम् । अलोप इति सामान्योक्त्या पूजाद्यलोपोऽपि गृह्यत इति भावेन भाष्ये उपासनादीत्यादिपदमुक्तम् । तथा च तत्त्वप्रदीपे । उपासना पूजाद्यलोपः । तथा च भागवते ॥ **तुलसीभिरीशमभ्यर्चतीत्यादीति** ॥

## तत्त्वसुबोधिनी

ननु लक्ष्मीवदितरेषां अनाद्यनन्तकालेऽप्येकप्रकारेणोपासनाभावात् कथमेवमुक्तमित्यतः तद्व्याचष्टे ॥ **एवं निरूपाधिकेति** ॥

## वाक्यार्थविवरणम्

**कृतकृत्यत्वेन** ॥ कृतकृत्यत्वप्राप्त्येत्यर्थः ॥ **यदर्चितमिति** ॥ इदं दशमस्कन्धगतं वाक्यम् ॥ इत्यादीति ॥ आदिपदेन 'वापीषु विद्रुमतटीष्वमलामृताप्सु प्रेष्यान्विता निजवने तुलसीभिरीश ॥ अभ्यर्चती स्वलकमुल्लसमीक्ष्य वक्त्रमुच्छेषितं भगवतेत्यमताङ्ग यच्छ्रीः' इति तृतीयस्कन्धवाक्य-ग्रहणम् । प्रमाणसिद्धत्वात् । अवनादिरूपोपासनस्येति शेषः । सूत्रे उप भगवत्समीप स्थितेस्तत्सम्बन्धित्वादित्यर्थः ।

## वाक्यार्थमञ्जरी

रमाया अलोपः उपासनालोपाभावः आदरात् भक्तेरेवेत्यर्थः । ननु लक्ष्मीवदितरेषा-मनाद्यनन्तकाले एकप्रकारेणोपासनाभावात्कथमेवमुक्तमित्यतो व्याचष्टे ॥ एवं निरुपाधिकेति ॥

## सूत्रभाष्यम्

**॥ ॐ उपस्थितेस्तद्वचनात् ॐ ॥ ४२ ॥**

**अनादिकाले भगवत्सम्बन्धित्वाद्युज्यते च नित्यमुक्तत्वं तस्याः । 'द्वावेतावनादि-नित्यावनादियुक्तौ नित्यमुक्तावनादिकृतौ नित्यकृतौ योऽयं परमो या च प्रकृती रमते ह्यस्यां परमो रमते ह्यस्मिन्प्रकृतिः स्वस्मिन्हि रमते परमो न स्वस्मिन्प्रकृतिरत एनमाहुः परम इति' इति गौपवनश्रुतिवचनात् ।**

## तत्त्वप्रकाशिका

न रमाया नित्यमुक्तत्वं युक्तं कारणाभावात् । न च स्वत एवाऽस्वातन्त्र्यादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ **उपस्थितेरिति** ॥ युज्यते नित्यमुक्तत्वं प्रकृतेः । 'द्वावेतौ' इति श्रुतेः । अनादिकाले भगवत्सम्बन्धित्वेनातिशयिततत्प्रसादाख्यकारणसद्भावादिति भावः । कृतौ पूर्णौ । अतः प्रकृतेरधिकारित्वाभावायुक्तं प्राणावसानत्वमधिकारिणामिति सिद्धम् ।

## भावबोधः

नित्यं भगवदुपस्थितेति प्रियत्वादिति न्यायविवरणानुसारेण अनादिकाले भगवत् सम्बन्धित्वाद्युज्यत इति भाष्यं व्याचष्टे– **अनादिकाल इति** ॥ देहतोऽप्यनादिनित्ययोः प्रकृतिपरमयोः कथमनादिकृतत्वादीत्यत आह– **कृतो पूर्णाविति** ॥ अत्र आद्ये– श्रियोऽधिकारित्वादिहेतुभूतसंसारित्वसाधकस्य जन्मादेरसिद्ध्युक्तिः । द्वितीये– संसारित्वे तस्याः कथमुपासनमित्याक्षेपपरिहारायोपासनालोपस्यादरनिमित्तकत्वोक्तिः । तृतीये– उपपन्ने नित्यमुक्तत्वे उपासनालोपस्यादरनिमित्तकत्वं स्यात् । तदेवास्वतन्त्रायाः कथं स्यात् कारणाभावादित्याक्षेपपरिहाराय भगवदुपस्थितिलक्षणकारणोक्तिरिति सूत्रक्रमः ।

## भावदीपः

उपस्थितेरतिप्रियत्वादिति न्यायविवरणमनुरुध्य भाष्यं व्याचष्टे ॥ **युज्यत इति** ॥ एतच्च सूत्रे शेषो वा तच्छब्दार्थो वेति ज्ञेयम् । श्रौतकृतशब्दार्थः कृताविति । फलोक्त्या सर्वसूत्रार्थमुपसंहरति ॥ **अत इति** ॥ जन्मादेरवतारादितया बद्धत्वाभावाद्भगवदुपस्थित्या तदतिप्रियत्वेन नित्यमुक्तत्वेऽप्यादरादुपासनोपपत्त्या बाधकाभावाच्चेत्यर्थः । अत्र यद्यप्यंत्यसूत्रस्याद्याभिमतनित्यमुक्तत्वसमर्थनार्थत्वात् द्वितीयस्य नित्यमुक्तत्वहेतुकचोद्यनिरासकतया । तृतीयत्वं च प्राप्तं तथाप्युपस्थितेर्भगवदुपस्थितिनिमित्तकात्तत्प्रीतिविषयत्वाख्यादादरान्नित्यमुक्तत्वमित्यादरपदानुवृत्त्या विशेषार्थलाभायैवं विन्यासः । तथाऽऽद्यसूत्रे तत्र स्थितेत्यनेनावतारोपपादकेनैव भगवदुपस्थितेर्लाभेऽपि तन्निमित्तकभगवत्कर्तृकादरातिशयरूपप्रीतिविषयत्वाच्छ्रियो नित्यमुक्तत्वमिति तत्र स्थितेत्यस्यावतारोपपादकत्वव्यक्तीकरणमन्त इत्याद्यूह्यम् ।

## अभिनवचन्द्रिका

**कारणाभावादिति** ॥ 'नित्यं नित्यात्मना यत' इति वचनात् । नित्यमपि मुक्तत्वं भगवत्प्रसादविशेषायत्तमिति भगवत्प्रसादो वक्तव्यः । न चासौ युज्यते कारणाभावादित्यर्थः । एतेन नित्यमुक्तत्वस्य कारणानपेक्षत्वात् कारणाभावात्तन्न युज्यत इत्ययुक्तमिति परास्तम् ।

(अभिनवचन्द्रिका)

पूर्वपक्षस्तु – भवत्येव प्रकृतिरधिकारिणी । संसारित्वे सति साधुत्वात् । न च प्रकृतिरनधिकारिणी नामादिष्वपठितत्वादिति वाच्यम् । असिद्धेः । न च श्रवणप्रसङ्गः अनुच्चरितमेव तद्वाक्यम् ऋष्यभिप्रेतमस्तीत्यङ्गीकारात् । न च संसारित्वासिद्धिः । सीतारुक्मिण्यादौ जननमरणादिदर्शनेन तत्सिद्धेः । ततश्च नाऽधिकारिणां प्राणावसानत्वमिति ।

सिद्धान्तस्तु – न प्रकृतिरधिकारिणी अबद्धत्वात् । न च जननादिना तत्सिद्धिः । सीतारुक्मिण्यादेः प्रादुर्भूतत्वेन उत्पत्तेरभावात् । 'सर्वायतना सर्वकाले'ति वत्सश्रुतेः । ननु रमाया नित्यमुक्तत्वे नियमेन भगवदुपासनं न स्यादिति चेत्, न नित्यमुक्तत्वेऽपि भक्तिविशेषेण तदुपपत्तेः । न च कारणाभावान्नित्यमुक्तत्वानुपपत्तिः अतिशयितभगवत्प्रसादाख्यकारणसद्भावात् । अतः प्रकृतेरधिकारित्वाभावात् युक्तं प्राणावसानत्वमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

अत्रोपस्थितिर्नाम समीपे स्थितिः । सामीप्यं च कालतो विवक्षितम् । यदा हरिस्तदैव श्रीरिति भावेन भाष्येऽनादिकाले भगवत्सम्बन्धित्वादित्युक्तम् । तथा च प्रकृतेरुपस्थितेरनादिकाले भगवत्सम्बन्धित्वादतिशयिततत्प्रसादाख्यकारणसद्भावात् तत्प्रकृतं नित्यमुक्तत्वं युज्यते तथा श्रुतेरपि सूत्रार्थमभिप्रेत्याह ॥ **युज्यते इति** ॥ भाष्ये युज्यते चेति चशब्देनाप्तकामत्वं समुच्चीयते । अत एव श्रुतावनादिनित्याविति हेतुभूतमुपस्थितत्वमनादिमुक्तौ नित्यमुक्ताविति तत्साध्यं नित्यमुक्तत्वमनादिकृतौ नित्यकृताविति पूर्णत्वमुक्तम् । साम्यव्यवच्छेदाय पूर्णत्वे वैचित्र्यद्योतनाय रमत इत्याद्युक्तमिति ज्ञेयम् । अत्राद्ये श्रियोऽधिकारित्वसाधकसंसारित्वादिहेतोरसिद्ध्युक्तिः । द्वितीये संसारित्वाभावे उपासनानुपपत्तिः स्यादिति तर्कस्यान्यथासिद्ध्युक्तिः । तृतीये नित्यमुक्तत्वे कारणाभावात् संसारित्वमङ्गीकार्यमिति नासिद्धिरित्याक्षेपपरिहाराय कारणोक्तिरिति सूत्रक्रमः ।

## तत्त्वसुबोधिनी

देहतोऽप्यनादिनित्ययोः प्रकृतिपरमयोः कथं अनादिकृतकत्वादित्यत आह ॥ **कृतौ पूर्णाविति** ॥ अत्राद्ये सूत्रे श्रियोऽधिकारित्वसाधकस्य जन्मादेः असिद्ध्युक्तिः । श्रीकामादेव स्वेच्छयैव तत्र मूलस्थाने स्थिता इतरत्र चावतारान् करोति । ननु स्वेच्छानुसारेण गमने स्वातन्त्र्यं

(तत्त्वसुबोधिनी)

स्यादित्यत उक्तम् ॥ **कामादिति** ॥ ईश्वरेच्छानुसारेणेत्यर्थः । किमत्र प्रमाणमित्यत उक्तम् ॥ **आयतनादिभ्य इति** ॥ आयतनादिप्रतिपादकशब्देभ्य इत्याद्यस्याक्षरार्थः । द्वितीये तदुपासनस्यादर्शनिमित्तत्वोक्तिः । तृतीये नित्यमुक्तत्वे भगवदुपस्थितिलक्षणकारणोक्तिरिति सूत्रक्रमः ।

## वाक्यार्थमञ्जरी

श्रियोऽनित्यमुक्तत्वं उपस्थितेः उप परमात्मसमीपे स्थितेः सर्वदा स्थितत्वादेव, कुतः तद्वचनात् तस्य भगवतो नित्यसम्बन्धस्य द्वावेतावित्यनेन प्रतिपादनादित्यर्थः ।

**॥ इति कामाधिकरणम् ॥ २४ ॥**

## २५. निर्धारणाधिकरणम्

दर्शनार्थं ह्युपासनम् । तच्च श्रवणादेरेव भवति । अतः किमर्थमित्यत्रोच्यते —

**॥ ॐ तन्निर्धारणार्थनियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ॐ ॥ ४३ ॥**

तत्त्वनिश्चयो वेदार्थनियमश्च ब्रह्मदृष्टेः पृथगेव । हिशब्देन 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' (बृ.उ.४-४-५) इति श्रुतिं सूचयति । श्रवणादिफलं चाज्ञानविपर्ययादिदर्शनप्रतिबन्धनिवृत्तिः । ब्रह्मतर्के च —

'श्रुत्वा मत्वा यथा ध्यात्वा तदज्ञानविपर्ययौ ।
संशयं च पराणुद्य लभते ब्रह्मदर्शनम्'इति ॥

### तत्त्वप्रदीपिका

तारतम्यज्ञानपूर्वकं सपरिवारस्य विष्णोरुपासनमिति दर्शितम् । तच्चोपासनं हरेर्दर्शनार्थं हीप्यते । तत्र श्रवणमननयोः फलं वाच्यम् । पृथक्फलाभावे तयोरपि दर्शनमेवेति किमर्थमेतत् । तयोश्च प्रथममेव स्यात् । तेनापि दर्शनसम्भवात् । न चाग्निहोत्राग्निष्टोमादिवत् बहूनामनुष्ठानम् । दृष्टफले फलनिष्पत्तावितरवैयर्थ्यात् । अतिशयार्थत्वे प्रथमावृत्त्यापि तद्युक्तेरित्यत आह– तन्निर्धारणेत्यादि सूत्रम् ॥ तत्वनिश्चय इत्यादेरयं भावः । 'आत्मा वा अरे द्रष्टव्यः' इत्युक्त्वा तद्दर्शनार्थत्वेन 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति विधीयन्ते । नैकमेव । न च विकल्प्यन्ते । अतो नैकफलत्वं श्रवणादीनां कल्प्यम् । पृथग्विधिविरोधात् । समस्तगुणपरिपूर्णो नारायण इत्ययमेव वेदार्थ इति ज्ञानं वेदार्थनियमः । उपपन्न एवैवम्भाव इत्यधिगमस्तत्वनिश्चयः । तौ ब्रह्मदृष्टेः पृथगेव तत्साधनोपासनात्पूर्वभाविनौ । श्रवणमननयोः फलं तत्वाज्ञाननिवृत्तिस्तद्विपर्यय प्रतीतिनिवृत्तिश्च । वेदार्थनियमोऽज्ञाननिवृत्तिरूपः । तत्वनिश्चयो विपर्ययनिवृत्तिरूपः । तत्वाज्ञानं तदनुपपत्तिश्च हि दृष्टिसाधनोपास्तिप्रतिबन्धौ । तत्वनिश्चयवतोऽपि पारोक्ष्यात्कश्चित्संशयो भवत्या दृष्टेः । दर्शनं कीदृशो नु भवेदिति । तदेतदाह–

'श्रुत्वा मत्वा तथा ध्यात्वा तदज्ञानविपर्ययौ ।
संशयं च पराणुद्य लभते ब्रह्मदर्शनम्' इति ।

अतः श्रवणमननवतोपासना कार्येति सिद्धम् ।

## तत्त्वप्रकाशिका

अत्र भगवज्ज्ञानसाधनोपासनस्य समस्तस्यापि कर्तव्यतासाधनादस्ति शास्त्रादिसङ्गतिः । अन्यथा समस्तोपास्तिविधानवैयर्थ्यापत्तेः सा समर्थनीया । प्रकृतोपासनमेव विषयः । किं समस्तं कर्तव्यं व्यस्तं वेति सन्देहः । विधेः पक्षद्वयसाधारण्यं सन्देहबीजम् । पूर्वपक्षयति **॥ दर्शनार्थमिति ॥** व्यस्तमेवोपासनं कर्तव्यम् । तथा हि । उपासनं तावद्भगवद्दर्शनार्थं न तु प्रयोजनान्तरं दृष्टमिष्टं वा । तच्च दर्शनं श्रवणमननाभ्यां भविष्यति किं ध्यानेन । अथोच्येत ज्ञानप्रतिबन्धकस्य दृढत्वाद् ध्यानादेव दर्शनमिति । 'तथा सति ध्यानेनैव दर्शनसम्भवादलं श्रवणादिना । न चोभयसमुच्चयेनैव दर्शनमिति मानमस्ति । न चोभयोरपि कृत्यं पश्यामः । अतः समस्तोपासनस्याकर्तव्यत्वाद्व्यर्थं तद्विधानमिति भावः । सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे **॥ अत्रेति ॥** कर्तव्यमेव समस्तोपासनं न श्रवणमननमात्रम् । श्रवणादिमात्रेण दर्शनाभावात् । तत्त्वज्ञानं हि श्रवणफलम् । अयमेव वेदार्थो नान्य इति निर्णयस्तु मननफलम् । तदुभयं च ब्रह्मदर्शनात्पृथगेव । अतो ध्यानं दर्शनार्थं कर्तव्यमिति भावः । ननु ध्यानादेव चेद्भगवद्दर्शनं किं तर्हि श्रवणमननाभ्यामित्यत आह **॥ हिशब्देनेति ॥** ज्ञानार्थं त्रयस्यापि विहितत्वात्सर्वमुपासनं कर्तव्यमिति भावः ।

ननु श्रौतोऽपि समुच्चयः कथमङ्गीकर्तुं शक्यते । ध्यानादेव दर्शनसम्भवात् । न च ज्ञानोदयोपयोगितया श्रवणादेः कर्तव्यता । श्रवणादेः फलान्तरस्यैवोक्तत्वादित्यत आह **॥ श्रवणादीति ॥** कर्तव्यमेव समस्तोपासनं श्रवणादेरपि ध्यानफलदर्शनोपयोगित्वात् । तथा हि । भगवद्दर्शनस्य तावदज्ञानसंशयविपर्ययाः प्रतिबन्धकाः । तत्र श्रवणं तत्वज्ञानमुत्पादयदज्ञानं निवर्तयति । मननं च वेदार्थनिर्णयं कुर्वत्संशयविपर्ययौ निवर्तयति । अतः प्रतिबन्धकनिवर्तकतया ज्ञानोपयोगित्वात्समस्तोपासनमपेक्षितमिति भावः । अत्र स्मृतिमाह **॥ ब्रह्मतर्के चेति ॥** अतः सर्वोपासनस्य कर्तव्यत्वादुक्तं युक्तमिति सिद्धम् ।

## गुर्वर्थदीपिका

अन्यथा समस्तोपास्तिविधान इत्यत्र समस्तोपास्तिः श्रवणमनननिदिध्यासनरूपेत्यर्थः । अलं श्रवणादिनेत्यस्य ध्यानार्थमस्तु श्रवणादिकम् । श्रवणादिना अलं अपरोक्षदर्शनायालं तद्धेतुता मास्त्वित्यर्थः । श्रवणफलं मननफलमित्यत्र साक्षादिति शेषः । अन्यथा प्रतिबन्धस्यापि

(गुर्वर्थदीपिका)

श्रवणमननफलत्वस्य वक्ष्यमाणत्वाद्विरोधः स्यात् । एवं च तन्निर्धारणं तत्त्वनिर्धारणं तेन सहितोऽर्थनिश्चयः वेदार्थनिश्चयश्चेति श्रवणमननसाक्षात्फलं ब्रह्मदृष्टेः पृथगेव । अतो ब्रह्मदृष्टेः साक्षात्साधनं ध्यानमेवेति भावः । तर्हि तयोर्वैयर्थ्यमित्यत उक्तं **अप्रतिबन्धः फलमिति** ॥ ब्रह्मदर्शनोपयोगिप्रतिबन्धनिरासाख्यावान्तरफलाय कर्तव्यम् । तद्वारा ब्रह्मदर्शनोपयोगित्वमस्ति । न तु ध्यानवत् साक्षात् । इदं चोपलक्षणम् । अश्रुतानिश्चितार्थध्यानायोगात्साक्षाद्दृष्टिसाधनध्यान-हेतुतयाऽप्युपयोग इत्यपि द्रष्टव्यम् । अत इत्यस्य दर्शनातिरिक्तफलजनकत्वादित्यर्थः । **प्रतिबन्धकनिवर्तकतया ज्ञानोपयोगित्वादित्यत्र** ज्ञानमनूद्य तादर्थ्येन श्रवणादित्रिकस्यापि विहितत्वान्न प्रतिबन्धनिरसनमात्रेण चरितार्थतेति भावः ।

## भावबोधः

**समस्तस्यापीति** । 'सर्ववेदान्तप्रत्ययं' इत्यत्र श्रवणमननाख्यशास्त्राभ्यासरूपोपासनोपसंहार इत्यादिना 'कामादितरत्र च' इत्यन्तेनाधिकारिविशेषादिनिर्णयपूर्वकं ध्यानरूपोपासना च कर्तव्येत्युक्तम् । तत्र अन्यतरोपासनामात्रेण फलसिद्धौ किमुभयानुष्ठानेन इत्याक्षेपोत्थानादनन्तर-सङ्गतिरिति भावः ॥ **किमित्यादि** ॥ अत्र ब्रह्मोपासनं किं व्यस्तं कर्तव्यमुत समस्तं कर्तव्यमिति चिन्ता । तदर्थं द्विविधोपासनस्यापि किमेकफलकत्वं उतानेकफलकत्वमिति । तदर्थं भिन्नफलकत्वे श्रवणमननरूपोपासनस्य श्रुत्युक्तज्ञानोपयोगित्वं न सम्भवत्युत सम्भवतीति । तच्च दर्शनं श्रवणमननाभ्यामेवेत्यादिना । तच्च श्रवणादेरेव भवतीति भाष्यव्याख्यानपरेणान्यथोपासां विनैव श्रवणादिज्ञानमात्रेण मुक्तिरिति न्यायविवरणांशोऽप्युक्ततात्पर्यम् । बन्धदाढ्र्ये श्रवणादीमाम-फलत्वमिति न्यायविवरणं तन्निवर्तनीयप्रदर्शनपूर्वकं संयोजयति– **अथोच्येत इत्यादिना** । सौत्र'हि' शब्दनिवर्तनीयमाह– **न चोभयेति** ॥ अप्रतिबन्ध इत्येतन्निवर्तनीयमाह– **न चोभयोरपीति** ॥ सूत्रे तन्निवारणं चार्थनियमश्चेति द्वन्द्वः । छन्दः कल्पत्वादेकवद्भावेऽपि नपुंसकत्वाभावः । तन्निर्धारणेन सहितोऽर्थनियम इति मध्यमपदलोपी समासः । प्रथमस्तच्छब्दो बुद्धिस्थत्वपरो भावप्रधानो वा । द्वितीयस्तु 'सैव हि' इत्यादिना प्रकृतब्रह्मपरामर्शक इत्यभिप्रायेण प्रवृत्तं तत्त्वनिश्चय इत्यादिभाष्यं व्याचष्टे– **तत्त्वज्ञानं हि इत्यादिना** ॥ ज्ञानार्थं त्रयस्यापि विहितत्वादिति । उपलक्षणमेतत् ।

(भावबोधः)

'श्रवणादित्रयोत्पन्नदृष्ट्यैव स्वेच्छया हरिः ।
प्रसन्नो मुक्तिदो नित्यं नान्येन तु कथञ्चन ॥'

ईशेच्छानियतिश्रुतेरिति न्यायविवरणानुसारेण ईशेच्छानियतत्वाच्चेत्यपि ज्ञातव्यम् । प्रतिबन्धकनिवर्तकतया ज्ञानोपयोगित्वादिति । शास्त्राभ्यासस्य ध्यानाङ्गत्वेऽपि स्वतन्त्रोपासनत्वं चास्ति, ब्रह्मसाक्षात्कारहेतुत्वात् चित्तवृत्तिनिरोधत्वाच्च । अत एवोक्तम्–

'अथवा सततं शास्त्रविमर्शेन भविष्यति ॥' इति सुधाग्रन्थस्याप्ययमेवाभिप्रायः ॥

## भावदीपः

**समस्तस्येति** ॥ फलभेदोक्त्येति भावः । तेन पूर्वत्राद्यनये श्रवणमननयोरन्यैस्त्रयोविंशतिनयैर्ध्यानप्रकारध्यानाधिकारनियमध्यातृध्येयानां निरूपणानन्तरमत्र श्रवणादित्रितयस्य फलभेदोक्त्या सर्वस्य कर्तव्यत्वसमर्थनस्यावसर इति वा पूर्वं कृतकृत्यतया फलाभावेऽपि प्रकृतेरादरादुपासनालोपेऽपि अकृतार्थानां समस्तोपासनस्य फलाभावाल्लोप एवेति शङ्कायां फलभेदकथनेनालोपोक्तेर्वा पूर्वसङ्गतिः सूचिता ॥ **विधानेति** ॥ श्रोतव्यो मन्तव्य इत्यादिविधानेत्यर्थः । यद्वा श्रवणादिरूपा जिज्ञासा कर्तव्येत्याद्यसूत्रे त्रितयकर्तव्यत्वविधानेत्यर्थः । तस्यैव ह्यधस्तननयैः प्रपञ्चनादिति भावः ॥ **व्यस्तं वेति** ॥ एकैकं वा द्वयं वेत्यर्थः ॥ **विधेरिति** ॥ श्रोतव्य इत्यादेरित्यर्थः । विकल्पद्योतकवाशब्दो वा समुच्चयार्थचशब्दो वा नास्तीति व्याससमासपक्षद्वयसाधारण्यमित्यर्थः । भाष्ये किमर्थमुपासनमिति ध्यानस्यैव लोपप्रतीतावपि न्यायविवरणे बन्धदार्ढ्याच्छ्रवणादेरफलता अन्यथोपासनं विनैव श्रवणादिज्ञानमात्रेण मुक्तिरित्यनिर्धारणस्योक्त्या भाष्येऽपि तथैवाभिप्रेतमिति भावेन ध्यानं कार्यं न वेत्यनुक्त्वा समस्तं व्यस्तं वेत्येव सन्देहं प्रदर्श्य तथैव पूर्वपक्षयति ॥ **व्यस्तमेवेति** ॥ श्रवणमनने द्वे एव कार्ये न ध्यानमेव कार्यं न श्रवणमनने श्रवणमननयोरन्यतरदेव वा कार्यमिति त्रेधा प्रतिज्ञार्थः । कुत इत्यतः विवक्षितफलस्य तत्तन्मात्रेणैव लब्ध्याऽधिकस्य व्यर्थत्वादिति भावेनाद्यार्थहेतूपपादकतया भाष्यं व्याचष्टे ॥ **उपासनं तावदिति** ॥ **दृष्टमिष्टं वेति** ॥ द्रष्टव्य इति वदन् यस्याश्रवणात्प्रकाशश्च कर्मण्यभ्यासादिति प्रकाशार्थत्वोक्तेश्चेति भावः । प्रजापश्वादिकमपि तत्र तत्रोपासनाफलत्वेन श्रूयत इत्यतः दृष्टं वा न भवतीत्युक्तम् ।

(भावदीपः)

महाफलहेतूपासनस्याल्पफलार्थत्वायोगेन सिद्धान्तिनानङ्गीकारादिति भावः । द्वितीयार्थे हेतूपपादकत्वे न बन्धदार्ढ्याच्छ्रवणादेरफलतेत्यन्यत्रोक्तं व्यनक्ति ॥ **अथोच्येतेति** ॥ **तथासतीति** ॥ तत्प्रतिबन्धदार्ढ्ये सतीत्यर्थः । समस्तमिति सिद्धान्तकोटिं निराह ॥ **न चेति** ॥ श्रवणादिद्वयस्य ध्यानस्य च समुच्चयेनेत्यर्थः ॥ **मानमिति** ॥ निदिध्यासितव्यश्चेति चशब्दादिरूपमित्यर्थः । तृतीयार्थे हेतुं व्यनक्ति ॥ **न चेति** ॥ किं चेति चार्थः । द्वयोः श्रवणमननयोरन्यतरेणैव दर्शनसम्भवेऽन्यतरस्य कृत्यं नेत्यर्थः । श्रवणाज्जनलोकादिरित्युक्तफलं त्विष्टं न भवति । दृष्टेरेवेष्टत्वात् । तथैवाध्यानायेत्यत्रोक्तेरिति भावः । फलोक्त्योपसंहरति ॥ **अत इति** ॥ व्यस्तादेवाभिमतफलसिद्धेः । समस्तादेव फलसिद्धौ मानाभावाच्चेत्यर्थः । तद्विधानमिति पूर्ववद्व्याख्येयम् ।

भाष्यादौ श्रवणादिफलोक्तेः पूर्वपक्ष्युक्तहेतुनिरासोपपादकतयोपयोगं विवक्षुः पूर्वपक्षं निराह ॥ **कर्तव्यमेवेति** ॥ न श्रवणमननमात्रं श्रवणमात्रं मननमात्रं ध्यानमात्रं वा नेत्यपि ध्येयम् । श्रवणादिमात्रेणेत्यत्राप्येवं ज्ञेयम् । कुत इत्यतो भिन्नफलकत्वात्त्रयाणामिति भावेन भाष्यं व्याचष्टे ॥ **तत्त्वेति** ॥ श्रवणफलमित्यश्रवणशब्देन गुरूपदेशविषयकश्रावणप्रत्यक्षमुच्यते । मननशब्देन च युक्त्यनुसंधानम् । फलं साक्षात्फलमित्यर्थः । भाष्ये निश्चय इत्युक्तावपि तत्वज्ञानं हि, इत्युक्तिर्द्वितीये निर्णय इत्युक्तिश्च निश्चयपदोक्त्याऽयमेव वेदार्थो नान्य इति, निश्चयस्तत्वनिश्चयपदेनोक्तमिति तदेव मननफलनिर्देशकमिति न ज्ञेयमिति सूचनाय । निश्चय इत्युक्तिस्तु संशयभिन्नत्वमात्रेणेति भावः । तत्त्वेत्युक्त्या सौत्रतच्छब्दः पूर्वत्र इयदामननादित्यादिना प्रकृतपरापरतत्त्वपर इति सूचितम् । तत्वप्रदीपे तु निश्चयपदस्वारस्यानुरोधेन निश्चितप्रामाण्यकं मननफलरूपं ज्ञानं निश्चयपदार्थः । नियमपदेन श्रवणफलमित्युपेत्य व्याख्यातम् । टीका तु श्रवणादिफलं चेत्यादिभाष्यस्वारस्याभिप्रायेति ध्येयम् ॥ **त्रयस्यापीति** ॥ समुच्चायकशब्दाभावेऽपि त्रितयविधानान्यथानुपपत्त्या समुच्चयो गम्यते । विकल्पार्थकवाशब्दाभावादिति भावः । 'न चैतानि विना कश्चिज्ज्ञानमाप कुतश्चन'इत्यादिस्मृतिसूचनाय ज्ञानार्थमित्युक्तिः । अन्यथा दर्शनार्थमित्यवक्ष्यत् । उक्तशङ्कानिवर्तकहेतूपपादकतया भाष्यं व्याचष्टे ॥ **कर्तव्यमेवेत्यादिना** ॥ **ज्ञानोपयोगित्वादिति** ॥ ध्यानस्य साक्षाज्ज्ञानजनकत्वाच्चेत्यपि ध्येयम् ॥ **अत्रेति** ॥ श्रवणादेः प्रतिबन्धनिवृत्तिद्वारा अङ्गाङ्गिभावेन दृष्टिहेतुत्वरूपेऽर्थे स्मृतिमाहेत्यर्थः । एतच्चापरोक्षदर्शिनश्चैव श्रवणान्मननादनु ।

(भावदीपः)

सम्यङ्निश्चिततत्वस्य **निदिध्यासनया भवेदित्यनुभाष्ये** निदिध्यासनं ब्रह्मदर्शनसाधनं तत्सिद्ध्यर्थं श्रवणमनने अपि कर्तव्ये इति सुधायां चोक्त्या दृष्टिहेतुध्यानोपकारकतया विवेक्तव्यम् । विवृतमेतन्न्यायामृते तृतीयपरिच्छेदे ॥ **अत इति** ॥ श्रुत्युक्तत्वात्तत्वज्ञानतन्निर्णययोर्जनकत्वाच्छ्रवणमननयोरित्यर्थः । अत्र सूत्रपदकृत्यचर्चा तन्त्रदीपिकायां व्यक्ता ।

## अभिनवचन्द्रिका

**समस्तस्यापीति** ॥ समाविष्टस्यापीत्यर्थः । श्रवणमननाभ्यां समाविष्टस्य, अन्यथासिद्धिशङ्कयाऽकर्तव्यतया प्रसक्तस्यापि ध्यानस्य, तथा ध्यानेन समाविष्टयोः, अन्यथासिद्धिशङ्कया अकर्तव्यतयाप्रसक्तयोरपि श्रवणमननयोः, कर्तव्यता समर्थ्यत इति भावः । एतेन अपिशब्दो व्यर्थ इति परास्तम् । **समस्तोपास्तीति** ॥ 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इति ज्ञानार्थं श्रवणादीनां समावेशाभिप्रायकविधीनां वैयर्थ्यं स्यादित्यर्थः । विधीनां समावेशाभिप्रायाभावे 'आत्मा वा अरे द्रष्टव्य' इति दर्शनानुवादेन श्रोतव्यो मन्तव्योवा, निदिध्यासितव्यो वेति विकल्पाभिधानं स्यादिति भावः । एतेन समस्तस्य कर्तव्यत्वाभावेऽपि एकेन श्रवणमनने, एकेन निदिध्यासनं कर्तव्यमित्येवमर्थं विधीनां सार्थक्यसम्भवात् समस्तोपास्तिविधानवैयर्थ्यापत्तेरित्ययुक्तमिति परास्तम् । **व्यस्तमेवेति** ॥ श्रवणमनने वा, निदिध्यासनं वा, स्वेच्छानुसारेण कार्यं न तु समस्तमित्यर्थः । **तच्च दर्शनमिति** ॥ अपरोक्षज्ञानस्याऽज्ञानसंशयविपर्यया: प्रतिबन्धकाः । तत्राऽज्ञाननिवृत्यर्थं श्रवणं, संशयविपर्ययनिवृत्यर्थं मननंचाऽऽवश्यकम् । ध्यानस्य तु न किमपि प्रयोजनमितिभावः । **अथोच्येतेति** ॥ ज्ञानप्रतिबन्धकानामज्ञानसंशयविपर्ययाणां दृढत्वात्, न श्रवणमननाभ्यां निवृत्तिः । अतो ध्यानमावश्यकमिति यद्युच्येतेत्यर्थः । तथा **सतीति** ॥ ध्यानस्यैवाज्ञानसंशयविपर्ययनिवर्तकत्व इत्यर्थः । **न चोभयोरपीति** ॥ श्रवणमननयोर्मध्ये एकस्यापि ज्ञानोपयोगं नैव पश्याम इत्यर्थः । **अत इति** ॥ श्रवणमननाभ्यां प्रतिबन्धकनिवृत्तौ, ध्यानस्य वैयर्थ्यं, ध्यानेनैव प्रतिबन्धकनिवृत्तौ श्रवणमनने व्यर्थे भवत इति यतः, अतः समस्तोपासनं सर्वथा न कार्यमितिभावः । **तदुभयं चेति** ॥ श्रवणमननफलं दर्शनादन्यदेवेति न ताभ्यां दर्शनसाधनस्य ध्यानस्याऽन्यथासिद्धिरिति भावः ।

(अभिनवचन्द्रिका)

पूर्वपक्षस्तु– **श्रवणमनने एव कार्ये** । ताभ्यामेवाज्ञानसंशयविपर्ययनिवृत्तौ स्वकारणादेव दर्शनसम्भवात् । अथोच्येत ज्ञानप्रतिबन्धकानां दृढत्वात् । ध्यानेनैव प्रतिबन्धकनिवृत्तिरिति, तर्हि ध्यानेनैव ज्ञानमस्तु न ज्ञानार्थं श्रवणमनने । न च समुच्चितानां ज्ञानहेतुत्वे मानमस्ति । न च ज्ञानोत्पादे श्रवणमननयोरुपयोगं पश्यामः । अतः समस्तोपासनं **न कर्तव्यमिति** समस्तोपास्ति-विधानवैयर्थ्यमिति ।

सिद्धान्तस्तु– कर्तव्यमेव समस्तोपासनं न श्रवणमननमात्रम् । तयोः तत्वज्ञानवेदार्थ-निर्णयरूपदर्शनातिरिक्तफलहेतुत्वेन दर्शनहेतुत्वाभावात् । ध्यानस्य च दर्शनहेतुत्वेनाऽऽवश्य-कत्वात् । न चैवं श्रवणमननाभावप्रसङ्गः तयोः साक्षाद्दर्शनहेतुत्वाभावेऽपि प्रतिबन्धकी-भूताज्ञानसंशयविपर्ययनिवृत्तिद्वारा दर्शनोपयोगित्वेनाऽऽवश्यकत्वात् । न च तत्र प्रमाणाभावः । दर्शनार्थं 'श्रोतव्यो मन्तव्य' इति विहितत्वात् । 'श्रुत्वा मत्वा तथा ध्यात्वा तदज्ञानविपर्ययौ । संशयं च पराणुद्य लभते ब्रह्मदर्शनम्' इति स्मृतेश्च । अतः समस्तोपासनस्य कर्तव्यत्वाद्युक्तं तद्विधानमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

**समस्तस्यापीति ॥** श्रवणमननाख्यशास्त्राभ्यासस्वरूपस्य सर्वपरिज्ञानाधिकरणोक्तस्योपसंहार इत्यारभ्य कामादित्यन्तैरधिकरणैः तारतम्यपरिज्ञानपूर्वं सपरिवारस्य विष्णोर्यथायोग्यं कर्तव्य-मित्युक्तस्य ध्यानरूपस्येत्येवं द्विविधोपासनस्यापि समुच्चयसाधनादनन्तरसङ्गतिरिति भावः । अत एव समस्तस्यापीत्यपिशब्दः । समस्तोपास्तिविधीति । 'आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इति समस्तोपास्तिविधीत्यर्थः ॥ **किं समस्तमिति ॥** शास्त्राभ्यासरूपं ध्यानरूपं चेत्युपासनं किमन्यत्र परित्यागेनान्यतरदनुष्ठेयमुत समुच्चितं कर्तव्यमिति चिन्ता । तदर्थं द्विविध-स्योपासनस्य किमेकफलकत्वमुत भिन्नफलकत्वमिति ॥ **विधेरिति ॥** उक्तरीत्या विधेरेकफलका-भिन्नफलकाप्युपपद्यत इति विधेः पक्षद्वयसाधारण्यमित्यर्थदर्शनार्थम् । ह्युपासनमित्यत्र हिशब्दो यत इति हेत्वर्थः । तस्य चात इत्यनेन सम्बन्धः । यद्वा हिशब्दो युक्तिविशेषद्योतकः । तामेवाह ॥ **न तु प्रयोजनान्तरं दृष्टमिति ॥**

(वाक्यार्थमुक्तावली)

ननु श्रवणादिना जनलोकादिकं प्रयोजनं प्रमितमेवेत्यत उक्तं- **दृष्टं चेति** । अधिकत्वेन सर्वेषां तदपेक्षाभावादिति भावः । श्रवणादेरित्यादिशब्दार्थमाह ॥ **श्रवणमननाभ्यामिति** ॥ किमर्थमित्यस्यार्थः ॥ **किं ध्यानेनेति** ॥ एवं ध्यानमननवैय्यर्थ्येन तदाक्षेपकत्वेन भाष्यं व्याख्याय दृढबन्ध इत्युक्तन्यायावलम्बनं ध्यानं स्वीकृत्य श्रवणाद्याक्षेपकतया भाष्यं व्याचष्टे ॥ **अथेति** ॥ **दृढत्वादिति** । श्रवणमननानिवर्त्यत्वादित्यर्थः । तथा च भाष्यस्य तच्चोपासनं हरेर्दर्शनार्थं भवतीष्यते । अतः श्रवणादेः किमर्थमनुष्ठानमित्यर्थो लभ्यते । उक्तं च तत्वप्रदीपे । तच्चोपासनं हरेर्दर्शनार्थमिष्यते । तच्च श्रवणमननयोः फलं वाच्यमिति । सौत्रहिशब्दनिवर्तनीयमाह ॥ **न च तयोरिति** ॥ सूत्रे तन्निर्धारणं चार्थनियमश्चेति द्वन्द्वः । छन्दःकल्पत्वादेकवद्भावेऽपि नपुंसकत्वाभावः । तन्निर्धारणेन सहितार्थनियम इति मध्यमपदलोपी वा समासः । प्रथमस्तच्छब्दः इयदामननात् सैव हीति प्रकृतपरतत्वपरः । भावप्रधानो वा । फलमित्यावर्तते । तद्दृष्टेरिति चावर्तते । अत्र तच्छब्देन सैव हीति प्रकृतब्रह्मपरामर्शः । हिशब्दः श्रुतिद्योतकः । तथा चायं सूत्रार्थः । तन्निर्धारणं अर्थनिश्चयः तेन सहितोऽर्थ नियमः । अयमेव वेदार्थो नान्य इति निश्चयश्चेत्येवंरूपं श्रवणमननरूपं फलम् । तद्दृष्टेर्ब्रह्मापरोक्षज्ञानध्यानसाध्यात् पृथग्गतः ताभ्यां दृष्ट्यर्थसिद्धेः दृष्ट्यर्थं ध्यानं कार्यम् । तर्हि श्रवणमनने ज्ञानार्थिना न कार्ये इत्यत उक्तम् ॥ **हीति** ॥ श्रुतिविहितेऽपि समुच्चयो कथमङ्गीकारार्हः । ज्ञानार्थिनो ध्यानमात्रेण पूर्तेरित्यत उक्तम् । **तद्दृष्टेरिति** । तद्दृष्टेरप्रतिबन्धः श्रवणमननयोः फलमिति । तदेतदभिप्रेत्य प्रवृत्तं तत्वनिश्चय इत्यादिभाष्यं व्याचष्टे । **तत्वज्ञानं हि श्रवणफलमित्यादिना** ॥ **ज्ञानार्थमिति** ॥ द्रष्टव्य इति दर्शनानुवादेन त्रयस्य विहितत्वादिति भावः ॥ **ज्ञानोपयोगितयेति** ॥ ज्ञानप्रतिबन्धकनिवर्तकतयेत्यर्थः ॥ **फलान्तरस्यैवेति** ॥ तत्वनियमस्य वेदार्थनियमलक्षणस्येत्यर्थः ।

ननु कथमुपयोगः पदान्तरोक्तेरित्यत उपयोगप्रकारं दर्शयन् फलान्तरस्य तदविरोधं दर्शयति ॥ **तथा हीति** ॥ प्रतिबन्धकनिवर्तकतया ज्ञानोपयोगित्वादिति । नन्वथवा सततं शास्त्रविमर्शेन भविष्यतीति शास्त्रावमर्शस्य तन्त्रसारे साक्षादपरोक्षहेतुत्वमुक्तमिति विरोध इति चेन्न । अत्र तत्वनिश्चयात्प्राक्कालीनयोः श्रवणमननयोर्विचारितत्वात् तत्र तदनन्तरभाविनोर्विवक्षितत्वात् । हृदि किञ्चिदुपास्यैवेत्युक्तेरीषद्भिम्बध्यानोपासनस्य सर्वेषामपेक्षितत्वेन शास्त्रविमर्शप्राचुर्यविवक्षया

(वाक्यार्थमुक्तावली)

तद्वाक्योपपत्तेश्च । उक्तं च सुधायाम् । शास्त्राभ्यासस्य ध्यानाङ्गत्वेऽपि स्वतन्त्रोपासनत्वं चास्ति । चित्तवृत्तिनिरोधनाच्च । अत एवोक्तं अथवा सततं शास्त्रावर्त्तेन भविष्यतीति । अत्र हिशब्देन सौत्रेणात्मा वारे इति तृतीयनियतश्रुतिवत् 'श्रवणादित्रयोत्पन्नदृष्ट्यैव स्वेच्छया हरिः । प्रसन्नो मुक्तिदो नित्यं न चान्यत्तु कथञ्चन' इतीच्छानियतिश्रुतेरपि ग्रहणात् नियतिरित्युक्तन्यायोऽपि सूत्रारूढो भवति । भाष्ये नियतिरिति न्यायस्य विधिनियतिरिति व्याख्येयम् । न्यायविवरणं त्वीश्वरेच्छानियतिरित्यर्थकथनमिति न भाष्ये तदप्रदर्शनमिति ज्ञेयम् ।

## तत्त्वसुबोधिनी

सर्ववेदान्तप्रत्ययमित्यत्र श्रवणमननाख्याशास्त्राभ्यासरूपोपासनोपसंहारः इत्यादिना कामादि-रत्रेत्यन्तेन, अधिकारिविशेषनिर्णयपूर्वकं ध्यानरूपोपासना च कर्तव्येत्युक्तम् । तत्रान्यतरोपासन-मात्रेण फलसिद्धौ किमुभयानुष्ठानेनेत्याक्षेपोत्थानादनन्तरसङ्गतिरिति भावः । **अन्यथेति** । समस्तो-पासनस्य कर्तव्यताऽसमर्थनेत्यर्थः । ननु उभयोरपि अपेक्षितत्वात् कथमेकेनैवालमित्युच्यते इत्यत आह ॥ **न चेति** ॥ ध्यानेनैव दर्शनसम्भवे श्रवणादिध्यानकृत्यमित्यर्थः । सूत्रे तन्निर्धारणार्थं चार्थनियमश्चेति द्वन्द्वः । च्छन्दःकल्पत्वादेकवद्भावेऽपि नपुंसकत्वाभावः । तन्निर्धारणेन सहितोऽर्थनियम इति मध्यमपदलोपी समासः । प्रथमः तच्छब्दः बुद्धिस्थपरो भावप्रधानो वा, द्वितीयस्तु सैव हीत्यादिना प्रकृतब्रह्मपरामर्शक इत्यभिप्रायेण अप्रवृत्ततत्वनिश्चय इत्यादिभाष्यं व्याचष्टे ॥ **तत्वज्ञानं हीत्यादिना** ॥ अस्य च सूत्रस्य तन्निर्धारणार्थनियमः तत्वनिर्धारणं वेदार्थनियमश्च तद्दृष्टेः ब्रह्मदृष्टेः पृथुगेव श्रवणादिफलम् । किमत्र प्रमाणमित्यत उक्तम् ॥ **हीति** ॥ एवं च श्रोतव्य इत्याद्यत्र प्रमाणमिति भावः ।

ननु ध्यानेनैव दर्शनसम्भवान्न श्रवणादिना कृत्यम् । न च श्रवणादेरपि ज्ञानोपयोगित्वमिति वाच्यम् । तत्वनिश्चयादिरूपफलान्तरस्यैव उक्तत्वेन ज्ञानोपयोगित्वाभावादित्यत उक्तम् । **अप्रतिवन्धः फलमिति** ॥ दर्शनप्रतिबन्धकाज्ञानसंशयविपर्ययनिरासः फलम् । श्रवणादिना तत्वनिश्चयवेदार्थनियमयोः सतोः अज्ञानादिरूपदर्शनप्रतिबन्धकनिरासे सति पश्चाद्ध्यानेन दर्शनं सम्भवतीत्यक्षरार्थः ।

## वाक्यार्थविवरणम्

**समस्तस्यापीति** ॥ श्रवणमननादिरूपशास्त्राभ्यासरूपस्य ध्यानरूपस्येति समस्तस्येत्यर्थः ॥ **विधानेति** ॥ श्रोतव्यो मन्तव्य इत्यादिविधानेत्यर्थः । व्यस्तं यत्किञ्चिदिति यावत् ॥ **विधेः** ॥ जिज्ञासा कर्तव्येति विधेः ॥ **ज्ञानप्रतिबन्धकस्येति** ॥ अज्ञानसंशयविपर्ययरूपस्येत्यर्थः ॥ **उभयेति** ॥ श्रवणादिरूपशास्त्राभ्यासध्यानरूपोभयेत्यर्थः । ननु उभयमप्यावश्यकमिति चेत्तत्राह ॥ **न चोभयोरपीति** ॥ **तदुभयम्** ॥ फलभूतमुभयं पृथगेव । अस्तीति शेषः । अतः श्रवणमननाभ्यां दर्शनं न भविष्यतीति भावः । भाष्ये श्रुत्वा अज्ञानं पराणुद्य, मत्वा संशयविपर्ययौ पराणुद्य, ध्यात्वा ब्रह्मदर्शनं लभत इति विवेकेन योज्यम् ।

## वाक्यार्थमञ्जरी

समस्तस्य **सर्वस्य** व्यस्तं किञ्चिद्विधेः श्रोतव्य इत्यादेर्दृष्टं भवति ॥ **न चेति** ॥ कृत्यं चेत्यन्वयः ॥ ॐ तन्निर्धारणार्थनियमस्तद्दृष्टेः पृथग्ध्यप्रतिबन्धः फलं ॐ ॥ तन्निर्धारणं तस्य परापरतत्त्वस्य **निर्धारणं** निश्चयः अर्थनियमः अर्थस्य वेदार्थस्य अयमेवेति नियमः निश्चयः एतदुभयं तद्दृष्टेः तस्य परमात्मनो दृष्टेः अपरोक्षज्ञानात्पृथक् अन्यदेव अप्रतिबन्धः ज्ञानप्रतिबन्धक-निवृत्तिः तदुभयफलमित्यर्थः ॥ **पृथगेवेति** ॥ अपृथक्त्वे किल श्रवणमननाभ्यां पूर्तिः स्यादिति भावः ॥ **कथमिति** ॥ निष्फलत्वादिति भावः ।

॥ इति निर्धारणाधिकरणम् ॥ २९ ॥

## २६. प्रदानाधिकरणम्

### सूत्रभाष्यम्

**॥ ॐ प्रदानवदेव हि तदुक्तम् ॐ ॥ ४४ ॥**

**न च श्रवणादिमात्रेण ब्रह्मदृष्टिर्भवति, किन्तु सेतिकर्तव्येन । यथा गुरुदत्तं तथैव भवति । 'आचार्यवान्पुरुषो वेद' (छां.उ.६-१४-२) इति ह्युक्तम् ।**

### तत्त्वप्रदीपिका

अथ किं श्रवणादिमात्रेण दृष्टिर्भवत्युत सेतिकर्तव्येनेति विचार्यते । श्रोतव्य इत्येव विहितत्वायेन केनाप्युपायेन श्रुतवतः स्वयमेव मननादिना दृष्टिरित्यंत आह– **प्रदानवदेव तदुक्तम् ॥** न तावत्परोपदेशे निलीनतया बलाद्वा श्रवणं दृष्टिद्वारं भवति । चौर्यादिदोषदुष्टत्वात् । किन्त्वित्थं श्रवणं कर्तव्यमिति यथाशास्त्रविहितं तथा कृतेनैव सेतिकर्तव्येनेति ह्युक्तम् । तदेव वर्णयति यथा गुरुदत्तं तथैव भवतीति । यथाभूतगुरुदत्तं तथैव भवति यथा च गुरुणा दत्तं प्रसादेन वाऽप्रसादेन वा तदनुरूपं भवति । अत उत्तमगुरुं प्राप्य शुश्रूषया प्रसाद्य ततः श्रोतव्यमित्यर्थः । उक्तञ्च भगवतैव–

'षण्णवत्यङ्गुलो यस्तु न्यग्रोधपरिमण्डलः ।  
सप्तपादश्चतुर्हस्तो द्वात्रिंशल्लक्षणैर्युतः ॥  
असंशयः संशयच्छिद्गुरुरुक्तो मनीषिभिः ।  
तस्माद्ब्रह्मा गुरुर्मुख्यः सर्वेषामेव सर्वदा ॥  
अन्येऽपि स्वात्मनो मुख्याः क्रमाद्गुरव ईरिता ।  
नातिप्रसन्नहृदयो यद्दद्याद्गुरुरप्यसौ ।  
न तत्सत्यं भवेत्तस्मादर्चनीयः परो गुरुः' इति ॥

### तत्त्वप्रकाशिका

अत्र भगवज्ज्ञानसाधनोपासनेतिकर्तव्यतासाधनादस्ति शास्त्रादिसङ्गतिः । अन्यथा 'इतरे त्वर्थसामान्यात्' इत्युक्तमयुक्तं स्यादतस्तत्समर्थनीयम् । प्रकृतं श्रवणाद्येव विषयः । किं यथाकथञ्चिदनुष्ठितं ज्ञानसाधनमुत गुरुप्रसादपूर्वकप्रदानयुक्तमिति सन्देहः । कर्तव्यताविधेरुभयथाऽपि पर्यवसानं

(तत्त्वप्रकाशिका)

सन्देहबीजम् । यथाकश्चिदनुष्ठितं श्रवणादिज्ञानसाधनमिति पूर्वः पक्षः । 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति श्रवणादिमात्रस्यैव ज्ञानहेतुत्वावगमात् । मानस्य च गुरुप्रसादाधीनत्वे ज्ञानिनोऽपि मोक्षस्य तदधीनत्वप्रसङ्गश्च । नेदमनिष्टमिति चेन्न । कदाचिद्गुरुकोपेन तदभावप्रसङ्गात् । अन्यथा गुरुकोपवत्तद्वरस्यापि निरर्थकता स्यात् । अभ्युपगमे चानियम इत्युक्तविरोधः स्यात् । अतो ज्ञाने गुर्वपेक्षाभावात्तदुक्तप्रकारेणोपासनमयुक्तमिति । सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ॥ **प्रदानवदिति** ॥ न श्रवणादिमात्रं ज्ञानसाधनं किं तु प्रसादपूर्वकगुरुप्रदानयुक्तमेव गुरुप्रदानानुसारित्वात्फलस्य । न चैवमुक्तवचनविरोधः । गुरुप्रदानं ज्ञानसाधनस्य श्रवणादेरितिकर्तव्यतेत्यभ्युपगमात् । न हि दृढमुष्टिनिपीडनादि पृथक्साधनमुच्यत इति भावः । गुरुप्रदानाधीनत्वं ज्ञानस्य कुत इत्यत आह ॥ **आचार्यवानिति** ॥ न चैवमुक्तरीत्या ज्ञानाद्यभावः । तज्ज्ञानमोक्षयोरीश्वरकल्पितत्वात् । न चैवं गुरुशापो विफलः । ज्ञानादिह्रासहेतुत्वात् । उक्तं च । 'ज्ञानिनो गुरुशापेऽपि नामुक्तिः संसृतेर्भवेत् । आनन्दह्रासदोषेण सैव मुक्तिर्विदुष्यति' इति । तथा 'ये ज्ञानविषयाः शापा मुक्तिगाश्चाधिकारिणाम् । कादाचित्कास्ते भवन्ति नैव ते सार्वकालिकाः । तेषां ज्ञानस्य मुक्तेश्च तारतम्यस्य चैव हि । भगवन्नियतत्वात्तु शापादिर्नात्र कारणम्' इति । अतो गुरुप्रदानस्यावश्यकत्वादुक्तं युक्तमिति सिद्धम् ।

## गुर्वर्थदीपिका

उपासनेतिकर्तव्यतासाधनादित्यत्र उपासनस्य गुरुप्रसादपूर्वकप्रदानाख्येतिकर्तव्यतासाधनादित्यर्थः । अन्यथा गुरुणा भावितत्तत्फलानुसारेण प्रदानाभावे अभ्युपगमे चेत्यत्र गुरुकोपान्मोक्षाभावाभ्युपगम इत्यर्थः । न श्रवणादिमात्रमित्यत्र यस्मात्कस्माच्चिद्गुरोः श्रवणादिकं श्रवणादिमात्रमित्युच्यते । प्रसादपूर्वकगुरुप्रदानेत्यत्र गुरुस्सर्वज्ञो नियतगुरुः । न हि दृढमुष्टिनिपीडनादीत्यत्र तण्डुलान्पिनष्टीत्यादिनोक्तपिष्टीकरणाय तण्डुलादेर्दृढमुष्टिनिपीडनम् । आदिपदेन मुसलादिकं गृह्यते । पृथक्साधनं पेषणाङ्गभूतसाधनं न ह्युच्यते तण्डुलान्पिनष्टीति वाक्ये न ह्युच्यत इत्यर्थः । इदं चोपलक्षणम् । 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति विधिवाक्ये कस्याप्यङ्गस्यासङ्ग्रहात् । वाक्यान्तरेण सङ्ग्रहस्तु 'एवमाचार्यवान्पुरुषो वेद' इति गुरुप्रदानेऽपि समान इत्यपि द्रष्टव्यम् । तज्ज्ञानमोक्षयोरित्यत्र तच्छब्देनाधिकारिणो गृह्यन्ते ।

## भाववोधः

इति **कर्तव्यतासाधनादिति** ॥ प्रधानभूताङ्गिविचारानन्तरं तदङ्गभूतेतिकर्तव्यताविचारादनन्तर-सङ्गतिरिति भावः । 'इतरे तु अथ सामान्यात्' इत्युक्तमयुक्तमिति । तत्र तेषां भाव्युत्कर्षं ज्ञात्वा तदभिज्ञस्य ब्रह्मण एव गुणनियमोपदेशोपपत्तेरिति न्यायविवरणानुसारेण ध्यानयोग्यतानिर्णयार्थं गुरुपरिग्रहस्यावश्यकत्वस्योक्तत्वादित्यर्थः । **यथाकथञ्चिदिति** ॥ अत्र श्रवणादि किं यथाकथञ्चिदनुष्ठितं ज्ञानसाधनं उत गुरुप्रसादपूर्वकप्रदानयुक्तमेवेति चिन्ता । तदर्थं श्रवणादिफलं ज्ञानादिकं गुरुप्रसादाधीनं न भवत्युत भवतीति । तदर्थं ज्ञानादेः फलस्य गुरुप्रसादाधीनत्वे 'श्रोतव्यः' इत्यादिश्रुतिविरोधकादाचित्कगुरुशापप्रयुक्तमोक्षाभावौ किं भवत उत न भवत इति । सौत्रावधारणव्यावर्तककथनपरेण च श्रवणादिमात्रेणेति भाष्यानुसारेणाह– **आत्मेति** ॥ गुर्वधीनत्वे ज्ञानमोक्षयोः ज्ञानिनोऽपि कदाचिद्गुरुकोपाज्ज्ञानपराभावेनामुक्तिप्रसङ्गात् । न गुर्वधीनत्वमिति न्यायविवरणं योजयति– **ज्ञानस्य चेत्यादिना** । ज्ञानिनो गुरुशापान्मोक्षाभावो नानिष्ट इत्यत आह– **अभ्युपगम इति** ॥ अत्र सौत्रः 'तत्'शब्दः पूर्वसूत्रप्राप्तश्रवणाद्युपासनपरामर्शक 'एव'कारव्यावर्त्यं च श्रवणादिमात्रमित्यभिप्रेत्य प्रवृत्तं न च श्रवणादिमात्रेणेत्यादिभाष्यं व्याचष्टे– **न श्रवणादिमात्रमित्यादिना** ॥ 'श्रोतव्यः' इति श्रुतिविरोधपरिहारार्थमेव भाष्ये सेतिकर्तव्य-नेत्युक्तम् । अन्यथा यथागुरुदत्तमित्यादिनैव पूर्तेरित्यभिप्रेत्याह– **न चैवमित्यादिना** ॥ गुरुप्रदान-मित्यनेन सेतिकर्तव्यतेत्यतः स्वपदविवरणार्थं यथा गुरुदत्तमिति भाष्यमित्युक्तं भवति ॥ **न हि दृढमुष्टीति** ॥ यथा 'सोममभिषुणोति' इत्यादौ सोमरसस्य दृढमुष्टिनिपीढनसाध्यत्वे 'सोमं दृढमुष्ट्या निपीढयेत्' इति न पृथक् चोच्यते । तेन विना सोमरसलाभासम्भवेनानुक्तिसिद्धत्वात् तथाऽत्रापीति भावः । ज्ञानिनो ब्रह्मवस्तुवैभवेन मुक्तिः स्यादिति गुरोर्वरेण चामुक्त्यनुपपत्तेरिति न्यायविवरणं तन्निवर्तनीयाशङ्कानिरासपूर्वकं व्याचष्टे **न चैवमित्यादिना** । मुक्तिदूषणेनैवेति गुरुशापादेः कृतार्थत्वादिति न्यायविवरणं तन्निवर्तनीयाशङ्कानिरासापूर्वकं व्याचष्टे– **न चैवमिति** ॥ अत्र न्यायविवरणोदाहृतं प्रमाणं पठति– **उक्तं चेति** ॥ प्रमाणविशेषमप्याह– तथा हीति ॥

## भावदीपः

**उपासनेतिकर्तव्यतेति ॥ गुरुप्रदानरूपेत्यर्थः ।** प्रधानचिन्तानन्तरं तदङ्गविचारणाद्वा पूर्वोक्तेन समस्तोपासनकर्तव्यत्वहेतुनैव श्रुतिविहितत्वेन तन्मात्रकर्तव्यत्वपूर्वपक्षकरणाद्वा पूर्वसङ्गतिरपीति भावः ॥ **इतरे त्विति** ॥ गुरुप्रदानासमर्थने स्वप्राप्यफलसाम्येन मध्यमगुणा गुरूक्तप्रकारेणोपास्या इति प्रागुक्तमयुक्तमित्यर्थः । यथाकथञ्चित् गुरूपदेशे निलीनतया वा बलाद्वेत्यर्थः ॥ **प्रदानेति** ॥ उपदेशयुक्तमित्यर्थः ॥ **उभयथेति** ॥ गुरुमुखाच्छ्रोतव्यो मन्तव्य इति विशिष्याश्रवणादिति भावः । श्रवणादिमात्रेण दृष्टिरिति भाष्योक्तप्रतिज्ञामाह ॥ **यथाकथञ्चिदिति** ॥ कुत इत्यतः पूर्वत्र हिशब्दोक्तमेव हेतुमाह ॥ **आत्मा वा अर इति** ॥ अप्रयोजको हेतुरित्यतो गुर्वधीनत्वे ज्ञानमोक्षयोर्ज्ञानिनोऽपि कदाचिद्गुरुकोपाज्ज्ञानफलाभावेनामुक्तिप्रसङ्गादित्यन्यत्रोक्तं विपक्षे बाधकं व्यनक्ति ॥ **ज्ञानस्य चेति** ॥ गुरुकोपस्य वैफल्यमेव कुतो नेत्यत आह ॥ **अन्यथेति** ॥ **तद्वरस्येति** ॥ ज्ञानिनो ब्रह्मवस्तुवैभवेन मुक्तिः स्यादित्येवंरूपतद्वरस्येत्यर्थः ॥ **अभ्युपगमे चेति** ॥ मोक्षाभावस्येत्यर्थः ॥ **अत इति** ॥ अनुकूलतर्कसनाथेनानुमानेन श्रवणादिमात्रत एव फलसिद्ध्यनु-मानादित्यर्थः । सौत्रैवकारव्यावर्त्योक्तिपरं न चेत्यादिभाष्यं व्याचष्टे ॥ **नेति** ॥ सेतिकर्तव्येनेत्ये-तत्सूत्रारूढं करोति ॥ **प्रसादेति** ॥ कुत इत्यतो यथेत्यादिभाष्यस्य यथा प्रीत्याऽप्रीत्या वा तथैव तदनुरूपमेव फलमित्यर्थमुपेत्य हेतुमाह ॥ **गुरुप्रदानेति** ॥ सम्यग्लक्षणसंपन्नो यद्द्यात्सुप्रसन्नधीः । शिष्याय सत्यं भवतीति नातिप्रसन्नहृदयो यद्द्याद्गुरुरप्यसौ । न तत्सत्यं भवेत्तस्मादर्चनीयः सदा गुरुः इति च स्मृतेरिति भावः । सेतिकर्तव्येनेत्येवंरूपभाष्योक्तिसूचितयुक्तिं प्रागुक्तशङ्कानिवर्तकत्वेन व्यनक्ति ॥ **न चैवमित्यादिना** ॥ श्रोतव्य इत्यादिवचनेनेत्यर्थः । तावता कथमुक्तशङ्कानिरास इत्यत आह ॥ **न हीति** ॥ 'सोममभिषुणोति' इत्यादौ सोमरसस्य दृढमुष्टिनिपीडनसाध्यत्वेऽपि सोमं दृढमुष्ट्या निपीड्येत्यादिरूपेण यथा पृथङ्नोच्यते तेन विना तल्लाभेनाङ्गत्वेनानुक्ति-सिद्धत्वात्तथाऽत्रापि गुरुमुखाच्छ्रोतव्य इति पृथगनुक्तावप्यभिमतत्वान्न तद्विरोध इति भावः ।

यद्वा गुरुप्रदानेन विना ज्ञानासिद्धौ श्रवणादिवत्प्राधान्यमेव स्यात्कुतोऽङ्गतेत्यत आह ॥ **न हीति** ॥ दृढमुष्टिनिपीडनादिना यागसिद्धावपि तत् सोमवत्प्रधानसाधनं यथा न भवति तथेदमपीत्यर्थः । ज्ञानस्य चेत्यादिनोक्तचोद्यमनूद्य चतुर्थस्कन्धतात्पर्याभिमतहेतूक्त्या निरस्यति

(भावदीपः)

॥ **न चैवमुक्तेति** ॥ अन्यथा गुरुकोपवदित्यादिनोक्तमनूद्य निराह ॥ **न चैवं गुर्विति** ॥ येन तद्वरोऽपि व्यर्थः स्यादिति भावः । कुत इत्यतो मुक्तिदूषणेनैव गुरुशापस्य कृतार्थत्वादित्यन्यत्रोक्तहेतुं व्यनक्ति ॥ **ज्ञानादीति** ॥ मुक्तीत्युपलक्षणमिति भावः ॥ **उक्तं चेति** ॥ न्यायविवरणोक्तवचन इत्यर्थः । आनन्दह्रासेत्युपलक्षणमिति भावः । चतुर्थस्कन्धतात्पर्योक्तमाह ॥ **ये ज्ञानविषया इति** ॥ पूर्वत्र ज्ञानपदाश्रवणाद्वचनान्तरोक्तिः । पूर्वं साधारणाधिकारिपरं उत्तरं तूत्तमाधिकारिपरमित्याहुः ॥ **अत इति** ॥ गुरुप्रदानयुक्तश्रवणादेरेवाभिमतफलहेतुत्वाद्बाधकाभावाच्चेत्यर्थः ॥ **उक्तमिति** ॥ इतरे त्वित्यत्रोक्तमित्यर्थः ।

## अभिनवचन्द्रिका

**अन्यथेति** ॥ तत्र गुरुपरिग्रहस्योक्तत्वादिति भावः । न केवलं पूर्वोक्त 'आत्मा वा अरे द्रष्टव्य' इति श्रुतिविरोधो दोषः । अपि तु मोक्षस्य तदधीनत्वप्रसङ्गश्च दोष इत्याह– **ज्ञानस्येति** ॥ 'अनियम' इत्युक्तविरोध इति । ज्ञानिनां मध्ये केषाञ्चिन्मुक्तिः केषांचिन्नेति नियममपहाय सर्वेषां मुक्तिरित्युक्तिविरोध इत्यर्थः ॥ **न चैवमिति** ॥ गुरुप्रसादयुक्तस्यैव श्रवणादेः कारणत्वं न केवलस्येत्यङ्गीकारे, 'आत्मा वा अरे द्रष्टव्य' इति वचनविरोधः । तस्य श्रवणादेरेव साधनत्वाभिधायित्वात् । अन्यथा गुरुप्रसादयुक्तस्यैव श्रवणादेः साधनतामभिदध्यादिति भावः ॥ **गुरुप्रदानमिति** ॥ गुरुप्रदानस्य श्रवणादिसमकक्षत्वाभावात्, गुरुप्रदानयुक्तस्याभिधानप्रसङ्गो नेति भावः ॥ **नात्र कारणमिति** ॥ ज्ञानादिविघाते शापादिः कारणं नेत्यर्थः ।

पूर्वपक्षस्तु– श्रवणादिकमेव ज्ञानसाधनं न गुरुप्रदानपूर्वकम् । 'आत्मा वा अरे द्रष्टव्यः' इति श्रुतौ श्रवणादीनामेव ज्ञानसाधनत्वाभिधानात् । न हि श्रवणादित्रयमुक्त्वा, विशिष्यगुरुप्रदानस्यानुक्तौ कारणमस्ति । किं च गुरुप्रसादस्य श्रवणाद्यङ्गत्वे अनुष्ठितश्रवणादेरपि गुरुकोपेन ज्ञानाभावः स्यात् । तथा जातापरोक्षस्यापि मोक्षाभावः स्यादविशेषादिति ।

सिद्धान्तस्तु– गुरुप्रदानयुक्तमेव श्रवणादिकं मोक्षसाधनम् । 'आचार्यवान्पुरुषो वेद' इति वचनात् । न च 'आत्मा वा अरे द्रष्टव्यः' इति श्रुतौ श्रवणादेरिव गुरुप्रदानस्याप्युक्तिप्रसङ्गः । गुरुप्रदानस्य श्रवणाद्यङ्गत्वेन तत्समकक्षत्वाभावात् । न च अनुष्ठितश्रवणादेरपि ज्ञानाभावः ।

## भावदीपः

**उपासनेतिकर्तव्यतेति ॥** गुरुप्रदानरूपेत्यर्थः । प्रधानचिन्तानन्तरं तदङ्गविचारणाद्वा पूर्वोक्तेन समस्तोपासनकर्तव्यत्वहेतुनैव श्रुतिविहितत्वेन तन्मात्रकर्तव्यत्वपूर्वपक्षकरणाद्वा पूर्वसङ्गतिरपीति भावः ॥ **इतरे त्विति ॥** गुरुप्रदानासमर्थेने स्वप्राप्यफलसाम्येन मध्यमगुणा गुरूक्तप्रकारेणोपास्या इति प्रागुक्तमयुक्तमित्यर्थः । यथाकथञ्चित् गुरूपदेशो निलीनतया वा बलाद्वेत्यर्थः ॥ **प्रदानेति ॥** उपदेशयुक्तमित्यर्थः ॥ **उभयथेति ॥** गुरुमुखाच्छ्रोतव्यो मन्तव्य इति विशिष्याश्रवणादिति भावः । श्रवणादिमात्रेण दृष्टिरिति भाष्योक्तप्रतिज्ञामाह ॥ **यथाकथञ्चिदिति ॥** कुत इत्यतः पूर्वत्र हिशब्दोक्तमेव हेतुमाह ॥ **आत्मा वा अर इति ॥** अप्रयोजको हेतुरित्यतो गुर्वधीनत्वे ज्ञानमोक्षयोर्ज्ञानिनोऽपि कदाचिद्गुरुकोपाज्ज्ञानफलाभावेनामुक्तिप्रसङ्गादित्यन्यत्रोक्तं विपक्षे बाधकं व्यनक्ति ॥ **ज्ञानस्य चेति ॥** गुरुकोपस्य वैफल्यमेव कुतो नेत्यत आह ॥ **अन्यथेति ॥ तद्वरस्येति ॥** ज्ञानिनो ब्रह्मवस्तुवैभवेन मुक्तिः स्यादित्येवंरूपतद्वरस्येत्यर्थः ॥ **अभ्युपगमे चेति ॥** मोक्षाभावस्येत्यर्थः ॥ **अत इति ॥** अनुकूलतर्कसनाथेनानुमानेन श्रवणादिमात्रत एव फलसिद्ध्यनुमानादित्यर्थः । सौत्रैवकारव्यावर्त्योक्तिपरं न चेत्यादिभाष्यं व्याचष्टे ॥ **नेति ॥** सेतिकर्तव्येनेत्येतत्सूत्रारूढं करोति ॥ **प्रसादेति ॥** कुत इत्यतो यथेत्यादिभाष्यस्य यथा प्रीत्याऽप्रीत्या वा तथैव तदनुरूपमेव फलमित्यर्थमुपेत्य हेतुमाह ॥ **गुरुप्रदानेति ॥** सम्यग्लक्षणसंपन्नो यद्दद्यात्सुप्रसन्नधीः । शिष्याय सत्यं भवतीति नातिप्रसन्नहृदयो यद्दद्याद्गुरुरप्यसौ । न तत्सत्यं भवेत्तस्मादर्चनीयः सदा गुरुः इति च स्मृतेरिति भावः । सेतिकर्तव्येनेत्येवंरूपभाष्योक्तिसूचितयुक्तिं प्रागुक्तशङ्कानिवर्तकत्वेन व्यनक्ति ॥ **न चैवमित्यादिना ॥** श्रोतव्य इत्यादिवचनेनेत्यर्थः । तावता कथमुक्तशङ्कानिरास इत्यत आह ॥ **न हीति ॥** 'सोममभिषुणोति' इत्यादौ सोमरसस्य दृढमुष्टिनिपीडनसाध्यत्वेऽपि सोमं दृढमुष्ट्या निपीड्येत्यादिरूपेण यथा पृथङ्नोच्यते तेन विना तल्लाभेनाङ्गत्वेनानुक्तिसिद्धत्वात्तथाऽत्रापि गुरुमुखाच्छ्रोतव्य इति पृथगनुक्तावप्यभिमतत्वान्न तद्विरोध इति भावः ।

यद्वा गुरुप्रदानेन विना ज्ञानासिद्धौ श्रवणादिवत्प्राधान्यमेव स्यात्कुतोऽङ्गतेत्यत आह ॥ **न हीति ॥** दृढमुष्टिनिपीडनादिना यागसिद्धावपि तत् सोमवत्प्रधानसाधनं यथा न भवति तथेदमपीत्यर्थः । ज्ञानस्य चेत्यादिनोक्तचोद्यमनूद्य चतुर्थस्कन्धतात्पर्याभिमतहेतूक्त्या निरस्यति

(भावदीपः)

॥ न चैवमुक्तेति ॥ अन्यथा गुरुकोपवदित्यादिनोक्तमनूद्य निराह ॥ न चैवं गुर्विति ॥ येन तद्वरोऽपि व्यर्थः स्यादिति भावः । कुत इत्यतो मुक्तिदूषणेनैव गुरुशापस्य कृतार्थत्वादित्यन्यत्रोक्तहेतुं व्यनक्ति ॥ ज्ञानादीति ॥ मुक्तीत्युपलक्षणमिति भावः ॥ उक्तं चेति ॥ न्यायविवरणोक्तवचन इत्यर्थः । आनन्दह्रासेत्युपलक्षणमिति भावः । चतुर्थस्कन्धतात्पर्योक्तमाह ॥ ये ज्ञानविपया इति ॥ पूर्वत्र ज्ञानपदाश्रवणाद्वचनान्तरोक्तिः । पूर्वं साधारणाधिकारिपरं उत्तरं तूत्तमाधिकारिपरमित्याहुः ॥ अत इति ॥ गुरुप्रदानयुक्तश्रवणादेरेवाभिमतफलहेतुत्वाद्बाधकाभावाच्चेत्यर्थः ॥ उक्तमिति ॥ इतरे त्वित्यत्रोक्तमित्यर्थः ।

## अभिनवचन्द्रिका

अन्यथेति ॥ तत्र गुरुपरिग्रहस्योक्तत्वादिति भावः । न केवलं पूर्वोक्त 'आत्मा वा अरे द्रष्टव्य' इति श्रुतिविरोधो दोषः । अपि तु मोक्षस्य तदधीनत्वप्रसङ्गश्च दोष इत्याह– ज्ञानस्येति ॥ 'अनियम' इत्युक्तविरोध इति । ज्ञानिनां मध्ये केषाञ्चिन्मुक्तिः केषांचिन्नेति नियममपहाय सर्वेषां मुक्तिरित्युक्तिविरोध इत्यर्थः ॥ न चैवमिति ॥ गुरुप्रसादयुक्तस्यैव श्रवणादेः कारणत्वं न केवलस्येत्यङ्गीकारे, 'आत्मा वा अरे द्रष्टव्य' इति वचनविरोधः । तस्य श्रवणादेरेव साधनत्वाभिधायित्वात् । अन्यथा गुरुप्रसादयुक्तस्यैव श्रवणादेः साधनतामभिदध्यादिति भावः ॥ गुरुप्रदानमिति ॥ गुरुप्रदानस्य श्रवणादिसमकक्षत्वाभावात्, गुरुप्रदानयुक्तस्याभिधानप्रसङ्गो नेति भावः ॥ नात्र कारणमिति ॥ ज्ञानादिविघाते शापादिः कारणं नेत्यर्थः ।

पूर्वपक्षस्तु– श्रवणादिकमेव ज्ञानसाधनं न गुरुप्रदानपूर्वकम् । 'आत्मा वा अरे द्रष्टव्यः' इति श्रुतौ श्रवणादीनामेव ज्ञानसाधनत्वाभिधानात् । न हि श्रवणादित्रयमुक्त्वा, विशिष्यगुरुप्रदानस्यानुक्तौ कारणमस्ति । किं च गुरुप्रसादस्य श्रवणाद्यङ्गत्वे अनुष्ठितश्रवणादेरपि गुरुकोपेन ज्ञानाभावः स्यात् । तथा जातापरोक्षस्यापि मोक्षाभावः स्यादविशेषादिति ।

सिद्धान्तस्तु– गुरुप्रदानयुक्तमेव श्रवणादिकं मोक्षसाधनम् । 'आचार्यवान्पुरुषो वेद' इति वचनात् । न च 'आत्मा वा अरे द्रष्टव्यः' इति श्रुतौ श्रवणादेरिव गुरुप्रदानस्याप्युक्तिप्रसङ्गः । गुरुप्रदानस्य श्रवणाद्यङ्गत्वेन तत्समकक्षत्वाभावात् । न च अनुष्ठितश्रवणादेरपि ज्ञानाभावः ।

(अभिनवचन्द्रिका)
ज्ञानिनोऽपि मोक्षाभावो गुरुकोपेन स्यादिति वाच्यम् । तज्ज्ञानमोक्षयोरीश्वरकल्पितत्वात् । न चैवं गुरुशापो विफलः ज्ञानादिह्रासहेतुत्वात् । तदुक्तम् 'ज्ञानिनो गुरुशापेऽपि नामुक्तिः संसृतेः क्वचित् । आनन्दह्रासदोषेण सैव मुक्तिर्विदुष्यति' इति । तथा 'ये ज्ञानविषयाः शापाः मुक्तिगाश्चाधिकारिणाम् । कादाचित्कास्ते भवन्ति नैव ते सार्वकालिकाः । तेषां ज्ञानस्य मुक्तेश्च तारतम्यस्य चैव हि । भगवन्नियतत्वात्तु शापादिर्नात्र कारणम्' इति । अतो गुरुप्रदानस्याऽऽवश्यकत्वात् तद्युक्तमेव श्रवणादिकं कर्तव्यमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

**अन्यथेति ॥** गुरुप्रदानपूर्वकत्वरूपेति कर्तव्यताऽदाने इतरे त्वर्थसामान्यादित्यत्र योग्यगुरूपदेशेन स्वस्वयोग्यमुपासनं कार्यमित्युक्तमयुक्तं स्यादित्यर्थः ॥ **प्रकृतश्रवणाद्येवेति ॥** कर्तव्यतया पूर्वाधिकरणे प्रकृत इत्यर्थः । एतेन श्रवणादेरितिकर्तव्यस्यानुष्ठेयत्वसिद्धौ तदितिकर्तव्यताविचारावसर इत्यनन्तरसङ्गतिरिति भावः । अत्र प्रकृतं श्रवणादिकं यथाकथञ्चिदनुष्ठितं ज्ञानसाधनमुत गुरुप्रसादपूर्वकप्रदानयुक्तमेवेति चिन्ता । तदर्थं ज्ञानादेर्गुरुप्रसादाधीनत्वे श्रोतव्य इत्यादिप्रमाणविरोधः । कदाचित् गुरुकोपेन तदभावप्रसङ्गलक्षणतर्कबाधश्चास्ति स नास्तीति । **यथाकथञ्चिदिति** । परोपदेशे निलीनतया बलाद्वानुष्ठितमित्यर्थः । उक्तं च तत्वप्रदीपे । न तावत्परोपदेशे निलीनतया बलाद्वानुष्ठितं दृष्टिद्वारं भवतीति । सौत्रावधारणव्यावर्त्यकथनपरं न च श्रवणादिमात्रेणेति भाष्यमनुरुध्याह ॥ **आत्मेति ॥** यथा गुरुदत्तं तथैव भवतीत्युत्तरवाक्ये गुरुप्रदानस्य फलाव्यभिचारित्वोक्त्या तन्निषेध्यतया सूचितं फलाभाव इत्युक्तन्यायं विशदयति । **ज्ञानस्य चेत्यादिना ॥ तदभावप्रसङ्गादिति ॥** ज्ञानाभावप्रसङ्गाद्भाविनोऽपि मोक्षाभावप्रसङ्गाच्चेत्यर्थः ॥ **त्वद्वरस्यापीति ॥** मदुपदिष्टं तवापरोक्षं मोक्षपर्यवसायि भवेदिति प्रसादपूर्वं दत्तवरस्यापीत्यर्थः ॥ **अभ्युपगम इति ॥** ज्ञानिनो मोक्षाभावाभ्युपगम इत्यर्थः ।

सूत्रे तदित्यनेन पूर्वसूत्रप्रकृतं श्रवणादित्रयं परामृश्यते । दृष्टिदमिति प्रकरणात्सम्बद्ध्यते । तथा च प्रसादपूर्वकगुरुप्रदानयुक्तमेव तच्छ्रवणादिकं दृष्टिकारणम् । कुतः? तत्र ज्ञानस्य गुरुप्रदानाधीनत्वमुक्तं श्रुताविति सूत्रार्थः । अत्रैवकारव्यावर्त्यं दर्शयन् न च श्रवणादीति भाष्यं व्याचष्टे

(वाक्यार्थमुक्तावली)

॥ **न श्रवणादीति** ॥ प्रदानवत्तदित्यंशव्याख्यापरं किन्तु सेतिकर्तव्येनेत्येतत् व्याचष्टे ॥ **किमिति** ॥ इतिकर्तव्यविवरणाय प्रदानपूर्वकस्यैव फलप्रदत्वे युक्तिसूचनाय च प्रवृत्तं यथा गुरुदत्तमित्येतद्व्याचष्टे ॥ **गुरुप्रदानेति** ॥ फलस्य प्रदानान्वयव्यतिरेकानुविधायित्वादित्यर्थः । भाष्ये किन्तु गुरुप्रदानयुक्तेनेत्यनुक्त्या सेतिकर्तव्येनेति प्रयोगेन व्यावर्त्यं पूर्वपक्ष्युक्तं प्रमाणविरोधमाशङ्क्य निराह ॥ **न चैवमिति** ॥

## तत्त्वसुबोधिनी

इति **कर्तव्यतासाधनादिति** ॥ प्रधानविचारादनन्तरं तदङ्गभूतेतिकर्तव्यताविचारादनन्तरसङ्गतिरिति भावः । अन्यथेति इतिकर्तव्यता समर्थनाभाव इत्यर्थः ॥ **इतरेत्वर्थसाम्यादित्युक्तमयुक्तमिति** ॥ तत्र ध्यानयोग्यतानिर्णयार्थं गुरुपरिग्रहावश्यकत्वस्य उक्तत्वादित्यर्थः ॥ **तदधीनत्वप्रसङ्ग इति** ॥ गुर्वधीनत्वप्रसङ्ग इत्यर्थः । तदभावप्रसङ्गात् । ज्ञानमोक्षयोः अभावप्रसङ्गात् । ननु गुरुकोपेन मोक्षाभाव इत्यत आह ॥ **अन्यथेति** ॥ गुरुकोपस्य निरर्थकेत्यर्थः । ज्ञानिनो गुरुशापान्मोक्षाभावो नानिष्ट इत्यत आह **अभ्युपगम इति** ॥ अत्र सौत्रतच्छब्दः पूर्वसूत्रप्राप्तश्रवणाद्युपासनपरामर्शक एवकारव्यावर्त्यं च श्रवणादिमात्रं इत्यभिप्रेत्य प्रवृत्तं 'न च श्रवणादिमात्रेण इत्यादिभाष्यं व्याचष्टे- **न च श्रवणादिमात्रमित्यादिना** ॥ श्रोतव्य इति श्रुतिविरोधपरिहारार्थमेव भाष्ये सेति कर्तव्येनेत्युक्तम् । तर्हि श्रोतव्य इत्युक्तिविरोध इत्याशङ्क्य निषेधति ॥ **न चैवमिति** ॥ ननु गुरुप्रदानज्ञानसाधनत्वमेवास्तु कुत इतिकर्तव्यतात्वमित्यत आह- **न हीति** ॥ मुष्टिनिपीडनसाधनदार्ढ्यं इतिकर्तव्यतैव न तु साधनं तद्वत्प्रकृतेऽपि इति भावः । प्रमाणविशेषमप्याह– **तथेति** ॥ अधिकारिणो मुक्तिगाः ये ज्ञानविषया शापा ते कदाचित् काल एव भवन्ति न तु सर्वकाल इत्यर्थः ।

## वाक्यार्थविवरणम्

**तदधीनत्वेति** ॥ गुरुप्रसादाद्यधीनत्वेत्यर्थः । इदं मोक्षस्य गुरुप्रसादाधीनत्वम् ॥ **तदभावेति** ॥ मोक्षाभावेत्यर्थः ॥ **अन्यथेति** ॥ गुरुकोपेऽपि मोक्षाङ्गीकार इत्यर्थः ॥ **अभ्युपगम इति** ॥ अपरोक्षज्ञानिनो गुरुकोपेन मोक्षाङ्गीकार इत्यर्थः ॥ **उक्तवचनेति** ॥ गुरुप्रसादपूर्वकत्वतदभावोदासीनत्व 'आत्मा वा अरे द्रष्टव्यः श्रोतव्य इत्यादीत्यर्थः ॥ इति **कर्तव्यतेति** ॥ तथा च

(वाक्यार्थविवरणम्)
सेतिकर्तव्यताकमेव श्रवणं तत्राभिमतमिति भावः । ननु श्रुतौ श्रवणेतिकर्तव्यता कण्ठतः कुतो नोक्तेत्यत आह ॥ **न हीति** ॥ 'निपीड्याथो वासो विस्तृत्य चाञ्जसा' इत्यादौ मुष्ट्या वासोनिपीडनादि विधीयते । तत्र वासोनिपीडनसाधनमुष्ट्यादेर्दार्ढ्यमभिप्रेतम् । दृढमुष्टिनिपीडनेनैव वाससो जलनिर्गमनसम्भवात् । अतो मुष्टेर्दार्ढ्यादिरूपेतिकर्तव्यता पृथङ्नोच्यते । सिद्धत्वेन अवक्तव्यत्वात् । तद्वत्प्रकृतेऽपीति सम्प्रदायविदः ॥ **साधनमिति** ॥ वाससो जलनिर्गमनेत्यर्थः ।

ननु अधिकारिणो ज्ञानमोक्षयोरीश्वरकल्पितत्वेऽपि गुरुशापः कुतो विफलो न भवतीति चेत् । अत्र प्रष्टव्यं, गुरुशापस्य वैफल्यं किं मनुष्योत्तमक्षितिपविवक्षयोच्यते उत आधिकारिकदेवविवक्षया । नाद्य इत्याह ॥ **ज्ञानादिह्रासेति** ॥ आदिपदेन मौक्तानन्दसङ्ग्रहः । अस्मिन्नर्थे प्रमाणमाह ॥ **तदुक्तमिति** ॥ मुक्तिः लिङ्गभङ्गः । आनन्दह्रासदोषेण विद्यमानानन्दस्येति शेषः ॥ **विदुष्य-तीति** ॥ मनुष्योत्तमक्षितिपानामिति शेषः । ह्रासवचनस्याधिकारिकदेवेष्वसम्भवादिति भावः । द्वितीयपक्षेऽपि । आधिकारिकान् प्रत्यपि न गुरुशापस्य वैफल्यम् । तेषामपरोक्षज्ञानमोक्षानन्दयोः क्लृप्तत्वेन ह्रासाद्यसम्भवेऽपि ज्ञानाद्युत्पत्तौ किञ्चिद्विलम्बहेतुत्वात् । अत्र प्रमाणमाह ॥ **तथेति** ॥ एवं विकल्पमुखेन योजनाऽकरणे ज्ञानादिह्रासहेतुत्वादित्यर्थे आद्यप्रमाणस्य सम्मतित्वसम्भवेऽपि, ये ज्ञानविषया इति द्वितीयप्रमाणोदाहरणासम्भवात् । कादाचित्का इत्यनेन ज्ञानादिह्रासोक्त्य-लाभात् । न हि तेषां ज्ञानस्य मुक्तेश्च 'तारतम्यस्य चैव हि भगवन्नियतत्वात्' इति नियतोक्तिश्चाधिकारिकान् देवान् विहाय अन्यत्र घटते । न वाऽऽधिकारिकाणां ज्ञानादिह्रासवचनं युक्तम् । वृद्धिह्रासौ विमुक्तिगौ नृणामित्याद्युक्तेः । अतो अत्रोक्तविकल्पक्रमेणैव ग्रन्थयोजने द्वितीयप्रमाणोदाहरणं तत्र नियतत्वकथनं च श्लिष्टतरं भवति, नान्यथेति द्रष्टव्यम् ॥ **ज्ञान-विषयाः** ॥ 'तव अपरोक्षज्ञानं मा भवतु' इत्यपरोक्षज्ञानविषयाः । **मुक्तिगाः** 'तव मुक्तिर्मा भवतु' इत्येवं मुक्तिविषयाश्चेत्यर्थः ॥ **कादाचित्का इति** ॥ कालविलम्बाय भवन्तीत्यर्थः ।

## वाक्यार्थमञ्जरी

इति **कर्तव्यतेति** ॥ उपसाधनतेत्यर्थः ॥ **इत्युक्तमिति** ॥ तत्र गुरूपदेशानुसारेणोपासना-कर्तव्यतोक्तेरिति भावः । अभ्युपगमे मोक्षाभावस्य ॥ **इत्युक्तेति** ॥ तत्र कस्यापि ज्ञानिनो मोक्षाभावो नेत्युक्तेरिति भावः ।

(वाक्यार्थमञ्जरी)

ॐ प्रदानवदेव हि तदुक्तं ॐ ॥ प्रीतिपूर्वकत्वादि प्रकृष्टं दानं उपदेशः प्रदानं तद्युक्तमेव श्रवणादिकं अपरोक्षज्ञानसाधनं, कुतः तदुक्तं तज्ज्ञानस्य गुरुप्रदानाधीनत्वमाचार्यवानिति श्रुतावुक्तं यत इत्यर्थः । उक्तवचनं आत्मा वार इत्यादि ॥ **न हीति** ॥ दृढमुष्टिनिपीडनादि पृथक् साधनं न हीत्यर्थः । उक्तं न्यायविवरणे । तथा चतुर्थतात्पर्ये । अत्र ज्ञानाद्यभावे ।

॥ इति प्रदानाधिकरणम् ॥

## २७. गुरुप्रसादाधिकरणम्

### सूत्रभाष्यम्

गुरुप्रसादः स्वप्रयत्नो वा बलवानिति निगद्यते —

**॥ ॐ लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॐ ॥ ४५ ॥**

ऋषभादिभ्यो विद्यां ज्ञात्वाऽपि सत्यकामेन 'भगवांस्त्वेव मे कामं ब्रूयात्' (छां.उ.४-९-२) 'श्रुतं ह्येव मे भगवद्दृशेभ्य आचार्याद्ध्येव विद्या विदिता साधिष्ठं प्रापयति' (छां.उ.४-९-३) इति वचनात् । 'अत्र ह न किञ्चन वीयाय' इत्यनुज्ञानादुपकोसलवचनाच्च लिङ्गभूयस्त्वाद्गुरुप्रसाद एव बलवान् (प्रदानमेव बलवत्) । तर्हि तावताऽलमिति न मन्तव्यम् । 'श्रोतव्यो मन्तव्य' (बृ.उ.४-४-५) इत्यादेस्तदपि कर्तव्यम् । वाराहे च—

'गुरुप्रसादो बलवान्न तस्माद् बलवत्तरम् ।
तथाऽपि श्रवणादिश्च कर्तव्यो मोक्षसिद्धये' इति ॥

### तत्त्वप्रदीपिका

प्रसन्नाद्गुरोः श्रवणं कर्तव्यमित्युक्तम् । तत्र गुरुप्रसादो वा श्रवणादिस्वप्रयत्नो वा बलवानिति निरूप्यते । लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि । गुरोः प्रसादपूर्वकं प्रदानमेव बलवत् । सत्यकाम-ब्राह्मण उपकोसलब्राह्मणे च तत्र लिङ्गानां भूयस्त्वात् । 'तमुपनीय कृशानामबलानां चतुश्शता गा निराकृत्योवाचैतास्सौम्यानुसंव्रजेति, ता अभिप्रस्थापयन्नुवाच नासहस्रेणाऽवर्तेयेति, स ह वर्षगणं प्रोवास' इत्युपनीतमात्रस्य सत्यकामस्य विनाऽप्यध्ययनेन गुरुप्रसादने प्रवृत्तेः । 'अथ हैनमृषभोऽभ्युवाद' 'ब्रह्मणः सोम्य ते पादं ब्रवाणीति' 'तमग्निरभ्युवाद' 'तं हंस उपनिपत्याभ्युवाद' 'तं मद्गुरुपनिपत्याभ्युवाद'इत्यादिना वृषभाविष्टाद्वायोरग्नेः प्रत्यक्षाद्धंसरूपाद्ब्रह्मणो मद्गुरूपाद्वरुणाच्च स्वयमेवाभिभाष्य तत्त्वोपदेशलाभात्तेभ्यो ज्ञानादिगुणकं ब्रह्म ज्ञात्वाऽपि सत्यकामेन तेष्वशुश्रूषादिभयाद्भगवांस्त्वेव मेऽभीष्टाय ब्रूयादिति वचनात्, उपनयनादिकर्तुराचार्यादाराधिताल्लब्धा विद्या हि साधकतमत्वं प्राप्नोतीति वचनात्, तं चानुज्ञानाभीप्सुं प्रति 'अत्र ह न किञ्चन वीयाय'इत्याचार्यस्यानुज्ञानात्, देवेभ्यः श्रुत्वा न किञ्चिदपि हानिरभवदित्यर्थः, उपकोसलवचनाच्च,

(तत्त्वप्रदीपिका)

अयमर्थः– 'तं जायोवाच तप्तो ब्रह्मचारी कुशलमग्नीन्परिचचारीन्मा त्वाऽग्नयः परिप्रवोचन् प्रब्रूह्यस्मै' इति वहुवर्षं गुरुप्रसादनार्थमग्नीन्परिचरत उपकोसलस्यार्थे सत्यकामं प्रति जायावचनात्, अप्रोच्य प्रोपिते च तस्मिन् 'तप्तो ब्रह्मचारी कुशलं नः परिचचारीद्धन्तास्मै प्रब्रवाम' इत्युक्त्वा 'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म' इत्युपकोसलायाग्नीनां वचनात्, 'अथ हैनं गार्हपत्योऽनुशशास' 'य एप आदित्ये पुरुपो दृश्यते सोऽहमस्मि'इत्यादौ च प्रत्येकं तेपां तस्मा एव वचनात्, 'आचार्यस्तु ते गतिं वक्ता'इत्याचार्यानुज्ञानार्थं च वचनादित्येवं लिङ्गभूयस्त्वाद्गुरुप्रसाद एव वलवान् ॥

## तत्त्वप्रकाशिका

अत्र भगवद्दर्शनसाधनोपासनेतिकर्तव्यतारूपगुरुप्रसादस्य वलीयस्त्वसमर्थनादस्ति शास्त्रादिसङ्गतिः । अन्यथा कचिदनपेक्षितत्वप्रसङ्गेनोक्तायुक्तेस्तत्समर्थनीयम् । प्रकृतं गुरुप्रसादपूर्वकं श्रवणादिविपयः । संशयप्रकारं दर्शयति ॥ **गुर्विति** ॥ किं तन्मध्ये गुरुप्रसादो वलवानुत श्रवणादिरूपः शिप्यप्रयत्नो वा । अथ द्वयं समं वा । साधनेपु त्रैविध्यदर्शनं सन्देहवीजमिति भावः । शिप्यप्रयत्न एव वलवानिति पूर्वः पक्षः । गुरुप्रसादस्येति कर्तव्यतामात्रत्वात् । न हि साधनादपीति-कर्तव्यतायाः प्रावल्यं दृष्टम् । मास्तु वाधिक्यं शिप्यप्रयत्नस्य तथापि साम्यं स्यात् न तु प्रयत्नस्य दौर्वल्यम् । गुरुशिष्ययोरपि पुरुपत्वसाम्यात् । अतो गुरुप्रसादस्याप्रवलत्वान्नावश्यकत्वमिति । सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ **निगद्यत इति** ॥ गुरुप्रसादपूर्वकप्रदानमेव ज्ञानसाधने वलवत् । न त्वधमं नापि समम् । तस्य प्रावल्ये लिङ्गवाहुल्यदर्शनात् । तथा हि । ऋपभादिभ्यो ब्रह्मविद्यां श्रुतवतापि सत्यकामेन भगवानिति गुरुः प्रार्थ्यते । यदि श्रवणाद्येव वलवत्तर्हि तेन गुरुप्रसादपूर्वकप्रदानप्रार्थनं न क्रियेत । तथा गुरुणा गोतमेनात्रेत्यनुज्ञा क्रियते । स्वप्रदानस्याप्रावल्येऽनुज्ञावैयर्थ्यात् । तथोपकोसलेनाग्निभ्यः श्रुतविद्येनापि गुरुः प्रार्थ्यते । गुरुणा च सत्यकामेन तं प्रति विद्योच्यते । श्रवणादेरेव प्रावल्ये न तेन गुरुः प्रार्थ्येन गुरुणापि नोच्येत । एवं लिङ्गभूयस्त्वाद्गुरुप्रसादपूर्वकप्रदानमेव वलवदिति ज्ञायत इति भावः । सत्यकामेन वचनादिति तेनोक्तत्वादित्यर्थः । यद्यपि देवेभ्यः श्रुतं तथापि भगवानेव मे शुभार्थं व्रवीतु । कुतः । आचार्याद्देव विदिता विद्या साधुत्वं प्राप्नोतीति भगवद्दृशेभ्यः श्रुतत्वात्तेपां चाचार्यतया मयाऽस्वीकृतत्वादित्यर्थः । अत्र देवेभ्यः श्रवणे न किं च नापगतम् । न काचिद्धानिरभूदित्यर्थः । न चेतिकर्तव्यत्वेन दौर्वल्यम् । यागीयहिंसायामिति कर्तव्यताया एव प्रावल्यदर्शनात् । न च गुरुशिप्ययोः पुरुपत्वसाम्यात्तत्क्रिययोः

(तत्त्वप्रकाशिका)

साम्यं गुरुशिष्यवदेवोपपत्तेः । **नन्वेवं गुरुप्रसादस्य प्राबल्ये तावताऽलम्** । न श्रवणादिना कृत्यमित्याशङ्कां परिहरति ॥ **तर्हीति** ॥ अत्र स्मृतिं चाह ॥ **ब्राराहे चेति** ॥ अतो गुरुप्रसादपूर्वकप्रदानस्य प्राबल्यात्तदवश्यापेक्षितमिति सिद्धम् ।

## गुर्वर्थदीपिका

क्वचिदनपेक्षितत्वप्रसङ्गेनेत्यत्र प्राबल्याभावे व्रीहियवयोरिव वैकल्पिकत्वस्यापि सम्भवादिति भावः । ऋषभादिभ्य इत्यत्राऽऽदिपदेन 'अग्निष्टे पादं वक्ता, हंसस्ते पादं वक्ता, मुद्गस्ते पादं वक्ता' इति छन्दोगोपनिषदुक्ता अग्निहंसजलवायसा गृह्यन्ते । अग्निभ्य इत्यस्य 'अथैनं गार्हपत्योऽनुशशास' इति तस्यामेवोपनिषद्युक्तत्रेताग्निभ्य इत्यर्थः । यद्यपि देवेभ्य इत्यस्य देवेभ्य ऋषभादिदेवेभ्य इत्यर्थः । अनेन ऋषभस्य सर्वोत्तमत्वेऽपि तस्मात्सत्यकामस्य सम्पूर्णश्रवणायोग्यता सूचिता । काम इति श्रौतपदस्यार्थकथनं **शुभार्थमिति** ॥ शुभकाम्यफलार्थमित्यर्थः । याज्ञीयहिंसायामित्यत्र मन्त्रादिरूपेतिकर्तव्यताया एव केवलहिंसातः प्राबल्यदर्शनादिति भावः ।

## भावबोधः

**बलीयस्त्वसमर्थनादिति** । पूर्वाधिकरणे गुरुप्रसादस्य इति कर्तव्यत्वोक्तौ, तर्हि तत एव दौर्बल्यं स्यादित्याक्षेपोत्थानादन्तरसङ्गतिरिति भावः । **किमिति** । अत्र गुरुप्रसादः श्रवणादिरूपप्रयत्नबलान्न भवत्युत भवतीति चिन्ता । तदर्थं गुरुशिष्ययोः पुरुषत्वसाम्येऽपि श्रवणादिरूपशिष्यव्यापारात् प्रदानरूपगुरुव्यापारस्य प्राबल्यं न युज्यते उत युज्यत इति । तदर्थं तस्य प्राबल्ये श्रवणादेः वैयर्थ्यं प्राप्नोत्युत न प्राप्नोतीति । न्यायविवरणानुरोधात् कोट्यन्तरमाह– **द्वयं समं वेति** ॥ गुरुप्रसाद इति सन्देहभाष्यसूचितपूर्वपक्षमाह– **शिष्यप्रयत्न एवेति** ॥ शिष्यस्यापि पुरुषत्वसाम्याद्धारणादेः तत्प्रयत्नस्य न दौर्बल्यमिति न्यायविवरणोक्तपूर्वपक्षमाह– **मास्तु वेति** ॥ **यागीयहिंसायां इति** ॥ मन्त्रादीतिकर्तव्यताशून्यत्वे तस्या अपि पापहेतुत्वादिति भावः ॥ **स्मृतिं चाहेति** ॥ अनेन गुरुप्रसादो बलवानित्यादिविशेषोक्तेरिति न्यायविवरणमप्युक्तार्थम् ।

## भावदीपः

**वलीयस्त्वेऽपीति** ॥ एतेन पूर्वमुपजीव्यास्य प्रवृत्तेः पूर्वसङ्गतिरपि सूचिता ॥ **उक्तेति** ॥ इतरेत्यत्रोक्तस्यायुक्तेरित्यर्थः । यद्वा सेतिकर्तव्येनैव श्रवणादिना फलमिति पूर्वोक्तस्यायुक्तेरित्यर्थः ॥ **तन्मध्य इति** ॥ गुरुप्रसादश्रवणाद्योर्मध्य इत्यर्थः ॥ **त्रैविध्येति** ॥ वक्ष्यमाणदिशेतिकर्तव्यता-वलवत्त्वस्य नित्यज्योतिष्टोमादौ करणवलवत्त्वस्याग्नेयाग्नीषोमीयादौ साम्यस्य दर्शनमित्यर्थः । शिष्यस्याऽपि पुरुषत्वसाम्याद्धारणादेस्तत्प्रयत्नस्य न दौर्बल्यमिति न्यायविवरणे, दौर्बल्यं न किं तु प्रावल्यमेवेति, किं तु समबलत्वमेवेति चार्थद्वयमुपेत्य पूर्वपक्षद्वयं क्रमेण व्यनक्ति ॥ **शिष्येति** ॥ सेतिकर्तव्येनेति प्राचीनभाष्यसूचितहेतुमाह ॥ **गुर्विति** ॥ अप्रयोजकत्वं हेतोर्निराह ॥ **न हीति** ॥ तथा चादृष्टकल्पना विपक्षे बाधिकेति भावः । न्यायविवरणस्थमेव हेतुमाह ॥ **गुरुशिष्ययोरिति** ॥ **अत इति** ॥ शिष्यप्रयत्नस्योक्तहेतुना प्रावल्यस्य समबलत्वस्य वा प्राप्तत्वादित्यर्थः । अप्रवलत्वात्प्रावल्याभावाद्धीनबलत्वात्समबलत्वाद्वेत्यर्थः ॥ लिङ्गभूयस्त्वाद् गुरुप्रदानमेव बलवदिति भाष्यं व्युत्क्रमेण व्याचष्टे ॥ **गुरुप्रसादेति** ॥ एवकारव्यावर्त्यमाह ॥ **न त्विति** ॥ हेतूपपादकत्वेन वृषभेत्यादिभाष्यं व्याचष्टे ॥ **तथा हीति** ॥ छान्दोग्ये चतुर्थाध्याये सत्यकामब्राह्मणे गौतमः सत्यकाममुपनीय कृशानामबलानां चतुःशतं गा निराकृत्योवाचेमाः सोम्यानुसंव्रजेति । ता अभिप्रस्थापयन्नुवाच नासहस्रेणावर्तयेति । स ह वर्षगणं प्रोवासेत्युपनीतमात्रस्य सत्यकामस्य विनाप्यध्ययनेन गुरुप्रसादने प्रवृत्तेन अथ हैनमृषभोऽभ्युवाद ब्रह्मणः सोम्य ते पादं ब्रवाणीति । तमग्निरभ्युवाद तं हंस उपनिपत्याभ्युवाद तं मद्गुरूपनिपत्याभ्युवादेत्यादिना वृषभाविष्टाद्वायोरग्नेश्च प्रत्यक्षाद्धंसरूपाद् ब्रह्मणो मद्गुरूपाद्वरुणाच्च स्वयमेवाभिभाष्य तत्वोपदेशलाभात् । तेभ्यो ज्ञानादिगुणकं ब्रह्म ज्ञात्वाऽप्युपनेता गुरुः प्रार्थ्यत इत्यर्थः । वायुर्वृषभरूपः सन्निति छान्दोग्यभाष्योक्तावपि तत्वप्रदीपोक्त्या तदाविष्टो वायुर्ग्राह्यः ॥ **अत्रेतीति** ॥ वृषभादिभ्यः श्रवणे काचिदपि हानिर्मा भूदित्यनुज्ञेत्यर्थः ॥ **तथोपकोसलेनेति** ॥ तत्रैवाऽध्याये तं जायोवाच तप्तो ब्रह्मचारी कुशलमग्नीन्परिचचारीन्मा त्वाग्नयः परिप्रावोचन् प्रब्रूह्यस्मा इति वहुवर्षं गुरुप्रसादनार्थ-मग्नीन्परिचरतः उपकोसलस्यार्थे सत्यकामं प्रति जाययोक्ते सत्यप्रोच्यैव प्रोषिते तस्मिंस्तप्तो ब्रह्मचारी कुशलं नः परिचचारीद्धन्तास्मै प्रब्रवामेत्युक्त्वा प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेत्यादिना

(भावदीपः)
सम्भूय प्रत्येकं च ब्रह्मोपदिशद्भ्यो गार्हपत्यादित्रेताग्निभ्यः श्रुतविद्येनाप्याचार्यस्तु ते गतिं वक्तेत्युपदिष्टेन गुरुरर्थ्यते तेन च य एषोऽन्तरक्षणि पुरुषो दृश्यते इत्यादिना विद्योच्यते इत्यर्थः । अन्वयं दर्शयन्नेवार्थमाह ॥ **सत्यकामेनेति** ॥ भाष्योक्तश्रुतेरर्थमाह ॥ **यद्यपीति** ॥ कामं काम्यमाननिमित्तं श्रुतार्थमिति यावत् । **साधिष्ठं** साधुत्वम् । प्रागुक्तशङ्काद्वयं क्रमेणानूद्य निराह ॥ **न चेति** ॥ **यागीयेति** ॥ पापजननस्वभावाया अपि हिंसायास्तां शक्तिं परिभाव्य पुण्यजनन-शक्त्याधायकत्वस्य दर्शनादिति भावः ॥ **अत्रेति** ॥ प्रदानं बलवदित्यत्र श्रवणादि च कार्यमित्यत्र चेत्यर्थः । न केवलं लिङ्गदर्शनं श्रोतव्य इति विधिश्च किंतु स्मृतिं चेति चार्थः ॥ **अत इति** ॥ भूयो लिङ्गदर्शनादित्यर्थः ।

## अभिनवचन्द्रिका

**वलीयस्त्वसमर्थनादिति** ॥ प्रधानगतकार्यजननशक्तिनियामकत्वसमर्थनादित्यर्थः । लोके हि द्विविधमङ्गं दृश्यते । किञ्चित्प्रधानगतकार्यजननशक्तिनियामकम् । यथोपनयनादि । तेन विना प्रधानस्य वेदाध्ययनस्य क्वापि धर्मजनकत्वाभावात् । प्रत्युताधर्मस्यैव जननात् किञ्चित्सौष्ठवा-पादकम् । यथा प्राङ्मुखत्वादि । तेन विनापि धर्मजनकत्वात् । गुरुप्रदानं तु, न प्राङ्मुखत्वादिवत् सौष्ठवापादकम् किन्तु उपनयादिवत् प्रधानशक्तिनियामकमेवेति समर्थ्यत इति भावः । एतेन अङ्गं भवति प्रधानात्प्रबलं चेति व्याहतमिति परास्तम् ॥ **अन्यथेति** ॥ साधनशक्तिनियामकत्वाभावे कथंचिदनुष्ठितेन श्रवणादिना अपरोक्षज्ञानसिद्धिसम्भवात् अलसस्य गुरुप्रदानादिकमनपेक्षितं स्यादित्यर्थः ॥ **किं तन्मध्य इति** ॥ यद्यपि नायं एकधर्मिकोऽनेककोटिकः । नापि एककोटि-कोऽनेकधर्मिकः तथापि अनवधारणज्ञानत्वात्, अनेककोटिकोऽनेकधर्मिकोऽयं संशयो बोध्यः । दृश्यते हि लोके किं देवदत्तात् यज्ञदत्तो बलवान्, उत तस्मात् देवदत्तो बलवान्, अथवा उभौ समाविति । अनेकधर्मिकानेककोटिकः संशयः । नन्विह देवदत्तो यज्ञदत्तात् बलवान्, न वा, तथा यज्ञदत्तो देवदत्तात् बलवान् न वा, तथा उभौ समौ नवेति त्रयः संशया द्रष्टव्याः, नत्वेकः संशय इति चेत्, किमियं लौकिकीप्रतीतिः, उत एकधर्मिकोऽनेककोटिकः संशय इति स्वसमयानु-रोधादुच्यते । नाद्यः तदभावात् । न द्वितीयः । स्वसमयस्याऽप्रामाणिकत्वात् । यद्यपि भाष्ये कोटिद्वयमेव प्रदर्शितम् तथापि सिद्धान्तसूत्रेण साम्यपक्षस्यापि निरासात् तस्यापि सङ्कीर्तनं कृतम् ।

**(अभिनवचन्द्रिका)**

शिष्यप्रयत्न एवेति । **शिष्यप्रयत्नः स्वयमनन्याधीनशक्तिकः सन् गुरुप्रसादशक्तिनियामकः, न तु गुरुप्रसादः स्वयमनन्याधीनशक्तिकः सन्, शिष्यप्रयत्ननिष्ठशक्तिनियामक** इत्यर्थः । कुत इत्यत आह **गुरुप्रसादस्येति ॥ न हीति ॥** 'येन साधनशक्तेरङ्गाधीनत्वं प्रतीम' इति शेषः ॥ **साम्यं स्यादिति ॥** उभयोरपि परस्परानधीनशक्तिकत्वेन साम्यं स्यादित्यर्थः ॥ **गुरुशिष्ययोरपीति ॥** तत्वमुपदिशतो गुरोः शिष्यः सहकारी, शिष्याभावे उपदेशायोगात् । एवं तत्वं जानतः शिष्यस्यापि गुरुः सहकारी, उपदेशकाभावे तत्वग्रहणायोगात् । न च गुरुरीश्वरः येन शिष्यान्तर्नियामको गुरुरिति तद्व्यापारं बलीयांसं प्रतीम इति भावः ।

एतेन गुरुव्यापारप्राबल्ये पुरुषत्वस्य नियामकतयाऽनभिधानात् शिष्यस्य पुरुषत्वेन साम्याभिधानमयुक्तमिति परास्तम् । पुरुषत्वसाम्याभिधानस्य शिष्यवद्गुरोरप्यनीश्वरत्वेन न तव्द्यापारस्य शिष्यव्यापाराद्बलवत्त्वमित्यत्र तात्पर्यात् । **अप्रबलत्वादिति ॥** शिष्यव्यापारशक्तिनियामकत्वाभावादित्यर्थः ॥ **नावश्यकत्वमिति ॥** सिद्धे प्रकारान्तरेण श्रवणे अपरोक्षज्ञानसम्भवात् गुरुप्रसादजन्यसौष्टवरूपातिशयापेक्षाशून्येनाऽलसेन न गुरुप्रसादाय प्रयतितव्यमिति भावः ॥ **यागीयहिंसायामिति ॥** मन्त्रादीति कर्तव्यताशून्यत्वे तस्या अपि पापहेतुत्वादिति भावः ॥ **न च गुरुशिष्ययोरिति ॥** अनीश्वरत्वसाम्यात् तत्क्रिययोः साम्यमिति न वाच्यमित्यर्थः ॥ **गुरुशिष्यवदिति ॥** अनीश्वरत्वेऽपि ईश्वरानुग्रहात् पुण्यवशाच्च गुरोर्गुरुत्वमिव तत एव तत्प्रयत्नस्याप्याधिक्योपपत्तिरिति भावः । गुरुप्रसादस्याऽऽधिक्यं नाम श्रवणाद्यभावेऽपि आपरोक्ष्यहेतुत्वमिति मन्वानः शङ्कते **नन्वेवमिति ॥**

पूर्वपक्षस्तु– शिष्यप्रयत्न एव बलवान् प्रधानत्वात्, न गुरुप्रसाद इतिकर्तव्यतारूपत्वात् माभूद्वाऽऽधिक्यं, साम्यं तु स्यात् । न शिष्यप्रयत्नस्य दौर्बल्यम् । गुरुशिष्ययोः पुरुषत्वसाम्यात् । अतो गुरुप्रसादस्याऽप्रबलत्वान्नावश्यकत्वमिति ।

सिद्धान्तस्तु– गुरुप्रसादो बलवानेव न दुर्बलः । नापि समः । लिङ्गभूयस्त्वात् । तथा हि– ऋषभादिभ्यो विद्यां श्रुत्वापि सत्यकामो 'भगवांस्त्वेवमेकामे ब्रूयात्' इति गुरुं प्रार्थयते । तथा उपकोसलोऽपि अग्न्यादिभ्यो विद्यां श्रुत्वापि गुरुं प्रार्थयते । न च गुरुप्रसादस्य प्राबल्याभावे तद्युज्यते । न च इति कर्तव्यतात्वाद्दौर्बल्यमनुमातुं शक्यम् । लिङ्गभूयस्त्वेन बाधितविषयत्वात् ।

(अभिनवचन्द्रिका)

यागीयहिंसाङ्गेषु मन्त्रादिषु व्यभिचाराच्च । न च तावताऽलमिति न मन्तव्यम् । 'आत्मा वा अरे द्रष्टव्यः' इति वचनेन तस्यानुष्ठेयत्वात् अतो वचनेन तस्यानुष्ठेयत्वात् । अतो गुरुप्रसादपूर्वकप्रदानस्य प्राबल्यात् तदवश्यमपेक्षितमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

श्रवणादिवद्गुरुप्रदानस्यापि अपेक्षितत्वे आत्मा वारे द्रष्टव्येति श्रुतौ गुरुप्रसादपूर्वकं श्रवणादिरूपं साधनं स्वान्तरङ्गिप्राबल्येन वाङ्गादङ्गिप्रधानभावेन युक्तमुताङ्गप्राबल्योपेतमिति चिन्ता । तदर्थं साधनादितिकर्तव्यतायाः प्राबल्यमदृष्टमुत दृष्टमिति ॥ **त्रैविध्यदर्शनमिति** ॥ एकत्रैकस्य प्रधान्यमन्यत्रापरस्य प्राधान्यं क्वचिदुभयस्य प्राधान्यमिति त्रैविध्यदर्शनमित्यर्थः । स्वप्रयत्नो वेति भाष्यानुसारेण पूर्वपक्षयति ॥ **शिष्य इति** ॥ श्रवणादीत्यनुक्त्वा प्रयत्न इति कर्तृव्यापारोक्त्या सूचितयुक्तिमाह ॥ **गुरुप्रसादस्येति** ॥ गुरुप्रसादश्च प्रयत्नश्च बलौ इति भाष्यानुसारेण पूर्वपक्षमाह ॥ **मास्तु वेति** ॥ कुतो न प्रयत्नस्य न दौर्बल्यमित्यतो गुर्विति स्वेति चोक्त्या सूचितं पुंसाम्यमित्युक्तन्यायं विशदयति ॥ **गुरुशिष्ययोरिति** ॥ पुरुषत्वसाम्यात् तत्क्रिययोरपि साम्यावश्यम्भावादिति भावः । अत्र पूर्वपक्ष्यभिमतं स्वप्रयत्नजन्यश्रवणादेः प्राबल्यं नाम ज्ञानसम्पादने स्वेतिकर्तव्यगुरुप्रसादानियतशक्तिकत्वम् । साम्यं नाम ज्ञानसम्पादने समानशक्तिकत्वम् । सिद्धान्त्यभिमतं प्रसादस्य प्राबल्यं तु स्वाङ्गिनिष्ठज्ञानसम्पादनशक्त्युद्बोधकत्वमिति विवेकः ।

सूत्रे तदिति प्रदानं परामृश्यते । एवेत्यनुवर्तत इत्यभिप्रायेण प्रवृत्तं गुरुप्रदानमेव बलवदिति भाष्यं व्याचष्टे ॥ **गुर्विति** ॥ प्रदानमेव बलवत् न तु श्रवणादीत्यर्थः । बलवदेवेत्यप्यन्वयं मत्वोक्तं न त्वधममिति । लिङ्गभूयस्त्वादित्यस्य तत् तस्य प्रदानस्य तत्र प्राबल्ये सत्यकामप्रार्थना गौतमानुज्ञोपकोसलप्रार्थनसत्यकामोपदेशरूपलिङ्गभूयस्त्वादित्यर्थमभिप्रेत्य व्याचष्टे ॥ **तस्य प्राबल्येत्यादिना** ॥ उपकोसलवचनाच्चेत्यस्योपकोसलस्य गुर्वर्थनारूपवचनादुपकोसलं प्रति गुरूपदेशरूपवचनाच्चेत्यर्थमभिप्रेत्याह ॥ **तथोपकोसलेनापीत्यादिना** ॥ यद्यपि छान्दोग्ये 'किन्नु सोम्य तेऽनुवोचमिति सत्यकामेन पृष्टो इति ह प्रतिजज्ञ इत्युपकोसलोऽग्निभिरुक्तं सर्वं विज्ञापयांचक्रे' इत्येवोच्यते । न तु तेन विद्योपदेशाय गुरुरर्थ्यत इत्युच्यते । प्रत्युत लोकानुवाव किल सौम्य तेऽब्रुवन्नहं न तु वक्ष्यामीति स्वयमेवोपदिष्टवानिति च प्रतीयते । तथापीह प्रतिजज्ञ

(वाक्यार्थमुक्तावली)

इत्यस्याग्निभिरुक्तं सर्वं विज्ञापयाञ्चक्र इत्यर्थः । तत्राचार्यस्तु ते गतिं वक्तेत्युक्तस्यापि विज्ञापितत्वात्तदेवार्थनारूपं वचनमिति भावः । इति **वचनादित्यस्येति** ॥ श्रुतेरित्यर्थोक्तौ सत्यकामेनेत्यनन्वितं स्यादित्यतोऽन्वयमर्थं चाह ॥ **सत्यकामेनेति** ॥ काम इति तादर्थ्ये सप्तमीत्यभिप्रेत्य व्याचष्टे ॥ **शुभार्थमिति** ॥ साधिष्ठमित्येतत्साधुत्वमिति व्याख्यातम् । प्राप्नोतीति स्वार्थे णिजिति भावः ॥ **गुरुशिष्यवदेवेति** ॥ गुरुशिष्यभाववदेव तत्क्रिययोर्वैषम्योपपत्तेरिति भावः । गुरुप्रसादस्याधिक्यं नाम श्रवणाद्यभावेऽपि फलहेतुत्वमिति मन्वानः शङ्कते ॥ **नन्वेवमिति** ॥ यद्वा गुरुप्रसादस्य श्रवणादौ ज्ञानजननशक्त्युद्बोधकत्वेन प्राबल्ये तस्य शिष्यान्तःकरण एव ज्ञानजननशक्त्याविर्भावकत्वसम्भवात् कथमन्तर्गडुना श्रवणादिनेति शङ्कते ॥ **नन्वेवमिति** ॥ परिहरतीति ॥ हिशब्दस्तूचितश्रुत्युदाहरणपूर्वं तदपीत्यंशं कर्तव्यपदाध्याहारेण व्याचष्ट इत्यर्थः ॥ **अत्र स्मृतिमिति** ॥ विशेषोक्तिरिति न्यायप्रदर्शनाय हिशब्दसूचितस्मृतिं चाहेत्यर्थः । सूत्रे बलवदिति वाच्ये बलीय इति प्रकर्षोक्तिस्तु यथा श्रवणादेर्गुरुप्रसादो बलवान् एवमस्मादन्यो बलवानस्ति किमिति शङ्कावारणाय । अत एव न तस्माद्बलवत्तर इत्युक्तम् ।

## तत्त्वसुबोधिनी

**बलीयस्त्वसमर्थनादिति** ॥ पूर्वाधिकरणे गुरुप्रसादस्य इतिकर्तव्यतात्वोक्तौ तर्हि तत एव दौर्बल्यं स्यादित्याक्षेपोत्थानात् अनन्तरसङ्गतिरिति भावः ॥ **अन्यथेति** ॥ बलीयस्त्वासमर्थनेत्यर्थः ॥ **उक्तयुक्तेरिति** ॥ प्रदानवदित्युक्तयुक्तेरित्यर्थः । इतिकर्तव्यतात्वेऽपि अस्तु गुरुप्रसादस्य प्राबल्यमित्यत आह ॥ **न हीति** ॥ वैय्यधिकरण्यपरिहारायाह ॥ **तेनोक्तत्वादित्यर्थ इति** ॥ **याज्ञीयहिंसायामिति** ॥ मन्त्रादीतिकर्तव्यताशून्यत्वे तस्यापि पापहेतुत्वादिति भावः ॥ **गुरुशिष्यवदेवेति** ॥ पुरुषत्वेऽपि गुरुशिष्ययोः वैषम्यात् तत्क्रिययोरपि वैषम्योपपत्तेः ॥ **तदवश्यापेक्षितमिति** ॥ न च लुंपेदवश्यमकृत्यमिति स्मरणात् प्रकृते च तदभावात् अवश्यमलोपप्राप्तेरवश्यमपेक्षितमित्येव वक्तव्यत्वात् अवश्यमपेक्षितमित्येतस्यासाधुत्वमिति वाच्यम् । शकंध्वादिषु पररूपं वाच्यमित्युक्तेः । पररूपांगिकारेण साधुत्वादिति भावः ।

## वाक्यार्थविवरणम्

उक्तेति ॥ गुरुप्रसादस्यावश्यकत्वेत्यर्थः ॥ **त्रैविध्येति** ॥ कृष्यादौ वृष्ट्यादिसाधनं प्रबलं दृष्टम् ।

कर्षणादिकं दुर्बलम् । **स्वर्गे ज्योतिष्टोमाश्वमेधयोर्द्वयोः साधनयोः साम्यं दृष्टमित्यर्थः ॥ साम्यादिति ॥ तथा च तदीययोः प्रसादश्रवणादिप्रयत्नयोरपि साम्यमेवेत्यर्थः ॥ काम इत्यस्य शुभार्थमिति ॥** साधिष्ठमित्यस्य साधुत्वमिति । देवेभ्यः श्रुतत्वे मया कस्माद् वक्तव्यमित्यत आह ॥ **तेषां चेति** ॥ वीयायेत्यस्यार्थोऽपगतमित्यादि ॥ **यागीयहिंसायामिति** ॥ यथा यज्ञे शमित्राऽजाहिंसा क्रियते तत्र तस्य शमितुर्मौनं, यथा ध्वनिं न कुर्यात्तथा अजायाः मुखबन्धनं कृत्वा मुष्ट्या अजाहिंसा कर्तव्या । ध्वनिकरणे शमितुः प्रायश्चित्तस्मरणात् । अतो यागीयहिंसायां मौनमुखबन्धनादीतिकर्तव्यताया एव प्राबल्यं दृष्टमिति मीमांसकसम्प्रदायः । तत्क्रिययोः प्रसादश्रवणादिरूपयोः ॥ **गुरुशिष्यत्वेति** ॥ गुरुत्वशिष्यत्वेत्यर्थः । यथा पुरुषत्वसाम्येऽपि कस्यचिद्गुरुत्वं कस्यचिच्छिष्यत्वमेवं पुरुषत्वसाम्येऽपि तत्क्रिययोः प्राबल्यदौर्बल्ये युक्ते इत्यर्थः ।

## वाक्यार्थमञ्जरी

**उक्तेति** ॥ आवश्यकत्वेत्यर्थः ॥ **न हीति** ॥ सन्निकर्षापेक्षयेन्द्रियस्यैव प्राबल्यदर्शनादिति भावः ॥ **पुरुषत्वसाम्यादिति** ॥ तथा च तत्क्रिययोरपि साम्यमिति भावः । ॐ लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॐ । तत् गुरुप्रदानं श्रवणाद्यपेक्षया बलीयः बलिष्ठं, कुतः लिङ्गानां ज्ञापकानां भूयस्त्वात् । बाहुल्यदर्शनात् न च श्रवणादिवैय्यर्थ्यं हि यस्मात् श्रुत्युक्तं तदपि श्रवणादिकमपि कार्यं यत इत्यर्थः ॥ **ऋषभादिभ्य इति** ॥ ऋषभः सर्वदेवोत्तमो वायुः चतुःशतसङ्ख्याकगोगणं प्रदायैतस्य प्रसवेन सहस्रसङ्ख्यापूर्तिपर्यन्तमरण्ये स्थित्वा तत्पूर्त्यनंतरं मामेहीति गुरुणा गौतमेनोक्तेन सत्यकामेन तथा कृत्वा गुर्वभिमुखे जाते सति तदीयगुरुसेवाप्रसन्नाः वाय्वग्निब्रह्मवरुणाः क्रमेण ऋषभाग्निहंसजलवायसरूपेण सत्यकामं प्रति विद्योपदेशं चक्रुस्तैरुपदिष्टः सत्यकामो गुरुमेत्य तस्मै सहस्रसङ्ख्याकं गोगणं समर्प्य तैरुक्तं निवेद्य, भगवानित्यनेन विद्योपदेशाय गुरुप्रार्थनं करोतीत्यर्थः ॥ **तथोपकोसलेनेति** ॥ गुरुणा सत्यकामेनाग्निपरिचर्यायां नियुक्ते उपकोसले बहुकालं तथा कुर्वति सति सत्यकामे कदाचित्प्रवासङ्गतेऽग्नय उपकोसलाय विद्योपदेशं चक्रुः । ततः सत्यकामे आगते उपकोसलस्तस्मै तदुक्तं निवेद्योपदेशाय प्रार्थ्यत इत्यर्थः । श्रुतिद्वयं क्रमेण व्याचष्टे ॥ **यद्यपीत्यादिना** ॥ भगवद्दृशेभ्यो भगवत्समेभ्योऽत्रेत्यनुवादः ॥ **यागीयपशुहिंसायामिति** ॥ मन्त्रादीतिकर्तव्यताशून्यत्वे यागस्वरूपानिष्पत्तेस्तस्या अपि यागहेतुत्वादिति भावः ।

॥ इति गुरुप्रसादाधिकरणम् ॥ २७ ॥

## २८. पूर्वविकल्पाधिकरणम्

**॥ ॐ पूर्वविकल्पः प्रकरणात्स्यात्क्रियामानसवत् ॐ ॥ ४६ ॥**

न च पूर्वप्राप्त एव गुरुरिति नियमः । समग्रानुग्रहं चेत्पश्चात्तनः करोति स्वयमेव तदा विकल्पः स्यात् । मानसक्रियावत्, यथोभयोर्ध्यानयोः समयोः ।

'पूर्वस्मादुत्तमो लब्धः स्वयमेव गुरुर्यदि ।
गृह्णीयादविचारेण विकल्पः समयोर्भवेत् ॥
समग्रानुग्रहाभावात्सत्यकामः स्वकं गुरुम् ।
ऋषभाद्यनुज्ञया चैव प्राप तस्माद्धि युज्यत' इति बृहत्तन्त्रे ॥

'समग्रानुग्रहं कश्चित्स्वयमेव समो यदि ।
कुर्यात्पुनश्च गृह्णीयादविरोधेन कामतः ॥
ध्यानयोः समयोर्यद्वद्विकल्पः कामतो भवेत् ।
एवं गुरोर्द्वितीयस्य विकल्पो ग्रहणेऽपि च'इति महासंहितायाम् ॥

### तत्त्वप्रदीपिका

किं पूर्वप्राप्त एव गुरुर्ग्राह्य उत पश्चात्प्राप्तोऽप्यथवा पश्चात्प्राप्त एवेत्याकाङ्क्षायामाह– पूर्वविकल्पः प्रकरणात्स्यात्क्रियामानसवत् ॥ न च पूर्वप्राप्त एव गुरुरिति नियमः । नाप्युत्तरप्राप्त एवेति वा । गुरुस्वरूपविशेषमनुग्रहविशेषं चापेक्ष्यैव नियमः स्यात् । समग्रानुग्रहं चेत्पश्चात्तनः प्रकरोति स्वयमेव गुरुश्च स्वयमेव तदा विकल्पः स्यात् । विकल्पो व्यवस्थित एव स्यात् । एतदाह– 'पूर्वस्मादुत्तमो लब्धः स्वयमेव गुरुर्यदि । गृह्णीयादविचारेण' इति । अथ समग्रानुग्रहं चेत्पश्चात्तनः प्रकरोति समः, स्वयमेव तदा पूर्वाविरोधे विकल्पः स्यात् । मानसक्रियावत् । अस्य भाष्यस्य वर्णना– यथोभयोर्ध्यानयोः समयोरिति । समत्वं फलतः । तच्चाऽह । 'विकल्पः समयोर्भवेत्'इति ।

'समग्रानुग्रहं कश्चित्स्वयमेव समो यदि ।
कुर्यात्पुनश्च गृह्णीयादविरोधेन कामतः' इत्यादि च ॥

(तत्त्वप्रदीपिका)

**'समग्रानुग्रहाभावात्'** इत्यादेरयमर्थः । ऋषभादीनामेकैकस्मादेव समग्रानुग्रहाभावादृषभाद्यनुज्ञया च सत्यकामः स्वकं गुरुं प्रापेति । अतः सिद्धमसमग्रानुग्रहे तूत्तमस्य तदनुज्ञयाऽवरः प्राप्य इति । एतच्चाऽह– **'तस्माद्धि युज्यत'** इति ॥

'वायुर्वृषभरूपः सन्नग्निर्हंसश्चतुर्मुखः ।
मद्गुरूपश्च वरुणः सत्यकामाय होचिरे ॥
नाऽचार्यबुद्ध्या तैरुक्तमतोऽनुज्ञां गुरोरगात् ।
उत्तमाचार्यसम्प्राप्त्यै नावराचार्यतः क्वचित् ।
इच्छेदनुज्ञां श्रुत्वाऽपि नानुज्ञां प्रार्थयेत्ततः' इत्याचार्यसंहितायाम् ॥

## तत्त्वप्रकाशिका

अत्र ब्रह्मज्ञानसाधनोपासनेतिकर्तव्यता यत्प्रसादस्तद्विचारादस्ति शास्त्रादिसङ्गतिः । उत्तमगुरोरस्वीकारे सार्वज्ञाभावेन भाविफलानुसारेणोपासनानुपपत्तिप्रसङ्गाद्विचारणीयमेव तत् । प्रकृतो गुरुरेव विषयः । किं पूर्वप्राप्त एवेति नियम उत पूर्वतनं त्यक्त्वा अन्योऽपि ग्राह्य इति सन्देहः । उभयथा दर्शनं सन्देहबीजम् । प्रथमप्राप्त एवेति पूर्वः पक्षः । प्रथमप्राप्तत्यागे कारणाभावात् । गुरुपरिग्रहमात्रेण शुभलाभोपपत्तेः । विनैव कारणं प्रथमप्राप्तसंत्यागे दोषप्राप्तेश्च । 'गुरुमन्त्रपरित्यागी रौरवं नरकं व्रजेत्' इत्यादिवचनात् । अतः पूर्वप्राप्त एव गुरुरिति नियमात्कचित्सर्वज्ञगुरोः प्रथमप्राप्तत्वाभावे प्रागुक्तं न युज्यत इति । सिद्धान्तयत्सूत्रं पठित्वा व्याचष्टे ॥ **पूर्वेति** ॥ न पूर्वप्राप्त एव गुरुरिति नियमः । पश्चात्तनोऽपि स्वीकार्यो भवति । न च वैयर्थ्यम् । गुरुपरिग्रहस्य समग्रानुग्रहार्थत्वात् । स च पूर्वतनेन समोऽधिको वा समग्रानुग्रहं करोति चेत्स्वीकार्यो नाधमः । समग्रानुग्रहस्याकर्तोत्तमोऽपि न स्वीकार्यो न वा । न तु स्वीकार्य एवेति विधिः । विकल्पश्च यदृच्छया प्राप्तौ न तु तदर्थं प्रयतितव्यम् । समग्रानुग्रहकर्तोत्तमश्चेत्तदा न विकल्पः स्यात् । पूर्वानुज्ञां विनैवासंशयं स्वीकार्यः स्यादिति भावः । साम्ये विकल्प इत्यत्रोक्तं दृष्टान्तं व्याचष्टे ॥ **मानसेति** ॥ तदेव व्यनक्ति ॥ **यथेति** ॥ विकल्पः स्यादिति सम्बन्धः । अत्र स्मृतिमाह ॥ **पूर्वस्मादिति** ॥ यदि पूर्वस्मादुत्तमोऽविचारेण स्वीकार्यस्तर्हि कथमृषभादयः सत्यकामेन न गृहीताः । पूर्वतन एव प्राप्तोऽतो नैतद्युक्तमित्यत आह ॥ **समग्रेति** ॥ नास्माभिरुत्तममात्रपरिग्रह उच्यते किं तु समग्रानुग्रहकर्तुरुत्तमस्य । सत्यकामः समग्रानुग्रहाभावान्नोत्तमान् जग्राहेत्यतः पूर्वपरित्यागेनोत्तमः समो

(तत्त्वप्रकाशिका)

**वा स्वीकार्य इति युज्यत इति भावः । साम्ये पूर्वानुज्ञापेक्षितेतिभावेन तत्र स्मृतिं चाह ॥ समग्रेति ॥ अविरोधेन गुर्वनुज्ञया । अनेन दोषवचनस्य विषयो दर्शितो भवति । अधमस्वीकारविषयं वा व्यर्थस्वीकारविषयं वाऽनुज्ञाभावविषयं वेति ।**

## गुर्वर्थदीपिका

इतिकर्तव्यता यत्प्रसाद इत्यत्र येषां गुरूणां प्रसाद इति कर्तव्यताश्रवणादेरङ्गम् । ते गुरवो विचार्यन्त इत्यर्थः । प्रकरोतीति वदता **प्रकरणात्** प्रकृष्टकरणात् प्रकृष्टानुग्रहकरणादिति सूत्रार्थस्सूचितः । समे विकल्पोक्तावर्थादुत्तमे तदभावस्यापि प्राप्तत्वादविकल्प इत्युक्तम् । पूर्वमेव गृहीतो गौतमाख्यऋषिरूपो नीचगुरुः 'अग्निष्टे पादं वक्ता 'इत्यादि प्रायपाठानुसारेण 'आचार्यस्ते पादं वक्ता' इत्यस्याप्यूह्यत्वादृषभाद्यनुज्ञया चेत्युक्तम् । अनेनोत्तमोऽपि ऋषभः स्वस्माच्छ्रवणायोग्यत्वान्न सम्पूर्णानुग्रहं कृतवानिति ज्ञेयम् । अतो राजगृहान्नालाभाद्भिक्षुगृहान्नप्रार्थनायेव ततो नीचस्यापि पूर्वगुरोः प्रार्थनायागतः । ऋषभादीनामाचार्यत्वेनावरणेऽपीदमेव कारणमिति ज्ञेयम् ।

## भावबोधः

**इतिकर्तव्यता यत्प्रसाद इति ।** अस्य पादान्तर्भावकथनार्थमेतदुक्तम् । पूर्वसूत्रे गुरुप्रसादरूपेतिकर्तव्यतायाः प्राबल्येनाऽऽवश्यकत्वोक्तौ यदृच्छया समग्रानुग्रहकर्तृस्वीकारानन्तरं पश्चात् समग्रानुग्रहकर्तृलाभे किं कर्तव्यमित्याक्षेपे तद्विचारादनन्तरसङ्गतिरिति भावः । **किं पूर्वेति ।** अत्र किं पूर्वप्राप्त एव गुरुरिति नियम उत पश्चात् प्राप्तोऽपि स्वीकार्य इति चिन्ता । तदर्थं 'गुरुमन्त्रपरित्यागी रौरवं नरकं व्रजेत्' इति वचनं किं निरवकाशमुत सावकाशमिति । तथर्दं किं गुरुस्वीकारोऽदृष्टमात्रप्रयोजनक उत ज्ञानादिदृष्टादृष्टोभयप्रयोजनक इति । तदर्थं गुर्वन्तरस्वीकारे प्रमाणं नास्त्युतास्तीति । न च पूर्वप्राप्त एव गुरुरिति नियम इति भाष्यानुसारेण पूर्वपक्षमाह– **प्रथमप्राप्त एवेति ॥** न चोत्तमगुरुस्वीकारार्थत्वे प्राप्तसंत्यागदोष इति न्यायविवरणं मनसि निधायाह– **विनैवेति ॥ प्रागुक्तमिति ॥** 'इतरे तु अर्थसामान्यात्' इत्यत्रोक्तं भाविफलानुसारेण सर्वज्ञगुरूपदिष्टस्वयोग्यगुणोपासनमित्यर्थः । **समाग्रानुग्रहार्थत्वादिति** । अनेन पश्चात्तनगुरूस्वीकारे समग्रानुग्रहकर्तृत्वं हेतुरित्युक्तं भवति । 'समग्रानुग्रहं' इत्यादिस्मृत्यनुसारेण सूत्रे 'प्र' इत्युपसर्गस्य

(भावबोधः)

समग्रत्वमर्थः । **योग्यतयाऽनुग्रहस्येत्यस्य** लाभः । तथा च प्रकरणात् **समग्रानुग्रहकरणात्** पूर्वस्य समस्य त्यागे विकल्पः । अधमत्यागादिनियमोपलक्षकमेतत्; इत्यभिप्रेत्य प्रवृत्तं समग्रानुग्रहं चेत्पश्चात्तनः करोतीति भाष्यं व्याचष्टे– **स चेति** ॥ **नाधम इति** ॥

'गुणाधिकं गुरुं प्राप्य तद्धीनं नाप्नुयात् क्वचित्'

इत्यनुव्याख्यानोक्तेरिति भावः ।

'समग्रानुग्रहाभावात् सत्यकामः स्वकं गुरुम्'

इति स्मृत्यनुसारेणाह– **समग्रानुग्रहस्याकर्तेति** ॥ समग्रानुग्रहमित्यादिभाष्यं स्वयमेव तदा विकल्पः स्यादिति शेषसाहित्येन प्रकारान्तरेण व्याचष्टे– **समस्य चेत्यादिना** ॥

'समे विकल्प एव स्यात् पूर्वानुज्ञा च सर्वथा'

इत्यनुव्याख्यानं 'अविरोधेनैव' इति स्मृतिं च मनसि निधायाह– **पूर्वानुज्ञयेति** ॥ स्वयमेवे-त्यस्यार्थो विकल्पश्चेति । **समग्रानुग्रहं चेत्** पश्चात्तनः करोति स्वयमेव तदा विकल्पः स्यादिति भाष्यमविकल्प इति अकारप्रश्लेषेण प्रकारान्तरेण व्याचष्टे– **समग्रानुग्रहकर्तेति** ॥

'तदुत्तमगुरुप्राप्त्यै पूर्वानुज्ञा न मृग्यते'

इत्यनुव्याख्यानानुसारेण, स्वयमेवेत्यस्यार्थ उक्तः । **पूर्वानुज्ञां विनैवेति** । तस्य चाविचारेणेति स्मृत्यनुसारेण तात्पर्यकथनमसंशयमिति भाष्ये उत्तमः स्वीकार्य इति च पदद्वयाध्याहार इति ज्ञातव्यम् । अविरोधेन पूर्वानुज्ञयेति । अनुज्ञाभावे विरोधोत्पत्तेरिति भावः । अनेन दोपवचनस्येति । अनेन दोषवचनस्यैव सावकाशत्वेन तत्तत्र मानं न भवतीत्यभिप्रेत्य न्यायविवरणे तत्र दोषे मानाभावादित्युक्तमित्युक्तं भवति । व्यर्थस्वीकारविषयं वेति । समग्रानुग्रहस्याकर्तुः समस्योत्तमस्य वा स्वीकारविषयमित्यर्थः ।

## भावदीपः

**यत्प्रसादस्तद्विचारादिति** ॥ एतेन पूर्वोपजीवनरूपं पूर्वानन्तर्ये बीजं च सूचितम् । एतच्चिन्ता-फलमाह ॥ **उत्तमेति** ॥ उत्तमगुरोरस्वीकारे साधारणगुरोरुपयुक्तसार्वज्ञाभावेन तन्मुखेन

(भावदीपः)

स्वप्राप्यभाविफलानुसारिगुणोपदेशालाभादधिकारिणां फलानुसारेणोपासनायोगादितरे त्वित्यत्रोक्तमयुक्तं स्यादित्यर्थः ॥ **प्रकृत इति** ॥ पूर्वसूत्रे गुरुप्रदाननिर्देशकेन तद्धीति तत्पदेन प्रकृत इत्यर्थः ॥ **उभयथेति** ॥ लोके भृत्यादौ पूर्वप्राप्तस्वामिपरित्यागापरित्यागयोर्द्वयोरपि दर्शनमित्यर्थः । पूर्वप्राप्त एव गुरुरिति नियम इति भाष्यसूचितसंशयकोटी उक्त्वा तदनुगुणपूर्वपक्षप्रतिज्ञां चाह ॥ **प्रथमेति** ॥ पूर्वप्राप्त एवेति भाष्योक्तैवकारसूचितहेतुमाह ॥ **प्रथमप्राप्तेति** ॥ प्रदानवदेवेत्यत्रोक्तज्ञानप्राप्तिरेव कारणमस्तु । केवलश्रवणादिमात्रेण तदसिद्धेरित्यत आह ॥ **गुरुपरिग्रहेति** ॥ हेतोरप्रयोजकत्वनिरासाय प्राप्तं स त्यागनिमित्तदोष इत्यन्यत्रोक्तं च हेतुमाह ॥ **विनैवेति** ॥ **अत इति** ॥ पूर्वत्यागेनाऽन्यस्वीकारस्य व्यर्थत्वाद्दोषवचनाच्चेत्यर्थः । प्रागुक्तमितरे त्वित्यत्रोक्तमित्यर्थः ॥ भाष्यं व्याचष्टे ॥ **नेति** ॥ एवकारार्थमाह ॥ **पश्चात्तनोऽपीति** ॥ समग्रेत्यादिभाष्यभावार्थं व्यावर्त्यपूर्वमाह ॥ **न चेति** ॥ भाष्याक्षरार्थमाह ॥ **स चेति** ॥ पश्चात्तन इत्यर्थः । भाष्यस्थस्मृत्यनुरोधेनोक्तम् ॥ **समोऽधिको वेति** ॥ गुणाधिकं गुरुं प्राप्य तद्धीनं नाप्नुयात्कचिदित्यनुभाष्यं हृदि कृत्वाऽह ॥ **नाधम इति** ॥ तदा विकल्प इत्यत्र विकल्पोऽविकल्प इति च द्वेधा विच्छिद्यार्थमाह ॥ **समस्य चेति** ॥ विकल्पशब्दार्थमाह ॥ **स्वीकार्यो न वेति** ॥ व्यवस्थितविकल्प इत्युपेत्योक्तम् ॥ **पूर्वानुज्ञयेति** ॥ स्वयमेवेत्यस्यार्थो यदृच्छया प्राप्ताविति । अविकल्पशब्दार्थमाह ॥ **असंशयं स्वीकार्यः स्यादिति** ॥ **अत्र स्मृतिमिति** ॥ उक्तसर्वार्थ इत्यर्थः ॥ **अनेनेति** ॥ पूर्वस्मादित्यादिस्मृतिकथनेनेत्यर्थः । तदेव व्यनक्ति ॥ **अधमेत्यादिना** ॥

## अभिनवचन्द्रिका

स्यात् पश्चात्तनोऽपि गुरुः स्वीकार्यः स्यात् । कुतः प्रकरणात् प्रकृष्टानुग्रहकरणात् । उक्तस्यापवादमाह– **पूर्वविकल्प इति** ॥ पश्चात्तनसमग्रानुग्रहकर्ता पूर्वेण समश्चेत्, पूर्वानुज्ञया विकल्पः न तूत्तमवत्स्वीकारनियमः । पूर्वानुज्ञा चेत् स्वीकार्यः, न चेन्नेति । तत्र दृष्टान्तः क्रियामानसवदिति । समानयोर्ध्यानयोरिवेति सूत्रार्थः ॥ **सर्वज्ञानाभावेनेति** ॥ ध्यानोपयोगिध्येयस्वरूपज्ञानाभावेन भाविफलानुसारेण उपासनानुपपत्तिप्रसङ्गादित्यर्थः ॥ **प्रथमप्राप्तसन्त्याग इति** ॥ अन्यगुरुस्वीकारेण प्रथमप्राप्तसंत्याग इत्यर्थः । प्रथमप्राप्तगुर्वसाध्यशुभलाभाय पुनरन्यो गुरुः स्वीकार्य इत्यत आह– **गुरुपरिग्रहमात्रेणेति** ॥ गुरुपरिग्रहमात्रेण एकलव्यवत् शुभलाभो-

(अभिनवचन्द्रिका)
पपत्तेरित्यर्थः ॥ **विनैव कारणमिति** ॥ त्यागकारणीभूतपातित्यादिदोषं विनैवेत्यर्थः ॥ **गुरु-मन्त्रेति** ॥ गुरुपरित्यागी, मन्त्रपरित्यागीत्यर्थः ॥ **प्रागुक्तं न युज्यत इति** ॥ सर्वज्ञगुरूपदेशानुसारेण ध्यातव्यमिति यत्प्रागुक्तं तन्न युज्यत इत्यर्थः । भाष्ये 'समग्रानुग्रहं चेत्प्रकरोति' इति विशेषणबललब्धमर्थमाह– **समग्रानुग्रहस्याकर्तेति** ॥ 'तदाविकल्पः स्यात्' इति भाष्यस्य विषयमाह– **समस्य चेति** ॥ 'तदा विकल्पः स्यात्' इति भाष्यस्याऽविकल्प इति पदच्छेदमङ्गीकृत्याऽर्थान्तरमाह– **समग्रेति** ॥

पूर्वपक्षस्तु– प्रथमप्राप्त एव गुरुः स्वीकार्यो न तु तत्परित्यागेनान्यः स्वीकार्यः । परित्यागकारणीभूतपातित्यादिदोषाभावात् । न च प्रथमप्राप्तगुर्वसाध्यफललाभायाऽन्यः स्वीकार्य इति वाच्यम् गुरुस्वीकारेणैव तदुपपत्तेः । न हि गुरुस्वीकारस्य साध्यं नास्ति येनान्यस्वीकारः स्यात् । अन्यथैकलव्यस्य विद्याप्राप्तिर्न स्यात् । पातित्यादिदोषं विनापि गुरुपरित्यागे च दोषप्राप्तेश्च । अतः पूर्वप्राप्त एव गुरुरिति नियमात् क्वचित्सर्वज्ञगुरोः प्रथमप्राप्तत्वाभावे प्रागुक्तं न युज्यत इति ।

सिद्धान्तस्तु– न पूर्वप्राप्त एव गुरुरिति नियमः । पश्चात्तनः समग्रानुग्रहं करोति चेत्सोऽपि ग्राह्यः । गुरुपरिग्रहस्य समग्रानुग्रहार्थत्वात् । गुरुप्रसादमन्तरा गुरुस्वीकारमात्रेण मोक्षादिलक्षण-महाफलाभावात् । 'ये च नान्येऽस्मद्विधाः श्रेयसश्च तानुपास्व तानुपचरस्व तेभ्यः शृणुहि ते त्वामवन्तु' इति पौष्यायणश्रुतावतिदेशाच्च । समग्रानुग्रहकर्ता पूर्वस्मादुत्तमश्चेत् पूर्वानुज्ञां विना निःसंशयं स्वीकार्य एव । समश्चेत्पूर्वानुज्ञया स्वीकार्यः । नो चेत् न स्वीकार्य इति विकल्पः स्यात् । मानसक्रियावत् अधमश्चेत् न स्वीकार्य एव । 'पूर्वस्मादुत्तमो लब्धः स्वयमेव गुरुर्यदि । ग गृह्णीयादविचारेण विकल्पः समयोर्भवेत्' इति स्मृतेः । अतः सर्वज्ञगुरुस्वीकारस्योपपन्नत्वात् तदुक्तप्रकारेणोपासनं कर्तव्यमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

**इतिकर्तव्यता यत्प्रसाद इति** ॥ ननु गुरुप्रसाद इतिकर्तव्यता इति प्रदानवदित्यत्रोक्तम् । तथा चेदं तदनन्तरमेव स्यादिति चेन्न । कथमितिकर्तव्यताहिंसायां मन्त्रादिवद्वा स्वाध्यायस्य कुशाग्रहणादिवद्वेति इतिकर्तव्यत्वप्रकारविचारस्याभ्यर्हितत्वेन तदनन्तरं गुरुविचारोपपत्तेः ।

**(वाक्यार्थमुक्तावली)**

लिङ्गभूयस्त्वादित्यत्र ऋषभाद्युत्तमलाभेऽपि सत्यकामेन पूर्वप्राप्तगुरोरनुसारेणोक्तौ तर्हि पूर्वप्राप्त एव गुरुरिति नियम इति पूर्वपक्षोत्थानाच्चानन्तरसङ्गतिरिति भावः ॥ **सार्वज्ञाभावेनेति** ॥ कुशाकस्य पूर्वप्राप्ताधमगुरोश्चेति शेषः ॥ **प्रसङ्गादिति** ॥ इतरे त्वर्थसामान्यादिति प्रागुक्तमयुक्तं स्यादिति शेषः ॥ **किमिति** ॥ किं पूर्वप्राप्त एव गुरुरिति नियम उत पश्चात्प्राप्तोऽपि स्वीकार्य इति चिन्ता । तदर्थं किं पूर्वपरित्यागे कारणं नास्ति गुरुमन्त्रपरित्यागीति दोषवचनं च निरवकाशमुत कारणमस्ति दोषवचनं च **सावकाशमिति** ॥ न पूर्वप्राप्त एवेति भाष्यनिषेध्यं पूर्वपक्षसाध्यमाह । **प्रथमप्राप्त एवेति** । प्रकरणादित्यत्र प्राप्तगुरुसन्त्यागे कारणोक्त्या सूचितं प्राप्तसन्त्याग इत्युक्तन्यायं तत्र हेतुत्वेनाह ॥ **प्रथमप्राप्तेति** ॥ पुनश्च गृह्णीयादविरोधेन कामत इति भाष्ये दोषवचनस्य विषयोक्त्या सूचितं प्राप्तसन्त्याग इत्युक्तन्यायं प्राप्तसन्त्यागे दोषस्स्यादित्येवं हेत्वन्तरपरत्वेन व्याचष्टे ॥ **नैवेति** ॥ गुरुत्यागे भवेन्मृत्युर्मन्त्रत्यागे दरिद्रता । गुरुमन्त्रपरित्यागीति वचनमादितः पठनीयम् ॥ **प्रागुक्तमिति** ॥ भाविफलानुसारेण सर्वज्ञगुरूपदिष्टगुणोपासनमिति इतरे त्वर्थसामान्यादित्यत्रोक्तमित्यर्थः ।

सूत्रे पूर्वविकल्प इत्यस्य पूर्वप्राप्तगुरौ विकल्पः अनियमः । स एवानुवर्तनीय इति नियमोऽस्तीत्यर्थं मत्वा प्रागुक्तभाष्यमनूद्यैवकारार्थमाह ॥ **पश्चात्तनोऽपीति** ॥ प्रकरणादिति ल्यब्लोपनिमित्ता पञ्चमी । प्रेत्युपसर्गस्य समग्रत्वमित्यर्थः । प्रदानवदिति अनुग्रहः कृतोऽत्रानीयते । तथा चानुग्रहस्य प्रकर्षेण सामाग्र्येण करणमपेक्ष्य समग्रानुग्रहलक्षणफलमपेक्ष्य पश्चात्तनोऽपि स्वीकार्य इत्यभिप्रेत्य पश्चात्तनः करोतीति भाष्यं प्रवृत्तम् । चेच्छब्दो यस्मादित्यर्थे । यस्मात्समग्रानुग्रहं पश्चात्तनः करोतीत्यतः तादृशफलाभावात्पूर्वप्राप्त एवेति नियम इति तदर्थमभिप्रेत्य व्यावर्त्यकथनपूर्वं व्याचष्टे ॥ **न च वैयर्थ्यमिति** ॥ पश्चात्तनोऽपि स्वीकार्योऽतः पूर्वप्राप्त एवेत्यनियम इत्युक्तं पश्चात्तनस्वीकारे विशेषाभिधानाय चेदं सूत्रमिति भावेन समग्रानुग्रहं चेत् पश्चात्तनः करोति तदा पूर्वप्राप्ते गुरौ विकल्पः । अनियमः स एवेति । नियमो नास्ति । अन्योऽपि स्वीकार्य इति प्रवृत्तम् । तत्र पश्चाद्भाविनः समग्रानुग्रहकर्तृत्वमात्रं नालम् । पश्चात्तनस्याधमत्वे गुणाधिकं गुरुं प्राप्य तद्धीनं नाप्नुयात्कचिदिति वचनविरोधादिति भावेन पश्चात्तनं पूर्वतनादुत्तमत्वसमत्वाभ्यां विशेषयन् व्याचष्टे ॥ **स चेति** ॥ स पश्चात्तनः पूर्वतनेन समोऽधिको वा समग्रानुग्रहं करोति चेत् स्वीकार्यो नाधमः

(वाक्यार्थमुक्तावली)

स्वीकार्यः । नाप्युत्तमः समो वा समग्रानुग्रहस्याकर्ता स्वीकार्यः । अत उत्तमस्य समस्य वा पश्चाद्भाविनः प्रकरणं समग्रानुग्रहमपेक्ष्य स्वीकार्यत्वात् पूर्वप्राप्ते विकल्प एव न नियम इति भावः ।

समग्रानुग्रहं चेत् पश्चात्तनः करोतीति भाष्यं स्वयमेव तदा विकल्पः स्यादिति शेषसाहित्येन प्रकारान्तरेण व्याचष्टे ॥ **समस्य चेति** ॥ 'समे विकल्प एव स्यात् पूर्वानुज्ञा च सर्वथा' इत्यनुव्याख्यानमविरोधेनेति स्मृतिं च मनसि निधायाह ॥ **पूर्वानुज्ञयेति** ॥ अनुज्ञया कार्यः । अनुज्ञाभावे न स्वीकार्य इत्यर्थः । **स्वयमेवेत्यस्यार्थो** विकल्पश्चेति । अनेन पश्चात्तनः समः समग्रानुग्रहं स्वयमेव चेत्करोति तदापि पूर्वानुज्ञाभावाभावाभ्यां विकल्प एव स्यादिति भाष्यार्थः । अस्यापि पूर्वस्मादुत्तरस्य समस्य ग्रहणप्रकरणं समग्रानुग्रहं पूर्वं पूर्वानुज्ञां चापेक्ष्य विकल्पः स्यादित्यर्थ उक्तो भवति । अनुज्ञामपेक्ष्य समे विकल्प इवोत्तमेऽपि किं विकल्प इत्यतः समग्रानुग्रहं चेत् पश्चात्तनः करोति स्वयमेव तदा विकल्पः स्यादिति भाष्यं प्रकारान्तरेण व्याचष्टे ॥ **समग्रानुग्रहकर्तेति** ॥ एतेन स्वयमेवेत्यस्यानुज्ञां विनेत्यर्थः । स्वीकार्य इति शेषः । अविकल्प इति पदच्छेद इत्युक्तं भवति । तदेव व्यनक्तीति भाष्यत्वात्स्वपदं विवृणोतीत्यर्थः । षष्ठ्यर्थे वतिः । षष्ठी च द्विवचनान्ता विवक्षिता । क्रिया च प्रज्ञान्तरपृथक्त्ववदिति वक्ष्यमाणत्वात् ध्यानरूपेति विवरणमिति भावः ॥ **अत्रेति** ॥ समयोरेव विकल्पो नोत्तमप्राप्तावित्यत्रेत्यर्थः । अविचारेण स्वयमेव गृह्णीयादित्यन्वयः । समग्रानुग्रहाभावादिति भाष्यस्योत्तमैरपि समग्रानुग्रहकरणात् प्राप्तगुरोः स्वयोग्ययावदुपदेशकत्वेन स्वयोग्यगुरुत्वात् । मध्ये प्राप्तोत्तमानुज्ञासद्भावाच्च तं प्राप न तूत्तमा नैवेत्यतः पूर्वपरित्यागेन समग्रानुग्रहकर्तुरुत्तमस्य समस्य वा स्वीकार इत्येतद्युज्यत इत्यर्थः ॥ **अविरोधेन पूर्वानुज्ञयेति** ॥ अनुज्ञाभावे विरोधोत्पत्तेरिति भावः ॥ **अनेन दोषवचनस्येति** ॥ एतेन गुरोरस्वीकारस्याकर्तव्यत्वप्रमाणत्वेनोदाहृतस्य गुरुमन्त्रपरित्यागीति वचनस्य सावकाशत्वोक्त्या अमानत्वमित्युक्तन्यायोऽपि विवृतो भवतीति ज्ञेयम् । अनुज्ञाभावविषयं वेत्युपलक्षणम् । समग्रानुग्रहकर्तृविषयं वेति बोध्यम् ।

## तत्त्वसुबोधिनी

**इतिकर्तव्यता यत्प्रसाद इति** ॥ अस्य पादान्तर्भावकथनार्थं यत्प्रसाद इति उक्तम् । पूर्वसूत्रे गुरुप्रसादरूपेतिकर्तव्यतायाः प्राबल्येन आवश्यकोक्तौ यदृच्छया समग्रानुग्रहकर्तृगुरुस्वीकारानन्तरं

(तत्त्वसुबोधिनी)

पश्चात् समग्रानुग्रहकर्तृगुरुलाभे किं कर्तव्यं इत्याक्षेपे तद्विचारादनन्तरसङ्गतिरिति भावः । ननु शुभलाभार्थं गुरुस्वीकार इत्यत आह ॥ **गुर्विति** ॥ कोऽसौ दोष इत्यत आह ॥ **गुरुमन्त्रेति** ॥ प्रागुक्तं न युज्यते इति । इतरेत्वर्थसामान्यादित्यत्र उक्तं भाविफलानुसारेण सर्वज्ञगुरूपदिष्टस्वयोग्यगुणोपासनमित्यर्थः । पूर्वप्राप्त एवेत्यवधारणव्यावृत्यर्थमाह ॥ **पश्चात्तनोऽपीति** ॥ **समग्रानुग्रहार्थत्वादिति** ॥ तथा च पश्चात्तनगुरुस्वीकारे समग्रानुग्रहकर्तृत्वं हेतुरिति भावः । समग्रानुग्रहमित्यादिभाष्योदाहृतस्मृत्यनुसारेण सूत्रे प्रेत्युपसर्गस्य समत्वमर्थः । योग्यतयाऽनुग्रहस्येत्यस्य लाभः । तथा च प्रकरणात् समग्रानुग्रहकरणात् पूर्वस्य समस्य त्यागेन विकल्पः । अधमत्यागादिनियमोपलक्षकमेतदित्यभिप्रेत्य प्रवृत्तं समग्रानुग्रहमित्यादिभाष्यं व्याचष्टे ॥ **स चेति** ॥ समग्रानुग्रहमित्यादिभाष्यं स्वयमेव तदा विकल्पः स्यादिति शेषसाहित्येन प्रकारान्तरेण व्याचष्टे ॥ **समस्य चेति** ॥ पूर्वाज्ञया गुर्वन्तरस्वीकार आवश्यक इत्थं स्वीकारे कथं विकल्प इत्यत आह ॥ **विकल्पश्चेति** ॥ दैवाद्गुर्वन्तरप्राप्तिश्चेत् तदा स्वीकारः न तु तदर्थं प्रयत्नः । समग्रानुग्रहं चेत् इत्यादिभाष्यं अविकल्प इत्यकारप्रश्लेषेण प्रकारान्तरेण व्याचष्टे ॥ **समग्रानुग्रहकर्तेति** ॥ स्वयमेवेत्यस्यार्थः **पूर्वानुज्ञां विनेति** ॥ तस्य तात्पर्यकथनं **असंशयमिति** ॥ भाष्ये उत्तमः स्वीकार्य इति च पदद्वयाध्याहार इति ज्ञातव्यम् । अविरोधेन पूर्वानुज्ञयेति । अनुज्ञाभावे विरोधोत्पत्तेरित्यर्थः ॥ **तेनेति** ॥ पूर्वानुज्ञास्वीकारपूर्वकं गुर्वंतरपरिग्रहः कर्तव्य इति कथनेनेत्यर्थः । व्यर्थस्वीकारविषयं चेति । समग्रानुग्रहस्याकर्तुः समस्य उत्तमस्य वा स्वीकारविषयमित्यर्थः ।

## वाक्यार्थविवरणम्

पादसङ्गत्यर्थमाह **इतिकर्तव्यता यत्प्रसाद इति** ॥ यस्य गुरोः प्रसाद इत्यर्थः ॥ **तद्विचारादिति** ॥ तद्गुरुविचारादित्यर्थः ॥ **सार्वज्ञाभावेनेति** ॥ उत्तमस्य सर्वज्ञस्य गुरोः स्वीकारे तस्य सर्वज्ञत्वेनैतद्योग्यतापरिज्ञानसम्भवेन भाविफलानुसारेणोपासनमुपदिशेत् । तदुक्तानुसारेणोपासनमयं कुर्यात् । अधमस्य स्वीकारे तु तस्यासर्वज्ञत्वेनैतद्योग्यतापरिज्ञानासम्भवेन तदनुसारेणोपदेशासम्भवेन तस्य तथोपासनं न सम्भवतीत्याशयः ॥ **गुरुपरिग्रहमात्रेणेति** ॥ यादृशतादृशगुरुपरिग्रहमात्रेणेत्यर्थः ॥ **शुभेति** ॥ उपासनज्ञानादिद्धयेत्यर्थः ॥ **वैय्यर्थ्यम्** ॥ गुरुपरिग्रहमात्रेण शुभलाभोपपत्तेः । प्रथमप्राप्तपरित्यागेन पश्चात्तनस्वीकारवैय्यर्थ्यमित्यर्थः ॥ **तमेव विकल्पं दर्शयति** ॥

(वाक्यार्थविवरणम्)

पूर्वानुज्ञयेति ॥ **न वेति** ॥ पूर्वानुज्ञाभावेन वेत्यर्थः ॥ **प्राप्तौ** ॥ समग्रानुग्रहकर्तुः समस्येत्यर्थः । भाष्ये उभयोर्ध्यातव्ययोः रामकृष्णादिमूर्तिध्यानयोरित्यर्थः । ऋषभादयः उक्तगौतमापेक्षयोत्तमाः । ऋषभहंसमद्गुरूपा देवा न गृहीता इत्यनन्तरं किन्त्विति शेषः । पूर्वतनो गौतमाख्यो गुरुः जग्राह । गुरुत्वेनेति शेषः ॥ **दोषवचनस्य** ॥ गुरुमन्त्रपरित्यागीत्युदाहृतवचनस्य अधमेति पूर्वप्राप्तोत्तम-गुरुसत्त्वेऽपि तं परित्यज्य अधमो यदि स्वीक्रियते तर्हि तदा गुरुपरित्यागीत्युक्तदोष इत्यर्थः ॥ **व्यर्थेति** ॥ पूर्वमेव प्राप्तो गुरुः समग्रानुग्रहं करोति तदा, तं विना तदपेक्षयोत्तमः तत्समो वा समग्रानुग्रहस्याकर्ता यदि वृथा स्वीक्रियते तदा गुरुमन्त्रपरित्यागीत्युक्तदोष इत्यर्थः ॥ **अनुज्ञा-भावेति** ॥ पूर्वप्राप्तगुरुसमः समग्रानुग्रहकर्ता यदि लभ्यते तदा पूर्वानुज्ञां विनैव तं परित्यज्य यदि सः स्वीक्रियते तदा गुरुमन्त्रपरित्यागीत्युक्तदोष इत्यर्थः ।

## वाक्यार्थमञ्जरी

यत्प्रसादः यस्य गुरोः प्रसादः अतो गुरुविचारस्य पादान्तर्भाव इति भावः । शुभं ज्ञानादिः, मन्त्रः उपदेशः ॥ **प्रागुक्तमिति** ॥ इतरे त्वर्थसामान्यादित्यत्रोक्तभाविफलानुसारेण सर्वज्ञगुरूप-दिष्टस्वयोग्यगुणोपासनमित्यर्थः ।

पूर्वविकल्पः पूर्वं परित्यज्यापरः स्वीकार्यो न वेति विकल्पः स्यात्, कथं क्रियामानसवत् मानसी चासौ क्रिया च क्रियामानसं ध्यानं, यथा फलतः समयोर्ध्यानयोर्विकल्पः ततः कुतः स्वीकार्यः प्रकरणात् प्रकर्षेण समग्रेणानुग्रहकरणान्निमित्तादित्यर्थः । अकारप्रश्लेषेणार्थान्तरमाह ॥ **समग्रानुग्रहकर्तेति** ॥ दोषवचनस्य गुरुमन्त्रेत्यादेः इति दर्शित इत्यन्वयः ।

## सूत्रभाष्यम्

### ॥ ॐ अतिदेशाच्च ॐ ॥ ४७ ॥

**'ब्रह्मोपास्व ब्रह्मोपचरस्व तच्छृणु हि तत्त्वामवतु । यथा ब्रह्मोपचरेर्यथा मामुपचरेर्ये चान्येऽस्मद्विधाः श्रेयसश्च तानुपास्व तानुपचरस्व तेभ्यः शृणुहि ते त्वामवन्त्विति पौष्यायणश्रुतावतिदेशाच्च ।**

## तत्त्वप्रदीपिका

**ब्रह्मोपास्तिस्वरूपमुक्तम् । उपचारः पूजादिः । आचार्येषूपासनं सविनयमन्ते स्थितिः । उपचारोऽभीष्टकरणादिः । आचार्यादन्यत्रापि तत्समोत्तमेषु शिष्यस्य वृत्त्यतिदेशाचोक्तार्थनिश्चयः ।**

## तत्त्वप्रकाशिका

**हेत्वन्तरेण समोत्तमगुरुस्वीकारं समर्थयत्सूत्रं पठित्वा व्याचष्टे ॥ अतिदेशाच्चेति ॥ पूर्वगुरुणैव समोत्तमगुरुस्वीकारायातिदिश्यमानत्वाद्युक्तमेतदिति भावः । श्रेयसः श्रेयांसः । अतः सर्वज्ञ-गुरुस्वीकारस्योपपन्नत्वात्तदुक्तप्रकारेणोपासनं कर्तव्यमिति सिद्धम् ।**

## भावबोधः

हेत्वन्तरेणेत्युक्तं को वा हेतुरनेनोक्त इत्यत आह– **पूर्वेति** । 'श्रेयसे' इत्यस्य 'तान्' इत्यनेनान्वयसम्भवेऽपि न चेतनत्वादिमात्रेणास्मद्विधाः किं तूपदेशोपयुक्तज्ञानादिगुणेन श्रेयांस इत्यर्थाधिक्यलाभाय विभक्तिव्यत्यासेन व्याख्याति– **श्रेयसः श्रेयांस** इति । अत्राद्ये– 'प्रकरणात्' इत्यनेन पश्चात्तनगुरुस्वीकारेऽन्तरङ्गहेतूक्तिः ॥ द्वितीये तत्रैव पूर्वगुरुणैव स्वसमोत्तमगुरु-स्वीकारायातिदिश्यमानत्वादिति बहिरङ्गहेतूक्तिरिति सूत्रक्रमः ।

## भावदीपः

इति श्रुतावतिदेशाच्चेति भाष्यं कांक्षितपूर्त्या व्याचष्टे ॥ **पूर्वेति** ॥ धर्माणामिति शेषः । आचार्येषूपासनं सविनयमन्ते स्थितिः । उपचारोऽभीष्टकरणादिरिति तत्वप्रदीप एव व्यक्तत्वा-द्व्यत्ययमात्रमाह ॥ **श्रेयस इति** ॥ **अत इति** ॥ समग्रानुग्रहार्थत्वाद्दोषवचनस्यान्यपरत्वादित्यर्थः ॥ **तदुक्तप्रकारेणोपासनमिति** ॥ इतरे त्वित्यत्रोक्तमुपासनमित्यर्थः ।

## वाक्यार्थमुक्तावली

पूर्वविकल्प इत्यनेनान्वयः ॥ **श्रेयसः श्रेयांस इति** ॥ यद्यपि ये चान्येऽस्मद्विधास्तान् श्रेयसश्चेत्यन्वयसम्भवान्न विभक्तिविपरिणामः कार्यः । तथापि द्वितीयस्य तावित्यस्योभयपरत्वम् । प्रथमस्यैकदेशपरामर्शकत्वम् । तान् श्रेयसश्चेति निर्देशाभावे इत्यालोच्यैवं गुर्वन्तरस्वीकारेऽन्त-रङ्गशिष्यापेक्षितसमग्रानुग्रहरूपहेतूक्तिः । द्वितीये बहिरङ्गगुर्वतिदेशोक्तिरिति सूत्रक्रमः ।

## तत्त्वसुबोधिनी

हेत्वन्तरेणेत्युक्तं तत्र को हेतुः अनेनोक्त इति तत्राह ॥ **पूर्वेति** ॥ श्रेयस इत्यस्य तानित्यनेनान्वयसम्भवेऽपि न चेतनत्वादिमात्रेणास्य द्विधा किंतूपदेशोपयुक्तज्ञानादिगुणेन श्रेयांस इत्यर्थाधिक्यलाभाय विभक्तिव्यत्यासेन व्याख्याति ॥ **श्रेयसः श्रेयांस इति** ॥ अत्राद्ये पश्चात्तनगुरुस्वीकारे अन्तरङ्गहेतूक्तिः । द्वितीये अतिदिश्यमानत्वादिति बहिरङ्गहेतूक्तिरिति सूत्रक्रमः ।

## वाक्यार्थविवरणम्

हेत्वन्तरं दर्शयति ॥ **पूर्वेति** ॥

## वाक्यार्थमञ्जरी

पूर्वगुरुणैव गुर्वन्तरस्वीकारस्यातिदेशादुपदेशाच्चेत्यर्थः । श्रेयस इत्यस्य तानित्यनेनान्वयसम्भवेऽपि न चेतनत्वमात्रेणास्मद्विधाः किन्तु उपदेशोपयुक्तज्ञानादिगुणेन श्रेयांस इत्यर्थाधिक्यलाभाय विभक्तिव्यत्यासेन व्याख्याति ॥ **श्रेयसः श्रेयांस इति** ॥

॥ इति **पूर्वविकल्पाधिकरणम्** ॥ २८ ॥

## २९. विद्याधिकरणम्

न च 'कर्मणैव हि संसिद्धिमास्थिता जनकादय' (भ.गी.३२०) इत्यादिनाऽन्यन्मोक्ष-साधनम् ।

**॥ ॐ विद्यैव तु निर्धारणात् ॐ ॥ ४८ ॥**

'तमेवं विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यते अयनाय' (श्वे.उ.३-८)इति निर्धारणाद्विद्ययैव मोक्षः ।

### तत्त्वप्रदीपिका

एवं तावदतिप्रयत्नेनापि गुरुं प्रतोष्य तदुपदिष्टमार्गेण श्रवणादिभिरेव ज्ञानं जायत इत्युक्तम् । तत्रेदमाशङ्क्यते, स्यादेतदेवं यदि ज्ञानस्य मोक्षसाधनत्वम् । न तु तदस्ति । 'कर्मणैव हि संसिद्धि-मास्थिता जनकादयः' इत्यादिना अन्यस्य मोक्षसाधनत्वात् । सत्योपाधिवन्धस्य ज्ञान-मात्रेणानपायाच्च । न हि वन्धूकसम्वन्धकृतं स्फटिकलौहित्यं स्वच्छः स्फटिक इति ज्ञानमात्रा-न्निवर्तते । ननु क एवमाह स्वच्छः स्फटिक इतिवच्छुद्धोऽहमिति ज्ञानमात्राद्वन्धनिवृत्तिरिति । ईश्वरज्ञानादेव हि विचक्षणा वन्धमोक्षमाचक्षते । अस्तु तर्हि ज्ञातेश्वरस्य वन्धकारणच्छेदनं कर्म मोक्षहेतुः । 'न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः' इत्यात्रापि त्यागेनैक इति वचनात् कर्मणैक इति भवति । 'अथाते विष्णोर्विदुषा चिदर्घ्यस्तोमो यज्ञश्च राध्यो हविष्मता'इति ज्ञानिनः कर्मविधानाच्चान्यदेवान्यदपि वा मोक्षसाधनमित्यत आह– **विद्यैव तु निर्धारणात् ॥** 'तमेव विदित्वा' इत्यन्यविद्यानिवारणात् 'नान्यः पन्था' इति साधनान्तरनिवारणाच्च । एवं निर्धारणात्–

'तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते ॥'

'न चेदिहावेदीन्महती विनष्टिः ।'

'यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः ।
तदा देवमविज्ञाय दुःखस्यान्तो भविष्यति' इत्यादेश्च भगवद्विद्ययैव मोक्षः ॥

## तत्त्वप्रकाशिका

**अत्रेश्वरदर्शनसाधनोपासनस्य कर्तव्यतासमर्थनादस्ति शास्त्रादिसङ्गतिः । अन्यथोक्तं व्यर्थं स्यादिति समर्थनीयमेतत् । प्रकृतं भगवदुपासनं विषयः । कर्तव्यं न वेति सन्देहः । द्विविध-क्रियादर्शनं सन्देहबीजम् । न भगवदुपासनं कर्तव्यमिति पूर्वः पक्षः । व्यर्थत्वात् । न च ज्ञानार्थ-मुपासनं तस्यापि वैय्यर्थ्यात् । न च मोक्षार्थं तदनिश्चयात् । यथा खलु 'तरति शोकमात्मवित्' इति ज्ञानस्य मोक्षसाधनत्वं प्रतीयते तथा 'कर्मणैव हि' इत्यादिना कर्मापि मोक्षसाधनं प्रतीयते । न च 'भाक्तं वानात्मवित्त्वात्' इत्युक्तमिति वाच्यम् । तृतीयायाः साक्षात्करणार्थत्वात् । संसिद्धि-पदेन च साक्षान्मोक्षाभिधानाच्च । अतो ज्ञानस्य मोक्षसाधनत्वानिश्चयान्न तदर्थोपासना कर्तव्येत्युक्तं व्यर्थमिति । पूर्वपक्षं प्रतिषेधति ।। न चेति ।। तदुपपादनाय सूत्रमुपन्यस्य व्याचष्टे ।। विद्येति ।। कर्मणैवेत्यादिनान्यन्मोक्षसाधनं प्रतीयत इति मोक्षसाधनानिर्णयादनुपासनमिति न वाच्यम् । 'नान्यः पन्थाः' इति सावधारणविद्यावचनस्य कर्मवचनादपि प्राबल्येन तद्बलाद्विद्यैव मोक्षसाधनमिति निर्णयोपपत्तेरिति भावः ।**

## गुर्वर्थदीपिका

नन्वपरोक्षज्ञानस्य मोक्षसाधनत्वप्रतिपादकं 'विद्यैव तु निर्धारणात्' इति सूत्रं चतुर्थपादस्यादौ निबन्धनीयम् । उपासनापादमध्ये कुतो निबबन्धेति चेत्सत्यम् । ज्ञानस्येष्टानिष्टप्राप्ति-परिहाररूपत्वाभावेन साक्षात्पुरुषार्थत्वाभावात्तदर्थं विहिते कष्टसाध्ये उपासने न निश्शङ्का प्रवृत्तिः स्यात् यावज्ज्ञानस्येष्टानिष्टप्राप्तिपरिहाररूपमोक्षसाधनता नोच्यते । अतः फलाशयाधिकारिणो निश्शङ्कतया प्रवर्तयितुं मध्ये ज्ञानफलनिरूपणस्य सार्थकत्वादिति ज्ञेयम् ।

## भावबोधः

**उपासनस्य कर्तव्यतासमर्थनादिति** ।। पूर्वाधिकरणे श्रवणादिना परोक्षज्ञानार्थं पूर्वप्राप्तगुरुं परित्यज्य समग्रानुग्रहकर्ता पश्चात्तनः सम उत्तमो वा मुमुक्षुणाऽवश्यं स्वीकार्य इत्युक्ते कर्मणा मोक्षस्य सम्भवात् निष्फलज्ञानार्थं गुरुस्वीकारो व्यर्थ इत्याक्षेपोत्थानादनन्तरसङ्गतिरिति भावः ।। **कर्तव्येत्यादि** ।। अत्र किं भगवदुपासनं कर्तव्यमुताकर्तव्यमिति चिन्ता । तदर्थमुपासनस्य

(भाववोधः)

ज्ञानद्वारा मोक्षसाधनत्वं न सम्भवत्युत सम्भवतीति । तदर्थं मोक्षस्य कर्मादिसाधनान्तरसाध्यत्वमुत ज्ञानैकसाध्यत्वमिति । ज्ञानैकसाध्यत्वेऽपि किं साधनस्यावश्यकत्वं नास्त्युतास्तीति । तदर्थं 'तमेव' इत्यादौ श्रुतो विद्याशब्दः ज्ञानसामान्यपर उतापरोक्षज्ञानरूपविशेषपर इति । विद्या कर्म वा संसारनिवृत्तिकारणमिति कारणानिर्णय इति न्यायविवरणानुसारेण 'कर्मणैव' इत्यादिभाष्यं व्याचष्टे– **यथा खल्वित्यादिना** ॥ भाष्ये 'अपाम सोमं' इति श्रुतिमनुदाहृत्य 'कर्मणा' इति श्रुत्युदाहरणं 'भाक्तं वा' इत्येनास्य गतार्थताशङ्कापरिहारायाभ्यधिकाशङ्का प्रदर्शनार्थमित्यभिप्रेत्य तमाह– **तृतीयाया इति** ॥ तथा च 'वा'शब्दज्ञापितः परंपराकारणत्वं न सम्भवतीत्यर्थः ॥ **संसिद्धपदेनेति** ॥ तथा च 'भाक्तं' इत्युक्तस्वर्गादिकारणत्वमपि न सम्भवतीत्यर्थः । 'नान्यः पन्था अयनाय विद्यते' इत्यवधारणाद्विद्यावचनस्य प्राधान्यादिति न्यायविवरणानुसारेण 'तमेवं इत्यादिभाष्यं व्याचष्टे– **नान्यः पन्था इति** ॥

## भावदीपः

**कर्तव्यतेति** ॥ कारणानिर्णयेनाकर्तव्यत्वप्राप्ताविति भावः । एवं चोक्तदिशाऽतिप्रयत्नेन गुरुं प्रतोष्य तदुपदिष्टमार्गेण श्रवणादिभिरेव ज्ञानं लभते । ततश्च मोक्षमिति प्रागुक्तमयुक्तम् । उपायान्तरस्यापि सम्भवेन ज्ञानस्यैव मोक्षोपायत्वानिर्णयादिति शङ्कनाद्वा पूर्वत्र विकल्पोक्तौ तर्हि साधनेऽपि अयं वाऽयं वेति विकल्प एव न निर्णय इति शङ्कनाद्वा पूर्वसङ्गतिरपि सूचिता ध्येया ॥ **उक्तमिति** ॥ गुरुप्रदानादिकमित्यर्थः ॥ **प्रकृतमिति** ॥ तदपीत्यनेन प्रकृतमित्यर्थः । यद्वाऽतिदेशा-च्चेत्यत्रोक्तश्रुतावित्यर्थः ॥ **द्विविधक्रियेति** ॥ अन्नादनविषभक्षणक्रिययोर्दर्शनमित्यर्थः । विद्या कर्म वा संसारनिवृत्तिकारणमिति कारणानिर्णय इति न्यायविवरणोक्तसौत्रैवकारव्यावर्त्यं कारणानिर्णय-हेतुं परंपरया योजयति ॥ व्यर्थत्वादित्यादिना ॥ **तदिति** ॥ ज्ञानमित्यर्थः ॥ **अनिश्चयादिति** ॥ ज्ञानस्य मोक्षार्थत्वानिश्चयादित्यर्थः । विद्या कर्म वेत्यन्यत्रोक्त्यनुरोधेन शेषोक्त्या भाष्यं व्याचष्टे ॥ **यथेति** ॥ वाक्यविशेषोक्तेः कृत्यं व्यनक्ति ॥ **न चेति** ॥ ज्ञानद्वारा परंपरया मोक्षकारण-मित्युक्तमित्यर्थः ॥ **करणेति** ॥ कर्तृकरणयोस्तृतीयेति विहितायाः कर्मणेति तृतीयायाः करणार्थत्वादित्यर्थः । एतेन श्रुतितः स्मृतिर्दुर्बला सती न निर्णयप्रतिबन्धिकेति प्रत्युक्तम् । स्मृतेर्भगवद्वाक्यत्वेन साक्षात्करणत्वार्थविभक्तियुक्ततया च श्रुतिसाम्योपपत्तेरिति भावः । एतेनैव

(भावदीपः)

वचनद्वयप्रामाण्यादाग्नेयादिषड्यागवत्समुच्चयोऽस्तु ज्ञानकर्मणोरित्यपि निरस्तम् । तृतीयया निरपेक्ष-करणत्वप्रतीतेः । अत एव व्रीहियववन्न विकल्पः । द्वयोर्नित्यवच्छ्रवणविरोधात् । पक्षे वाध-प्रसङ्गात् । तरतिवाक्येऽधिकारिभेदानुक्त्या कल्पकाभावेन व्यवस्थितविकल्पस्याप्ययोगादिति भावेन फलोक्त्योपसंहरति ॥ **अत इति** ॥ कर्मणोऽपि ज्ञानवन्मोक्षार्थत्वप्रतीतेरित्यर्थः । ज्ञानचिन्ता ज्ञानपादे सङ्गतेत्यतः शेषाक्तिपूर्वं सौत्रैवकारान्तविद्यापदव्यावर्त्योक्तिपरतया भाष्यं व्याचष्टे ॥ **कर्मणैवेति** ॥ अवधारणाद्विद्यावचनस्य प्राधान्यादिति न्यायविवरणं भाष्ये संयोज्य सूत्रारूढं दर्शयति ॥ **नान्य इति** ॥ भाष्ये विद्यते अयनायेत्युक्तम् । न्यायविवरणे चायनाय विद्यत इति । तथा च भेदेनोक्तवाक्यद्वयस्याप्युपादानाय नान्यः पन्था इति साधारणपूर्वभाग एवोपात्तः । विद्यैवेति परोक्षज्ञानम् ।

## अभिनवचन्द्रिका

**कर्तव्यतासमर्थनादिति** ॥ अर्थादिति शेषः । एतेन सूत्रस्य विद्यामोक्षसाधनत्वस्यैव प्रतिपादकत्वादुपासनस्य कर्तव्यतासमर्थनादित्ययुक्तमिति परास्तम् ॥ **भगवदुपासनमिति** ॥ यद्यपि अस्याधिकरणस्य विद्याविषयः, तथापि आर्थिकविचारे उपासनस्य विषयत्वात्तथोक्तम् । एवमुत्तरत्रापि द्रष्टव्यम् । **व्यर्थत्वादिति** ॥ सुखदुःखाऽवाप्तिहान्योरन्यतरहेतुत्वाभावादित्यर्थः । साक्षात्तद्धेतुत्वाभावेऽपि ज्ञानद्वारा तद्धेतुत्वमिति अनुष्ठेयमेवोपासनमित्याशङ्क्य निषेधति ॥ **न च ज्ञानार्थमिति** ॥ **तस्यापीति** ॥ ज्ञानस्यापि सुखदुःखावाप्तिहान्योरन्यतरहेतुत्वाभावादित्यर्थः । ज्ञानस्य मोक्षार्थत्वात् मोक्षस्य सुखरूपत्वात् असिद्धं ज्ञानवैयर्थ्यमित्यनुष्ठेयमेवोपासनमित्याशङ्क्य निषेधति ॥ **न च मोक्षार्थमिति** ॥ ज्ञानस्य मोक्षसाधनत्वात्, तत्साधनमुपासनं कार्यमिति नेत्यर्थः ॥ **तदनिश्चयादिति** ॥ अस्तु वैयर्थ्यमसिद्धम्, तथापि नोपासनं युज्यते । सफलत्वा-निर्णयात् । यद्यपि फलसन्देहादपि कृष्यादौ प्रवृत्तिर्दृश्यते तथापि बहुवित्तव्ययायाससाध्या पारत्रिकी प्रवृत्तिर्न तथा भवितुमर्हतीति भावः । एतेन असिद्धिं परिहरतः सन्दिग्धासिद्धिरापन्नेति परास्तम् । असिद्धिमङ्गीकृत्य प्रकारान्तरेण उपासनाकर्तव्यतानिषेधस्येहाभिमतत्वात् ।

## वाक्यार्थमुक्तावली

**अन्यथेति** ॥ ज्ञानवैय्यर्थ्येनोपासनाया अकर्तव्यत्वे उपासनायाः योग्यगुणोपदेशार्थमुक्तमुत्तमगुरुस्वीकरणं व्यर्थं स्यादित्यर्थः । अत एवानन्तरसङ्गतिरिति भावः ॥ **कर्तव्यमिति** ॥ भगवदुपासनं न कर्तव्यमुत कर्तव्यमिति चिन्ता । तदर्थमुपासनाजन्यस्य ज्ञानस्य मोक्षसाधनत्वं तरति शोकमात्मवित् इति श्रुत्युक्तं कर्मणैव हि संसिद्धिमित्यादिसत्प्रतिपक्षवचनविरुद्धं न वेति । अत्र कारणानिर्णय इति पूर्वपक्षन्यायप्रदर्शकत्वेन कर्मणैव हीत्यादि भाष्यं व्याकुर्वन्पूर्वपक्षमाह । **न भगवदुपासनमित्यादिना** ॥ **तदनिश्चयादिति** ॥ ज्ञानस्य मोक्षकारणत्वनिश्चायकप्रमाणाभावादित्यर्थः । 'तरति शोकमात्मवित्' इति निश्चायकं प्रमाणमस्तीत्यत आह ॥ **यथेति** ॥ **इत्यादिनेति** ॥ आदिपदेन 'त्यागेनैके अमृतत्वमानशुः' 'प्रयागमरणेन वा' इत्यादेर्ग्रहणम् ॥ **कर्मापीति** ॥ एतेनेत्यादिना अन्यन्मोक्षसाधनमिति भाष्ये न चेत्यत्रान्यश्चशब्दोऽन्वेति । तथा च ज्ञानादपीत्यर्थो लभ्यत इत्युक्तं भवति । भाष्ये 'अपाम सोमममृता अभूम' इति श्रुतिमनुसृत्य कर्मणेति श्रुत्युदाहरणं भाक्तं वेत्यन्तेनास्य गतार्थताशङ्कापरिहारायाभ्यधिकाशङ्काप्रदर्शनार्थमित्यभिप्रेत्य तामाह ॥ **तृतीयाया इति** ॥ कर्मणैवेति तृतीयाया इत्यर्थः । तथा च वाशब्दज्ञापितपरम्परया कारणत्वं न सम्भवतीत्यर्थः ॥ **साक्षान्मोक्षेति** ॥ लिङ्गभङ्गरूपेत्यर्थः ।

सूत्रे मोक्षसाधनमिति शेषः । तुशब्दः कर्मणैवेत्यतोऽपि 'नान्यः पन्थाः' इत्यस्य प्राबल्यसूचकः । **निर्धारणम्** अवधारणम् । निरवयोरुपसर्गमात्रत्वात् । नान्यः पन्थेत्यवधारणव्यावर्त्यकथनेन विदित्वैवेति लाभात् । यद्वा **निर्धारणं** नितरां धारणम् । निर्धारणमिति यावत् । यद्वा **निर्धारणं** निश्चयः । निर्णायकवचनादिति यावत् इत्यभिप्रेत्य प्राधान्यमित्युक्तन्यायप्रदर्शकत्वेन व्याख्याति ॥ **नान्यः पन्थेति** ॥

## तत्त्वसुबोधिनी

**उपासनस्य कर्तव्यतेति** ॥ पूर्वाधिकरणे श्रवणादिना परोक्षदर्शनार्थं पूर्वप्राप्तं गुरुं परित्यज्य समग्रानुग्रहकर्ता पश्चात्तनः स उत्तमो वा मुमुक्षुणाऽवश्यं स्वीकार्य इत्युक्ते कर्मणा मोक्षसम्भवान्निष्फलज्ञानार्थं गुरुस्वीकारो व्यर्थ इत्याक्षेपोत्थानादनन्तरसङ्गतिरिति भावः । **अन्यथोक्त**

(तत्त्वसुबोधिनी)

**व्यर्थमिति** ।। कर्तव्यता समर्थनाभावे उक्तं गुरुपरिग्रहादि व्यर्थं स्यादित्यर्थः ।। **तदनिश्चयादिति** ।। ज्ञानस्य मोक्षसाधनत्वानिश्चादित्यर्थः । कुतोऽनिश्चय इत्यत आह ।। **यथा खल्विति** ।। ननु भाक्तमित्यत्र कर्मणोऽन्तरशुद्धिद्वारा ज्ञानसाधनत्वमुक्तम् ।। **तथा इति** ।। कर्मणेत्यस्या इत्यर्थः । तथा च वाशब्दज्ञापितपरम्पराकारणत्वं न सम्भवतीत्यर्थः । तथापि मोक्षं प्रति कारणत्वं कुत इत्यत आह– **संसिद्धिपदेनेति** ।। अन्यथा संशब्दवैय्यर्थ्यं स्यादित्यर्थः । तथा च भाक्तमित्युक्त-परम्पराकारणत्वमपि सम्भवतीत्यर्थः ।

## वाक्यार्थविवरणम्

**उक्तम्** ।। गुणोपसंहारादिकम् । ननु वचनबलान्निश्चयः सम्भवतीत्यत आह ।। **यथा खल्विति** ।। **ध्यानोपासनं** ध्यानरूपोपासनम् । **विद्यया** श्रवणादिरूपपरोक्षज्ञानेन । **दर्शनात्** । अपरोक्षज्ञानात् ।

## वाक्यार्थमञ्जरी

उक्तं पादमारभ्य कुत इत्यतः कोट्यन्तरसद्भावादित्याह ।। **यथेति** ।। **भाक्तं वेति** ।। तत्र मोक्षं प्रति कर्मणः परम्परया हेतुत्वस्य साक्षादमुख्यामृतहेतुत्वस्य चोक्तत्वादिति भावः ।। ॐ **विद्यैव तु निर्धारणात् ॐ** ।। विद्यैव ब्रह्मविषयापरोक्षज्ञानमेव मोक्षहेतुर्न कर्म कुतः निर्धारणात् । 'नान्य' इत्यन्यनिषेधे न तस्यैव मोक्षहेतुत्वस्यानिर्धारितत्वादित्यर्थः ।। **कर्मवचनादपीति** ।। तत्रत्यैवकारस्यायोगव्यवच्छेदकत्वेन सावकाशत्वादिति भावः ।

## सूत्रभाष्यम्

**।। ॐ दर्शनाच्च ॐ ।। ४९ ।।**

**न केवलविद्यया किन्त्वपरोक्षज्ञानेनैव च । 'सर्वान्परो माययाऽयं सिनीते दृष्ट्वैव तं मुच्यते नापरेण' इति कौशिकश्रुतेः ।**

## तत्त्वप्रदीपिका

**सिनीते** बध्नाति । 'षिञ् बन्धन' इति धातोः । अयं परः सर्वोत्तमः सर्वान्मायया स्वेच्छया प्रकृत्या बध्नाति । अतस्तं दृष्ट्वैव मुच्यते । अन्यस्य मोचनशक्तस्याभावात् ॥

## तत्त्वप्रकाशिका

नन्वेवं विद्या चेन्मोक्षसाधनं तथापि न ध्यानोपासनं कार्यम् । विद्यायाः श्रवणादेव सम्भवादित्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे ॥ **दर्शनाच्चेति** ॥ नास्माभिरत्र केवलविद्यया मोक्ष उच्यते येन ध्यानाभाव आपद्येत किन्तु भगवत्साक्षात्कारादपि । अतस्तदर्थं ध्यानं कार्यमेवेति भावः । ननु 'एवं विद्वान्' इति परोक्षविद्यया मोक्षश्रवणात्कथमुच्यते दर्शनान्मोक्ष इति तत्राह ॥ **सर्वानिति** ॥ विशेषश्रुतिबलात्साऽपि श्रुतिस्तदर्थेति भावः । अनेन दर्शनादित्येतद्भगवत्साक्षात्कारात् श्रुतेरिति द्वेधा व्याख्यातं ज्ञातव्यम् । **मायया** प्रकृत्या । अतो ज्ञानस्य मुक्तिसाधनत्वनिश्चयात्तदर्थोपासनस्य कर्तव्यत्वादुक्तं सार्थकमिति सिद्धम् ।

## भावबोधः

**तदर्थेति** । अपरोक्षज्ञानार्थेत्यर्थः । अत्राद्ये मोक्षं प्रति विद्याया एव साधनत्वसमर्थनम् । द्वितीये 'तमेवं विद्वान्' इति श्रौतविद्याशब्दस्यापरोक्षज्ञानात्परत्वसमर्थनमिति ज्ञेयम् ।

## भावदीपः

**न ध्यानेति** ॥ तस्य दृष्ट्येकहेतुत्वस्य तन्निर्धारणेत्यत्र निर्णयादिति भावः । सौत्रचशब्दाद्यर्थोक्तिपरभाष्यं व्याचष्टे ॥ **नेति** ॥ **सापि** विद्वानिति श्रुतिरपि । तदर्था अपरोक्षज्ञानार्थेत्यर्थः । न च पश्यार्थैश्चानालोचने अपरोक्षदृशो मिथ्यादर्शनं न कचिद्भवेदित्यादिज्ञापकात्परोक्षज्ञानेऽपि दृशिरस्तीति कथं विशेषश्रुतित्वमस्याः श्रुतेरिति शङ्क्यम् । दृशेरपरोक्ष एव प्रसिद्धेरिति भावः । नन्वेवं विद्वानिति श्रुताविव सूत्रेऽपि विद्यापदं दृष्टिपरमेवेति दर्शनाच्चेत्यतिरिच्यत इत्यतस्तदा तस्याः श्रुतेश्चेत्यर्थपरत्वाददोष इति भावेनाह ॥ **अनेनेति** ॥ अपरोक्षज्ञानेनेति श्रुतिरिति च कथनेनेत्यर्थः । मायया सिनीते बध्नातीत्यत्र मायाशब्दार्थः प्रकृत्येति । सूत्रद्वयार्थं फलोक्त्योपसंहरति ॥ **अत इति** ॥ सावधारणतया विद्यावचनस्य प्राबल्यादित्यर्थः । ज्ञानस्य परोक्षस्यापरोक्षस्य चेत्यर्थः । उपासनस्य श्रवणादित्रयस्येत्यर्थः । अत्राद्यो योगः श्रवणमननयोः

(भावदीपः)
कर्तव्यत्वार्थोऽन्त्यो ध्यानस्येति योगद्वयमर्थवदिति व्यक्तम् । यदा तु विद्यापदस्य दृष्टिरर्थस्तदा श्रवणमननयोरर्थात्कर्तव्यत्वसिद्धिः । विद्वानिति श्रुतेः परोक्षार्थत्वस्याऽपि सम्भवात्कथं दृष्टेर्मुक्तिहेतुत्वोक्तिरिति शङ्का निरासायांत्ययोगोऽवतारितः ।

## अभिनवचन्द्रिका

'विद्यैव तु निर्धारणात्' इत्यत्र परोक्षज्ञानेनैवोक्तो मोक्ष इति मन्वानः शङ्कते- **नन्वेवमिति** ॥ विद्यायाः श्रवणादेव **सम्भवादिति** ॥ मननरूपविद्यायाः श्रवणादेव सम्भवादित्यर्थः । यद्यपि श्रवणं विद्यैव, तथापि उपासनाजनिता विद्या मोक्षसाधनमित्याग्रहानुसारेण श्रवणादेव सम्भवादित्युक्तम् । इत्याशङ्कां परिहरदिति । स्वाभिप्रायाविष्करणेन परिहरत्सूत्रमित्यर्थः ॥ **नास्माभिरिति** ॥ नास्माभिरपरोक्षज्ञानरहितया केवलविद्यया मोक्ष उच्यते । नाप्यपरोक्षज्ञानमात्रेण । रामकृष्णादिदर्शिनां सर्वेषां मोक्षप्रसङ्गात्, किं नाम श्रवणाद्युपासनारूपपरोक्षज्ञानजन्यापरोक्षज्ञानेन। अतो न ध्यानवैयर्थ्यमिति भावः । एतेन 'अपरोक्षज्ञानेनैव च' इति भाष्ये एवेति साधनान्तरस्य निषिद्धत्वात् टीकायाम् 'अपरोक्षज्ञानादापि' इति समुच्चयाभिधानमयुक्तमिति परास्तम् । अपरोक्षज्ञानसमकक्षस्वतन्त्रसाधनान्तरनिषेधेऽपि अपरोक्षज्ञानस्यैव मोक्षसाधनतासिध्यर्थं परोक्षज्ञानजन्यत्वरूपतत्साहित्यस्य मूलेऽप्याभिमतत्वात् । अत एव मूले 'अपरोक्षज्ञानेनैव च' इति च शब्दोऽप्युपपन्नो वेदितव्यः ।

पूर्वपक्षस्तु– न भगवदुपासनं कार्यं व्यर्थत्वात् । न च ज्ञानार्थमुपासनम् । तस्यापि व्यर्थत्वात् । न च मोक्षार्थं ज्ञानम् । ज्ञानस्य मोक्षसाधनत्वानिश्चयात् । यथा हि ज्ञानस्य मोक्षसाधनत्वं श्रूयते, तथा कर्मणोऽपि 'कर्मणैव हि' इत्यादिना मोक्षसाधनत्वं स्मर्यते । न च पुरुषार्थसाधनत्वसन्देहेऽपि कृष्यादाविव ज्ञानाय उपासनादौ प्रवृत्तिः सम्भवतीति वाच्यम् । अल्पवित्तव्ययायाससाध्ये तत्र तथा सम्भवेऽपि, बहुवित्तव्ययायाससाध्यपारत्रिकप्रवृत्तेः सन्देहमात्रेणायोगात् । ततो ज्ञानस्य मोक्षसाधनत्वानिर्णयात् न ज्ञानायोपासनं कार्यमिति ।

सिद्धान्तस्तु– कार्यमेव ज्ञानायोपासनम् । 'तमेवं विदित्वा' इति श्रुतेः, कर्मवचनादपि प्रावल्येन विद्ययैव मोक्ष इत्यवधारणसम्भवात् । नन्वेवं तर्हि ध्यानवैयर्थ्यम् । श्रवणेनैव मननरूपविद्यासम्भवात् । तावन्मात्रेण मोक्षसम्भवादिति चेत्, भ्रान्तोऽसि, न ह्यस्माभिः

(अभिनवचन्द्रिका)

परोक्षज्ञानेन मोक्ष उच्यते । येन मननेनैव कृतत्वात् ध्यानवैयर्थ्यं स्यात् । किं नाम उपासना-जनितेनापरोक्षज्ञानेन । न च 'तमेवं विदित्वा' इति सामान्यश्रुतिसद्भावात् ज्ञानमेव मोक्षसाधनं न त्वपरोक्षज्ञानमेवेति नियमः । नियामकाभावादिति वाच्यम् । 'दृष्ट्वैव तं मुच्यते नापरेण' इति श्रुतिबलेन साधारणश्रुतेरपि अपरोक्षज्ञानपरतया व्याख्येयत्वात् । अतो ज्ञानस्य मुक्तिसाधनत्वात् तदर्थमुपासनं कर्तव्यमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

मोक्ष इति योज्यम् ॥ **तदर्थेति** ॥ अपरोक्षज्ञानार्थ इत्यर्थः । **न चैवं विद्वानिति** । सहस्रशीर्षेत्युक्तप्रकारेण विद्वानिति श्रुतिजन्यपरोक्षज्ञानपरामर्शविरोधः । सहस्रशीर्षेत्यादिश्रुत्युक्त-रूपसाक्षात्कारकर्तेति तदर्थोपपत्तेः । यद्वा सापि श्रुतिः तदर्थ इत्यस्य तदर्थापीत्यर्थसम्भवादविरोधः ।

अत्राद्ये कर्मणो मोक्षसाधनत्वव्यवच्छेदेन द्वितीये केवलपरोक्षविद्यायाः मोक्षसाधनत्व-व्यवच्छेदेनापरोक्षस्य मोक्षहेतुत्वोक्तिरिति सूत्रक्रमः ।

## तत्त्वसुबोधिनी

**तदर्थेति** ॥ अपरोक्षज्ञानार्थेत्यर्थः ॥ **अनेनेति** ॥ विशेषश्रुतिकथनेनेत्यर्थः ॥ **द्वेधेति** ॥ न केवलं परोक्षज्ञानान्मोक्षः किन्तु दर्शनादपरोक्षज्ञानाच्चेत्यर्थः । किमत्र प्रमाणं इत्यतो उक्तम् ॥ **दर्शनादिति** ॥ श्रुतेरित्यर्थः । अत्राद्ये सूत्रे मोक्षं प्रति विद्यायाः साधनत्वसमर्थनं द्वितीये तमेवम् इत्यस्यापरोक्षज्ञानपरत्वसमर्थनमिति सूत्रक्रमः ।

## वाक्यार्थविवरणम्

**साऽपीति** ॥ तमेवमिति श्रुतिरपि अपरोक्षज्ञानपरेत्यर्थः ॥ **माययेति** ॥ योऽयं परो भगवान् मायया सर्वान् सिनीते । षीञ् बन्धने । बध्नाति संसारेण । तं दृष्ट्वेत्यर्थः ।

## वाक्यार्थमञ्जरी

भगवदपरोक्षज्ञानाच्च मोक्षो न परोक्षज्ञानमात्रादित्यर्थः ।

॥ इति विद्याधिकरणम् ॥ २९ ॥

(भावदीपः)

कर्तव्यत्वार्थोऽन्त्यो ध्यानस्येति योगद्वयमर्थवदिति व्यक्तम् । यदा तु विद्यापदस्य दृष्टिरर्थस्तदा श्रवणमननयोरर्थात्कर्तव्यत्वसिद्धिः । विद्वानिति श्रुतेः परोक्षार्थत्वस्याऽपि सम्भवात्कथं दृष्टेर्मुक्तिहेतुत्वोक्तिरिति शङ्कानिरासायांत्ययोगोऽवतारितः ।

## अभिनवचन्द्रिका

'विद्यैव तु निर्धारणात्' इत्यत्र परोक्षज्ञानेनैवोक्तो मोक्ष इति मन्वानः शङ्कते- **नन्वेवमिति** ॥ विद्यायाः श्रवणादेव **सम्भवादिति** ॥ मननरूपविद्यायाः श्रवणादेव सम्भवादित्यर्थः । यद्यपि श्रवणं विद्यैव, तथापि उपासनाजनिता विद्या मोक्षसाधनमित्याग्रहानुसारेण श्रवणादेव सम्भवादित्युक्तम् । इत्याशङ्कां परिहरदिति । स्वाभिप्रायाविष्करणेन परिहरत्सूत्रमित्यर्थः ॥ **नास्माभिरिति** ॥ नास्माभिरपरोक्षज्ञानरहितया केवलविद्यया मोक्ष उच्यते । नाप्यपरोक्षज्ञानमात्रेण । रामकृष्णादिदर्शिनां सर्वेषां मोक्षप्रसङ्गात्, किं नाम श्रवणाद्युपासनारूपपरोक्षज्ञानजन्यापरोक्षज्ञानेन। अतो न ध्यानवैयर्थ्यमिति भावः । एतेन 'अपरोक्षज्ञानेनैव च' इति भाष्ये एवेति साधनान्तरस्य निषिद्धत्वात् टीकायाम् 'अपरोक्षज्ञानादापि' इति समुच्चयाभिधानमयुक्तमिति परास्तम् । अपरोक्षज्ञानसमकक्षस्वतन्त्रसाधनान्तरनिषेधेऽपि अपरोक्षज्ञानस्यैव मोक्षसाधनतासिध्यर्थं परोक्षज्ञानजन्यत्वरूपतत्साहित्यस्य मूलेऽप्याभिमतत्वात् । अत एव मूले 'अपरोक्षज्ञानेनैव च' इति च शब्दोऽप्युपपन्नो वेदितव्यः ।

पूर्वपक्षस्तु– न भगवदुपासनं कार्यं व्यर्थत्वात् । न च ज्ञानार्थमुपासनम् । तस्यापि व्यर्थत्वात् । न च मोक्षार्थं ज्ञानम् । ज्ञानस्य मोक्षसाधनत्वानिश्चयात् । यथा हि ज्ञानस्य मोक्षसाधनत्वं श्रूयते, तथा कर्मणोऽपि 'कर्मणैव हि' इत्यादिना मोक्षसाधनत्वं स्मर्यते । न च पुरुषार्थसाधनत्वसन्देहेऽपि कृष्यादाविव ज्ञानाय उपासनादौ प्रवृत्तिः सम्भवतीति वाच्यम् । अल्पवित्तव्ययायाससाध्ये तत्र तथा सम्भवेऽपि, बहुवित्तव्ययायाससाध्यपारत्रिकप्रवृत्तेः सन्देहमात्रेणायोगात् । ततो ज्ञानस्य मोक्षसाधनत्वानिर्णयात् न ज्ञानायोपासनं कार्यमिति ।

सिद्धान्तस्तु– कार्यमेव ज्ञानायोपासनम् । 'तमेवं विदित्वा' इति श्रुतेः, कर्मवचनादपि प्राबल्येन विद्ययैव मोक्ष इत्यवधारणसम्भवात् । नन्वेवं तर्हि ध्यानवैयर्थ्यम् । श्रवणेनैव मननरूपविद्यासम्भवात् । तावन्मात्रेण मोक्षसम्भवादिति चेत्, भ्रान्तोऽसि, न ह्यस्माभिः

(अभिनवचन्द्रिका)

परोक्षज्ञानेन मोक्ष उच्यते । येन मननेनैव कृतत्वात् ध्यानवैयर्थ्यं स्यात् । किं नाम उपासना-जनितेनापरोक्षज्ञानेन । न च 'तमेवं विदित्वा' इति सामान्यश्रुतिसद्भावात् ज्ञानमेव मोक्षसाधनं न त्वपरोक्षज्ञानमेवेति नियमः । नियामकाभावादिति वाच्यम् । 'दृष्ट्वैव तं मुच्यते नापरेण' इति श्रुतिबलेन साधारणश्रुतेरपि अपरोक्षज्ञानपरतया व्याख्येयत्वात् । अतो ज्ञानस्य मुक्तिसाधनत्वात् तदर्थमुपासनं कर्तव्यमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

मोक्ष इति योज्यम् ॥ **तदर्थेति** ॥ अपरोक्षज्ञानार्थ इत्यर्थः । **न चैवं विद्वानिति** । सहस्रशीर्षेत्युक्तप्रकारेण विद्वानिति श्रुतिजन्यपरोक्षज्ञानपरामर्शविरोधः । सहस्रशीर्षेत्यादिश्रुत्युक्त-रूपसाक्षात्कारकर्तेति तदर्थोपपत्तेः । यद्वा सापि श्रुतिः तदर्थ इत्यस्य तदर्थापीत्यर्थसम्भवादविरोधः ।

अत्राद्ये कर्मणो मोक्षसाधनत्वव्यवच्छेदेन द्वितीये केवलपरोक्षविद्यायाः मोक्षसाधनत्व-व्यवच्छेदेनापरोक्षस्य मोक्षहेतुत्वोक्तिरिति सूत्रक्रमः ।

## तत्त्वसुबोधिनी

**तदर्थेति** ॥ अपरोक्षज्ञानार्थेत्यर्थः ॥ **अनेनेति** ॥ विशेषश्रुतिकथनेनेत्यर्थः ॥ **द्वेधेति** ॥ न केवलं परोक्षज्ञानान्मोक्षः किन्तु दर्शनादपरोक्षज्ञानाच्चेत्यर्थः । किमत्र प्रमाणं इत्यतो उक्तम् ॥ **दर्शनादिति** ॥ श्रुतेरित्यर्थः । अत्राद्ये सूत्रे मोक्षं प्रति विद्यायाः साधनत्वसमर्थनं द्वितीये तमेवम् इत्यस्यापरोक्षज्ञानपरत्वसमर्थनमिति सूत्रक्रमः ।

## वाक्यार्थविवरणम्

**साऽपीति** ॥ तमेवमिति श्रुतिरपि अपरोक्षज्ञानपरेत्यर्थः ॥ **माययेति** ॥ योऽयं परो भगवान् मायया सर्वान् सिनीते । षीञ् बन्धने । बध्नाति संसारेण । तं दृष्ट्वेत्यर्थः ।

## वाक्यार्थमञ्जरी

भगवदपरोक्षज्ञानाच्च मोक्षो न परोक्षज्ञानमात्रादित्यर्थः ।

॥ इति विद्याधिकरणम् ॥ २९ ॥

## ३०. अबाधाधिकरणम्

### सूत्रभाष्यम्

**॥ ॐ श्रुत्यादिबलीयस्त्वाच्च न बाधः ॐ ॥ ५० ॥**

सावधारणा बलवती श्रुतिः ।

'इन्द्रोऽश्वमेधांश्छतमिष्ट्वाऽपि राजा ।
ब्रह्माणमीड्यं समुवाचोपसन्नः ॥
न कर्मभिर्न धनैर्नैव चान्यैः ।
पश्येत्सुखं तेन तत्त्वं ब्रवीहि' इति बलवल्लिङ्गम् ॥

'नास्त्यकृतः कृतेन' (मुं.उ.१-२-१२) इत्युपपत्तिश्च ।

'कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते ।
तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिन' इति युक्तिमद्भगवद्वचनम् ॥

अतो न प्रमाणान्तरबाधः । 'कर्मणैव' (भ.गी.३-२०) इत्ययोगव्यवच्छेदः ॥

### तत्त्वप्रदीपिका

सावधारणा बलवती श्रुतिः । 'तमेव विदित्वा' इति 'दृष्ट्वैव तं मुच्यते नापरेण' इति च । 'परीक्ष्य लोकान्कर्मचितानि' इत्यादेरयमर्थः । कर्मणा सञ्चितान्मन्दिरादीन्विनाशिनः परितो वीक्ष्य तद्वत्परानपि कर्मभिश्चितान्लोकान्विनाशिन एव परीक्ष्य तेभ्यो निर्वेदमायात् ब्रह्मनिष्ठः । 'नास्त्यकृतः कृतेन' इति, अकृतप्रियो भगवान् कृतेन न लभ्यत इति । 'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रिय' इति भगवद्वचनम् । 'कर्मणात्वधमः प्रोक्तः' इत्यादि च । तस्य प्रियज्ञानस्य विष्णोर्विज्ञानार्थं स गुरुमेवाभिगच्छेदिति । कर्मणैवेत्ययोगव्यवच्छेदः । कर्म कृत्वैव नाकृत्वेत्यर्थः ।

'सहैव कर्मणा सिद्धिमास्थिता जनकादयः ।
ज्ञाननिष्ठा ततः कार्यं कर्माऽऽश्रमोचितम्' इति भगवद्वचनम् ॥

स्वदृष्ट्या प्रसन्न ईश्वरः सर्वशक्तिर्बन्धान्मोचयतीत्यत्र न कश्चिद्दोषः । प्रमाणं च–

(तत्त्वप्रदीपिका)

'न तादृशी प्रीतिरीड्यस्य विष्णोर्गुणोत्कर्षज्ञातरि यादृशी स्यात् ।

तत्प्रीणनान्मोक्षमाप्नोति सर्व' इत्यादिकं नैकम् । 'त्यागेनैक' इत्यत्रापि त्यागेनामृतत्वमानशुः, ते कियन्त इत्याकाङ्क्षायां केचिदेवेत्यर्थः । 'मनुष्यणां सहस्रेषु कश्चित्'इत्यादिवत् । त्यागपूर्वक-ज्ञानेनेत्यभिप्रायः । 'वेदान्तविज्ञानसुनिश्चितार्थाः परिमुच्यन्ति सर्वे' इति वाक्यशेषात् । 'विदुषा चिदर्ध्य' इत्यादेस्तु ज्ञानिनाऽपि कर्म कर्तव्यं मोक्षे सुखाधिक्यायेत्यर्थः । न समुच्चयोऽर्थः । वक्ष्यति चैतदुत्तरपादे । भाक्तं वेत्यादौ कर्मणा मोक्षप्रतिषेधो गत्यादिनिरूपणाप्रसङ्गप्राप्तः । अत्रायं स्वतन्त्रविचारः ।

## तत्त्वप्रकाशिका

अत्र यत्साधनं भगवदुपास्तिस्तस्य ज्ञानस्य मोक्षसाधनत्वसमर्थनादस्ति शास्त्रादिसङ्गतिः । अन्यथोपासनवैयर्थ्यापातादेतत्समर्थनीयम् । प्रकृतो मोक्ष एव विषयः । किं ज्ञानसाध्य उत कर्मसाध्य इति सन्देहः । विप्रतिपत्तिः सन्देहबीजम् । कर्मसाध्य एव मोक्ष इति पूर्वः पक्षः । कर्मणैवेति वचनात् । न च वाच्यं विद्यावचनस्य सावधारणत्वेन प्राबल्यात्तद्विरोधः स्मृतेरिति । स्मृतेरपि सावधारणत्वात् । न चैतावता साम्यम् । भगवद्वाक्यत्वेन प्राबल्यात् । एतेन श्रुतिस्मृत्योः श्रुतिर्बलवती तदपेक्षत्वात्स्मृतेरिति चापहसितं भवति । अतो ज्ञानस्य मोक्षसाधनत्वाभावान्न तदर्थोपासना कर्तव्येति । सिद्धान्तयत्सूत्रं पठित्वा व्याचष्टे ॥ **श्रुतीति** ॥ मोक्षो ज्ञानसाध्य एव । न चैवं प्रमाणान्तरबाधः । ज्ञानस्य मोक्षसाधनत्वोपपादकबलवच्छ्रुत्यादिसद्भावात् । **तथा हि** । मोक्षस्य मानसाध्यत्वे 'तमेवम्' इत्यादिश्रुतिः स्मृतेर्बलवती । निरवकाशावधारणयुक्तत्वात् । तथा बहुकर्मकृतोऽपीन्द्रस्य दुःखासंभिन्नसुखरूपमोक्षार्थं तत्त्वज्ञानप्रार्थनलिङ्गं च बलवत् । निरवकाश-त्वात् । उत्पत्तिनाशवत्फलत्वेनावधृतकर्मणा नित्यपुरुषार्थो न भवतीत्युपपत्तिश्च बलवती । दूषणशून्यत्वात् श्रौतत्वाच्च । तथा 'कर्मणा बध्यते जन्तुः' इति वचनं च बलवत् । भगवद्वाक्यत्वेन साम्याद्युक्तिमत्त्वेनाधिक्यात् । यत एवं मोक्षस्य ज्ञानसाधनत्वे प्रत्येकं बलवच्छ्रुत्यादिभावोऽतो विद्यैव मोक्षसाधनमित्यस्य न स्मृतिबाध इति भावः । नन्वेवं चेत्सा स्मृतिरप्रमाणमेवेति प्राप्तमित्यतश्च शब्दसूचितार्थमाह ॥ **कर्मणेति** ॥ क्रियत इति शेषः । कर्मयोगश्च मोक्षातिशयार्थ इति ज्ञातव्यम् । अतो ज्ञानस्यैव मोक्षसाधनत्वात्कर्तव्योपासनेति सिद्धम् ।

## गुर्वर्थदीपिका

यद्यपि कर्मणैवेत्यत्रैवकारः स्पष्टं श्रूयते तथाऽपि 'पाठक्रमादर्थक्रमो ज्यायान्' इति न्यायेन कर्मणा संसिद्धिमास्थिता एवेत्यपि योजनासम्भवेन नासौ निरवकाशः । 'तमेवं विद्वान्' इति श्रुतिस्तु तं परमात्मानमेवं सहस्रशीर्षत्वाद्याकारेण विद्वानमृतो मुक्तो भवति । अयनाय मोक्षायान्यः पन्था न विद्यत इति सावकाशमेवकारं विहाय साक्षात्तदर्थभूतमन्ययोगव्यवच्छेदं विविच्य वाक्य-मर्यादयैवाह । अतोऽयोगव्यवच्छेदात्यन्तायोगव्यवच्छेदरूपार्थयोरनवकाशेन निरवकाशत्वात्सैव बलवतीति भावेनोक्तं भाष्ये सावधारणा बलवती श्रुतिरिति । निरवकाशावधारणयुक्तेत्यर्थः । अतो बलवती स्मृतितोऽपि बलवती ।

## भावबोधः

अधिकरणस्य पादान्तर्भावज्ञापनार्थमाह– **यत्साधनमिति** ॥ पूर्वाधिकरणे 'तमेवं' इत्यादिश्रुतेः सावधारणत्वेन प्राबल्यमित्युक्ते तर्हि 'कर्मणैव' इति स्मृतेरपि सावधारणत्वेन भगवद्वाक्यत्वेन च प्राबल्यान्न विद्याया मोक्षसाधनत्वमित्याक्षेपोत्थानादनन्तरसङ्गतिरिति भावः । **कर्मेत्यादि** ॥ अत्र मोक्षः किं कर्मसाध्य उत ज्ञानसाध्य इति चिन्ता । तदर्थं 'तमेवं' इति विद्यावचनं 'कर्मणैव' इति कर्मवचनेन बाध्यमुताबाध्यमिति । तदर्थं विद्यावचनस्य कर्मवचनात् प्राबल्यं नास्त्युतास्तीति । तदर्थं विद्यावचनस्य प्राबल्यनियामकं कर्मणैवेति कर्मवचनगतावधारणस्य सावकाशत्वं नास्त्युतास्तीति । 'विद्यावचनस्य प्राधान्यं भ्रम' इति न्यायविवरणं मनसि निधाय पूर्वपक्षमाह– **कर्मसाध्य एवेत्यादिना** । विद्याकर्मवचनयोः साम्योक्त्या विद्यावचनप्राधान्यभ्रमं उपपाद्य कर्मवचनस्य प्राबल्येनापि तमुपपादयति– **न चैतावतेति** ॥ **श्रुतिस्मृत्योरिति** ॥ 'विरोधे त्वनपेक्षं स्यादसति ह्यनुमानं' इति जैमिनिसूत्रादित्यर्थः ।

ननु कर्मवचनस्यापि सावधारणत्वात् सावधारणा बलवती श्रुतिरित्ययुक्तमित्यत आह– **निरवकाशेति** ॥ तस्य तु सावकाशत्वं वक्ष्यत इति भावः ॥ **युक्तिमत्वेनेति** ॥ कर्मणो मोक्षसाधनत्वाभावसाधक 'तस्मात्' इत्युक्तमुमुक्षुक्रियमाणत्वरूपयुक्तिप्रतिपादकत्वेनेत्यर्थः । यद्वा, 'कर्मणा बध्यते' इत्युक्तबन्धकत्वरूपयुक्तिमत्त्वेनेत्यर्थः । उपलक्षणमेतत्–

'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ॥'

इति भगवतस्तस्मिन्नेवाधिकप्रीतिवचनात् ।

'यमेवैष वृणुते तेन लभ्यः'

इति तत्प्रीतेरेव मोक्षवचनाच्चेति न्यायविवरणोक्तमपि ग्राह्यम् । नन्वेवं तर्हि जनकादयः कर्मणा सहैव संसिद्धिं मुक्तिं गता इत्यर्थः स्यात् । तथा चोत्पन्नापरोक्षज्ञानिनां तेषां किं कर्मयोग-व्यवच्छेदेनेत्यत आह– **कर्मयोगश्चेति** ॥

## भावदीपः

ज्ञानचिन्ता चतुर्थपादे सङ्गतेत्यत आह ॥ **यत्साधनमिति** ॥ तथा च यत्प्रागुपास्तेर्ज्ञानद्वारा मुक्तिहेतुफलकत्वोक्त्या कर्तव्यत्वमुक्तं तदेवेह मुक्तेः कर्मजत्वस्मृतेः प्राबल्यहेतूनाऽऽक्षिप्य समाधीयत इत्येतत्पादान्तर्भावः । पूर्वानन्तर्यं चास्य नयस्येति भावः ॥ **प्रकृत इति** ॥ विद्यासाध्य-त्वेन पूर्वप्रकृत इत्यर्थः । अत्र यद्यपि तमेवेति श्रुतिः कर्मणैव हीति स्मृतिबाधिता न वेत्येव चिन्ताप्रदर्शनायात्र सूत्रे न बाध इत्येवोक्तेस्तथाऽपि विद्यैवेत्यत्रोक्तमेवैतच्चिन्ताफलमिति द्योतनाय न च कर्मणैव हीत्यादिपूर्वभाष्यमेव हृदि कृत्वा संशयधर्माद्युक्तिरिति ध्येयम् । विप्रतिपत्तिर्वादि-विप्रतिपत्तिरित्यर्थः । पूर्वेणागतार्थत्वाय कर्मणैवेत्ययोगव्यवच्छेद इत्येवकारगत्युक्तिपरभाष्य-सूचितयुक्तिं व्यावर्त्यपूर्वमाह ॥ **न च वाच्यमिति** ॥ भाष्ये न प्रमाणान्तरबाध इत्युक्तिसूचितयुक्तिं व्यावर्त्यपूर्वं व्यनक्ति ॥ **न चैतावतेति** ॥ **एतेनेति** ॥ स्मृतेर्भगवद्वाक्यत्वकथनेनेत्यर्थः ॥ **तदपेक्षत्वादिति** ॥ धर्मस्य शब्दमूलत्वादशब्दमनपेक्षं स्यादिति पूर्वतन्त्रस्थस्मृत्यधिकरणे स्मृतेः श्रुतिमूलकत्वेनैव प्रामाण्योक्तेरिति भावः ॥ **अपहसितमिति** ॥ यदि वयं स्मृतेः श्रुतिमूलत्वेन प्रामाण्यं ब्रूमस्तदोपजीव्यमूलश्रुतिविरोधात् विरोधे त्वनपेक्षं स्यादिति जैमिनीयविरोधाधिकरणोक्त-न्यायेन स्मृतिरमानं स्यात् । न चैवम् । भगवत्प्रत्यक्षमूलत्वेन श्रुत्यनपेक्षत्वादिति भावः । एतेन वचनस्य प्राधान्यभ्रम इति न्यायविवरणे भ्रमत्वोक्तिरुपपादिता ध्येया ॥ **अत इति** ॥ विद्यावचनस्य कर्मवचनबाधितत्वादित्यर्थः ॥ **तदर्थेति** ॥ ज्ञानार्थेत्यर्थः । विद्ययैव मोक्ष इति पूर्वभाष्यमनुवृत्त्यार्थ-माह ॥ **मोक्ष इति** ॥ अतो न प्रमाणान्तरबाध इति भाष्यस्थप्रतिज्ञाहेतू व्याचष्टे ॥ **न चैवमिति** ॥

## गुर्वर्थदीपिका

यद्यपि **कर्मणैवेत्यत्रैवकारः स्पष्टं श्रूयते** तथाऽपि 'पाठक्रमादर्थक्रमो ज्यायान्' इति न्यायेन कर्मणा संसिद्धिमास्थिता एवेत्यपि योजनासम्भवेन नासौ निरवकाशः । 'तमेवं विद्वान्' इति श्रुतिस्तु तं परमात्मानमेवं सहस्रशीर्षत्वाद्याकारेण विद्वानमृतो मुक्तो भवति । अयनाय मोक्षायान्यः पन्था न विद्यत इति सावकाशमेवकारं विहाय साक्षात्तदर्थभूतमन्ययोगव्यवच्छेदं विविच्य वाक्य-मर्यादयैवाह । अतोऽयोगव्यवच्छेदात्यन्तायोगव्यवच्छेदरूपार्थयोरनवकाशेन निरवकाशत्वात्सैव बलवतीति भावेनोक्तं भाष्ये सावधारणा बलवती श्रुतिरिति । निरवकाशावधारणयुक्तेत्यर्थः । अतो बलवती स्मृतितोऽपि बलवती ।

## भावबोधः

अधिकरणस्य पादान्तर्भावज्ञापनार्थमाह– **यत्साधनमिति** ॥ पूर्वाधिकरणे 'तमेवं' इत्यादिश्रुतेः सावधारणत्वेन प्राबल्यमित्युक्ते तर्हि 'कर्मणैव' इति स्मृतेरपि सावधारणत्वेन भगवद्वाक्यत्वेन च प्राबल्यान्न विद्याया मोक्षसाधनत्वमित्याक्षेपोत्थानादनन्तरसङ्गतिरिति भावः । **कर्मेत्यादि** ॥ अत्र मोक्षः किं कर्मसाध्य उत ज्ञानसाध्य इति चिन्ता । तदर्थं 'तमेवं' इति विद्यावचनं 'कर्मणैव' इति कर्मवचनेन बाध्यमुताबाध्यमिति । तदर्थं विद्यावचनस्य कर्मवचनात् प्राबल्यं नास्त्युतास्तीति । तदर्थं विद्यावचनस्य प्राबल्यनियामकं कर्मणैवेति कर्मवचनगतावधारणस्य सावकाशत्वं नास्त्युतास्तीति । 'विद्यावचनस्य प्राधान्यं भ्रम' इति न्यायविवरणं मनसि निधाय पूर्वपक्षमाह– **कर्मसाध्य एवेत्यादिना** । विद्याकर्मवचनयोः साम्योक्त्या विद्यावचनप्राधान्यभ्रमं उपपाद्य कर्मवचनस्य प्राबल्येनापि तमुपपादयति– **न चैतावतेति** ॥ **श्रुतिस्मृत्योरिति** ॥ 'विरोधे त्वनपेक्षं स्यादसति ह्यनुमानं' इति जैमिनिसूत्रादित्यर्थः ।

ननु कर्मवचनस्यापि सावधारणत्वात् सावधारणा बलवती श्रुतिरित्ययुक्तमित्यत आह– **निरवकाशेति** ॥ तस्य तु सावकाशत्वं वक्ष्यत इति भावः ॥ **युक्तिमत्वेनेति** ॥ कर्मणो मोक्षसाधनत्वाभावसाधक 'तस्मात्' इत्युक्तमुमुक्ष्वक्रियमाणत्वरूपयुक्तिप्रतिपादकत्वेनेत्यर्थः । यद्वा, 'कर्मणा बध्यते' इत्युक्तबन्धकत्वरूपयुक्तिमत्त्वेनेत्यर्थः । उपलक्षणमेतत्–

'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ॥'

इति भगवतस्तस्मिन्नेवाधिकप्रीतिवचनात् ।

'यमेवैष वृणुते तेन लभ्यः'

इति तत्प्रीतेरेव मोक्षवचनाच्चेति न्यायविवरणोक्तमपि ग्राह्यम् । नन्वेवं तर्हि जनकादयः कर्मणा सहैव संसिद्धिं मुक्तिं गता इत्यर्थः स्यात् । तथा चोत्पन्नापरोक्षज्ञानिनां तेषां किं कर्मयोग-व्यवच्छेदेनेत्यत आह– **कर्मयोगश्चेति ॥**

## भावदीपः

ज्ञानचिन्ता चतुर्थपादे सङ्गतेत्यत आह ॥ **यत्साधनमिति** ॥ तथा च यत्प्रागुपास्तेर्ज्ञानद्वारा मुक्तिहेतुफलकत्वोक्त्या कर्तव्यत्वमुक्तं तदेवेह मुक्तेः कर्मजत्वस्मृतेः प्राबल्यहेतूनाऽऽक्षिप्य समाधीयत इत्येतत्पादान्तर्भावः । पूर्वानन्तर्यं चास्य नयस्येति भावः ॥ **प्रकृत इति** ॥ विद्यासाध्य-त्वेन पूर्वप्रकृत इत्यर्थः । अत्र यद्यपि तमेवेति श्रुतिः कर्मणैव हीति स्मृतिबाधिता न वेत्येव चिन्ताप्रदर्शनायात्र सूत्रे न बाध इत्येवोक्तेस्तथाऽपि विद्यैवेत्यत्रोक्तमेवैतच्चिन्ताफलमिति द्योतनाय न च कर्मणैव हीत्यादिपूर्वभाष्यमेव हृदि कृत्वा संशयधर्माद्युक्तिरिति ध्येयम् । विप्रतिपत्तिर्वादि-विप्रतिपत्तिरित्यर्थः । पूर्वेणागतार्थत्वाय कर्मणैवेत्ययोगव्यवच्छेद इत्येवकारगत्युक्तिपरभाष्य-सूचितयुक्तिं व्यावर्त्यपूर्वमाह ॥ **न च वाच्यमिति** ॥ भाष्ये न प्रमाणान्तरबाध इत्युक्तिसूचितयुक्तिं व्यावर्त्यपूर्वं व्यनक्ति ॥ **न चैतावतेति** ॥ **एतेनेति** ॥ **स्मृतेर्भगवद्वाक्यत्वकथनेनेत्यर्थः** ॥ **तदपेक्षत्वादिति** ॥ धर्मस्य शब्दमूलत्वादशब्दमनपेक्षं स्यादिति पूर्वतन्त्रस्थस्मृत्यधिकरणे स्मृतेः श्रुतिमूलकत्वेनैव प्रामाण्योक्तेरिति भावः ॥ **अपहसितमिति** ॥ यदि वयं स्मृतेः श्रुतिमूलत्वेन प्रामाण्यं ब्रूमस्तदोपजीव्यमूलश्रुतिविरोधात् विरोधे त्वनपेक्षं स्यादिति जैमिनीयविरोधाधिकरणोक्त-न्यायेन स्मृतिरमानं स्यात् । न चैवम् । भगवत्प्रत्यक्षमूलत्वेन श्रुत्यनपेक्षत्वादिति भावः । एतेन वचनस्य प्राधान्यभ्रम इति न्यायविवरणे भ्रमत्वोक्तिरुपपादिता ध्येया ॥ **अत इति** ॥ विद्यावचनस्य कर्मवचनबाधितत्वादित्यर्थः ॥ **तदर्थेति** ॥ ज्ञानार्थेत्यर्थः । विद्ययैव मोक्ष इति पूर्वभाष्यमनुवृत्त्यार्ध-माह ॥ **मोक्ष इति** ॥ अतो न प्रमाणान्तरबाध इति भाष्यस्थप्रतिज्ञाहेतू व्याचष्टे ॥ **न चैवमिति** ॥

(भावदीपः)

अत इत्युक्तहेतूपपादकत्वेन सावधारणेत्यादिपूर्वभाष्यं व्याचष्टे ॥ **तथा हीत्यादिना** ॥ स्मृतेरिति पञ्चमी ॥ **निरवकाशेति** ॥ नान्यः पन्था इत्यस्यैवकारवदवकाशान्तराभावादिति भावः ॥ **युक्तिमत्त्वेनेति** ॥ बन्धकत्वमोचकत्वाननुष्ठेयत्वाख्ययुक्तिमत्त्वेनेत्यर्थः । अत इत्यादिभाष्यं योजयति ॥ **यत इति** ॥ प्राप्तं तर्हि ज्ञानसमकक्षत्वमित्यत आह ॥ **कर्मेति** ॥ कर्म कृत्वैवेति कर्मयोगव्यवच्छेदरूपकर्मयोगश्चेत्यर्थः ॥ **मोक्षातिशयेति** ॥ पुरुषार्थनये तथा वक्ष्यमाणत्वादिति भावः । 'ब्रह्मज्ञानेन वा मुक्तिः प्रयागमरणेन वा' इत्यादि तु पापादिमुक्तिः स्तुतिपरता चेत्यादितृतीयगीताभाष्योक्तदिशा सावकाशम् ॥ **अत इति** ॥ श्रुत्यादिबलीयस्त्वेन विद्यावचनस्य कर्मवचनबाधाभावादित्यर्थः ।

## अभिनवचन्द्रिका

**शास्त्रादिसङ्गतिरिति** ॥ उपासनासाध्यविचारस्यापि उपासनासम्बन्धित्वात् पादान्तर्भावोऽप्यस्तीति भावः । ननु इदं सूत्रं पूर्वाधिकरणशेष एव नाऽधिकरणान्तरम् । पूर्वाधिकरणोक्तदर्शनस्य मोक्षहेतुत्वे बाधपरिहारात् । नापि किञ्चित्साध्यं प्रतिज्ञायते नापि भाष्यकारीयम् । अस्य सूत्रस्य अधिकरणान्तरत्वे ज्ञापकं पश्यामः । ततश्च पूर्वाधिकरणशेषत्वादस्य सूत्रस्य सङ्गत्यादिनिरूपणमयुक्तमिति चेत्, सत्यम् । इदं सूत्रं पूर्वाधिकरणशेष एव । नाधिकरणान्तरम् । तथापि इदमधिकरणम् आर्थिकार्थविवक्षया वाचनिकार्थविवक्षया च प्रवृत्तमिति 'कारणानिर्णयो भ्रमः' इति पूर्वपक्षभेदकयुक्तिद्वयं, तथा 'प्राधान्यं, प्रीतिः' इति सिद्धान्तभेदकयुक्तिद्वयं च, वदताऽनुव्याख्यानकृता सूचनात्, तदनुसारेण द्वेधा व्याख्यातमित्यदोषः । अनुव्याख्या कृता न तु सर्वेष्वप्यधिकरणेषु यावानार्थिकोऽर्थः स सर्वोऽपि विवक्षित इति ज्ञापनाय इदमधिकरणम् आर्थिकार्थपरतया, वाचनिकार्थपरतया च, प्रवृत्तमिति सूचनं कृतम् । इयांस्तु विशेषः । आद्यव्याख्याने चरमसूत्रं न व्याख्यातमित्येव, परं तु बाधकपरिहाराय इदं सूत्रं तत्रापि योजनीयम् । द्वितीयव्याख्याने तु आद्यं सूत्रद्वयं प्रागेव व्याख्यातमिति न व्याख्यातमित्येव । परं तु इहापि सूत्रद्वयं टीकाकृतो विवक्षितम् । अत एव प्राक् उपासनस्य कर्तव्यतासमर्थनादित्युक्तम् । इह तु ज्ञानस्य मोक्षसाधनत्वसमर्थनादित्युक्तम् । अन्यथा प्रागेव ज्ञानस्य मोक्षसाधनत्वसमर्थनादित्यवक्ष्यदिति ।

(अभिनवचन्द्रिका)

**प्रकृतो मोक्ष एव विषय इति** ॥ यद्यपि ज्ञानस्य मोक्षसाधनत्वसमर्थनादिति स्वयमेवाभिधानात् ज्ञानमेव विषयः, मोक्षसाधनं न वेति सन्देह इत्यादि वक्तव्यम्, न तु मोक्ष एव विषय इत्यादि, तथापि अस्याधिकरणस्य मोक्षसाधनत्वमिव मोक्षस्य ज्ञानसाध्यत्वमपि प्रमेयमिति । तथोक्तम् **अवधारणयुक्तत्वादिति** ॥ अवधारणसमानार्थक 'नान्यः पन्था' इति शब्दयुक्तत्वादित्यर्थः । एतेन 'तमेवम्' इति श्रुतौ अवधारणाश्रवणात् निरवकाशावधारणयुक्तत्वादित्ययुक्तमिति परास्तम् । ज्ञानस्यैव मोक्षसाधनत्वे कर्मयोगो व्यर्थ इत्यत आह **कर्मयोगश्चेति** ॥

पूर्वपक्षस्तु– कर्मसाध्य एव मोक्षः । 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः' इति वचनात् । श्रुतिस्मृत्योः सावधारणत्वेऽपि भगवद्वाक्यत्वेन स्मृतेरेव बलवत्वात् । ततश्च श्रुतेः स्मृतिबाधितत्वेन ज्ञानस्य मोक्षसाधनत्वाभावात् न तदर्थमुपासनं कार्यमिति ।

## वाक्यार्थमुक्तावली

पूर्वाधिकरणे तमेवमित्यादिश्रुतेः सावधारणत्वे प्राबल्यमित्युक्ते तर्हि कर्मणैव संसिद्धिमिति स्मृतेः सावधारणत्वेन भगवद्वाक्यत्वेन च प्राबल्यात् विद्यावचनस्य तद्बाध इत्याक्षेपोत्थानादनन्तर-सङ्गतिः । यद्यप्यस्य पूर्वशेषत्वेनाधिकरणान्तरत्वमयुक्तम् । तथापि पृथङ्न्यायसूचकत्वात् पृथगधि-करणत्वं न्यायमालायां दर्शितमिति टीकायामधिकरणान्तरं कृतं बोध्यम् ॥ **किमिति** ॥ अत्र मोक्षः कर्मसाध्य उत ज्ञानसाध्य इति चिन्ता । तदर्थं स्मृतेः प्राबल्यमुत श्रुत्यादीनाम् । सूत्रे बाधपदेन विद्यावचनस्य प्राधान्यप्रतीतेः भ्रमत्वे स्मृतिबाधरूपयुक्त्यभिधानात् सूचितं भ्रम इत्युक्तन्यायं व्यञ्जयितुमाह ॥ **स्मृतेरपीति** ॥ **एतेनेति** ॥ सर्वज्ञतमभगवत्प्रत्यक्षमूलत्वेन श्रुतिनिरपेक्षत्वेनेत्यर्थः ।

सूत्रे विद्यैव मोक्षसाधनमित्यस्येति योज्यम् । न बाधः न स्मृतिबाधः । कुतः? श्रुत्यादीनां चतुर्णां बलीयस्त्वात् निरवकाशत्वादिनातिप्रबलत्वात् । चशब्दात्परकीयस्मृतेः सावकाशत्वेन दुर्बलत्वाच्चेत्यर्थं विवक्षित्वा व्याचष्टे । **मोक्ष इत्यादिना** ॥ **दुःखासम्भिन्नेति** । दुःखे सत्यपि सुखं न पश्ये इत्युक्त्या दुःखासमानाधिकरणसुखं (न) लभ्यत इति भावः । निरवकाशत्वादिति । मोक्षसाधनत्वं विना तदर्थप्रार्थितत्वस्य गत्यन्तराभावादिति भावः । यद्यपि न कर्मभिरिति वचनात् आगमविधय एव कर्मणो मोक्षहेतुत्वे प्रमाणम् । तथापि ज्ञानं न मोक्षहेतुरित्युक्तत्वात् तत्वज्ञान-

(वाक्यार्थमुक्तावली)

प्रार्थनं ज्ञानं मोक्षसाधनं तदर्थं प्रार्थ्यमानत्वात् । यद्यदर्थं प्रार्थ्यते तत्तत्साधनम् । यथा कर्म स्वर्गस्येति ज्ञानस्य मोक्षसाधनत्वे लिङ्गमिति भावः ॥ **श्रौतत्वाच्चेति** ॥ कर्म न नित्यपुरुषार्थसाधकं तद्विरुद्धफलकत्वात् । यद्यद्विरुद्धफलकं न तत्तत्साधनम् । यथा पापं स्वर्गस्येति भावेनाकृतो मोक्षः कृतेनोत्पत्तिनाशवत्फलकेन कर्मणा नास्ति । तत्तस्य मोक्षस्य तस्मात् कार्यत्वे सत्यन्यासाध्यत्वात् तत्साधनविज्ञानार्थं गुरुमेवाभिगच्छेदिति मोक्षो ज्ञानैकसाध्य इत्यत्रोपपत्तेः । श्रुतावेवोक्तत्वादित्यर्थः । यद्यपि मोक्षार्थं तत्वज्ञानप्रार्थनलिङ्गमपि श्रौतम् । तथापि मोक्षार्थं तत्वज्ञानप्रार्थनात् तत्वज्ञानं मोक्षफलकमित्यश्रवणात् निरवकाशत्वादित्येवोक्तम् । अनेनैव विशेषणेन लिङ्गमुपपत्तिरिति च द्वेधोक्तिः ॥ **युक्तिमत्वेनेति** ॥ कर्मणा बध्यत इत्युक्तकर्मणः बन्धकत्वरूपयुक्तिमत्वेनेत्यर्थः । यद्वा तस्मात् कर्म न कुर्वन्तीत्युक्तमुमुक्षवक्रियमाणत्वरूपयुक्तिमत्वेनेत्यर्थः । 'विद्ययैव विमुच्यत' इत्यनेन विद्याभावे न मुच्यते तया विना मोचकप्रसादाभावात् प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः । इति ज्ञानिप्रियत्ववचनात् । 'यमेवैष वृणुते तेन लभ्यः' इति तत्प्रतीतेरेव मोक्षवचनाच्चेति सूचितप्रीतिरित्युक्तयुक्तिमत्वेनेत्यर्थः । नन्वेवं तर्हि जनकादयः कर्मणा सह कर्म कुर्वन्त एव मुक्तिं गता इत्यर्थः स्यात् । न चासौ युक्तः । अपरोक्षज्ञानिनां तेषां कर्म विनापि मोक्षसम्भवेन तद्वैय्यर्थ्येन तदयोगव्यवच्छेदायोगादित्यत आह ॥ **कर्मयोगश्चेति** ॥

## तत्त्वसुबोधिनी

अधिकरणस्य पादान्तर्भावज्ञापनार्थं **तत्साधनमिति** । पूर्वाधिकरणे तमेवमित्यादिश्रुतेः सावधारणत्वेन प्राबल्यमित्युक्ते तर्हि कर्मणैवेति स्मृतेरपि सावधारणत्वेन भगवद्वाक्यत्वेन प्राबल्यात् न विद्यायाः मोक्षसाधनत्वमित्याक्षेपोत्थानादनन्तरसङ्गतिरिति भावः ॥ **विप्रतिपत्तिरिति** ॥ कर्मसाध्यो मोक्षः ज्ञानसाध्य इति विरुद्धवाक्यजन्यविप्रतिपत्तिरित्यर्थः । विद्याकर्मवचनयोः साम्योक्त्या विद्यावचनस्याप्राबल्यभ्रममुपपाद्य कर्मवचनप्राबल्येनापि तमुपपादयति ॥ **न चैतावतेति** ॥ **एतेनेति** ॥ भगवद्वाक्यत्वेन प्राबल्यकथनेनेत्यर्थः ॥ **श्रुतिस्मृत्योरिति** ॥ विरोधेत्वनपेक्षं स्यादसति ह्यनुमानमिति जैमिनिसूत्रादित्यर्थः । ननु कर्मवचनस्यापि सावधारणत्वात् सावधारणा बलवती श्रुतिरित्युक्तमित्यत आह ॥ **निरवकाशेति** ॥ तस्य तु सावकाशत्वं वक्ष्यते इति भावः ॥ **उत्पत्तिनाशवदिति** ॥ एवं च कृतेन उत्पत्तिनाशवत् फलवता कर्मणा अकृतनित्यपुरुषार्थो नेत्यर्थ

(तत्त्वसुबोधिनी)

इति स्मृतियोजना सूचिता ॥ **युक्तिमत्वेनेति** ॥ कर्मणो मोक्षसाधनत्वाभावसाधकः तस्मादित्युक्त-मुमुक्षुसाधनमिति महान् भेदः । **तथा भक्त्येति** ॥ अहं तत्वतः यावान् यस्मिन् एवं भूतं मां भक्त्या पुमान् तत्वतः अभिजानाति ततः अनन्तरं मां तत्वतः ज्ञात्वा मां विशते इत्यर्थः । नन्वस्य वचनस्य असर्वाधिकार्यविशेषविषयत्वात् कथमेकप्रकारत्वं ज्ञानस्येत्यत आह ॥ **सामान्य-वचनत्वादेवेति** ॥ सौत्रश्चशब्दः पृथुत्त्वस्यानुकर्षणार्थ इत्यभिप्रेत्य प्रवृत्तं तद्दर्शनभेद इति भाष्यं व्याचष्टे ॥ **अनेकप्रकारमेवेति** ॥ नन्वत्र प्रज्ञान्तरमित्यर्थत्वे उपासनारूपज्ञानविषयस्यालाभात् । ज्ञानमात्रस्य अपरोक्षज्ञानहेतुत्वाभावाच्च । तद्वैचित्र्ये कारणवैचित्र्यरूपहेतुर्न प्रदर्शितः स्यात् । प्रज्ञाशब्दस्यैव उपासनापरत्वे प्रज्ञापृथुत्त्ववदित्येतावता पूर्तेरन्तरशब्दो व्यर्थः स्यादित्यतः तद्व्याचष्टे– **प्रज्ञान्तरं प्रज्ञाविशेष इति** ॥ अनेनोपासनाभेदवदिति भाष्येण प्रज्ञान्तरमित्यस्य प्रज्ञाविशेषस्य उपासनस्य पृथुत्त्ववद्भेदवदिति सौत्रपदं व्याख्यातमित्युक्तं भवति ।

ननु भाष्ये उपासनं नाम ध्यानं विवक्षितं तस्यैव अपरोक्षज्ञानसाधनत्वात् । ध्यानं च न ज्ञानं किन्तु मानसीक्रिया । यथोक्तं **क्रियामानसवदिति** ॥ तथा च प्रज्ञान्तरशब्दस्य प्रज्ञाविशेषपरत्वेऽपि कथमुपासनापदेन तद्व्याख्यानमित्यत आह ॥ **अवच्छिन्नेति** ॥ तथा च न ध्यानं परिस्पन्दात्मिका मानसक्रिया तथात्वे अतीन्द्रियाश्रितक्रियायाः अतीन्द्रियत्वेन अपरोक्षावभासविरोधात् । क्रियायाः रूपरहितत्वेन ध्यानरूपावभासविरोधाच्चेति भावः । न च ध्यानस्य परोक्षज्ञानरूपत्वं लिङ्गशब्दा-जन्यत्वात् । श्रवणादिजनितमानसवासनामयस्य वस्तुनो मनसाऽवलोकनं ध्यानमित्यंगीकारादिति वाच्यम् । अत्र ध्यानस्य परोक्षज्ञानजन्यसंस्कारमयपदार्थविषयकत्वेन परोक्षत्वव्यवहारात् । न चैवं क्रियामानसवदिति सूत्रविरोधः । तस्य धात्वर्थक्रियावाचित्वात् । यद्वा ध्यानस्य वासनामयपदार्थ-विषयकत्वेनापरोक्षरूपत्वेऽपि तस्य परोक्षविषयकत्वाभावे नैष्फल्यप्रसङ्गात्तद्विषयत्वमावश्यकम् । तथा च ध्यानस्य परमात्मविषयकत्वे परोक्षरूपत्वायोगेन ज्ञातः परमाणुरित्यादिवदुपनीत-भानत्वाभ्युपगमे उपासनस्य परोक्षत्वात्परोक्षव्यवहारः । शङ्कते । योग्यतैव कथं ज्ञायते इति ॥ **परिहरति** ॥ आचार्य आचक्षत इति । **विशेषवलादिति** । विशेषवाक्यबलादित्यर्थः । तर्हि यावानिति वाक्यस्य का गतिरित्यत आह ॥ **यावानिति** ॥

## वाक्यार्थविवरणम्

**साम्यम्** ॥ ज्ञानसाध्यत्वकर्मसाध्यत्ववचनयोरुभयोरपि सावधारणत्वेन साम्यमित्यर्थः ॥ **भगवदिति** ॥ कर्मणैवेति गीतावचनस्य कृष्णवाक्यत्वेनेत्यर्थः ॥ **एतेनेति** ॥ भगवद्वाक्यत्वेन कर्मणेति स्मृतेः प्राबल्यकथनेनेत्यर्थः ॥ **बलवती** ॥ मूलप्रमाणनैरपेक्ष्यादिति भावः ॥ **तदपेक्षत्वात्** ॥ मूलप्रमाणसापेक्षत्वात् । सापेक्षनिरपेक्षयोश्च निरपेक्षस्य स्वीकार्यत्वादिति भावः ॥ **बहुकर्मकृत इति** ॥ 'अश्वमेधाञ्छतमिष्ट्वा' इत्युक्तत्वादिति ध्येयम् ॥ **शतम्** ॥ शतसङ्ख्याकान् अश्वमेधान् इत्यर्थः । अत एव स शतक्रतुरिति ध्येयम् । कृतेनेत्यस्यार्थः **उत्पत्त्यादीति** । अकृत इत्यस्यार्थो नित्यपुरुषार्थ इति मोक्ष इत्यर्थः ॥ **साम्यात्** ॥ कर्मणैवेति स्मृतिवचनेनेत्यर्थः । न केवलं साम्यमपि तर्हि कर्मणा बध्यते इति भगवद्वचनमेव मुमुक्ष्वक्रियमाणत्वबन्धकत्वयुक्तियुक्तत्वेन बलवत्त्वेनाधिकमेवेत्याशयेनाह ॥ **युक्तीति** ॥ **स्मृतिः** ॥ कर्मणैवेति स्मृतिः ।

## वाक्यार्थमञ्जरी

**न चैतावतेति** ॥ तथा च न कर्मपक्षपातो युक्त इति भावः ॥ **अपहस्तितमिति** ॥ स्मृतेः स्वतःसर्वज्ञभगवत्प्रत्यक्षमूलत्वेन श्रुत्यनपेक्षणादिति भावः ।

ॐ श्रुत्यादिबलीयस्त्वाच्च न बाधः ॐ । ज्ञानस्य मोक्षहेतुत्वोक्तौ न बाधः नोक्तस्मृतिबाधः । कुतः श्रुत्या बलीयस्त्वात्, तथा प्रतिपादकानां श्रुतिलिङ्गयुक्तिस्मृतीनां बलवत्त्वादित्यर्थः ॥ **असंभिन्नेति** ॥ अमिश्रेत्यर्थः । कृतशब्दार्थ **उत्पत्त्यादीति** । अकृत इत्यस्य नित्यपुरुषार्थेति ॥ **युक्तिमत्त्वेनेति** ॥ कर्मणो बन्धकत्वरूपयुक्तिमत्त्वेनेत्यर्थः ॥ **अतिशयार्थेति** ॥ न तु मोक्षार्थः येन ज्ञानकर्मसमुच्चयसाध्यत्वं मोक्षस्येति भावः ।

**॥ इति अबाधाधिकरणम् ॥ ३० ॥**

## ३१. अनुवन्धाद्यधिकरणम्

### सूत्रभाष्यम्

**॥ ॐ अनुबन्धादिभ्यः(श्च) ॐ ॥ ५१ ॥**

न केवलं श्रवणादिभिर्गुरुप्रसादेन च ब्रह्मदर्शनम् । किन्तु भक्त्यादिभिश्च ।

'सर्वलक्षणसम्पन्नः सर्वज्ञो विष्णुतत्परः ।
यद्गुरुः सुप्रसन्नः सन् दद्यात्तन्नान्यथा भवेत् ॥
तथाऽप्यनादिसंसिद्धो भक्त्यादिगुणपूगतः ।
लभेद्गुरुप्रसादं च तस्मादेव च तद्भवेत्' इति ॥

'भक्तिर्विष्णौ गुरौ चैव गुरोर्नित्यप्रसन्नताम् ।
दद्याच्छमदमादींश्च तेन चैते गुणाः पुनः ॥
तैस्सर्वैर्दर्शनं विष्णोः श्रवणादिकृतं भवेत्' इति च नारायणतन्त्रे ॥

### तत्त्वप्रदीपिका

अम्बुवदग्रहणादित्युक्तोऽपि भक्तेः प्रधानसाधनत्वज्ञापनार्थः साधनान्तरोपसङ्ग्रहार्थश्च पुनरारम्भः ।

'भक्त्या ज्ञानान्निपिद्धानां त्यागान्नित्यहरिस्मृतेः ।
अरागाद्विहितात्यागादित्येतैरैव संयुतैः ।
अपरोक्षदर्शनं विष्णोर्जायते नान्यथा क्वचित्'इति सत्तत्वे ॥

### तत्त्वप्रकाशिका

अत्र ब्रह्मज्ञानसाधनोपासनस्य भक्तिपूर्वकत्वसमर्थनादस्ति शास्त्रादिसङ्गतिः । अन्यथोक्तवैयर्थ्य-प्रसङ्गात्समर्थनीयम् । प्रकृतं ज्ञानमेव विषयः । किं भगवद्भक्त्यादिसापेक्षं न वेति सन्देहः । ज्ञान-साधनेष्वनुक्तिरुभयथा सम्भवतीति सन्देहवीजम् । न भक्त्यादिकं ज्ञानार्थमपेक्षितमिति पूर्वः पक्षः । गुरुप्रसादासाध्यस्यैवाभावात् । 'सम्यग्लक्षणसम्पन्नो यद्दद्यात्सुप्रसन्नधीः । शिष्याय सत्यं भवति तत्सर्वं नात्र संशयः' इति वचनात् । न चैवमुपासनाभावः । ज्ञानस्य तदन्वयव्यतिरेकदर्शनात् ।

## वाक्यार्थविवरणम्

**साम्यम्** ॥ ज्ञानसाध्यत्वकर्मसाध्यत्ववचनयोरुभयोरपि सावधारणत्वेन साम्यमित्यर्थः ॥ **भगवदिति** ॥ कर्मणैवेति गीतावचनस्य कृष्णवाक्यत्वेनेत्यर्थः ॥ **एतेनेति** ॥ भगवद्वाक्यत्वेन कर्मणेति स्मृतेः प्राबल्यकथनेनेत्यर्थः ॥ **बलवती** ॥ मूलप्रमाणनैरपेक्ष्यादिति भावः ॥ **तदपेक्षत्वात्** ॥ मूलप्रमाणसापेक्षत्वात् । सापेक्षनिरपेक्षयोश्च निरपेक्षस्य स्वीकार्यत्वादिति भावः ॥ **बहुकर्मकृत इति** ॥ 'अश्वमेधाञ्छतमिष्ट्वा' इत्युक्तत्वादिति ध्येयम् ॥ **शतम्** ॥ शतसङ्ख्याकान् अश्वमेधान् इत्यर्थः । अत एव स शतक्रतुरिति ध्येयम् । कृतेनेत्यस्यार्थः **उत्पत्त्यादीति** । अकृत इत्यस्यार्थो नित्यपुरुषार्थ इति मोक्ष इत्यर्थः ॥ **साम्यात्** ॥ कर्मणैवेति स्मृतिवचनेनेत्यर्थः । न केवलं साम्यमपि तर्हि कर्मणा बध्यते इति भगवद्वचनमेव मुमुक्ष्वक्रियमाणत्वबन्धकत्वयुक्तियुक्तत्वेन बलवत्त्वेनाधिकमेवेत्याशयेनाह ॥ **युक्तीति** ॥ **स्मृतिः** ॥ कर्मणैवेति स्मृतिः ।

## वाक्यार्थमञ्जरी

**न चैतावतेति** ॥ तथा च न कर्मपक्षपातो युक्त इति भावः ॥ **अपहस्तितमिति** ॥ स्मृतेः स्वतःसर्वज्ञभगवत्प्रत्यक्षमूलत्वेन श्रुत्यनपेक्षणादिति भावः ।

ॐ श्रुत्यादिबलीयस्त्वाच्च न बाधः ॐ । ज्ञानस्य मोक्षहेतुत्वोक्तौ न बाधः नोक्तस्मृतिबाधः । कुतः श्रुत्या बलीयस्त्वात्, तथा प्रतिपादकानां श्रुतिलिङ्गयुक्तिस्मृतीनां बलवत्त्वादित्यर्थः ॥ **असंभिन्नेति** ॥ अमिश्रेत्यर्थः । कृतशब्दार्थ **उत्पत्त्यादीति** । अकृत इत्यस्य नित्यपुरुषार्थेति ॥ **युक्तिमत्त्वेनेति** ॥ कर्मणो बन्धकत्वरूपयुक्तिमत्त्वेनेत्यर्थः ॥ **अतिशयार्थेति** ॥ न तु मोक्षार्थः येन ज्ञानकर्मसमुच्चयसाध्यत्वं मोक्षस्येति भावः ।

॥ इति अबाधाधिकरणम् ॥ ३० ॥

## ३१. अनुबन्धाद्यधिकरणम्

### सूत्रभाष्यम्

**॥ ॐ अनुबन्धादिभ्यः(श्च) ॐ ॥ ५१ ॥**

न केवलं श्रवणादिभिर्गुरुप्रसादेन च ब्रह्मदर्शनम् । किन्तु भक्त्यादिभिश्च ।

'सर्वलक्षणसम्पन्नः सर्वज्ञो विष्णुतत्परः ।
यद्गुरुः सुप्रसन्नः सन् दद्यात्तन्नान्यथा भवेत् ॥
तथाऽप्यनादिसंसिद्धो भक्त्यादिगुणपूगतः ।
लभेद्गुरुप्रसादं च तस्मादेव च तद्भवेत्' इति ॥

'भक्तिर्विष्णौ गुरौ चैव गुरोर्नित्यप्रसन्नताम् ।
दद्याच्छमदमादींश्च तेन चैते गुणाः पुनः ॥
तैस्सर्वैर्दर्शनं विष्णोः श्रवणादिकृतं भवेत्' इति च नारायणतन्त्रे ॥

### तत्त्वप्रदीपिका

अम्बुवदग्रहणादित्युक्तोऽपि भक्तेः प्रधानसाधनत्वज्ञापनार्थः साधनान्तरोपसङ्ग्रहार्थश्च पुनरारम्भः ।

'भक्त्या ज्ञानान्निषिद्धानां त्यागान्नित्यहरिस्मृतेः ।
अरागाद्विहितात्यागादित्येतैरेव संयुतैः ।
अपरोक्षदर्शनं विष्णोर्जायते नान्यथा क्वचित्'इति सत्तत्वे ॥

### तत्त्वप्रकाशिका

अत्र ब्रह्मज्ञानसाधनोपासनस्य भक्तिपूर्वकत्वसमर्थनादस्ति शास्त्रादिसङ्गतिः । अन्यथोक्तवैयर्थ्यप्रसङ्गात्समर्थनीयम् । प्रकृतं ज्ञानमेव विषयः । किं भगवद्भक्त्यादिसापेक्षं न वेति सन्देहः । ज्ञानसाधनेष्वनुक्तिरुभयथा सम्भवतीति सन्देहबीजम् । न भक्त्यादिकं ज्ञानार्थमपेक्षितमिति पूर्वः पक्षः । गुरुप्रसादासाध्यस्यैवाभावात् । 'सम्यग्लक्षणसम्पन्नो यद्दद्यात्सुप्रसन्नधीः । शिष्याय सत्यं भवति तत्सर्वं नात्र संशयः' इति वचनात् । न चैवमुपासनाभावः । ज्ञानस्य तदन्वयव्यतिरेकदर्शनात् ।

(तत्त्वप्रकाशिका)

**न चोपासनं भक्तिमन्तरेण न भवतीति वाच्यम् । द्वेषेणापि ध्यानसम्भवात् । स्मर्यते खलु द्वेषेण ध्यायतामपि मुक्तिः 'द्वेषाच्चैद्यादयो नृपाः' इत्यादि । मुक्तिश्च न ज्ञानं विनेत्युक्तम् । अतो गुरुप्रसादसहितोपासनेन यथाकथञ्चिज्ज्ञानोपपत्तेर्व्यर्थं भक्त्यादीत्यतीतपादानुपपत्तिरिति । सिद्धान्त-यत्सूत्रमुपन्यस्य व्याचष्टे ॥ अनुबन्धेति ॥** न केवलं श्रवणादिना प्रबलेनाऽपि गुरुप्रसादेन भगवद्दर्शनं **किं तु हरिगुरुभक्तिशमदमादिभिश्च । प्राबल्येऽपि गुरुप्रसादस्य भक्त्यादिकं विनाऽसिद्धेः । तद्विना ध्यानासिद्धेश्च । द्वेषयुतध्यानस्यानर्थहेतुत्वेन श्रुतिस्मृत्यादिसिद्धत्वात् । वचनान्तराणां स्वभाव-भक्तविषयत्वादिति भावः । 'अनुबन्धस्तु भक्तिः स्याद्बन्धः स्नेह उदाहृतः' इत्यभिधानम् । अत्रार्थे नियामिकां स्मृतिमाह ॥ सर्वेति ॥ तथाऽपि भक्त्याद्यपेक्षितमिति शेषः । तर्हि भक्त्याधिकं न ज्ञानार्थमित्यत आह ॥ तस्मादिति ॥ यदनादिसिद्धमव्यक्तं भक्त्यादि तेन गुरुप्रसादस्तेन भक्त्याद्यभिव्यक्तिरभिव्यक्तभक्त्यादिना च ज्ञानमित्यर्थः । एतदेव स्पष्टयति ॥ भक्तिरिति ॥** अतो **भक्त्यादेर्ज्ञानार्थमपेक्षितत्वादुक्तं युक्तमिति सिद्धम् ।**

## गुर्वर्थदीपिका

अन्यथोक्तवैयर्थ्यप्रसङ्गादित्यत्रोक्तो भक्तिपाद इत्यर्थः । इत्यभिधानमिति वदता **अनु** स्वानुकूलतया बध्नाति बद्धमिव वशयति स्वप्रभुमित्यनुबन्धः स्नेह इति व्युत्पत्तिस्सूचिता । तेन च स्वप्रभोरनुकूलीकरणशक्तिर्भक्तेरस्तीति लभ्यते । अतोऽल्पाक्षरत्वलाभेऽपि भक्तिपदं विहायानुबन्ध-पदं गृहीतम् । अत एव 'स्नेहानुबन्धो बन्धूनां मुनेरपि सुदुस्त्यज' इति भागवतम् । स्नेहरूपोऽनु-बन्धः स्नेहानुबन्धः । तथाऽपि भक्त्याद्यपेक्षितमिति शेष इत्यत्र तथापीति पदानन्तरं भक्त्या-द्यपेक्षितमिति शेष इत्यर्थः । **तथाऽपि** गुरुप्रसादस्य बलवत्त्वेऽपि यतोऽनादिसंसिद्धभक्त्यादि-गुणपूगत एव तं गुरुप्रसादं लभेन्नान्यथा । अतो भक्त्यादिगुणपूगोऽप्यपेक्षित इति यत्तत्पदाध्याहारेण यथास्थितैव योजना द्रष्टव्या । आदिपदेन शमदमादिकं गृह्यते । अस्यैव तात्पर्यं **भक्त्याद्य-पेक्षितमिति** ॥ सर्वज्ञगुरुत्वादविद्ययाऽऽवृतामपि भक्तिं ज्ञात्वाऽनुगृह्णातीति भावेनोक्तमव्यक्तं भक्त्यादीति । 'भक्तिर्विष्णौ' इति श्रुतेः गुरौ हरौ च या भक्तिः स्वरूपभूता यच्च शमदमादिः तत्सर्वं गुरोः प्रसन्नतां दद्यात् । तेन प्रसन्नगुरुणैते गुणाः पुनः स्पष्टा भवन्ति । तैस्सर्वैः भक्त्यादिगुणैः **श्रवणादिकृतं** श्रवणादिसाधनैः कृतं दर्शनं भवेदिति योजना । भक्त्यादिगुणसहित-श्रवणादिकमेव ज्ञानसाधनम् । न तु तद्रहितमिति भावः ।

## भावबोधः

**भक्तिपूर्वकत्वसमर्थनादिति** । पूर्वाधिकरणे ज्ञानस्य मोक्षं प्रत्यावश्यकसाधनत्वेऽभिहिते तर्हि तस्य ज्ञानस्य द्वेषयुतध्यानेनापि सम्भवाद्भक्तेर्वैयर्थ्यमित्याक्षेपोत्थानादनन्तरसङ्गतिरिति भावः ॥ **किं भगवदिति** ॥ अत्र किं ज्ञानं भक्त्यादिसापेक्षं न भवत्युत भवतीति चिन्ता । तदर्थं द्वेषयुतध्यानमपरोक्षज्ञानसाधनं भवत्युत न भवतीति । तदर्थं 'द्वेषाच्चैद्यादय' इत्यादिवाक्यानि किं निरवकाशान्युत सावकाशानीति । तदर्थं ज्ञानस्य भक्त्यैकसाध्यत्वे प्रमाणं नास्त्युतास्तीति । न केवलं श्रवणादिभिर्गुरुप्रसादेन चेति भाष्यानुरोधेन पूर्वपक्षमाह– **न भक्त्यादिकमिति** ॥ **तदन्वयव्यतिरेकेति** ॥ **प्रमितेः** प्रमाणफलत्वादिति भावः । **कस्यचिद्विशेषज्ञानोपपत्तेः** भक्त्यादिकं विना मुक्तिरिति न्यायविवरणं तन्निवर्तनीयाशङ्कानिरासपूर्वकं योजयति– **न चोपासनमिति** ॥ 'भक्तिर्विष्णौ गुरौ चैव' 'दद्याच्छमदमादींश्च' इति स्मृत्यनुसारेण सूत्रभाष्यगत 'आदि'पदार्थमाह– **हरिगुर्विति** ॥ 'भक्त्यादिगुणपूगतः' 'लभेद्गुरुप्रसादं च' इति स्मृत्यनुसारेणाह– **प्राबल्येऽपीति** ॥ गुरुप्रसादस्येत्यस्य पूर्वोत्तरेण च सम्बन्धः । **ध्यानासिद्धेश्चेति** ॥ भक्तिं विनाऽऽदरनैरन्तर्याभ्यां चित्तवृत्त्यनुपपत्तेरित्यर्थः ।

'इत्यादिश्रुतिसन्दर्भात् द्वेषिणस्तम ईयते'
'इत्यादिवाक्यसन्दोहात् द्वेषिणस्तम एव तु'

इत्यनुव्याख्यानं मनसि निधायाह– **द्वेषयुतध्यानस्येति** ॥ भक्तप्रियत्वज्ञापनार्थमिति गीताभाष्यम् ।

'स्मर्तव्यो भगवान्नित्यमित्यर्थेनैव हि क्वचित्' ।

'द्वेषादिव गुणानाह' इत्यनुव्याख्यानं मनसि निधायाह– **वचनान्तराणामिति** ॥ **तस्मादेव** गुरुप्रसादादेव तच्च भक्त्यादिकं भवेत् । विद्यमानस्य भवनायोगादभिव्यक्तं भवेत् । तस्मादभिव्यक्तभक्त्यादेरेव तदपरोक्षज्ञानं च भवेदित्यावृत्तिमभिप्रेत्य स्मृतिं व्याख्याति ॥ **तेन चेत्यादिना** ॥ अन्यथा ज्ञानस्य गुरुप्रसादसाध्यत्वलाभेऽपि विवक्षितभक्तिसाध्यत्वासिद्धिरिति भावः ॥ **स्पष्टयतीति** ॥ 'भक्त्यैवैनं' इत्यादिन्यायविवरणोदाहृतागमानुसारेणाप्येतत्स्पष्टं ज्ञातव्यम् ।

## भावदीपः

**भक्तीति ॥** सूत्रादावादिपदोक्तावपि पूर्वाक्षेपरूपफलोक्तिसौकर्याय भक्तीत्येवोक्तिः । भाष्ये दृष्टेर्भक्तिसाध्यत्वोक्तावपि पादसङ्गत्यर्थमुपासनस्य भक्तिपूर्वकत्वेत्युक्तम् । अतो न संशयादिग्रन्थ-विरोधः । पूर्वत्र श्रुतिस्मृत्यादिबलात्कर्मनिरपेक्षा विद्यैव मुक्तिहेतुरित्युक्तौ तर्हि भक्त्यादिनिरपेक्षो-पासनाऽपि ज्ञानहेतुः स्यात् । 'द्वेषाच्चैद्यादय' इति स्मृतेरिति शङ्कनाद्वा पूर्वत्र कर्मवचनं कर्मयोगपरमित्युक्तौ तर्हि द्वेषवचनमपि द्वेषयोगपरमस्तु किं भक्तिनियमेनेति शङ्कनाद्वा । पूर्वत्र कर्मस्मृतिगतिरुक्ता । अत्र तु द्वेषस्मृतिगतिरुच्यत इति वा पूर्वसङ्गतिरिति भावः । एतेन प्रदान-रूपेतिकर्तव्यताचिन्तानन्तरमेव भक्तिरूपेतिकर्तव्यता चिन्तनीयेति प्रत्युक्तम् । अन्तरङ्गकर्मचिन्ता-नन्तरमेव बहिरङ्गद्वेषचिन्तावसराच्चेति ॥ **उक्तेति ॥** भक्तिपादोक्तभक्त्यर्थकमाहात्म्यादेर्वैयर्थ्य-प्रसङ्गादित्यर्थः ॥ **प्रकृतमिति ॥** दर्शनाच्चेत्यादिना प्रकृतमित्यर्थः । सापेक्षमित्यनन्तरं जायत इति शेषः ॥ **न वेति ॥** भक्तिं विना कृतादुपासनाज्जायत एवेत्यर्थः । ज्ञानसाधनेषु श्रोतव्य इत्यादिनोक्तश्रवणादिषु भक्त्यनुक्तिः प्रदानस्येवाङ्गत्वेऽपि वार्तादेरिवाऽनङ्गत्वेऽपि सम्भवतीत्यर्थः ॥ **भक्त्यादिकमिति ॥** शमदमादिरादिपदार्थः । कुत इत्यतः **सर्वलक्षणेत्यादि ॥** तथापीत्यन्त-भाष्योक्तस्मृत्या गुरुप्रसादेनेति भाष्येण च सूचितं हेतुमाह ॥ **गुरुप्रसादेति ॥** तद्धि बलीय इत्युक्तेरिति भावः । प्रथमभारततात्पर्यनिर्णयोक्तस्पष्टस्मृतिं चाह ॥ **सम्यगिति ॥** लक्षणानि च तत्रैवोक्तानि 'षण्णवत्यङ्गुलो यस्तु न्यग्रोधपरिमण्डलः । सप्तपादश्चतुर्हस्तो द्वात्रिंशल्लक्षणैर्युतः । असंशयः संशयच्छिद् गुरुरुक्तो मनीषिभिः' इत्यादिना ॥ **न चैवमिति ॥** गुरुप्रसादस्यैव सर्वसाधकत्व इत्यर्थः । न केवलं श्रवणादिभिरित्यनेन सूचितयुक्तिमाह ॥ **ज्ञानस्येति ॥** कस्यचिद्विशेषज्ञानोपपत्तेर्भक्त्यादिकं विना मुक्तिरित्यन्यत्रोक्तं व्यावर्त्यपूर्वं व्यनक्ति ॥ **न चोपासनमिति ॥ स्मर्यत इति ॥** सप्तमस्कन्धाद्येऽध्याये गोप्यः कामाद्भयात्कंसो द्वेषाच्चैद्यादय इति स्मर्यत इत्यर्थः । स्मृतिबलात्साक्षादेव द्वेषान्मुक्तिः कुतो न कल्प्यत इत्यत आह ॥ **मुक्तिश्चेति ॥** उक्तं पूर्वनयद्वये प्रतिपादितमित्यर्थः ॥ **अत इति ॥** गुरुप्रसादस्य सर्वसाधकत्वाच्छ्रवणादेरन्वय-व्यतिरेकसिद्धहेतुभावात् द्वेषकामादिनाप्युपासनाद्वेषसम्भवाच्चेत्यर्थः ॥ **यथा कथञ्चिदिति ॥** द्वेषादिनेत्यर्थः ॥ **अतीतपादेति ॥** तथा च भक्तेरेवानावश्यकत्वे यदम्बुवदग्रहणादित्यत्र

(भावदीपः)

भक्तेर्मुक्तिरूपं फलमुक्तम् । यच्च वृद्धिह्राससूत्रे भक्तितारतम्यवर्णनं तदुभयमप्येतन्नयसिद्धभक्तेरावश्यकत्वमुपेत्यैवेत्येतत्पूर्वपक्षे तदप्याक्षेप्यमेवेति भावः । भाष्ये श्रवणादिभिरिति बहुवचनं मननध्यानपरमिति भावेन भाष्यं व्याचष्टे ॥ **केवलमिति** ॥ एतेनात्र सूत्रे पूर्वसूत्राच्चकारानुवृत्तिः सूचिता ॥ **प्रबलेनापीति** ॥ तद्धि बलीय इत्युक्तेः । भाष्ये तस्य पृथगुक्तेश्चेति भावः । भाष्यस्थस्मृत्यनुरोधेनादिपदार्थोक्तिः शमदमादिभिश्चेति । कथमेतद्भाष्येणोक्तशङ्कानिरास इत्यतस्तथापीत्यादिस्मृत्यनुरोधेन भाष्यभावमाह ॥ **प्राबल्येऽपीत्यादिना** ॥ **असिद्धेरिति** ॥ गुरुप्रसादस्येत्यनुषङ्गः ॥ **ध्यानेति** ॥ पुमर्थहेतुध्यानासिद्धेश्चेत्यर्थः ॥ **श्रुतिस्मृत्यादीति** ॥ विवृतं चैतदनुव्याख्याने द्वेषाद्यन्मुक्तिकथनश्रुतिवाक्यविरोधि तदित्यादिना इत्यादिवाक्यसन्दोहाद्द्वेषिणस्तम एव तु । नैव मोक्ष इत्यन्तेन । नवमे गीताभाष्ये च 'मोघाशा मोघकर्माणः' इत्येतद्व्याख्यावसरे प्रपञ्चितमेतत् । 'द्वेषाच्चैद्यादयो नृपाः' । 'वैरेणं यन्नृपतयः' इत्यादि भगवतो भक्तप्रियत्वज्ञापनार्थमित्यादिना गीताभाष्योक्तमेव समाधिमाह ॥ **वचनान्तराणामिति** ॥ शिशुपालादीनां विष्णुपार्षदादित्वेन स्वभावभक्तानामेव शापाद्द्वेषित्वप्राप्तेरिति भावः । अनुबन्धादिभ्य इत्यस्य भक्त्यादिभिरिति भाष्येऽर्थ उक्तः । तत्र सप्तमस्कन्धतात्पर्योक्ताभिधानमाह ॥ **अनुबन्धस्त्विति** ॥ अत्रार्थे हरिगुरुभक्तिश्चेत्याद्युक्तार्थे । तस्मादेव च तद्भवेदित्यस्य वक्ष्यमाणस्मृत्यनुरोधेनार्थद्वयमुपेत्य स्मृतिं व्याचष्टे ॥ **यदनादीत्यादिना** ॥ **एतदेव स्पष्टयतीति** ॥ स्मृतौ तेन चैते भक्त्यादयो गुणा व्यज्यन्त इत्यर्थ इति भावः ॥ **अत इति** ॥ भक्त्यादिना विना गुरुप्रसादस्यासिद्धेरित्यर्थः ॥ **उक्तमिति** ॥ भक्तिपादोक्तमित्यर्थः ।

## अभिनवचन्द्रिका

**गुरुप्रसादासाध्यस्यैवेति** ॥ केवलस्य गुरुप्रसादस्यासाध्याभावात् न सहायापेक्षेति भावः । **नात्र संशय इति** ॥ सहायाभावात् कार्यं भविष्यति न वेति संशयो नेत्यर्थः ॥ **न चैवमिति** ॥ सहायानपेक्षस्य गुरुप्रसादस्य हेतुत्वमुदाहृतप्रमाणार्थश्चेत् उपासनाभावप्रसङ्ग इति न वाच्यमित्यर्थः ॥ **ज्ञानस्येति** ॥ उपासनाकारणत्वस्यापि प्रामाणिकत्वात्, उपासनाव्यतिरिक्तसहायानपेक्षत्वं पूर्वप्रमाणार्थ इति भावः । ननु नाऽस्माभिः मुक्त्यर्थं भक्तिरुक्ता किं तु ज्ञानार्थम् । एवं च साक्षान्मुक्तिसाधनोपासनस्य भक्तिं विना द्वेषेण सम्भवेऽपि न ज्ञानार्थस्योपासनस्य भक्तिं विना

(अभिनवचन्द्रिका)

सम्भव इत्यत आह– **मुक्तिश्चेति** ॥ साप्युपासना ज्ञानसाधनमेवेति प्रागुक्तमयुक्तमेवेति भावः ॥ **अत इति** ॥ यथाकथञ्चित् स्नेहेन वा द्वेषेण वा उत्पन्नेन गुरुप्रसादसहितोपासनेन, ज्ञानोपपत्तेः, व्यर्थम् अनावश्यकं भक्त्यादीत्यर्थः ॥ **प्रबलेनापीति** ॥ प्रबलत्वादन्यापेक्षां विना मोक्षसाधनतया सम्भावितेनापीत्यर्थः ॥ **तद्विनेति** ॥ ज्ञानसाधनध्यानासिद्धेरित्यर्थः । एतेन उत्तरवाक्ये भक्त्यभावेऽपि ध्यानस्याङ्गीकृतत्वात् तद्विरोध इति परास्तम् ॥ **वचनान्तराणामिति** ॥ 'द्वेषाच्चैद्यादयो नृपा' इत्यादिवचनानामित्यर्थः । यद्यपि द्वेषो न मोक्षसाधनम्, किन्तु तदाविष्टदैत्यस्यानर्थसाधनमेव तथापि द्वेषवशात् परमात्मनि ध्यानविषये जाते आविर्भूतया स्वाभाविक्या भक्त्या ध्यायतां मुक्तिरिति द्वेषो मुक्तिसाधनतयोपचर्यत इति भावः ।

पूर्वपक्षस्तु– न ज्ञानार्थं भक्तिरपेक्षिता । प्रसादस्य ज्ञानहेतुत्वे सहायानपेक्षत्वात् । 'सम्यक् लक्षणसंपन्नो यद्दद्यात्सुप्रसन्नधीः । शिष्याय सत्यं भवति तत्सर्वं नात्रसंशय' इति वचनात् । न चैवमुपासनाभावः ज्ञानस्य उपासनान्वयव्यतिरेकदर्शनेन प्रसादस्य उपासनातिरिक्तानपेक्षत्वस्य प्रमाणार्थत्वात् । न चोपासनं भक्तिमन्तरेण न भवतीति वाच्यम् । द्वेषेणापि ध्यानसम्भवात् । 'द्वेषाच्चैद्यादयो नृपा' इति वचनात् । अतो द्वेषेण वा भक्त्या वा, उत्पन्नेनोपासनेन गुरुप्रसादलक्षणसहकारिवशात् ज्ञानसम्भवेन न तदर्थं भक्त्यादिकमावश्यकमिति ।

सिद्धान्तस्तु– न केवलं ज्ञानार्थं श्रवणादिकं गुरुप्रसादश्चापेक्षितः । किन्तु भक्त्यादिकमपि प्रसादार्थं ज्ञानार्थं चापेक्षितम् । 'सर्वलक्षणसम्पन्नः सर्वज्ञो विष्णुतत्परः । यद्गुरुः सुप्रसन्नः सन् दद्यात्तन्नान्यथा भवेत् । तथाप्यनादिसंसिद्धभक्त्यादिगुणपूर्ण(ग)तः । लभेद्गुरुप्रसादं च तस्मादेव च तद्भवेत् । भक्तिर्विष्णौ गुरौ चैव गुरोर्नित्यप्रसन्नताम् । दद्याच्छमदमादींश्च तेन चैते गुणाः पुनः । तैः सर्वैर्दर्शनं विष्णोः श्रवणादिकृतं भवेदिति वचनात् । अतो भक्त्यादेर्ज्ञानार्थमपेक्षितत्वादुक्तं युक्तमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

**प्रकृतज्ञानमिति** ॥ तथा च प्रकृतस्य ज्ञानस्य भक्तिपूर्वकत्वसमर्थनादस्ति शास्त्रादिसङ्गतिरनन्तरसङ्गतिश्चेति भावः । द्वेषेण ध्यायतां संरम्भेणापरोक्षमीहतां भगवदप्रियाणामपि चैद्यादीनां

(वाक्यार्थमुक्तावली)

मोक्षदर्शनात् । ज्ञानिप्रियत्वस्य प्रीत्या मोक्षस्य चाभावात् प्रीतिरित्युक्तन्यायोऽसिद्ध इति पूर्वन्यायमाक्षिप्य समाधानादनन्तरसङ्गतिर्वा । अत्र मोक्षसाधनज्ञानं भक्त्यादिनिरपेक्षमुत सापेक्षमिति चिन्ता । तदर्थं द्वेषयुतध्यानं तत्साधनं भवति न वेति । न केवलं श्रवणादिभिः गुरुप्रसादेन चेति भाष्यानुरोधेन पूर्वपक्षमाह ॥ **न भक्त्यादिकमिति** ॥ **दद्यात्** उपदिशेत् । सत्यं फलाव्यभिचारि ॥ **तदन्वयव्यतिरेक इति** ॥ **प्रमितेः** प्रमाणफलत्वात् । अत एव दर्शनं विष्णोः श्रवणादिकृतं भवतीति वक्ष्यतीति भावः । तस्मादेव च तद्भवेत् । तैस्सर्वैर्दर्शनं विष्णोः श्रवणादिकृतं भवेदिति स्मृतेः भक्त्यादिकं विना ज्ञानासिद्धिप्रतिपादनेन सर्वत्र ध्यानाद्यर्थं भक्त्यादिनैय्यत्यलाभात् सूचितं विशेषदर्शनेत्युक्तन्यायं दर्शयितुं तन्निवर्त्यं चोद्यमाशङ्क्य निषेधति ॥ **न चेति** ॥ **द्वेषेणापीति** ॥ कस्यचिदधिकारिविशेषस्य द्वेषाख्यसाधनविशेषेण ध्यानसम्भवात् तेन विशेषज्ञानोपपत्तेरित्यर्थः । इत्यादीत्यादिपदेन 'वैरेण यं नृपतयः शिशुपालपौण्ड्रसाल्वादयो गतिविशेषविलोकनाद्यैः । ध्यायन्त आकृतधियः शयनासनादौ तत्साम्यमीयुरनुरक्तधियः पुनः किम्' । संरभमार्गाभिनिविष्ट-चित्तानित्यादेर्ग्रहणम् । तत्र वैरेण ध्यायन्तः साम्यमीयुरिति स्पष्टमुक्तेरिति ज्ञेयम् । ननु वैरेण ध्यानस्यैव मोक्षसाधनत्वोक्तेर्ज्ञानमपि व्यर्थमित्यत आह ॥ **मुक्तिश्चेति** ॥

सूत्रे दर्शनाच्चेत्यतो विभक्तिविपरिणामेन दर्शनमित्यनुवर्तते । चशब्दश्च । तथा चानुबन्धादिभ्यश्च दर्शनमिति सूत्रवृत्तिमभिप्रेत्य व्याचष्टे ॥ **न केवलमित्यादिना** ॥ दद्याच्छमदमादिश्चेत्युत्तरस्मृत्यनुसारेण सूत्रभाष्यगतादिशब्दार्थमाह ॥ **शमदमादिभिश्चेति** ॥ ननु गुरुप्रसादस्य प्राबल्ये किं भक्त्यादिनेत्यतो गुरुप्रसादसाधनत्वे न तावत्तदपेक्षेत्याह ॥ **प्राबल्येऽपीति** ॥ गुरुप्रसादस्य फलोपकार्यगत्वाच्च तदपेक्षेत्याह ॥ **तद्विनेति** ॥ भक्त्यादिकं विनाऽऽदर-नैरन्तर्याभ्यां चित्तवृत्त्यनुपपत्तेरित्यर्थः । इत्यादिश्रुतिसन्दर्भाद्विषिणस्तम ईयते । इत्यादिवाक्य-सन्दर्भाद्विषिणस्तम एव त्वित्यनुव्याख्यानं मनसि निधायाह ॥ **द्वेषयुतेति** ॥ **स्वभावभक्तेति** ॥ स्वभावभक्तानां शिशुपालादीनां दैत्यावेशोपाधिकृतमनोदोषे प्रसक्तेऽपि सत्वमार्गेण चेतसस्तत्र प्रसक्तौ सत्यां तदनन्तरं तदुपसर्जनीकृत्य प्रवृत्तया भक्त्या प्रसन्नो भगवान् प्रामादिकमपराधमगणय्य मुक्तिं ददातीत्येवमर्थकत्वादिति भावः ॥ **स्मृतिमाहेति** ॥ आगम इत्युक्तन्यायं दर्शयन् स्मृतिमाहेत्यर्थः । **तस्मादेव** गुरुप्रसादादेव तत्र भक्त्यादिकं भवेत् । विद्यमानस्य भवनायोगात् ।

(वाक्यार्थमुक्तावली)

अभिव्यक्तं भवेत्तस्मादभिव्यक्तभक्त्यादेरेव तदपरोक्षज्ञानं भवेदित्यावृत्तिमभिप्रेत्य स्मृतिं व्याख्याति ॥ **तेनेत्यादिना** ॥ **तदेवेति** ॥ भक्त्यादिगुणपूगत इत्यादिशब्दार्थं तस्मादेव च तद्भवेदिति सामान्यवाक्यार्थं च **स्पष्टयतीत्यर्थः** । भक्तिः शमदमादिश्च प्रसन्नतां दद्यादिति स्मृतियोजना । नन्विदमधिकरणमम्बुवदग्रहणादित्यनेन गतार्थमिति चेन्न तत्र नित्यानन्दज्ञानादिमत्वं हि मोक्षः । तस्य च नित्यसिद्धत्वान्न भक्त्या तत्साध्यज्ञानेन तत्साध्यप्रसादेन च प्रयोजनमिति भक्तेर्ज्ञान-साधनत्वमङ्गीकृत्य परम्परया साक्षाद्वा न मुक्तिसाधनत्वमित्याक्षेपे मुक्तिसाधनत्वमुक्तम् । अत्र तु भक्तिं विनापि ज्ञानदर्शनान्न भक्तेस्तद्धेतुत्वमित्याक्षिप्य समाधीयत इति भेदात् । यद्वा अम्बुवदग्रहणादित्युक्तेऽपि भक्तेः प्रधानसाधनत्वज्ञापनार्थं शमादिसाधनान्तरोपसङ्ग्रहार्थं च पुनरारम्भ इति तत्वप्रदीपरीत्या समाधेयम् ।

## वाक्यार्थविवरणम्

**उक्तेति** ॥ भक्तिपादेत्यर्थः ॥ **ज्ञानसाधनेषु** ॥ श्रोतव्यो मन्तव्य इत्युक्तश्रवणादिषु ॥ **अनुक्तिः** ॥ **भक्तेः** ॥ **उभयथेति** ॥ क्वचित् विद्यमानाविद्यमानयोरुभयोरप्यनुक्तिदर्शनात् । वस्तुतो ज्ञानसाधनाऽपि भक्तिस्तत्साधनेषु नोक्तेति ज्ञानसाधनत्वाभावादेव नोक्तेत्युभयथा सम्भवतीति अनुक्तिः सन्देहबीजमित्यर्थः । गुरुप्रसादेनैव ज्ञानसम्भवादिति भावेनाह ॥ **गुरुप्रसादेति** ॥ **असाध्यस्यैवेति** ॥ तत्सत्त्वे हि तदर्थं भगवद्भक्तिरपेक्षिता स्यादिति भावः ॥ **न चैवमिति** ॥ गुरुप्रसादस्यैव प्राबल्यमङ्गीकृत्य भक्तेर्वैराग्यस्य चानपेक्षितत्वोक्तौ उपासनस्याप्युपयोगाभावः प्राप्तः स्यात् । गुरुप्रसादेनैव ज्ञानोदयसम्भवादिति भावः ॥ **तदन्वयेति** ॥ उपासनान्वयव्यतिरेकेत्यर्थः । तथा चापरोक्षज्ञानस्य गुरुप्रसादरूपेच्छासाध्यत्वेन उपासनायाः प्रत्यक्षरूपत्वेन प्रमाणफलत्वं युज्यत इति नोपासनाभाव इति भावः ॥ **भवतीति** ॥ अतो भक्तिरपेक्षितेति भावः ।

ननु कथं द्वेषयुतध्यानेन मुक्तिरप्रामाणिकत्वादित्यत आह ॥ **स्मर्यत इति** ॥ आदिपदेन 'वैरेण यन्नृपतयः शिशुपालपौण्ड्रशाल्वादयो गतिविलासविलोकनाद्यैः । ध्यायन्त आकृतधिय-श्शयनासनादौ तत्साम्यमीयुरनुरक्तधियः पुनः किम्' । (इति भागवते) इत्यादिवाक्यपरिग्रहः । नन्वेवं द्वेषयुतध्यानेनैव मुक्तेः सम्भवादपरोक्षज्ञानस्यापि वैय्यर्थ्यं प्रसज्यत इति चेत्तत्राह

(वाक्यार्थविवरणम्)

॥ **मुक्तिश्चेति** ॥ **उक्तम्** ॥ विद्यैवेत्यत्र । अतो ज्ञानमपेक्षितमेवेति भावः । यथाकथञ्चि-दुपासनेनेत्यन्वयः । भक्तिरहितेनेत्यर्थः । **असिद्धिः** गुरुप्रसादस्येति वर्तते । **तद्विना** ॥ भक्त्यादिकं विना । ननु भक्तिं विना कथं न ध्यानसिद्धिः । द्वेषेणापि तत्सम्भवात् । तेन च मुक्ति-सम्भवादित्यत आह ॥ **द्वेषयुक्तेति** ॥ तर्हि द्वेषाच्चैद्यादयः इत्यादिवचनान्तराणां का गतिरित्यत आह ॥ **वचनान्तरमिति** ॥ 'चैद्ये च नरके चैव शाल्वे कंसे च रुक्मिणि । आविष्टास्तु हरेर्भक्ताः' इति प्रमाणबलेन चैद्यादौ जीवद्वयसमावेशेन तत्रत्यस्वभावभक्तविषयत्वादित्यर्थः ॥ **अयमभिप्रायः** ॥ द्विविधानि वाक्यानि । 'वैरेण यन्नृपतयः' इत्यादीनि स्मरणप्रधानानि । 'द्वेषाच्चैद्यादय' इत्यादीनि द्वेषप्रधानानि । तत्र आद्यानामियं गतिः । यथा पिता पुत्रं प्रति किञ्चिद्विधत्ते 'इदं कुरु' इति । स तु श्रमादिभीरुरकुर्वाण एवावतिष्ठते । तदा क्रुद्धः पिता ब्रवीति । 'अरे जाल्म खट्वारूढ । 'खट्वारूढो जाल्म' इति वचनात् । वैधवेय म्रियस्व' इति । तस्य वाक्यस्य न पुत्रमरणविधाने तात्पर्यं किन्तु विहितकरणे । यथा वा 'वृद्धौ च मातापितरौ साध्वी भार्या सुतश्शिशुः । अप्यकार्यशतं कृत्वा भर्तव्या मनुरब्रवीत्' इत्यत्र नाकार्यकरणे तात्पर्यं किन्तु सर्वथा भर्तव्यत्वे । तथा द्वेषेण स्मरणे मुक्तिर्भवतीति पुराणवाक्यस्यापि न तद्द्वेषस्य मुक्तिसाधनत्वे तात्पर्यं, किन्तु स्मरणस्य कर्तव्यतायामेव । द्वितीयानां तु इयं गतिः । चैद्यादीनां द्वेषतो मुक्तिं प्रतिपादयद्वाक्यं भगवतः कृपालुत्वादीन् गुणानेवाह ॥ शापादिना द्वेषं कुर्वन्तोऽपि चैद्याद्याः तात्कालिकं द्वेषमगणय्य पूर्वतनीं भक्तिमेवापेक्ष्य भगवता मोचिताः । अहो भगवतः कृपालुत्वं, निर्विकारत्वं, सत्यसङ्कल्पत्वं चेत्येवं तस्य भक्तप्रियत्वादिगुणज्ञापन एव तेषां वाक्यानां **तात्पर्यमिति** ॥

॥ **यथोक्तम्** ॥ (अनुव्याख्याने)'स्मर्तव्यो भगवान्नित्यमित्यर्थेनैव हि कचित् । द्वेषादिव गुणानाह पुराणे क्रुद्धवाक्यवत् । यथा क्रुद्धः पिता पुत्रं मरेत्याक्षेपपूर्वकम् । प्रोक्तस्यान्यस्य कृत्यर्थं वदत्येवं पुराणगम्' इत्यादि । भाष्ये भवेदित्यनन्तरं अतो भक्त्याद्यनपेक्षितमिति यद्यपीत्येतावान् वाक्यशेषः । भाष्ये कथं भक्त्याद्यपेक्षितमित्यतस्त्वया आवश्यकत्वेनोच्यमानगुरुप्रसादसाधनत्वा-दित्याह ॥ **अनादीति** ॥ **न ज्ञानार्थमिति** ॥ किन्तु गुरुप्रसादार्थमेवेति प्राप्तमिति भावः । यदनादिसिद्धमव्यक्तभक्त्यादिकं तेन गुरुप्रसादः इत्यस्य 'तस्मादेव च तद्भवेत्' इत्येतद्व्याख्यान-

(वाक्यार्थविवरणम्)
परत्वे अनादिसिद्धेत्यादिना पुनरुक्तिप्रसङ्गात् । तस्मादित्येतदर्थानुवादपरमिति ज्ञेयम् ॥ **तथा हि** ॥ तस्मादित्यस्य तेनेत्यर्थः । तथा च यदनादिसिद्धाव्यक्तभक्त्यादिकं तेन गुरुप्रसादो भवतीत्युक्तम् । तस्मात्तेन च ॥ **गुरुप्रसादेनेति** ॥ एवं च तस्माद्गुरुप्रसादेन च तत्तु भक्त्याद्यभिव्यक्तिर्भवेत् । तस्मादभिव्यक्तभक्त्यादिना च तदपरोक्षज्ञानं भवेदिति योजना ज्ञातव्या ॥ **एतदेव** ॥ पूर्वप्रमाणोक्तमेव । भाष्ये गुरौ चैव भक्तिरित्यनन्तरं शमदमादिश्चेति योज्यम् । तेन च गुरोर्नित्य-प्रसादेनैव ते हरिगुरुभक्तिशमदमाद्या गुणाः पुनर्व्यज्यन्ते । तैः सर्वैरभिव्यक्तैर्भक्त्यादिभिर्गुणै-र्विष्णोर्दर्शनं भवेदित्यर्थः । श्रवणादिकृतमित्युक्त्या तदप्यपरोक्षज्ञानसाधनं भक्त्यादिगुणवदिति सूचितमिति द्रष्टव्यम् ।

## वाक्यार्थमञ्जरी

**उक्तेति** ॥ द्वितीयपादोक्तभक्तीत्यर्थः ॥ **न चैवमिति** ॥ तत्साध्यज्ञानस्यापि गुरुप्रसादेनैव सिद्धेरिति भावः ॥ **तदन्वयव्यतिरेकेति** ॥ प्रमितेः प्रमाणफलत्वादिति भावः । द्वेषेण ध्यानमात्रसम्भवेऽपि न तस्य ज्ञानहेतुत्वमित्यत आह ॥ **स्मर्यते खल्विति** ॥ चैद्यः शिशुपालः उक्तं विद्यैव निर्धारणादित्यत्र । तथा च चैद्यादीनां द्वेषपूर्वकध्यानेन ज्ञानमुत्पन्नमित्यवश्य-मङ्गीकार्यमिति भावः ।

ॐ अनुबन्धादिभ्यः ॐ ॥ ब्रह्मज्ञानमनुबन्धादिभ्यः भक्त्यादिभ्यो भवतीत्यर्थः । प्रसाद-स्येत्यस्य पूर्वेण चोत्तरेण च सम्बन्धः ॥ **तद्भिनेति** ॥ भक्तिं विना आदरनैरंतर्याभ्यां चित्तवृत्त्यनुपपत्तेरित्यर्थः ॥ **स्वभावभक्तेति** ॥ पूतनाकंसनरकशिशुपालादिषु द्विधा । जीवाः सन्तोऽसन्तश्चेति दशमतात्पर्योक्तेरिति भावः । अभिधानं सप्तमतात्पर्योक्तम् ॥ **अभिव्यक्तिरिति** ॥ विद्यमानस्य पुनर्भावनायोगादिति भावः । तस्मादित्यादेरावृत्तिं मत्वाऽह ॥ **अभिव्यक्तेरिति** ॥

॥ इति अनुबन्धाद्यधिकरणम् ॥ ३१ ॥

## ३२. दर्शनभेदाधिकरणम्

### सूत्रभाष्यम्

**॥ ॐ प्रज्ञान्तरपृथक्त्ववद्दृष्टिश्च तदुक्तम् ॥ ५२ ॥**

उपासनाभेदव(त्त)द्दर्शनभेदः । तच्चोक्तं कमठश्रुतौ —

'अन्तर्दृष्टयो बहिर्दृष्टयोऽवतारदृष्टयः सर्वदृष्टय इति । देवा वाव सर्वदृष्टयस्तेषु चोत्तरोत्तरमाब्रह्मणोऽन्येषु (तु) यथोयोगं यथा ह्याचार्या आचक्षत' इति । अध्यात्मे च—

'दृष्ट्यैव ह्यवताराणां मुच्यन्ते केचिदञ्जसा ।
दर्शनेनाऽन्तरेणान्ये देवास्सर्वत्र दर्शनात् ॥
तेषां विशेषमाचार्यो वेत्ति सर्वज्ञतां गत' इति ॥

### तत्त्वप्रदीपिका

एवं भक्त्यादिमतामुपासकानां किमेकरूपं ब्रह्मदर्शनमुत तारतम्येन स्थितमिति संशये मनोवृत्तीनां भक्त्यादीनां नानारूपत्वेऽपि वस्तुन एकरूपत्वात्तद्दर्शनेनाप्येकरूपेण भवितव्यम् । अन्यथा भ्रमत्वप्रसङ्गादित्यत आह– प्रज्ञान्तरपृथक्त्ववद्दृष्टिश्च तदुक्तम् ॥ उपासनाभेदवद्भक्तिभेदवच्च दर्शनभेदः । युक्तेः श्रुतेश्च । न हि भक्तितारतम्यादुपास्तितारतम्याच्च जायमानं दर्शनं मुक्तौ सुखतारतम्यसाधनमेकरूपं भवितुमर्हति । एकरूपत्वेऽपि वस्तुनः पुरुषादिविशेषमपेक्ष्य दर्शनविशेषसम्भवादन्तरुपासका अन्तर्दृष्टय इत्यादि ॥

'अन्यया विद्यया मुक्तिः सुराणामन्यया नृणाम् ।
तत्रापि योग्यताभेदात्प्रतिभेदा अवान्तराः ॥
यया यस्य विमुक्तिः स्यात्तद्दाता मुख्यतो गुरुः ।
एकदेशगुरुत्वं स्यादन्यविद्याप्रदस्य तु' इति मानससंहितानाम् ॥

### तत्त्वप्रकाशिका

अत्र यत्साधनं भगवदुपासनमुक्तं तस्मिन् ज्ञाने विशेषसमर्थनादस्ति शास्त्रादिसङ्गतिः । अविशेषे मोक्षविशेषाभावप्रसङ्गात्समर्थनीयमेतत् । प्रकृतं भगवद्दर्शनमेव विषयः । किं सर्वेषामेकप्रकार-

(तत्त्वप्रकाशिका)

**मुतानेकप्रकारमिति सन्देहः । धर्मद्वैविध्यदर्शनं सन्देहबीजम् । एकप्रकारमेवेति पूर्वः पक्षः । 'दृष्ट्वैव तं मुच्यते नापरेण' इति सर्वेषामविशेषितज्ञानेन मोक्षश्रवणात् । तथा 'भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः । ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्' इति सर्वेषां भक्त्यादिना पूर्णज्ञानोत्पत्तेः संपूर्णज्ञानेनैव मोक्षस्मरणात् । सामान्यवचनत्वादेव सर्वविषयत्वं ज्ञायते । अतः सर्वेषां दर्शनसाम्यादुक्तं मुक्ततारतम्यमयुक्तमिति । सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ।। प्रज्ञेति ।। अनेकप्रकारमेवाधिकारिणां भगवद्दर्शनम् । तत्साधनोपासनस्यानेकप्रकारत्वात्फलस्य च साधनानुसारित्वादिति भावः । प्रज्ञान्तरं प्रज्ञाविशेषः । अविच्छिन्नपरोक्षज्ञानसंततिर्हि ध्यानम् । नन्वनेकविधसाधनवतामपि कदाचित्कर्षकाणामिव साध्यसाम्यं किं न स्यादित्यत आह ।। तच्चेति ।। सर्वदृष्ट्यो व्याप्तिदर्शिनः । अन्येष्ववतारादिदर्शिषु । योग्यतैव कथं ज्ञायते । यथा ह्याचार्या आचक्षते । यद्यस्ति दर्शनभेदस्तर्हि न सर्वेषां मोक्षः स्यात्संपूर्णज्ञानेनैव मोक्षस्य श्रुत्यादिसिद्धत्वादित्यत आह ।। अध्यात्मे चेति ।। एवं विशेषबलात् श्रुतिर्यथायोग्यं दृष्ट्वेत्युपपन्ना । 'यावान्यश्चास्मीति' हिरण्यगर्भविषयतयोपपन्नम् । सामान्यतः सर्वज्ञानमिति सर्वविषयं वा । अतो ज्ञाने विशेषसद्भावायुक्तं मोक्षतारतम्यमिति सिद्धम् ।**

## गुर्वर्थदीपिका

परोक्षज्ञानसन्ततिरित्यत्र लौकिकापरोक्षप्रत्यासत्त्यजन्यत्वात्परोक्षेत्युक्तम् । उपपन्नेत्यस्य व्याख्येयेत्यर्थः ।

## भावबोधः

अधिकरणस्य पादान्तर्भावज्ञापनायाह– **यत्साधनमिति** ।। अत्र पूर्वं ज्ञानस्य भक्तिसाध्यत्वेऽभिहिते 'वृद्धिह्रासभाक्त्वं' इति भक्तेः वैचित्र्यस्योक्तेः कथं विचित्रभक्तिसाध्यत्वमविचित्रज्ञानस्येत्याक्षेपोत्थानादनन्तरसङ्गतिरिति भावः । 'वृद्धिह्रासभाक्त्वं' इत्यत्र फलतारतम्येन भक्त्यादिसकलतारतम्यसाधनम् । अत्र तूपासनारूपसाधनवैचित्र्येणापरोक्षज्ञानलक्षणसाध्यवैचित्र्यसाधनमिति महान् भेदः । किं सर्वेषामित्यादि । अत्र भगवद्दर्शनं किं सर्वेषामेकप्रकारमुतानेकप्रकारमिति चिन्ता । तदर्थं 'दृष्ट्वैव तं मुच्यते' इति 'यावान्' इत्यादिवाक्यं सर्वेषामविशेषितज्ञानस्य मोक्षहेतुत्वप्रतिपादकं भवत्युत न भवतीति । तदर्थं ज्ञानवैचित्र्ये प्रमाणं नास्त्युतास्तीति ।

(भाववोधः)

'दृष्ट्वैव तं मुच्यते नापरेण' 'यावान् यश्चास्मि तत्वतः' 'ततो मां तत्त्वतो ज्ञात्वा' इत्यादि-सामान्याभिलापमात्रेण दर्शनस्याविशेष इति न्यायविवरणं मनसि निधाय पूर्वपक्षमाह– **दृष्ट्वैवेत्यादिना** ॥ सौत्रः 'च'शब्दः पृथक्त्वस्यानुकर्षणार्थ इत्यभिप्रेत्य प्रवृत्तं दर्शनभेद इति भाष्यं व्याचष्टे– **अनेकप्रकारमेवेति** ॥

ननु अत्र 'प्रज्ञान्तरं' इत्यस्यान्या प्रज्ञा प्रज्ञान्तरमित्यर्थत्वे उपासनारूपज्ञानविशेषस्यालाभात् ज्ञानमात्रस्यापरोक्षज्ञानहेतुत्वाभावाच्च तद्वैचित्र्ये कारणवैचित्र्यरूपहेतुर्न प्रदर्शितः स्यात् । प्रज्ञाशब्दस्यैवोपासनापरत्वे प्रज्ञापृथक्त्ववदित्येतावता पूर्तेऽन्तरशब्दो व्यर्थः स्यादित्यतस्तद्व्याचष्टे– **प्रज्ञान्तरं प्रज्ञाविशेष इति** ॥ अनेनोपासनाभेदवदिति भाष्येण प्रज्ञान्तरमित्यस्य प्रज्ञाविशेष-स्योपासनस्य 'पृथक्त्वाद्भेदवत्' इति सौत्रपदं व्याख्यातमित्युक्तं भवति ।

ननु भाष्ये उपासनं नाम ध्यानं विवक्षितम् । तस्यैवापरोक्षज्ञानसाधनत्वात् । ध्यानं च न ज्ञानं किं तु मानसीक्रिया । यथोक्तं क्रिया मानसवदिति । तथा च प्रज्ञान्तरपदस्य प्रज्ञाविशेषपरत्वेऽपि कथमुपासनापदेन तद्व्याख्यानम् । मानसक्रियारूपस्य ध्यानस्य कथं प्रज्ञाविशेषत्वमित्यत आह– **अविच्छिन्नेति** ॥

तथा च, न ध्यानं परिस्पन्दात्मकमानसी क्रिया । तथात्वेऽतीन्द्रियाश्रितक्रियाया अतीन्द्रिय-त्वेनापरोक्षावभासविरोधात् । क्रियाया रूपरहितत्वेन ध्याने रूपावभासविरोधाच्चेति भावः । ननु न ध्यानस्य परोक्षज्ञानरूपत्वं वक्तुं युक्तम् । लिङ्गशब्दाजन्यत्वात् ।

'नैरन्तर्यं मनोवृत्तेर्ध्यानमित्युच्यते बुधैः'

इति स्मृतौ श्रवणदर्शनादिजनितमानसवासनामयस्य वस्तुनो मनसावलोकनं ध्यानमित्यङ्गी-कारादिति । सुधायां च ध्यानस्य मानसत्वोक्तेश्चेति चेत्, सत्यम् । अत्र ध्यानस्य परोक्षज्ञान-जन्यसंस्कारमयपदार्थविषयकत्वेन परोक्षत्वव्यवहारात् । अत एव सुधायां श्रवणदर्शनादिज-नितमानसवासनामयस्येति श्रवणरूपज्ञानस्यापि वासनाकारणत्वमुक्तम् । अत एव चापरोक्ष-ज्ञानजन्यसंस्कारमयमानोरथिकपदार्थविषयकज्ञानादौ न परोक्षत्वव्यवहारः । न चैवं क्रियामानस-वदिति सूत्रविरोधः तस्य धात्वर्थक्रियावाचित्वात् । यद्वा, ध्यानस्य वासनामयपदार्थविषयकत्वेनाऽ-

(भाववोधः)

परोक्षरूपत्वेऽपि तस्य परमात्मविषयकत्वाभावे नैष्फल्यप्रसङ्गात्तद्विषयकत्वमावश्यकम् । तथा च, ध्यानस्य परमात्मविषयकत्वे अपरोक्षरूपत्वायोगेन 'ज्ञातः परमाणुः' इत्यादिवत् उपनीत-भानत्वाभ्युपगमे उपनायकस्य परोक्षत्वव्यवहारः ।

अत्र तदुक्तमित्यनेन भाष्योदाहृतश्रुतिवत्

'यथायोग्यमेवैष आत्मानं'

इत्यादि न्यायविवरणोदाहृतश्रुतिरपि गृहीतेति ज्ञातव्यम् ॥ **विशेषबलादिति** ॥ विशेष-वाक्यबलादित्यर्थः । 'यावान्यश्चास्मीति' ब्रह्मण एव ज्ञानोपपत्तेः । 'यावान्' इत्यत्रापि सामान्यविशेषज्ञानोपपत्तेश्चेति न्यायविवरणं मनसि निधायाह– **यावानिति** ॥

## भावदीपः

ज्ञानपादान्तर्भावमाशङ्क्योपासनासाध्यचिन्तारूपत्वेन निवेश इति भावेनाह ॥ **यत्साधनमिति** ॥ **उक्तमिति** ॥ तन्निर्धारणार्थनियमस्तद्दृष्टेरित्यादावुक्तमित्यर्थः । न चैवं तदानन्तर्यमेवास्य शङ्क्यम् । साधनस्य प्रदानानुबन्धादितिकर्तव्यतानिरूपितेत्यपि तात्पर्यात् । तथा च साधने विशेषचिन्तानन्तरं अत्र तत्साध्ये ज्ञाने विशेषचिन्तनात्पूर्वानन्तर्यमस्येति भावः ॥ **मोक्षविशेषेति** ॥ तथा च यावदधिकारमित्यत्रोक्तमोक्षविशेषणाधिकारनियमो न युक्त इति भावः ॥ **प्रकृतमिति** ॥ दर्शनाच्चेत्यादिनेति भावः ॥ **धर्मद्वैविध्येति** ॥ लोके कश्चिन्मनुष्यत्वादिधर्म एकप्रकारो रूपादिधर्मो भिन्नप्रकारो दृष्ट इति भावः । सिद्धान्तभाष्ये भेद इत्युक्तेस्तद्व्यावर्त्यं 'दृष्ट्वैव तं मुच्यते नापरेण' । 'यावान्यश्चास्मि तत्वतः' । 'ततो मां तत्वतो ज्ञात्वा' इत्यादिसामान्यालापमात्रेण दर्शनस्याविशेष इत्यन्यत्राविशेषपदोक्तमाह ॥ **एकप्रकारमेवेति** ॥ कुत इत्यतो दृष्ट्वैवेति यावानिति च श्रुतिस्मृतिरूपं वाक्यद्वयमित्युपेत्य तत्रोक्तमेव हेतुमाह ॥ **दृष्ट्वैवेति** ॥ स्वस्वयोग्यतानुसारेण दृष्ट्वैवेति श्रुतेः सावकाशत्वं मन्वान आह ॥ **तथेति** ॥ **स्मरणात्** गीतायामन्तिमेऽध्याये । अधिकारिविशेषपराऽस्तु स्मृतिरित्यतो दृष्ट्वैवेति भाष्योक्तस्मृतिव्यावर्त्यमाह ॥ **सामान्येति** ॥ **अत इति** ॥ श्रुतिस्मृतिबलादित्यर्थः ॥ **मुक्तेति** ॥ साधनस्यैकरूप्ये साध्यतारतम्यस्याऽयोगादिति भावः । एकस्यैव दृष्टिभेद इति भ्रमनिरासाय भाष्यं व्याचष्टे ॥ **अनेकेति** ॥ प्रकृतत्वाद्भगव-

(भावदीपः)

दित्युक्तिः । निर्बीजत्वशङ्कानिरासाय **दृष्टान्तोक्तिलब्धं** हेतुमाह ॥ **तत्साधनोपासनस्येति** ॥ ध्यानस्येत्यर्थः । अप्रयोजकत्वशङ्कानिरासाय वतिप्रत्ययलब्धानुकूलतर्कमाह ॥ **फलस्य चेति** ॥ अर्थसामान्यादित्युक्तेरिति भावः । उपासना कथं प्रज्ञान्तरपदलब्धेत्यत आह ॥ **प्रज्ञेति** ॥ वासनामयवस्तुविषयत्वात्परोक्षेत्युक्तम् ॥ **इत्यत आहेति** ॥ लोके तथात्वेऽपि नेह तथा श्रुतिप्रामाण्यादिति भावः ॥ **श्रुत्यादीति** ॥ स्मृतिरादिपदार्थः ॥ **इत्यत आहेति** ॥ अधिकारिभेदेन ज्ञानतारतम्यस्य अन्यया विद्यया मुक्तिः सुराणामन्यया नृणाम् । तत्रापि योग्यताभेदात्प्रतिभेदा अवान्तरा इत्यादिषष्ठबृहद्भाष्योक्तस्मृतिसिद्धत्वान्न सर्वेषां सम्पूर्णज्ञानेन मोक्ष इति भावः । तर्हि दृष्ट्वैवेति श्रुतेर्भक्त्या मामभिजानाति यावानिति स्मृतेश्च का गतिरित्यत आह ॥ **एवमिति** ॥ दृष्ट्वैव ह्यवताराणामित्याद्युक्तविशेषबलादित्यर्थः ॥ **यावान्यश्चास्मीति** ॥ ब्रह्मण एव ज्ञानोपपत्तेर्यावानित्यत्राऽपि सामान्यविशेषज्ञानोपपत्तेश्चेत्यन्यत्रोक्तमाह ॥ **हिरण्यगर्भेति** ॥ सर्वविषयं सर्वाधिकारिविषयमित्यर्थः ॥ **अत इति** ॥ तत्साधनोपासनस्याऽनेकप्रकारत्वाद्धेतोरित्यर्थः ।

## अभिनवचन्द्रिका

**भक्त्यादिनेति** ॥ अनेन अहं तत्वतो यावानस्मि, यश्चास्मि यद्गुणकश्चास्मि, तं मां भक्त्या अभिजानाति अपरोक्षतो जानाति । भक्तिर्मज्ज्ञानसाधनं, **ततः** तस्मात् भक्त्या मां तत्वतो ज्ञात्वा ज्ञानं सम्पाद्य, अधिकारी तदनन्तरं ज्ञानानन्तरं साधनानन्तरम्, अनुष्ठायेति यावत्, मां विशते मत्सायुज्यं प्राप्नोति' इति गीतावचनस्य योजनोक्ता भवति । ननु 'भक्त्या मामभिजानाति' इति वाक्यं हिरण्यगर्भपरम् । अतो न सर्वेषां सम्पूर्णज्ञानं साधयतीत्यत आह– **सामान्यवचनत्वादेवेति** ॥ ननु मानसक्रियारूपस्य ध्यानस्य प्रज्ञात्वोक्तिरयुक्तेत्यत आह– **अविच्छिन्नेति** ॥ यद्यपि मानसवासनामयवस्तुविषये अपरोक्षमपि तदन्तर्गतभगवदंशे परोक्षमपि भवतीति भावेन परोक्षज्ञानसन्ततिरित्युक्तम् । अविच्छिन्नपरोक्षज्ञानस्य श्रवणमननरूपज्ञानस्य सन्ततिः कार्यं ध्यानमित्यर्थ इत्यप्याहुः ॥ **एवं विशेषबलादिति** ॥ एवंविधविशेषप्रतिपादकवाक्यबलात् । 'दृष्ट्वैव तं मुच्यत' इति श्रुतिः यथायोग्यं दृष्ट्वैवेत्यर्थपरतयोपपन्नेत्यर्थः । ज्ञानतारतम्याङ्गीकारे 'यावान्यश्चास्मि तत्वत' इति वचनविरोध इत्यत आह– **यावानिति** ॥ अनेन 'यावान् यश्चास्मि' इति वचनस्य योऽहं वेदोक्तगुणवत्तया यावानस्मि, तावन्तं तत्वतो ज्ञात्वा, मां विशत' इति योजनोक्ता भवति । अनेन

(अभिनवचन्द्रिका)
हिरण्यगर्भस्यापि ईश्वरविषये असर्वज्ञत्वात्, हिरण्यगर्भविषयतयोपपन्नमित्ययुक्तमिति परास्तम् । हिरण्यगर्भस्य वेदोक्तयावद्गुणदर्शित्वात् ।

पूर्वपक्षस्तु– एकप्रकारमेव सर्वेषामपरोक्षज्ञानम् । भक्त्या मामभिजानाति' इत्यनेन सर्वेषां पूर्णज्ञानस्य, सम्पूर्णज्ञानेन मोक्षस्य चाऽभिधानात् । अतः सर्वेषां दर्शनसाम्यादुक्तं- **मुक्ततारतम्य-मयुक्तमिति ॥**

सिद्धान्तस्तु– अनेकप्रकारमेवाधिकारिणां भगवद्दर्शनम् । तत्साधनस्योपासनस्यानेक-प्रकारत्वात् । फलस्य च साधनानुसारित्वात् । न चैवं सम्पूर्णदर्शनाभावात् विरिञ्चेतरेषां मोक्षाभावः । यथायोग्यदृष्टेरेव मोक्षहेतुत्वेन स्वयोग्यदर्शनेन सर्वेषां मोक्षसम्भवात् । अतो ज्ञाने विशेषसद्भावात् युक्तं मोक्षतारतम्यमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

न भक्तेर्ज्ञानसाधनत्वं युक्तम् । तथात्वे ज्ञानस्यैकप्रकारत्वेन भक्तेरपि तथात्वापत्त्या वृद्धिह्रासभाक्त्वमित्युक्तभक्तितारतम्यायोगप्रसङ्गादित्याक्षेपोत्थानादनन्तरसङ्गतिः । ननु वृद्धिह्रास-भाक्त्वमित्यत्र तस्य च भक्तिज्ञानादेरिति ज्ञानतारतम्यस्याप्युक्तमिति गतार्थमिदमधिकरणमिति चेन्न । तत्र फले तारतम्येन भक्त्यादिसकलसाधनतारतम्यसाधनत्वम् । अत्र तूपासनारूपसाधन-वैचित्र्येणापरोक्षज्ञानरूपसाध्यवैचित्र्यसाधनमिति भेदात् । मोक्षविशेषेति । यावदधिकारमवस्थिति-रित्यत्रोक्तमोक्षविशेषाभावप्रसङ्गादित्यर्थः । **किमिति** । ज्ञानं किं सर्वेषामेकप्रकारमुतानेकप्रकारमिति चिन्ता । 'तदर्थं दृष्ट्वैव तं मुच्यते नापरेण' 'यावान् यश्चास्मीत्यादिवाक्यं सर्वेषामविशेषितज्ञानस्य मोक्षहेतुत्वप्रतिपादकं न भवत्युत भवतीति । अध्यात्मवचने 'दृष्ट्वैव तं मुच्यते' इत्याद्यालापस्य यथायोग्यं दृष्ट्वेति सावकाशत्वकथनात्सूचितमालाप इत्युक्तन्यायं दर्शयन् पूर्वपक्षयति । **दृष्ट्वैवेति ।** ब्रह्मैवं दृष्ट्वाऽदोष एवं दृष्ट्वा इत्यादिविशेषनिर्देशं विहाय दृष्ट्वा मुच्यते इति सामान्येना-विशेषितज्ञानेन मोक्षलाभादित्यर्थः । यो भक्त्या मामभिजानाति परोक्षेण सः ततः भक्त्यादि-साधनात् अहं तत्वतः यावत्परिमाणादिविशिष्टोऽस्मि यश्च यद्रूपविशिष्टोऽस्मि तावन्तं मामपरोक्षं ज्ञात्वा तदनन्तरं मामविलम्बेन विशत इति स्मृत्यर्थः । नन्विदं गीतावाक्यमधिकारिविशेष-

(वाक्यार्थमुक्तावली)

नियतमित्यत आह ॥ **सामान्येनेति** ॥ सौत्रश्चशब्दः पृथगित्यस्यानुकर्षणार्थ इत्यभिप्रेत्य प्रवृत्तं दर्शनभेद इति भाष्यं व्याचष्टे । **अनेकप्रकारमेवेति** । अवधारणार्थश्चशब्दः पृथगित्येनन सम्बद्ध्यत इति भावेनानेकप्रकारमेवेत्युक्तम् । प्रज्ञान्तरपृथक्त्ववदिति न दृष्टान्तमात्रे तात्पर्यम् । तथात्वे घटपृथक्त्ववदित्यपि वक्तुं शक्यत्वेन प्रज्ञान्तरपृथक्त्वग्रहणे विशिष्यकारणाभावादतो यथा प्रज्ञान्तरपृथक्त्वं तथैव तदनुसारेणैवेति प्रतिपादने तात्पर्यमिति भावेन व्याचष्टे ॥ **तत्साधनेति** ॥ अन्या प्रज्ञा प्रज्ञान्तरमित्यत्र यद्यन्तरशब्दो भेदवचनस्तर्हि प्रज्ञान्तर इत्येव स्यात् पृथक्त्ववदिति व्यर्थमित्यत आह । **प्रज्ञान्तरं प्रज्ञाविशेष इति** । प्रज्ञान्यमानसक्रियारूपस्य ध्यानस्य कथं प्रज्ञाविशेषत्वोक्तिरित्यत आह ॥ **अविच्छिन्नेति** ॥ हिशब्देन ध्यानस्य प्रज्ञान्यत्वे ध्येयरूपादि-विषयत्वानुपपत्तेरिति युक्तिं सूचयति । ननु न ध्यानपरोक्षज्ञानरूपत्वं युक्तम् । लिङ्गशब्दाजन्य-त्वात् । श्रवणदर्शनादिजनितमानसवासनामयस्य वस्तुनो मनसाऽवलोकनं ध्यानमिति सुधायामुक्ते-श्चेति चेन्न । अत्र ध्यानस्य परोक्षज्ञानजन्यवासनामयपदार्थविषयकत्वेन परोक्षत्वव्यवहारात् । अत एव सुधायां श्रवणदर्शनादिजनितमानसवासनामयस्येति श्रवणजन्यज्ञानस्यापि वासनोपादानत्वमुक्तम् ।

यद्वा ध्यानस्य वासनामयपदार्थांशेऽपरोक्षत्वेऽपि तदन्तर्गतभगवद्विषयकत्वे परोक्षत्वात् परोक्ष-ज्ञानसन्ततिरित्युक्तमित्यविरोधः । एतेन ज्ञातःपरमाणुरितिवत् परमात्मन उपनीतत्वेन भानस्याङ्गी-कार्यत्वात् तदंशे परोक्षत्वं नास्तीति निरस्तम् । ज्ञातः परमाणुरित्यादावपि परमाण्वंशे परोक्ष-त्वाभ्युपगमादुपनायकस्य परोक्षत्वेन वा परोक्षत्वव्यवहारः । यद्वा गुणध्यानं चात्र विवक्षितम् । तदंशे **परोक्षत्वमिति** ॥ **कदाचिदिति** ॥ कदाचित्कर्षकाणामिव साध्यसाम्येन दृष्टितारतम्यस्य कदाचिदनियतत्वं किं न स्यादित्यतो दृष्टितारतम्ये नियमस्य सुस्थिरत्वं श्रुत्याहेत्यर्थः । एवं सुस्थिरत्वमिति न्यायोऽपि सूत्रारूढो भवति । न केवलं दर्शनपृथक्त्वं साधनपृथक्त्वहेतुसिद्धं किन्तु तदुक्तं चेति चशब्दस्य तदुक्तमित्यत्राप्यन्वयमभिप्रेत्य भाष्ये तच्चोक्तमित्युक्तं ज्ञेयम् । अन्तर्वहि-रवतारदृष्टयः सर्वदृष्टय इति भ्रमं वारयति । **व्याप्तिदर्शिन इति** । 'देवा व सर्वदृष्टयः' इति व्यक्तिविशेषनिर्धारणोक्ता । अवतारादिदर्शिनः क इत्यस्योत्तरमन्येषु तु **यथायोगमिति** ॥ तद्व्याचष्टे ॥ **अन्येष्विति** ॥ अवतारदर्शिषु योग्यतानुसारेण व्यक्तिविशेषनिर्धारणमित्यर्थः । यद्वावतारादिदर्शिष्वपि यथायोगमुत्तरोत्तरमधिकारिणो ज्ञेया इत्यर्थः । तदुक्तमित्यस्यादृष्टि-

(वाक्यार्थमुक्तावली)

पृथक्त्वेऽपि सर्वज्ञानिनामुक्तेरित्येतत् स्मृतौ चोक्तमित्यर्थं मत्वा प्रवृत्तमध्यात्म इत्येतदवतारयति ॥ **यद्यस्तीति** ॥ **विशेपबलादिति** ॥ विशेषवाक्यबलादित्यर्थः । **तेषु चोत्तरोत्तरमाब्रह्मण** इति । व्याप्तदर्शिकाष्ठात्वेन ब्रह्मण उक्त्या सूचितं यावान् यश्चास्मीति सावकाशत्वं दर्शयति ॥ **यावानिति** ॥ **सामान्यतः** सर्वज्ञानमिति । सामान्यतः सर्वज्ञानमत्र विवक्षितमितीदं वाक्यं सर्वविषयं चेत्यर्थः ।

सूत्रे क्रियामानसवदित्येतत् विशदयितुं प्रज्ञान्तरमित्युक्तम् । दर्शनस्य पृथक्त्वेऽपि पुनर्दृष्टिग्रहणमन्तर्दृष्टय इति श्रुत्यनुसरणायेति ज्ञेयम् ।

## वाक्यार्थविवरणम्

**प्रज्ञाविशेषः** ॥ उपासनेत्यर्थः । सूत्रे दृष्टिः दृष्टिपृथक्त्वमित्यर्थो द्रष्टव्यः । ध्यानरूपोपासनायाः मानसपरिस्पन्दक्रियारूपायाः कथं प्रज्ञान्तरपदेन ज्ञानरूपत्वमुच्यते इत्यतस्तदुपपादयति ॥ **अविच्छिन्नेति** ॥ ननु एवं वासनामयवस्तुनो मनसाऽवलोकनं ध्यानमिति मानसा परोक्षत्वोक्तिविरोध इति चेदुच्यते । वासनामयवस्त्वंशेऽपरोक्षरूपं तदन्तस्स्थभगवद्रूपविषये च परोक्षरूपमिति नरसिंहाकारज्ञानाङ्गीकारादविरोध इति गुरुचरणाः ॥ **अनेकविधेति** ॥ भिन्नभिन्नोपासनारूपानेकसाधनेत्यर्थः ॥ **साध्यसाम्यम्** ॥ भगवद्दृष्टिरूपफलसाम्यम् । तत्र दृष्टान्तः ॥ **कर्षकाणामिवेति** ॥ तत्रानेकविधं साधनम् । लाङ्गलादिना भूम्याः कर्षणादिसाध्यं धान्यादि । भाष्ये ॥ **अन्तः** ॥ स्वरूपहृदयान्तः ॥ **बहिः** ॥ स्वरूपात् बाह्यहृदये । पूर्णज्ञानेन सर्वेषामिति शेषः ॥ **विशेपेति** ॥ विशेषवचनेत्यर्थः । अन्ये ऋषयः । आन्तरेण दर्शनेन केवलस्वबिम्बदर्शनेन । पूर्वप्रमाणे बहिर्दृष्टयोऽवतारदृष्टयः' इत्यत्र मध्यमाधिकारिव्यतिरिक्ताधर्माधिकारिप्रभेदग्रहणम् । 'बहिर्दृष्टय' इति चतुर्गुणोपासकाः । अवतारदृष्टय इत्यात्मत्वोपासकाः इति ध्येयम् ।

## वाक्यार्थमञ्जरी

**अविशेषितेति** ॥ दर्शने तारतम्यानुक्तेरिति भावः ॥ **भक्त्येति** ॥ अहं यावान् यश्चास्मि तावन्तं मां भक्त्या सम्यग्जानाति तदनन्तरं समृद्धेन ज्ञानेन मां प्रपद्यत इत्यर्थः । उक्तं यावदधिकारमित्यत्र ॥ ॐ प्रज्ञान्तरपृथक्त्ववद् दृष्टिश्च तदुक्तं ॐ ॥ प्रज्ञान्तरस्य ध्यानस्य पृथक्त्ववत् नानात्ववत् दृष्टिर्ज्ञानं च पृथक् नाना तदुक्तं तज्ज्ञानतारतम्यमन्तर्दृष्टय इति श्रुतावुक्तमित्यर्थः । ननु

(वाक्यार्थमञ्जरी)

भाष्ये उपासनानाम ध्यानं विवक्षितं तस्यैवापरोक्षज्ञानसाधनत्वात्ध्यानं न ज्ञानं किं तु मानसी-क्रिया। तथा च प्रज्ञान्तरशब्दस्य ज्ञानविशेषपरत्वे कथमुपासनापदेन तद्व्याख्यानमित्यत आह ॥ **अविच्छिन्नेति** ॥ तथा च न ध्यानं मानसीक्रिया तथात्वेऽतीन्द्रियमनोनिष्ठक्रियाया अप्यतीन्द्रियत्वेनापरोक्षावभासविरोधात् क्रियाया रूपरहितत्वेन ध्याने रूपावभासविरोधाच्चेति भावः। ननु न ध्यानस्य परोक्षज्ञानरूपत्वं वक्तुं युक्तं तस्य मानसत्वेनापरोक्षत्वात्। नैरन्तर्यं मनोवृत्तेर्ध्यानमित्युच्यते बुधैरिति स्मृतेः। श्रवणदर्शनादिजनितमानसवासनामयस्य वस्तुनो मनसावलोकनं ध्यानमित्यंगीकारादिति सुधोक्तेश्च। तस्य लिङ्गशब्दाजन्यत्वाच्चेति चेत् सत्यं, ध्यानस्य वासनामयमूर्तिविषयकत्वेनापरोक्षरूपत्वेऽपि परमात्मस्वरूपविषये अपरोक्षरूपत्वायोगेन ज्ञातः परमाणुरित्यादिवदुपनीतभानाभ्युपगमेनोपनायकागमजन्यज्ञानस्य परोक्षत्वेन ध्यानेऽपि परोक्षत्वव्यवहार इत्यदोषः। न च तस्य भगवद्विषयकत्वमेव नेति वाच्यम्। तथात्वे नैष्फल्य-प्रसङ्गात् ॥ **कर्षकाणामिति** ॥ विषमसाधनवतामपि कृषीवलानां समानफलवत्त्वदर्शनादिति भावः। **विशेषबलात्** विशेषवाक्यबलात् ॥ **हिरण्यगर्भेति** ॥ तस्यापि श्रुत्युक्तं यावत्त्वं बोध्यम्।

॥ इति दर्शनभेदाधिकरणम् ॥ ३२ ॥

## ३३. न सामान्याधिकरणम्

### सूत्रभाष्यम्

**॥ ॐ न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः ॐ ॥ ५३ ॥**

न सामान्यदर्शनमात्रेण मुक्तिः । यथा मृत्युमात्रात् । न हि लोकापत्तिमात्रं मुक्तिः ।

'सामान्यदर्शनाल्लोका मुक्तिर्योग्यात्मदर्शनात्' इति हि नारायणतन्त्रे ॥

'मुच्यते नात्र सन्देहो दृष्ट्या तु स्वात्मयोग्यया' इति च ॥

'दर्शनेनाऽऽत्मयोग्येन मुक्तिर्नान्येन केनचित्' इति चाध्यात्मे ॥

### तत्त्वप्रदीपिका

दर्शनमात्रान्मोक्ष इत्यनङ्गीकारे केषाञ्चिद्दर्शनानां नैष्फल्यं स्यात् । तथा च सर्वगतत्व-दृष्ट्यादीनामवतारादिदृष्ट्यो नैवाकाङ्क्ष्येरन्नित्यत आह– **सामान्यादित्यादि सूत्रम् ॥** ब्रह्मविषयत्वेन स्वयोग्यरूपदर्शनेन समानतयार्तमानं सामान्यदर्शनम् । तेनोर्ध्वलोकप्राप्तिरेव । यथा मृत्युमात्रादुपास-नानाम् । आरब्धकर्मक्षय एव हि मुक्तिस्तद्दर्शिनामपि ।

### तत्त्वप्रकाशिका

अत्र यत्साधनमुपासनं तज्ज्ञानस्य बिम्बविषयस्य मोक्षसाधनत्वसमर्थनादस्ति शास्त्रादिसङ्गतिः । अन्यथा न बिम्बोपासनमावश्यकमिति सिध्यतीत्येतत्समर्थनीयम् । भगवद्दर्शनमेव विषयः । किं बिम्बरूपविषयं मुक्तिसाधनमुत यत्किञ्चिद्रूपविषयमिति सन्देहः । 'ब्रह्मविदाप्नोति परम्' इत्याद्युक्तेः साधारण्यं सन्देहबीजम् । यत्किञ्चिद्रूपविषयं मोक्षसाधनमिति पूर्वः पक्षः । भगवतः सर्वरूपेष्वपि साम्यात् । न हि कस्यचिद्रूपस्य मोक्षदातृत्वशक्तिः कस्यचिन्नेति विशेषोऽस्ति । तथात्वे चोक्त-विरोधः स्यात् । अतो यत्किञ्चिद्रूपविषयज्ञानस्य मोक्षसाधनत्वान्न बिम्बोपासनानियतिरपेक्षिता सिध्यतीति । सिद्धान्तयत्सूत्रं पठित्वा व्याचष्टे **॥ नेति ॥** न भगवद्रूपाणां साम्येन सामान्यतो दर्शनेन सर्वेषां मुक्तिः । किं नाम स्वबिम्बदर्शनादेव । यथा खलु मृत्युत्वसाम्येऽपि न मृत्युमात्रा-नन्तरं मुक्तिः । किं तु मृत्युविशेषादनन्तरमेवं भगवद्रूपाणां साम्येऽपि रूपविशेषज्ञानमेव मोक्षसाधनं

(तत्त्वप्रकाशिका)

न सामान्यदर्शनमिति भावः । तथा च श्रुतिः । समोऽपि भगवान् स्वबिम्बदर्शन एवैनं मोचयति' इति । यदि न सामान्यदर्शनेन मुक्तिस्तर्हि तस्य वैयर्थ्यं स्यात् । न च तद्युक्तम् । अतो यत्फलं स मोक्ष इति मुक्तये सामान्यदर्शनं भवतीत्यत आह ॥ न हीति ॥ न भगवद्दर्शनस्यैवं सति वैफल्यम् । नापि तेन मोक्षः । तस्य महदादिलोकप्राप्तिसाधनत्वात् । न हि लोकप्राप्तिर्मुक्तिरिति भावः । सामान्यदर्शनेन लोकप्राप्तिरेव न मुक्तिरिति कुत इत्यत आह ॥ सामान्येति ॥ दर्शनेऽपि विकल्पाद्बिम्बदर्शनेऽपि सा स्यादित्यत आह ॥ मुच्यत इति ॥ दर्शनेन लोकापत्तिः कचिन्मुक्तिश्च किं न स्यादित्यत आह ॥ दर्शनेनेति ॥ अतो बिम्बदर्शनस्यैव मुक्तिहेतुत्वाद्बिम्ब-मेवाऽवश्यमुपास्यमिति सिद्धम् ।

## गुर्वर्थदीपिका

तथात्वे चोक्तविरोध इत्यत्रोक्तं 'न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि' इत्यधिकरण उक्तमित्यर्थः । 'सामान्यादप्युपलब्धेः' इति सूत्रखण्डस्योपलब्धेः दर्शनस्य सामान्यात् साधारणरूपविषयत्वान्मुक्तिर्न । यद्वा ल्यब्लोपनिमित्तपञ्चमीमपेक्ष्य सामान्यात्स्वरूपसामान्यं विषयीकृत्वोपलब्धेर्दर्शनादित्यर्थः । भाष्ये सामान्यदर्शनमात्रेणेति फलितकथनम् ।

## भावबोधः

पूर्वं 'तदुक्तं' इत्यनेन गृहीतेन प्रमाणेन केषाञ्चिदवतारदर्शनेन मुक्तिरित्युक्ते तर्हि सर्वेषामपि तेनैव मुक्त्युपपत्तेः केषाञ्चिद्बिम्बदर्शनेनेति नियमो नेत्याक्षेपोत्थानादनन्तरसङ्गतिरिति भावः । किमित्यादि ॥ अत्र योगिनां भगवद्दर्शनं किं यत्किञ्चिद्रूपविषयं मुक्तिसाधनमुत बिम्बरूपविषय-मिति चिन्ता । तदर्थं बिम्बरूपविषयस्य मुक्तिसाधनत्वे यत्किञ्चिद्रूपविषयसाधनस्य वैफल्यं प्राप्नोत्युत नेति । तदर्थं यत्किञ्चिद्रूपविषयकदर्शनस्य मोक्षेतरफलकत्वं न सम्भवत्युत सम्भवतीति । तदर्थं तत्र प्रमाणं नास्त्युतास्तीति । भगवतः सर्वत्र गुणसाम्याद्यस्य कस्याचिद्रूपस्य दर्शनात् सर्वेषां मुक्तिरिति न्यायविवरणानुसारेण पूर्वपक्षमाह– यत्किञ्चिद्रूपविषयमिति ॥ उक्तविरोधः स्यादिति । 'न स्थानतोऽपि' इत्युक्तविरोधः स्यादित्यर्थः । अत्र सौत्रं 'अपि' पदं 'मात्रार्थकमुपलब्धेरित्यनेन सम्बध्यत इत्यभिप्रेत्य प्रवृत्तं न सामान्यदर्शनमात्रेण मुक्तिरिति भाष्यं व्याचष्टे– न भगवद्रूपाणामिति ॥ बिम्बदर्शनादेवेति ॥ नायं नियमः सर्वेषां, किं तु ये बिम्बदर्शनयोग्या

(भाववोधः)

ऋष्यादयस्तेषामेव । सर्वेषां बिम्बदर्शनायोग्यत्वात् । यथोक्तम् । 'नोपासा त्रैविध्यादाश्रितत्वादिह तद्योगात्' इति । 'ऋषयोऽन्तःप्रकाशाः' इति श्रुतेश्च । अन्यथा 'दृष्ट्यैव ह्यवताराणाम्' इति प्रागुक्तविरोधात् । येषां बहिरुपासनेन मोक्षस्तेषामपि हृद्युपासनं किञ्चित्कार्यमेवेति बृहदारण्यकभाष्यं तु अवतारादिदृष्टिविशेषार्थमेवान्तरुपास्त्यावश्यकत्वपरम् । अत एव 'दृष्ट्यैव' इत्यत्र 'अञ्जसा' इत्युक्तम् । यथोक्तं काठकभाष्ये–

'प्रादुर्भावानृते विष्णुमिन्द्रियैर्नैव पश्यति ।
प्रादुर्भावानपि यदा ज्ञानदृष्ट्यैव पश्यति ॥
तदैव मुच्यते योगी न दृष्टैरिन्द्रियैः क्वचित् ॥' इति ।

अत एव च न्यायविवरणे सिद्धान्तेऽप्यवतारदर्शनेनापि केषाञ्चिन्मुक्तिरित्यङ्गीकारात् सर्वेषामित्युक्तमित्यभिप्रेत्य न सर्वेषामित्युक्तम् । अन्यथा न सामान्यदर्शनेन मुक्तिरित्येवावक्ष्यदिति ज्ञेयम् । न्यायविवरणोदाहृतां श्रुतिमाह– **तथा चेति** ॥ सामान्यदर्शनस्य वैफल्यपरिहाराय सूत्रे 'न हि लोकापत्तिः' इत्युक्तमभिप्रेत्य प्रवृत्तं न हीति भाष्यमवतार्य व्याचष्टे– **यदीत्यादिना** ॥ **कुत इत्यत आहेति** ॥ ऋषीणां बिम्बदर्शनमेव योग्यमिति भावः ।

## भावदीपः

**समर्थनादिति** ॥ यत्किञ्चिद्रूपज्ञानादपि मुक्तिरिति शङ्कायामिति योज्यम् । तेन पूर्वत्रावतारादिव्यवस्थितनानारूपदृष्टिनियमेन मोक्षोक्तिरयुक्ता । यत्किञ्चिद्रूपदृष्ट्यैव मुक्त्युपपत्तेरिति शङ्कनात्पूर्वसङ्गतिरपि सिद्धेति ध्येयम् । सामान्यदर्शनेन मुक्तिरिति भाष्यदिशा प्रतिज्ञामाह ॥ **यत्किञ्चिदिति** ॥ कुत इत्यतो भगवतः सर्वत्र गुणसाम्यादित्यन्यत्रोक्तहेतुमाह ॥ **भगवत इति** ॥ चेतनत्वादिना साम्यमप्रयोजकमित्यतो गुणपदविवक्षितधर्मोक्त्या साम्यं व्यनक्ति ॥ **न हीति** ॥ अस्तु विशेषतो सिद्धो हेतुरित्यतो गुणपदोक्तितात्पर्यलब्धार्थोक्त्या विवक्षितसाम्यरूपहेतोः सिद्धिमाह ॥ **तथात्वे चेति** ॥ न स्थानतोऽपीत्यत्रोक्तविरोध इत्यर्थः ॥ **अत इति** ॥ सर्वरूपेषु मुक्तिदातृत्वादिगुणसाम्यादित्यर्थः । पूर्वाक्षेपरूपफलमाह ॥ **न बिम्बेति** ॥ अन्तर्दृष्टयो बहिर्दृष्टय इत्यादिना पूर्वत्र व्यवस्थितदृष्ट्युक्त्या या तत्साधनबिम्बोपासनानियतिरपेक्षिता सा न

(भावदीपः)

सिध्यतीत्यर्थः । सोपस्कराणि वाक्यानि भवन्तीति न्यायेन भाष्यार्थमाह ॥ **न भगवदिति** ॥ तर्हि मुक्त्यभावप्रसङ्ग इत्यतः सौत्रापिपदसूचितमाह ॥ **किं नाम स्वबिम्बदर्शनादेवेति** ॥ बिम्बशब्दोऽत्र स्वस्वयोग्यात्मपरः । मुक्तिर्योग्यात्मदर्शनादित्युक्तेः । न तु हृदिस्था या हरेर्मूर्तिर्जीवो यत्प्रतिबिम्बकः । यद्वशे वर्तते जीव इत्येकादशस्कन्धसप्तविंशाध्यायतात्पर्योक्तहृदिस्थरूपमात्रपरः । तेन न दृष्ट्यैवेति प्रागुक्तस्मृतिविरोधः । केचित्तु बिम्बशब्दो हृदिस्थपर एव । अवतारादिदर्शिनामपि हृदिस्थदर्शनमावश्यकम् । येषां बहिरुपासेन मोक्षः तेषां हृद्युपासनं किञ्चित्कर्तव्यमेवेति तृतीयाध्यायबृहद्भाष्योक्तेः । अतो न दृष्ट्यैवेत्युक्तिविरोध इत्याहुः । एवेत्यस्यायोगव्यवच्छेदकत्वादिति । यथेत्यादि व्याचष्टे ॥ **यथेति** ॥ कुत इत्यतो भाष्ये प्रमाणानुक्तेर्न्यायविवरणोक्तश्रुतिमाह ॥ **तथा चेति** ॥ न हीत्यादिभाष्यमसङ्गतत्वनिरासाय व्यावर्त्योक्तिपूर्वं व्यनक्ति ॥ **यदीति** ॥ शङ्कानिवर्तकतया भाष्यं सपरिकरं व्याचष्टे ॥ **न भगवदिति** ॥ **विकल्पादिति** ॥ यथा भगवद्रूपदृष्टीनां मध्ये योग्यात्मदृष्टिरेव मुक्तिहेतुः न तु रूपान्तरदृष्टिरेवं बिम्बदर्शनेऽपि किंचिद्दर्शनं मुक्तिहेतुः किञ्चिन्नेति विकल्पः स्यादित्यर्थः । न केवलमुपासनायामित्यपेरर्थः ॥ **अत इति** ॥ सामान्यदृष्टिमात्रेण मुक्त्यभावात्स्वबिम्बदर्शन एवैनं मोचयतीति श्रुतिबलाच्चेत्यर्थः । हेतुत्वादित्यनन्तरं प्रागुक्तबहिरन्तरादिदृष्टिव्यवस्था युक्तेति पूरणीयम् ।

## अभिनवचन्द्रिका

**बिम्बविषयस्येति** ॥ स्वयोग्यरूपविषयस्येत्यर्थः । एतेन पूर्वाधिकरणे अवतारादिदर्शनेनापि मोक्षस्योक्तत्वात् हृदयान्तर्गतबिम्बशब्दवाच्यभगवद्रूपज्ञानेनैव मोक्ष इति समर्थनमयुक्तमिति परास्तम् ॥ **अन्यथेति** ॥ समर्थनाभावे आचार्योपदेशानुसारेण उपासनीयमित्येतन्न सिध्यतीत्यर्थः ॥ **किं बिम्बरूपविषयमिति** ॥ स्वयोग्यरूपविषयमित्यर्थः । यत्किंचिद्रूपस्य मोक्षदानसामर्थ्याभावान्न तज्ज्ञानं मोक्षसाधनमिति भ्रमनिरासाय श्रुतिमाह– **तथा चेति** ॥ **दर्शनेऽपीति** ॥ मोक्षहेतुतया ज्ञातेऽपि दर्शने 'सामान्यदर्शनाल्लोका मुक्तिर्योग्यात्मदर्शनात्' इति वचनात् सामान्यदर्शनमनायासेन चेदस्तु न चेन्मास्तु इति मनसि विकल्पात् अनादरोदयात्, बिम्बदर्शनेऽपि विरोधिवचनान्तरशङ्कया स स्यात् अनादरः स्यादित्यतो मोक्षसाधनत्व एव प्रमाणान्तरमाहाऽऽचार्यो भाष्यकार इत्यर्थः ।

(अभिनवचन्द्रिका)

पूर्वपक्षस्तु– यत्किञ्चिद्रूपदर्शनमेव मोक्षसाधनम् । भगवतः सर्वरूपेष्वपि साम्यात् । अतो यत्किञ्चिद्रूपदर्शनस्य मोक्षसाधनत्वात् न बिम्बोपासनानियतिरपेक्षिता सिद्ध्यतीति ।

सिद्धान्तस्तु– न भगवद्रूपाणां साम्येन सामान्यतो दर्शनेन सर्वेषां मुक्तिः । किं नाम स्वबिम्बदर्शनादेव । 'दर्शनेनात्मयोग्येन मुक्तिर्नान्येन केनचित्' इति वचनात् स्वयोग्यज्ञानस्यैव मोक्षहेतुत्वात् । मृत्युत्वसाम्येऽपि लिङ्गभङ्गस्यैवानन्दाविर्भावहेतुत्वात् । न च दर्शनान्तरवैयर्थ्यम् । 'सामान्यदर्शनाल्लोका' इति वचनबलेन तेषां महरादिलोकप्राप्तिहेतुत्वात् । न च लोकप्राप्तिरेव मोक्षः । महरादिलोकं गतानां प्रलयानन्तरं मोक्षश्रवणात् । अतो बिम्बदर्शनस्यैव मोक्षसाधनत्वात् तदेवोपास्यमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

**विम्बविषयस्य मोक्षसाधनत्वेति** ॥ बिम्बविषयज्ञानस्य सर्वेषां मोक्षसाधनत्वसमर्थनादित्यर्थः ॥ **अन्यथेति** ॥ अन्तर्दृष्टयः दर्शनेनान्तरेणान्य इत्युक्तरीत्या बिम्बदर्शनस्य केषाञ्चिदेव मोक्षसाधनत्वं न सर्वेषामित्यङ्गीकारे 'दहर उत्तरेभ्यः तदभावो नाडीषु' 'अदृष्टानियमात्,' 'स्थानविशेषात्,' 'आभास एव चेत्यादिसूत्रोपात्तासु रूपं रूपं प्रतिरूपो बभूव तदस्य प्रियमभिचक्षणाय । यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशस्तस्मिन् यदन्तस्तदुपासितव्यमित्यादिश्रुतिस्मृतिदूषितं न बिम्बोपासनमावश्यकमिति सिध्यतीत्यर्थः । अनन्तरसङ्गतिस्तु अन्तर्दृष्टय इत्यधिकारिविशेषनियतस्यापि बिम्बापरोक्षस्य सर्वेषामावश्यकत्वेऽवतारादिदृष्टेरपि सर्वेषामावश्यकत्वं स्यात् । ब्रह्मविषयत्वसाम्यादित्याक्षेपोत्थानादिति ज्ञेयम् ॥ **किमिति** ॥ भगवद्दर्शनं यत्किंचिद्रूपविषयमपि सर्वेषां मोक्षसाधनमुत बिम्बविषयमेवेति चिन्ता । तदर्थं भगवद्रूपाणां सर्वेषां मोक्षसाधनमिति पूर्वपक्ष इत्यर्थः । सामान्यादिति सूत्रसूचितं गुणसाम्यमित्युक्तन्यायं दर्शयति **भगवत इति** ॥ यत्किञ्चिद्रूपस्य हृदिस्थबिम्बरूपस्य कस्यचिदवतारादेर्बहिष्ठस्य मोक्षदातृत्वशक्तिरित्यत्र सर्वेषामिति पूरणीयम् ॥ **उक्तेति** ॥ न स्थानत इत्युक्तविरोधादित्यर्थः ।

(वाक्यार्थमुक्तावली)

सूत्रे विद्यैव तु निर्धारणादित्यादौ प्रकृता मुक्तिरन्वेति ॥ **सामान्यादपीत्यावर्तते** ॥ साम्येऽपीत्यर्थः । आद्यस्यावतारदृष्ट्य इति प्रकृतभगवद्रूपाणामित्यनेनान्वयः । द्वितीयस्योपलब्धे-र्यत्किञ्चिद्रूपोपलब्धेः ब्रह्मविषयत्वमादाय बिम्बदर्शनसाम्येऽपीत्यर्थः । यद्वा सामान्यादप्युपलब्धे-र्हेतुगर्भं विशेषणम् ॥ **अत एव पञ्चमी** ॥ लिङ्गविपरिणामस्तु भगवद्रूपाणामित्यनेनान्वयं दर्शयितुम् । अत्र सौत्रमपिपदमुपलब्धेरित्यन्वेति । तच्च मात्रार्थकम् । अत एव भाष्ये न च सामान्यदर्शनमात्रेणेत्युक्तम् । स्वस्वमात्रगोचरबिम्बरूपविषयविज्ञानं विना सर्वसाधारणावतारादि-विषयोपलब्धिमात्रेण पर्यवस्यति । मृत्युवदित्यत्र सामान्यमृत्युवदिति बुद्ध्या विवेकेन योज्यम् ॥ **सप्तम्यर्थे वतिः** ॥ सति सप्तमी चेयम् । तथा च साधारणमृत्यौ सत्यां तदनन्तरं यथेति लभ्यत इति भावेन व्याचष्टे । **न भगवद्रूपाणामित्यादिना** ॥

तथा चायं सूत्रार्थः । भगवद्रूपाणां शक्तिसाम्येऽपि अत एव यत्किञ्चिद्रूपोपलब्धेः ब्रह्म-विषयत्वमादाय बिम्बदर्शनसाम्येऽपि स्वस्वमात्रगोचरं स्वबिम्बविषयविज्ञानं विना सर्वसाधारणा-वताराद्युपलब्धिमात्रेण न मुक्तिः, किन्तु मुक्त्यर्थमात्मयोग्यं तु विज्ञानं तदुदाहृतम् । समोऽपि भगवान् स्वबिम्बदर्शन एवैनं मोचयतीत्यादिश्रुतेः । उप स्वसमीपे वर्तमानस्य बिम्बस्योप-लब्धेर्दर्शनादेव तत्र दृष्टान्तो मृत्युवदिति । यथा मृतित्वसाम्येऽपि न साधारणमृतौ सत्यां तदनन्तरं न मुक्तिः । किन्तु प्रारब्धकर्मावसाने चरममृत्यनन्तरमेव मुक्तिरेवं प्रकृतेऽपीति । यदि न सामान्यदर्शनमात्रेणेति । सर्वेषामप्यधिकारिणां मुक्त्यर्थं स्वस्वयोग्यरूपसाक्षात्कारेण मुक्त्यन्तरङ्ग-बिम्बरूपसाक्षात्कारेण च मोक्षो न तदितररूपसाक्षात्कारेण तर्हि तेषामेव श्रुतं सामान्यदर्शनं विफलं स्यादित्यर्थः । न हि लोकापत्तिरित्यत्र सामान्यादप्यनुपलब्धेः लोकापत्तिर्भवति । न हि लोकापत्तिर्मुक्तिः । न हि लोकापत्तिर्मुक्तिरिति योजनामभिप्रेत्य व्याचष्टे ॥ **तस्य महरादीति** ॥ लोकप्राप्तिमात्रं मुक्तिर्नेति प्रसिद्धमिति हिशब्दः । सामान्यदर्शनेन लोकप्राप्तिरित्यत्र प्रमाण-सूचकत्वेनापि हिशब्दं व्याकुर्वन्नवतारयति ॥ **सामान्येति** ॥ दृष्ट्वैव ह्यवताराणां मुच्यन्ते केचिदञ्जसा इत्युक्तरीत्या येषां प्रादुर्भावादिदर्शनेन मोक्षः तेषां तत्सामान्यदर्शनमेव न भवतीति ज्ञेयम् ॥ **दर्शनेऽपीति** ॥ दर्शनेति सामान्यदर्शनेन न मुक्तिः । बिम्बदर्शनेन मुक्तिरिति भगव-द्दर्शनेऽपि विकल्प इत्यर्थः । यद्वा केषाञ्चिदवतारादिदर्शनेन मुक्तिः । केषाञ्चिदवतारादिदर्शनेन

(वाक्यार्थमुक्तावली)

मुक्तिर्नेति विकल्पदर्शनात् । बिम्बदर्शनेऽपि पुरुषभेदेन विकल्पस्स्यादित्यर्थः ॥ **क्वचिन्मुक्तिश्चेति** ॥ अधिकारिविशेषाणामवतारादिदर्शनं सामान्यदर्शनमेव न भवतीति नेष्टापत्तिः । न सर्वेषां बिम्बदर्शनस्यावश्यकत्वेऽन्तर्दृष्ट्यो बहिर्दृष्टयः, दृष्ट्वैव ह्यवताराणामित्यादिविरोध इति चेन्न । प्राक् तुर्याभिप्रायेण तत्प्रवृत्तेः । ईषदन्तरुपास्त्या तदपरोक्षस्य सार्वत्रिकत्वेऽप्यविरोधात् । अत्र यद्वक्तव्यं तत्सर्वं प्रमेयमुक्तवल्यामनुसन्धेयम् । विस्तरभयादुपरम्यते । अत्र कृतप्राप्तिरिति सिद्धान्तन्यायः हिशब्देन समोऽपि भगवान् स्वबिम्बदर्शन एवैनं मोचयति यथा समेष्वपि कर्मसु स्वकृतमेवैनं भोजयतीति सूचनादुक्तो बोध्यः ।

## तत्त्वसुबोधिनी

पूर्वं तदुक्तमित्यनेन गृहीतेन प्रमाणेन केषाञ्चिदवतारदर्शनेन मुक्तिरित्युक्ते तर्हि सर्वेषामपि तेनैव मुक्त्यापत्तेः केषाञ्चिद्बिम्बदर्शननियमेनेत्याक्षेपोत्थानादनन्तरसङ्गतिरिति भावः । ननु बिम्बातिरिक्तरूपस्य मोक्षदातृशक्त्यभावात्तच्छक्तिमद्बिम्बमेवोपास्यमित्याह ॥ **न हीति** ॥ उक्तविरोधः स्यादिति । न स्थानतोऽपीत्युक्तविरोधः स्यादित्यर्थः । अत्र सौत्रमपिपदं मात्रार्थकं उपलब्धिरित्यनेन सम्बध्यत इत्यभिप्रेत्य प्रवृत्तं न सामान्यदर्शनमात्रेण मुक्तिरिति भाष्यं व्याचष्टे ॥ **न भगवद्रूपाणामिति** ॥ **बिम्बदर्शनादेवेति** ॥ नायं नियमः सर्वेषां किन्तु ये बिम्बदर्शनयोग्याः ऋष्यादयः तेषामेव सर्वेषां बिम्बदर्शनायोग्यत्वात् । यथोक्तं नोपासात्रैविध्यादाश्रितत्वादिह तद्योगादिति । ऋषयः अन्तः प्रकाशाः इति श्रुतेश्च । अन्यथा दृष्टस्यैव खरनराणामिति प्रागुक्तविरोधात् । येषां बहिरूपासनेन मोक्षः तेषामपि हृद्युपासनं किंचित्कार्यमेवेत्यादि बृहदारण्यकभाष्यं तदवतारादिदृष्टिविशेषार्थमेवान्तरूपास्त्यावश्यकत्वपरम् । अत एव दृष्ट्वैवेत्यत्रांजसेत्युक्तम् । यथोक्तं काठकभाष्ये । 'प्रादुर्भावा इमे विष्णुमिन्द्रियेणैव पश्यति । प्रादुर्भावानपि यदा ज्ञानदृष्ट्यैव पश्यति । तदैवमुच्यते योगी न दृष्टैरिन्द्रियैः क्वचिदिति । सामान्यदर्शनस्य वैकल्पपरिहाराय सूत्रे 'न हि लोकापत्तिरित्युक्तमभिप्रेत्य प्रवृत्तं न हीति भाष्यं व्याचष्टे ॥ **न यदीत्यादिना** ॥ नन्वस्तु लोकप्राप्तिरेवेत्युक्तिरित्यत आह ॥ **न हीति** ॥ कुत इत्यत आह ॥ **दर्शनेनेतीति** ॥ ऋषीणां बिम्बदर्शनमेव योग्यमिति भावः ।

## वाक्यार्थविवरणम्

**न हीति** ॥ तथात्व एव हि बिम्बरूपविषयं ज्ञानं मोक्षसाधनम्, न यत्किञ्चिद्रूपविषयमिति वक्तुं युज्यत इति भावः ॥ **उक्तविरोधस्स्यादिति** ॥ 'न भेदादिति चेन्न प्रत्येकम् इति भगवद्रूपेष्वविशेषस्योक्तत्वादिति भावः । **साम्येन** समत्वेन तरतमभावशून्यत्वेनेत्यर्थः । सामान्यतो दर्शनेन बिम्बव्यतिरिक्तयत्किञ्चिद्रूपदर्शनेनेत्यर्थः । मृत्युविशेषादनन्तरमिति प्रारब्धकर्मावसाने चरमदेहपातानन्तरमित्यर्थः ॥ **न च तदिति** ॥ सामान्यभगवद्रूपदर्शनस्य वैफल्यायोगात् किञ्चित्फलं वक्तव्यमिति भावः । सम्भवति साधनत्वेनेति शेषः ॥ **एवं सति** ॥ मुक्तिरूपफलाभावकथनेऽपि ॥ **लोकेति** ॥ महरादिलोकेत्यर्थः । **दर्शने** विकल्पाद्बिम्बदर्शनेऽपि स स्यादिति यथा भगवद्रूपज्ञानमध्ये बिम्बज्ञानमेव मोक्षसाधनं न सामान्यज्ञानमिति विकल्प उक्तः, एवं बिम्बदर्शने विम्बज्ञानमध्येऽपि किञ्चिद्बिम्बज्ञानमेव मोक्षसाधनं किञ्चिन्नेत्यपि विकल्पस्स्यादित्यर्थः । भाष्ये 'स्वात्मयोग्यया दृष्ट्या' स्वबिम्बज्ञानेन मुच्यते । नात्र सन्देह इत्युक्त्या न बिम्बदर्शने विकल्प इत्युक्तं भवति । भाष्ये 'नान्येन केनचित्' सामान्यदर्शनेनेत्यर्थः ।

## वाक्यार्थमञ्जरी

**उक्तेति** ॥ 'न स्थानतो' इत्युक्तसर्वरूपाविशेषेत्यर्थः ॥ **ॐ न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः ॐ** ॥ उपलब्धेः सर्वरूपविषयज्ञानस्य सामान्यात्समानत्वात् यत्किञ्चिज्ज्ञानरूपेण मुक्तिरिति न, किं तु रूपविशेषदर्शनेनैव कथं मृत्युवत् । यथा मृतित्वसाम्येऽपि मृतिविशेषादेव मोक्षस्तथा रूपान्तरज्ञानस्य वैफल्यायोगात्तेन यत्फलं भवति सैव मुक्तिरित्यत उक्तम् ॥ **न हीति** ॥ तत्फलं महरादिलोकानामापत्तिः प्राप्तिः न हि सा मुक्तिरित्यर्थः ॥ **दर्शने विकल्पादिति** ॥ किञ्चिन्मूर्तिदर्शनं मुक्तिहेतुः, किञ्चिन्नेति यथा विकल्पः तथा बिम्बदर्शनेऽपि कस्यचिन्मोक्षः, कस्यचिन्नेति विकल्पः स्यादित्यर्थः । अत्रोक्तो बिम्बदर्शननियमो न सर्वेषां किन्तु ये बिम्बदर्शनयोग्या ऋष्यादयस्तेषामेव सर्वेषां बिम्बदर्शनायोग्यत्वात् । यथोक्तमुपासात्रैविध्यादाश्रितत्वादिह तद्योगादिति, 'ऋषयोऽन्तः प्रकाशा' इति श्रुतेश्च । अन्यथा दृष्ट्यैव ह्यवताराणामिति प्रागुक्तविरोधात् । यत्तु येषां बहिरुपासनेन मोक्षस्तेषामपि हृद्युपासनं किञ्चित्कार्यमेवेति बृहदारण्यकभाष्यं तदप्यवतारादि दृष्टिविशेषार्थमेव न तूपास्त्यावश्यकत्वपरं अत एव दृष्ट्यैव ह्यवताराणामित्यत्रांजसेत्युक्तं तथोक्तं काठकभाष्ये । 'प्रादुर्भावानृते विष्णुमिन्द्रियैर्नैव पश्यति । प्रादुर्भावानपि यदा ज्ञानदृष्ट्यैव पश्यति' तदैव मुच्यते योगीति ।

॥ इति न सामान्याधिकरणम् ॥ ३३ ॥

## ३४. ताद्विध्याधिकरणम्

### सूत्रभाष्यम्

'भक्तिरेवैनं नयति भक्तिरेवैनं दर्शयति भक्तिवशः पुरुषो भक्तिरेव भूयसी' इति माठरश्रुतेर्न परमात्मना दर्शनमिति चेन्न। 'तस्यैष आत्मा विशते ब्रह्मधाम' (मुं.उ.३-२-४) इति श्रुतेः। कथं तर्ह्येषा श्रुतिः—

**॥ ॐ परेण चशब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॐ ॥ ५४ ॥**

परमात्मैवं(व) भक्त्या दर्शनं प्राप्य मुक्तिं ददातीति प्रधानसाधनत्वाद्भक्तिः करणत्वेनोच्यते। मायावैभवे च—

'भक्तिस्थः परमो विष्णुस्तयैवैनं वशं नयेत्।
तयैव दर्शनं यातः प्रदद्यान्मुक्तिमेतया॥
स्नेहानुबन्धो यस्तस्मिन्बहुमानपुरस्सरः।
भक्तिरित्युच्यते सैव करणं परमी(मे)शितुः'इति॥

सर्वशब्दानां ब्रह्मणि प्रवृत्तेश्च।

### तत्त्वप्रदीपिका

भक्तेः सर्वसाधनेषु प्राधान्यमुक्तम्। श्रुतिं चाह– 'भक्तिरेवैनं दर्शयति' इत्यादि। अतस्तयैवास्य दर्शनं न परमात्मनेति शङ्कां निराकरोति नेत्यादिना। 'एतैरुपायैर्यतते यस्तु विद्वांस्तस्यैव आत्मा विशते ब्रह्मधाम' इत्याथर्वणी श्रुतिः॥

'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन।
यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्' इति।

पूर्ववाक्योक्तैरुपायैर्यतमानस्य ब्रह्मपुरं हृदयमेष परमात्मा विशते तत्र दृश्यत इत्यर्थः। प्रवेशस्य नित्यसिद्धत्वात्। प्रवचनादिभिर्भक्तिरहितैर्न लभ्यते। भक्तिप्रधानैरपि स्वातन्त्र्यान्न लभ्यः। किन्त्वेतैर्भक्तिप्रधानैरुपायैर्यतमानस्यैवं विदुषो हृदये तदानीं प्रविष्ट इवाभिव्यज्यत इति। कथं तर्ह्येषा

(तत्त्वप्रदीपिका)

भक्तिवशत्वश्रुतिरित्यत आह– परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॥ 'भक्तिरेवैनं नयति भक्तिरेवैनं दर्शयति' इत्यादेः परमात्मैव भक्त्या स्वात्मानं दर्शयति स्वात्मानं प्रापयति चेत्यभिप्रायः । अतः स्वातन्त्र्यं तस्यैव । साधनेषु प्राधान्याद्भक्तेर्भक्तिरेवेत्युच्यते । 'हन्ता रामशर' इतिवत् । अतश्च भक्तिशब्देन परमात्मा भक्त्यधिकरणे भक्तेर्नियामकः प्रोच्यते । तदेव ह्याह– 'भक्तिस्थः परमो विष्णुस्तयैवैनं वशं नयेत्' तद्वशोऽहमिति ज्ञापयेत् ।

'तत्तद्गतस्यैव हरेस्तत्तन्नामानि चाञ्जसा ।
औपचारिकनामानि तदन्येषामिति स्थितिः'इति शब्दनिर्णये ॥

'दानतीर्थतपोयज्ञपूर्वास्सर्वेऽपि सर्वदा ।
अङ्गानि हरिसेवायां भक्तिस्त्वेका विमुक्तये' इति च भविष्यत्पर्वणि ॥

'सर्वस्मादुत्तम इति सम्यक् स्नेहयुता मतिः ।
सुस्थिरा भक्तिरुद्दिष्टा तया मोक्षो न चान्यतः ॥
तया मोक्षो भवत्येव सा चेत्पूर्णा स्वयोग्यतः ।
अपरोक्षदृशा युक्ता सा पूर्णेत्यभिधीयते ॥
अपरोक्षदृशिश्चापि महाचार्योक्तदर्शनम् ।
सोऽपि यन्मोक्षनियतमनसा समुदीरयेत् ।
तस्य दर्शनतो याति मुक्तिं नास्त्यत्र संशयः ॥
ध्यानं च गुरुशुश्रूषा नित्यनैमित्तिकाः क्रियाः ।
तीर्थदानजपाद्याश्च स्वाध्यायो हरिकीर्तनम् ॥
द्वादश्यादिव्रतं चैव तुलस्याद्यैरथार्चनम् ।
सर्वं भक्त्यर्थमुद्दिष्टं निष्फलं तत्तया विना ॥
विष्णुभक्तियुतो मुक्तिं याति नान्यः कथञ्चन ।
एतदन्यत्तु यच्छास्त्रं न तच्छास्त्रं कुवर्त्म तत्'

इति हरिवंशेषु ॥

## तत्त्वप्रकाशिका

अत्र भगवद्दर्शनसाधनोपासनसाहित्येनोक्तभक्तेः स्वातन्त्र्यनिरासादस्ति शास्त्रादिसङ्गतिः । अन्यथाऽव्यक्तत्वाभावप्रसङ्गात्तन्निरसनीयमेव । प्रकृतं ज्ञानमेव विषयः । किं भक्तिसामर्थ्येन भवत्युत

(तत्त्वप्रकाशिका)

**परमात्मनेति सन्देहः । कृष्यादौ राजसेवादौ च तथा दर्शनं सन्देहबीजम् । पूर्वपक्षयति ॥ भक्तिरिति ॥ भक्तिसामर्थ्येनैवापरोक्षज्ञानं न परमात्मप्रसादेन । 'भक्तिरेवैनम्' इति श्रुतौ भक्तेरेव स्वातन्त्र्येण दर्शनादिसाधनत्वदर्शनात् । एवं साधनसामर्थ्यादेव तद्दर्शनात्र तस्याव्यक्तत्वमिति भावः । सिद्धान्तयति ॥ नेति ॥ न भक्तेरेव स्वातन्त्र्येण दर्शनादिसाधनत्वं वाच्यम् । किं तु तया प्रसन्नस्य परमात्मन एव । 'एतैरुपायैर्यतते यस्तु विद्वांस्तस्यैष आत्मा विशते ब्रह्मधाम' इति श्रुतेरित्यर्थः । एतैः प्रवचनाद्युपायैर्यो दर्शनार्थं यतेत(यतते)तस्यार्थे तैः प्रसन्नः परमात्मा ब्रह्मधाम वायुं विशति तस्य तत्राविर्भवतीत्यर्थः । परमात्मनैव चेद्दर्शनं कथं तर्हि भक्तेरेव तत्साधनत्वाभिधायकश्रुतिरुपपद्यत इति शङ्कते ॥ कथमिति ॥ परिहाराय सूत्रं पठित्वा व्याचष्टे ॥ परेण चेति ॥ परमात्मनैव दर्शनादिकं न तु भक्त्या । तथापि भक्तिश्रुतिरुपपद्यते । कथम् । दर्शनमोक्षयोः कर्ता परमात्मा भक्त्यैव करोतीत्यतोऽत्र भक्तेर्दर्शनादौ करणत्वेनोच्यमानत्वात् । न च वाच्यं साधनान्तराण्यनुक्त्वा किं विशिष्याभिधीयते भक्तिरिति । तस्याः साधनेषु प्रधानत्वात् । कर्तृत्वाङ्गीकारे तूक्तविशेषश्रुतिविरोध इति भावः । अत्रैव स्मृतिमाह ॥ मायेति ॥ सैवेत्यस्यापि पूर्ववत्सङ्गतिः । एवं 'हन्ता रामशर' इति करणे कर्तृत्वव्यपदेशदर्शनात्करणार्थत्वेन श्रुतिमुपपाद्य प्रकारान्तरेणाप्युपपादयति ॥ सर्वेति ॥ भक्त्यादिसर्वशब्दानां परब्रह्मणि वृत्तेर्ब्रह्मैवैनं नयतीत्याद्यर्थोपपत्तेश्चोपपन्ना श्रुतिरिति भावः । अनेन परेणैव वाच्येन निमित्तेन शब्दस्य ताद्विध्यं युक्तमिति सूत्रांशस्यार्थान्तरमुक्तं भवति । अतो दर्शनादेः पुरुषशक्तिसाध्यत्वाभावाद्युक्तमव्यक्तत्वं ब्रह्मण इति सिद्धम् ।**

## गुर्वर्थदीपिका

अन्यथाऽव्यक्तत्वाभावप्रसङ्गादित्यत्र स्वतन्त्रसाधनशक्त्यैव दर्शने घटादिवद्विष्णोरव्यक्तत्वाभावप्रसङ्गादित्यर्थः । 'परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः' इति सूत्रस्यैवं योजना । चशब्द एवार्थे । परेण परमात्मनैव दर्शनं न तु केवलं भक्तिसामर्थ्येन । तर्हि 'भक्तिरेवैनं नयति' इति श्रुतेः का गतिरित्यत उक्तं 'भूयस्त्वात्त्वनुबन्ध' इति । दर्शनसाधनेषु भूयस्त्वात् प्रधानत्वात् तु एव अनुबन्धः भक्तिः । 'हन्ता रामशर' इति वत् करणे कर्तृत्वोपचाराद्भक्तिः 'भक्तिरेव' इति श्रुतौ कर्तृतया विशिष्य चोच्यते । किञ्च 'नामानि सर्वाणि' इति श्रुत्या 'भज सेवायाम्' इति धातोः कर्मणि क्तिन्प्रत्ययकरणेन च भक्तिर्भगवानित्यभिप्रेत्योक्तं शब्दस्य ताद्विध्यमिति । शब्दस्य भक्तिशब्दस्य ताद्विध्यं तस्य नारायणादिनामसमूहस्य विधा प्रकारो यस्य स तद्विधस्तस्य

(गुर्वर्थदीपिका)

भावस्ताद्विध्यं यतस्तस्माच्च 'भक्तिरेवैनम्' इति श्रुतिः प्रवृत्तेति । अस्यैव तात्पर्यकथनं भाष्ये परमात्मैवेत्यादि ।

## भावबोधः

**स्वातन्त्र्यनिरासादिति** ॥ ईश्वरप्रसादाद्वारकत्वनिरासादित्यर्थः । एवं पूर्वाधिकरणैः अधिकारिभेदेन व्यवस्थितापरोक्षज्ञानस्य भक्तिसाध्यत्वे निर्णीते तस्याः स्वातन्त्र्येण तत्साधनत्वं निरस्यत इत्यनन्तरसङ्गतिरिति भावः ॥ **किमित्यादि** ॥ अत्र भक्तिः किं स्वातन्त्र्येणापरोक्ष-ज्ञानसाधनं उत परमात्मनः प्रसादद्वारेति चिन्ता । तदर्थं 'भक्तिरेवैनं नयति' इति श्रुतिः भक्तेः स्वातन्त्र्येण ज्ञानसाधनप्रतिपादिका भवत्युत न भवतीति । तदर्थं सा श्रुतिः किं निरवकाशोत सावकाशेति । तदर्थं भक्तेः परमात्मप्रसादद्वारा ज्ञानसाधनत्वे प्रमाणं नास्त्युतास्तीति । 'तदव्यक्त-माह हि' इत्यनेन गतार्थताशङ्कापरिहारायाभ्यधिकाशङ्काप्रदर्शनार्थं भाष्ये 'भक्तिरेवैनं' इति श्रुत्युदाहरणमित्यभिप्रेत्य तद्व्याचष्टे– **भक्तिसामर्थ्येनैवेति** ॥ अनेन 'भक्तिरेवैनम्' इति भक्तेरेव पृथङ्नोचकत्वप्रदर्शनान्नेशकृत्यमिति न्यायविवरणमपि व्याख्यातं भवति । अत्र सूत्रे 'च'शब्दः एवार्थः । दर्शनादिकमिति शेष इत्यभिप्रेत्याह– **परमात्मन एवेति** ॥ आदिपदेन मुक्तिः । अनेन परमात्मा एवं दर्शनं प्राप्य मुक्तिं ददातीति भाष्यं सूत्रतात्पर्यकथनपरमित्युक्तं भवति । सौत्रः 'च' शब्दः अप्यर्थश्च । अपि तथापि शब्दस्य भक्तिरेवैनमिति श्रुतेस्ताद्विध्यं युक्तमिति सूत्रांशयोजना-मभिप्रेत्याह– **तथापीति** ॥ कथमित्यतस्तदुपपादकत्वेन परमात्मैव भक्त्या दर्शनं प्राप्य मुक्तिं ददातीति भक्तिः करणत्वेनोच्यत इति प्रवृत्तं भाष्यं व्याचष्टे– **दर्शनमोक्षयोरिति** ॥ अनेन 'भक्त्यैव' इति एवकारसम्बन्धः । 'इति'शब्दस्य हेत्वर्थकथनत्वेनोच्यत इत्यनेनापि सम्बन्धः । 'यतः' शेषो वेत्युक्तं भवति । 'भूयस्त्वानुबन्धः' इति सूत्रांशव्याख्यानपरं प्रधानत्वाद्भक्तिरिति भाष्यं तन्निवर्तनीयाशङ्कानिरासपूर्वकं व्याचष्टे– **न च वाच्यमित्यादिना** ॥ तथा च सूत्रे 'अनुबन्धस्तु' इति सम्बन्धः । भाष्ये तु प्रधानत्वाद्भक्तिरेव करणत्वेनोच्यते, न तु साधनान्तरा-णीति; एवकारसम्बन्ध इति भावः । **स्मृतिमाहेति** ॥ उपलक्षणमेतत्–

'अनादितो गुणाः सन्तो भक्त्याद्या न ह्यमूमुचन् ।'

(भाववोधः)

इत्यादि न्यायविवरणोदाहृतमपि स्मृतिवाक्यं ग्राह्यम् ॥ **सैवेत्यस्यापीति** ॥ कथं तर्हि 'भक्तिरेवैनं' इति श्रुतिरित्यतो वा साधनान्तराण्यनुक्त्वा किं विशिष्य भक्तिरेव कारणत्वेनोच्यत इत्यतो वा 'सैवेत्युक्तं' इति पूर्ववत् सङ्गतिरित्यर्थः ।

अत्राद्ये– सा भक्तिः करणमेवेति 'एव' शब्दसम्बन्धः । द्वितीये– सैव मुख्यं न त्वन्यदित्यर्थ इति ज्ञातव्यम् ।

## भावदीपः

भक्तेः स्वातन्त्र्यनिरासस्य पादानन्तर्भावमाशङ्क्योक्तम् ॥ **उपासनासाहित्येनोक्तेति** ॥ अनुबन्धादिभ्य इत्यत्रोक्तेत्यर्थः ॥ **स्वातन्त्र्येति** ॥ भगवत्प्रसादनैरपेक्ष्येणेत्यर्थः ॥ **अन्यथेति** ॥ प्रसादनिरपेक्षेणोपासनासहितभक्तिमात्रेण भगवद्दर्शन इत्यर्थः । तदव्यक्तमाह हीत्युक्ताव्यक्तत्वेत्यर्थः ॥ **कृष्यादाविति** ॥ कृष्यादौ राजादिप्रसादनैरपेक्ष्येण फलोदयो दृष्टः । राजसेवादौ च राजप्रसादद्वारा फलोदयो दृष्ट इत्यर्थः । भाष्ये न परमात्मनो दर्शनमित्यस्य परमात्मविषयापरोक्षज्ञानं परमात्मनः प्रसादेन न भवति किं तु भक्तिसामर्थ्येनेत्यर्थमुपेत्य व्युत्क्रमेण भाष्यं व्याचष्टे ॥ **भक्तिसामर्थ्येनैवेत्यादिना** ॥ प्रसादेनेति शेषोक्तिः । न परमात्मनो दर्शनमव्यक्तत्वमित्यपि भाष्यार्थं मत्त्वा प्रागुक्तार्थं हेतूकृत्य पूर्वाक्षेपरूपं फलमाह ॥ **एवमिति** ॥ **न तस्येति** ॥ घटादेरिवेति भावः । भाष्ये नेत्यनन्तरं न परमात्मनो दर्शनमितीति पूर्ववाक्यमनुवर्त्य तत्तात्पर्यार्थमाह ॥ **न भक्तेरेवेति** ॥ आदिपदेन मुक्तिः । भाष्ये श्रुतेरित्युक्तावपि भक्तेरेव पृथङ्नोचकत्वदर्शनादिति न्यायविवरणोक्त्यनुरोधेनेयमुक्तिः । तस्येत्याथर्वणवाक्ये विवक्षितार्थस्यास्फुटत्वात्पूर्वशेषमाह ॥ **एतैरिति** ॥ 'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यः' इत्यादिपूर्ववाक्योक्तप्रवचनभक्त्यादिप्रकृतपरामर्शित्वमुपेत्य श्रुत्यर्थमाह ॥ **एतैरित्यादिना** ॥ 'प्रधानं धाम विष्णोस्तु प्राण एव प्रकीर्तितः । उपायैर्यो विजानीयात्प्राणस्थं परमेश्वरम्' इत्याथर्वणभाष्योक्तेरिति भावः । सूत्रे प्रकृतत्वाद्दर्शनादिपदान्वयमुपेत्य परेण च दर्शनादीति सूत्रांशस्यार्थमाह ॥ **परमात्मनैवेति** ॥ **दर्शनादिकमिति** ॥ मुक्तिरादिपदार्थः । उक्तसूत्रांशस्य तात्पर्यार्थोक्तिपरं परमात्मैवेत्यादिभाष्यं साध्याध्याहारपूर्वं हेतुत्वेन व्याचष्टे ॥ **तथापीति** ॥ परमात्मन एव दृष्ट्यादिहेतुत्वेऽपीत्यर्थः । भक्त्यैवेति भाष्यस्थैवकारो भिन्नक्रम इति भावः ।

(भावदीपः)

भाष्यस्थेतिपदं हेत्वर्थं मत्त्वोक्तमित्यत इति । अत्रेति शेषोक्तिः । श्रुतावित्यर्थः । प्रधान-साधनत्वादित्यंशं व्यावर्त्यपूर्वं व्यनक्ति ॥ **न च वाच्यमिति** ॥ साधनत्वहेतोरसिद्धिमाशङ्क्याह ॥ **कर्तृत्वेति** ॥ **उक्तेति** ॥ एतैरुपायैरित्युक्तेत्यर्थः । विशेषेत्युक्त्या निरवकाशत्वेन भक्तिरेवेति श्रुतितो बलवत्तोच्यते ॥ **अत्रैवेति** ॥ परमात्मैवेत्यादिभाष्योक्तार्थ एवेत्यर्थः । स्मृतावेनं विष्णुं स्वात्मानमेवेत्यर्थः । वशं नयेत् । वशोऽहमिति ज्ञापयेदिति तत्वप्रदीपोक्तार्थः । दर्शनादौ हरेरेव कर्तृत्वे कथं भक्तिरेवेति श्रुतिः कथं च साधनान्तराण्यनुक्त्वा भक्तेरेवोक्तिरित्यतः स्मृतौ सैव करणमीशितुरित्युक्तमिति ज्ञेयमित्याह ॥ **सैवेत्यस्यापीति** ॥ पूर्ववत् प्रधानसाधनत्वात्करण-त्वेनोच्यत इत्यस्यैवेत्यर्थः । तत्र करणमित्यनेनाद्यचोद्यस्य निरासोऽन्त्यस्य तु सैव परं करणमिति परपदेनेति ध्येयम् । भक्तेः प्राधान्यं च 'तीर्थदानतपोयज्ञपूर्वाः सर्वेऽपि सर्वदा । अङ्गानि हरिसेवायां भक्तिस्त्वेका विमुक्तये' इति । सर्वस्मादुत्तम इति सम्यक्स्नेहयुता मतिः । सुस्थिरा भक्तिरुद्दिष्टा तया मोक्षो न चान्यत इत्याद्यनेकवचनैः बृहद्भाष्ये प्रथमाध्याये विवृतम् ॥ **परब्रह्मणि वृत्तेरिति** ॥ प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधादित्यत्र सैषा प्रकृतिरित्यादिश्रुतिगतस्त्रीलिङ्गप्रकृत्यादिशब्दानामिव भक्तिशब्दस्यापि ब्रह्मणि वृत्तेरित्यर्थः । यद्वा भक्तिस्थः परमो विष्णुरिति भक्तिस्थत्वोक्त्या 'तत्तद्गतस्यैव हरेस्तत्तन्नामानि चांजसा । औपचारिकनामानि तदन्येषामिति स्थितिः' इति स्मृत्युक्तदिशा शरीररूपकविन्यस्तगृहीतेरिति न्यायेन ब्रह्मणि वृत्तेरित्यर्थः । भाष्यं सूत्रारूढं करोति ॥ **अनेनेति** ॥ **अत इति** ॥ श्रुतेरन्यपरत्वेनेशप्रसादैकसाध्यत्वाद्दर्शनादेरित्यर्थः ।

## अभिनवचन्द्रिका

परेणैव मोक्षो न भक्त्या । कथं तर्हि 'भक्तिरेवैनं मोचयति' इति श्रुतेः भक्तिप्राधान्य-प्रतिपादकत्वमित्यत उक्तम् – **शब्दस्य ताद्विध्यमिति** ॥ यतः अनुबन्धः साधनेषु भूयस्त्वा-त्करणम्, अतः शब्दस्य श्रुतेः, ताद्विध्यं 'भक्तिरेवैनं मोचयति' इत्येवं रूपत्वमुपपन्नम् । 'हन्ता रामशर' इत्यादौ करणे कर्तृत्वव्यवहारस्य बहुलमुपलम्भादिति सूत्रार्थः । कृष्यादाविति । कृष्यादौ स्वव्यापारे फलोत्पत्तौ प्राधान्यदर्शनम् । राजसेवादौ स्वव्यापारे राजप्रसादाङ्गत्वेन अप्राधान्यदर्शनम् सन्देहबीजमित्यर्थः ॥ **सैवेत्यस्यापीति** ॥ 'सैव करणं परमेशितुः' इति प्रमाणशेषस्य, पूर्ववत् सूत्रे 'शब्दस्य ताद्विध्यम्' इत्यंशस्येव सङ्गतिर्द्रष्टव्येत्यर्थः । तथा हि । ननु यदि परमात्मैव मोक्षं

(अभिनवचन्द्रिका)

ददाति, कथं तर्हि 'भक्तिरेवैनं मोचयति' इति श्रुतिरित्यत आह भाष्ये सैव करणं परमेशितुरिति । परमात्मनः कर्तृत्वेऽपि भक्तेः कारणत्वात्, करणे कर्तृत्वोपचारस्य बहुळमुपलम्भात्, 'भक्तिरेवैनं मोचयति' इति श्रुतिरुपपन्नेति भाव इति ।

पूर्वपक्षस्तु– भक्त्यैवापरोक्षज्ञानं न परमात्मप्रसादेन । भक्तिरेवैनं मोचयति' इति श्रुतेः । ततश्च साधनसामर्थ्येनैव दर्शनसम्भवान्न तस्याव्यक्तत्वमिति ।

सिद्धान्तस्तु– भक्त्या प्रसन्नपरमात्मनैवापरोक्षज्ञानम् । 'एतैरुपायैर्यतते यस्तु विद्वान् तस्यैष आत्मा विशते ब्रह्मधाम' इति श्रुत्या स्वेच्छयैव भक्तापरोक्षसिध्यर्थं, ब्रह्मधामशब्दवाच्यवायु-प्रवेशोक्तेः । न च पूर्वश्रुतिविरोधः भगवत्प्रसादसाधनेषु भक्तेः प्राधान्याभिप्रायेण 'भक्तिरेवैनं मोचयति' इत्यभिधानात् । अतो दर्शनादेः पुरुषसाध्यत्वाभावात् युक्तमव्यक्तत्वं ब्रह्मणः इति सिद्धम् ।

## वाक्यार्थमुक्तावली

पूर्वाधिकरणे ईश्वरः प्रसन्नो बिम्बभूतमात्मानं प्रदर्श्य मोचयतीत्युक्तं समोऽपि भगवान् स्वबिम्बदर्शन एवैनं मोचयतीति । तद्युक्तम् । ज्ञानमोक्षयोः भक्त्यायत्तत्वादित्याक्षेपोत्था-नादनन्तरसङ्गतिः ॥ **साहित्येनेति** ॥ साहित्येनानुबन्धादिभ्य इत्यत्रोक्तभक्तेरित्यर्थः ॥ **स्वातन्त्र्य-निरासादिति** ॥ ईश्वरप्रसादाद्वारकत्वनिरासादित्यर्थः । **अन्यथेति** ॥ साधनसामर्थ्येन प्रत्यक्षत्व इत्यर्थः ॥ **किमिति** ॥ ज्ञानं किं भक्तिसामर्थ्येनोत परमात्मनेति चिन्ता । तदर्थं भक्तिरेवैनमिति श्रुतिः किं भक्तेः स्वतन्त्रकारणत्वपरोत कारणत्वपरत्वेन भगवत्परत्वेन वा सावकाशेति ॥ **कृष्यादाविति** ॥ कृष्यादौ पुरुषप्रयत्नादेव फलं तेन प्रसन्नदेवतया । राजसेवादौ तु सेवया प्रसन्नेनैव फलमित्युभयथा दर्शनमित्यर्थः । अत्र पृथग्दृष्टिरित्युक्तन्यायं पृथगीश्वरप्रसादं विना भक्तिसामर्थ्येनैव दर्शनादिकमिति श्रुतेर्न परमात्मना दर्शनादीत्यर्थतया प्रदर्शयद्भाष्यं व्याचष्टे ॥ **भक्तिसामर्थ्येनेति** ॥

यद्वा ननु तदव्यक्तमाह हि इत्यत्रापि संराधन इति दर्शनस्य पुरुषप्रयत्नस्य अतोऽनन्तेनेति प्रसादसाध्यत्वस्य चोक्तत्वान्न पुनः शङ्कावकाश इत्यतः पृथग्दृष्टिरिति न्यायं पृथक् साधनान्तर-वैलक्षण्येन भक्तिरेवेति भक्तेरपरोक्षादिहेतुत्वावधारणाच्छ्रवणपूजादिसंराधनासाध्यत्वेऽपि भक्ति-

(वाक्यार्थमुक्तावली)

साध्यत्वमस्त्वित्यभ्यधिकाशङ्काप्रदर्शकत्वेन व्याकुर्वन्भाष्यं व्याचष्टे ॥ **भक्तिसामर्थ्येनेति** ॥ यद्वा ननु व्यतिरेकानवस्थितेश्चानपेक्षत्वादितीश्वरव्यतिरेकेण कस्यापि कर्मणोऽनवस्थानोक्तेः कथं भक्तेरेव ज्ञानहेतुत्वम् । श्रुतिस्तु तेजोऽधिकरणन्यायेन द्वारकारणत्वपरा भविष्यति । समन्वयाध्यायोक्तरीत्या भगवत्परा वेति पुनर्गतार्थतेत्यतः पृथग्दृष्टिरिति न्यायं द्वारकारणान्तराणां श्रवणादीनां विद्यमानत्वेऽपि पृथक् भक्तिरेवेति दृष्टेः श्रुतेः भगवद्वाचकशब्दान्तरे विद्यमानेऽपि पृथग्विशिष्यभक्तिरेवैनमिति दृष्टेः श्रुतेः, न द्वारकारणत्वपरत्वेन वा भगवत्परत्वेन वा सावकाशत्वमिति न परमात्मनो दर्शनादिकमित्यर्थकतया प्रदर्शयन् भाष्यं व्याचष्टे ॥ **भक्तिसामर्थ्येनेति** ॥ एतैः प्रवचनाद्यैरिति । भक्तिपूर्वकप्रवचनाद्यैरित्यर्थः । अथर्वणे तत्पूर्ववाक्ये 'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन' इति भक्तिहीनप्रवचनादेर्न ज्ञानहेतुत्वं किन्तु 'यमेवैष वृणुते तेन लभ्यः' यमधिकारिणमेष परमात्मा वृणुते तेन भक्तिमता प्रवचनादिसाधनैः लभ्य इति भक्तिपूर्वकप्रवचनादेः प्रस्तुतत्वादिति भावः ।

सूत्रे चशब्द एवार्थः । दर्शनमोक्षयोः प्रकृतत्वात् दर्शनादिकमित्यन्वेतीति भावेन व्याचष्टे ॥ **परमात्मनैवेति** ॥ एतेन परमात्मैव दर्शनादिकं प्राप्य मुक्तिं ददातीति भाष्यांशो व्याख्यातो भवति । सौत्रश्चशब्दोऽप्यर्थश्च । अपि तथापिशब्दस्य भक्तिरेवैनं नयतीति श्रुतेः ताद्विध्यं तद्विधत्वं भक्तेर्दृष्टिं प्रति कर्तृत्वप्रतिपादकत्वमिति सूत्रांशयोजनामभिप्रेत्याह ॥ **तथापीति** ॥ एतेन भक्तिरुच्यत इति भाष्यांशः भक्तिः श्रुतावुच्यते भक्तिरेवेति श्रुतिरुपपद्यत इति व्याख्यातो भवति ॥ **कथमिति** ॥ यदि परमात्मैव दर्शनादिकं न तु भक्त्या स्वतन्त्रया कथं तर्हि भक्तिरेवेति भक्तेः कर्तृत्वश्रुतिरुपपन्ना विरोधादिति भावः । तत्परिहाराय शब्दस्य ताद्विध्यमित्यावर्तते । चशब्दो यस्मादित्यर्थे । अनुबन्धेनेति विपरिणम्यान्वेति । परेण दर्शनादिकमिति च । ततश्च यस्मात् परेण कर्त्रा अनुबन्धेन भक्त्यैव दर्शनादिकं भवति अतः शब्दस्य भक्तिरेवेति श्रुतेः ताद्विध्यं तद्विधत्वमेतैरुपायैः श्रुतिसमानत्वभक्तेः करणत्वप्रतिपादकत्वम् । अतः करणे कर्तृत्वोपचारा श्रुतिरुपपद्यत इति सूत्रार्थं हृदि निधाय प्रवृत्तं परमात्मैवेत्यादिसमग्रभाष्यं प्रधानत्वादित्यंशं विहाय व्याचष्टे ॥ **दर्शनमोक्षयोरिति** ॥ अनेन भाष्ये भक्त्यैवेत्येवकारसम्बन्ध इति शब्दस्य हेत्वर्थकस्य यथाश्रुतमुच्यत इत्यनेनापि सम्बन्ध इत्युक्तं भवति । भूयश्चाननुबन्ध इति सूत्रांशव्याख्यापरं प्रधानसाधनत्वाद्भक्तिरेव कारणत्वेनोच्यत

(वाक्यार्थमुक्तावली)

इति भाष्यं तन्निवर्तनीयाशङ्कानिरासपूर्वं व्याचष्टे ॥ **न च वाच्यमित्यादिना** ॥ तथा च सूत्रेऽनुबन्धस्त्विति तुशब्दसम्बन्धः । भाष्ये तु प्रधानसाधनत्वाद्भक्तिरेव कारणत्वेनोच्यते न तु साधनान्तराणीत्येवकारसम्बन्ध इति भावः । **अत्रैव स्मृतिमिति** । अनादिगुणविस्तर इति न्यायं सूचयन्निति पूरणीयम् । भक्तिस्थो भक्तिनामकः परमो विष्णुरनादिभूतया स्वानुग्रहेणेषद्व्यक्त्या तया भक्त्या करणेनैनं जीवं स्वाभिमुखं कुर्यात् । यद्वा परमात्मवशोऽहमिति ज्ञापयेत् । ततः परं पुनरधिकप्रसादेनाभिव्यक्त्या दर्शनं ययाऽतः पुनरभिव्यक्त्या एतया भक्त्या मुक्तिं प्रदद्यादिति । अनादितो विद्यमानस्य भक्त्यादिगुणस्य भगवत्प्रसादेन क्रमेणाभिवृद्धस्यैव करणतया मुक्तिहेतुत्वस्योक्तत्वेन स्वतः सामर्थ्याभावादिति भावः । तदुक्तं न्यायविवरणे । 'अनादितो गुणाः सन्तो भक्त्याद्या न ह्यमूमुचन् । जीवं तद्गुणसुव्यक्तिं कृत्वैनं मोचयेद्धरिः' इति । सैव इत्यस्यापीति । कथं तर्हि भक्तिरेवैनमिति श्रुतिरित्यतो वा साधनान्तराण्यनुक्त्वा किं विशिष्य भक्तिरेव करणत्वेनोच्यत इत्यतो वा सैवेत्युक्तमिति पूर्ववत्सङ्गतिरित्यर्थः ।

अत्राद्ये सा भक्तिः करणमेवेत्येव सम्बन्धः । द्वितीये सैव मुख्यं करणं न त्वन्यदित्यर्थ इति ज्ञातव्यम् ॥ **सूत्रांशस्येति** ॥ ननु भगवद्वाचकं साधनान्तरवाचकं च शब्दान्तरं विहाय भक्तिशब्देन तदुक्तौ किं कारणमित्यतः प्रधानसाधनवाचकत्वात् भक्तिशब्दस्य शरीररूपकविन्यस्तगृहीतेरिति न्यायेन तत्रस्थभगवद्ग्रहणायोपादानमिति भूयस्त्वात्त्वनुबन्ध इत्यनेन सुगममिति सूत्रांशस्यार्थान्तरमुक्तमिति भावः । अत एव भक्तिस्थः परमो विष्णुरित्युक्तम् । तत्वप्रदीपे च भक्तिनामक इत्युक्तम् ।

## तत्त्वसुबोधिनी

**स्वातन्त्र्यनिरासादिति** ॥ ईश्वरप्रसादाद्वारकत्वनिरासादित्यर्थः । एवं पूर्वाधिकरणैरधिकारिभेदेन व्यवस्थितापरोक्षज्ञानस्य भक्तिसाध्यत्वे निर्णीते तस्य स्वातन्त्र्येण तत्साधनत्वं निरस्यत इत्यनन्तरसङ्गतिरिति भावः ॥ **अन्यथेति** ॥ सामर्थ्येन व्यक्तत्वे स्वतः परमात्मनो व्यक्तत्वं न स्यादित्यर्थः ॥ **तथा दर्शनमिति** ॥ कृष्यादिकं स्वसामर्थ्येनापि सफलं भवति परमात्मनाप्येवं राजसेवादिकमपि स्वसामर्थ्येनापि सफलं राजसेवयापीत्यर्थः । तदव्यक्तमाह हीत्यनेन गतार्थताशङ्कापरिहाराय भाष्ये भक्तिरेवैनं नयति इति श्रुत्युदाहरणमित्यभिप्रेत्य तद्व्याचष्टे ॥ **भक्तिसामर्थ्ये-**

(तत्त्वसुबोधिनी)

**नेवेति** ॥ अत्र सूत्रे चशब्द एवार्थः । दर्शनादिकमिति शेष इत्यभिप्रेत्याह ॥ **परमात्मनैवेति** ॥ आदिपदेन **मुक्तिः** ॥ अनेन परमात्मैव भक्त्या दर्शनं प्राप्य मुक्तिं ददातीति भाष्यं सूत्रतात्पर्य-कथनपरमित्युक्तं भवति । **सौत्रश्चशब्द** अप्यर्थः अपि तथापि शब्दस्य भक्तिरेवैनमिति श्रुतेस्ताद्विध्यं युक्तमिति सूत्रांश योजनामभिप्रेत्याह ॥ **तथापीति** ॥ कथमित्यतस्तदुपपादकत्वेन परमात्मैव भक्त्या दर्शनं प्राप्य मुक्तिं ददातीति मुक्तिकारणत्वेन उच्यत इति प्रवृत्तं भाष्यं व्याचष्टे । **दर्शनमोक्षयो-रिति** ॥ अनेन भक्त्यैवेत्येवकारसम्बन्ध इतिशब्दस्य हेत्वर्थकत्वेन उच्यते इत्यनेनापि सम्बन्ध इत्युक्तं भवति । भूयस्त्वात्त्वनुबन्ध इति सूत्रांशव्याख्यानपरं प्रधानसाधनत्वाद्भक्तिरिति भाष्यं तन्निवर्तनीयाशङ्कापरिहारपूर्वकं व्याचष्टे ॥ **न च वाच्यमित्यादिना** ॥ तथा च सूत्रे अनुबन्ध-स्त्विति सम्बन्धः । भाष्ये तु प्रधानाद्भक्तिरेव कारणत्वेनोच्यते इति न तु साधनान्तराणीत्येवकार-सम्बन्धः । **सैवेत्यस्यापि इति** ॥ कथं तर्हि भक्तिरेवैनमिति श्रुतिरित्यतो वा साधनान्तराण्यनुक्त्वा किं विशिष्य भक्तिरेव कारणत्वेनोच्यत इत्यतो वा सैवेत्युक्तमिति पूवसङ्गतिरित्यर्थः । आद्ये सा भक्तिः कारणमेवेत्येवशब्दसम्बन्धः । द्वितीये सैव मुख्यं न त्वन्यदित्यर्थ इति वाच्यम् । अनेनैवेति प्रकारान्तरेण श्रुत्युपपादनेनेत्यर्थः सूत्राक्षरार्थस्तु चशब्द एवार्थः । एवं च परेणैव परमात्मनैवदर्शनादिकं भवतीति सम्बन्धः । चः अप्यर्थे । तथापि शब्दस्य ताद्विध्यं तादृशार्थ-प्रतिपादकत्वं स्वातन्त्र्येण साधनत्वाप्रतिपादकत्वं युक्तं परमात्मदर्शनोक्तेः मुख्यतः कारणत्वेनोच्य-मानत्वात्तथापि साधनान्तराण्यपहाय किं भक्तिरेव विशिष्याभिधीयत इत्यत उक्तं अनुबन्धस्तु भक्तिस्तु भूयस्त्वात् प्रधानत्वादिति विशिष्योच्यते । यद्वा परेणैव वाच्येन निमित्तेन भक्तिरेवैनमिति शब्दस्य ताद्विध्यं स्वातंत्र्येण कर्तृत्वप्रतिपादकत्वं युक्तमित्यर्थः ।

## वाक्यार्थविवरणम्

**उपासनसाहित्येनोक्तेति** ॥ उपासनं प्रति सहकारित्वेनोक्तभक्तिरित्यर्थः ॥ **स्वातन्त्र्येति** ॥ भगवदपरोक्षज्ञानादिजनन इत्यर्थः । अव्यक्तत्वेऽपि भक्तेरेव स्वातन्त्र्ये भक्तिरूपपुरुषप्रयत्नेनैव भगवतो व्यक्तत्वप्राप्त्या 'तदव्यक्तमाह हि' इत्यत्रोक्तमव्यक्तत्वं न स्यादित्यर्थः ॥ **कृष्यादाविति** ॥ धान्यादिरूपफलं कर्षणादिसाधनसामर्थ्येनैव दृष्टम् । भृत्येन राजसेवादौ कृते सति धनप्राप्तिरूपं फलं प्रसन्नेन राज्ञैव भवदृष्टम् । ज्ञानमपि फलम् । अतस्तत्किं भक्तिरूपसाधनसामर्थ्येनैव भवति

(वाक्यार्थविवरणम्)

उत प्रसन्नेन परमात्मनैवेति सन्देह इत्यर्थः । 'भक्तिरेवैनम्' इति श्रुतिः (श्रुताः) भक्तिरेवैनं जीवं प्रति एनं परमात्मनं दर्शयति भक्तिरेवैनं जीवं एनं परमात्मानं नयति प्रापयति । पुरुषः हरिर्भक्तिवशः भक्तिपराधीन इत्यर्थः । प्रवचनं व्याख्यानम् । आदिपदेन भक्त्यादिपरिग्रहः । तस्यार्थं तदर्थं तद्दर्शनार्थमित्यर्थः । तत्र वायुरूपाधिष्ठाने । तस्य अधिकारिणः । सर्वैरपि वासनामयी मूर्तिर्ध्यातव्या । तदन्तस्तदाकारा मुख्यप्राणमूर्तिर्ध्यातव्येति । 'प्रतिमां प्रतिमान्तस्स्थाम्' इत्यादिना तन्त्रसारे स्पष्टम् । अतो वायुरूपाधिष्ठाने आविर्भवतीत्युक्तं युक्तमिति ज्ञातव्यम् । करोति दर्शनमोक्षौ जीवस्य ददातीत्यर्थः । अत्र 'भक्तिरेवैनम्' इति श्रुतौ । तथा च हन्ता रामशर इतिवत् करणे कर्तृत्वोपचार इति भावः ॥ **उक्तविशेषश्रुतीति** ॥ एतैरुपायैर्यतते इति प्रवचन-भक्त्याद्युपायानां करणत्वाभिधायकविशेषश्रुतीत्यर्थः । भाष्ये भक्तिस्थः भक्तिविषयः । परमः विष्णुः तयैव भक्त्यैव एनं जीवं वशं स्ववशम् । नयेत् प्रापयेत् । स्ववशं कुर्यादित्यर्थः । यातः प्राप्तः सन् ॥ **पूर्ववदिति** ॥ परमात्मन एव दर्शनादिकर्तृत्वे कथं तर्हि भक्तेरेव तत्साधनत्वाभि-धायकश्रुतिरुपपद्यत इत्यत आह– **सैवेति** ॥ दर्शनादिकं विष्णुर्भक्त्यैव करोतीत्येवं ईशितुः विष्णोः सा भक्तिः करणमेव । अन्तःकरणे कर्तृत्वोपचारेण श्रुतिरुपपन्ना । साधनान्तराण्यनुक्त्वा किं भक्तिरेव विशिष्याभिधीयत इत्यतः परमित्युक्तम् । प्रधानकरणमित्यर्थः । तथा च प्रधानसाधनत्वा-द्विशिष्य तदुक्तिरिति पूर्ववत्सङ्गतिरित्यर्थः । तथा च सूत्रे चशब्द एवार्थोऽप्यर्थश्च । दर्शनादिकं भवतीति शेषः । एवं च परेणैव परमात्मनैव दर्शनादिकं भवति, न भक्त्या । अपि तथापि शब्दस्य 'भक्तिरेवैनम्' इति श्रुतेः ॥ **ताद्विध्यम्** ॥ मोक्षप्रतिपादकत्वं युज्यते । परमात्मैव भक्त्या दर्शनादि करोतीति करणे कर्तृत्वोपचाराङ्गीकारात् । 'हन्ता रामशरः' इतिवत् । साधनान्तराण्यनुक्त्वा विशिष्य भक्तिः कस्मादुच्यत इत्यत उक्तम् **भूयस्त्वादिति** ॥ अनुबन्धः भक्तिरितरसाधनान्तराणि विहाय विशिष्योच्यते । भूयस्त्वात् साधनेषु प्रधानत्वादिति सूत्रार्थः । एवं सति 'भक्तिरेवैनमिति श्रुत्यर्थः कथमित्यत उक्तम् 'ब्रह्मैवेनं नयति' इत्यादीति । वाच्येन भक्तिशब्दवाच्येन शब्दस्य ताद्विध्यं 'भक्तिरेवैनम्' इति श्रुतेः स्वातन्त्र्येण दर्शनादिकर्तृत्वप्रतिपादकत्वमित्यर्थः ॥ **पुरुपशक्तीति** ॥ भक्त्यादिरूपपुरुषप्रयत्नेनेत्यर्थः ।

## वाक्यार्थमञ्जरी

**स्वातन्त्र्यानिरासादिति** ॥ भगवत्प्रसादाद्वारकत्वनिरासादित्यर्थः ॥ **अव्यक्तत्वाभावेति** ॥ भक्तिसामर्थ्येनैव दृष्टत्वादिति भावः ।

ॐ परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॐ ॥ ज्ञानं परेण च परमात्मनैव भवति न भक्त्या तर्हि 'भक्तिरेवैनम्' इति श्रुतेः का गतिरित्युक्तम् ॥ **शब्दस्य ताद्विध्यमिति** ॥ शब्दस्योक्तश्रुतेस्ताद्विध्यं तु भक्तिहेतुत्वप्रतिपादकत्वं भक्तेः करणत्वादुपपन्नम् । साधनान्तरत्यागेन भक्तेरेवत्युक्तिः कुत इत्यत उक्तम् ॥ **भूयस्त्वात्त्वनुबन्ध इति** ॥ अनुबन्धस्तु भक्तिस्तु करणेषु भूयस्त्वात्प्रधानत्वादुक्त इत्यर्थः ॥ **सैवेत्यस्यापीति** ॥ साधनान्तराण्यनुक्त्वा किं विशिष्य भक्तिरेव करणत्वेनोच्यत इत्यतः सैवेत्युक्तमिति पूर्वसङ्गतिरित्यर्थः । तथा च सैव मुख्यं न त्वन्यदित्यर्थः ।

॥ इति ताद्विध्याधिकरणम् ॥ ३४ ॥

## ३५. एकाधिकरणम्

### सूत्रभाष्यम्

जीवांशानां पृथगुत्पत्तेर्नानादियोग्यतापेक्षेति न मन्तव्यम् । कुतः ?

**॥ ॐ एक आत्मनश्शरीरे भावात् ॐ ॥ ५५ ॥**

**अंशांशिनोरेकत्वमेव । अंशिकर्म(वि)निर्मितशरीर एवांशस्य भावात् ।**

### तत्त्वप्रदीपिका

उपासनाभेदवद्दर्शनभेदः सुखतारतम्यं च प्रतिपुरुषं योग्यताविशेषादित्युक्तम् । सा चानादिरिति युक्तम् । अन्यथा कदाचिदसुखादीनामपि मोक्षित्वापातात् । तस्य च श्रुतिभिर्निषेत्स्यमानत्वात् । न चानादित्वं नियन्तुं शक्यते । जीवांशानां पश्चादुत्पद्यमानानां भिन्नत्वोपपत्तेः । तेषु योग्यतायाः सादित्वादित्यत आह– एक आत्मनः शरीरे भावात् । यथांऽशी शरीराच्छरीरान्तरं स्वकर्मनिर्मितमेव प्राप्नोति । यदा त्वंशेन शरीरान्तरं प्राप्नोति तदाऽपि तथैव स्वकर्मनिर्मितमेव । अतः शरीरान्तरवर्ती सन्नप्यंशोंऽशिनैक एव ।

### तत्त्वप्रकाशिका

अत्र भगवद्दर्शनसाधनोपासनस्य योग्यतासापेक्षत्वसाधनादस्ति शास्त्रादिसङ्गतिः । अन्यथोपास्त्य-व्यवस्थाप्रसङ्गात्तत्समर्थनीयम् । प्रकृतोपासनादि विषयः । योग्यतापेक्षं न वेति सन्देहः । योग्यायोग्य-क्रियादर्शनं सन्देहबीजम् । पूर्वपक्षयति ॥ **जीवेति** ॥ नोपासनाद्यर्थं योग्यतापेक्षाऽस्ति । योग्यता हि भवन्ती अनादिर्भवेत् । अन्यथा तदुपासनादेरप्यागन्तुकत्वसम्भवात् । न चानादित्वं योग्यताया युज्यते । इन्द्रादिजीवांशानामर्जुनादीनां योग्यतायास्तदभावात् । तेषामेवोत्पत्तिमत्त्वेन तद्धर्मस्या-नादित्वायोगात् । न चांशिनोऽनादित्वादंशस्योत्पत्त्यभावः । अशांशिनोः पृथक्त्वात् । कुतः । अंशिनि ज्ञानिनि सुखिनि दुःखिनि चांशे ज्ञानाद्यभावेनांशस्यांशि (वर्त्मागन्तृत्वात्) वर्त्मनागन्तृ-त्वात् । अन्यथा ज्ञानादिभेदो न स्यात् । अतोंऽशांशिनोः पृथक्त्वादंशस्योत्पत्तेरनादियोग्यताभावा-दुपासनादेर्योग्यतापेक्षा नास्तीति तदव्यवस्थितमिति भावः । पूर्वपक्षं प्रतिषेधति ॥ **नेति** ॥ कुतो

(तत्त्वप्रकाशिका)

**न मन्तव्यमित्याक्षिपति ॥ कुत इति ॥** तत्परिहाराय सूत्रमुपन्यस्य व्याचष्टे **॥ एक इति ॥** अस्त्येव सर्वेषामुपासनादौ योग्यतापेक्षा । न चांशस्योत्पत्तिमत्त्वेऽनादियोग्यताभावः । अंशोंऽशीत्येक एवेत्यंशस्योत्पत्त्यभावात् । तदैक्यमेव कुतः । आत्मनोंऽशिनः कर्मनिर्मितशरीरेंऽशस्य वर्तमानत्वात् । न च भेदे तद्युक्तम् । अकृताभ्यागमकृतविप्रणाशप्रसङ्गात् । न चांशस्य पृथक्कर्मास्ति । न चाकर्मनिमित्तः शरीरसंसर्गो युक्तः । अपवर्गाभावप्रसङ्गादिति भावः ।

## गुर्वर्थदीपिका

आगन्तुकत्वप्रसङ्गादित्यत्रागन्तुकत्वं नाम यस्य यस्यापेक्षा तस्य तस्य प्राप्तिरित्यर्थः । अंशांशिनोः पृथक्त्वादित्यत्रांशांशिनोः पृथक्त्वादंशस्योत्पत्तिरेव । अतस्तन्निष्ठा योग्यताऽप्युत्पन्ना । एवं च न्यायसाम्यादंशांशिष्वप्यागन्तुकमेवेति शङ्कितुरभिसन्धिः । अपवर्गाभावप्रसङ्गादित्यत्र शरीरपरम्परायाः कर्मोपाधिनिबन्धनत्वाभावे स्वाभाविकत्वप्रसङ्गेन स्वाभाविकस्य च कदाऽप्यनपायादिति भावः ।

## भावबोधः

**योग्यतासाधनसापेक्षत्वादिति ॥** अत्र पूर्वाधिकरणे न्यायविवरणोक्तरीत्याऽऽनादिभूतायाः भक्तेः करणत्वोक्तौ जीवांशानामुत्पत्तिमत्त्वेनानादिभूततत्तद्योग्यताया एवाभावेन कथं जीवस्वरूपानुबन्धित्वेन भक्त्यादेरनादित्वमित्याक्षेपोत्थानादनन्तरसङ्गतिरिति भावः ॥ **योग्यतेत्यादि ॥** अत्रोपासनायोग्यता सापेक्षा न सम्भवत्युत सम्भवतीति चिन्ता । तदर्थं योग्यताया अनादित्वं न सम्भवत्युत सम्भवतीति । तदर्थमंशानामर्जुनादीनामुत्पत्तिरस्त्युत नास्तीति । तदर्थं किं अशांशिनोर्भेद उताभेद इति । तदर्थं तयोः परस्परं सुखदुःखज्ञानाद्यनुसन्धानं नास्त्युतास्तीति । पृथक्त्वादिति । अनेन भाष्ये पृथक्त्वेनोत्पत्तिः पृथगुत्पत्तिरिति विग्रहः प्रदर्शितो भवति । पृथक्त्वे हेतुप्रतिपादकत्वेनांशिमार्गस्यांशेनागम्यत्वात् तयोर्भेद इति न्यायविवरणं संयोजयति– **अंशिनीति ॥ एक एवेति ॥** अनेन पूर्वसूत्रादवधारणार्थकचशब्दस्यानुवृत्तिर्वा 'सर्वं वाक्यं सावधारणं' इति न्यायेन वा सौत्रएकशब्दः सावधारण इत्युक्तं भवति । अत्र सूत्रे 'आत्मनः' इत्यंशस्यांशांश्युभयपरत्वमंशिकर्मनिर्मितत्वं च षष्ठ्यर्थ इत्यभिप्रेत्य प्रवृत्तमंशिकर्मेत्यादिभाष्यं व्याचष्टे– **आत्मनोंऽशिन इति ॥ अकृतेति ॥** अंशस्याकृताभ्यागमनमंशिनः कृतविप्रणाश इत्यर्थः ।

(भावबोधः)

ननु नांशिकर्मनिर्मितशरीरे अंशस्य भावोऽस्ति, स्वकर्मनिर्मित एवावस्थानोपपत्तेरिति अत अन्यथा दृष्टं विना शरीराद्यनुपपत्तेरिति न्यायविवरणांशस्यार्थमाह– **न चांशस्येति** ॥ एतच्छरीरसम्बन्धात् पूर्वमर्जुनादीनामिन्द्राद्यंशिव्यतिरेकस्यैवाभावादिति भावः । अत्र सूत्रे तुशब्द एवार्थः ।

## भावदीपः

**योग्यतेति** ॥ सूत्रे साक्षादंशांशिनोरैक्योक्तावपि तस्य प्रकृतोपयोगाय फलोक्तिरियमिति ध्येयम् । अनादियोग्यतेत्यपि योज्यम् । तेन यत्पूर्वत्रानादिभक्तेर्दृष्टिकारणत्वमुक्तं तद्युक्तम् । स्थानविशेषादित्यत्र भाष्याद्युक्तदिशा आदिभक्त्यादिसंपत्तिरूपयोग्यतासापेक्षत्वस्यैवोपासनादावयोगादिति शङ्कनात्पूर्वसङ्गतिरपि सूचिता ॥ **अव्यवस्थेति** ॥ असुरादीनामपि तत्प्रसङ्गादित्यर्थः । तथा च सर्वथापि तु त एवेत्यादिवक्ष्यमाणविरोध इति भावः ॥ **उपासनादीति** ॥ दृष्टिरादिपदार्थः ॥ **योग्यतेति** ॥ अनादिभक्त्यादिगुणपूगसंपत्तिसापेक्षं न वेत्यर्थः । ऐश्वर्यात्परमाद्विष्णोर्भक्त्यादीनामनादित इत्यादिस्मृत्या स्थानविशेषादित्यत्र तथैव योग्यतास्वरूपोक्तेः । तथाप्यनादिसंसिद्धभक्त्यादिगुणपूगत इत्यादिस्मृत्या अनुबन्धादिभ्य इत्यत्रोक्त्यापि तथैव प्रतीतेः । अदृष्टानियमादित्यत्र चन्द्रिकायां तथैव व्यवहाराच्च ॥ **योग्यायोग्येति** ॥ लोके पुंसां स्वयोग्यक्रिया स्वायोग्यक्रिया च दृश्यत इति तदेव सन्देहबीजमित्यर्थः । यद्वा योग्यस्यायोग्यस्य च पुंसः क्रियादर्शनमित्यर्थः । शेषोक्तिपूर्वं व्युत्क्रमेण भाष्यं व्याचष्टे ॥ **नोपासनेति** ॥ अनादीति पदं पूर्वपक्षोपपादकत्वेन व्याचष्टे ॥ **योग्यता हीति** ॥ **आगंतुकत्वेति** ॥ तथा चासुरादीनामपि तत्प्रसङ्ग इति भावः । परंपराहेतुत्वेन भाष्योक्तं हेतुं योजयति ॥ **इन्द्रादीति** ॥ पृथगिति भाष्यस्थं शङ्कापूर्वं हेतुत्वेन व्याचष्टे ॥ **न चांशिन इति** ॥ पृथक्त्वेनोत्पत्तिरिति भाष्ये विग्रह इति भावः । पृथक्त्वहेतोरसिद्धिनिरासाय । ज्ञानादिभेद इत्यादिद्वितीयसूत्रभाष्यसूचितम् । अंशिमार्गस्यांशेनागम्यत्वादित्यन्यत्रोक्तं हेतुं विवृण्वन्नेवात्र योजयति ॥ **अंशिनीति** ॥ वर्त्मागंतृत्वात् भिन्नमार्गत्वादित्यर्थः । वर्त्मनेति पाठे तद्व्यापाराज्ञातृत्वादित्यर्थः । हेतोरप्रयोजकत्वं निराह ॥ **अन्यथेति** ॥ अंशांशिनोरपृथक्त्वे इत्यर्थः । अन्यत्रोक्तहेतुपूर्वकं भाष्यार्थमुपसंहरति ॥ **अत इति** ॥ ज्ञानादिभेदेनांशस्यांशिवर्त्मागंतृत्वादित्यर्थः । फलमाह ॥ **तदिति** ॥ अनियतं स्यादित्यर्थः । तथा च

(भावदीपः)

प्रज्ञान्तरपृथक्त्ववदित्यत्रोपासनाभेदवद्दर्शनभेद इति यदुक्तं यच्च यावदधिकारमित्यत्र सुखतारतम्यं योग्यताविशेषाधीनमित्युक्तं यच्च प्राप्तेश्च समंजसमिति तत्सर्वमसमंजसं स्यादिति भावः । पूर्वभाष्यलब्धप्रतिज्ञामाह ॥ **अस्त्येवेति** ॥ प्रागुक्तचोद्यमनूद्य तन्निवर्तकत्वेन भाष्यं व्याचष्टे ॥ **न चांशस्येत्यादिना** ॥ अंशांशिनोरेकत्वमेवेति भाष्येऽेक इति सूत्रांशारूढं करोति ॥ **अंश इति** ॥ **कुत** इति भाष्येण सामानाधिकरण्यलाभाय भाष्ये शेषमाह ॥ **इत्येक इत्यादि** ॥ अंशीत्यादिभाष्यं सङ्गमयन् व्याचष्टे ॥ **तदिति** ॥ उत्सूत्रत्वशङ्कानिरासायात्मनोऽशिन इत्युक्तम् ॥ **अकृतेति** ॥ स्वाकृतकर्मनिर्मिते स्वस्यावस्थानेनाकृताभ्यागमस्यान्यकर्मनिर्मितदेहे स्थित्वा कृतस्य कर्मणः स्वाभोज्यत्वेन कृतविप्रणाशस्य प्रसङ्गादित्यर्थः । ननूक्तः सौत्रो हेतुरसिद्धः । येनांशांशिनोरेकत्वं स्यात् स्वकर्मार्जितदेहयोगस्य वा सर्वथा कर्मनिरपेक्षदेहयोगस्य वा अर्जुनाद्यंशस्योपपत्तेरित्याशङ्क्याद्दष्टं विना शरीराद्यनुपपत्तेरिति न्यायविवरणोक्तेरंशयद्दष्टं विना सर्वथाद्दष्टं विनेति चार्थद्वयमुपेत्य निराह ॥ **न चेति** ॥ **न चाकर्मेति** ॥ नापीत्यर्थः । कुतो न युक्त इत्यतः शरीरादीत्यादिपदार्थमाह ॥ **अपवर्गेति** ॥ कर्मानिमित्तत्वे स्वाभाविकत्वापत्त्या कर्मावसानरूपनिवर्तकाभावेन देहयोगस्य कदाप्यनिवृत्त्या मोक्षाभावप्रसङ्गादित्यर्थः ।

## अभिनवचन्द्रिका

**योग्यतासापेक्षत्वसाधनादिति** ॥ ननु सापेक्षत्वसमर्थनादित्ययुक्तम् । सूत्रे अंशांशिनोरभेदस्यैव साध्यमानत्वेन तथैव वक्तव्यत्वादिति चेत्, सत्यम् । तथैव वक्तव्यम् । तथापि अर्थात् योग्यतासापेक्षत्वमपि सिध्यतीति तथोक्तम् । प्रकृतोपासनादि **विषय इति** ॥ यद्यपि अंशो विषयः, अंशिनो भिन्नो न वेति सन्देह इत्यादि वक्तव्यम्, तथाप्यार्थिकविचारे उपासनाया विषयत्वादेवमुक्तम् ॥ **योग्यायोग्यक्रियादर्शनमिति** ॥ अत्र क्रियाया योग्यत्वाऽयोग्यत्वे कर्तृगतयोग्यतानुसारित्वाऽननुसारित्वे एव नान्यदिति बोध्यम् ॥ **अन्यथेति** ॥ योग्यताया अनादित्वाभावे केनचित्प्रयोज्यत्वं स्यात् । ततश्च 'तद्धेतोरेवास्तु तद्धेतुत्वम्' इति न्यायेन उपासनादेर्योग्यताप्रयोजकप्रयोज्यत्वं स्यात् न योग्यताप्रयोज्यत्वमिति भावः ॥ **अंशिनीति** ॥ अंशिनि सुखिनि, दुःखिनि, ज्ञानिनि चांशे ज्ञानाद्यभावेन घटनीयात् अंशिमार्गागन्तृत्वादित्यर्थः । इन्द्रो हि खाण्डववनसंरक्षणाय प्रवृत्तः, अर्जुनस्तु तद्दाहे प्रवृत्तः । ततश्च विरुद्धक्रियया ज्ञानादिभेदसिद्धौ

(अभिनवचन्द्रिका)

अंशांशिनोर्भेदसिद्धिरिति भावः । यद्यपि ज्ञानादिभेदेनैव भेदः साधयितुं शक्यः तथापि ज्ञानादिभेदस्य क्रियाभेदगम्यत्वात् क्रियाभेदानुसरणम् ॥ **अकृताभ्यागम इति** ॥ स्वेनाकृतस्यैव अंशिकृतकर्मणोऽभ्यागमः, स्वकृतस्याभोगेनैव विनाश इति अकृताभ्यागमकृतविप्रणाशौ । एवमंशिनोऽपि स्वकृतस्य अर्जुनादिदेहप्रापकस्य कर्मणोऽभोगेन विनाशः । अर्जुनादिकृतस्य स्वेनाकृतस्यैव कर्मणोऽभ्यागम इति अकृताभ्यागमकृतविप्रणाशौ अंशांशिनोरभेदानङ्गीकारे स्यातामित्यर्थः । अंशस्याकृताभ्यागममुपपादयति– **न चांशस्येति** ॥ अनयैव दिशा अंशस्य कृतविप्रणाशः, अंशिनश्चोभयमुपपादनीयमिति भावः ।

पूर्वपक्षस्तु– नोपासना अनादियोग्यतासापेक्षा । इन्द्राद्यंशजीवानाम् उत्पत्तिमत्त्वेन तद्योग्यताया अनादित्वाभावात् । न चेन्द्रादियोग्यतैवार्जुनादीनां योग्यता । अंशस्यांशिमार्गवृत्तित्वाभावात् । ज्ञानादिभेदेन तयोर्भिन्नत्वात् । ततश्चोपासनस्यानादियोग्यतानपेक्षत्वात् तदव्यवस्थितमिति ।

सिद्धान्तस्तु– अस्त्येव सर्वेषामुपासनादौ अनादियोग्यतापेक्षा । न च अर्जुनादीनामुत्पत्तिमत्त्वेनाऽनादियोग्यताभावः । तेषामंश्यभिन्नत्वेन तद्योग्यताया एव तद्योग्यतात्वात् । तदैक्यं च 'अंशोंऽश्यभिन्नः । तत्कर्मनिर्मितशरीरवृत्तित्वादित्यनुमानसिद्धम् । न चांऽशिनि सुखिनि, दुःखिनि, अंशस्य तदनुसन्धानाभावात् भेदः असिद्धेः । अंशिनोंऽशगतसर्वानुसन्धानभावात् । अंशस्याचिन्त्येश्वरशक्तिवशात्सर्वानुसन्धानाभावेऽपि प्रधानसाधनोपासनादिफलानुसन्धानात् । अतः सर्वेषामुपासनादावनादियोग्यताऽपेक्षितेति युक्ता तव्द्यवस्थेति सिद्धम् ।

## वाक्यार्थमुक्तावली

उपादानस्य **योग्यतासापेक्षत्वसमर्थनादिति** । अत्रोपासनस्येत्युपलक्षणम् । तत्साहित्येनोक्तभक्तेरिति च ग्रहणम् । अत एवोपासनादिविषय इति वक्ष्यति । तथा चानादित्वेनोक्तायाः भक्तेः योग्यतासापेक्षतासमर्थनादनन्तरसङ्गतिरिति भावः ॥ **अन्यथेति** ॥ योग्यतासापेक्षत्वाभावे योग्यतानुसारेण गुणनियमोपदेशभावेनोपास्त्यव्यवस्थाप्रसङ्गात् । इतरे त्वर्थसामान्यादित्युक्तं स्यात् । भक्तेरनादित्वं चोक्तं न स्यादिति भावः ॥ **प्राकृतेति** ॥ उपासनादियोग्यतासापेक्षं न भवत्युत भवतीति चिन्ता । तदर्थं योग्यताया अनादित्वं न सम्भवत्युतसम्भवतीति । तदर्थमिन्द्राद्यंशाना-

(वाक्यार्थमुक्तावली)

मर्जुनादीनामंशभेदेनोत्पत्तिरस्त्युत भेदेनोत्पत्तिर्नास्तीति । भाष्ये नानादियोग्यतापेक्षेत्यनादि-योग्याताक्षेप उच्यते । स च द्वेधा सम्भवति । योग्यापेक्षामङ्गीकृत्य योग्यताया अनादित्वाक्षेपेण वा योग्यातानादित्वमङ्गीकृत्योपासनादेः तदपेक्षत्वमात्राक्षेपेण वोभयाक्षेपेण वा । **नाद्यः** । पादासङ्गतेः । न **द्वितीयः** । जीवांशानां पृथगुत्पत्तेरिति हेत्वसङ्गतेः ॥ **न तृतीयः** ॥ योग्यता-नादित्वस्योपासनाङ्गतया **सिद्ध्या** नातिवक्तव्यत्वेन तदाक्षेपवैय्यर्थ्यात् । उपासनायोग्यतानपेक्षत्वे हेत्वनुक्तेश्चेत्यत उभयाक्षेपोऽत्र विवक्षितः । तत्र योग्यतापेक्षत्वाभावे तस्या अनादित्वाभावो हेतुः । सिद्धान्तिना योग्यतापेक्षत्वायैव तदनादित्वस्यावश्यमङ्गीकार्यत्वादिति भावेन व्याचष्टे **नोपासनाद्यर्थमित्यादिना** ॥ **अनादिर्भवेदिति** ॥ अनादिरिति त्वयाङ्गीकर्तव्या भवेदित्यर्थः । **अन्यथेति** ॥ सादित्वे योग्यता व्यर्था । ब्रह्मादिषु योग्यतावैचित्र्यवत् । उपासनावैचित्र्य-स्याप्यागन्तुकत्वसम्भवादित्यर्थः । उपलक्षणमेतत् । अन्यथा कदाचिदसुराणामपि मोक्षित्वापातात् । तथा चोपास्तिव्यवस्थायोग इति तत्वप्रदीपरीत्याप्यतिप्रसङ्गो द्रष्टव्यः । **पृथक्त्वादिति** ॥ अनेन भाष्ये पृथगित्यस्य पृथक्त्वेनेत्यर्थ उक्तो भवति । पृथगित्यस्य जीवांशानामंशिनः पृथक्त्वेन विलक्षणत्वेनांशिगतज्ञानाद्यननुसन्धातृत्वेन पृथक्त्वात्तद्वार्तानभिज्ञतया तन्मार्गगन्तृत्वादित्यर्थं मनसि निधायागम्य वर्त्मेत्युक्तन्यायप्रदर्शकतया व्याचष्टे ॥ **कुत इत्यादिना** ॥

सूत्रे पूर्वसूत्रावधारणार्थकश्चशब्दोऽन्वेति । आत्मनीति षष्ठ्यन्तं विभक्तिविपरिणामेन प्रथमान्तं च विवक्षितम् । तथा चात्मांशोंऽशीत्येक एव । कुतः । आत्मनोंऽशिनः सम्बन्धिनि तत्कर्मनिर्मिते शरीर एवात्मनोंऽशस्य भावादिति सूत्रार्थमभिप्रेत्य व्याचष्टे ॥ **अंश इति** ॥ **अकृताभ्यागमेति** ॥ अंशस्याकृताभ्यागमः । अंशिनस्त्विंद्रादेरर्जुनादिदेहप्रापककर्मनाशप्रसङ्ग इत्यर्थः । तदुभय-मुपपादयति । न चांशस्येति । अर्जुनदेहापादकं इन्द्रकर्म विनाऽर्जुनस्य पृथक्कर्म न चास्तीत्यर्थः । तथा चेन्द्रकर्मवैयर्थ्यमर्जुनशरीरं चाकारणकमिति भावः । अकृताभ्यागमः को दोष इत्यत आह ॥ **न चेति** ॥ **अपवर्गेति** ॥ कर्माभावेऽपि बन्धकशरीरसंयोगेऽपि मोक्षोऽपि तथा स्यादिति भावः ।

## तत्त्वसुबोधिनी

योग्यतायाः एव अभावेन तत्स्वरूपानुबन्धित्वेन भक्त्यादेरादित्वमित्याक्षेपोत्थानादनन्तर-सङ्गतिरिति भावः ॥ **अन्यथेति** ॥ योग्यतासापेक्षत्वाभाव इत्यर्थः । तद्वत् योग्यताया

(तत्त्वसुबोधिनी)

आगन्तुकत्ववत् । **तदभावात्** अनादित्वाभावात् ॥ **एक एवेति** ॥ अनेन पूर्वसूत्रात् अवधारणार्थ-कचशब्दस्यानुवृत्तिं मत्वा सर्वं वाक्यं सावधारणमिति न्यायेन वा सौत्र एकशब्दसावधारण इत्युक्तं भवति । अत्र सूत्रे आत्मनः इत्यस्यांशाभ्युपगमपरत्वमंशिकर्मनिर्मितत्वं च षष्ट्यर्थ इत्यभिप्रेत्य प्रवृत्तिमंशिकर्म इत्यादिभाष्यं व्याचष्टे ॥ **आत्मनोऽशिन इति** ॥ **अकृतेति** ॥ अंशस्याकृताभ्यागतमंशिनः कृत प्रमाणांश इत्यर्थः । ननु नांशिकर्मनिर्मितशरीरेंऽशस्य भावोऽस्ति स्वकर्मनिर्मित एवावस्थानोपपत्तेरित्यत आह ॥ **न चांशस्येति** ॥ एतत् शरीरसम्बन्धात्पूर्वं अर्जुनादीनां इन्द्राद्यंशव्यतिरेकस्य चाभावादिति भावः । न च कर्मानिर्मित एवास्य शरीरसंयोगः किन्न स्यादित्यत आह ॥ **न चेति** ॥ **अपवर्गेति** ॥ कर्मानिमित्तकतच्छरीरसंसर्गस्य कदाप्यपगमा-सम्भवादिति भावः ।

## वाक्यार्थविवरणम्

**अव्यवस्थाप्रसङ्गादिति** ॥ अयोग्येनापि कर्तव्यताप्रसङ्गादित्यर्थः । **तद्वत्** योग्यतावत् । **प्रसङ्गात्** जीवधर्मत्वाविशेषादित्यर्थः । **तदिति** अनादित्वेत्यर्थः । कुत इत्यत आह– **तेषामेव जीवांशानामिति** ॥ तद्धर्मस्य तद्धर्मभूतयोग्यतायाः । तथा च जीवांशानामुत्पत्तेरिति सम्बन्धो द्रष्टव्यः । पृथगित्यस्य निवर्त्याशङ्कामाह– **न चेति । पृथक्त्वात्** भेदादित्यर्थः । तथा च पृथक् पृथक्त्वादित्यर्थो द्रष्टव्यः । **अन्यथा** पृथक्त्वाभावे । ज्ञानादिभेदः अंशांशिनोरित्यर्थः । तत्तु उपासनम् । सूत्रे एक इत्यस्यापेक्षितपूरणेनार्थमाह **अंशः अंशी चेत्येक एवेति** ॥ आत्मन इत्यस्य अर्थान्तरमाह– **अंशस्येति ॥ न चेति** ॥ अंशांशिनोर्भेदे तत् अंशकर्मनिर्मितशरीरे अंशस्य वर्तमानत्वं न हि युक्तमित्यर्थः । कुतो न युक्तमित्यत आह– **अकृतेति** ॥ अंशस्य कर्माभावेऽपि शरीरप्राप्त्या अकृताभ्यागमः । अंशिकर्मणोंऽशिनं प्रत्यप्रयोजकतया अंशिनः कृतप्रणाश इत्यर्थः । नन्वेतावता अंशिकर्मनिर्मितशरीरे अंशस्य वर्तमानत्वाभावेऽपि स्वकर्मनिर्मित एवावस्थानोपपत्तेर्ना-कृताभ्यागमप्रसङ्ग इत्यत आह– **न चांशस्येति ॥ पृथक्कर्मेति** ॥ अंशिकर्मव्यतिरिक्तकर्मेत्यर्थः । ननु नाकृताभ्यागमो दोषाय । मया कर्माभावेऽपि शरीरसबन्धप्राप्त्यङ्गीकारादंशस्येत्यत आह– **न चाकर्मेति** ॥ अकर्मनिर्मितशरीरसम्बन्धः **कर्मनिर्मितशरीरसंसर्गाभावः** ॥ कर्माभावेऽपि शरीर-सम्बन्ध इति यावत् । कुतो न युक्त इत्यत आह– **अपवर्गेति** ॥ यदि कर्माभावेऽपि

(वाक्यार्थविवरणम्)
शरीरसम्बन्धोऽङ्गीक्रियते तर्हि सर्वदा शरीरसम्बन्धस्यैव प्राप्त्या अंशस्यापवर्ग एव न स्यादिति भावः ।

## वाक्यार्थमञ्जरी

**अंशिवर्त्मनेति** ॥ अंशिमार्गेण गन्तृत्वादित्यर्थः । अन्यथा अभेदे ॥ ॐ एक आत्मनश्शरीरे भावात् ॐ ॥ अंशोऽर्जुनः अंशिनेन्द्रेणैकः अभिन्न एव कुतः आत्मनोंऽशिनः कर्मनिर्मिते शरीरे आत्मनोंऽशस्य भावात्सत्वादित्यर्थः ॥ **अकृतेति** ॥ अंशस्याकृत कर्मभोगापत्तिरंशिनः कृतकर्मनाशादित्यर्थः । ननु नांशिकर्मनिर्मिते शरीरेंऽशोऽस्ति किन्तु स्वकर्मनिर्मित एवेत्यत आह ॥ **न चांशस्येति** ॥ एतच्छरीरसम्बन्धात्पूर्वमर्जुनस्येन्द्रशरीरं विना कर्मोपादकशरीरान्तराभावादिति भावः । तर्हि मास्तु कर्मेत्याह ॥ **न चेति** ॥ **अपवर्गेति** ॥ शरीरसंसर्गस्य कर्मनिर्मितत्वे यावत्कर्मनाशेन सर्वथा शरीरसम्बन्धध्वंस रूपो मोक्ष उपपद्यते कर्मानियतत्वे च तस्यानागन्तुकत्वेन कदाप्यनपायादुक्तमोक्षाभावप्रसङ्ग इत्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ व्यतिरेकस्तद्भावभावित्वान्न तूपलब्धिवत् ॐ ॥ ५६ ॥**

**ज्ञानादिभावे(भेदे.पा)विद्यमानेऽपि नांशांशिनोः पृथग्भाव एव । तदुपासनादिभोगादंशस्य । परमसंहितायां च—**

**अंशिनस्तु पृथग्जाता अंशास्तस्यैव कर्मणा ।**
**पुनरैक्यं प्रपद्यन्ते नात्र कार्या विचारणा इति ॥**

## तत्त्वप्रदीपिका

अंशिनः सुखेऽप्यंशस्य दुःखमंशिनो महाज्ञानेऽप्यंशस्याल्पज्ञानमिति सुखज्ञानादीनां व्यवस्थितत्वात् । भेद इत्यत आह– व्यतिरेक इत्यादि सूत्रम् । तद्भावभावित्वादिति सूत्राक्षराणि तदुपासनादिभोगादिति व्याख्याति । 'भावो वृद्धिः समुद्दिष्टः कचिद्भावो मनः स्मृतः' इति च शब्दनिर्णये । ज्ञानसुखादिभेदेऽपि नांशांशिनोर्भेदः । तदुपासनाकर्मादिनैव ज्ञानसुखादिभोगादंशस्य । अंशिन एवाज्ञानदुःखनिमित्तसद्भावेन तद्भोगादंशस्य । अन्यथा देहदैहिकभोगानामाकस्मिकत्वेन सर्वसङ्कर-

(तत्त्वप्रदीपिका)

**प्रसङ्गात् । एकस्य युगपत्सुखदुःखे एकस्मिन्नेव ज्ञानाज्ञाने च विरुद्धे इति चेन्नैवम् । यस्य यदा वा कृत्स्नाज्ञानदुःखाभावस्तत्र सर्वरूपेषु ज्ञानसुखाभ्यामेव भाव्यम् । अन्यत्र त्वंशिनोऽपि ज्ञानाज्ञानसुखदुःखदर्शनादविरुद्धं भाति च विशदं न भातीति ।**

## तत्त्वप्रकाशिका

**ज्ञानादिभेदादंशांशिनोर्भेद एव । अतो नांशस्योत्पत्तिमतोऽनादियोग्यता युक्तेत्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे ॥ व्यतिरेक इति ॥ यथोपलब्ध्यादौ व्यतिरेकस्तथांशांशिनोरपि भेद एवेति न वाच्यम् । अल्पे ज्ञानादावनुसंधानाभावेऽपि प्रधानसाधनोपासनादिफलानुसंधानात् । अंशगतज्ञानादेरंशिनाऽनुसंधीयमानत्वात् । अंशिगतस्य चांऽशेन सर्वस्याननुसंधानमीश्वराचिन्त्यशक्त्यायत्तमिति भावः । अत्र स्मृतिं प्रमाणयति ॥ परमेति ॥ अतोऽस्त्येव सर्वेषामुपासनादावनादियोग्यतापेक्षेति युक्ता तद्व्यवस्थेति सिद्धम् ।**

## गुर्वर्थदीपिका

उपासनादिफलानुसन्धानादित्यत्रोपासनादिफलमपरोक्षज्ञानिनोऽपीन्द्रस्य नित्यपरोक्षभावेन मध्ये मध्य उपास्यबिम्बापरोक्षदर्शनं तस्यानुसन्धानादंशेनानुसन्धानादित्यर्थः । अंशगतसर्वानुसन्धानाभावेऽपि तस्य बिम्बदर्शनेऽयमपि बिम्बं पश्यति । इदं चानुसन्धानं भेदे सति कथं स्यात् । अंशी त्वंशगतं सर्वमनुसन्धत्ते । अंशस्तु मानुषशरीरादिदोषेण प्रतिरुद्धत्वादंशिगतं न सर्वमनुसन्धत्ते। उक्तविधया बिम्बदर्शनमनुसन्धत्ते । 'मुख्येष्टं वा सुमनसाम्' इति वचनात्स्वस्वबिम्बदर्शनस्य निरुपाधिकपरमेष्टानुभवरूपत्वेन बलीयस्त्वाद्बलादस्यानुसन्धानं जायते । यथा स्वस्कन्धगतं वस्त्रादिकं सदाऽननुसन्दधदपि पुरुषः स्वशिरस्थितपाषाणादिभारं बलीयस्त्वादनुसन्धत्ते तद्वदिति भावः । एवं च तस्यांशिनो भावेन भावनया ध्यानेन स्वस्यापि भावित्वं भावनावत्त्वम् । उभयत्रापि भावपदेन भावनाफलदर्शनमुच्यते । तथा च तदुपास्तिफलदर्शनेन स्वस्याप्युपास्तिफलदर्शनवत्त्वादिति सौत्रहेतोरर्थस्सूचितः ।

## भावबोधः

उपलब्धिवद्व्यतिरेके एव नेति सम्बन्ध इत्यभिप्रेत्य प्रवृत्तं ज्ञानादिभेदे विद्यमानेऽपीति भाष्यं व्याचष्टे– **यथेति** ॥ तस्यांशिन उपासनादिभोगभावे अंशगतोपासनादिभोगस्य भावित्वादिति

(भाववोधः)

सूत्रांशस्यार्थमभिप्रेत्य भाष्ये तदुपासनादिभोगादंशस्येत्युक्तम् । तत्साधनोत्तमस्यांशिकृतस्यांशेन भुज्यमानत्वादिति न्यायविवरणानुसारेण व्याचष्टे– **प्रधानेति** ॥ न्यायविवरणस्य साधनोत्तम-स्येत्यस्य अभिप्रायकथनमल्पे ज्ञानादाविति ।

'अंशिनोऽशेषसन्धानमत्यल्पस्यापि विद्यते'

इत्यनुव्याख्यानं मनसि निधायाह– **अंशगतज्ञानादेरिति** ॥ सर्वस्यापीत्यर्थः । 'विशेषस्तु कश्चिदीशकृतो भवेत्' इत्यनुव्याख्यानं मनसि निधायाह– **अंशिगतस्येति** ॥ अत्र प्रथमे अंशांशिनोरेकत्वे हेतूक्तिः । द्वितीये बाधकोद्धारः ।

## भावदीपः

उपलब्धिवदिति शेषोक्तिपूर्वं नेत्यादिभाष्यं सूत्रारूढं दर्शयन् सूत्रभाष्ये च व्याचष्टे ॥ **यथेति** ॥ अप्यन्तभाष्यस्य हेतूक्तिपरभाष्येणाऽन्वयमुपेत्य व्याचष्टे ॥ **अल्प इति** ॥ साधनोत्तमस्यादृष्ट-स्यांशिकृतस्यांशेन भुज्यमानत्वादित्यन्यत्रोक्त्यनुरोधेनोक्तम् ॥ **प्रधानसाधनेति** ॥ अंशिनोऽशेष-सन्धानमत्यल्पस्यापि विद्यते ।

भुवि जातेन चांशेन सुखदुःखादि तद्गतम् । अनुभूयते विशेषस्तु कश्चिदीशकृतो भवेत्' इति भक्तिपादीयानुभाष्योक्तमप्यत्र सङ्गमयति ॥ **अंशेति** ॥ **अत्रेति** ॥ आद्यसूत्रार्थ इत्यर्थः ॥ **अत इति** ॥ अन्योन्यानुसंधातृत्वांशिकर्मार्जितदेहस्थत्वाभ्यामंशांशिनोरेकत्वादित्यर्थः ।

## वाक्यार्थमुक्तावली

अत्र तुशब्दोऽवधारणे । आत्मन इति वर्तते । उपलब्धिपदं सुखादेरुपलक्षणमित्यभि-प्रेत्योपलब्धिवदित्यस्य तात्पर्यकथनपरं ज्ञानादिभेदे विद्यमानेऽपीति भाष्यमिति चाभिप्रेत्य सूत्रार्थमाह ॥ **यथेति** ॥ एतेनोपलब्धिवदुपलब्ध्यादौ ज्ञानादाविवात्मनोंऽशस्यांशिनश्च व्यतिरेक एव भेद एवेति न वाच्यमिति सूत्राक्षरार्थ उक्तो भवति । ज्ञानादौ भेदो नामानुसन्धानाननुसन्धानवैलक्षण्यम् । दृष्टान्तकथनस्यायमभिप्रायः । ज्ञानादौ यथाऽनुसन्धानाननुसन्धानभेदोऽस्ति तथा तदनु-सारेणांशांशिनोर्भेदोऽङ्गीकार्यः । अभेदेऽनुसन्धानस्य प्रयोजकत्वेन प्रकृते तदभावेनाभेदायोगादिति ।

(वाक्यार्थमुक्तावली)

अन्यथा दृष्टान्तमात्रकथनस्यानुपयोग इति ज्ञेयम् । नन्वेवं भेदसाधकस्य सत्वेन कथमंशांशिनोर्भेदाभाव इत्यतः ज्ञानादिभेदोऽप्रयोजक इति भावेन प्रवृत्तं ज्ञानादिभेदे विद्यमानेऽपि तदुपासनादिभोगादंशस्येति भाष्यं साधनोत्तम इत्युक्तन्यायप्रदर्शकतया व्याचष्टे ॥ **अल्प इति** ॥ एतेन सूत्रे भावशब्द आवर्तते । आद्यो ज्ञानपरः । भवतेरनुभवार्थकत्वात् । उपासनेति यावत् । प्रज्ञान्तरपृथक्त्ववदित्युक्तत्वात् । भावो भावना ध्यानमिति वा । यद्वा भावो मनः, 'भावो वृद्धिः समुद्दिष्टः कचिद्भावो मनःस्मृतः' इति तत्वप्रदीपे शब्दनिर्णयोदाहरणात् । तेन च मानसी क्रियोच्यते । द्वितीयस्तु तज्जन्यवृद्धिशब्दितफलपरः । भावो वृद्धिरित्युक्तेः ॥ **भावित्वादिति** ॥ भाववत्वात् अनुसन्धानवत्वादित्यर्थः । तथा चात्मनोंऽशस्य तद्भावभावित्वात्तस्यांशिनः भावस्योपासनायाः भावः फलं तद्भावः तस्य भावित्वादनुसन्धातृत्वादिति सूत्राक्षरार्थः । आत्मनोंऽशिनस्तदुपासनादिभोगादंशगतोपासनासुखादिति सर्वसुखादिति सूत्रार्थं भाष्ये चांशिन इति शेषं च मत्वा व्याचष्टे- **अंशगतेति** ॥ कथमयं विशेष इत्यतो विशेषस्तु कश्चिदीशकृतो भवेदित्यनुव्याख्यानं मनसि निधायाह ॥ **अंशिगतस्येति** ॥ अत्राद्येऽशांशिनोरभेदे हेतूक्तिः। द्वितीये बाधकोद्धार इति सूत्रक्रमः ।

## तत्त्वसुबोधिनी

अत्र सूत्रे तुशब्द एवार्थः । उपलब्धिर्व्यतिरेक एव न तु सम्बन्ध इत्यभिप्रेत्य प्रवृत्तं ज्ञानादिभेदेऽपीति भाष्यं व्याचष्टे ॥ **यथेति** ॥ अंशिनः उपासनादिभोगाभावे अंशोपासनादिभोगस्यभावित्वादिति सूत्रांशस्यार्थमभिप्रेत्य भाष्ये तदुपासनादिभोगादंशस्येत्युक्तम् । तद्व्याचष्टे ॥ **प्रधानेति** ॥ **अंशगतज्ञानादिरिति** ॥ सर्वस्यापीत्यर्थः । न चैवं तर्हि अंशिगतं सर्वं अंशेन कुतो नानुसन्धीयत इत्यत आह ॥ **अंशिगतस्येति** ॥ अत्र प्रथमे अंशांशिनोरेकत्वे हेतूक्तिः द्वितीये बाधकोद्धारः ।

## वाक्यार्थविवरणम्

**व्यतिरेकः** भेदः । तथा चोपलब्धिवदंशांशिनोर्व्यतिरेको न त्विति सम्बन्धः । **प्रधानसाधनेति** ॥ भवत्यादिसाधनोत्तमेत्यर्थः । तथा च 'तद्भावभावित्वात्' इत्यस्य तस्यांशिन उपासनाजन्यसुखादिभोगभावे सति अंशस्यापि तद्भोगस्य तदनुसंधानस्य भावित्वादित्यर्थः ।

(वाक्यार्थविवरणम्)

तद्भावभावित्वादित्यंशस्य तस्यांशस्य ज्ञानादिभावे अंशिनोऽपि तद्भोगस्य भावित्वादित्यर्थान्तरमभिप्रेत्याह– **अंशेति** ॥ **परमेतीति** ॥ तस्यैव अंशिन एव कर्मणा अंशिनः सकाशात् पृथग्जाता ये अंशास्तेंऽशिना पुनरैक्यं प्रपद्यन्त इत्यन्वयः ।

## वाक्यार्थमञ्जरी

**उपलब्धिवत्** ज्ञानभेदवत् अंशांशिनोरपि **व्यतिरेको** भेदो न तु नैव ॥ **कुतः** ॥ तद्भावभावित्वात् तस्यांशिनो भावेनोपासनेनांशस्य भावित्वात्तत्फलभोक्तृत्वादित्यर्थः । इतश्च न भेद इत्यत आह ॥ **अंशगतज्ञानादेरिति** ॥ सर्वस्येत्यर्थः अभेदेंशस्यांशिगतसर्वाननुसन्धानं कथमित्यत आह ॥ **अंशिगतस्येति** ॥

**॥ इति एकाधिकरणम् ॥ ३५ ॥**

## ३६. अङ्गावबद्धाधिकरणम्

### सूत्रभाष्यम्

**॥ ॐ अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॐ ॥ ५७ ॥**

ब्रह्माद्यङ्गदेवतावबद्धोपासनादि प्रतिशाखं प्रतिवेदं च नोपसंह्रियते । हिशब्दात्—

'समत्वाद्वोत्तमत्वाद्वा नाङ्गदेवाद्युपासनम् ।
उपसंहार्यमित्याहुर्वेदसिद्धान्तवेदिनः' इति ब्रह्मतर्कवचनात् ॥

### तत्त्वप्रदीपिका

यद्यपि प्रतिशाखं प्रतिवेदं च ब्रह्मादीनां परिवारदेवतानां उपासनापूजानमस्काराद्युच्यते । तथाऽपि तन्नोपसंहार्यम् । केषाम् ? समानानामुत्तमानां चेति हिशब्दसूचितब्रह्मतर्कवचनादवगन्तव्यम् ।

'विष्णोरङ्गसमुद्भूतेर्विष्णोरङ्गानि देवताः ।
उच्यन्ते सर्ववेदेषु स्वरूपे भेदिनोऽपि तु' इत्याध्यात्मे ॥

प्रतिशाखमित्युक्त्वा पुनः प्रतिवेदमित्युक्तिरविभक्तवेदस्य विद्यमानत्वात् ॥

### तत्त्वप्रकाशिका

अत्र ब्रह्मज्ञानसाधनोपासनस्य यथायोग्याऽङ्गदेवतोपासनयुक्तत्वेन कर्तव्यताप्रतिपादनादस्ति शास्त्रादिसङ्गतिः । अन्यथा तत्प्रतिपादकवेदवैय्यर्थ्यस्योक्ततारतम्याभावस्य च प्रसङ्गात्प्रतिपादनीयमेतत् । प्रकृतं भगवदुपासनमेव विषयः । अन्यदेवतोपासनयुक्तं वा कर्तव्यं केवलं वेति सन्देहः । ब्रह्मोपासनविधेः साधारण्यं सन्देहबीजम् । अन्यदेवतोपासने च तस्य गुणोपसंहारपूर्वकत्वात्किमेकस्य श्रुतिप्रतीतगुणाः सर्वेपूपसंहर्तव्या न वेति सन्देहः । लौकिकपुरुषपूजादौ द्वैविध्यदर्शनं सन्देहबीजम् । केवलमेव ब्रह्मोपासनं कर्तव्यमिति पूर्वः पक्षः । 'तमेवैकं जानथात्मानमन्या वाचो विमुञ्चथ' 'पूजयेन्नान्यदेवता' इत्यादेरन्यदेवतोपासने चैकस्य प्रतीतगुणाः सर्वेपूपसंहर्तव्याः । देवत्वादिगुणानां सर्वेपूपसंहारदर्शनात् । अतोऽन्यदेवानामनुपास्यत्वात्तदभिधायकवेदवैयर्थ्यम् । उपास्यत्वे वा

(तत्त्वप्रकाशिका)

साम्येनोपास्यत्वान्नोक्ततारतम्योपपत्तिरिति । सिद्धान्तयत्सूत्रं पठित्वा व्याचष्टे ॥ **अङ्गेति** ॥ ब्रह्मादिदेवतोपासनपरिचर्यादि कार्यमेव । न च श्रुत्यादिविरोधः । तत्र प्राधान्येनोपसनस्यैव निषिद्धत्वात् । अङ्गत्वेनोपासनस्याभ्युपगत्वात् । उपसंहारे तु विशेषोऽस्ति । सर्ववेदानां सर्वशाखा-सूक्तं यद्ब्रह्माद्यङ्गदेवतासम्बन्धिगुणजातं तत्पर्वं रुद्रादिषु नोपसंहार्यं किं तु योग्यमेवोपास्यम् । यथा खलु भगवद्वाचकवाक्यानां न सर्वेषामन्यत्रान्वयोऽपि तु योग्यानामेवेति भावः । कुत एतदित्यत आह ॥ **हिशब्दादिति** ॥ सूचितादिति शेषः । अङ्गदेवताद्युपासनं कार्यम् । यावद्ब्रह्मादीनां गुणजातं तत्सर्वं रुद्रादिषु नोपसंहार्यम् । कुतः । भवेत्साम्येनोपासनं युक्तं यदि तेषां साम्यमेव स्यात् । नैतदस्ति केषाञ्चित्समत्वात्केषाञ्चिदुत्तमत्वात् । तत्कुतः वेदसिद्धान्ते नानागुणत्वेन तेषां दृष्टेरिति भावः ।

## गुर्वर्थदीपिका

अङ्गावबद्धा ब्रह्माद्याः परिवारदेवता अङ्गतयाऽवबद्धास्सन्त उपास्याः । 'रमाब्रह्मादयस्तस्य परिवारतयैव तु' इति वचनात् । न तु परमात्मवन्मुख्यतया । तत्रापि सर्ववेदोक्तास्तत्तद्देवगुणाः सर्वदेवेषु न सामान्येनोपास्याः । किन्तु विशेषोऽस्ति । प्रतिवेदं शाखासु ये गुणा ब्रह्मणः प्रोक्ताः ''वेदाहमेतं पुरुषं महान्तम्' इत्याद्या असाधारणगुणास्ते ब्रह्मण्येवोपास्याः । रुद्रादिषु **न हि** नोपास्या हि । तेषां गुणानां रुद्रादिष्वसम्भवप्रसिद्धिमयोग्योपासनयाऽनर्थप्रसिद्धिं च हिशब्देनाह । एवं रुद्रेऽपि प्रतिवेदं प्रतिशाखं ये गुणाः प्रोक्ताः 'त्रियम्बकाय त्रिपुरान्तकाय कालाग्निरुद्राय नीलकण्ठाय' इत्याद्याः ते इन्द्रादिषु नोपास्याः । एवं पूर्वपूर्वासाधारणगुणा उत्तरोत्तरेषु नोपास्याः किन्तु तेषु तेषु योग्या एवोपास्याः । देवत्ववैष्णवत्वादयस्तु साधारणगुणाः सर्वत्रोपास्या इति सूत्रभाष्ययोर्योजनामभिप्रेत्याह- **ब्रह्मादीति** ॥ परिचर्यादीत्यत्र **परिचर्या** पूजा । आदिपदेन स्तुतिनतिप्रदक्षिणादिकं गृह्यते । ब्रह्माद्यङ्गदेवतेत्यत्रादिपदेन वायुः सरस्वती भारती च गृह्यन्ते । अन्यत्रोपसंहाराभावमित्यत्र अन्यत्रापरेष्वित्यर्थः ।

## भावबोधः

**यथायोग्येति** ॥ पूर्वाधिकरणे योग्यतायां समर्थितायां तदनुसारेणाङ्गदेवतोपासनकर्तव्यता अत्र समर्थ्यत इत्यनन्तरसङ्गतिरिति भावः ॥ **अन्यदेवतेति** ॥ अत्र भगवदुपासनं किं केवलं कर्तव्यं उत

(भावबोधः)

ब्रह्माद्यङ्गदेवतोपासनं युक्तमेवेति चिन्ता । तदर्थं अन्यदेवताप्रतिपादकवेदवाक्यजातं निष्प्रयोजनं उत सप्रयोजनमिति । तदर्थं 'अन्या वाचो विमुञ्चथ' 'पूजयेन्नान्यदेवताः' इति निषेधवाक्यं निरवकाशमुत सावकाशमिति । अन्यदेवतोपासनापक्षेऽपि उपासनाङ्गभूतगुणोपसंहारो न युज्यत उत युज्यत इति । तदर्थमेकैकस्य प्रतीता गुणाः सर्वेष्वविशेषेणोपसंहर्तव्या उत व्यवस्थया वोपसंहर्तव्या इति । तदर्थं व्यवस्थानियामकं नास्त्युतास्तीति । गुणान्तरानुसन्धानस्य क्वचित् दर्शनमात्रेण समाधिकाङ्गदेवतान्तरगुणा अप्यङ्गदेवतान्तरे उपसंहर्तव्या इति न्यायविवरणानुसारेणाह– **अन्यदेवतोपासने त्विति** ॥ 'अङ्गावबद्धास्तु' इत्येतन्निवर्तनीयमाह– **तमेवैकमिति** ॥ उपासनादीति भाष्यगतपरिचरणादिपरादिपदानुरोधेनाह– **पूजयेदिति** ॥ सूत्रे ब्रह्माद्या उपास्या इति शेषः । 'तु'शब्द एवार्थः । तस्य उपास्य एवेति सम्बन्धः । ब्रह्माद्या इत्येव वक्तव्ये 'अङ्गावबद्धाः' इति वचनं 'अन्या वाचो विमुञ्चथ' इत्यादिवाक्यविरोधपरिहारार्थमित्यभिप्रेत्य प्रवृत्तं ब्रह्माद्यङ्गदेवतावबद्धोपासनादीति भाष्यं व्याचष्टे– **ब्रह्मादीति** ॥ अनेन भाष्ये आदिपदेन परिचर्यादिसङ्ग्रहः, 'कर्तव्यं' इति शेष इत्युक्तं भवति । सूत्रे प्रतिवेदं शाखास्विति सम्बन्धः । उक्तं गुणजातमुपसंह्रियत इति शेष इत्यभिप्रेत्य प्रवृत्तं प्रतिशाखं प्रतिवेदं चेत्यादिभाष्यमनिषिद्धगुणानां वाक्यान्वयन्यायेन उपसंहारान्न शाखास्वित्यादिविशेष इति न्यायविवरणानुसारेण व्याचष्टे– **उपसंहारे तु विशेषो अस्तीत्यादिना** ॥ स्मृतावङ्गदेवताद्युपासनमित्यतःपरं कार्यमुत्तमानां गुणजातं सर्वमध्यमेष्विति शेषः । नोपसंहार्यमित्यन्वयः । उपसंहाराकर्तव्यत्वे समत्वादित्यादिहेतुकथनं तस्यासिद्धिपरिहारार्थं वेदसिद्धान्तेत्युक्तमित्यभिप्रेत्य स्मृतिं व्याचष्टे– **अङ्गदेवताद्युपासनमित्यादिना** ॥ **वेदसिद्धान्त इति** ॥ अनेन नानागुणत्वेन तेषां श्रुतिषु दृष्टेरिति न्यायविवरणांशोऽपि व्याख्यातः ।

## भावदीपः

**यथा योग्याङ्गदेवतेति** ॥ तत्तद्देवतायोग्यतानुसारि यदुपासनं तत्तद्योग्यगुणविशिष्टत्वेन परिवारदेवताध्यानं यत्तद्युक्तत्वेनेत्यर्थः । एतेन यासामिन्द्रादिदेवतानामर्जुनाद्यंशैरेकत्वोक्त्योपासनाया योग्यतासापेक्षत्वं सिद्धम् । तासामेवेह योग्यतानुसार्युपासनं साध्यत इति पूर्वसङ्गतिरपि सूचिता । अस्मिन् पक्षे प्रागुक्तप्रमेये विरोधाभावादाह ॥ **तत्प्रतिपादकेति** ॥ संज्ञातश्चेदित्याद्युक्तदिशा सर्वस्य परममुख्यवृत्त्या भगवत्प्रतिपादकत्वेऽपि अन्यार्थं तु जैमिनिरित्याद्युक्तदिशाऽमुख्यावृत्त्याग्नीन्द्र-

(भावदीपः)

मित्रावरुणादिसूक्तादिरूपवेदस्य देवताप्रतिपादकत्वमप्यस्तीति भावः ॥ **वैय्यर्थ्यस्येति** ॥ आध्यानाय प्रयोजनाभावादित्युक्तदिशा तदुक्तेरुपासनैकार्थत्वात् । न चेन्द्रादिकर्मानुष्ठानोपयोगितया इन्द्रादिज्ञानार्थं तदुक्तिः । स्वातन्त्र्येण तज्ज्ञानस्याऽनर्थत्वात् । स आत्मा अङ्गान्यन्या देवता इत्यादावीशपरिवारत्वोक्तिवैयर्थ्यादुपासनार्थत्वस्य मुख्यत्वाच्चेति भावः । यथा योग्येत्युक्तेः फलमाह ॥ **उक्ततारतम्येति** ॥ एकैकदेवतागुणानां सर्वत्रोपासने मिथ्योपासनस्य न प्रतीके न हि स इति वक्ष्यमाणदिशा निषिद्धत्वेन सर्वत्र सर्वदेवतागुणानां सत्यतापत्त्या यावदधिकारमित्यत्रोक्त-तारतम्यपरिलोपः स्यादित्यर्थः । प्रागुक्तप्रमेयाक्षेपलाभायैव मिथ्योपासनत्वापत्तिरित्यनुक्त्वैवमुक्तम् ॥ **ब्रह्मेति** ॥ तद्विजिज्ञासस्वेत्यादिविधेरित्यर्थः । आत्मानमेव लोकमुपासीत तमेवैकं जानथ इत्यादिविशेषादर्शनदशायामिति भावः । सौत्रतुशब्दव्यावर्त्यपूर्वं पूर्वपक्षोपयोगिसंशयमाह ॥ **अन्यदेवतेति** ॥

**द्वैविध्येति** ॥ केषुचित्साम्येन पूजानमनसेवादि केषुचिद्विषमपूजादि चोपलभ्यत इति । एकत्र कृतपूजादेरन्यत्राप्युपसंहारतदभावदर्शनमित्यर्थः । नन्वेवं द्विरूपविचारपरत्वादधिकरणभेदः स्यादिति चेन्न । यथा ईक्षत्यधिकरणस्य ब्रह्म वाच्यं न वा, वाच्यं चेदपि सर्वशास्त्रार्थो न वेति द्विरूपविचारपरत्वेऽपि संशब्दार्थविचारत्वेनैकीकरणादेकत्वं तथा देवतोपासनविचारत्वेनैकीकरणा-देकत्वमिति तात्पर्यात् । अत एव पूर्वतन्त्रेऽर्थवादाधिकरणस्य द्विरूपविचारपरत्वेऽप्येकत्वम् । विवृतं च जिज्ञासासूत्रचन्द्रिकायां द्विपर्वाविचार इत्यादिना । भाष्यादौ द्वितीयविचारमात्रप्रतीतावपि परिवारतया ग्राह्या अपि हेयाः प्रधानत इति ईक्षतिनयानुभाष्योक्त्या सौत्राङ्गपदोक्त्या उपासनाङ्गदेवानामिति भाष्योक्तस्मृत्या चात्र विचारान्तरस्यापि सूचनात् । देवतोपासना-सामान्यस्यासिद्धौ तद्विशेषचिन्ताया अनवसरदुःस्थत्वादन्यस्य चैतच्चिन्तापरस्याभावादत्र सम्भवाच्च । क्रमेण पूर्वपक्षद्वयं व्यनक्ति ॥ **केवलमेवेत्यादिना** ॥ अपि हेया इत्युक्तिसूचितहेतुमाह ॥ **तमेवेति** ॥ गुणान्तरानुसन्धानस्य क्वचिद्दर्शनमात्रेण समाधिकाङ्गदेवतान्तरगुणा अप्यङ्गदेवतान्तरे उपसंहर्तव्या इति न्यायविवरणमूलकं द्वितीयपूर्वपक्षमाह ॥ **अन्यदेवतेति** ॥ देवत्ववैष्णवत्वादि-गुणानामित्यर्थः ॥ **अत इति** ॥ तमेवेत्यादिवचनादित्यर्थः । आदिपदार्थं वदन् तदन्तभाष्यं शेषोक्त्या आद्यसिद्धान्तपरतया तावद्व्याचष्टे ॥ **ब्रह्मादीति** ॥ अङ्गपदं तमेवेत्यादेर्गतिसूचकमिति

(भावदीपः)

व्याचिकीर्षुणा ब्रह्मादिदेवतेत्युक्तम् । नमस्कारादिरादिपदार्थः । एतेन सूत्रे अङ्गावबद्धाः अङ्गैर्ब्रह्मादिदेवैरवबद्धाः सम्बद्धाः तद्विषया उपासनापूजानमस्कारादयः कार्या इत्यर्थ उक्तो भवति। विष्णोरङ्गसमुद्भूतेर्विष्णोरङ्गानि देवताः । उच्यन्ते सर्ववेदेष्विति दशमेऽष्टत्रिंशाध्याय-तात्पर्योक्तेरङ्गपदसूचितं अपि हेयाः प्रधानत इत्यनुभाष्योक्तं हेतुमाह ॥ **तत्रेति** ॥ द्वितीय-सिद्धान्तमाह ॥ **उपसंहारे त्विति** ॥ तुशब्दार्थमाह ॥ **विशेषोऽस्तीति** ॥ कथमित्यतो भाष्ये उपासनादीति पदं तद्विषयगुणजातपरमुपेत्य समग्रभाष्यमेकान्वयतया व्याचष्टे ॥ **सर्वेति** ॥ उक्तमिति शेषोक्तिः । **अवबद्धशब्दार्थः सम्बन्धीति** । **रुद्रादिष्विति** शेषोक्तिः । एतेनाङ्गानां ब्रह्मादिदेवानामवबद्धाः सम्बन्धिनो गुणा रुद्रादौ नोपसंहार्या इति सूत्रांशस्यार्थ उक्तो भवति । अनिषिद्धे गुणानां वाक्यान्वयन्यायेनोपसंहारादिति न्यायविवरणोक्तं व्यंजयन् भाष्येण संयोजयति ॥ **योग्यमेवेत्यादिना** ॥ भाव इत्यन्तेन । एतेन प्रतिवेदं शाखासूक्ता अङ्गावबद्धा ब्रह्माद्यङ्गदेवता-सम्बन्धिनो गुणा रुद्रादिषु नोपास्या इति सूत्रार्थो दर्शितो भवति । हिशब्दाद्वचनादित्यनयोरन्वया-प्रतीतेराह ॥ **सूचितादिति शेष इति** ॥ स्मृतौ नांगदेवताद्युपासनमुपसंहार्यमित्येतत्स्वोक्त-सिद्धान्तद्वयोपयोगित्वाय भिन्नवाक्यतया व्याचष्टे ॥ **अङ्गदेवतेति** ॥ कर्मणि ल्युडन्तमुपासनपदं गुणजातपरं चोपेत्यांगदेवाद्युपासनमित्यस्यार्थमाह ॥ **ब्रह्मादीनां गुणजातमिति** ॥ आद्यपादं व्याचष्टे ॥ **कुत इत्यादिना** ॥ नानागुणत्वेन तेषां श्रुतिषु दृष्टेरित्यन्यत्रोक्त्यनुरोधेनांत्यपादभावमाह ॥ **वेदसिद्धान्त इति** ॥ नानागुणत्वेन सर्वोत्तमत्वविद्यापुत्रसंपदादिभिन्नभिन्नफलदातृत्वोमापतित्व-वाणीपतित्वादिनानागुणत्वेनेत्यर्थः । व्यक्तमेतत्प्रथमाध्यायबृहद्भाष्योक्तपैङ्गिश्रुत्यादौ ।

## अभिनवचन्द्रिका

अङ्गावबद्धाः अङ्गदेवतासहिता ब्रह्मोपासनादयः कार्याः । अङ्गदेवतोपासने च विशेषोऽस्ति । प्रतिवेदं सर्वशाखासु चाङ्गदेवतासम्बन्धित्वेनोक्ता गुणा न रुद्रादिषु उपसंहर्तव्याः । किंतु तत्तद्योग्या एवेति सूत्रार्थः । अन्तर्भेदाधिकरणमिदम् । अङ्गदेवतोपासनाकर्तव्यत्वस्य, अङ्गदेवेषु यथायोग्य-गुणोपसंहारस्य च समर्थनात् ॥ **अन्यथेति** ॥ प्रमेयद्वयस्य प्रतिपादनाभाव इत्यर्थः । अङ्गदेवतो-पासनायुक्तत्वसमर्थनाभावे तद्विधायकवेदवैयर्थ्यस्य, अङ्गदेवेषु यथायोग्यगुणोपसंहारसमर्थनाभावे च, सर्वेषां सर्वगुणयुक्ततया ध्यानेन महाफलदर्शनात्, सर्वसाम्यस्यैव तात्विकत्वापत्त्या तारतम्याभावस्य

(अभिनवचन्द्रिका)

प्रसङ्ग इति विवेकः । 'अङ्गावबद्धास्त्विति सूत्रखण्डस्य विषयसंशयौ दर्शयति– **प्रकृतं भगवदुपासनमेवेति** ॥ 'न शाखासु प्रतिवेदम्' इति सूत्रखण्डनिवर्त्यसंशयं दर्शयति– **अन्यदेवतोपासन इति** ॥ आद्यपूर्वपक्षमाह– **केवलमेवेति** ॥ द्वितीयं पूर्वपक्षमाह– **अन्यदेवतोपासन इति** ॥ आद्यपूर्वपक्षमुपसंहरति– **अत इति** ॥ द्वितीयं पूर्वपक्षमुपसंहरति– **अत इति** ॥ द्वितीयसिद्धान्तमाह ॥ **उपसंहारे त्विति** ॥

## वाक्यार्थमुक्तावली

**यथायोग्याङ्गदेवतोपासनेति** ॥ यस्यां देवतायां ये गुणा उपासितुं योग्याः तदनतिक्रमेणाङ्गदेवतोपासनं यथायोग्याङ्गदेवतोपासनं तद्युक्तत्वेन कर्तव्यता समर्थनादित्यर्थः । एतेन देवादीनामनादियोग्यतायां समर्थितायां तदनुसारेण तेषामुपास्यत्वसमर्थनादनन्तरसङ्गतिरप्युक्ता वेदितव्या ॥ **अन्यथेति** ॥ अङ्गदेवतोपासनाभावे तत्प्रतिपादकवेदवैयर्थ्यस्य तेषु स्वयोग्यगुणानुपसंहारे सर्वेषु सर्वोपसंहारे मिथ्योपासनस्यानर्थहेतुत्वेन सर्वेषां सर्वगुणवत्त्वापत्त्या तारतम्याभावस्य च प्रसङ्ग इत्यर्थः । तथा च सर्ववेदान्तप्रत्ययं, इयदामननादित्युक्तमयुक्तमिति भावः ॥ **अन्यदेवतेति** ॥ अत्र भगवदुपासनं केवलमेव कर्तव्यमुतान्यदेवतोपासनायुक्तमिति चिन्ता । तदर्थं तमेवैकं जानथात्मानमन्या वाचो विमुञ्चथ, पूजयेन्नान्यदेवता इत्यादिकं सर्वथान्यदेवतोपास्तिनिषेधकमुत प्राधान्येन तन्निषेधकमिति ॥ **ब्रह्मोपासनविधेरिति** ॥ ब्रह्मोपास्व ब्रह्मोपचरस्वेति विधेरित्यर्थः ॥ **किमेकस्येति** ॥ किमेकस्य देवस्य श्रुतिप्रतीतगुणाः सर्वेषूपसंहर्तव्या उत नोपसंहर्तव्या इति चिन्ता । तदर्थं देवत्वादिगुणानां सर्वेषूपसंहारवद्गुणान्तराणामप्युपसंहारे बाधकं नास्त्युतास्तीति ॥ **लौकिकेति** ॥ लौकिकपुरुषेषु कचिन्नीचोच्चभावेन पूजादर्शनमित्यर्थः । ननु प्रमेयद्वये पृथक् संशयपूर्वपक्षसिद्धान्तकरणात् कथमिदमेकमधिकरणम् । देवतोपास्तिविषयत्वेनेकाधिकरणत्वेऽङ्गेषु यथाश्रयभाव इत्यत्र विचार्यमप्यत्रैव स्यादिति चेन्न । अत्र प्राधान्येनाङ्गदेवतासु यथायोग्यगुणोपसंहार एव विचार्यते । गुणोपसंहारपादत्वात् । अत एव तत्रैव पूर्वपक्षसिद्धान्तन्यायौ न्यायमालायां पठितौ । विवृतौ च न्यायविवरणे । गुणोपसंहारविचारदेवतोपास्तेः कर्तव्यत्वसिद्धावेव भवतीति तद्विचारोपसंदब्धत्वाद्विचारद्वयनिरूपणपरमेतदन्तर्भेदाधिकरणमिति न दोषः ।

(वाक्यार्थमुक्तावली)

अङ्गावबद्धा इत्यंशव्यावर्त्यं पूर्वपक्षमाह ॥ **केवलमेवेति** ॥ सिद्धान्तेऽङ्गपदेन सावकाशयितव्यश्रुतिमुक्तार्थे प्रमाणत्वेनाह ॥ **तमेवैकमिति** ॥ समग्रसूत्रव्यावर्त्यपूर्वपक्षं सन्निधानमित्युक्तन्यायं प्रदर्शयन्नाह । **अङ्गदेवतोपासने चेति** ॥ **देवतागुणानामिति** ॥ देवत्वे एकान्तभक्तत्वादिगुणानां सर्वेषु तत्वदेवेषु सन्निधानापरपर्यायोपासनादर्शनादित्यर्थः । भाष्ये उपासनादीत्यादिपदानुरोधादाह ॥ **परिचर्यादीति** ॥ अत्रादिपदेन नमस्कारादिर्गृह्यते ।

सूत्रे तुशब्दोऽवधारणे । कार्या इत्यध्याहृतेन सम्बद्ध्यते । भाष्ये कार्यमित्यध्याहृतेनेति भावेनाह ॥ **कार्यमेवेति** ॥ सूत्रे ब्रह्मादिदेवतावबद्धेति ब्रह्मादिवाचकप्रसिद्धपदे प्रयोक्तव्ये अङ्गपदग्रहणेन व्यावर्त्यमाशङ्क्य निषेधति ॥ **न चेति** ॥ एतेनाङ्गोत्पन्नत्वादङ्गाश्रितत्वात्परिवारत्वाच्चाङ्गपदेन ब्रह्माद्या उच्यन्ते । 'विष्णोरङ्गसमुद्भूतेः विष्णोरङ्गानि देवताः । उच्यन्ते सर्ववेदेषु स्वरूपभेदिनोऽपि तु' इति वचनात् । तथा चाङ्गावबद्धाः अङ्गसंज्ञकब्रह्मादिदेवेष्ववद्धाः सम्बद्धाः उपसनाद्याः कर्तव्या एव विहितत्वात् । न चान्या वाचो विमुंचथ, पूजयेन्नान्यदेवता इति श्रुतिस्मृतिविरोधः । अङ्गत्वेनोपासनस्यात्र विधानात् । श्रुत्यादौ प्राधान्योपासनानिषेधादिति सूत्रखण्डार्थ इत्युक्तं भवति । भावबोधे तु सूत्रे ब्रह्माद्या उपास्या इति व्याख्यातम् । तेषामङ्गावबद्धा अङ्गतयावबद्धाः स्थिता इत्येतदध्याहृतं ब्रह्मादिविशेषणमिति हृदयम् । द्वितीयपूर्वपक्षप्रतिक्षेपाय सूत्रं व्याख्यातं प्रतिशाखं प्रतिवेदं च नोपसंह्रियत इति भाष्यं तत्र प्रतिवेदं प्रतिशाखमित्यतः परमुक्तं ब्रह्माद्यङ्गदेवतासम्बन्धिगुणजातं रुद्रादिष्वित्यध्याहारः ।

सूत्रे तुशब्दो विशेषार्थः । रुद्रादिषूपास्या इति शेषः । तथा च प्रतिवेदं प्रतिशाखं चोक्ता अङ्गदेवतावबद्धाः ब्रह्माद्यङ्गदेवतासम्बन्धिनो गुणास्तु रुद्रादिषु नोपास्याः, किन्तु योग्या एवोपास्या इत्यर्थं मनसि निधायाह ॥ **उपसंहारे इत्यादिना** ॥ प्रतिवेदं शाखासु विद्यमानं भगवत्परं वाक्यजातं यथा ब्रह्मादौ नोपसंह्रियते नान्वीयते तथेति दृष्टान्तपरत्वेनापि सूत्रभाष्ये योजयति ॥ **यथा खल्विति** ॥ सर्वेषां सहस्रशीर्षेत्यादीनां योग्यानां हिरण्यगर्भः समवर्तताग्र इत्यादीनाम् । दृष्टान्तानभिप्राये भाष्ये नोपसंहार्यमिति स्यात् । नोपसंह्रियत इति स्मृतावङ्गदेवताद्युपासनं कार्यमित्यन्वयः । उपसंहारस्य कर्तव्यत्वे समत्वादित्यादिहेतुः तस्यासिद्धिपरिहारार्थं नानादृष्टिरिति न्यायं प्रदर्शयितुं वेदसिद्धान्तवेदिनेत्युक्तमित्यभिप्रेत्य स्मृतिं व्याचष्टे । **अङ्गदेवताद्युपासनमित्यादिना** ॥

## तत्त्वसुबोधिनी

**यथायोग्येति ॥** पूर्वाधिकरणे योग्यतायां समर्थितायां तदनुसारेणाङ्गदेवतोपासनाकर्तव्यताऽत्र समर्थ्यत इत्यनन्तरसङ्गतिरिति भावः ॥ **अन्यथेति ॥** अङ्गदेवतोपासनाकरणेति द्विधा वैय्यर्थं यथायोग्यतदकरणे च तारतम्यानुपपत्तिरित्यर्थः ॥ **तस्येति ॥** उपासनस्येत्यर्थः । एकस्याङ्गदेवस्य । सर्वेष्वङ्गभूतदेवेषु । भाष्यगतपरिचर्यादिपदानुरोधेनाह ॥ **पूजादिष्विति ॥** सूत्रे ब्रह्माद्या उपास्या इति शेषः । तुशब्द एवार्थः । तस्य उपास्या एवेति सम्बन्धः । ब्रह्माद्या इत्येव वक्तव्ये 'अङ्गावबद्धा इति वचनं अन्यावाचो विमुञ्चथेत्यादिवाक्यविरोधपरिहारार्थमित्यभिप्रेत्य प्रवृत्तं ब्रह्माद्यङ्गदेवतावबद्धोपासनादिति भाष्यं व्याचष्टे ॥ **ब्रह्मादीति ॥** सूत्रे प्रतिवेदं प्रति शाखास्विति सम्बन्धः उक्तं गुणजातमुपसंह्रियत इति शेष इत्यभिप्रेत्य प्रवृत्तं प्रतिशाखमित्यादिभाष्यं व्याचष्टे । उपसंहारे तु विशेषोऽस्तीति । तावदङ्गदेवताद्युपासनं कार्यमित्यतःपरं कार्यमुत्तमानां गुणजातं सर्वधर्मेष्विति शेषः । नोपसंहार्यमित्यन्वयः । उपसंहाराकर्तव्यत्वे समत्वादिति हेतुकथनं तस्यासिद्धिपरिहारार्थम् । वेदसिद्धान्तेत्युक्तमित्यभिप्रेत्य स्मृतिं व्याचष्टे ॥ **अङ्गदेवताद्युपासनमिति ॥**

## वाक्यार्थविवरणम्

अन्यथा अङ्गदेवतोपसनायुक्तत्वेनाकर्तव्यत्वे ॥ **तत्प्रतिपादकेति ॥** ब्रह्माद्यङ्गदेवताप्रतिपादकेत्यर्थः ॥ **उक्ततारतम्येति ॥** साम्येनोपासने इति शेषः । 'इयदामननात्' इत्यनेनोक्तं यद्देवानां तारतम्यं, तदभावप्रसङ्गादित्यर्थः । एकस्य **देवस्य ॥ द्वैविध्येति ॥** एकस्य गुणाः महत्त्वाद्याः अन्यत्रोच्यमानाश्च दृष्टा इत्यर्थः । भाष्ये अङ्गदेवतावबद्धोपासनादि अङ्गदेवतासम्बन्ध्युपासनादिकार्यमित्यर्थः । ननूक्तं उपासनस्य गुणोपसंहारपूर्वकत्वादेकस्य श्रुतिप्रतीता गुणाः सर्वेषूपसंहर्तव्या इति तत्राह– **उपसंहारे त्विति ॥** अङ्गदेवतागुणोपसंहारविषये इत्यर्थः ॥ **सर्ववेदानामिति ॥** सर्ववेदानां सम्बन्धिन्यो याः सर्वशाखास्तास्वित्यर्थः । भगवद्वाचकवाक्यानां विष्णुपुरुषसूक्तादीनाम् ॥ **अन्यत्र ॥** लक्ष्म्यादौ । यथा लक्ष्म्यादेः सर्ववेदप्रतिपाद्यत्वेऽपि भगवत्परत्वेन प्रसिद्धविष्णुसूक्तादिव्यतिरिक्तवेदप्रतिपाद्यत्वमेव । अतस्तदीयसूक्तादौ तस्योक्तगुणा न लक्ष्म्यादौ युक्ताः किन्तु तद्योग्याः । एवं रुद्रादेः वेदप्रतिपाद्यत्वेऽपि ब्रह्माद्युत्तमदेवताप्रतिपादकत्वेन प्रसिद्धहिरण्यगर्भादिसूक्तव्यतिरिक्तवेदप्रतिपाद्यत्वमेव । अतस्तत्सूक्तादौ हिरण्यगर्भादिरुक्ता गुणाः

(वाक्यार्थमुक्तावली)

अङ्गावबद्धा इत्यंशव्यावर्त्यं पूर्वपक्षमाह ॥ **केवलमेवेति** ॥ सिद्धान्तेऽङ्गपदेन सावकाशयितव्यश्रुतिमुक्तार्थे प्रमाणत्वेनाह ॥ **तमेवैकमिति** ॥ समग्रसूत्रव्यावर्त्यपूर्वपक्षं सन्निधानमित्युक्तन्यायं प्रदर्शयन्नाह । **अङ्गदेवतोपासने चेति** ॥ **देवतागुणानामिति** ॥ देवत्वे एकान्तभक्तत्वादिगुणानां सर्वेषु तत्वदेवेषु सन्निधानापरपर्यायोपासनादर्शनादित्यर्थः । भाष्ये उपासनादीत्यादिपदानुरोधादाह ॥ **परिचर्यादीति** ॥ अत्रादिपदेन नमस्कारादिर्गृह्यते ।

सूत्रे तुशब्दोऽवधारणे । कार्या इत्यध्याहृतेन सम्बद्ध्यते । भाष्ये कार्यमित्यध्याहृतेनेति भावेनाह ॥ **कार्यमेवेति** ॥ सूत्रे ब्रह्मादिदेवतावबद्धेति ब्रह्मादिवाचकप्रसिद्धपदे प्रयोक्तव्ये अङ्गपदग्रहणेन व्यावर्त्यमाशङ्क्य निषेधति ॥ **न चेति** ॥ एतेनाङ्गोत्पन्नत्वादङ्गाश्रितत्वात्परिवारत्वाच्चाङ्गपदेन ब्रह्माद्या उच्यन्ते । 'विष्णोरङ्गसमुद्भूतेः विष्णोरङ्गानि देवताः । उच्यन्ते सर्ववेदेषु स्वरूपभेदिनोऽपि तु' इति वचनात् । तथा चाङ्गावबद्धाः अङ्गसंज्ञकब्रह्मादिदेवेष्ववद्धाः सम्बद्धाः उपसनाद्याः कर्तव्या एव विहितत्वात् । न चान्या वाचो विमुंचथ, पूजयेन्नान्यदेवता इति श्रुतिस्मृतिविरोधः । अङ्गत्वेनोपासनस्यात्र विधानात् । श्रुत्यादौ प्राधान्योपासनानिषेधादिति सूत्रखण्डार्थ इत्युक्तं भवति । भावबोधे तु सूत्रे ब्रह्माद्या उपास्या इति व्याख्यातम् । तेषामङ्गावबद्धा अङ्गतयावबद्धाः स्थिता इत्येतदध्याहृतं ब्रह्मादिविशेषणमिति हृदयम् । द्वितीयपूर्वपक्षप्रतिक्षेपाय सूत्रं व्याख्यातं प्रतिशाखं प्रतिवेदं च नोपसंह्रियत इति भाष्यं तत्र प्रतिवेदं प्रतिशाखमित्यतः परमुक्तं ब्रह्माद्यङ्गदेवतासम्बन्धिगुणजातं रुद्रादिष्वित्यध्याहारः ।

सूत्रे तुशब्दो विशेषार्थः । रुद्रादिषूपास्या इति शेषः । तथा च प्रतिवेदं प्रतिशाखं चोक्ता अङ्गदेवतावबद्धाः ब्रह्माद्यङ्गदेवतासम्बन्धिनो गुणास्तु रुद्रादिषु नोपास्याः, किन्तु योग्या एवोपास्या इत्यर्थं मनसि निधायाह ॥ **उपसंहारे इत्यादिना** ॥ प्रतिवेदं शाखासु विद्यमानं भगवत्परं वाक्यजातं यथा ब्रह्मादौ नोपसंह्रियते नान्वीयते तथेति दृष्टान्तपरत्वेनापि सूत्रभाष्ये योजयति ॥ **यथा खल्विति** ॥ सर्वेषां सहस्रशीर्षेत्यादीनां योग्यानां हिरण्यगर्भः समवर्तताग्र इत्यादीनाम् । दृष्टान्तानभिप्राये भाष्ये नोपसंहार्यमिति स्यात् । नोपसंह्रियत इति स्मृतावङ्गदेवताद्युपासनं कार्यमित्यन्वयः । उपसंहारस्य कर्तव्यत्वे समत्वादित्यादिहेतुः तस्यासिद्धिपरिहारार्थं नानादृष्टिरिति न्यायं प्रदर्शयितुं वेदसिद्धान्तवेदिनेत्युक्तमित्यभिप्रेत्य स्मृतिं व्याचष्टे । **अङ्गदेवताद्युपासनमित्यादिना** ॥

## तत्त्वसुबोधिनी

**यथायोग्येति** ॥ पूर्वाधिकरणे योग्यतायां समर्थितायां तदनुसारेणाङ्गदेवतोपासनाकर्तव्यताऽत्र समर्थ्यत इत्यनन्तरसङ्गतिरिति भावः ॥ **अन्यथेति** ॥ अङ्गदेवतोपासनाकरणेति द्विधा वैय्यर्थं यथायोग्यतदकरणे च तारतम्यानुपपत्तिरित्यर्थः ॥ **तस्येति** ॥ उपासनस्येत्यर्थः । एकस्याङ्गदेवस्य । सर्वेष्वङ्गभूतदेवेषु । भाष्यगतपरिचर्यादिपदानुरोधेनाह ॥ **पूजादिष्विति** ॥ सूत्रे ब्रह्माद्या उपास्या इति शेषः । तुशब्द एवार्थः । तस्य उपास्या एवेति सम्बन्धः । ब्रह्माद्या इत्येव वक्तव्ये 'अङ्गावबद्धा इति वचनं अन्यावाचो विमुञ्चथेत्यादिवाक्यविरोधपरिहारार्थमित्यभिप्रेत्य प्रवृत्तं ब्रह्माद्यङ्गदेवतावबद्धोपासनादिति भाष्यं व्याचष्टे ॥ **ब्रह्मादीति** ॥ सूत्रे प्रतिवेदं प्रति शाखास्विति सम्बन्धः उक्तं गुणजातमुपसंह्रियत इति शेष इत्यभिप्रेत्य प्रवृत्तं प्रतिशाखमित्यादिभाष्यं व्याचष्टे । उपसंहारे तु विशेषोऽस्तीति । तावदङ्गदेवताद्युपासनं कार्यमित्यतःपरं कार्यमुत्तमानां गुणजातं सर्वधर्मेष्विति शेषः । नोपसंहार्यमित्यन्वयः । उपसंहाराकर्तव्यत्वे समत्वादिति हेतुकथनं तस्यासिद्धिपरिहारार्थम् । वेदसिद्धान्तेत्युक्तमित्यभिप्रेत्य स्मृतिं व्याचष्टे ॥ **अङ्गदेवताद्युपासनमिति** ॥

## वाक्यार्थविवरणम्

अन्यथा अङ्गदेवतोपसनायुक्तत्वेनाकर्तव्यत्वे ॥ **तत्प्रतिपादकेति** ॥ ब्रह्माद्यङ्गदेवताप्रतिपादकेत्यर्थः ॥ **उक्ततारतम्येति** ॥ साम्येनोपासने इति शेषः । 'इयदामननात्' इत्यनेनोक्तं यद्देवानां तारतम्यं, तदभावप्रसङ्गादित्यर्थः । एकस्य **देवस्य** ॥ **द्वैविध्येति** ॥ एकस्य गुणाः महत्त्वाद्याः अन्यत्रोच्यमानाश्च दृष्टा इत्यर्थः । भाष्ये अङ्गदेवतावबद्धोपासनादि अङ्गदेवतासम्बन्ध्युपासनादिकार्यमित्यर्थः । ननूक्तं उपासनस्य गुणोपसंहारपूर्वकत्वादेकस्य श्रुतिप्रतीता गुणाः सर्वेषूपसंहर्तव्या इति तत्राह– **उपसंहारे त्विति** ॥ अङ्गदेवतागुणोपसंहारविषये इत्यर्थः ॥ **सर्ववेदानामिति** ॥ सर्ववेदानां सम्बन्धिन्यो याः सर्वशाखास्तास्वित्यर्थः । भगवद्वाचकवाक्यानां विष्णुपुरुषसूक्तादीनाम् ॥ **अन्यत्र** ॥ लक्ष्म्यादौ । यथा लक्ष्म्यादेः सर्ववेदप्रतिपाद्यत्वेऽपि भगवत्परत्वेन प्रसिद्धविष्णुसूक्तादिव्यतिरिक्तवेदप्रतिपाद्यत्वमेव । अतस्तदीयसूक्तादौ तस्योक्तगुणा न लक्ष्म्यादौ युक्ताः किन्तु तद्योग्याः । एवं रुद्रादेः वेदप्रतिपाद्यत्वेऽपि ब्रह्माद्युत्तमदेवताप्रतिपादकत्वेन प्रसिद्धहिरण्यगर्भादिसूक्तव्यतिरिक्तवेदप्रतिपाद्यत्वमेव । अतस्तत्सूक्तादौ हिरण्यगर्भादिरुक्ता गुणाः

(वाक्यार्थविवरणम्)

रुद्रादिदेवेष्वनुपसंहर्तव्याः । किन्तु तद्योग्या एवेत्यर्थः । तथा च अङ्गावबद्धाः अङ्गदेवतासम्बद्धाः तद्विषयकाः उपासनाद्याः कार्या एव । अन्यदेवतोपासनेन तद्गुणोपसंहारविषये विशेषोऽस्तीति उच्यते ॥ **नेति** ॥ प्रतिवेदं शाखासु । प्रतिशाखं तच्छाखासु च ब्रह्मादिदेवतानां प्रतीतं गुणजातं रुद्रादिषु नोपसंहर्तव्यमिति सूत्रार्थः । तत्र विशेषमाह ॥ **यावदिति** ॥ **नानागुणत्वेन** ॥ परस्परायोग्यगुणत्वेन ।

## वाक्यार्थमञ्जरी

**उक्तेति** यावदधिकारमित्यत्रेत्यर्थः ॥ ॐ अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॐ ॥ अङ्गावबद्धा अङ्गैरप्रधानैर्ब्रह्मादिभिरवबद्धाः सम्बद्धास्तद्विषया इति यावत् । उपास्त्यादयः कार्या एव उपसंहारे च तु विशेषोऽस्ति स कः प्रतिवेदं याः शाखाः तासूक्तमुत्तमगुणजातं नो चेन्नोपासनं कर्तव्यमित्यर्थः । **वेदसिद्धान्ते** वेदादिशास्त्रे ।

## सूत्रभाष्यम्

**॥ ॐ मन्त्रादिवद्वाऽविरोधः ॐ ॥ ५८ ॥**

**सर्वदेवतामन्त्रा यथाऽधीयन्त एवमविरोधो वा ।**

**'उपासनाङ्गदेवानां परमाङ्गतया भवेत् ।**
**उपसंहृतिर्विशेषे तु फलानामन्यथा न तु ॥**
**पुरुषाणां विशेषाद्वा यथायोगं भविष्यति' इति बृहत्तन्त्रे ॥**

## तत्त्वप्रदीपिका

इन्द्राग्न्यादिदेवताशब्दवाच्यविषया वेदादिमन्त्रा यथाऽधीयन्त एवं तत्तदङ्गदेवताशब्दवाच्योपासनाद्यविरोधो वा ब्रह्मविषयत्वबुद्धिभावात् । सर्वदेवतामन्त्रा यथाऽधीयन्त एवमविरोधो वेति भाष्यस्यान्योऽप्यर्थ उच्यते । सर्वदेवतामन्त्रा यथाऽधीयन्ते तत्तदनुस्मृत्या तद्वदुपसंहार्यत्वं च केषां, अवरेषामिति लभ्यते । समानां समोपासनस्योत्तमानामधमोपासनस्य च 'समत्वाद्वोत्तमत्वाद्वा' इति निषिद्धत्वात् । अत्र प्रमाणमाह– 'उपासनाङ्गदेवानां परमाङ्गतया भवेत्' इत्यादि । अङ्गादुद्भूता

(तत्त्वप्रदीपिका)

**अङ्गस्थाः परिवारभूता वा ब्रह्मादयोऽङ्गदेवास्तेषामुपासना कर्तव्यैवावरैः स्वस्मात्परमाङ्गत्वात्। न च प्राधान्येन, परमस्य विष्णोरङ्गत्वेनैव। गुणानामुपसंहृतिस्तु फलविशेषाकाङ्क्षायामेव। न मोक्षफलाय। यथा विषभयादौ गरुडादिषु विषहरत्वादिगुणोपसंहृतिः। भार्याशिष्यादिभावाद्वा यथा ह्युमादीनां रुद्रादिषु गुणोपसंहारः। न स्वरूपमात्रोपासनं तत्र।**

## तत्त्वप्रकाशिका

**एवमेकत्र प्रतीतानां सर्वगुणानामन्यत्रोपसंहाराभावमुक्त्वोपसंहारं चाभ्युपगच्छत्सूत्रं पठित्वा व्याचष्टे ॥ मन्त्रेति ॥ यथाग्न्याद्यधमदेवताविषयं मन्त्रविद्यादिकं ब्रह्माद्युत्तमदेवताविषयत्वेनाऽधीयतेऽध्येतृभिरुत्तमानां तत्प्रतिपाद्यत्वात्। एवमधमगुणानामुत्तमेषूपसंहारे न कश्चिद्विरोधः। तेषु तद्गुणित्वादिति भावः। उक्तं चैतत्। 'देवता सर्वविद्यानां स्वयं नारायणः प्रभुः। ऋते तत्र प्रसिद्धश्च देवता श्रीस्तथाऽत्र च। ऋते प्रसिद्धा ब्रह्मैव ततस्तेन क्रमेण च। पूर्वप्रसिद्धवर्जं तु शक्रान्ता देवता मताः। इन्द्रावरा विशेषेण लिङ्गेनैव पृथक् पृथक्' इति। यदुक्तं देवतोपासनं कार्यं यथायोग्यं गुणोपसंहारश्च कर्तव्यः इति तत्किं सर्वैः कार्यं न वेत्यपेक्षायामाह ॥ उपासनेति ॥ भवेत्सर्वैः कार्येति शेषः। फलविशेषेऽतिशयितफलार्थं पुरुषविशेष उत्तमाधिकारित्वम्। फलविशेषस्तेषामेव। उपासकप्रतिपत्तौ साधन एवायं विकल्पः। यथायोग्यमेव च सा भवति। अतो यथायोग्यमङ्गदेवतानामुपास्यत्वात्सर्वं युक्तमिति सिद्धम्।**

## गुर्वर्थदीपिका

उपसंहारमभ्युपगच्छदित्यस्योपसंहारमवरेषूक्तगुणानामुत्तमेषूपसंहारमित्यर्थः। पूर्वसूत्र उत्तमेषु विद्यमानगुणानामेवावरेषूपसंहारो न कर्तव्य इत्युक्तम्। इदानीं त्ववरेषु विद्यमानगुणानामुत्तमेषूपसंहारः कर्तव्य इत्युच्यत इति भावः। ऋते तत्र प्रसिद्धाश्चेत्यत्र तत्र नारायणे प्रसिद्धाः पुरुषसूक्तविष्णुसूक्तवामनसूक्ताद्या ऋते 'श्रीश्च सर्वविद्यानां देवता' अत्र च लक्ष्म्यां च प्रसिद्धा अम्भ्रणीसूक्तादिविद्या ऋते एव ब्रह्मा सर्वविद्यानां देवता। विशेषेण लिङ्गेन 'हिरण्मयेन सविता रथेन' 'अग्निर्दिवि हव्यमाततान' इत्यादिलिङ्गेन निमित्तेन पृथक्पृथक् स्वस्वसूक्तमात्रे देवताः। न त्विन्द्रादिवत्सर्वविद्यानामित्यर्थः। अतिशयितफलार्थमित्यस्य 'यस्तान्द्वेष्टि स मां द्वेष्टि यस्ताननु स माम्' इति भागवत वचनात्साङ्गदेवतोपासनेनातिशयितहरिप्रसादाख्यफलार्थमित्यर्थः। अत्रायं

(गुर्वर्थदीपिका)

विवेकः । यदा नित्यमुक्ताऽपि श्रीः स्वभर्तरि भगवति प्रीत्यतिशयेन तमुपास्ते तदाऽनन्तवेदोक्तगुणांस्तदनुक्तांश्च स्वयोग्यगुणान् स्वगुणान् स्वावरगुणांश्च स्वबुद्धिबलेन भगवत्युपसंहृत्योपास्ते । तदङ्गभूतश्रीदेवीं च भगवदेकनिष्ठसूक्तातिरिक्तवेदोक्तसकलगुणान् स्वगुणान् स्वावरगुणांश्चोपसंहृत्योपास्ते । तदैव तस्य भगवतः परमानुग्रहो नान्यथा । यदा च रुद्रः भगवन्तमुपास्ते तदा स्वयोग्यवेदोक्तगुणान् भगवत्युपसंहरति । श्रीदेव्यां च भगवदेकनिष्ठसूक्तातिरिक्तवेदोक्तस्वयोग्यगुणानुपसंहरति । ब्रह्मणि च श्रियो हरेश्चासाधारणसूक्तातिरिक्तवेदोक्तस्वयोग्यगुणान् । स्वगुणान् स्वावरगुणांश्चोपसंहरति । श्रियो गुणांश्च नोपसंहरति । एवमविवेचने स्वनीचाङ्गदेवतागुणस्यापि स्वेनोपास्यत्वप्रसङ्गेन तारतम्यविरोधः स्यादिति ज्ञेयम् । उपासकप्रतिपत्तौ साधन एवायं विकल्प इत्यत्रोपासका अङ्गदेवतानां गुणोपासकाः । तेषां प्रतिपत्तिः मनुष्याद्यास्सर्वेऽपि मोक्षाधिकारिणोऽङ्गदेवतोपासका न किंतूत्तमाधिकारिण एवेति सम्प्रतिपत्तिः । तस्यां सिद्धायां, साधने तैः क्रियमाणगुणोपसंहाराख्यसाधने । अयं विकल्पः उत्तमोत्तमानां गुणाः अवरेष्ववरेषु नोपसंहर्तव्याः । अवरगुणास्तूत्तमेषूपसंहर्तव्या इति विकल्पः विरुद्धपक्षद्वयमित्यर्थः ।

## भावबोधः

उत्तमेष्वधमापेक्षया मन्त्रादिवद्वेति न्यायविवरणानुसारेण सर्वदेवतेत्यादिभाष्यं व्याचष्टे– **यथेति ॥** सर्वदेवतामन्त्रा यथाऽधीयन्त इति भाष्यस्य यथेत्यादिस्वकृतं व्याख्यानं ऋग्भाष्यसम्मत्या समर्थयति– **उक्तं चैतदिति ॥** देवतोपासनं सर्वैः कार्यं न वेति प्रश्नोत्तरपरः पूर्वार्ध इत्यभिप्रेत्याह– **भवेत् सर्वैः कार्येति शेष इति ॥**

ननु उपसंहृतिस्तु फलातिशयार्थं सर्वैः कार्या भवेत् । अन्यथा न त्विति योजनायां उपासकानां मध्ये ये फलार्थिनः त एव पुरुषविशेषालब्धाः पुनः किमुच्यते पुरुषाणां विशेषादिति तत्राह– **पुरुषविशेष इति ॥**

नन्वेवं तर्हि उत्तमाधिकारिभिः कर्तव्या अन्यैः न कर्तव्या इति विकल्पार्थप्राप्त्या अन्येषां सर्वात्मनोपसंहारनिषेधः स्यात् । तथा च फलातिशयार्थं सर्वैरुपसंहृतिः कर्तव्येति प्रागुक्तविरोधः स्यादित्यत आह– **फलविशेषस्तेषामेवेति ॥** तथा चोपसंहृतिरित्युत्तरार्धे सर्वैः कार्येत्यस्यानुवृत्तिः नास्तीति भावः ।

(भावबोधः)

ननु उपसंहृतिः फलातिशयार्थं कर्तव्या नान्यथा फलाभावे कर्तव्येति पुरुषविशेषैः उत्तमाधिकारिभिः कर्तव्या अन्यैः न कर्तव्या वेति पक्षद्वयाभावात् कथं पुरुषाणां विशेषाद्वेति विकल्प इत्यत आह– **उपासकप्रतिपत्ताविति ॥** उपासनाङ्गदेवतानामिति प्रथमार्धेनोपासकाप्रतिपत्तौ अतिप्रसङ्गनिरासार्थं साधन एव फलसाधनोपासन एव पुरुषविशेषैः उत्तमाधिकारिभिरेव फलयोग्यैः फलातिशयार्थं उपासनमुपसंहृतिः कार्या । अन्यथा तदन्यैः फलायोग्यैरत एव फलातिशयार्थित्वा-भावेन कर्तव्या न वेति विकल्प इत्यर्थः । यद्वा, पुरुषविशेषादित्यनेन उत्तमाधिकारिरूपोपासक-प्रतिपत्तौ तैः उत्तमाधिकारिभिः फलातिशयापेक्षया कर्तव्याऽन्यथा न कर्तव्या वेति उपसंहृतिरूपसाधन एवायं विकल्पो न तु पुरुषविशेषैः कर्तव्यो अन्यैर्न कर्तव्य इति उपासकेषु विकल्प इत्यर्थः ॥ **यथायोग्यमिति ॥** सोपसंहृतिरुत्तमेष्वधमगुणानामेव नाधमेषूत्तमगुणानामिति यथायोग्यमित्यर्थः । अत्राद्ये 'अङ्गावबद्धा' इत्यनेन भगवदुपासनस्य ब्रह्माद्यङ्गदेवतोपासनासाहित्येन कर्तव्यतोक्तिः । 'न शाखासु' इत्यनेन उत्तमदेवगुणानाम-धमेषूपसंहाराभावोक्तिः । द्वितीये अधमगुणानामुत्तमेषूपसंहारसमर्थनमिति सूत्रक्रमः ।

## भावदीपः

**उपसंहारं चेति ॥** एकत्र प्रतीतानामन्यत्रेत्यनुषङ्गः । उत्तमेष्वधमगुणापेक्षया मन्त्रादि-वद्वेतीत्यन्यत्रोक्त्यनुरोधेन भाष्यं व्याचष्टे ॥ **यथेति ॥ उक्तं चैतदिति ॥** उत्तमानामधमदेवतामन्त्र-प्रतिपाद्यत्वं ऋग्भाष्ये उक्तमित्यर्थः । तदाह ॥ **देवतेति ॥** एतदर्थोक्तिः यथा सर्वदेवतामन्त्राः भगवदर्थकत्वेनाधीयन्ते एवमविरोधो वेति भाष्यस्यार्थान्तरसूचनाय वा तत्रेत्युत्तरार्धस्थतच्छब्द-परामर्शद्योतनाय वेति ज्ञेयम् । तत्र भगवति प्रसिद्धाः सूक्तविद्या ऋते वर्जयित्वा अन्यासां विद्यानां श्रीश्च देवता । तथात्र च श्रीदेव्यां प्रसिद्धा विद्या अम्भ्रणीसूक्ताद्या ऋते अन्यासां ब्रह्मैव देवता । ततः परं च तेन तत्र वक्ष्यमाणेन तारतम्यक्रमेणैव पूर्वप्रसिद्धवर्जं पूर्वस्यां देवतायां प्रसिद्धा विद्या वर्जयित्वा अन्यासां विद्यानां तु शक्रान्ता देवता मता इत्यर्थः । देवतानां भूयस्त्वात्कथं शक्रान्ता इत्युक्तिरित्यतः इन्द्रावरा इति पृथग्विशेषणव्यावर्तकेन लिङ्गेन श्रुतिलिङ्गादिना ज्ञापकैर्नैवेन्द्रावरा-स्तत्र तत्र विद्यासु देवताः स्युः, न तु श्रुतिलिङ्गाद्यभावे । इन्द्रपर्यन्तास्तु श्रुत्याद्यभावेऽपि पूर्वप्रसिद्धवर्जं देवताः स्युरिति शक्रान्ता देवता मता इत्युक्तमिति भावः । अत्रेन्द्रावरा इत्यतः पूर्वं

(भावदीपः)

देवता मता इत्यतः परं ब्रह्मवायू गिरौ वीन्द्रेत्यादिदेवताक्रमोक्तिपरश्लोकचतुष्टयस्येहानुपयोगादपाठ इति ध्येयम् । न त्वयमेव भाष्यक्रम इति भ्रमितव्यम् ॥ **तत्किमिति** ॥ पूर्वोक्तं द्वयमित्यर्थः ॥ **आहेति** ॥ अङ्गदेवतोपासनं सर्वैः कार्यं गुणोपसंहारस्तु सर्वैर्न कार्यः । किं तूत्तमाधिकारिभिरतिशयितफलार्थं कार्य इत्याहेत्यर्थः । फलानां विशेष इति निमित्तसप्तमीमुपेत्याह ॥ **अतिशयितफलार्थमिति** ॥ फलविशेषार्थिभिर्यैः कैश्चिद्वा उत्तमाधिकारिभिर्वेति भ्रमनिरासायाह ॥ **फलविशेपस्तेषामेवेति** ॥ ननूपसंहृतिस्तु पुरुषविशेषैः फलानां विशेषार्थं कार्या । न त्वन्यथेत्यर्थोक्तौ वाशब्दो व्यर्थ इत्यत आह ॥ **उपासकेति** ॥ साधन इति प्रतिपत्ताविति च समानाधिकरणम् । प्रतिपत्तिरुपासना । उपासकैः क्रियमाणप्रतिपत्तिरूपसाधन एवायम् । अङ्गदेवानां भगवत्परिवारतया प्रतिपत्तिः सर्वैः कार्या । न तु गुणप्रतिपत्तिः । सा तु फलातिशयार्थिभिरुत्तमाधिकारिभिः कार्येत्येव विकल्पो न तु फलविशेषार्थिभिर्वा पुरुषविशेषैर्वेत्येवंरूपविकल्प इत्यर्थः । पुरुषविशेषैः क्रियमाणापि गुणोपसंहृतिः किंरूपेत्यतो विशेषे त्विति तुशब्द उपसंहृतौ विशेषद्योतक इति भावेनाह ॥ **यथेति** ॥ सा गुणोपसंहृतिः उमाया रुद्रे साक्षाद्भर्तृत्वगुरुत्वादे रुद्रस्य ब्रह्मणि पितृत्वगुरुत्वादेरुपसंहृतिरित्येवमादिरूपेत्यर्थः ॥ **अत इति** ॥ श्रुतिषु देवतातद्गुणोक्त्यन्यथानुपपत्तिबलात्तमेवेत्यादेरनङ्गत्वनिरासपरत्वादुपासनेत्यादिस्मृतिबलाच्चेत्यर्थः ॥ **सर्वमिति** ॥ प्रागुक्ततारतम्यादिकमित्यर्थः ।

## अभिनवचन्द्रिका

'फलविशेषार्थमुपसंहृतिः कार्या । अन्यथा न इत्युक्त्या मध्यमाधमाधिकारिभिरपि फलविशेषार्थमङ्गदेवतोपसंहृतिः कार्येत्यागतमित्यत आह ॥ **फलविशेष इति** ॥ ननु फलविशेषे उपसंहृतिः कार्या । पुरुषविशेषेण कार्येत्यनयोरेकत्वात् 'कथं पुरुषाणां विशेषाद्वा' इति विकल्पाभिधानमित्यत आह– **उपासकप्रतिपत्ताविति** ॥ उपासकस्य शिष्यस्य योग्यगुणप्रतिपत्तौ जनयितव्यायां साधन एवायं विकल्प इत्यर्थः । गुरुणा शिष्यं प्रति त्वमेतादृशफलयोग्योऽसीति वा उपदेष्टव्यम्, त्वं रुद्रादिगणस्थोऽसीति वा उपदेष्टव्यम् । अनयोरन्यतरेणोपदेशेन उपासकस्य योग्यगुणप्रतीतिर्भवतीति भावः । यथायोगं भविष्यतीति मूलार्थमाह– **यथायोग्यमेवेति** ॥ **सा** अङ्गदेवानां गुणोपसंहृतिः, तत्तद्योग्यतानुसारेण कृतैव, फलाय भवतीत्यर्थः ।

(अभिनवचन्द्रिका)

अत्रेमौ पूर्वपक्षौ- केवलमेव ब्रह्मोपासनं कर्तव्यम्, 'तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ, पूजयेन्नान्यदेवता' इति वचनात् । ततश्च अन्यदेवानामनुपास्यत्वात् तदभिधायकवेद-वैयर्थ्यमित्येकः । अपरस्तु कार्यैवाङ्गदेवतोपासना । परं तु ब्रह्मादिषु ये गुणा वेदेषु प्रतीताः, ते सर्वदेवेषु उपसंहर्तव्याः । ये चाग्न्यादिषु प्रतीता गुणाः तेऽपि सर्वदेवेषु उपसंहर्तव्याः । ततश्च तारतम्याभाव इति ।

अत्रैते सिद्धान्ताः- कार्यमेवाङ्गदेवतोपासनादिकम् । न च श्रुत्यादिविरोधः प्राधान्येन तदुपासनस्य निषिद्धत्वात् । ततश्च न तद्विधायकवेदवैयर्थ्यमित्येकः ।

अपरस्तु कार्यैव अङ्गदेवतोपासना । परं तु ब्रह्माद्युत्तमेषु प्रतीताः गुणा नाधमेषु उपसंहर्तव्याः । अयोग्यत्वात् । ततश्च न तारतम्यहानिरिति ।

अन्यस्तु यदुक्तं पूर्वपक्षिणा– कार्यैवाङ्गदेवतोपासना, परं तु अग्न्याद्यधमदेवेषु प्रतीताः सर्वदेवेषु उपसंहर्तव्या इति, तत्तथैव । यदत्रोक्तम् तारतम्यहानिरिति । तन्न । अधमगुणानामुत्तमेषु सद्भावेऽपि उत्तमगुणानामधमेष्वभावादिति । अतो यथायोग्यमङ्गदेवतानामुपास्यत्वात्सर्वं युक्तमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

वाशब्दो व्यवस्थितविकल्पे । अवरगुणानामुत्तमेषूपसंहारेऽपीति शेषः । मन्त्रादिवन्मन्त्रादेरि-वेत्यर्थं मनसि निधाय व्याचष्टे ॥ **यथेति** ॥ **उक्तं चेति** ॥ ऋग्भाष्य उक्तमित्यर्थः । इन्द्रावरास्तु पृथक्पृथक् स्वासाधारणलिङ्गश्रुत्यादिनैव विद्यानां देवताः न त्विन्द्रादिवत् पूर्वप्रसिद्धवर्जसर्वविद्यानां देवता इत्यर्थः । देवतोपासनं सर्वैः कर्तव्यं न वेति प्रश्नोत्तरपर आद्यार्थ इति भावेनाह ॥ **भवेत्सर्वैः कार्य इति** ॥ गुणोपसंहारः सर्वैः कार्यो न वेत्यस्योत्तरपरोपसंहृतिरिति श्लोकः । तत्र फलानां विशेष इति तादर्थ्ये सप्तमीत्याह ॥ **फलानां विशेष इति** ॥ तेषामुत्तमानामेव योग्यो न सर्वेषामित्यर्थः । नन्वेवं पुरुषविशेषपदेनोत्तमाधिकारिणः स्वीकृत्य फलविशेषस्तेषामेवेत्यङ्गीकारे उपसंहृतिरित्यर्थे विशेषाकाङ्क्षायामुपसंहृतिः कार्या । तदनपेक्षायां न कार्या वेत्येकं विकल्पमुक्त्वा द्वितीयार्धे पुरुषाणां विशेषात् ल्यब्लोपनिमित्ता पञ्चमी । योग्यताविशेषमपेक्ष्यैवोपसंहृतिर्भवेत् ।

(वाक्यार्थमुक्तावली)

पुरुषविशेषैः फलापेक्षाभावेऽप्युपसंहृतिः कार्या नान्यैरिति योग्यता यत्र विकल्पान्तराम्नानमयुक्तम् । अतः फलेन विकल्पाम्नानं मोक्षयोग्यमात्रसाधारणम् । पुरुषाणां विशेषाद्वेति तु फलानपेक्षायामपि तत्साधने उपासने उत्तमाधिकारिणामेव योग्यता नान्येषामिति विकल्पान्तरपरमित्यङ्गीकार्यम् । तथा च कथं फलविशेषस्तेषामेवेत्युच्यत इत्यत आह ॥ **उपासकेति** ॥ फलानां विशेषार्थमित्यलौकिकातिबहुलफलोक्त्योपसंहाराधिकरणे उत्तमा एव न मनुष्याद्या इत्युपासकप्रतिपत्तौ सत्यां तादृशफलसाधनोपसंहारैरेको विकल्पोऽङ्गीकार्यः । न तु विकल्पद्वयमभिप्रेतम् । पुरुषाणां विशेषाद्वेत्यस्य पूर्वत्रैवान्वयाङ्गीकारादिति भावः । तथा च स्मृत्यर्थः । परमाङ्गतया परमात्मपरिवारत्वेनाङ्गदेवतानामुपासना सर्वैर्मोक्षयोग्यैः कार्या भवेत् । उपसंहृतिस्तु पुरुषाणामुपासकानामुत्तमाधिकारित्वमपेक्ष्य तद्योग्यफलविशेषार्थं भविष्यति । अन्यथोत्तमाधिकारित्वाभावे तादृशफलयोग्यताया एवाभावात् न वा न कर्तव्या वा । वेति व्यवस्थितो विकल्पः । श्लोकोपसंहृतिरुपास्यानां देवानां गुणयोग्यतामपेक्ष्योपासकानां स्वयोग्यतामपेक्ष्य च भवतीति । भावबोधे तु नन्वेवं तर्ह्युत्तमाधिकारिभिः कर्तव्यान्यैर्न कर्तव्येति विकल्पार्थप्राप्त्या तेषां सर्वात्मनोपसंहारनिषेधः स्यात् तथा च फलातिशयार्थं सर्वैरुपसंहृतिः कार्या । अन्यथा फलाभावे न कर्तव्येति पुरुषविशेषैरुत्तमाधिकारिभिः कर्तव्याऽन्यैर्न कर्तव्येति पक्षद्वयाभावात् कथं पुरुषाणां विशेषाद्वेति विकल्प इत्यत आह ॥ **उपासकप्रतिपत्ताविति** ॥ पुरुषाणां विशेषादित्यनेनोत्तमाधिकारिरूपोपासकप्रतिपत्तावुत्तमाधिकारिभिरेव फलातिशयापेक्षया अन्यथा न कर्तव्येत्युपसंहृतिरूपसाधन एवायं विकल्पो न तु पुरुषविशेषैः कर्तव्याऽन्यैर्न कर्तव्येत्युपासकेषु विकल्प उच्यत इत्यर्थ इत्युक्तम् ।

## तत्त्वसुबोधिनी

सर्वदेवतामन्त्रा यथा विधीयन्ते इति भाष्यस्य स्वर्पयेत्यादिस्वकृतव्याख्यानं ऋग्भाष्यसम्मत्या समर्थयति ॥ **उक्तं चैतदिति** ॥ स्वयं साक्षात्प्रभुरिति देवत्वोपपादनार्थम् । तत्र भगवति प्रसिद्धाः सूक्तदिविद्याः ऋते वर्जयित्वा अन्यासां विद्यानां श्रीश्च देवता । तथा च श्रीदेव्यां प्रसिद्धा अम्भृणीत्युक्ता विद्यानां शक्रान्ता देवता मताः । अन्या अपि भारत्याद्याः ज्ञातव्याः । यद्येताः सर्वा अपि विद्यादेवता इत्युक्तम् । तत्राह ॥ **इन्द्रवरा इति** ॥ यद्यप्येताः सर्वा अपि विद्यादेवता भवन्त्येव । तथापि पृथक् पृथक् विशेषणव्यावर्तकेन लिङ्गेन श्रुतिलिङ्गादिना ज्ञापकेन इन्द्रावराः

(तत्त्वसुबोधिनी)

तत्र तत्र विद्यासु देवताः । न तु श्रुतिलिङ्गाद्यभावे इन्द्रपर्यन्तास्तु श्रुत्याद्यभावेऽपि पूर्वप्रसिद्धवर्जं देवताः स्युरिति शक्रान्ता इत्युक्तम् । देवतोपासनं सर्वैः कार्यं न वेति प्रश्नोत्तरपरः पूर्वार्ध इत्याह । भवत्सर्वैः कार्येति शेष इति । ननूपसंहृतिस्तु फलातिशयार्थं सर्वैः कार्या भवेत् । अन्यथा न त्विति योजनायां उपासकानां मध्ये ये फलातिशयार्थिनः त एव पुरुषविशेष इति । नन्वेवं तर्हि उत्तमाधिकारिभिः कर्तव्या अन्यैः न कर्तव्या इति विकल्पार्थप्राप्त्या अन्येषां सर्वात्मनोप-संहारनिषेधः स्यात् । तथा च फलातिशयार्थः सर्वैरुपसंहृतिः कर्तव्येति प्रागुक्तविरोधः स्यादित्यत आह ॥ **फलविशेषस्तेषामेवेति** ॥ तथा च उपसंहृतिः फलातिशयार्थं कर्तव्या इत्युक्तार्थे सर्वैः कार्येत्यस्यानुवृत्तिः नास्तीति भावः ।

ननु उपसंहृतिः फलातिशयार्थं कर्तव्या अन्यथा फलाभावे न कर्तव्या इति पुरुषविशेषै-रुत्तमाधिकारिभिः कर्तव्या अन्यैः न कर्तव्या वेति पक्षद्वयाभावात् कथं पुरुषाणां विशेषाद्वेति विकल्प इत्यत आह ॥ **उपासकप्रतिपत्ताविति** ॥ उपासनाङ्गदेवानां इति प्रथमार्धेन उपासकप्रति-पत्तौ अतिप्रसङ्गनिरासार्थं साधन एव फलोपासन एव पुरुषविशेषैः उत्तमाधिकारिभिरेव फलयोग्यैः फलातिशयार्थं उपासनम्, उपसंहृतिः कार्या अन्यथा तदन्यैः फलायोग्यैः तत एव फलाति-शयार्थित्वाभावेन कर्तव्या वेति विकल्प इत्यर्थः । यद्वा पुरुषविशेषादित्यनेन उत्तमाधिकारि-रूपोपासकप्रतिपत्तौ तैः उत्तमाधिकारिभिः फलातिशयापेक्षया कर्तव्याऽन्यथा च न कर्तव्या वेति उपसंहृतिरूपसाधन एवायं विकल्पो न तु पुरुषविशेषैः कर्तव्या अन्यैः न कर्तव्येति उपासकेषु विकल्प उच्यत इत्यर्थः । भावा उपासकाः देवाः तेषां प्रतिपत्तौ उपासनायाः साधन एव उपासनासाधनीभूतफलेच्छायामेव विकल्पः फलेच्छा कर्तव्या न वा उत्तमाधिकारिण एव कदाचिदिच्छया कुर्वन्ति कदाचिदनिच्छया कुर्वन्ति इत्यर्थः । अन्यथा ह्यङ्गदेवतोपासनस्यादनूप-कत्वं न स्यादिति ध्येयम् । यद्वा नायमुपासकविकल्पः येन फलातिशयार्थे कर्तव्याऽन्यथा फलातिशयाभावे न कर्तव्येति पुरुषविशेषैः उत्तमाधिकारिभिः कर्तव्येति पक्षद्वयाभावात् पुरुषाणां विशेषाद्वेति कथं विकल्प इति शङ्केत, किं नाम उपसंहृतिरेव कार्या न वा कार्येति उपसंहृतिरूपसाधन एव विकल्प इत्यर्थः ।

(तत्त्वसुबोधिनी)

ननु अन्यनिष्ठतया अप्रतीयमानस्य अन्यनिष्ठत्वेन पर्यवसाने अतिप्रसङ्गात् कथं पुरुषाणां विशेषाद्वेति उपासकनिष्ठतया प्रतीयमानविकल्पस्य साधनतया पर्यवसानमुच्यते इत्यतो युक्तमेव, एतदुपासकानां असंहृतिरूपसाधनस्य च व्यापारव्यापारिभावेन नियामकसम्बन्धसत्वात् । तथा च व्यापारिनिष्ठतया प्रतीयमानस्य तद्व्यापारनिष्ठतया पर्यवसाने नातिप्रसङ्गावकाश इत्याशयेनोक्तम् ॥ **उपासकप्रतिपत्ताविति** ॥ उपासकानां प्रतिपत्तिः व्यापारः तद्रूपे साधन इति सम्बन्धः ॥ **यथायोग्यमिति** ॥ सोपसंहृतिः उत्तमेषु अधमगुणानामेव अधमेषु उत्तमगुणानामिति यथायोग्यमित्यर्थः । अत्राद्ये सूत्रे अङ्गदेवतोपासनसमर्थनम् । अस्य च सूत्रस्य अङ्गावबद्धास्तु ब्रह्माद्याः उपास्या एव शाखासु प्रतिवेदं उक्तं गुणजातं अधमेन उपसंहार्यमिति अक्षरार्थः । द्वितीये अधमगुणानामुत्तमेषु उपसंहारसमर्थनमिति सूत्रक्रमः ।

## वाक्यार्थविवरणम्

**तत्प्रतिपाद्यत्वात्** ॥ अधमदेवताविषयकमन्त्रप्रतिपाद्यत्वादित्यर्थः ॥ **तेषु** ॥ उत्तमेषु ॥ तद्गुणित्वात् । अधमनिष्ठगुणवत्त्वसद्भावादित्यर्थ । तेषु तेषामिति वा । अस्मिन्नर्थे भाष्ये प्रमाणानुक्तेः स्वयं तदाह ॥ **उक्तं चैतदिति** ॥ ऋग्भाष्य इत्यर्थः ॥ **देवतेति** ॥ या तेनोच्यते सा देवतेत्यर्थः । तत्र नारायणे प्रतिपादकत्वेन प्रसिद्धा नारायणसूक्तादिविद्या ऋते, श्रीः सर्वविद्यानां देवता । अत्र च श्रियां प्रसिद्धाः अम्भृणीसूक्तादिविद्या ऋते, ब्रह्मैव सर्वविद्यानां देवता ॥ **पूर्वेति** ॥ ब्रह्माद्युत्तमदेवताप्रतिपादकत्वेन प्रसिद्धहिरण्यगर्भसूक्तादि व्यतिरिक्तसर्वविद्यानां शक्रान्ता देवा देवतात्वेन मताः ॥ **इन्द्रावराः** ॥ आहङ्कारिकप्राणाद्याः यत्र विद्यायां स्वस्वलिङ्गानि वर्तन्ते तत्रैव प्रतिपाद्यदेवतात्वेन मताः । न सर्वाविद्यानामित्यर्थः । उर्वरितं भावबोधे स्पष्टम् । उपासकप्रतिपत्ताविति वाक्यस्य यद्वेत्यादिना भावबोधोक्तयोजनैव समीचीनेति ध्येयम् ।

ननु उपसंहृतिः फलातिशयार्थं सर्वैः कार्या भवेत् । अन्यथा न त्विति योजनायां उपासकानां मध्ये ये फलातिशयार्थिन एव पुरुषविशेषाः लब्धाः, पुनः किमुच्यते पुरुषाणां विशेषादिति । तत्राह ॥ **पुरुषविशेष इति** ॥ नन्वेवं तर्हि उत्तमाधिकारिभिः कर्तव्या, अन्यैर्न कर्तव्येति विकल्परूपवाशब्दार्थप्राप्त्या अन्येषां सर्वात्मनोपसंहृतिनिषेधः स्यात् । तथा च फलातिशयार्थं सर्वैरुपसंहृतिः कार्या भवेदिति प्रागुक्तविरोधः स्यादित्यत आह ॥ **फलविशेषस्तेषामेवेति** ॥ तथा

(वाक्यार्थविवरणम्)

चोपसंहृतिरित्युत्तरार्धे **सर्वैः कार्येत्यस्यानुवृत्तिर्नास्तीति** भावः । तथा चेष्टापत्तिरिति हृदयम् । ननूत्तमाधिकारिभिः फलविशेषार्थमुपसंहृतिः कर्तव्येति प्राप्त्या पुरुषाणां विशेषाद्वेति पुरुषभेदसूचको विकल्पः कथमित्यत आह ॥ **उपासकेति** ॥ अत्र साधनशब्दो भावसाधनो न करणसाधनः । तथा च पुरुषाणां विशेषादित्यनेन उत्तमाधिकारिरूपे पुरुषोपासकप्रतिपत्तौ सत्यां उत्तमाधिकारिभिरपि फलातिशयापेक्षा चेत् कर्तव्या । अन्यथा न कर्तव्येति फलसाधन एवायं विकल्पो न तूपासकपुरुषेषु विकल्प इत्यर्थः ॥ **यथायोग्यमेवेति** ॥ सा उपसंहृतिरुत्तमेष्वधमगुणानां नाधमेषूत्तमगुणानामिति यथायोग्यमित्यर्थः ।

## वाक्यार्थमञ्जरी

नीचगुणानामुत्तमैरुपसंहारेऽविरोधः कथं मन्त्रादिवत् । यथा मन्त्रादेः सूक्तादेरधमपरस्योत्तम-विषयत्वेऽध्ययनं तथेत्यर्थः ॥ **तेषु तद्गुणत्वादिति** ॥ उत्तमानां नीचगुणत्वादित्यर्थः । उत्तमानां तत्प्रतिपाद्यत्वादित्यत्र ऋग्भाष्यसम्मतिमाह ॥ **उक्तं चेति** ॥ स्वयं साक्षाद्देवता तत्र नारायणे अत्र श्रियां विशेषेणैव लिङ्गेन देवता ज्ञेया इत्यर्थः । ननूपसंहृतिस्तु फलातिशयार्थं सर्वैः कार्या भवेत् अन्यथा न त्विति योजनायामुपासकानां मध्ये फलार्थिनस्त एव पुरुषविशेषा लब्धाः पुनः किमुच्यते पुरुषाणां विशेषादिति तत्राह ॥ **पुरुषविशेष इति** ॥ नन्वेवं सत्युत्तमाधिकारिभिः कर्तव्याऽन्यैर्न कर्तव्येति विकल्पार्थप्राप्त्याऽन्येषां सर्वात्मनोपसंहारनिषेधः स्यात् तथा च फलाति-शयार्थं सर्वैरुपास्तिः कर्तव्येति प्रागुक्तविरोधः स्यादित्यत आह ॥ **फलविशेषस्तेषामेवेति** ॥ तथा चोपसंहृतिरित्युत्तरार्धे **सर्वैः कार्येत्यस्यानुवृत्तिर्नास्तीति** भावः । ननूपसंहृतिः फलातिशयार्थं कर्तव्या अन्यथा फलाभावेन कर्तव्येति पुरुषविशेषैरुत्तमाधिकारिभिः कर्तव्या अन्यैर्न कर्तव्या इति च पक्षद्वयाभावात्कथं पुरुषाणां विशेषाद्वेत्युक्तविकल्प इत्यत आह ॥ **उपासकप्रतिपत्ताविति** ॥ पुरुषविशेषादित्यनेनोत्तमाधिकारिरूपोपासकप्रतिपत्तौ तैरुत्तमाधिकारिभिः फलातिशयापेक्षया कर्तव्या अन्यथा न कर्तव्येत्युपसंहृतिरूपसाधन एवायं विकल्पो न तु पुरुषविशेषैः कर्तव्याऽन्यैर्न कर्तव्य इत्युपासकेषु विकल्प उच्यत इत्यर्थः ॥ **यथायोग्यमिति** ॥ सोपसंहृतिरुत्तमेष्वधम-गुणानामेव नाधमेषु उत्तमगुणानामिति यथायोग्यमित्यर्थः ।

॥ इति अङ्गाववद्धाधिकरणम् ॥ ३६ ॥

## ३७. भूमाधिकरणम्

### सूत्रभाष्यम्

**॥ ॐ भूम्नः क्रतुवज्ज्यायस्त्वं तथा च दर्शयति ॐ ॥ ५९ ॥**

सर्वगुणेषु भूमगुणस्य ज्यायस्त्वं क्रतुवत्सर्वत्र सहभावात् (दीक्षाप्रायणीयोदयनीय-सवनत्रयावभृथात्मकः क्रतुः इत्यधिकः पाठः क्वचित्) ।

'भूमैव देवः परमो ह्युपास्यो नैवाभूमा फलमेषां विधत्ते ।
तस्माद्भूमा गुणतो वै विशिष्टो यथा क्रतुः कर्ममध्ये विशिष्टः ॥'

इति च गौपवनश्रुतिः ।

### तत्त्वप्रदीपिका

इदमिदानीमालोच्यते । किं भूमगुणस्सर्वगुणैस्सामान्येनोपास्तौ वर्तते किं वा तेभ्यो वैशिष्ट्येनेति । ज्ञानादिचतुष्कोपासनादेव भूमगुणादृते मोक्षसिद्धेरुक्तत्वात्, अनुपसंहारप्रमाणे च आत्मत्वस्यैव विशेषोदितत्वात्, भूमगुणस्य च महत्त्वपर्यायस्यावरेषामुपासितुमशक्यत्वान्न तस्य वैशिष्ट्यमिति प्राप्त आह– 'भूम्नः क्रतुवज्ज्यायस्त्वं तथा च दर्शयति' ॥ सर्वगुणेषु भूमगुणस्य प्राधान्यं सर्वत्र सम्बध्योपासनीयत्वेन । तमृत एकगुणस्याप्यनुपासनीयत्वात् । न च तदुपासनस्याशक्यत्वम् । प्रत्यधिकारिनानात्वस्य वक्ष्यमाणत्वात् । यथा सवनत्रयात्मकः क्रतुरहीनादिषु प्रत्यहं सम्बध्यमानो विशिष्टो भवति, तमन्तरेणैकस्याप्यह्नोऽननुष्ठेयत्वेन । 'ध्रुवाः शास्त्राणामाताना' इति च सत्राणि प्रकृत्य याज्ञिकोक्तिः ॥ **एवमिहापि** ॥ अतः पूर्णज्ञानः पूर्णानन्द इत्येवोपासनं कार्यमिति सिद्धम् ।

### तत्त्वप्रकाशिका

अत्र ईश्वरदर्शनसाधनस्य भूमगुणोपासनस्य सर्वोपासकसाधारण्यसमर्थनादस्ति शास्त्रादिसङ्गतिः । अन्यथा लौकिकतयोपासनप्रसङ्गात्समर्थनीयम् । प्रकृतभगवद्गुणान्तर्गतो 'यो वै भूमा' इत्यादौ श्रुतो भूमगुण एव विषयः । सर्वोपास्यो न वेति सन्देहः । गुणद्वैविध्यदर्शनं सन्देहबीजम् । तत्रोपासकं प्रति भूमगुणस्य सम्भृत्यादिगुणेभ्यो न विशेषः । सर्वोपास्यो न भवतीति पूर्वः पक्षः ।

(तत्त्वप्रकाशिका)

वैय्यर्थ्यात् । आनन्दादिकं हि सर्वाधिकारिणामिष्टम् । तच्च तद्गुणोपासनेनोपपद्यते । न हि निरतिशयत्वापरपर्यायं भूमत्वं कस्यापीष्टं येन तदुपासनं सार्थकं स्यात् । न च भूमत्वस्यानन्दादि-विशेषणत्वात्सर्वोपास्यत्वम् । विशेषणत्वेऽपि प्रियशिरस्त्वादीनामिव फलानुपयोगित्वेनानुपास्य-त्वात् । अतो भूमत्वस्य सर्वोपास्यत्वाभावान्नालौकिकतयोपासनमिति । सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ॥ भूम्न इति ॥ सर्वैरुपास्यो भूमगुणः सर्वगुणेषु तस्य ज्यायस्त्वात् । कस्मात् । यथा खलु दीक्षाप्रायणीयोदयनीयसवनत्रयाऽवभृथात्मकस्य क्रतोः सर्वयागेष्वनुवर्तन एव साफल्यादन्यथा वैफल्याज्ज्यायस्त्वं ततश्च सर्वैः कर्तव्यत्वम् । तथा भूमत्वस्य सर्वत्रानन्दादिषु सहभावेनोपासन एवेष्टफलसिद्धेः । एतदपि कुतः । 'भूमैव देवः' इति श्रुतेरिति भावः । देवः सर्वैर्भूमत्वेनोपास्यः । कस्मात् । भूमा गुणो गुणराशितो यतः क्रतुवद्विशिष्टः । कथम् । यस्माद् भूमैवोपासितः फलं विधत्ते नैवाऽभूमा तस्मादित्यर्थः । अतः सर्वैरानन्दाद्याः पूर्णत्वेनोपास्या इति न लौकिक-तयोपासनमिति सिद्धम् ।

## गुर्वर्थदीपिका

अत्रेश्वरदर्शनसाधनस्य भूमगुणोपासनस्येत्यत्र भूमगुणोपासनं नाम परमात्मन्यानन्दज्ञानादयो ये गुणा उपास्यन्ते तेषां सर्वेषां गुणानां भूमत्वापरपर्यायपूर्णत्वविशिष्टतयोपासनम् । अतश्चतुर्गुणो-पासकेष्वपि लौकिकानन्दादिगुणेभ्योऽप्यतिशयाय पूर्णानन्दः परमात्मा पूर्णज्ञानः परमात्मेत्यादि-रूपेणैवोपासनस्याभिप्रेतत्वेन पृथगुपासनाभावान्न चतुर्गुणोपासकत्वभङ्गः । न हि कुण्डलिनश्चत्वारः पुरुषा इत्युक्ते विशेषणीभूतकुण्डलैस्तच्चतुष्ट्वस्यासम्भव इति भावः । क्रतुवदित्यत्र क्रतुपदेन सकल-प्रधानयागाङ्गभूता अत एव सर्वत्र कर्तुं योग्यत्वात्क्रतुपदवाच्याः दीक्षाप्रायणीयोदयनीयाख्य-कर्मत्रयसवनत्रये क्रियमाणकर्मत्रयावभृथस्नानाख्याः कर्मविशेषाः कथ्यन्ते ।

## भावबोधः

**सर्वोपासकसाधारण्येति** ॥ अतीताधिकरणेऽन्यदेवतोपासनस्य कर्तव्यत्वमुक्त्वा प्रसङ्गा-द्भूमगुणोपासनस्यापि सर्वोपासकसाधारण्यमत्र समर्थ्यत इत्यनन्तरसङ्गतिरिति भावः ॥ **अन्यथेति** ॥ अन्यथाऽऽनन्दादीनां अपूर्णत्वेन उपासनाप्राप्तौ लौकिकतया उपासनप्रसङ्गात् 'कार्याख्यानादपूर्वं' इत्युक्तमयुक्तं स्यादिति भावः ॥ **सर्वेति** ॥ अत्र भूमगुणः सर्वोपास्यो न भवत्युत भवतीति

(भावबोधः)

चिन्ता। तदर्थं भूमगुणस्य सर्वत्रानन्दादिषु सहभावेनोपासनाभावेऽपि इष्टसिद्धिर्न भवत्युत भवतीति। भूमगुणस्योपासकं प्रति विशेषाभावेऽपीति पूर्ववाक्यानुसारेण विशेष इति न्यायविवरण-गतपूर्वपक्षप्रतिज्ञाभागं व्याचष्टे– **तत्रोपासकं प्रतीति** ॥ अनेन सम्भृत्यादिगुणेभ्य इति विशेष इत्युक्तं भवति। तस्य तात्पर्यमाह– **सर्वोपास्यो नेति** ॥ तत्तदिष्टगुणानुसारेण फलोपपत्तिरिति न्यायविवरणांशं व्याचष्टे– **आनन्दादिकं हीति** ॥

ननु भूमत्वस्यापीष्टत्वेन तदुपासनमपि सार्थकमेवेत्यत आह– **न हीति** ॥ 'भूमैव देवः' इति श्रुतेरिति। इयमेव च श्रुतिः न्यायविवरणोदाहृतेति ज्ञातव्यम्।

## भावदीपः

**सर्वेति** ॥ एतेन पूर्वत्राङ्गदेवतोपासनस्य सर्वसाधारण्योक्तिप्रस्तावादिहापि तदुच्यत इति पूर्वसङ्गतिरपि सूचिता ॥ **लौकिकतयेति** ॥ परमतः सेतून्मानेत्यत्र पूर्णत्वाख्योन्मानत्वादिनैवा-लौकिकत्वोक्तेरिह सर्वोपास्यानन्दादिगुणानां भूमशब्दितपूर्णत्वानुक्तौ हेत्वसिध्या परमित्युक्ता-लौकिकत्वायोगेन लौकिकत्त्वस्य प्राप्तेः। तथा च कार्याख्यानादपूर्वमित्युक्तालौकिकमोक्षाभावः स्यादिति भावः ॥ **इत्यादौ श्रुत इति** ॥ भूमा सम्प्रसादादित्यत्र भावभवित्रोरभेदविवक्षया भूमा विष्णुरित्युक्तावपि आध्यात्मसम्बन्धभूमेत्यादाविवात्र भूमशब्दो बहुत्वरूपपूर्णत्ववाची। बहुः पूर्णतायामित्युक्तेरिति भावेन इत्यादौ श्रुतो भूमगुण इत्युक्तं पूर्णगुणत्व इत्यर्थः। भूमगुणस्योपासकं प्रति विशेषाभावेऽपि तत्तदिष्टगुणानुसारेण फलोपपत्तिरित्यविशेष इति न्यायविवरणं विवृण्वन् प्रतिज्ञात्वेनान्वयपूर्वं तदेकदेशमुपादत्ते ॥ **तत्रेति** ॥ एवं सन्देहे सतीत्यर्थः। सम्भृत्यादिभ्य इति शेषोक्तिः। किमुक्तं भवतीत्यतः यथा सम्भृतिद्युव्याप्तिप्रियशिरस्त्वादिगुणा न सर्वोपास्यास्तथा भूमगुणोऽपीत्युक्तं भवतीति भावेन तद्वाक्यस्य फलितार्थमाह ॥ **सर्वोपास्यो न भवतीति** ॥ कुत इत्यतः सम्भृत्यादिभ्यो न विशेष इत्युक्त्यैव सम्भृत्याद्यनुपासनेऽप्यानन्दादय इत्युक्तगुणोपासने-नैवानन्दानुभवरूपमोक्षसिद्धिवत् भूमगुणानुपासनेऽपीति भूमोपासनस्य वैयर्थ्यरूपहेतुरपि लब्ध इति भावेनाह ॥ **वैयर्थ्यादिति** ॥ भूमगुणोपासनस्येति योज्यम्। तत्तदिष्टगुणानुसारेण फलोपपत्ति-रित्यंशवैयर्थ्योपपादकत्वेन व्याचष्टे ॥ **आनन्दादिकमिति** ॥ विशेषभावेऽपीत्यंशमपि पदसूचितशङ्कां

(भावदीपः)

दर्शयन् तत्तदिष्टगुणोक्त्यैव निरस्तेत्याह ॥ **न च भूमत्वस्येति** ॥ एके तु विशेषाभावेऽपीति पाठमुपेत्य व्याकुर्वते ॥ **अत इति** ॥ वैयर्थ्यादित्यर्थः ॥ **नालौकिकतयोपासनमिति** ॥ कार्याख्यानादपूर्वमित्यत्रोक्तमिति भावः ॥ ज्यायस्त्वोक्तेरसाङ्गत्यनिरासाय साध्यमध्याहृत्य तत्र हेतुत्वेन भाष्यं व्याचष्टे ॥ **सर्वैरिति** ॥ **कस्मादिति** ॥ ज्यायस्त्वं तेनोपास्यत्वं च कुत इत्यर्थः । सिद्धेरित्यन्तेन समाधिः । दीक्षा यजमानसंस्कारकर्म । प्रायणीयोदयनीयौ क्रतोरादावन्ते क्रमेण कर्तव्याविष्टिविशेषौ । प्रातःसवनमाध्यन्दिनसवनतृतीयसवनभेदेन सोमाभिषवरूपसवनत्रयेत्यर्थः । अवभृथो नाम अप्स्ववभृथेन चरन्तीत्युक्तेष्टिविशेषः । क्रतोरग्निष्टोमस्य सर्वयागेषु द्वादशाहाद्यहर्गणेष्वित्यर्थः ॥ **अत इति** ॥ भूमत्वसहभावेनैवानन्दाद्युपासनस्येष्टफलहेतुतायाः श्रुत्युक्तत्वादित्यर्थः ।

## अभिनवचन्द्रिका

**अन्यथेति** ॥ भूमगुणोपासनस्य सर्वसाधारण्यसमर्थनाभावे, चतुर्गुणोपासकानां प्रियशिरस्त्वादीनामिव भूमत्वोपासनेऽप्यनर्थशङ्कया, लौकिकतयोपासनप्रसङ्गात् । भूमत्वपरित्यागेनाऽऽनन्दादिमात्रोपासनप्रसङ्गादित्यर्थः । अत्र टीकायाम् 'सन्देहबीजम्' इत्यतःपरं श्रूयमाणं 'तत्रोपासकं प्रति भूमगुणस्य सम्भृत्यादिगुणेभ्यो न विशेष' इति वाक्यं प्रक्षिप्तं, न टीकावाक्यम् । अनन्वितत्वादनावश्यकत्वाच्चेति द्रष्टव्यम् । भगवद्गुणेषु स्वतः तारतम्याभावात्केनहेतुना ज्यायस्त्वमुक्तमिति पृच्छति– **कस्मादिति** ॥ दीक्षाद्यात्मकस्य क्रतो राजसूयाद्यपकृष्टस्यापि सर्वयागोपकारित्वेनोपाधिना प्राधान्यवत्, भूमगुणस्य साम्याविरोधेनैव सर्वोपासनाफलहेतुत्वेन प्राधान्यवत्, भूमगुणस्य साम्याविरोधेनैव सर्वोपासनाफलहेतुत्वेन ज्यायस्त्वमिति समाधानमाह– **यथाखल्विति** ॥ अत्र टीकायां 'अन्यथा वैफल्यात् ज्यायस्त्वम्' इत्यतः परं 'ततश्च सर्वैः कर्तव्यत्वम्' इति वाक्यं प्रक्षिप्तम् । अवश्यं चैददेवं विज्ञेयम् । सूत्रभाष्ययोः भूमगुणस्य ज्यायस्त्वमात्रे क्रतोर्दृष्टान्तत्वेनोपादानात् 'क्रतोर्यथा सर्वयागेष्वनुवर्तन एव साफल्यादन्यथा वैफल्यात् ज्यायस्त्वम्, तथा भूमत्वस्याऽऽनंदादिषु सहभावेनोपासन एवेष्टसिद्धेः' इत्येव वक्तव्यत्वेन 'ततश्च सर्वैः कर्तव्यत्वम्' इति वाक्यस्यासङ्गतत्वात् ।

पुर्वपक्षस्तु– न भूमगुणः सर्वोपास्यः । वैयर्थ्यात् । न हि कस्यापि निरतिशयापरपर्यायं भूमत्वमिष्टम् । न चाऽऽनन्दविशेषणत्वादुपास्यत्वम् । प्रियशिरस्त्वादौ व्यभिचारात् । अतो भूमत्वस्य सर्वोपास्यत्वाभावात् लौकिकतयोपासनमिति ।

(अभिनवचन्द्रिका)

सिद्धान्तस्तु– सर्वैरपि उपास्यो भूमगुणः । यथा खलु दीक्षाप्रायणीयोदयनीयसवनत्रयावभृथात्मकस्य क्रतोः सर्वयागेष्वनुवर्तन एव साफल्यात्, अन्यथा वैफल्याज्ज्यायस्त्वम्, तथा भूमत्वस्य सर्वत्राऽऽनन्दादिषु सहभावेनोपासन एवेष्टसिद्धेर्ज्यायस्त्वात् । तदुक्तम् 'भूमैव देवपरमो ह्युपास्यो नैवाभूमा फलमेषां विधत्ते । तस्माद्भूमा गुणतो वै विशिष्टो यथा क्रतुः सर्वमध्ये विशिष्ट' इति । अतः सर्वैरानन्दाद्याः पूर्णगुणत्वेनोपास्या इति न लौकिकतयोपासनमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

अत्र यथा देवेषु गुणोपसंहारः सर्वाधिकारिको न भवति तत्साध्यफलातिशयस्य सर्वेषामनपेक्षितत्वादित्युच्यत एवमेव भूमत्वमपि न सर्वैरुपास्यम् । तत्साध्यनिरतिशयपूर्तेः सर्वेषामनिष्टत्वादिति न्यायसाम्येनाक्षेपोत्थानादनन्तरसङ्गतिः ॥ **अन्यथेति** ॥ आनन्दादेः भूमत्वानुपासन इत्यर्थः । तथा च कार्याख्यानादपूर्वमित्युक्तमयुक्तं स्यादिति भावः । यो वै भूमा तत्सुखमित्यादौ श्रुतो भूमगुण इति । यद्यपि भूमा सम्प्रसादादित्यत्र भूमशब्दः पूर्वपक्षे सिद्धान्ते च गुणिपरत्वेनोक्तस्तथापि तत्र भावभवितृभेदेन धर्मिपरत्वेन स्वीकारेऽपि वस्तुतो भाववाचकशब्दत्वाद्गुण इति साधूक्तम् ॥ **सर्वेति** ॥ अत्र भूमगुणः सर्वोपास्यो न भवत्युत भवतीति चिन्ता । तदर्थं तदुपासनं व्यर्थमुतानन्दाद्युपासनस्य फलवत्त्वात्सार्थकमिति । अत्र सूत्रे भूम्नो ज्यायस्त्वमिति सम्भृत्यादिगुणेभ्य उपासकं प्रति भूमगुणस्य वैशेष्योक्त्या निरसनीयं पूर्वपक्षमाह ॥ **अत्रेति** ॥ तदुक्तं न्यायविवरणे । भूमगुणस्योपासकं प्रत्यविशेष इति । ततश्च किमित्यत आह ॥ **सर्वोपास्य इति** ॥ कथमविशेषो येनोपास्यत्वाभाव इत्यतः तद्वत्फलानुपयोगित्वेन व्यर्थत्वादित्याह ॥ **वैय्यर्थ्यादिति** ॥ वैय्यर्थ्यमेवेष्टं फलमिति न्यायप्रदर्शनपूर्वकमाह ॥ **आनन्दादिकमिति** ॥ भूमत्वस्यापि सर्वाधिकारिणामिष्टत्वे तदप्युपास्यमेवेत्यत आह ॥ **न हीति** ॥ अधिकारिवर्गे निरतिशयतत्वस्य हिरण्यगर्भस्येष्टत्वेऽपि तदितरस्य कस्यापीत्यर्थः ॥ **विशेषणत्वेऽपीति** ॥

ननु प्रियशिरस्त्वादीनामानन्दविशेषत्वादिति सामान्यविशेषभावः प्रागुक्तः । इह तु पूर्ववत्तद्विशेषणमुच्यते । कथमविरोध इति चेन्न । प्रियशिरस्त्वं हि प्रियशिरसो भावः । तच्च शिरोरूपमुपकारजं सुखम् । तस्यानन्दविशेषवत्त्वेऽप्युपकारजत्वनारायणात्मकशिरोरूपत्वादिकं सुखस्य विशेषणमेवेति तद्विवक्षयाऽयं ग्रन्थः प्रवृत्त इत्यविरोधोपपत्तेः सूत्रोक्तं ज्यायस्त्वं हेतुरिति

(वाक्यार्थमुक्तावली)

**भावेन साध्यमध्याहरति ॥ सर्वैरिति ॥** यद्वा ज्यायस्त्वमित्यस्यैव सर्वोपास्यत्वमित्यर्थं मत्वोक्तं सर्वैरिति । तद्धेतुतया प्रकारान्तरेण व्याचष्टे **॥ सर्वगुणेष्विति ॥** कस्माद्धेतोर्ज्यायस्त्वं भगवद्गुणत्वाविशेषादिति भावः । क्रतुवदिति दृष्टान्तबलाल्लब्धं क्रतुवत्सर्वत्र सहभावादित्युक्तं हेतुं विशदयति **॥ यथेति ॥**

ननु क्रतुशब्दस्य दीक्षाद्यङ्गकलापविशिष्टज्योतिष्टोमवाचित्वात्कथं तस्य विश्वजिदादियागेषु अनुवर्तनीयत्वमित्यत उक्तं भाष्ये । दीक्षाप्रायणीयोदयनीयसवनत्रयावभृथात्मकः क्रतुरिति । नात्र क्रतुपदेनाङ्गकलापविशिष्टो ज्योतिष्टोम उच्यते । किं नाम दीक्षाद्यात्मकः दीक्षादिरूपाङ्गकलाप एव क्रतुपदेन विवक्षित इति । तदेतदज्ञात्वा यत्केनचित्प्रलपितम् । दीक्षादिविशिष्टक्रतोः सर्वत्र सहभावप्रतिपादनं भाष्यकारीयं मीमांसाज्ञानमूलमिति तदपास्तं वेदितव्यम् । शिष्टिरित्युक्तन्यायप्रदर्शकं तथा च दर्शयतीति सूत्रखण्डमवतार्य व्याचष्टे **॥ एतदपीति ॥** क्रत्वङ्गानां सर्वेष्वन्वयेनैव फलहेतुत्वं तद्दृष्टान्तेन भूमत्वस्य सर्वत्रानन्दादिषु सहभावेनैवानन्दादिगुणानां फलहेतुत्वेन ज्यायस्त्वम् । अत एवोपास्यत्वमित्येतदेवेत्यर्थः । अभूमा भूमत्वेनानुपासितः । यद्यपि मायावादखण्डने भूम्नो ज्यायस्त्वमित्युक्तं सूत्रेष्विति । महाभारततात्पर्यनिर्णये च भूम्नो भूमगुणस्य ज्यायस्त्वं मुख्यतः सर्ववेदादिप्रतिपाद्यत्वमित्यर्थ उक्तः । तथापि बह्वर्थत्वादविरोधः । तथा चायं सूत्रार्थः । भूम्नो भूमस्य सर्वोपास्यत्वम् । कुतः । च यस्मात् सर्वेषु ज्यायस्त्वम् । तदपि कुतः । क्रतुवत् दीक्षाद्यङ्गकलापस्य सर्वयागेष्विव भूमत्वस्य पूर्णानन्दः पूर्णज्ञान इत्यादिप्रकारेण सर्वगुणेषु विशेषणतः सहोपास्त्यैव फलप्रापकत्वात् । न चेदमप्रामाणिकम् । च यस्माद्दर्शयति तथा श्रुतिरिति ।

## तत्त्वसुबोधिनी

**सर्वोपासकसाधारण्येति ॥** अतीताधिकरणेऽन्यदेवतोपासनस्य सर्वैः कर्तव्यत्वमुक्त्वा प्रसङ्गात् भूमगुणोपासनस्यापि सर्वोपासकसाधारण्यमत्र समर्थ्यत इत्यनन्तरसङ्गतिरिति भावः **॥ अन्यथेति ॥** अन्यथा आनन्दादीनामपूर्णत्वेन उपासनाप्राप्तौ लौकिकतया उपासनप्रसङ्गात् कार्याख्यानादपूर्वमित्युक्तमयुक्तं स्यादिति भावः । पूर्वपक्षमाह **॥ तत्रोपासकं प्रतीति ॥** तस्य तात्पर्यमाह ॥ **सर्वोपास्यमिति ॥** ननु भूमत्वस्यापीष्टत्वेन तदुपासनमपि सममेवेत्यत आह **॥ न हीति ॥** दीक्षेत्यादिभाष्यस्यायं भावः । यथा सवनत्रयात्मकः क्रतुरहितादिषु प्रत्यक्षसम्बध्यमानविशिष्टो

(तत्त्वसुबोधिनी)

भवति । तमन्तरेण कस्याप्ययं हेतुत्वे न त्वत एकगुणस्यामनुष्ठेयत्वं न ध्रवाः शास्त्रायातामताना इति सूत्राणि प्रकृत्यपातिकोक्तिरेवमिहापि सर्वगुणेषु भूमगुणस्य प्राधान्ये सर्वत्रसम्बध्य उपासनावत्वेन तत एकगुणस्याप्यनुपासनीयत्वादिति । अप्रतीतार्थत्वात् श्रुतिं व्याचष्टे ॥ **देव इति** ॥

## वाक्यार्थविवरणम्

**अन्यथा** ॥ पूर्णज्ञानेत्यादिरूपेण ज्ञानादिविशेषणतया पूर्णत्वापरपर्यायभूमगुणस्यानुपास्यत्वे भगवद्ज्ञानादिगुणानां लौकिकत्वेन उपास्यत्वप्राप्त्या कार्याख्यानादित्युक्तालौकिकतयोपासनं अयुक्तं स्यादिति भावः । भूमगुणस्योपासकं प्रति विशेषाभाव इति पूर्वपक्षकथनपरन्यायविवरणमपेक्षिताध्याहारेण व्याकुर्वन्नेव तदनुसारेण पूर्वपक्षमाह ॥ **तत्रोपासकं प्रतीति** ॥ तस्याभिप्रायमाह ॥ **सर्वोपास्य इति** ॥ यथा सम्भृत्यादिगुणानां न सर्वोपास्यत्वं तथा भूमगुणस्यापीत्यर्थः ॥ **वैय्यर्थ्यादिति** ॥ भूमगुणोपासनस्येत्यर्थः ॥ **तद्गुणेति** ॥ स चासौ गुणश्चेति विग्रहः । आनन्दादिगुणेत्यर्थः ॥ **फलानुपयोगित्वेनेति** ॥ तदुपासनस्यायोग्यतयेत्यर्थः ॥ **नालौकिकतयेति** ॥ आनन्दादेः पूर्णत्वेनोपासने खलु अलौकिकतयोपासनं भवति । भूमत्वस्य सर्वोपास्यत्वाभावे आनन्दादीनां लौकिकत्वेन उपासनमेव प्राप्तमिति भावः । यथा खलु दीक्षाप्रायणीयोदयनीयेत्यादि । प्रायणीयोदयनीयनामकमिष्टिद्वयम् ।

ननु दीक्षा प्रायणीयोदयनीयसवनत्रयावभृथात्मकस्य क्रतोः सर्वत्र यज्ञेषु सहभावाज्ज्यायस्त्वमुक्तं तत्रेदं शङ्क्यते । एतादृशक्रतोः कथं सर्वत्र सहभावः । दीक्षावभृथयोः सर्वत्र सहभावेऽपि प्रायणीयोदयनीयेष्टयोः सर्वत्र कथं सहभावः । सवनत्रयस्य तु सहभावः सर्वथा असम्भावित एव । सुत्यासवनशब्दौ तु पर्यायत्वेन सम्मतावित्युक्तेः । यस्मिन् अह्नि सोमः कण्ड्यते स कालः सुत्येति व्याख्यानाच्च । सवनत्रयस्य सोमयागसाधारणधर्मतया तदितराश्वमेधादिसर्वयज्ञेषु सोमकण्डनाभावेन सवनत्रयस्याप्रामाणिकत्वादिति । तत्रेदमुत्तरम् । सर्वत्रेत्यनेन न सर्वयज्ञा विवक्षिताः । किन्तु सोमयागप्रभेदरूपा या अग्निष्टोमात्यग्निष्टोमातिरात्रषोडश्युक्थवाजपेयात्पुर्यामसंज्ञकाः सप्त संस्थाः एव विवक्षिताः । तासु च सर्वत्र प्रायणीयोदयनीयसवनत्रयाणामस्त्येव सहभावः । तदभिप्रायेणैव सर्वत्रेत्युक्तम् । न च प्रधानयाग एव सवनत्रयम् । न तदङ्गभूतसप्तसंस्थास्त्विति वाच्यम् । य

(वाक्यार्थविवरणम्)

षोडशीरूपसंस्थायां तावत्सवनत्रस्य सद्भावः । 'पीतवद्वै प्रातःसवनम्' इत्यादिना महानाम्नीनामित्यादिखण्डे स्पष्टं प्रतिपादितः । तद्वदग्निष्टोमादिषट्कसंस्थास्वपि सवनत्रयमस्तीति न कोऽपि दोष इति ध्येयमित्याहुः ।

## वाक्यार्थमञ्जरी

**अन्यथेति** ॥ पूर्णत्वस्यानुपास्यत्वे आनन्दादीनामपूर्णत्वेनोपासनाप्राप्तौ लौकिक तयोपासनप्रसङ्गादित्यर्थः । तथा च कार्याख्यानादपूर्वमित्युक्तालौकिकत्वानुपपत्तिरिति भावः । ततः किमित्यत आह ॥ **सर्वोपास्यो नेति** ॥ सम्भृत्याद्यविशेषेऽपि कुतो न सर्वोपास्यत्वमत आह ॥ **वैय्यर्थ्यादिति** ॥ तदेव व्यनक्ति ॥ **आनन्दादिकं हीति** ॥ ननु भूमत्वस्यापीष्टत्वेन तदुपासनमपि सार्थकमेवेत्यत आह ॥ **न हीति** ॥ ॐ भूम्नः क्रतुवज्जायस्त्वं तथा च दर्शयति ॐ ॥ भूम्नः भूमगुणस्य सर्वगुणेषु जायस्त्वं प्राधान्यं कथं क्रतुवत् यथा दीक्षाद्यङ्गकलापस्य विश्वजिदादिसर्वयागेष्वनुवृत्तावेव तद्योग्यानुष्ठानफलहेतुत्वेन प्राधान्यं तथा तद्वद्भूमगुणस्य सर्वगुणानुवृत्तत्वेन फलहेतुत्वं कुत इत्यत उक्तम् ॥ **तथा च दर्शयतीति** ॥ च यस्माद्भूमैव देव इति श्रुतिः तथा उक्तार्थं दर्शयत्यत इत्यर्थः । यद्यपि क्रतुशब्दो दीक्षाद्यङ्गविशिष्टयागवाचकत्वेन मीमांसकप्रकरणसिद्धः तथाप्यत्र तदङ्गकलापमात्रपरो ग्राह्यः **सहभावेन** तद्विशेषणत्वेन ।

॥ इति भूमाधिकरणम् ॥ ३७ ॥

## ३८. नानाशब्दाधिकरणम्

### सूत्रभाष्यम्

**॥ ॐ नानाशब्दादिभेदात् ॐ ॥ ६० ॥**

'शब्दोऽनुमा तथैवाक्षो योग्यताभेदतस्सदा ।
ब्रह्मादीनामेकमर्थं बहुधा दर्शयन्ति हि ॥
अतः पूर्णत्वमीशस्य नानैवैषां प्रदृश्यते ।
अतः फलस्य नानात्वं नानैवोपासनं(ना)यत' इति ब्रह्मतर्के ।

अतो भूमत्वमपि नानैवोपास्यते ।

### तत्त्वप्रदीपिका

यथा नाधिकारिभेदात्तत्र तत्र सवनत्रयस्य भेदः । एवं सर्वाधिकारिणामप्येकरूप एव भूमगुणोऽपीत्यत आह– **नाना शब्दादिभेदात् ॥** शब्दोऽनुमाऽक्ष इत्येतानि प्रमाणानि । त्रीणि चैतानि योग्यताविशेषात् । ब्रह्मादीनामेकैकमर्थं बहुधा दर्शयन्ति । अत ईशस्य पूर्णत्वं शब्दादिदृश्यं नानैव प्रदृश्यते । योग्यताविशेषादेव । न च क्रतुवदेकरूपत्वमिति वाच्यम् । सर्वसाम्याभावात् । विवक्षितसाम्येन दृष्टान्तत्वोपपत्तेः । उक्तिक्रमभेदस्तु प्रमाणानां श्रवणादिक्रममपेक्ष्य युज्यते । श्रुत्वा वेदार्थं तदनुकूलतर्कैः प्रतिकूलतर्कान् परिहृत्य ध्यानानन्तरं पश्यतीति ।

### तत्त्वप्रकाशिका

अत्र ब्रह्मसाक्षात्कारसाधनभूमोपासनेऽधिकारिणां विशेषसमर्थनादस्ति शास्त्रादिसङ्गतिः । अविशेषे तूक्तानुपपत्तेरसौ समर्थनीयः । प्रकृतभूमगुण एव विषयः । किमधिकारिणामुपासने तारतम्येन प्रतीयते एकप्रकारेण वेति सन्देहः । उभयविधवस्तुप्रतीतिः सन्देहबीजम् । सर्वेषां भूमत्वमेकप्रकारेण प्रतीयत इति पूर्वः पक्षः । भूमत्वे विशेषकल्पनायोगात् । न हि केषाञ्चित्सम्यक्पूर्णानन्द इति केषाञ्चित् पूर्णानन्द इत्युपासनं युक्तम् । तथात्वे मिथ्योपासनप्रसङ्गात् । मिथ्योपासनस्यानर्थहेतुत्वात् । अतः सर्वेषामेकप्रकारेण भूमत्वोपासकत्वान्नोक्ततारतम्यमिति ।

(तत्त्वप्रकाशिका)

**सिद्धान्तयत्सूत्रं पठित्वा स्मृत्युदाहरणपूर्वकं व्याचष्टे ॥ नानेति ॥ भूमत्वमुपासनेऽधिकारिणां नानाप्रकारेणैव प्रतीयते । शब्दादिभिः प्रमाणैस्तत्प्रतीतेरेष्टव्यत्वात् । शब्दादीनां च प्रमाणानामधिकारिभेदेनानेकधैकैकार्थप्रतीतिजनकत्वान्नानोपासनाच्च फलतारतम्यमुपपद्यत इति भावः । तत्त्वनिर्णयो वेदार्थनियमोऽपरोक्षज्ञानं चेति क्रमभावीनि शब्दादिजन्यानीति शब्दादिक्रमः । न च भूमत्वे विशेषानुपपत्तिः । अतीतवत्सराणां मासानामानन्त्येऽपि विशेषवदत्राप्युपपत्तेः । अन्यानिषेधान्नान्यथोपासनम् । अतो भूमत्वदृष्टावधिकारिणां विशेषसद्भावाद्युक्तं तारतम्यमिति सिद्धम् ।**

## गुर्वर्थदीपिका

अधिकारिणां विशेषसमर्थनादित्यत्राधिकारिणां विशेषो नाम ब्रह्मा सर्वेभ्योऽप्यधिकां पूर्णतां भगवद्गुणेष्वनुसन्धत्ते । ततः किञ्चिदूनं रुद्रः । एवं मनुष्योत्तमपर्यन्तं पूर्णत्वोपासने अधिकारिणां तारतम्याख्यविशेषः समर्थ्यत इति भावः । शब्दानां चेत्यस्य मानुषं प्रति भुवं पश्येत्युक्ते भूशब्दः तद्योग्यप्रदेशविशेषमेव प्रत्याययति न सर्वम् । ततोऽप्यधिकदर्शनसमर्थं प्रति तावन्तं भागं न पाताळादिभागम् । सर्वज्ञऋष्यादीन्प्रति तु सर्वं भागं प्रदर्शयति । एवं भूमशब्दोऽपीति भावः । अतीतवत्सरवासराणामित्यत्रानादिकालमारभ्यातीतवत्सरदिवसानामित्यर्थः । अव्यवहितवत्सरवासरैस्सहाप्यनन्ता एवातीतवत्सरवासराः । ततः पूर्वतनवत्सरवासरैः सह तु येऽनन्ता अतीतवत्सरवासरास्तदानन्त्यं नैतदानन्त्यसदृशम् । एवं ततः पूर्वं ततः पूर्वमित्यानन्त्येऽप्यनन्ता अवान्तरविशेषाः सन्ति । तद्वदिति भावः । यद्वाऽतीतवत्सराणामप्यानन्त्यमस्ति । तदन्तर्गतदिवसानामप्यानन्त्यमस्ति । तत्र वत्सरानन्त्याद्वासरानन्त्ये यथा विशेषोऽस्ति तद्वदिति भावः ।

## भावबोधः

**अधिकारिणां विशेषेति ॥** पूर्वाधिकरणोपक्षिप्ते भूमगुणोपासने अधिकारिणां विशेषसमर्थनादनन्तरसङ्गतिरिति भावः ॥ **किमित्यादि ॥** अत्र भूमत्वं किमधिकारिणामेकप्रकारेणैव प्रतीयते उत तारतम्येनेति चिन्ता । तदर्थं भूमगुणस्य नानात्वप्रतीतिः किं भ्रान्तिरुत प्रमेति । तदर्थं भूमत्वे नानात्वं नास्त्युतास्तीति । भूमगुणोपासकानामेकप्रकारेणैव प्रतीयत इत्यङ्गीकार्यं विशेषस्याकल्पनोपपत्तेरिति न्यायविवरणानुसारेण पूर्वपक्षमाह– **सर्वेषामित्यादिना ॥ अधिकारिभेदेनेति ॥** अनेन यावानेवाधिकारेष्विति न्यायविवरणोदाहृतस्मृतितात्पर्यमप्युक्तं भवति ।

(भावबोधः)

ननु प्रत्यक्षस्य सर्वप्रमाणोपजीवित्वेन सूत्रे 'प्रत्यक्षादिभेदात्' इति वक्तव्यम् । यदि 'तन्मुख्यं ज्ञानशब्दयोः' इत्युक्तरीत्या करणेषु शब्दस्य प्राधान्यात् सूत्रे तदादित्वेन ग्रहणं तर्हि स्मृतावनुमानस्य शब्दानन्तरं तदनन्तरं च प्रत्यक्षस्य ग्रहणे किं निमित्तमित्यत आह– **तत्त्वर्णय** इति ॥

ननु प्रमाणान्यप्यविद्यमानमर्थं दर्शयेयुरित्याशङ्कां परिहरति– **न चेति ॥** ननूक्तमत्र भूमत्वे विशेषसद्भावे **केषाश्चित् सम्यक्पूर्णानन्दः** केषाश्चित् किश्चित्पूर्णानन्द इति मिथ्योपासनमित्यत आह– **अन्यानिषेधादिति ॥**

## भावदीपः

**विशेपेति** ॥ पूर्वं सामान्येनोक्तस्यात्र विशेषविचारात्पूर्वसङ्गतिरपि सूचिता ॥ **उक्तेति** ॥ यावदधिकारमित्यादौ उक्तानन्दादितारतम्येत्यर्थः ॥ **उभयविधेति** ॥ किश्चित् घटादिवस्तु सर्वेषामेकप्रकारेणैव प्रतीयते किश्चिच्च शास्त्रार्थादिकं वस्तु तारतम्येन प्रतीयत इति भावः । भूमगुणः उपासकानामेकप्रकारेणैव प्रतीयत इत्यङ्गीकार्यम् । विशेषस्य कल्पनोपपत्तेरित्यन्यत्रोक्तं व्यनक्ति ॥ **सर्वेषामिति ॥ तथात्व इति ॥** किश्चित्पूर्णानन्दत्व इत्यर्थः । एष परम आनन्दः । अनिर्देश्यं परमं सुखम् । 'यतो वाचो निवर्तन्ते' इत्यादेरीशानन्दस्य निरतिशयपूर्णानन्दत्वेन तरतमभावापन्नपूर्णत्वस्याभावादिति भावः ॥ **अनर्थेति** ॥ 'न प्रतीके न हि सः' इत्यत्र तथा वक्ष्यमाणत्वादिति भावः ॥ **अत इति** ॥ भूमत्वे विशेषकल्पनायोगादित्यर्थः । अतो भूमत्वमपि नानैवोपास्यत इति भाष्यार्थं वक्तुमाह ॥ **भूमत्वमिति** ॥ अत इति भाष्यपदस्य स्मृत्युक्तार्थपरामर्शिनोऽन्यमप्यर्थमाह ॥ **शब्दादिभिरित्यादिना** ॥ शब्दानुमानप्रत्यक्षैरित्यर्थः । प्रदृश्यते । अत इत्युक्तस्मृत्यर्थं व्यनक्ति ॥ **शब्दादीनां चेति** ॥ स्मृतिशेषानुरोधेनात इत्यादिभाष्यं यतो भूमत्वमपि नानैवोपास्यते अतो नानोपासनात्फलतारतम्यमपि युक्तमित्यर्थतया प्रकारान्तरेण व्याचष्टे ॥ **नानोपासनाच्चेति** ॥ **फलतारतम्यमिति** ॥ एतच्च सर्वेषां पूर्णत्वेऽपि 'यथोदं च न कुम्भादेः सरित्सागरयोरपि । अल्पेन महता वापि पूर्तिर्योग्यतया भवेत्' ॥ 'एवं नरादिब्रह्मान्तजीवानां साधनैरपि । अनादिसिद्धैर्भक्त्याद्यैः पूर्तिर्योग्यतया भवेत्' ॥ 'अल्पैः पूर्तिस्तथाल्पानां पूर्तिर्योग्यतया भवेत् इति

(भावदीपः)

प्रथमवृहद्भाष्योक्तदिशा ध्येयम् । सूत्रे अक्षादिभेदादिति वाच्ये शब्दादीत्युक्तिक्रमे बीजमाह ॥ **तत्वेति** ॥ वेदार्थं श्रुत्वा तदनुकूलतर्कैः प्रतिकूलतर्कान् परिहृत्य ध्यानानन्तरमपरोक्षतः प्रत्येतीति श्रवणमननध्यानफलक्रमात्क्रम इत्यर्थः । पूर्वत्र तन्निर्धारणार्थनियमस्तद्दृष्टेरित्यादिसूत्रे श्रवण-मननध्यानफलानां क्रमेण निर्देशात्तदनुकरणमेतत्तत्वनिर्णय इत्यादि । अर्थनियमोऽयमेवास्यार्थ इति नियम इत्यर्थः ।

ननूक्तमत्र भूमत्वे विशेषकल्पनायामेकैकस्मिन्नेवानन्दादिगुणे तत्तद्योग्यतरतमभावापन्न-भूमत्वस्याभावेन तथोपासने मिथ्योपासनाप्रसङ्ग इतीति भावेन प्रागुक्तशङ्कामनूद्य स्मृतौ तथोपासनेन फलस्य नानात्वमेवास्तीत्युक्तिलब्धसमाधिना निराह ॥ **न चेति** ॥ **वत्सरेति** ॥ संवत्सरोऽनन्तः तन्मध्यपतितमासा अप्यनन्ताः । तथापि संवत्सरानन्त्यापेक्षया मासानन्त्यं तदपेक्षया वासराणा-मानन्त्यं ततोऽपि क्षणलवादीनामानन्त्यमधिकमिति सर्वानुभवसिद्धमिति । प्रकृतेऽपि भगवदानन्दा-द्येकैकगुणेऽपि बहून्यानन्त्यानि सन्त्येव । तथापि तत्तद्योग्यतानुरोधेन तानि तान्येवानन्त्यानि तं तमधिकारिणं प्रतिभान्ति ध्यानकाले । नान्यानि । यथाऽनन्तकोटिसूर्यप्रकाशोऽपि हरिरधिकारि-भेदेन सहस्रलक्षामितभास्करोपम इत्युच्यते तथेत्यर्थः । उक्तं च द्वितीयगीताभाष्यटीकायां सहस्रलक्षामितकान्तिकान्तमित्येतद्व्याख्यावसरे द्रष्टृपुरुषयोग्यताभेदात्त्रिधोक्तिरिति । विवृतमे-तद्वैशेषिकाधिकरणानुव्याख्यानसुधयोरणुत्वाविश्रान्त्युक्तिप्रकरणे । तच्च ब्रह्मपरं साक्षात्सर्वानन्त्ययुतं सदेत्यन्तेन ग्रन्थेन । ननु तावन्मात्रोपासने कथं न मिथ्योपासनमित्यत आह ॥ **अन्येति** ॥ एतावदेवास्यानन्त्यं नातोऽधिकमित्यनुपासनादित्यर्थः । तावत्त्वमेव नैव स्याद्देशोऽप्येतन्न नो मतमिति वैशेषिकनयानुभाष्योक्तेरिति भावः । अङ्गुष्ठमात्र इत्युपासनमपि व्यक्त्यपेक्षयैव । न तु वस्तुत इति हृद्यपेक्षयेत्यत्र व्यक्तम् । अत्र केनचिदर्वाचीनेनोक्तदूषणालग्नताप्रकारः कण्टकोद्धारे व्यक्तः । फलोक्त्या सूत्रार्थमुपसंहरति ॥ **अत इति** ॥ शब्दादिभेदादित्यर्थः । तदर्थः प्राग्विवृत शब्दादिभिरित्यादिना । नानेति सौत्रप्रतिज्ञायां भावप्रधानत्वं भूम्न इत्यनुवृत्तिं चोपेत्यार्थमाह ॥ **भूमत्वेति** ॥ उपासनाप्रकरणाद्दृष्टावित्युक्तम् ।

## अभिनवचन्द्रिका

**विशेषसमर्थनादिति ॥** उपासने विशेषसमर्थनादित्यन्वयः ॥ **उक्तानुपपत्तेरिति ॥** तारतम्यानुपपत्तेरित्यर्थः । **उभयविधवस्तुप्रतीरिति ॥** रत्नघटादिदर्शनं सन्देहबीजमित्यर्थः ॥ **न च भूमत्व इति ॥** भूमत्वं हि निरवधिकपरिमाणम् । न च निरवधिकपरिमाणे उत्कृष्टत्वमपकृष्टत्वं नाम धर्मद्वयमुपपद्यते । ततश्च केषाञ्चित्सम्यक्पूर्णत्वस्य, केषाञ्चित् किञ्चित्पूर्णत्वस्य दर्शनानुपपत्तिरिति न वाच्यमित्यर्थः ॥ **अतीत इति ॥** अतीतवत्सरवासराणामानन्त्येऽपि निरवधिकायामपि सङ्ख्यायां विशेषवदत्रापि विशेषोपपत्तेरित्यर्थः । भूमत्वस्य तु नाधिकरणभेदः । आनन्त्यस्य तु वत्सरवासर-रूपाधिकरणभेद इति तु वैषम्यमात्रम् । निरवधिकसङ्ख्यायां विशेषस्योपपत्तिवत् निरवधिक-परिमाणेऽपि विशेषसम्भवादिति भावः । अपकृष्टत्वभूमत्वोपासकानां प्रागुक्तमिथ्योपासकत्वप्रसङ्गो नास्तीत्याह– **अन्याऽनिषेधादिति ॥** भूमत्वं तावदुपास्ते । तच्चास्ति । नाप्यतिशयं निषेधति । येन मिथ्योपासनं स्यादिति भावः ।

पूर्वपक्षस्तु– सर्वेषां भूमत्वमेकप्रकारेणैव प्रतीयते । भूमत्वे विशेषाभावात् । विशेषाभावेऽपि तारतम्येन प्रतीत्यङ्गीकारे मिथ्योपासनप्रसङ्ग इत्येकप्रकारेणोपासकत्वान्नोक्ततारतम्यमिति ।

सिद्धान्तस्तु– नानाप्रकारेणैव भूमत्वं प्रतीयते । शब्दादिभिः प्रमाणैः तत्प्रतीतेरेष्टव्यत्वात् । शब्दादीनां च तत्तद्योग्यतानुसारेणार्थप्रत्यायकत्वात् । न च भूमत्वे विशेषानुपपत्तिः आनन्त्ये तारतम्यवत् भूमत्वे तारतम्योपपत्तेः । अतो भूमत्वदृष्टौ अधिकारिणां विशेषसद्भावात् युक्तं तारतम्यमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

अत्रानन्तरसङ्गतिः स्पष्टा ॥ **प्रकृत इति ॥** आनन्दादिविशेषतयोपास्यतया प्रकृतो भूमगुणः किमधिकारिणामेकप्रकारेण प्रतीयते, उत तारतम्येनेति चिन्ता । तदर्थं भूमत्वे विशेषकल्पना न सम्भवत्युत सम्भवतीति ॥ **उभयविधेति ॥** अनर्घ्यरत्नादिकं हि परीक्षकदृष्ट्यनुसारेण तारतम्येन प्रतीयते । स्तम्भो हि सर्वान् प्रत्येकप्रकारेणेत्युभयविधवस्तुदर्शनमित्यर्थः । शब्दादिभेदादित्यंश-व्यावर्त्यमकल्पनेत्युक्तन्यायं दर्शयति ॥ **भूमत्वे इति ॥** भूमत्वे तारतम्यकल्पनायोगात् । ततश्च भूमत्वे विशेषकल्पनायाः तारतम्येनोपासनायाश्चायोगादित्यर्थः । भूमत्वे तारतम्येनोपासना-योगमुपपादयति ॥ **न हीति ॥**

(वाक्यार्थमुक्तावली)

सूत्रे भूमत्वमित्यनुवर्तते । उपास्यत इति शेषः । सर्वं वाक्यं सावधारणमिति नानैवेति लभ्यत इति भावेन प्रवृत्तं भूमत्वमपि नानैवोपास्यत इति भाष्यं व्याचष्टे ॥ **भूमत्वमिति** ॥ तद्धेतुत्वेनानूनतेत्युक्तसिद्धान्तन्यायप्रदर्शकं शब्दादिभेदादित्यंशं प्रमाणेन व्याकुर्वच्छब्द इत्यादिभाष्यं व्याचष्टे ॥ **शब्दादिभिरिति** ॥ एतेन शब्दादीनां प्रमाणानां भेदादधिकारिभेदमपेक्ष्य भेदादनेकधा एकार्थप्रतीतिजनकत्वात् प्रतीतेः प्रमाणजन्यत्वेन मिथ्योपासनाभावात् भूमत्वमुपासने नानाप्रकारेणैव प्रतीयते इत्यर्थ उक्तो भवति । 'शब्दोऽनुमा तथैवाक्ष' इति क्रमनियामकमाह ॥ **तत्वनिर्णय इति** ॥ ननु निरवधिकपूर्णत्वरूपभूमत्वस्यैकप्रकारत्वात् प्रमाणान्यपि विद्यमानमर्थं कथं दर्शयेयुरित्यत आह ॥ **न चेति** ॥ यथा वत्सराणां मासानां चानन्त्येऽप्येकैकवत्सरस्य द्वादशमासात्मकत्वेन वत्सरानन्त्यात् मासानन्त्ये विशेषोऽस्ति । एवमानन्दादौ स्वस्वाधिकारानुसारेणोपस्थिते पूर्णत्वेऽपि विशेषो विद्यत इति भावः । ननु स्वस्वाधिकारानुसारेणोपस्थिते पूर्णत्वस्य मासानन्त्यापेक्षया वत्सरानन्त्यस्येवासम्यक्पूर्णत्वेन केषाञ्चिन्मिथ्योपासनाप्रसङ्ग इत्यत आह ॥ **अन्येति** ॥

## तत्त्वसुबोधिनी

**अधिकारिणां विशेषेति** ॥ पूर्वाधिकरणोक्तभूमगुणोपासने अधिकारिणां विशेषसमर्थनादनन्तरसङ्गतिरिति भावः ॥ **उक्तानुपपत्तेरिति** ॥ उक्तातारतम्यानुपपत्तेरित्यर्थः । कुतो न इत्यत आह ॥ **तथात्वेति** ॥ ननु प्रत्यक्षस्य सर्वप्रमाणोपजीवित्वेन सूत्रे प्रत्यक्षादिभेदादिति वक्तव्यम् । यदि तन्मुख्यमित्युक्तरीत्या करणेषु शब्दस्य प्रधान्यात् सूत्रे तदादित्वेन ग्रहणम् । तर्हि स्मृतावनुमानस्य शब्दानन्तरं तदनन्तरं च प्रत्यक्षस्य ग्रहणे किं निमित्तमित्यत आह ॥ **तत्वनिर्णय इति** ॥ ननु प्रमाणान्यप्यविद्यमानार्थं दर्शयेयुः इत्याशङ्क्य परिहरति ॥ **न चेति** ॥ विशेषवदतीतवत्सराणामानन्त्येऽपि अन्योन्यं अवान्तरविशेषवदित्यर्थः । नन्वत्र भूमत्वे विशेषसद्भावे केषांचित् किंचित्पूर्णानन्द इति मिथ्योपासनप्रसङ्ग इत्यत आह ॥ **नान्यनिषेधकत्वादिति** ॥

## वाक्यार्थविवरणम्

**विशेषः** तारतम्यम् । अन्यथा भूमोपासने अधिकारविशेषाभावे ॥ **उक्तेति** ॥ उपासकतारतम्येत्यर्थः ॥ **उभयविधेति** ॥ दूरस्थं वस्तु दूरवर्तिभिस्तारतम्येन प्रतीयते । समीपस्थं वस्तु

सर्वैरेकप्रकारेण प्रतीयत इत्यर्थः । शब्दादिभेदादिति सूत्रखण्डार्थमाह ॥ **शब्दादीनां चेति** ॥ **नानोपासनाचेति** ॥ पूर्णत्वस्य तरतमभावेनोपासनादित्यर्थः । तत्त्वनिर्णयश्रवणरूपशब्दफलम् । वेदार्थनियमो मननरूपानुमितिफलम् । अपरोक्षज्ञानं च ध्यानरूपप्रत्यक्षफलमिति ध्येयम् ॥ **शब्दादिक्रमः** ॥ 'शब्दोऽनुमा तथैवाक्ष'' इति क्रमः । विशेषः तारतम्यम् । विशेषवत् तारतम्यवत् ॥ **अत्रापीति** ॥ पूर्णत्वेऽपि तारतम्योपपत्तेरित्यर्थः । 'समुद्रः पूर्णः, घटः पूर्णः' इत्युक्तेः पूर्णत्वेऽपि तारतम्यप्रतीतिदर्शनादित्यपि द्रष्टव्यम् ॥ **अन्येति** ॥ अल्पपूर्णत्वं स्वयोग्यतानुसारेण यैरुपास्यते तैरल्पपूर्णत्वमेवास्ति हरेर्नाधिकं पूर्णत्वमस्तीति यद्युपास्येत तर्ह्येव अन्यथोपासनं स्यात् । न चैवमुच्यते । अन्यनिषेधेन तैरुपासनाया अकरणात् । निरवधिकपूर्णे च हरौ किञ्चित्पूर्णत्वादेरपि सत्त्वात् । न हि निरवधिकपूर्णे समुद्रे घटनिष्ठपूर्णतासदृशं पूर्णत्वं नास्तीति शक्यते वक्तुम् । तथात्वे **निरवधिकपूर्णत्वस्यैवाप्राप्तेरिति** ॥ तथोक्तं 'महागुणस्य चाल्पोऽपि गुणः स्यादिति चेद्भवेत् । तावत्त्वमेव नैव स्यात्' इतीति सम्प्रदायविदः ॥ **भूमत्वदृष्टौ** भूमत्वोपासने ॥ **विशेषः** तारतम्यम् । तारतम्यं तदुपासकानामिति शेषः ।

## वाक्यार्थमञ्जरी

उक्तेति **यावदधिकारमित्युक्तफलतारतम्यमित्यर्थः** ॥ **भूमत्व इति** ॥ न हि विभूनां देशतः पूर्णत्वे विशेषोऽस्तीति भावः । सत्यपि विशेषेऽनुपपत्तिमाह ॥ **न हीति** ॥ **मिथ्येति** ॥ भगवदानन्दे किञ्चित्पूर्णत्वाभावादिति भावः ॥ ॐ नानाशब्दादिभेदात् ॐ ॥ भूमत्वं नाना तारतम्येनैव प्रतीयते कुतः शब्दादिप्रमाणानां भेदात् । तारतम्येन ज्ञानजनकत्वस्वाभाव्यादित्यर्थः । ननु प्रत्यक्षस्य सर्वप्रमाणोपजीव्यत्वेन प्राधान्यात्सूत्रे प्रत्यक्षादीति वक्तव्यम् । यदि 'तन्मुख्यं ज्ञानशब्दयोः' इत्युक्तरीत्या करणेषु शब्दस्य प्राधान्यात्तदादित्वेन ग्रहणं तर्हि स्मृतौ शब्दानन्तरं प्रत्यक्षमनुक्त्वानुमानग्रहणे किं निमित्तमित्यत आह ॥ **तत्त्वनिर्णय इति** ॥ ननु प्रमाणान्यप्य-विद्यमानार्थं कथं दर्शयेयुरित्याशङ्क्य परिहरति ॥ **न चेति** ॥ **अतीतेति** ॥ वर्षापेक्षया वासराणां बहुत्वादिति भावः ॥ **अत्रापीति** ॥ घटकूपादीनां जलपूर्णत्वे विशेषदर्शनादिति भावः । ननूक्तमत्र मिथ्योपासनप्रसङ्ग इति तत्राह ॥ **अन्यानिषेधादिति** ॥ एतावदेव नाधिकमित्यनिषेधादिति भावः ।

॥ इति नानाशब्दाधिकरणम् ॥ ३८ ॥

## ३९. विकल्पाधिकरणम्

### ॥ ॐ विकल्पो विशिष्टफलत्वात् ॐ ॥ ६१ ॥

स्वयोग्योपासनानन्तरं सामान्यस्यापि कस्यचिदुपासनं विकल्पेन भवति विशिष्टफलापेक्षया ।

'मुक्त्यर्थमात्मयोग्यं हि कार्यमेव ह्युपासनम् ।
नृसिंहादिकमन्यच्च दुरितादिनिवृत्तये ॥
उपास्यते यथायोगं न वा फलविभेदत' इति (च) ब्रह्मतर्के ॥

## तत्त्वप्रदीपिका

स्वयोग्यरूपं यथोक्तकालमुपास्य पश्चात्सामान्यस्य वैष्णवत्वेन समानतया वर्तमानस्य कस्यचिद्रूपस्योपासनं विकल्पेन भवति कर्तव्यं न वेति । न स्वयोग्यं यथोक्तकालमनुपास्य ।

'मतिश्रुतिध्यानकालविशेषं गुरुरुत्तमः ।
वेत्ति तस्योक्तिमार्गेण कुर्वतः स्याद्धि दर्शनम्' इति ह्यनुव्याख्याने ।

नाप्यवैष्णवस्य वैष्णवे कृतेन विरोधः । विशिष्टफलापेक्षया हि क्रियते । यद्यपि न केवलं मुक्तिफलापेक्षया तथाऽपि मुक्तिद्वारभूता दुरिताज्ञानान्यथाज्ञानकामादिनिवृत्तिरुत्तममेव फलमपेक्ष्यते । नृसिंहादिकं नृसिंहकृष्णादिकम् । वक्ष्यति च–

'अनादिजन्मसम्बद्धं निर्भेत्तुं पापपञ्जरम् ।
यावत्या सेवया शक्यं तावत्कार्यं न संशयः' इति ॥ न वा क्रियते,
अन्यफलापेक्षत्वात् ॥

## तत्त्वप्रकाशिका

अत्र हरिदर्शनोपयोगिबिम्बोपासनस्याकर्तव्यतानिरासादस्ति शास्त्रादिसङ्गतिः । अन्यथा तापनीयादिश्रुतिवैयर्थ्यप्रसङ्गात्समर्थनीयमेतत् । तत्प्रकृतोपासनं विषयः । मुमुक्षुणा स्वबिम्बातिरिक्तरूपविषयं कर्तव्यं न वेति सन्देहः । बिम्बोपासनोक्तेरनवधारणाया उभयथाप्युपपत्तिः सन्देहबीजम् । न कर्तव्यमिति पूर्वः पक्षः । तथा हि । किमेतदुपासनं मोक्षार्थं कर्तव्यं फलान्तरार्थं वा । नाद्यः ।

(तत्त्वप्रकाशिका)

**तदभावात् । अन्यथोक्तं व्याहन्येत । न द्वितीयः । तस्य मोक्षार्थत्वाभावादधिकारिणो मुमुक्षुत्वात्प्रत्युत विम्बोपासनविघ्नाय चेति । अतो मुमुक्षुणा न तदुपासनं कार्यमिति तद्विद्यावैयर्थ्यमिति । सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ॥ विकल्प इति ॥ स्वमोक्षसाधनातिरिक्तं च नरसिंहाद्युपासनं कर्तव्यं न वा । न तु न कर्तव्यमेव । तस्य मोक्षार्थोपासनानन्तरभावित्वेन दुरितादिनिवृत्तिलक्षणमोक्षोपयोगिफलसाधनत्वेन चोक्तदोषाभावात् । किं तु विकल्पस्तु यस्य विशिष्टफलापेक्षास्ति तेन कर्तव्यम् । यस्य तु नास्ति तेन नेति । स्वयोग्योपासनयैव तीव्रया दुरितादिनिवृत्त्युपपत्तेरिति भावः । अत्रैव स्मृतिमाह ॥ मुक्त्यर्थमिति ॥ नृसिंहादिकमन्यच्चेति सामानाधिकरण्यम् । अतोऽन्योपासनस्यापि कर्तव्यत्वान्न विद्यावैयर्थ्यमिति सिद्धम् ।**

## गुर्वर्थदीपिका

तापनीयविद्यापदेन नृसिंहतापनीयोपनिषद्गृह्यते । तदभावादित्यस्य बिम्बोपासनेनैव मोक्षसिद्धेर्बिम्बातिरिक्तोपासनस्य मोक्षहेतुत्वाभावादित्यर्थः । अतो मुमुक्षुणा न तदुपासनं कार्यमित्यत्र तस्यामेवोपनिषदि तदुपासनस्यापमृत्युपरिहारादिमोक्षेतरफलकत्वोक्तेरिति भावः । तस्य मोक्षार्थोपासानन्तरभावित्वेनेत्यत्र समग्रोपासनानन्तरमपरोक्षज्ञानोत्पत्तिनियमेन तन्मध्ये प्रतिबन्धकदुरितादेरसम्भवात् । ज्ञानोत्तरकालमप्रारब्धसकलदुरितानां ज्ञानेनैव विनाशेन सुतरामसम्भवाच्च । उपासनापरिपाकात्प्रागेव दिने दिने क्रियमाणोपास्तौ मध्ये मध्ये दुरितवशाद्वा विघ्नकर्तृकल्यादिबलेन वा मनोविक्षेपेणोपासनविच्छेदे सति क्रियमाणोपासनं कुरुत इत्यत एकदैवाणुना मनसा उपासनद्वयानङ्गीकारान्नावान्तरोपासनं नित्योपासनविघ्नकारिनाप्यनुपयोगीति भावः ।

## भावबोधः

**विम्वोपासनस्याकर्तव्यतानिरासादिति** । 'नैवा भूमा फलमेषां विधत्त' इत्युक्तरीत्या भूमत्वस्यानुपासने फलानुदयेन सम्भृत्याद्युपासनस्येव भूमत्वोपासनस्याकर्तव्यता न युक्तेति पूर्वाधिकरणद्वयोक्तन्यायेनैवात्रापि दर्शनप्रतिबन्धकनिरासकनृसिंहाद्युपासनस्याकृतौ दर्शनादिफलानुदयेन तदुपासनस्याकर्तव्यतानिरासादनन्तरसङ्गतिरिति भावः ॥ **कर्तव्यमिति** ॥ अत्र नृसिंहाद्यविम्बोपासनं किं न कर्तव्यमुत कर्तव्यमिति चिन्ता । तदर्थं तदुपासनं किं मोक्षोपयोगिदर्शनस्य विघ्नहेतुरुत प्रतिबन्धकनिवर्तकतया तदुपयोगीति । तदर्थं प्रतिबन्धकनिवृत्तिः स्वयोग्यबिम्बोपासन-

(भाववोधः)

मात्रेण भवत्युत न भवतीति । शुद्धसाधनवैरूप्यान्मोक्षसाधनत्वेनोपदिष्टं विना विष्णावेवोपासनान्तरस्याकर्तव्यतेति न्यायविवरणं मनसि निधाय पूर्वपक्षमाह– **न कर्तव्यमित्यादिना** ॥ उक्तं **व्याहन्येतेति** ॥ 'न सामान्यादप्युपलब्धेः' इत्यत्राबिम्बदर्शनस्य मोक्षसाधत्वं नास्तीत्युक्तमित्यर्थः । सामान्यस्यापि कस्यचिदुपासनं विकल्पेन भवतीति भाष्यं व्याचष्टे– **स्वमोक्षसाधनेति** ॥ स्वयोग्योपासनानन्तरमिति भाष्यं व्याचष्टे– **तस्येति** ॥ अनेन प्रत्युत 'बिम्बोपासनविघ्नाय च' इति दोषोद्धारः कृतः । अविघ्नतासाधनत्वादिति न्यायविवरणं व्याचष्टे– **दुरितादीति** ॥ अनेन 'तदभावात्' इति दोषो निरस्तः । विशिष्टफलापेक्षयेति भाष्यं व्याचष्टे– **विकल्पश्चेति** ॥

## भावदीपः

अत्र सङ्गतित्रयोपपादनाय हरीति दर्शनोपयोगीति उपासनस्येति चोक्तिः । पूर्वत्र सर्वसाधारणगुणोपास्तौ विशेष उक्तोऽत्र तु रूपोपास्तौ विशेष उच्यत इति पूर्वसङ्गतिसूचनाय विम्वेत्युक्तिः ॥ **अकर्तव्यतेति** ॥ नियमेनेति योज्यम् । विकल्पेन कर्तव्यतासमर्थनादित्यर्थः । उपासनान्तरस्याकर्तव्यतेति न्यायविवरणानुरोधादेवमुक्तिः । प्रागुक्तेर्विरोधाभावादाह ॥ **तापनीयेति** ॥ नृसिंहतापनीयहयग्रीवादिविद्यावैयर्थ्येत्यर्थः । आध्यानाय प्रयोजनाभावादित्युक्तन्यायेन सर्वस्य ध्यानार्थत्वादिति भावः । न च प्रागुक्तप्रमेये विरोधाभावाद्व्यर्था चिन्तेति शङ्क्यम् । तापनीयाद्युक्तस्यानुपास्यत्वमिव वाक्यान्तरोक्तगुणान्तरस्यापि तथात्वसम्भवेनाध्यानायेत्यत्र गुणान्तरोपसंहारसमर्थनमयुक्तं स्यादिति तात्पर्यात् । कर्तव्यं न वेत्यनन्तरं न कर्तव्यमेव वेति पूर्वपक्षकोटिरप्यध्याहार्या । तेन न पूर्वपक्षाद्यननुगुणः सन्देह इति ज्ञेयम् ॥ **विम्वेति** ॥ तद्विजिज्ञासस्व स विजिज्ञासितव्यः 'आत्मन्येवात्मानं पश्येत्' इत्यादिविधेरुभयथापि अन्यस्य नियमेनाकर्तव्यत्वे विकल्पेन कर्तव्यत्वे चेत्यर्थः । शुद्धमोक्षसाधनवैरूप्यात् मोक्षसाधनत्वेनोपदिष्टं विना विष्णावेवोपासनान्तरस्याकर्तव्यतेत्यन्यत्रोक्तपूर्वपक्षप्रतिज्ञां तावदाह ॥ **नेति** ॥ मुमुक्षुणा स्वबिम्बातिरिक्तरूपविषयमुपासनमित्यनुकर्षः । न कर्तव्यमेवेत्यर्थः । विनेत्यन्तं वाक्यं विकल्पमुखेन व्याचष्टे ॥ **किमिति** ॥ वैरूप्यादित्यन्तस्यार्थः । तदभावान्मोक्षार्थत्वाभावादिति ॥ **उक्तमिति** ॥ न सामान्यादपीत्युक्तमित्यर्थः । विनेत्यन्तस्य तात्पर्योक्तिरधिकारिणोऽमुमुक्षुत्वादिति । विष्णोरेवेत्यवकारभावमाह ॥ **प्रत्युतेति** ॥ यद्वा वैरूप्यादित्यस्य प्रतिकूलत्वादित्यर्थान्तरमुपत्याह

(भावदीपः)

॥ **प्रत्युतेति** ॥ **अत इति** ॥ **मोक्षसाधनवैरूप्यादित्यर्थः** । सामान्यस्यापीत्यादिभाष्यार्थमाह ॥ **स्वमोक्षेति** ॥ सूत्रे न सामान्यादित्यतः सामान्यस्येत्यनुवर्तत इति भावः । विकल्पशब्दार्थः कर्तव्यं न वेति । **स्वयोग्योपासनानन्तरमिति विशिष्टफलेति** च भाष्यं न द्वितीय इत्यादिनोक्त-शङ्कानिवर्तकतया हेतुत्वेन व्याचष्टे ॥ **तस्येति** ॥ अनेन प्रत्युतेत्युक्तदोषनिरासः ।

अविघ्नत्वसाधनत्वादित्यन्यत्रोक्त्यनुरोधेन विशिष्टफलं व्यनक्ति ॥ **दुरितादीति** ॥ ज्ञानादि-प्रतिबन्धकदुरदृष्टं दुरितम् । अज्ञानकामक्रोधादिरादिपदार्थः । अनेन मुमुक्षुत्वादित्युक्तदोषनिरासः । साक्षान्मोक्षार्थत्वाभावेऽपि मोक्षोपयोगि यत्फलं ज्ञानादि तत्प्रतिबन्धनिवृत्तिद्वारा तत्साधनत्वा-दित्यर्थः । विकल्पः किं पूर्वविकल्प इत्युक्तगुरुविकल्पादिवदव्यवस्थित उत न वा प्रकरण-भेदादित्युक्तोपसंहारविकल्पवद्व्यवस्थित इत्यतो विशिष्टेति भाष्यं विकल्पो भवतीत्यनेनान्विततया व्यवस्थितविकल्पोपपादकत्वेन व्याचष्टे ॥ **विकल्पस्त्विति** ॥ षोडशिग्रहणाग्रहणवदिति भावः । ननु दुरितादिनिवृत्तेः सर्वापेक्षितत्वाद्यस्य नास्ति तेनेत्युक्तिः कथमित्यत आह ॥ **स्वयोग्येति** ॥ सर्वस्यापेक्षायां सत्यामपि केषाञ्चिदधिकारिणां स्वबिम्बातिरिक्तनृसिंहाद्युपासनेन विना मोक्षहेतु-स्वयोग्यबिम्बोपासनयैव पुनःपुनरनुष्ठिततया नान्तरीयकदुरितनिवृत्तेरपि सम्भवादित्यर्थः । यस्य नास्तीत्युक्तिस्तु नृसिंहाद्युपासनजन्यदुरितादिनिवृत्तिरूपफलापेक्षा यस्य नास्तीत्यभिप्रायेति भावः ॥ **अत्रेति** ॥ स्वयोग्योपासनमेव मोक्षाय, नृसिंहाद्युपासनं तु तदुपयोगिदुरितादिनिवृत्तये विकल्पे-नेत्युक्तार्थ इत्यर्थः । नृसिंहादिकं नृसिंहकृष्णहयग्रीवादिविष्णुरूपमन्यच्चावैष्णवं च यत्किञ्चिदिति भ्रमनिरासायाह ॥ **इति सामानाधिकरण्यमिति** ॥ नृसिंहादीत्यादिपदेनैव विष्णुरूपान्तराणां ग्रहणमिव देवतान्तररूपग्रहणेऽप्यविरोधो मोक्षोपयोगिफलार्थत्वादित्यप्याहुः । तथा च वक्ष्यति 'अनादिजन्मसम्बद्धं निर्भेत्तुं पापपञ्जरम् । यावत्या सेवया शक्यं तावत्कार्यं न संशयः' इति ऐहिकमित्यत्र भाष्ये ॥ **अत इति** ॥ मोक्षोपयोगिदुरितादिनिवृत्तिरूपफलत्वादित्यर्थः ॥ **न विद्येति** ॥ ततश्चाध्यानायेत्युक्तं युक्तमिति भावः ।

## अभिनवचन्द्रिका

**प्रकृतोपासनमिति** ॥ स्वबिम्बातिरिक्तरूपविषयं उपासनाप्रसङ्गेन मनसि सन्निधापितं उपासनं विषयः । मुमुक्षुणा कार्यं न वेति संदेह इत्यर्थः ॥ **किमेतदुपासनमिति** ॥ स्वबिम्बातिरिक्त-

(अभिनवचन्द्रिका)

रूपविषयं नरसिंहाद्युपासनं किं मोक्षसाधनम्, उत फलान्तरसाधनमित्यर्थः । एतेन मुमुक्षुणा क्रियमाणस्योपासनस्य मोक्षार्थत्वनियमात् किं मोक्षार्थं कर्तव्यम्, उत फलान्तरार्थमिति विकल्पोऽनुपपन्न इति परास्तम् ॥ **तदभावादिति** ॥ सत्यपि नरसिंहाद्युपासने मोक्षाभावान्नर-सिंहाद्युपासनं मोक्षसाधनमिति आद्यकल्पो नेत्यर्थः ॥ **न द्वितीय इति** ॥ फलान्तरसाधनत्वम्, अधिकारिकर्तव्यताप्रयोजकं नेत्यर्थः । कुतो नेत्यत आह– **तस्येति** ॥ यदधिकारिणोऽपेक्षितं न तस्येदं साधनं यस्येदं साधनं न तत्फलमधिकारिणोऽपेक्षितमिति भावः । न केवलमिष्ट-साधनत्वाभावात् नेदं कर्तव्यम्, अपि तु इष्टविरोधित्वादपीत्याह– **प्रत्युतेति** ॥

उपसंहरति **अत इति** ॥ नरसिंहाद्युपासनस्येष्टासाधनत्वादिष्टविरोधित्वाच्चेत्यर्थः । ननु न कर्तव्यमेव नरसिंहाद्युपासनमिष्टाऽसाधनत्वेष्टविरोधित्वरूपदोषद्वयसद्भावादित्यत आह– **तस्येति** ॥ 'मोक्षार्थोपासनानन्तरभावित्वेन' इत्यनेन बिम्बोपासनविघातकत्वं परिहृतम् । 'दुरितादिनिवृत्ति-लक्षणमोक्षोपयोगिफलसाधनत्वेन' इत्यनेनेष्टासाधनत्व परिहृतमिति द्रष्टव्यम् । तर्हि येन नृसिंहा-द्युपासनं न क्रियते, तस्य दुरितनिवारणं न स्यादित्यत आह– **स्वयोग्येति** ॥

पूर्वपक्षस्तु– नाऽधिकारिणा नरसिंहाद्युपासनं कार्यम् । तस्य मोक्षहेतुत्वाभावात् । फलान्तरस्या-नपेक्षितत्वात् । प्रत्युत बिम्बोपासनविरोधित्वाच्च । ततश्च तत्प्रतिपादकविद्यावैयर्थ्यमिति ।

सिद्धान्तस्तु– नरसिंहाद्युपासनं न कर्तव्यमेवेति न भवति किंतु बिम्बोपासनमनुष्ठाय, विशिष्ट-फलापेक्षा चेत्कर्तव्यं, न चेन्न कर्तव्यमिति विकल्पः । न च नरसिंहाद्युपासनाभावे दुरितनिवृत्त्य-सिद्धिः तीव्रया स्वबिम्बोपासनयापि दुरितनिवृत्तिसिद्धेः । ततश्च अन्योपासनस्यापि कर्तव्यत्वात् न तद्विद्याया वैयर्थ्यमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

पूर्वमानन्दाद्युपासनस्य फलवत्वाय पूर्णत्वं यथायोग्यमुपास्यमित्युक्तम् । तेनैव न्यायेन नरसिंहाद्युपासनाभावे ज्ञानमोक्षप्रतिबन्धकदुरितनिवृत्त्यभावेन तदर्थं तदुपास्यमिति सिद्धन्तकरणा-दनन्तरसङ्गतिः ॥ **प्रकृतोपासनमिति** ॥ सर्ववेदान्तप्रत्ययमिति तापनीयविद्याया बुद्धि-सन्निधापितत्वात्तया प्रकृतं तदुक्तरूपोपासनं विषय इत्यर्थः । विषयमेव व्यञ्जयन्सन्देहमाह

(वाक्यार्थमुक्तावली)

।। **मुमुक्षुणेति** ।। स्वबिम्बातिरिक्तविषयमुपासनं मुमुक्षुणा न कर्तव्यमुत कर्तव्यमिति चिन्ता । तदर्थं किं तदुपासनं मोक्षहेतुबिम्बोपासनप्रतिबन्धकमुत तन्निवर्तकमिति । अत्र बिम्बपदमुपलक्षणम् । स्वयोग्यरूपमात्रं द्रष्टव्यम् । यद्वा व्याप्तदर्शिप्रभृतिभिः स्वयोग्यरूपस्यैव हृदि प्राज्ञसंज्ञितबिम्बाभेदे- नोपास्यत्वात् बिम्बपदेनैव तद्ग्रहः ।। **अनवधारण इति** ।। बिम्बमेवोपास्यमित्यवधारणाभाव- स्येत्यर्थः । विशिष्टफलत्वादिति सूत्रखण्डनिवर्त्यं शुद्धवैरूप्यमित्युक्तन्यायं विशदयन् पूर्वपक्षयति ।। **तथा हीति** ।। **तदभावादिति** ।। मोक्षार्थत्वाभावादित्यर्थः । एतेन शुद्धसंज्ञितमोक्षवैरूप्यात् वैमुख्यात् तदर्थत्वाभावादिति न्यायार्थ उक्तो भवति ।। **उक्तमिति** ।। न सामान्यादप्युप- लब्धेरित्युक्तमित्यर्थः ।। **न द्वितीयः** ।। शुद्धस्य मोक्षाधिकारिणो मुमुक्षुत्वेन फलान्तरविमुखत्वान्न फलान्तरार्थं तदुपासनम् । प्रत्युत शुद्धमोक्षसाधनीभूतबिम्बोपासनविरोधित्वात् तद्विघ्नाय च तद्भवतीति न कर्तव्यमित्यर्थः ।

सूत्रे सामान्योपासनस्येति शेषः । विकल्पो विविधः कल्पः कर्तव्यो न वेति न तु न कार्यमेवेति नियम इति भावेन प्रवृत्तं सामान्यस्यापि कस्यचिदुपासनं विकल्पेन भवतीति भाष्यं व्याचष्टे ।। **स्वमोक्षेति** ।। सामान्यस्यापीत्यस्य मोचकतया यत्स्वसाधारणं रूपं तदतिरिक्तस्येत्यर्थ उक्तो भवति । यद्यपि नरसिंहादिकं केषाञ्चिद्योग्यरूपमेव तथापि तदतिरिक्ताधिकारिणां तत्सामान्यमिति ज्ञेयम् । स्वयोग्योपासनानन्तरमिति भाष्यं व्याचष्टे ।। **तस्येति** ।। तस्य मोक्षार्थोपासनानन्तरभावित्वेनोक्तदोषाभावादित्यन्वयः । अनेन प्रत्युत बिम्बोपासनविघ्नाय चेत्युक्त- दोषः परिहृतो बोध्यः । एतेनाविघ्नतेत्युक्तन्यायः नृसिंहाद्युपासनस्य योग्यरूपोपासनविघ्नत्वाभाव इति विवृतो भवति ।। **पूर्वपक्षिणा तदभावादिति** ।। नृसिंहाद्युपासनस्य मोक्षयोगित्वाभाव उक्तः । तद्दोषपरिहारायाविघ्नतेत्युक्तन्यायप्रदर्शकविशिष्ट-फलत्वादित्यंशं व्याकुर्वद्विशिष्टफलापेक्षयेति भाष्यं व्याचष्टे ।। **दुरितादीति** ।। आदिपदेनाज्ञानमिथ्याज्ञानकामादिर्गृह्यते । एतेन विशिष्टफलापेक्षयेत्यस्य ज्ञानमोक्षविघ्नरूप-दुरितादिनिवृत्तिरूपं यद्विशिष्टं मोक्षोपयोगितयोत्तमं फलं तद्वत्वात्कस्यचिदुपासनं कर्तव्यमित्यर्थ उक्तो भवति । अविघ्नतेति न्यायस्य विघ्नविरोधितेत्यप्यर्थ उक्तो भवति ।

ननु यदि तापनीयादिश्रुतिविहितत्वाद्दोषद्वयाभावाच्च नृसिंहकृष्णाद्युपासनस्य कर्तव्यता तर्हि तस्यावश्यमपेक्षणीयत्वे विकल्पः कथमिति शङ्कते ।। **किन्त्विति** ।। तदुत्तरत्वेन विकल्पेन भवति

(वाक्यार्थमुक्तावली)

विशिष्टफलापेक्षयेति भाष्यं प्रकारान्तरेण व्याचष्टे ॥ **विकल्पश्चेति** ॥ यस्य नृसिंहाद्युपासनयैव दुरितादिनिवृत्तिरूपविशिष्टफलापेक्षाऽस्ति तेन कर्तव्यम् । यस्य तु नृसिंहाद्युपासनेन दुरितादिनिवृत्तिर्नेष्टा तस्य तन्न कर्तव्यमित्यर्थः । तर्हि तद्दुरितादिनिवर्तकं किमित्यत आह ॥ **स्वयोग्ययेति** ॥ फलविभेदत इति भाष्यस्यायमर्थः । दुरितादिनिवृत्तिरूपफलाकाङ्क्षाभावाभावभेदत इत्यर्थः ।

## तत्त्वसुबोधिनी

नैव भूमा फलमित्युक्तरीत्या भूमत्वस्यानुपासने फलानुदये सम्भृतिद्युपासनस्येव भूमत्वोपासनस्याकर्तव्यता न युक्तेति पूर्वाधिकरणद्वयोक्तन्यायेनैवात्रापि दर्शनप्रतिबन्धकनिरासकनरसिंहाद्युपासनस्याकृतौ दर्शनादिफलानुदयात् तदुपासनस्याकर्तव्यतानिरासादानन्तरसङ्गतिरिति भावः ॥ **उक्तं व्याहन्येतेति** ॥ न सामान्यादप्युपलब्धेरित्यत्र बिम्बदर्शनस्य मोक्षसाधनत्वं नास्तीत्युक्तमित्यर्थः । सामान्यस्यापीति भाष्यं व्याख्याति ॥ **स्वमोक्षेति** ॥ स्वयोग्योपासनानन्तरमित्येतद्व्याचष्टे ॥ **तस्येति** ॥ अनेन प्रत्युत बिम्बोपासनविघ्नाय चेति दोषोद्धारः कृतः । तदभावादित्युक्तदोषं निरस्यति ॥ **दुरितादिति** ॥ तर्हि किमित्यत आह किं तु विकल्पश्चेति । तमेव प्रकटयति ॥ **यस्येति** ॥ विशिष्टफलानपेक्षस्य दुरितादिनिवृत्तिः कथमित्यत आह ॥ **स्वयोग्योपासनयेति** ॥

## वाक्यार्थविवरणम्

**बिम्बोपासनस्य** ॥ बिम्बरूपभिन्ननृसिंहादिभगवद्रूपोपासनस्य ॥ **तापनीयादीति** ॥ तापनीयादिश्रुतीनां नृसिंहाद्युपासनाप्रतिपादकत्वादिति भावः ॥ **बिम्बोपासनोक्तेः** ॥ सामान्यदर्शनाल्लोका मुक्तिर्योग्यात्मदर्शनादित्युक्तेरित्यर्थः ॥ **अनवधारणाया इति** ॥ यदि मुक्तिर्योग्यात्मदर्शनादेवेति बिम्बोपासनोक्तिः सावधारणा स्यात्तदैव नोभयथाऽप्युपपत्तिः स्यात् । न चैवम् । तदुक्तेर्निरवधारणत्वात् । अतोऽबिम्बोपासनकर्तव्यतानिषेधकत्वाभावाद्बिम्बोपासनोक्तिः सावकाशेत्युभयथाऽप्युपपत्तिरिति भावः ॥ **तदभावादिति** ॥ तदुपासनेन मोक्षाभावादित्यर्थः ॥ **उक्तमिति** ॥ न सामान्यादित्यत्र सामान्यदर्शनाल्लोका इति स्वबिम्बातिरिक्तरूपविषयोपासनस्योक्तमोक्षेतर-

(वाक्यार्थविवरणम्)

फलकत्वं व्याहन्येतेत्यर्थः । **बिम्बभिन्नरूपान्तरोपासनस्य** मोक्षार्थत्वाभावेऽपि फलान्तरार्थमे-तदुपासनमित्युक्तम् । अतोऽसङ्गतमेतदित्यत आह ॥ **अधिकारिण इति** ॥ तथा चाधिकारिणो मोक्षेच्छुत्वेन मोक्षेतरफलानिच्छुत्वात् फलान्तरार्थं तेनाधिकारिणा एतदुपासनं न कार्यमिति भावः ॥ **उक्तदोषेति** ॥ परम्परया यथाकथञ्चिन्मोक्षोपयोगिफलकत्वेन तदभावादित्युक्तदोषाभावादित्यर्थः ॥ **विशिष्टफलेति** ॥ दुरितादिनिवृत्तिलक्षणमोक्षोपयोगिफलेत्यर्थः ।

ननु यस्य नास्ति तेन नेत्युक्तमयुक्तं, प्राप्तदुरितपरिहारोपायाभावादित्यत आह ॥ **स्वयोग्येति** ॥ स्वबिम्बेत्यर्थः । **स्मृतौ न वेति** । दुरितारिनिवृत्तये नोपास्यते । कुतः । फलविभेदतः दुरित-निवृत्तिलक्षणभिन्नफलस्य सत्त्वात् । तस्य चाधिकारिण एतदुपासनया दुरितपरिहारेच्छाभावात् । तीव्रबिम्बोपासनयैव तदुपपत्तेरित्यर्थः । दुरितादिनिवृत्तये नृसिंहादिकं, तदन्यत् बिम्बरूपं च दुरितादिनिवृत्तये उपास्यत इत्यन्यथाप्रतीतेराह ॥ **नृसिंहादिकमन्यच्चेति** ॥ **सामानाधिकरण्यमिति** ॥ तथा च बिम्बरूपादन्यत् यत् नृसिंहादिकं तत् इत्यर्थो द्रष्टव्यः ॥ **विद्येति** ॥ तापनीयादिश्रुतिरूपा नृसिंहाद्युपासनाभिधायकविद्येत्यर्थः ।

## वाक्यार्थमञ्जरी

**अबिम्बोपासनस्येति** ॥ बिम्बातिरिक्तरूपोपासनस्येत्यर्थः ॥ **तापनीयेति** ॥ तस्यान्यरूपो-पास्तिपादकत्वादिति भावः ॥ **अन्यथेति** ॥ अबिम्बोपासनस्य मोक्षहेतुत्वे न सामान्यादप्युप-लब्धेर्मृत्युरित्यत्रोक्तबिम्बातिरिक्तदर्शनस्य मोक्षसाधनत्वं नास्तीत्येतद्व्याहन्येतेत्यर्थः ॥ **मुमुक्षु-त्वादिति** ॥ तथा च मोक्षेतरफले विरक्तस्य न फलान्तरापेक्षया तत्करणमिति भावः ॥ **विघ्नायेति** ॥ अबिम्बोपासनं भवतीति शेषः ।

ॐ विकल्पो विशिष्टफलत्वात् ॐ ॥ अबिम्बोपासनस्य विकल्पो विविधकल्पोऽनियम इति यावत् । कुतः विशिष्टफलत्वात् विलक्षणफलकत्वादित्यर्थः ॥ **उक्तदोषद्वयेति** ॥ उक्तहेतुद्वयेन क्रमेण विघ्नकारित्वममुमुक्ष्वतत्वयोर्निरासादिति भावः । नृसिंहादितोऽन्यदिति भ्रमं निवारयति ॥ **नृसिंहादिकमिति** ॥ तथा च योग्योपासनादन्यनृसिंहादिकमित्यन्वय इति भावः ।

॥ इति विकल्पाधिकरणम् ॥ ३९ ॥

## ४०.काम्याधिकरणम्

**॥ ॐ काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ॐ ॥ ६२ ॥**

'यस्य यस्य हि यः कामस्तस्य तस्य ह्युपासनम् ।
तादृशानां गुणानां च समाहारं प्रकल्पयेत् ॥
अकामत्वान्मुमुक्षूणां न वा तेषामुपासनम् ।
तुष्ट्यर्थमीश्वरस्यैव नैवोपासा विदुष्यति' इति बृहत्तन्त्रे ॥

### तत्त्वप्रदीपिका

काम्यास्त्वित्यादि सूत्रम् । यस्य यस्य यो धनैश्वर्यादौ कामो भवति तस्य तस्य हि तदर्थमुपासनम् । स चोपासकस्तादृशान्गुणानुपसंहरेत्, न मुक्त्यर्थनैव । न वा मुमुक्षूणां काम्योपासनम् । अकामत्वात्तेषां येन मुक्त्यर्थमुपासनं विच्छिद्यते । अतोऽत्यन्तायामापद्येव तदिति गम्यते । तदाऽपि नान्यकामनयैतदुपासनम् । तदपि ह्याह– 'तुष्ट्यर्थमीश्वरस्यैव न चोपासा विदुष्यति' इति । 'सकामेभ्योऽमितगुणा याऽकामैस्तु कृता क्रिया' इति चान्यत्राऽह ॥

### तत्त्वप्रकाशिका

अत्र ब्रह्मज्ञानसाधनस्यैवोपासनस्यावश्यकत्वसमर्थनादस्ति शास्त्रादिसङ्गतिः । काम्योपासनस्यांप्यावश्यकत्वे प्रथमपादानुपपत्तिप्रसङ्गात्समर्थनीयम् । प्रकृतोपासनमेव विषयः । कामसाधनभगवद्रूपगुणविषयं तावत्कर्तव्यमेव । अन्यथा तद्विद्यावैयर्थ्यात् । तत्किमावश्यकं वैकल्पिकं वेति सन्देहः । द्विविधोपासनप्रतीतिः सन्देहबीजम् । आवश्यकमिति पूर्वः पक्षः । मोक्षोपयोगिफलत्वात् । अर्थादिकं हि तत्फलम् । तेन च ज्ञानसिद्धेः । अतः काम्योपासनस्यावश्यकत्वेन वैराग्यस्यानपेक्षितत्वाद्व्यर्थः प्रथमपाद इति । सिद्धान्तयत्सूत्रं पठति ॥ **काम्यास्त्विति** ॥ कामसाधनरूपे कामसाधनगुणाः । स्वस्वकामानुसारेणोपसंहर्तव्या न वेति विकल्प एव न तु नियतिः । विकल्पश्चामुमुक्षुभिः कार्यो मुमुक्षुभिर्नेति । मुमुक्षूणां कामाख्यहेत्वभावात् । मुमुक्षुष्वेव वा विकल्पः । फलार्थं न कार्यमीश्वरप्रसादार्थं कार्यमिति । कुतः । कामाख्यहेत्वभावात्प्रबलहेत्वभावाच्च । न ह्यर्थादिकं विना ज्ञानाभावो नापि तेन नियत्या भवतीति सूत्रार्थः । अत्रैव स्मृतिमाह ॥ **यस्येति** ॥ यस्य यस्य पुंसो यो यो

(तत्त्वप्रकाशिका)

**वित्तादिकामोऽसावसौ तस्य तस्य तत्कामप्रदरूपस्योपासनं प्रकल्पयेत् । तादृशानां तत्तत्कामप्रदानां गुणानां तत्रोपसंहारं च प्रकल्पयेत्कुर्यादमुमुक्षुरित्यर्थः । अत उक्तरीत्या काम्योपासनस्य वैकल्पिकत्वात्सार्थक्यं वैराग्यपादस्येति सिद्धम् ॥**

## भावबोधः

ब्रह्मज्ञानसाधनोपासनस्यैवावश्यकत्वसमर्थनादिति । काम्योपासनस्यावश्यकत्वनिरासे ब्रह्म-ज्ञानसाधनोपासनस्यावश्यकत्वं सिध्यतीति भावः । यदि मोक्षोपयोगिफलसाधनत्वेन नृसिंहाद्युपासनं कार्यं तर्हि तेनैव म्यायेन काम्योपासनमपि कार्यमिति पूर्वाधिकरणसिद्धान्तन्यायेनात्र पूर्वपक्षोत्थाना-दनन्तरसङ्गतिरिति भावः । अत एवोक्तं मोक्षोपयोगिफलत्वादिति ॥ **कामेत्यादि** ॥ अत्र कामसाधनं भगवद्रूपगुणविषयमुपासनं किमावश्यकमुत वैकल्पिकमिति चिन्ता । तदर्थं तस्यावश्य-मोक्षोपयोगिफलत्वमस्त्युत नास्तीति । तत्साध्यार्थादिकं विना मोक्षो न सम्भवत्युत सम्भवतीति । कामसाधनानामपि गुणानामङ्गत्वादेवोपसंहर्तव्यतानियम इति न्यायविवरणानुसारेण पूर्वपक्षमाह– **आवश्यकमिति** ॥ कामसाधना गुणा इति । अनेन कामस्येमे काम्याः सम्बन्धश्च साध्यसाधनरूप इत्युक्तं भवति । यथाकाममित्यस्यार्थः स्वस्वकामानुसारेणेति । ''समुच्चीयेरन्नवा'' इत्यस्यार्थ उपसंहर्तव्या न वेति विकल्प एवेति ॥

'तादृशानां गुणानां चं समाहारं प्रकल्पयेत् ।
अकामत्वान्मुमुक्षूणां न वा तेषामुपासनम् ॥'

इति स्मृत्यनुसारेण विषयव्यवस्थया विकल्पमेव व्यनक्ति– **विकल्पश्चेति** ॥ **कामाख्येति** ॥ अनेन मुमुक्षातः पूर्वो यः कामः तद्रूपहेत्वभावादिति हेतुवाक्यं 'अकामत्वान्मुमुक्षूणां' इति स्मृत्यनुसारेण व्याख्यातं भवति ।

'तुष्ट्यर्थमीश्वरस्यैव न वोपासा विदुष्यति'

इति स्मृत्यनुसारेण प्रकारान्तरेण व्यवस्थाविकल्पं दर्शयति– **मुमुक्षुष्वेवेति** ॥ उभयत्रापि हेतुप्रतिपादकतया हेतुवाक्यमवतार्य व्याचष्टे– **कृत इति** ॥ हेत्वभावेऽपि नृसिंहाद्युपासनस्य फलान्तरार्थं क्रियमाणत्वेन व्यभिचार इत्यत आह– **प्रबलेति** ॥ दुरितादिप्रतिबन्धकलक्षणहेत्व-

(भाववोधः)

भावादित्यर्थः । **अनेन पूर्वस्य** पूर्वाधिकरणोक्तस्य दुरितप्रतिबन्धकलक्षणस्य हेतोरभावादिति हेतुवाक्यं प्रकारान्तरेण व्याख्यातं भवति । मुमुक्षूणां कामाख्यहेत्वभावादित्यादिनैवानुपसंहारो विरोधाभावादिति न्यायविवरणांशोऽपि कामस्य दुरितादिप्रतिबन्धकस्य चाभावेन तत्प्रयुक्तोप-संहाराकरणे विरोधाभावादिति व्याख्यातः ।

नन्वर्थादेः ज्ञानहेतुत्वस्यैव काम्योपासने प्रबलहेतुत्वात् कथं प्रबलहेत्वभाव इत्याशङ्कानिरासाय प्रवृत्तं काम्यानामनियताङ्गत्वाद्वेति न्यायविवरणं व्याचष्टे– **न हीति** ॥ स्मृतौ यस्य यस्य तस्य तस्येति यत्तच्छब्दयोः सम्बन्ध इति प्रतीतिं वारयन् तां यथावद्व्याचष्टे । **यस्य यस्येत्यादिना** ॥ **अमुमुक्षुरिति** ॥ 'न वा तेषामुपासनं' इत्युत्तरवाक्यानुरोधेनामुमुक्षु रित्यध्याहारः ।

## भावदीपः

**ब्रह्मज्ञानसाधनस्यैवेति** ॥ अन्यस्यापि मुक्त्युपयोगितयाऽऽवश्यकत्वशङ्कायां तन्निरासेनेति भावः । एतेन मुक्त्यर्थमात्मयोग्यं हि कार्यमेवेति स्मृत्या पूर्वत्र ज्ञानसाधनमेवावश्यकमन्यत्तु नेत्युक्तस्येह समर्थनाद्वा पूर्वसिद्धान्तन्यायेन पूर्वपक्षोत्थानाद्वा पूर्वसङ्गतिरप्यस्य सूचिता ॥ **प्रथमेति** ॥ वैराग्यपादेत्यर्थः । अत्र न्यायविवरणे काम्यसाधनानामपि गुणानामङ्गत्वादेवोपसंहर्तव्यतानियम इत्युक्तम् । तदयुक्तम् । उपसंहार्यत्वस्यैवासिद्धौ तन्नियमोक्तेरनवसरदुःस्थत्वादित्यतः आध्यानायेति पूर्वोक्तदिशा तत्तद्विद्यावैयर्थ्यानुपपत्त्यैव सिद्धमिति काम्येत्यादेरर्थं वदन्नेवाह ॥ **कामेति** ॥ **तद्विद्येति** ॥ अथातो निर्भुजप्रवादाः अथातो निर्भुजवक्ता इत्यादिनोक्तवराहवामननृसिंहादिविद्या इत्यर्थः । तथा यच्छन्दसामृषभ इत्यादिविद्येत्यर्थः ॥ **द्विविधेति** ॥ बिम्बाबिम्बोपासनयोः पूर्वोक्तदिशाऽवश्यकत्ववैकल्पिकत्वदृष्टेरिति भावः । अङ्गत्वादेवोपसंहर्तव्यतानियम इत्यन्यत्रोक्त-प्रतिज्ञाहेतू विवृण्वन्नाह ॥ **अवश्यकमिति** ॥ मोक्षोपयोगित्वं व्यनक्ति ॥ **अर्थेति** ॥ **तेन च ज्ञानेति** ॥ प्रवचनाद्यनुकूलशिष्यादिसम्पादनद्वारा आमायन्तु ब्रह्मचारिणः स्वाहेत्यादेः कर्मकृतिद्वारा वा विविदिषन्ति यज्ञेनेत्यादेरिति भावः ॥ **अत इति** ॥ मोक्षोपयोगित्वादित्यर्थः । स्मृत्यनुरोधेन सूत्रार्थं व्यनक्ति ॥ **कामेति** ॥ यथाकाममित्यस्यार्थः **स्वस्वते** ॥ समुच्चीयेरन्नेवेत्यस्यार्थः **उपसंहर्तव्या न वेति** ॥ भावमाह ॥ **विकल्प एव न तु नियतिरिति** ॥ न वा तेषामिति स्मृत्यनुरोधेन

(भावदीपः)

सौत्रवाशब्दोऽधिकारिभेदेन व्यवस्थितविकल्पार्थ इत्याह ॥ **विकल्पश्चेति** ॥ **मुमुक्षुभिर्नेति** ॥ कुत इत्यतोऽकामत्वादिति स्मृत्यनुरोधेन सौत्रहेत्वर्थं व्यनक्ति ॥ **कामेति** ॥ तुष्ट्यर्थमिति स्मृतिशेषानुरोधेन यथाकामं भगवदिच्छाविशेषरूपप्रसादमनुरुध्य समुच्चीयेरन् यथाकामं चित्तादिकाममनुसृत्य न वेति सूत्रखण्डस्यार्थान्तरमाह ॥ **मुमुक्षुष्वेवेति** ॥ **कुत इति** ॥ फलार्थं मुमुक्षुभिर्न कार्यमिति कुत इत्यर्थः । अकामत्वादिति स्मृत्यनुरोधेनानुपसंहारे विरोधाभावादिति न्यायविवरणानुरोधेन च सौत्रहेतुं द्वेधा व्याचष्टे ॥ **कामेति** ॥ **प्रवलेति च** ॥ एतेन पूर्वसूत्रोक्तविशिष्टफलत्वरूपहेत्वभावादित्यक्षरार्थ उक्तो ध्येयः । अस्त्वर्थादिकमेव प्रबलहेतुरित्यत आह ॥ **न हीति** ॥ यदृच्छालाभसन्तोषादिमतैकाकिनापि तत्सम्भवादिति भावः । कामानामनियताङ्गत्वाच्चेत्यन्यत्रोक्तमाह ॥ **नापीति** ॥ **अत्रैवेति** ॥ उक्तसूत्रार्थ एवेत्यर्थः । गुणानां चेति चशब्दानुरोधेन तस्य तस्येत्यस्य रूपपरत्वात्प्रकल्पयेदित्यत्र कर्त्राकाङ्क्षापूरणाय यस्य यस्येत्यस्य प्रतिसम्बन्धिशब्दावाह ॥ **असावसाविति** ॥ तत्तत्कामी पुमानित्यर्थः ॥ **अत इति** ॥ आवश्यकत्वे पूर्वहेत्वभावादित्यर्थः ।

## अभिनवचन्द्रिका

**प्रकृतोपासनमेवेति** ॥ उपासनाप्रसङ्गेन बुद्धौ सन्निधापितं उपासनमेव विषय इत्यर्थः । बुद्धिसन्निहितोपासनाविषयं विवृण्वन् तत्र सन्देहं वक्तुं सिद्धांशं तावदाह– **कामसाधनेति** ॥ सूत्रं योजयति– **कामसाधन इति** ॥ कामसाधनभगवद्रूपे पुत्रकामना चेत्, तत्साधनीभूता गुणाः, द्रव्यकामना चेत् तत्साधनीभूता गुणाः, अन्यान्यकामना चेत् तत्तत्कामसाधनीभूता गुणाः, तत्कामिभिरुपसंहर्तव्याः । अन्येन नेति विकल्प एवेत्यर्थः । इममेव विकल्पं व्यनक्ति– **विकल्पश्चेति** ॥ नेति कोटौ हेतुपरतया पूर्वहेत्वभावादिति सूत्रांशं व्याचष्टे– **मुमुक्षूणामिति** ॥ अनेन 'पूर्वहेत्वभावात्' इति सूत्र(स्थं)पदं पूर्वस्य पूर्वकोटेः यो हेतुः धनादिकामना तदभावादिति व्याख्यातं भवति । प्रकारान्तरेण सूत्रं योजयति – **मुमुक्षुष्वेव वेति** ॥ अनेन 'काम्यास्तु यथाकामं समुच्चीयेरन्न वा' इति सूत्रखण्डस्य, काम्या गुणाः, यथाकामं मुमुक्षुरूपस्वकामनाविरोधेन उपासने समुच्चीयेरन्, न वा तद्विरोधेन फलकामनया उपासनायां समुच्चीयेरन्निति योजनोक्ता भवति । काम्या गुणा भगवत्प्रसादकामनया उपास्या इत्येतत्कुत इति पृच्छति- **कुत इति** ॥ **कामाख्य-हेत्वभावादिति** ॥ काम्यगुणोपासनप्रवृत्तौ हि कारणद्वयं फलकामना, प्रसादकामना चेति ।

(अभिनवचन्द्रिका)

मुमुक्षोः फलकामनाभावात् । प्रसादकामनाहेतुरिति सिध्यतीति भावः । ननु न भगवत्प्रसादार्थं काम्यगुणोपासनं कार्यम् । तीव्रया बिम्बोपासनयैव भगवत्प्रसादसिद्धेरित्यत आह ॥ **प्रबलहेत्व-भावाचेति** ॥ यस्य तीव्रबिम्बोपासना वर्तते न कार्यमेव तेन काम्यगुणोपासनम् । यस्य तु नास्ति तेन कार्यमेवेति भावः । अनेन 'अपूर्वहेत्वभावात्' इति पदं विच्छिद्य प्रबलहेत्वभावादिति व्याख्यातमिति बोध्यम् । ननु 'तुष्टोऽर्थेन गुरुर्यस्मात्कैवल्यं दातुमप्यलम्' इति वचनात्, मोक्षहेतुज्ञानसाधनार्थमेव काम्यगुणोपासनं कार्यमित्यत आह– **न ह्यर्थादिकमिति** ॥ 'कामः तस्य तस्य भगवद्रूपस्योपासनं कल्पयेत्तद्गुणानां चोपसंहारं च कल्पयेत्' इत्युक्त्या लब्धमर्थमाह– **कुर्यादमुमुक्षुरिति** ॥

पूर्वपक्षस्तु– कामसाधनभगवद्रूपोपासनं, तदनुगुणगुणोपसंहारेणावश्यकं, तत्साध्यस्य धनादेर्ज्ञानहेतुत्वात् । अतः काम्योपासनस्याऽऽवश्यकत्वात् व्यर्थः प्रथमः पाद इति ।

सिद्धान्तस्तु– कामसाधनरूपे कामसाधनगुणाः स्वस्वकार्यानुसारेणोपसंहर्तव्या न वेति विकल्प एव । न तु नियतिः । विकल्पश्च अमुमुक्षुभिः कार्यं, मुमुक्षुभिर्नेति । मुमुक्षूणां च कामनाविरहात् । अथवा मुमुक्षुष्वेवायं विकल्पः । फलार्थं न कार्यं, ईश्वरप्रसादार्थं कार्यमिति । अतः कामनोपासनस्य वैकल्पिकत्वात् सार्थक्यं वैराग्यपादस्येति सिद्धम् ।

## वाक्यार्थमुक्तावली

**ब्रह्मज्ञानसाधनस्यैवेति** ॥ काम्योपासनस्यावश्यकत्वनिरासे ब्रह्मज्ञानसाधनोपासनस्यावश्यकत्वं सिद्ध्यतीत्यर्थः । यदि मोक्षोपयोगिफलसाधनत्वेन नृसिंहाद्युपासनं कार्यं तर्हि तेनैव न्यायेन काम्योपासनमपि कार्यमिति पूर्वाधिकरणसिद्धान्तन्यायेन पूर्वपक्षोत्थानादनन्तरसङ्गतिः ॥ **प्रकृतोपासनमिति** ॥ सर्ववेदान्तप्रत्ययमिति कामसाधनभगवद्विद्यायाः प्रकृतत्वात्तत्र कर्तव्यतयोक्तं कामसाधनोपासनं विषय इत्यर्थः । तत्कामावश्यकं वैकल्पिकं वेति संदेह इत्यन्वयः । ननु कर्तव्यमकर्तव्यं वेति कुतो न सन्देह इत्यत उक्तम् ॥ **कामसाधनेति** ॥ अत्र कामसाधन-भगवद्रूपगुणविषयमुपासनमावश्यकमुत वैकल्पिकमिति चिन्ता । तदर्थं तत्फलस्य मोक्षोपयोगित्वं नियतमुत नेति । अत्र पूर्वहेत्वभावादिति सूत्रखण्डव्यावर्त्यमङ्गित्वमित्युक्तपूर्वपक्षन्यायं दर्शयति

(वाक्यार्थमुक्तावली)

॥ **अर्थादिकं हीति** ॥ 'वसुपूर्णकरं रत्नं पर्वतस्थं विभावयन् । वसुसिद्धिमवाप्नोति' इत्यादेरिति भावः ॥ **तेन चेति** ॥ 'तुष्टोऽर्थेन गुरुर्यस्मात् कैवल्यं दातुमप्यलं' इत्युक्तेरिति भावः ।

सूत्रे तुशब्दः नृसिंहाद्युपासनाद्विशेषद्योतकः । इतिशब्दोऽध्याहार्यः । विकल्प इत्यनुवर्तते । तेनावधारणार्थस्य तोरन्वय इति भावेन सूत्रार्थमाह ॥ **कामसाधनेति** ॥ अनेन कामस्येदं रूपं काम्यं तस्य काम्यस्येमे गुणाः काम्याः । सम्बन्धश्च साध्यसाधनलक्षण इत्युक्तं भवति । यथाकामं स्वस्ववित्तपुत्रादिकाममनतिक्रम्येत्यर्थः । स्वस्वेति समुच्चीयेरन्नित्यस्यार्थः । उपसंहर्तव्या इति । विकल्पश्च पुरुषभेदेन व्यवस्थित इत्याह ॥ **विकल्पश्चेति** ॥ एतेन विकल्पश्च यथाकामं विषयकामं मोक्षकामं चानतिक्रम्य भवति । विषयलम्पटैकार्थामुमुक्षुभिर्नेति व्यवस्थयेति सूत्रखण्डार्थ उक्तो भवति । मुमुक्षुभिर्नेत्यत्र पूर्वहेत्वभावादिति लिङ्गम् । तस्यार्थो मुमुक्षूणामिति । एतेन मुमुक्षातः पूर्वो यो वित्तादिविषयकामः तदभावान्मुमुक्षूणामित्यर्थ उक्तो भवति । एवं मुमुक्ष्वमुमुक्षुसाधारणचेतनेषु पुरुषभेदेन विकल्पमुक्त्वा मुमुक्षुकोटावेव फलभेदेन विकल्पपरत्वेन व्याचष्टे ॥ **मुमुक्षुष्वेवेति** ॥ एतेन काम्याः गुणाः यथाकाममीश्वरप्रसादमनतिक्रम्य तदर्थं मुमुक्षुभिः समुच्चीयेरन् । तैरेव तदन्यफलकामार्थं वा समुच्चीयेरन्नित्यर्थ उक्तो भवति । पूर्वहेत्वभावादित्यस्यार्थः कामाख्येति । तदुपपादनं पूर्ववत् । अर्थान्तरमाह ॥ **प्रबलेति** ॥ विशिष्टफलवत्वाख्यपूर्वाधिकरणोक्तप्रबलहेत्व-भावादित्यर्थः । प्रबलहेत्वभावमुपपादयन्न विरोध इत्युक्तन्यायं च व्यनक्ति ॥ **न हीति** ॥ मोक्षोपयोगिफलसाधनत्वं हि विशिष्टफलत्वम् । अर्थरूपस्य काम्योपासनफलस्य मोक्षोपयोगफलत्वं च तत्साधनज्ञानहेतुत्वादिति वक्तव्यम् । न चार्थस्य ज्ञानहेतुत्वं व्यतिरेकतोऽन्वयतश्च व्यभिचारात् । तथा चार्थादिहेतूपासनाभावेऽप्यविरोधात् न तस्यावश्यकत्वमिति भावः । स्मृतौ यस्य तस्येति यत्तच्छब्दैरेकविषयत्वं वारयन्नर्थमाह ॥ **यस्य यस्येति** ॥

## तत्त्वसुबोधिनी

**ब्रह्मज्ञानसाधनेति** ॥ काम्योपासनस्यावश्यकत्वनिरासे ब्रह्मज्ञानसाधनोपायस्यैवावश्यकत्वं सिध्यतीति भावः । यदि मोक्षोपयोगिफलसाधनत्वेन नरसिंहाद्युपासनं कार्यं तर्हि तेनैव न्यायेन काम्योपासममपि कार्यमिति पूर्वाधिकरणसिद्धान्तन्यायेनात्रपूर्वपक्षोत्थानादनन्तरसङ्गतिरिति भावः

(तत्त्वसुबोधिनी)

॥ **अन्यथा वैयर्थ्यादिति** ॥ काम्योपासनस्यानावश्यकत्वे काम्यविद्यावैयर्थ्यं स्यादित्यर्थः । **कामसाधनगुणा इति** ॥ अनेन कामस्य साध्याः काम्याः । सम्बन्धश्च साध्यसाधनभाव इत्युक्तं भवति । यथाकाममित्यर्थः ॥ **स्वकामानुसारेणेति** ॥ समुच्चीयेरन्न वा इत्यस्यार्थ उपसंहर्तव्या न वेति विकल्प एवेति । विकल्पमेव व्यनक्ति **विकल्पश्चेति** ॥ तादृशानां गुणानां च समाहारं प्रकल्पयेत् । अकामत्वान्मुमुक्षूणां न वा तेषामुपासनमिति स्मृत्यनुसारादिति भावः । कामाख्येति । अनेन मुमुक्षुतः पूर्वो यः कामस्तद्रूपहेत्वभावादिति हेतुर्व्याख्यातं भवति । प्रकारान्तरेण विकल्पं दर्शयति ॥ **मुमुक्ष्विति** ॥ **तुष्ट्यर्थमीश्वरस्यैव** न चोपासा विदुष्यतीति स्मृत्यनुसारादिति भावः । उभयत्रापि हेतुप्रतिपादकतया हेतुवाक्यमवातार्य व्याचष्टे ॥ **कुत इति** ॥ हेत्वभावेऽपि नरसिंहाद्युपासनस्य फलान्तरार्थं क्रियमाणत्वेन व्यभिचार इत्यत आह ॥ **प्रबलेति** ॥ दुरितादि-प्रतिबन्धकलक्षणप्रबलहेतोरभावादित्यर्थः । अनेन पूर्वस्य पूर्वाधिकरणोक्तस्य दुरितनिबन्धक-लक्षणस्य हेतोरभावादिति हेतुवाक्यं प्रकारान्तरेण व्याख्यातम् । ननु अर्थादेः ज्ञानहेतुत्वस्यैव काम्योपासने प्रबलहेतुत्वात् कथं प्रबलहेत्वभाव इत्यत आह ॥ **न हीति** ॥ स्मृतौ यस्य तस्येति यत्तच्छब्दयोः सम्बन्ध इति प्रतीतिं वारयितुं यथावद्व्याचष्टे । **यस्य यस्येत्यादिना** ॥ **अमुमुक्षु-रिति** ॥ न वा तेषामुपासनमित्युक्तवाक्यानुरोधेनामुमुक्षुरित्यध्याहारः ।

## वाक्यार्थविवरणम्

**कामेत्यादि** ॥ काम्यपरः कामशब्दः काम्यत इति व्युत्पत्त्या । एवं च काम्यं यत् वस्वादि तत्प्राप्तिसाधनभूतो यः श्रीकरादिभगवद्रूपनिष्ठो गुणः शङ्खप्रसूनाख्यनिधिधारकत्ववसुतर्पकत्वादि-रूपस्तद्विषयं तदुपसंहारपूर्वकमुपासनं ध्यानं कर्तव्यमेव । 'आदित्यचन्द्रावपि चक्रशङ्खौ शङ्ख-प्रसूनाख्यनिधी दधानः । चिन्त्यः कराभ्यां वसु तर्पयन् सः स्वाङ्कस्थलक्ष्मीगरुडांससंस्थः ॥' इति विष्णूदिते तन्त्रसारे तथा विहितत्वादित्यर्थः ॥ **तद्विधेति** ॥ कामसाधनभगवद्रूपगुणविषयोपासनस्य कर्तव्यत्वप्रतिपादकविधेत्यर्थः ॥ **वैकल्पिकम्** ॥ अनावश्यकमित्यर्थः ॥ **द्विविधोपासनेति** ॥ बिम्बोपासनमावश्यकम् । तदितरोपासनं वैकल्पिकमिति द्विविधसाधनमित्यर्थः ॥ **फलत्वात्** ॥ मोक्षोपयोग्यार्थादिफलत्वात् । कथं तदुपासनफलस्यार्थादेर्मोक्षोपयोगित्वमित्यत आह ॥ **अर्थादिकं हीति** ॥ **तेन अर्थादिना** ॥ **ज्ञानसिद्धेरिति** ॥ यथोक्तम् । मानुषोऽर्थोऽपि विद्यायाः कारणं

सुनियोजितः । तुष्टोऽर्थे न गुरुर्यस्मात् कैवल्यं दातुमप्यलं' इति । तथा मोक्षोपयोगिज्ञानोपयोग्यर्थफलकत्वेन मोक्षोपयोगिफलकत्वमस्तीति भावः ॥ **प्रथमपाद इति** ॥ एतदध्यायस्य प्रथमपादे वैराग्यपाद इत्यर्थः ॥ **कामाख्येति** ॥ ईश्वरप्रसादेतरफलविषयककामाख्येत्यर्थः । **तेन** अर्थेन । भवति ज्ञानमिति शेषः ।

## वाक्यार्थमञ्जरी

**अनुपपत्तीति** ॥ रागविरागयोर्विरोधादिति भावः ॥ **तेन चेति** ॥ आचार्याय दत्तधनेनेत्यर्थः । ॐ काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ॐ ॥ काम्याः धनादिसाधनेशगुणास्तु यथाकामं वित्तादीच्छानुसारेण समुच्चीयेरन्नुपसंहार्याः मुमुक्षुभिर्न वा कुतः पूर्वहेत्वभावात् मोक्षेच्छातः पूर्वं विद्यमानो यो हेतुः वित्तादिकामाख्यः तेषां तदभावादित्यर्थः । ननु कामाख्यहेत्वभावेऽपि नृसिंहाद्युपासनस्य फलान्तरार्थं क्रियमाणत्वेन व्यभिचार इत्यत आह ॥ **प्रबलेति** ॥ दुरितादिप्रतिबन्धकविलक्षणप्रबलहेत्वभावादित्यर्थः । नन्वर्थादिर्ज्ञानहेतुत्वस्यैव काम्योपासने प्रबलहेतुत्वात्कथं प्रबलहेत्वभाव इत्यत आह ॥ **न हीति** ॥ तथा चान्वयव्यतिरेकव्यभिचारान्न तस्य ज्ञानहेतुत्वमिति भावः । स्मृतौ यस्य यस्य तस्य तस्येति यत्तच्छब्दसम्बन्धप्रतीतिं निवारयन् तां यथावद्व्याचष्टे ॥ **यस्य यस्येत्यादिना** ॥ मुमुक्षूणां न वेत्युत्तरवाक्यानुरोधेनामुमुक्षुभिरित्यध्याहारः ।

**॥ इति काम्याधिकरणम् ॥ ४० ॥**

# ४१.अङ्गाधिकरणम्

## सूत्रभाष्यम्

**॥ ॐ अङ्गेषु यथाऽऽश्रयभावः ॐ ॥ ६३ ॥**

अङ्गदेवतानां यथा यथा परमेश्वराङ्गाश्रयत्वं 'चक्षोः सूर्यो अजायत' (ऋ.सं.१०-९०-१३) इत्यादि तथा भावना कर्तव्या ॥

## तत्त्वप्रदीपिका

अङ्गदेवतानामुभयविधमुपासनं, परिवारत्वेनाङ्गस्थत्वेन चेति । तत्र प्रथमं तावदुत्तरोत्तरं सन्निकर्षाधिक्येनेति न्याय्यं दर्शितं च गुरुभिरेवान्यत्र । अङ्गस्थत्वेनोपासने कुत्र कस्य भावनेत्याकाङ्क्षायामाह– अङ्गेषु यथाऽऽश्रयभावः । यस्य यस्य यथा यथा परमेश्वराङ्गाश्रयत्वमुच्यते 'चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत' इत्यादि तस्य तस्य देवस्य तथा तथा भावना कर्तव्या ।

## तत्त्वप्रकाशिका

अत्र भगवत्साक्षात्कारसाधनाङ्गदेवतोपासनस्य कर्तव्यतासमर्थनादस्ति शास्त्रादिसङ्गतिः । अन्यथा तद्विद्यावैयर्थ्यात्तत्समर्थनीयम् । प्रकृतं ब्रह्मादिदेवतोपासनं विषयः । भगवदङ्गाश्रितत्वेन मुमुक्षुणा कर्तव्यं न वेति सन्देहः । आश्रितत्वेन श्रुत्युक्तेरुभयथा सम्भवः सन्देहबीजम् । न तथोपासनं मुमुक्षुणा कर्तव्यमिति पूर्वः पक्षः । तथा हि किं तत्सर्वैः कर्तव्यं देवैर्वा । नाद्यः । उक्तव्याघातात् । न द्वितीयः । 'ब्रह्मा शिरसि ललाटे रुद्रः' इत्यादि तत्तत्प्रकरणेषु देवानामेव तदित्यनुक्तेः । न चानुक्तावप्यधिकारिविशेषः कल्पयितुं शक्यते । कल्पकाभावात् । अन्यथा चोदनाद्यविशेषादित्युक्तव्याघातात् । अतो निरधिकारित्वादङ्गाश्रितत्वेन देवतोपासनं न कार्यमिति तद्विद्यावैयर्थ्यमिति । सिद्धान्तयत्सूत्रं पठित्वा व्याचष्टे ॥ अङ्गेष्विति ॥ सूर्यादिदेवानां 'चक्षोः सूर्यो अजायत' इत्यादिना यथा भगवदङ्गाश्रयत्वमुक्तं तथोपासनं कार्यमेव । अन्यथा तदुक्तिवैयर्थ्यप्रसङ्गादिति भावः । यत्र जन्म तत्रैव स्थितिरित्यदोषः । 'तदाश्रिताश्च ते सर्वे' । इति वचनात् ।

## गुर्वर्थदीपिका

अङ्गदेवतोपासनस्येत्यत्र चक्षुरादिभगवदङ्गस्थितदेवतोपासनस्येत्यर्थः । 'समाहारात्' इति सूत्रे सूर्याश्रयचक्षुष्ट्वादीनां समाहारस्यैव कर्तव्यत्वमुक्तम् । श्रुतौ च 'तांश्चापि तत्रैव विचिन्त्य देवान् स्थानं मुमुक्षुः परमं व्रजेत' इति सामान्यत एव फलमुक्तम् । अतः सर्वैरपि कर्तव्यत्वशङ्का । तत्परिहारायोत्तराधिकरणम् । श्रुत्यनुसारी सूत्रकारोऽपि नाश्रुतमसूत्रयत् । एवं च पूर्वाधिकरणोक्त-सूर्यादिदेवाश्रयचक्षुष्ट्वादिभगवद्गुणोपसंहरणं 'परमं स्थानं व्रजेत' इत्युक्तेर्ब्रह्मण एव । सूर्यादीनां तु सूर्याश्रयचक्षुष्मान् दिग्देवताश्रयश्रोत्रवानित्येवोपासनम् । अन्यथा मोक्षे फलसाङ्कर्यप्रसङ्गात् । ब्रह्मणस्तु तत्तदङ्गाश्रितदेवान्तस्थत्वेन तत्र स्थानप्राप्तिरप्यस्तीति सूचनाय परमं स्थानमिति सामान्येनोक्तम् । कासुचिद्भाष्यसम्पुटिकासु समाहारादित्येव पाठोऽस्ति । अतः सूत्रभाष्ययोः समाहारपदं श्रुतिसूचकमित्युक्तम् ।

## भावबोधः

**अङ्गदेवतोपासनस्येति** ॥ यद्यपीदं 'अङ्गावबद्धा' इत्यनन्तरमेव कर्तव्यं तथापि तत्र सर्वाधिकारिसाधारणस्य भगवदुपसर्जनतयान्यदेवतोपासनसहितस्य भगवदुपासनस्य कर्तव्यत्व-समर्थनम् । अत्र पुनर्ब्रह्माद्यङ्गदेवतानां तत्तदुत्पादकभगवदङ्गाश्रितत्वेन प्रकारेणोपासनस्य देवैरेव कर्तव्यत्वसमर्थनमिति वैलक्षण्यज्ञापनार्थं भूमाद्यधिकरणचतुष्टयस्योक्तरीत्या पूर्वपूर्वसङ्गतत्वप्राप्ते-स्तदधिकरणचतुष्टयेन व्यवधानं कृतमिति ज्ञेयम् । **भगवदङ्गाश्रितत्वेनेति** ॥ अत्र ब्रह्माद्यङ्ग-देवतोपासनं भगवदङ्गाश्रितत्वेन न कर्तव्यमुत कर्तव्यमिति चिन्ता । तदर्थं तदुपासनस्य कर्तव्यत्वा-वेदकं विध्यादिप्रमाणं व्यर्थमुत सार्थकमिति । तदर्थं तदुपासनं निरधिकारिकमुत साधिकारिक-मिति । तदर्थमधिकारिविशेषकल्पकं नास्त्युत अस्तीति ॥ **देवानामिति** ॥ तत्रैव विशेषवचना-भावात् । 'ब्रह्मा शिरसि ललाटे रुद्रः' इत्यादीनां नावश्योपास्यता देवतादीनामेवेति न्यायविवरणानुसारेण पूर्वपक्षमुपपादयति– **तथा हीति** ॥ **उक्तव्याघातादिति** ॥ 'आनन्दादयः प्रधानस्य' इत्युक्तव्याघातादित्यर्थः । इदं च देवादीनामेवेत्यनेन सूचितमिति ज्ञातव्यम् । 'समाहारात्' इति सूत्रविवर्तनीयमाह– **न चानुक्तावपीति** ॥

(भावबोधः)

ननु 'चक्षोः सूर्योऽजायत' इत्यादिश्रुतौ सूर्यादीनां भगवच्चक्षुरादिजन्यत्वमेवोच्यते न तु चक्षुराद्याश्रयत्वम् । तत्कथं 'चक्षोः सूर्योऽजायत' इत्यादिपरमेश्वराङ्गाश्रयत्वमुक्तमित्यत आह– यत्रेति ॥

## भावदीपः

**कर्तव्यत्वेति** ॥ निरधिकारिकत्वनिमित्तकर्तव्यत्वशङ्कानिरासेनेति भावः । द्विविधं ह्यङ्गदेवतोपासनम् । विष्णोः परिवारत्वेनाङ्गाश्रितत्वेन चेति । तत्राद्यं सर्वाधिकारिकमङ्गावबद्धा इत्यत्रोक्तम् । द्वितीयं तु पूर्वत्र काम्योपासनं मुमुक्षुणा न कार्यमित्युक्तौ तर्हि तत्प्रसङ्गादङ्गाश्रितत्वेनाङ्गदेवतोपासनमपि मुमुक्षुणा न कार्यमिति शङ्कनाद्वा यथाकामं समुच्चीयेरन्नित्युक्तन्यायेन प्राप्यफलानुरोधेनाधिकारिकल्पनोपपत्त्योपासनकर्तव्यत्वसम्भवाद्वाऽत्र समर्थ्यत इति भावः ॥ **अन्यथेति** ॥ अङ्गाश्रितत्वेनाङ्गदेवानामुपासनाऽसमर्थने चक्षोः सूर्यो अजायतेत्यादिविद्यावैयर्थ्यादित्यर्थः । आध्यानायेति न्यायादिति भावः ॥ **प्रकृतमिति** ॥ अङ्गावबद्धा इत्यत्र प्रकृतमित्यर्थः ॥ **श्रुत्युक्तेरिति** ॥ 'चक्षोः सूर्यो अजायत' इत्याद्युक्तेरित्यर्थः । यतो जन्म तत्रैव स्थितिरिति जन्मश्रुतेरेवाश्रितत्वश्रुतित्वात् ।

यद्वा ब्रह्मा शिरसि, ललाटे रुद्र, इत्यादि श्रुत्युक्तेत्यर्थः । काम्याकाम्यगुणोक्तेरिति भावः । 'ब्रह्मा शिरसि ललाटे रुद्रः' इत्यादीनां नावश्योपास्यता । देवादीनामेवेत्यन्यत्रोक्तप्रतिज्ञार्थमाह ॥ **न तथेति** ॥ देवादीनामेवेत्येतत्सर्वेषां वा देवानामेव वेत्यर्थकमुपेत्य विकल्पयति ॥ **किमिति** ॥ स्वयं हेतुमाह ॥ **उक्तेति** ॥ 'आनन्दादयः प्रधानस्य' इत्युक्तव्याघातादित्यर्थः ॥ **देवानामिति** ॥ तत्रैव विशेषाभावादित्यन्यत्रोक्तमेव हेतुं तत्रैवेत्यस्यार्थं वदन्नेवाह ॥ **ब्रह्मेति** ॥ हेतोरप्रयोजकत्वं निराह ॥ **न चेति** ॥ समाहारसूत्रव्यावर्त्यहेतुमाह ॥ **कल्पकेति** ॥ अस्याप्यप्रयोजकत्वं निराह ॥ **अन्यथेति** ॥ सर्ववेदान्तनये उपासनाविधिसमीपे काण्वाद्यधिकारिविशेषाश्रवणेन विशेषाधिकारिकत्वनिराकरणं यत्कृतं तद्व्याहन्येतेत्यर्थः ॥ **अत इति** ॥ सर्वाधिकारिकत्वे प्रागुक्तव्याघाताद्देवाधिकारिकत्वे कल्पकाभावादित्यर्थः । अङ्गेत्यादिभाष्यं व्याचष्टे ॥ **सूर्येति** ॥ अङ्गावबद्धा इत्यतोऽङ्गानामिति मण्डूकप्लुत्याऽनुवर्तत इति भावः । भाष्ये इत्यादीत्यविभक्तिक-

(भावदीपः)

मित्युपेत्योक्तम् ॥ **इत्यादिनेति** ॥ काम्यपदेन प्रकृतो भगवानिह सूत्रेऽङ्गेष्वित्यत्रान्वेतीति भावेनोक्तम् ॥ **भगवदङ्गेति** ॥ ननु चक्षोः सूर्य इति श्रुतौ देवानामङ्गाज्जन्मैवोच्यते न तु तदाश्रितत्वमित्यतोऽर्थात्तत्प्राप्तमित्याह ॥ **यत्र जन्मेति** ॥ यत्र जन्म तत्रैव स्थितिरित्युक्तार्थे आदित्यादिमतय इत्यत्र चतुर्थाद्यपादे भाष्योक्तस्मृतिमाह ॥ **तदाश्रिताश्चेति** ॥ 'स्वोत्पत्त्यङ्गं च देवानां विष्णोश्चिन्त्य सदैव तु । तेषां तत्र प्रवेशो हि मुक्तिरित्युच्यते बुधैः' इति पूर्वशेषः ।

## अभिनवचन्द्रिका

**उक्तव्याघातादिति** ॥ 'आनन्दादयः प्रधानस्य'र इत्युक्तव्याघातादित्यर्थः ॥ **निरधिकारिकत्वादिति** ॥ सामान्येन सर्वाधिकारित्वे उक्तव्याघातलक्षणबाधकसद्भावात् देवगन्धर्वमनुष्यादिविशेषाणां च प्रमाणाभावेन अनधिकारित्वात्सामान्याभावस्य यावद्विशेषाभावनियतत्वात्कर्तृसामान्याभाव इति भावः । ननु भगवदङ्गाश्रयत्वे 'चक्षोः सूर्यो अजायत' इति प्रमाणोदाहरणमयुक्तम् । तस्य तदप्रत्यायकत्वादित्यत आह **यत्र जन्मेति** ॥ साक्षात्तदप्रत्यायकत्वेऽपि तल्लिङ्गोपस्थापनद्वारा तत्प्रत्यायकत्वमस्त्येवेति तदुदाहरणं युक्तमिति भावः ।

## वाक्यार्थमुक्तावली

**प्रकृतमिति** ॥ ब्रह्मादिदेवानामङ्गावबद्धा इत्यत्र परिवारत्वेनोपासनस्येष्टत्वाद्ब्रह्माद्युपासनं प्रकृतमिति भावः । यद्यपीदमङ्गावबद्धा इत्यनन्तरमेव कर्तव्यं तथापि विकल्पो विशिष्टफलत्वादित्यत्र फलापेक्षायाः सत्वान्नृसिंहाद्युपासनं मुमुक्षुभिः कार्यम् । काम्यास्त्वित्यत्र तु तदाभावात् काम्योपासनं न कार्यमित्युक्तं तन्न्यायेनात्रापि । समाहारसूत्रे स्थानं 'मुमुक्षुः परमं व्रजेत' 'ध्यायेदङ्गेष्वङ्गदेवताः,' 'परस्य विशिष्टा हि गुणा मुक्तौ देवानां भवन्तीति फलविशेषेणैव मुमुक्षुष्वपि देवानामधिकारः । न वेति सूत्रे तदभावान्न वान्येषामिति व्यवस्थितविकल्पाभिधानदनन्तरसङ्गतिः ॥ **भगवदङ्गेति** ॥ अत्र देवादीनां भगवदङ्गाश्रितत्वेनोपासनं मुमुक्षुणा न कर्तव्यमुत कर्तव्यमिति चिन्ता । तदर्थमुपासकानां मुमुक्षूणां देवतदन्यतरत्वात् तयोरन्यतरस्याधिकारकल्पकं नास्त्युतास्तीति ॥ **उक्तव्याघातादिति** ॥ 'आनन्दादयः प्रधानस्य' इत्युक्तचतुर्गुणनियतिव्याघातादित्यर्थः । यद्वा अङ्गावबद्धाधिकरणे पुरुषाणां विशेषाद्वेत्यनेनोक्तस्योत्तमाधिकारिभिरेव

(वाक्यार्थमुक्तावली)

विशेषोपसंहारः कार्य इत्यस्य व्याघातादित्यर्थः । समाहारसूत्रनिरस्यमविशेषदृष्टिरित्युक्तन्यायं दर्शयन् द्वितीयं प्रतिक्षिपति ॥ **न द्वितीय इत्यादिना** ॥ **अन्यथेति** ॥ कल्पकाभावेऽप्यधिकारिविशेष कल्पनेऽध्ययनविध्यादावप्यधिकारिविशेषकल्पनसम्भवाच्चोदनाद्यविशेषादित्युक्तव्याघातादित्यर्थः ।

सूत्रेऽङ्गेष्वित्यावर्तते । आद्यं षष्ठ्यन्तं विपरिणम्यते । यथेति वीप्सायां द्विरावर्तनीयम् । अनतिक्रमे च यथाशब्द उक्त इति शेषः । आश्रयस्य भावः आश्रयभावः । **आश्रितत्वमिति** यावत् । आश्रियन्त इत्याश्रिताः । तथा चाश्रितत्वेन भावना चाश्रयभावः । तथा च सूर्याद्यङ्गदेवानामङ्गेषु भगवदङ्गेषु यथा यथाश्रयभाव आश्रितत्वमुक्तं तथा तेनैव प्रकारेणोक्तिमनतिक्रम्याङ्गेष्वाश्रयभावः अङ्गाश्रितत्वेन भावो भावना कार्येति भावेन भाष्यं व्याचष्टे ॥ **सूर्यादीति** ॥ यद्वा भगवदङ्गेषु यथा यथा आश्रयत्वमङ्गदेवताश्रयत्वमुक्तं तथा तथोपासनं कार्यमिति सूत्रार्थं मनसि निधाय व्याचष्टे ॥ **सूर्यादीति** ॥ ननु चक्षुराद्यङ्गाश्रितत्वे कथं जन्माभिधायकश्रुतिः प्रमाणमित्यत आह ॥ **यत्र जन्मेति** ॥

## तत्त्वसुबोधिनी

**अङ्गदेवतोपासनस्येति** ॥ यद्यपि इदं अङ्गावबद्धा इत्यनन्तरमेव कर्तव्यं तथापि तत्र सर्वाधिकारिसाधारणस्य भगवदुपसर्जनतयाऽन्यदेवतोपासनासहितस्य भगवदुपासनस्य कर्तव्यतासमर्थनम् । इह तु ब्रह्माद्यङ्गदेवतानां तत्तदुपपादकभगवदङ्गाश्रितत्वेन प्रकारान्तरेणोपासनस्य देवैः कर्तव्यत्वसमर्थनमिति वैलक्षण्यज्ञापनार्थम् । भूमाद्यधिकरणचतुष्टयस्योक्तरीत्या पूर्वपूर्वसंमतत्वेन प्राप्तेः तद्विचार्य अवसरप्राप्तमिदानीं विचार्यत इति अनन्तरसङ्गतिरिति भावः ॥ **उक्तव्याघातादिति** ॥ आनन्दादयः प्रधानस्येत्युक्तव्याघातादित्यर्थः ॥ **अन्यथेति** ॥ कल्पकाभावेऽपि कल्पन इत्यर्थः ॥ **चोदनादिति** ॥ तत्र चोदनारूपकल्पकविशेषाभावे कल्पना कर्तव्येत्युक्तत्वेन व्याघातः स्यादित्यर्थः । ननु 'चक्षोः सूर्यो अजायत' इत्यादिश्रुतौ सूर्यादीनां भगवच्चक्षुरादिजन्यत्वमेवोच्यते । न तु तदाश्रितत्वम् । तत्कथं चक्षोः सूर्योऽजायत इत्यादिपरमेश्वराङ्गाश्रयत्वमुक्तमित्युच्यत इत्यत आह ॥ **यत्रेति** ॥ ननु नियमग्राहकप्रमाणाभावान्न नियमसिद्धिरित्यत आह ॥ **तदाश्रिताश्चेति** ॥

## वाक्यार्थविवरणम्

**उभयथेति** ॥ तथोपासनाकर्तव्यत्वाभिप्रायकत्वेन तदभावाभिप्रायकत्वेन चेत्यर्थः ॥ **उक्तव्याघातादिति** ॥ 'आनन्दादयः प्रधानस्य' इत्यनेनानन्दादीनामेवोपास्यत्वोक्ति व्याघातादित्यर्थः ॥ **तत्प्रकरणेषु** ॥ अङ्गदेवतोपासनाप्रतिपादकप्रकरणेष्वित्यर्थः । ननु यथा विश्वजिता यजेत इत्यत्राप्यनुक्तोऽप्यधिकारी स्वर्गकामः कल्प्यते तद्वदत्रापि किं न स्यादित्याशङ्क्य तत्र विश्वजिद्यागस्य ज्योतिष्टोमाङ्गत्वावगमात् प्रधानफलफलकत्वप्रधानाधिकार्यधिकारिमत्त्वादेरेव तदङ्गशब्दार्थत्वात् श्रुताङ्गाङ्गिभावान्यथानुपपत्त्यैव विश्वजिति अश्रुतोऽपि प्रधानाधिकार्येव अधिकारितया कल्प्यते । एवं च तत्राङ्गत्वादिरूपकल्पकवदत्र तदभावान्नाधिकारिविशेषः कल्पयितुं शक्यत इत्यत आह ॥ **न चानुक्तावपीति** ॥ **अन्यथा** ॥ कल्पकाभावेऽपि अधिकारिविशेषकल्पने ॥ **चोदनादीति** ॥ सर्वशाखोक्तं सर्वैर्ज्ञातव्यमित्यत्र हेतुतया चोदनाद्यविशेष उक्तः । 'आत्मेत्येवेति उपासीत' इति विधीनां 'अत्र ह्येते' इत्यादितदुक्तयुक्तीनां च सर्वाधिकारिसाधारणान्विनाधिकारिविशेषकल्पनायोगादित्युक्तम् । तदेवं सति व्याहन्येत । अश्रुतस्याधिकारिविशेषस्य तत्रापि कल्पयितुं शक्यत्वेन सर्वेषां सर्वशाखापरिज्ञानं न स्यादित्यर्थः ॥ **अङ्गाश्रितत्वमुक्तमिति** ॥ तथा चाङ्गेषु भगवदङ्गेषु देवानां यथा आश्रयभावः आश्रयत्वं परमेश्वराङ्गं आश्रयो येषां ते तथा । तेषां भावस्तत्त्वम् । अङ्गाश्रितत्वमिति यावत् । यथा चक्षुरादिभगवदङ्गाश्रितत्वमस्ति तथा भावना उपासना कर्तव्येति शेष इति सूत्रार्थः । ननु 'चक्षोः सूर्योऽजायत' इति श्रुतौ सूर्यादीनां चक्षुरादिजन्यत्वमेवोच्यते । न तु तेषां तदाश्रितत्वमित्यत आह ॥ **यत्रेति** ॥ यस्मादङ्गादित्यर्थः ॥ **तदाश्रिताश्चेति** ॥ 'स्वोत्पत्यङ्गं च देवानां विष्णोश्चिन्त्यं सदैव तु' इति पूर्ववाक्यमप्यत्र ग्राह्यम् ।

## वाक्यार्थमञ्जरी

तद्विद्या चक्षोः सूर्योऽजायत इत्यादिका ॥ **उक्तव्याघातादिति** ॥ आनन्दादयः प्रधानस्य इति सर्वैश्चतुर्गुणमात्रस्योपास्यत्वोक्त्या तद्विरोधादित्यर्थः ॥ **चोदनाद्यविशेषादिति** ॥ तत्र 'स्वाध्यायोऽध्येतव्यः' इत्यत्राधिकारिविशेषकल्पकाभावेनैव विशेषाधिकारिकत्वाभावस्योक्तत्वादिति भावः ।

(वाक्यार्थमञ्जरी)

ॐ अङ्गेषु यथाऽऽश्रयभावः ॐ ॥ अङ्गेषु भगवदवयवेषु सूर्यादीनामाश्रयभावः आश्रयत्वं यथोक्तं तथोपासनं कार्यमित्यर्थः । ननु 'चक्षोः सूर्यो अजायत' इति श्रुतौ सूर्यादीनां भगवच्चक्षुरादिजन्यत्वमेवोच्यते न तु चक्षुराद्याश्रयत्वं, अतः कथं 'चक्षोः सूर्यो अजायत' इत्यादिना परमेश्वराङ्गाश्रयत्वमुक्तमित्यत आह ॥ यत्रेति ॥

## सूत्रभाष्यम्

**॥ ॐ शिष्टेश्च ॐ ॥ ६४ ॥**

**'यस्मिन्यस्मिन्यो हि चाङ्गे निविष्टः परस्य चिन्त्यः स तथा तथैव' इति पौत्रायणश्रुतेः ।**

## तत्त्वप्रदीपिका

**यथा ज्ञानानन्दादीनां गुणानां सर्वेषामुपसंहारोऽनुशिष्टः, नात्र तथाऽङ्गदेवानामित्यत आह– शिष्टेश्च ॥**

## तत्त्वप्रकाशिका

**न केवलमङ्गाश्रितत्वेनोक्त्यन्यथानुपपत्त्या तथोपासनस्य कर्तव्यता किं तु श्रुतौ तथा विधानाच्चेत्यर्थप्रतिपादकं सूत्रं पठित्वा तां श्रुतिमुदाहरति ॥ शिष्टेश्चेति ॥ शिष्टिः शिक्षाविधिरिति यावत् ।**

## भावदीपः

सौत्रचशब्दार्थं वदन्नेवावतारयति ॥ **न केवलमिति** ॥ भाष्ये श्रुतेरिति पञ्चम्याः तथा भावना कर्तव्येत्यन्वयमुपेत्योक्तम् । तथोपासनस्य कर्तव्यता । किन्तु श्रुतौ तथा विधानाच्चेति । श्रुतेश्चेति चशब्दाध्याहार इति भावः ।

## वाक्यार्थमुक्तावली

अङ्गदेवानामङ्गेष्वाश्रितत्वेन भावः कर्तव्य इत्यनुवर्तते ।

## वाक्यार्थविवरणम्

**तथेति** ॥ अङ्गाश्रितत्वेनोपासनेत्यर्थः ।

## वाक्यार्थमञ्जरी

यस्मिन्निति श्रुतावङ्गदेवतोपासनाकर्तव्यस्य शिष्टेः विधानाच्च तत्कार्यमित्यर्थः ॥

## सूत्रभाष्यम्

**।। ॐ समाहारात् ॐ ।। ६५ ।।**

'अङ्गैः पराये हि देवा विसृष्टास्तत्तद्गुणान्परमे संहरेत ।
तांश्चापि तत्रैव विचिन्त्य देवान्स्थानं मुमुक्षुः परमं व्रजेत'

इति काषायणश्रुतौ समाहारवचनाच्च ।

## तत्त्वप्रदीपिका

न केवलमङ्गेषु तत्तद्देवताभावनया पूर्यते । तत्तदङ्गदेवगुणसमाहारश्च तत्तदङ्गेपु कर्तव्यः । यथा चक्षुर्मनआदिपु सूर्यसोमादिगुणमहाप्रकाशाह्लादकरत्वादय इति ।।

## तत्त्वप्रकाशिका

नाङ्गाश्रितत्वेन देवतोपासनं युक्तं निरधिकारित्वात् । तद्विधानादेर्वैयर्थ्यस्यैवौचित्यादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ।। **समाहारादिति** ।। युक्तमेवाङ्गाश्रितत्वेन देवतोपासनं तत्र देवानामधिकारित्वात् । न च तदनुक्तिदोषः । तथोपासनस्य हि परमस्थानप्राप्तिः फलं श्रूयते । तच्च देवतानामेव योग्यमिति फलपर्यालोचनया मधुविद्यायामिव देवानामधिकारित्वकल्पनोपपत्तेरिति भावः । तथा च श्रुतिः । 'ध्यायेदङ्गेष्वङ्गदेवताः परस्य विशिष्टा हि गुणा मुक्तौ देवानां भवन्ति' इति । अत्र सूत्रभाष्ययोः समाहारपदं श्रुतिसूचकमूष्मेतिवत् ।

## गुर्वर्थदीपिका

ऊष्मेतिवत् इत्यस्य यथोष्मेति पदग्रहणम् । ऊष्मेतिपदोपेतस्योपलक्षकं तद्वदित्यर्थः । एतच्चतुर्थाध्याये वक्ष्यते ।

## भावबोधः

**मधुविद्यायामिवेति** ।। 'असौ वा आदित्यो' इत्यादिमधुविद्यायां 'वसूनामेवैको भूत्वा' 'रुद्राणामेको भूत्वा' इत्याद्युक्तफलपर्यालोचनया वस्वादिपदयोग्यानां तदर्थिनामेवाधिकारकल्पनादित्यर्थः । अत्र न्यायविवरणोदाहृतां श्रुतिमाह– **तथा चेति** ।।

(भावबोधः)

नन्वत्र फलविशेषस्यैवाधिकारिविशेषकल्पकत्वेन विवक्षितत्वात् फलश्रुतेरित्येव सूत्रभाष्ययोर्वक्तव्यं, तत्कथं 'समाहारात्' समाहारवचनाच्चेत्युक्तमित्यत आह– **अत्रेति** ॥ अस्यैव च 'उपपत्तेरुष्मा' इति सूत्रे यथोष्मेत्यस्या 'उष्मावच्चानुष्मावच्च' इति श्रुतिसूचकत्वं तथेत्यर्थः ।

## भावदीपः

शङ्कते ॥ **नाङ्गेति** ॥ विध्यादिबलादेवाधिकारिलाभ इत्यत आह ॥ **तद्विधानादेरिति** ॥ आदिपदेनाङ्गाश्रितत्वोक्तिग्रहः । भाष्ये समाहाराच्चेत्यत्र तथा भावना कर्तव्येत्यन्वयं दर्शयन् तांश्चापीत्यादिभाष्यभावमाह ॥ **युक्तमेवेति** ॥ तच्च देवतानामेव योग्यमिति । 'तेषां तत्र प्रवेशो हि मुक्तिरित्युच्यत इति' स्मृतेरिति भावः । मध्वित्यादिछान्दोग्ये तृतीये असौ वा आदित्यो देवमध्वित्युक्तमधुविद्यायां प्रथमामृताद्युपासनस्य वस्वादिपदप्राप्तिफलकत्वोक्त्या वस्वादय एवाधिकारिणः कल्प्यन्ते तथेत्यर्थः । फलविशेषेण देवरूपाधिकारिविशेषकल्पनमित्यत्र स्पष्टां न्यायविवरणस्थां श्रुतिमाह ॥ **तथा चेति** ॥ भाष्येऽङ्गैरित्यादिपूर्वार्धार्थस्तु न केवलमङ्गेषु तत्तद्देवताभावनया पूर्यते तत्तदङ्गदेवगुणसमाहारश्च तत्तदङ्गेषु कार्यः । यथा चक्षुर्मनआदिषु सूर्यसोमादिगुणा महाप्रकाशत्वाह्लादकत्वादय इति तत्वप्रदीपे व्यक्त इति नोक्तः । नन्वत्र सूर्यादौ समाहारादित्युक्त्याङ्गदेवतागुणोपसंहारतात्पर्यमेवावगम्यते । न तूक्तरूपं तात्पर्यम् । तथा च सूत्रं तथैवावतार्य व्याख्येयं न तु निरधिकारिकत्वशङ्काव्यावर्तकतयेत्यतः सूत्रादौ समाहारपदं गुणोपसंहारमात्रपरं न भवति । तथात्वे उत्तरार्धवैयर्थ्यात् किन्तु समाहारार्थकश्रुतिपरम् । एवं च तत्रोक्तगुणोपसंहारे पूर्वोक्तरीत्या अधिकारिविशेषे चोभयत्र सूत्रकारादेः तात्पर्यमिति भावेनाह ॥ **अत्र सूत्रभाष्ययोरिति** ॥ यथा चतुर्थस्य द्वितीयपादेऽस्यैव चोपपत्तेरूष्मेतिसूत्रे ऊष्मेतिशब्द ऊष्मावच्चानूष्मावच्चेति श्रुतिसूचकस्तथेत्यर्थः ।

## अभिनवचन्द्रिका

ननु अङ्गदेवाश्रयत्वे गुणोपसंहारस्यैव साध्यत्वात् समाहारादिति तस्यैव हेतूकरणमयुक्तमित्यत आह– **अत्रेति** ॥ 'अत्र सूत्रे समाहारपदं श्रुतिसूचकमूष्मेतिवत्' इत्येव टीकावाक्यपाठः, न तु 'सूत्रभाष्ययोः इति । भाष्ये 'काषायणश्रुतौ समाहारवचनात्' इति समाहारप्रतिपादकश्रुतेः कण्ठत

(अभिनवचन्द्रिका)

उक्तत्वेन तत्सूचकत्वाभावात् । एतेन सूत्रे 'समाहारात्' इति समाहारस्यैव हेतुत्वेनोक्तत्वात्समाहारवचनादिति भाष्यकारीयं व्याख्यानमयुक्तमिति परास्तम् । भाष्ये अङ्गैरित्यादिपूर्वार्धार्थस्तु 'न केवलमङ्गेषु तत्तद्देवताभावनया पूर्यते किन्तु तत्तदङ्गदेवतागुणोपसंहारश्च तत्तदङ्गेषु कार्यः । यथा चक्षुर्मन आदिषु सूर्यसोमादिगुणा महाप्रकाशकत्वाऽऽह्लादकत्वादयः' इति तत्वप्रदीपे व्यक्तः ॥ **ऊष्मेतिवदिति** ॥

## वाक्यार्थमुक्तावली

**इत्यादिशङ्कां परिहरदिति** ॥ वैशेष्यमित्युक्तन्यायप्रदर्शनेनेति पूरणीम् । परमस्थानप्राप्तिरिति । स्वोत्पत्त्यङ्गसायुज्यप्राप्तिरित्यर्थः ॥ **मधुविद्यादाविवेति** ॥ तत्र वसूनामेवैको भूत्वा रुद्राणामेवैको भूत्वा इत्याद्युक्तवस्वादिफलप्राप्तिपर्यालोचनया वस्वादिपदयोग्यानामेवाधिकारित्वकल्पनादित्यर्थः । ननु सूत्रे भाष्ये च परमस्थानप्राप्तिफलश्रुतेरिति वक्तव्यं तत्कथं समाहारवचनाच्चेत्युक्तमित्यत आह ॥ **अत्रेति** ॥ 'अस्यैव चोपपत्तेरूष्मा' इति सूत्रे यथोष्मेत्यस्योष्मावत्त्वानूष्मावच्चेति श्रुतिसूचकत्वं तथेत्यर्थः । तथा च समाहारादित्यस्याङ्गदेवतागुणवत्वेन भगवदङ्गानां तदाश्रितत्वेन देवानामुपासकस्य परमस्थानप्राप्तिलक्षणफलप्रतिपादकसंहरेत् इति समाहारशब्दघटितश्रुतेर्विद्यमानत्वेनाङ्गदेवैरङ्गाश्रितत्वेन भावना कर्तव्येति सूत्रार्थः ।

## तत्त्वसुबोधिनी

मधुविद्यायामिवेति असौ वा आदित्यो देवमधु इत्यादिमधुविद्यायां वसूनामेवैको भूत्वा इत्याद्युक्तपर्यालोचनया वस्वादिपदयोग्यानां तदर्थिनामेवाधिकारकल्पनादित्यर्थः । नन्वत्र फलविशेषस्यैवाधिकारिविशेषकल्पकत्वेन विवक्षितत्वम् । फलश्रुतेरित्येव सूत्रतात्पर्यं वक्तव्यम् । तत्कथं समाहारात् समाहारवचनाच्चेत्युक्तमित्यत आह ॥ **अत्रेति** ॥ अस्यैव चोपपत्तेरुष्मेति सूत्रे यथा ऊष्मत्वस्योष्मावच्चेति श्रुतिसूचकत्वं तथेत्यर्थः ।

## वाक्यार्थविवरणम्

ननु यस्मिन् यस्मिन्निति विधानान्यथानुपपत्त्यैवाधिकारी कल्प्यतामित्यत आह ॥ **तद्विधानेति** ॥ **वैय्यर्थ्यस्यैवेति** ॥ निरधिकारित्वमेवाङ्गीकृत्येति शेषः । परमस्थानप्राप्तिरिति भगवत्सायुज्य-

(वाक्यार्थविवरणम्)

मित्यर्थः । भाष्ये ॥ परात् ॥ भगवतः सकाशात् । तदीयचक्षुराद्यङ्गैः ये हि देवाः सूर्याद्याः विसृष्टाः । 'तत्तद्गुणान्' सूर्यादिजनकचक्षुष्ट्वादिरूपान् गुणान् । परमे । 'संहरेत' उपसंहारं कुर्यात् ॥ तांश्चापि ॥ देवान् सूर्यादीन् ॥ तत्र ॥ तदङ्गेषु 'विचिन्त्य' चक्षुराद्यङ्गाश्रितत्वेन विचिन्त्य । मुमुक्षुः परमं स्थानं व्रजेत इति श्रुत्यर्थः । नन्वत्र परमस्थानरूपफलान्यथानुपपत्त्या देवानामधिकारित्वेन कल्पने श्रुतौ मुमुक्षुरित्ययुक्तम् । तेषामेकान्तभक्तत्वेन तेषां च 'सर्वमन्यत्तदर्थकम्' इत्युक्तत्वेन मोक्षेच्छुत्वाभावात् । अतो देवेतर एवाधिकारित्वेन कल्पनीया इति चेन्न । मुमुक्षरित्यस्य भगवत्प्रीत्यतिरिक्तकामनाशून्य इत्येवार्थं कल्पयित्वा देवा एवाधिकारितया कल्पनीया नान्ये । अत एव टीकाकारैस्तथा च श्रुतिरिति देवानामेवात्र अधिकारप्रतिपादिका स्पष्टा श्रुतिरुदाहृतेति ज्ञेयम् ॥ समाहारपदं श्रुतिसूचकमिति ॥ तथा च सूत्रे समाहारात् समाहारपदोपेतश्रुतेः तत्पूर्वकोपासनप्रतिपादकश्रुतेरित्यर्थः । श्रुतौ समाहाराच्चेति भाष्ये समाहारपदस्य श्रुतिसूचकत्वेन कापायणश्रुतिसद्भावादिति यावत् । सूत्रं योजयति ॥ भगवद्गुणानामुपास्यत्वे उपास्यत्वविषय इति ।

## वाक्यार्थमञ्जरी

अङ्गैः पराद्ये इति श्रुतौ तादृशगुणानां समाहारात् उपसंहारफलवचनाद्देवाधिकारिकत्वनिश्चय इत्यर्थः ॥ मधुविद्यायामेवेति ॥ 'असौ वा आदित्यो देवमधु' इत्यादिमधुविद्यायां वसूनामेवैको भूत्वेत्याद्युक्तफलपर्यालोचनया वस्वादिपदयोग्यानां तदर्थितामेव अधिकारित्वकल्पनवदित्यर्थः ॥ ध्यायेदिति ॥ परस्याङ्गेष्वङ्गदेवता ध्यायेद्धि यस्मात्तेन मुक्तौ देवानां विशिष्टतदङ्गाश्रितत्वादयोऽसाधारणगुणा भवन्तीत्यर्थः । नन्वत्र फलविशेषस्यैवाधिकारिविशेषकल्पकत्वेन विवक्षितत्वात्फलश्रुतेरित्येव सूत्रभाष्ययोर्वक्तव्यम् । तत्कथं समाहारग्रहणमित्यत आह ॥ अत्रेति ॥ अस्यैव चोपपत्तेरूष्मेति सूत्रे यथोष्मेत्यस्योष्मपदोपेतश्रुतिसूचकत्वं तथेत्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ गुणसाधारण्यश्रुतेश्च ॐ ॥ ६६ ॥**

'साधारण्यात्सर्वगुणाः परस्य समाहार्यास्तत्त्वदृशो मुमुक्षोः' इति माण्डव्यश्रुतेश्च ।

## तत्त्वप्रदीपिका

**योऽयमधिकारी चतुरादिगुणोपासकः भगवदङ्गेष्वङ्गदेवता भावयति तत्तदङ्गदेवगुणांश्च तत्तदङ्गेषूपसंहरति तस्यैतैर्गुणैरन्येपामपि साधारण्यात्सर्वगुणा उपसंहार्याः शक्त्या ।**

## तत्त्वप्रकाशिका

हेत्वन्तरेणैतदुपासनस्य कर्तव्यतां प्रतिपादयत्सूत्रं पठित्वा तदुपात्तश्रुतिमेवोदाहरति ॥ **गुणेति** ॥ **कर्तव्यमेवैतदुपासनं सूर्याद्याश्रयचक्षुष्ट्वादीनां भगवद्गुणत्वात् । उपास्यत्वे च भगवद्गुणानां साधारण्यस्य सर्वेषामुपास्यत्वस्य श्रुतत्वादिति भावः । अतो देवानामङ्गाश्रितत्वेनोपास्यत्वात्सार्थक्यमेव तद्विद्यानामिति सिद्धम् ।**

## गुर्वर्थदीपिका

उपास्यत्वे च भगवद्गुणानामित्यत्रोपास्यत्वेन विहितभगवद्गुणानामित्यर्थः । साधारण्यस्येत्यस्यैव विवरणं सर्वेषामुपास्यत्वस्येति । सर्वेषां योग्यानां सर्वेषामित्यर्थः ॥

## भावबोधः

श्रुत्यनुसारेण सूत्रार्थमाह– **उपास्यत्वेति** ॥ 'साधारण्यस्य' इति सौत्रपदमनूद्य सर्वेषामुपास्येति व्याख्यातम् ।

अत्राद्ये सूत्रे तत्तदेवतानां तत्तदङ्गाश्रितत्वप्रतिपादकविद्यावैयर्थ्यानुपपत्त्यभिप्रायेण तथोपासनस्य कर्तव्यतोक्तिः । द्वितीये तत्रैव विधिरूपप्रमाणोक्तिः । तृतीये तस्य निरधिकारिकत्वशङ्कापरिहारः । चतुर्थे तदुपासनस्यावश्यकर्तव्यत्वे सूर्यादयो भगवच्चक्षुराद्याश्रितत्वेनोपास्याः सूर्याद्याश्रयचक्षुरादीनां भगवद्गुणत्वादित्यनुमानरूपप्रमाणोक्तिरिति सूत्रक्रमः ।

## भावदीपः

**हेत्वन्तरेणेति** ॥ ज्ञानानन्दादिब्रह्मगुणसाधारणत्वहेतुनेत्यर्थः । अत्रापि तथा भावना कर्तव्येत्यनुवृत्तिमुपेत्य भाष्यं व्याचष्टे ॥ **कर्तव्यमेवेति** ॥ पर्यवसितार्थमाह ॥ **सर्वेपामिति** ॥

(भावदीपः)

भगवद्गुणानामित्यनुषङ्गः । **श्रुतौ समाहार्या** इत्यत्र यथोक्तेति पूरणीयम् ॥ **अत इति** ॥ अङ्गाश्रितत्वेनोक्त्यन्यथानुपपत्तिरूपार्थापत्तेः श्रुतौ तथोपासनस्य विधानात्साधिकारिकत्वादुपास्य ज्ञानानन्दादिगुणान्तरसाधारण्यश्रवणाच्चेत्युक्तहेतुचतुष्टयादित्यर्थः ॥ **तद्विद्यानामिति** ॥ चक्षोः सूर्य इत्यादिविद्यानामित्यर्थः ।

## अभिनवचन्द्रिका

'अस्यैव चोपपत्तेरूष्मा' इति सूत्रे ऊष्मपदस्य ऊष्मावदनूष्मावच्चेति श्रुतिसूचकत्ववदित्यर्थः ॥ **उपास्यत्वे चेति** ॥ 'गुणानां साधारण्यस्य' इत्यनुवादः । 'सर्वेषामुपास्यत्वस्य' इति व्याख्यानम् ।

पूर्वपक्षस्तु– न अङ्गाश्रितदेवतोपासनं मुमुक्षुणा कर्तव्यम् । अधिकारिविशेषं लक्षीकृत्य तत्फलोद्देशेनानभिहितत्वात् । न चैवमपि अधिकारिविशेषः कल्पयितुं शक्यः कल्पकाभावात् । न च कल्पकाभावेऽपि कल्पना युक्ता । 'चोदनाद्यविशेषादित्युक्तव्याघातात् । ततश्च निरधिकारि-कत्वात् अङ्गाश्रितत्वेन देवतोपासनं न कर्तव्यमिति ।

सिद्धान्तस्तु– 'चक्षोः सूर्यो अजायत' इत्यादिना यथा यथा भगवदङ्गाश्रयत्वमुक्तं तथोपासनं कार्यम् । अन्यथा तदुक्तिवैयर्थ्यात् । 'यस्मिन्यस्मिन्यो हि चाङ्गे निविष्टः परस्य चिन्त्यः स तथा तथैव' इति पौत्रायणश्रुतौ तथा विहितत्वाच्च । अङ्गैः पराद्ये हि देवा विसृष्टाः तत्तद्गुणान्परमे संहरेत । तांश्चापि तत्रैव विचिन्त्य देवान्स्थानं मुमुक्षुः परमं व्रजेत' इति काषायणश्रुतौ सर्वेषामुप-संहार्यत्ववचनाच्च, 'साधारण्यात्सर्वगुणाः परस्य समाहार्यास्तत्वदृशो मुमुक्षोः इति माण्डव्यश्रुतावपि सर्वेषामुपास्यत्वाभिधानात् । अतो देवानामङ्गाश्रितत्वेनोपास्यत्वात् सार्थक्यं तद्विद्यानामिति सिद्धम् ।

## वाक्यार्थमुक्तावली

गुणानां भगवद्गुणानां साधारण्येनैते उपास्या एते नोपास्या इति विभागं विहायोपास्यत्वश्रुतेश्च भगवदङ्गाश्रितत्वेन कर्तव्यमेवोपासनमिति भावेन सूत्रार्थमाह ॥ **कर्तव्यमेवेति** ॥ उपास्यत्वेन भगवद्गुणानां साधारण्यस्येत्यस्यैव विवरणम् ॥ **सर्वेषामुपास्यत्वस्येति** ॥ विभागं विहाय सर्वेषां गुणानामुपास्यत्वस्येत्यर्थः । अत्राङ्गाश्रितत्वेन देवतोपासनं तदाश्रयत्वेन तद्गुणबिम्बभूतगुणाश्रयत्वेन च परमात्मोपासनं च समनियतमित्युभयोरपि विषयत्वात्समाहारात् गुणसाधारण्यश्रुतेश्च दर्शनाच्चेति

(वाक्यार्थमुक्तावली)

कथमुच्यत इति विरोधो न शङ्कनीयः । अत्राद्येऽङ्गाश्रितत्वेन देवतोपासनस्य कर्तव्यत्वे आध्यानायेत्युक्तन्यायेन **'चक्षोस्सूर्यो अजायत'** इत्यादिविद्यास्वङ्गाश्रितत्वोक्त्यन्यथानुपपत्तेः प्रमाणत्वोक्तिः । द्वितीये ततोऽपि प्रबलविधिरूपप्रमाणोक्तिः । तृतीये निरधिकारिकत्वेन विद्यावैयर्थ्यशङ्कापरिहारः । चतुर्थे सयुक्तिकं विध्युक्तिरिति सूत्रक्रमः ।

## तत्त्वसुबोधिनी

श्रुत्यनुसारेण सूत्रार्थमाह ॥ **उपास्यत्वे चेति** ॥ साधारण्येति सौत्रपदमनूद्य सर्वेषामुपास्यत्वस्येति व्याख्यातम् । अत्राद्ये सूत्रे देवतोपासनस्य कर्तव्यत्वोक्तिः । अङ्गदेवेषु यथाश्रयभावः यथाभगवदङ्गाश्रयत्वं तथोपासना इति सूत्रार्थः । द्वितीये निरधिकारित्वपरिहारः । तृतीयेऽनुमानरूपप्रमाणोक्तिः । चतुर्थे श्रुतिरूपप्रमाणोक्तिरिति सूत्रक्रमः ।

## वाक्यार्थमञ्जरी

भगवद्गुणानां साधारण्यस्योपास्यत्वेन साम्यस्य सर्वगुणानामुपास्यत्वस्येति यावत् । श्रुतेः साधारण्यादित्यत्र श्रवणादित्यर्थः ।

**॥ इति अङ्गाधिकरणम् ॥ ४१ ॥**

## ४२. नवाधिकरणम्

**॥ ॐ न वाऽतत्सहभावश्रुतेः ॐ ॥ ६७ ॥**

न वाऽङ्गदेवतोपसंहारः कार्यः । उपसंहारस्य सहाश्रवणात् ।

### तत्त्वप्रदीपिका

न वाऽङ्गदेवतानां तद्गुणानां वाऽङ्गेषूपसंहारः । केषां? अवरेषाम् । 'चक्षोः सूर्यो अजायत' इत्यादावुपसंहार्यत्वस्य सहाश्रवणात् । शिष्टेश्चाङ्गदेवताविषयत्वोपपत्तेः । न च तावताऽऽदित्यादिमतय इति पुनरुक्तिः स्यात् । तत्रत्वन्याशक्तावप्यवश्यकरणाय तदुक्तेः ॥

### तत्त्वप्रकाशिका

अत्र ब्रह्मज्ञानसाधनस्याङ्गाश्रितत्वेन देवतोपासनस्य कर्तव्यतासमर्थनादस्ति शाखादिसङ्गतिः । अन्यथोक्तस्यानुपपत्तेस्तत्समर्थनीयम् । प्रकृतं देवानां भगवदङ्गाश्रयत्वेनोपासनं विषयः । कर्तव्यं न वेति सन्देहः । उभयविधोपासनप्रतीतिः सन्देहबीजम् । न कर्तव्यमिति पूर्वः पक्षः । तथोपासनस्य सर्वशाखास्वनुक्तत्वात् । कर्तव्यत्वे क्रियात्वादग्निष्टोमादिवत्सर्वशाखागतोपासनेन सहभावप्रसङ्गात् । अतोऽस्योपासनस्याकर्तव्यत्वादुक्तमयुक्तमिति । गूढाभिसन्धिना सूत्रमुपन्यस्य व्याचष्टे ॥ **न वेति** ॥ भगवदङ्गेष्वङ्गदेवतोपसंहार उपसंहृत्योपासनं न कर्तव्यमिति यदुक्तं तत्सत्यमेव । तथोपासनस्य सर्वशाखागतोपासनेन सहाश्रवणादित्यर्थः । अयमभिसन्धिः । सर्वशाखासु तथोपासनस्याश्रवणादकर्तव्यत्वं भवत्येव । सर्वैः कर्तव्यतानभ्युपगमात् । न च केनाप्यकर्तव्यता । क्वचिदुक्तत्वात् । अन्यथोक्तिवैयर्थ्यप्रसङ्गात् । अतः क्वचिदुक्तत्वात्सर्वत्रानुक्तत्वाद्देवैः कर्तव्यमेतन्नान्यैरिति ।

### भावबोधः

**प्रकृतमिति** ॥ अनेनानन्तरसङ्गतिरप्युक्ता भवति ॥ **कर्तव्यमिति** ॥ अत्र देवानां भगवदङ्गाश्रयत्वेनोपासनं किं न कर्तव्यमुत कर्तव्यमिति चिन्ता । तदर्थं तदुपासनस्य सर्वशाखास्वनुक्तिः किं सर्वैरकर्तव्यत्वं विनाऽनुपपन्नोत कैश्चित् कर्तव्यत्वेनैवोपपन्ना । तदर्थं कैश्चिदेव कर्तव्यत्वे प्रमाणं नास्त्युतास्तीति । क्रियात्वादुपासनाया उपसंहारस्याग्निष्टोमादिवत् प्रतिशाखं वक्तव्येति न्यायविवरणानुसारेण पूर्वपक्षमुपपादयति– **तथोपासनस्येत्यादिना** ॥

(भावबोधः)

ननूपासनं न कर्तव्यमिति पूर्वपक्षिते कथं न वेत्यकर्तव्यताप्रतिपादकसूत्रेण सिद्धान्त इत्यत उक्तम्– **गूढाभिसन्धिनेति ॥ उत्तमाधिकारिव्यतिरिक्तैरिति** अधिकारिविशेषनिर्देशाभावादभिसन्धेः गूढत्वमिति ज्ञातव्यम् । सूत्रे **'अङ्गेषु यथाश्रयभावः'** इत्यस्यानुवृत्तिः । 'अतत्सहभावश्रुतेः ' इत्यत्र तत्सहभावाश्रुतेरिति नञो व्यत्यासेनान्वय इत्यभिप्रेत्य प्रवृत्तं न वेत्यादिभाष्यं व्याचष्टे ॥ **भगवदित्यादिना ॥** उपासनाविशेषाणामधिकारिविशेषाणां चागमेनावगमादिति न्यायविवरणानु-सारेणाभिसन्धिमुद्धाटयति– **अयमभिसन्धिरित्यादिना ॥**

## भावदीपः

**समर्थनादिति ॥** सर्वशाखास्वनुक्तत्वेन प्राप्ताकर्तव्यत्वशङ्कानिरासेनेति भावः । तेन पूर्वेणापौनरुक्त्यम् । पूर्वोक्तप्रमेयसमर्थनात्पूर्वसङ्गतिश्चेति ध्येयम् ॥ **उभयविधेति ॥** काम्याकाम्यो-पासनयोरकर्तव्यत्वकर्तव्यत्वदर्शनादिति भावः । न वेत्यादिभाष्योक्तप्रतिज्ञाहेतू एव पूर्वपक्षतयाऽह ॥ **न कर्तव्यमिति ॥** हेतोरप्रयोजकत्वनिरासकतया क्रियात्वादुपासनक्रियाया अग्निष्टोमादिवत्प्रतिशाखं वक्तव्यतेत्यन्यत्रोक्तं योजयति ॥ **कर्तव्यत्व इति ॥** हेतूच्छित्तिरेव विपक्षे बाधिकेति भावः ॥ अत इति ॥ सर्वशाखास्वनुक्तत्वादित्यर्थः । पूर्वपक्षस्यैव सिद्धान्ते अनुवादप्रतीतेराह ॥ **गूढाभि-सन्धिनेति ॥** अधिकार्यनुक्तेर्गूढेत्युक्तम् । श्रुत्यनुरोधेनोपसंहारपदं व्याकुर्वन् भाष्यं व्याचष्टे ॥ **भगवदिति ॥** उत्तरसूत्रोपात्तश्रुत्यनुरोधेन भावमाह ॥ **अयमभिसन्धिरिति ॥**

## अभिनवचन्द्रिका

देवतोपासनस्य **कर्तव्यता** समर्थनादिति । नन्वस्मिन्नधिकरणे अङ्गदेवतोपासना नैव कार्या । असहभावश्रुतेरिति अकर्तव्यताया एव समर्थनात् कर्तव्यतासमर्थनादित्ययुक्तमिति चेत्, सत्यम् इहाधिकरणे अकर्तव्यता समर्थ्यते, तथापि न सर्वथा अकर्तव्यत्वम्, किं तु देवेतरैरकर्तव्यत्वम् । ततश्च देवैः कर्तव्यताया अभिमतत्वात् देवतोपासनस्य समर्थनादित्युक्तमित्यदोषः ॥ **देवा-नामिति ॥** भगवदङ्गाश्रयत्वेन देवताविषयकमुपासनमित्यर्थः ॥ **न कर्तव्यमिति पूर्वपक्ष इति ॥** यद्यपि न वाऽतत्सहभावश्रुतेरिति सूत्रेण नैव कर्तव्यमिति सिद्धान्ताभिधानात् कर्तव्यमिति पूर्वपक्षो वक्तव्यः, तथापि अस्मिन्नधिकरणे देवतापदयोग्यानां कर्तव्यताया अपि समर्थनात्तन्निवर्त्यः पूर्वपक्षो

(अभिनवचन्द्रिका)

दर्शितः । **सर्वशाखास्वनुक्तत्वादिति** ॥ परिच्छेदेन तत्तद्योग्यगुणाभिधायकवेदैकदेशविद्यासु अङ्गदेवतोपासनस्यानुक्तत्वादित्यर्थः । एतेन कर्तव्यत्वे विहितत्वस्यैव प्रयोजकत्वात् अकर्तव्यत्वे अविहितत्वमेव प्रयोजकमिति तदेव वक्तव्यम्, न तु सर्वशाखास्वनुक्तत्वमिति परास्तम् । परिच्छेदेन तत्तद्योग्यगुणकथनावसरे अनुक्तेरकर्तव्यताप्रयोजकत्वात् ॥ **कर्तव्यत्व इति** ॥ यद्युपासनस्य कर्तव्यत्वं स्यात् तर्हि क्रियात्वात् कर्तव्यत्वात् अग्निष्टोमादिवत् तत्तच्छाखोक्तोपासनया सहोक्तिः स्यादित्यर्थः । तद्यथा ज्योतिष्टोमस्य सर्वैः शाखिभिः कर्तव्यत्वात्तत्तच्छाखिकर्मनिरूपणावसरे ज्योतिष्टोमोऽप्युच्यते तद्वत् देवतोपासनमपि तत्तद्योग्यगुणोपासननिरूपकविद्यासु निरूपणीयं स्यादिति भावः । ननु इदं सूत्रं अतत्सहभावश्रुतेः अङ्गदेवतोपासनं न कर्तव्यमिति यत्प्राप्तं तन्नैवेति व्याख्येयं न तु न वाऽङ्गदेवतोपसंहारः कार्य इति । पूर्वपक्षसिद्धान्तयोर्वैलक्षण्यस्यावश्यकत्वादित्यत आह ॥ **गूढाभिसन्धिनेति** ॥ गूढाभिप्रायेण व्याख्यानस्य च नाऽङ्गदेवातोपासनं युक्तं निरधिकारिकत्वादित्याशङ्कामभ्युपगमेन परिहर्तुमिदं सूत्रद्वयं 'न वा प्रकरणभेदात्' इति सूत्रवत्पूर्वाधिकरणशेषतयापि प्रवृत्तमिति सूचनं प्रयोजनम् ॥ **तथोपासनस्येति** ॥ विशिष्य तत्तद्योग्यगुणोपासनविधायकेषु प्रकरणेषु तथोपासनस्यानुक्तत्वादित्यर्थः । सिद्धान्तस्य पूर्वपक्षाभेदं वारयितुमाह– **अयमभिसन्धिरिति** ॥

पूर्वपक्षस्तु– भगवदङ्गाश्रयत्वेनोपासनं केनापि न कर्तव्यम् । तथोपासनस्य तत्तद्योग्यगुणोपासननिरूपणपरासु सर्वशाखासु तत्तद्योग्यगुणोपासनैः सहानुक्तत्वात् । अतोऽङ्गदेवतोपासनस्याऽकर्तव्यत्वादुक्तमयुक्तमिति ।

सिद्धान्तस्तु– न कर्तव्य एव सर्वैः भगवदङ्गेष्वङ्गदेवतोपसंहारः, किं नाम देवैरेव कर्तव्यः । सर्वशाखास्वनुक्तेः क्वचिदेवोक्तेः । 'सत्यो ज्ञानः' परमानन्दरूप आत्मेत्येवं नित्यदोपासनं स्यात् । नान्यत्किञ्चित्समुपासीत धीरः सर्वैर्गुणैर्देवगणा उपासते' इति श्रुतौ तथैव दर्शनात् । अतो देवानां भगवदङ्गाश्रितत्वेनोपासनमुक्तमुपपन्नमिति सिद्धम् ।

**॥ इति श्रीसत्यनिधितीर्थश्रीचरणचरणाराधकश्रीमत्सत्यनाथयतिविरचितायां श्रीमत्तत्त्वप्रकाशिकाव्याख्याऽभिनवचन्द्रिकायां तृतीयाध्यायस्य तृतीयः पादः समाप्तः ॥**

## वाक्यार्थमुक्तावली

अत्रानन्तरसङ्गतिः स्फुटा ॥ **प्रकृतमिति** ॥ अत्र देवानां भगवदङ्गाश्रितत्वेनोपासनं कर्तव्यमुत न कर्तव्यमिति चिन्ता । तदर्थं तदुपासनस्य सर्वशाखास्वनुक्तिः किं सर्वैः कर्तव्यत्वं विनानुपपन्नोत कैश्चित्कर्तव्यत्वेनान्यथोपपन्नेति । **अतत्सहभावेनेति** ॥ सूत्रखण्डसूचितं क्रियेत्युक्तन्यायं विशदयति ॥ **तथोऽपासनस्येति** ॥ **अग्निष्टोमवदिति** ॥ यथाग्निष्टोमं प्रतिशाखोक्तकर्मणा सहोच्यते तथेत्यर्थः । ननु कैरप्यकर्तव्यत्वे शिष्टेरित्याद्युक्तविधिविरोधः । निरधिकारिकविधेरनवधेयत्वादिति चेन्न । तद्विधानादेर्वैय्यर्थ्यस्यैवोचितत्वादिति पूर्वाधिकरणटीकायामेवोक्तत्वात् । तत्वप्रदीपे तु शिष्टेश्चेत्युक्तविधेरङ्गदेवताविषयत्वात् तद्गुणानां तदङ्गेषूपासनस्य सर्वैः कर्तव्यत्वविषयत्वाभावादित्युक्तम् । ननूपासनं न कर्तव्यमिति पूर्वपक्षिते कथं न वेत्यकर्तव्यता प्रतिपादकसूत्रेण सिद्धान्त इत्यत आह । **उत्तमाधिकारिव्यतिरिक्तैरिति** ॥ विशेषनिर्देशाभावादभिसन्धेर्गूढत्वमिति ज्ञेयम् । उत्तमाधिकारिभिरुपसंहारः कर्तव्य एवेत्यवचनेनैवं गूढत्वकरणं परोक्तासहभावस्यान्यथासिद्धिव्युत्पादनायेति बोध्यम् । सूत्रेऽङ्गेषु यथाश्रयभाव इत्यनुवर्तते । अतत्सहभावश्रुतेरित्यत्र तत्सहभावाश्रुतेरिति नञो व्यत्यासेनान्वय इत्यभिप्रेत्य प्रवृत्तं न चेत्यादिभाष्यं व्याचष्टे ॥ **भगवदित्यादिना** ॥ अधिकारिभेदेन व्यवस्थितविकल्पाभिधायकवाशब्दमनुसृत्याभिसन्धिमुद्घाटयति ।

## तत्त्वसुबोधिनी

**प्रकृतमिति** ॥ अनेनानन्तरसङ्गतिरुक्ता भवति ॥ **अन्यथेति** ॥ उक्तस्य समर्थनाभावे उक्तस्याङ्गाश्रितत्वेन देवतोपासनस्यानुपपत्तिः स्यादित्यर्थः । ननूपासनं न कर्तव्यमिति पूर्वपक्षिते कथं न वेत्यकर्तव्यताप्रतिपादकसूत्रेण सिद्धान्त इत्यत उक्तं **गूढाभिसन्धिरिति** ॥ उत्तमाधिकारिव्यतिरिक्तैः इत्यधिकारिविशेषनिर्देशाभावादभिसन्धेः गूढत्वमिति ज्ञातव्यम् । सूत्रे अङ्गेषु यथाश्रयभाव इत्यस्यानुवृत्तिः । अतत्सहभावश्रुतेरित्यत्र तदभावश्रुतेरिति नञो व्यत्यासेनान्वय इत्यभिप्रेत्य प्रवृत्तं न वेत्यादिभाष्यं व्याचष्टे । **भगवदङ्गेष्विति** ॥ उपासनाविशेषाणां अधिकारिविशेषाणां चागमे नावगमादित्यभिसन्धिमुद्घाटयति ॥ **अयमभिसन्धिरिति** ॥

## वाक्यार्थविवरणम्

**उक्तस्येति** ॥ अङ्गदेवतोपासनस्य कर्तव्यत्वमङ्गीकृत्योक्तस्य तद्विधानां सार्थक्यस्येत्यर्थः ॥ **क्रियात्वादिति** ॥ उपासनस्यापि मानसक्रियात्वादित्यर्थः ॥ **उपासनेनेति** ॥ भगवद्गुणोपासनेन ॥

(वाक्यार्थविवरणम्)

**सहभावप्रसङ्गात् ॥** सहोक्तिप्रसङ्गादित्यर्थः । यथा यासु शाखासु भगवद्गुणोपासनं कर्तव्यतयोच्यते तासु सर्वत्राप्यग्निष्टोमादिक्रियाणामपि कर्तव्यतोच्यत इति सहभावोऽस्ति । न तथाऽत्रेति भावः ।

॥ इति तृतीय उपासनापादः समाप्तः ॥

## वाक्यार्थमञ्जरी

ननूपासनं न कर्तव्यमिति पूर्वपक्षिते कथं न वेत्यकर्तव्यताप्रतिपादकसूत्रेण सिद्धान्त इत्यत उक्तम् ॥ **गूढाभिसन्धिनेति** ॥ उत्तमाधिकारिव्यतिरिक्तैरित्यधिकारि विशेषनिर्देशाभावादभिसन्धे-र्गूढत्वमिति ज्ञातव्यम् ॥ ॐ न वा तत्सहभावश्रुतेः ॐ ॥ अङ्गाश्रितदेवोपासनं न वा कार्यं कुतः अतत्सहभावश्रुतेः । तेन सर्वशाखागतोपासनेन सहभावस्य सहत्वस्याश्रुतेरश्रवणादित्यर्थः । आशयमुद्घाटयति ॥ **अयमभिसन्धिरिति** ॥

## सूत्रभाष्यम्

**॥ ॐ दर्शनाच्च ॐ ॥ ६८ ॥**

**'सत्यो ज्ञानः परमानन्दरूप आत्मेत्येवं नित्यदोपासनं स्यात् ।**
**नान्यत्किञ्चित्समुपासीत धीरः सर्वैर्गुणैर्देवगणा उपासते'**

इति कमठश्रुतौ ।

॥ इति नवाधिकरणम् ॥ ४२ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रभाष्ये तृतीयाध्यायस्य तृतीयः पादः समाप्तः ॥

## तत्त्वप्रदीपिका

'सत्यो ज्ञानः परमानन्दरूप आत्मेत्येवं नित्यदोपासनं स्यात्' इत्यादिश्रुतेश्च देवगणानामपि केषाञ्चिदङ्गेष्वङ्गदेवतोपसंहारस्तद्गुणानां चाङ्गेषु सर्वगुणानां चोत्तरोत्तरम् ॥

॥ इति सहाश्रवणाधिकरणम् ॥

॥ इति तत्त्वदीपिकायां तृतीयाध्यायस्य तृतीयः पादः ॥

## तत्त्वप्रकाशिका

**एतमेवार्थं श्रुत्या समर्थयत्सूत्रं पठित्वा तां श्रुतिमुदाहरति ॥ दर्शनाच्चेति ॥** अतो देवानां भगवदङ्गाश्रितत्वेनोपासनं युक्तमित्युक्तमुपपन्नमिति सिद्धम् ।

## भावबोधः

**तां श्रुतिमिति ॥** 'उपासना यजनं चेति साम्यं तत्तद्विशेषान् संहरेत् सर्वतश्च । तथा कर्तृणां तत्फलानां विशेषाद्व्यर्था हि शाखा अन्यथैवं च सार्था' इति न्यायविवरणोदाहृता श्रुतिरपि ग्राह्या । अत्र प्रथमे अङ्गदेवतोपासनाभावे हेतूक्तिः । द्वितीये **तदुपोद्बलकश्रुत्युक्तिरिति** ॥ अत्र पादे आद्यमधिकरणं ध्यानाङ्गशास्त्राभ्यासरूपोपासनाप्रतिपादकमेका पेटिका । उत्तरमधिकरणत्रिकं सार्वत्रिकगुणोपसंहारप्रतिपादकत्वेनैका पेटिका । तत्राद्ये– सर्वगुणोपसंहारानुपसंहारसमर्थनम् । द्वितीये तयोरेव पुरुषभेदेन कर्तव्यत्वसमर्थनम् । तदुत्तरद्वादशाधिकरणानि प्रत्येकमेकैकमेका पेटिका । तदुत्तरमधिकरणद्वयं मुक्तिविषयत्वेनैका पेटिका । तत्राद्ये मुक्तौ उपासनानुवृत्तिसमर्थनम् । द्वितीये तृतीये च बहुगुणोपसंहारस्य कर्तव्यत्वसमर्थनम् । मुक्तानां कर्मणि नियमाभावसमर्थनम् । तदुत्तरमधिकरणसप्तकं प्रत्येकमेकैकमेका पेटिका । तदुत्तरमधिकरणद्वयं गुरुप्रसादरूपोपासनेति कर्तव्यताप्रतिपादकत्वेनैका पेटिका । तत्राद्ये तस्यावश्यकत्वसमर्थनम् । द्वितीये तस्य बलीयस्त्व-समर्थनम् । तदुत्तरमेकमधिकरणमेका पेटिका । तदुत्तरमधिकरणद्वयमुपासनाजन्यापरोक्षज्ञानस्य मोक्षसाधनत्वप्रतिपादकत्वेनैका पेटिका । तत्राद्ये ज्ञानस्यैव मोक्षसाधनत्वप्रतिपादनम् । द्वितीये तत्र प्रमाणान्तरबाधकोद्धारः । तदुत्तरमधिकरणमेकमेवैका पेटिका । तदुत्तरमधिकरणद्वयमपरोक्ष-ज्ञानविषयकत्वेनैका पेटिका । तत्राद्ये ज्ञाने तारतम्यस्य, द्वितीये बिम्बविषयत्वस्य च समर्थनम् । तदुत्तरमधिकरणत्रयं प्रत्येकमेकैकमेका पेटिका । तदुत्तरमधिकरणद्वयं भूमगुणोपासनाविषयत्वेनैका पेटिका । तत्राद्ये भूमगुणोपासनस्य सर्वसाधारण्यसमर्थनम् । द्वितीये भूमगुणोपासनाधिकारिणां विशेषसमर्थनम् । तदुत्तरमधिकरणद्वयमबिम्बोपासनविषयत्वेनैका पेटिका । तत्राद्ये हरिदर्शनोप-योगितयावश्यकस्य तस्याकर्तव्यतानिरासः । द्वितीये अनावश्यकस्य तस्य विकल्पोक्तिः । तदुत्तरमधिकरणद्वयमङ्गदेवतोपासनविषयत्वेनैका पेटिका । तत्राद्ये योग्यानां कर्तव्यत्वोपपादनम् । द्वितीये अयोग्यानां तन्निषेध इति ॥

**॥ इति श्रीमद्रघुवर्यतीर्थपूज्यपादशिष्यरघूत्तमयतिकृते श्रीमज्जयतीर्थ पूज्यचरणविरचिततत्त्वप्रकाशिका-भाववोधे तृतीयाध्यायस्य तृतीयः पादः ॥**

## भावदीपः

**एतमेवेति ॥** अयमभिसन्धिरित्यादिनोक्तमेवार्थमित्यर्थः ॥ **अत इति ॥** सर्वशाखास्वनुक्तस्यान्यथोपपन्नत्वादित्यर्थः । उक्तमुपपन्नमिति फलोक्तिः ।

**॥ इति श्रीमद्भाष्यटीकाभावदीपे श्रीराघवेन्द्रयतिकृते तृतीयाध्यायस्य तृतीयः पादः ॥**

## वाक्यार्थमुक्तावली

**एतमेवार्थं श्रुत्येति ॥** आगम इत्युक्तन्यायं प्रदर्शयितुं श्रुत्या समर्थयदिति पूरणीयम् । दर्शनश्रुतेश्चाङ्गदेवतोपसंहारो देवैः कार्यः । इतरैर्न वेति सूत्रार्थः । अत्राद्ये युक्तिः । द्वितीये श्रुतिरिति सूत्रक्रमः । पेटिका तु भावबोधे द्रष्टव्या । विस्तरभयान्नेहोच्यते ।

**॥ इति श्रीमद्विठ्ठलाचार्यतनूजेन श्रीमत्तीर्थाचार्यचरणसेविना श्रीश्रीनिवासेन रचितायां श्रीमत्तत्वप्रकाशिकावाक्यार्थमुक्तावल्यां तृतीयाध्यायस्य तृतीयः पादः ॥**

## तत्त्वसुबोधिनी

अत्र प्रथमे अङ्गदेवतोपासनाभावे हेतूक्तिः । द्वितीये तदुपलम्भकश्रुत्युक्तिरिति सूत्रक्रमः ॥

**॥ इति तत्वप्रकाशिकाटीकायां तत्वसुबोधिन्यां तृतीयाध्यायस्य तृतीयः पादः समाप्तः ॥**

## वाक्यार्थमञ्जरी

सत्यो ज्ञान इति श्रुतौ देवैस्तथोपासनं कार्यं नान्यैरित्यस्य दर्शनाच्चैवमित्यर्थः ।

**॥ इति श्रीमत्तत्वप्रकाशिकावाक्यार्थतत्त्वमञ्जर्यां श्रीनिवासविरचितायां तृतीयाध्यायस्य तृतीयः पादः ॥**

## तत्त्वप्रकाशिका

**एतमेवार्थं श्रुत्या समर्थयत्सूत्रं पठित्वा तां श्रुतिमुदाहरति ॥ दर्शनाच्चेति ॥** अतो देवानां भगवदङ्गाश्रितत्वेनोपासनं युक्तमित्युक्तमुपपन्नमिति सिद्धम् ।

## भावबोधः

**तां श्रुतिमिति ॥** 'उपासना यजनं चेति साम्यं तत्तद्विशेषान् संहरेत् सर्वतश्च । तथा कर्तॄणां तत्फलानां विशेषाद्व्यर्था हि शाखा अन्यथैवं च सार्था' इति न्यायविवरणोदाहृता श्रुतिरपि ग्राह्या। अत्र प्रथमे अङ्गदेवतोपासनाभावे हेतूक्तिः । द्वितीये **तदुपोद्बलकश्रुत्युक्तिरिति ॥** अत्र पादे आद्यमधिकरणं ध्यानाङ्गशास्त्राभ्यासरूपोपासनाप्रतिपादकमेका पेटिका । उत्तरमधिकरणत्रिकं सार्वत्रिकगुणोपसंहारप्रतिपादकत्वेनैका पेटिका । तत्राद्ये– सर्वगुणोपसंहारानुपसंहारसमर्थनम् । द्वितीये तयोरेव पुरुषभेदेन कर्तव्यत्वसमर्थनम् । तदुत्तरद्वादशाधिकरणानि प्रत्येकमेकैकमेका पेटिका। तदुत्तरमधिकरणद्वयं मुक्तिविषयत्वेनैका पेटिका। तत्राद्ये मुक्तौ उपासनानुवृत्तिसमर्थनम् । द्वितीये तृतीये च बहुगुणोपसंहारस्य कर्तव्यत्वसमर्थनम् । मुक्तानां कर्मणि नियमाभावसमर्थनम् । तदुत्तरमधिकरणसप्तकं प्रत्येकमेकैकमेका पेटिका । तदुत्तरमधिकरणद्वयं गुरुप्रसादरूपोपासनेति कर्तव्यताप्रतिपादकत्वेनैका पेटिका । तत्राद्ये तस्यावश्यकत्वसमर्थनम् । द्वितीये तस्य बलीयस्त्व-समर्थनम् । तदुत्तरमेकमधिकरणमेका पेटिका । तदुत्तरमधिकरणद्वयमुपासनाजन्यापरोक्षज्ञानस्य मोक्षसाधनत्वप्रतिपादकत्वेनैका पेटिका । तत्राद्ये ज्ञानस्यैव मोक्षसाधनत्वप्रतिपादनम् । द्वितीये तत्र प्रमाणान्तरबाधकोद्धारः । तदुत्तरमधिकरणमेकमेवैका पेटिका । तदुत्तरमधिकरणद्वयमपरोक्ष-ज्ञानविषयकत्वेनैका पेटिका । तत्राद्ये ज्ञाने तारतम्यस्य, द्वितीये बिम्बविषयत्वस्य च समर्थनम् । तदुत्तरमधिकरणत्रयं प्रत्येकमेकैकमेका पेटिका । तदुत्तरमधिकरणद्वयं भूमगुणोपासनाविषयत्वेनैका पेटिका । तत्राद्ये भूमगुणोपासनस्य सर्वसाधारण्यसमर्थनम् । द्वितीये भूमगुणोपासनाधिकारिणां विशेषसमर्थनम् । तदुत्तरमधिकरणद्वयमबिम्बोपासनविषयत्वेनैका पेटिका । तत्राद्ये हरिदर्शनोप-योगितयावश्यकस्य तस्याकर्तव्यतानिरासः । द्वितीये अनावश्यकस्य तस्य विकल्पोक्तिः । तदुत्तरमधिकरणद्वयमङ्गदेवतोपासनविषयत्वेनैका पेटिका । तत्राद्ये योग्यानां कर्तव्यत्वोपपादनम् । द्वितीये अयोग्यानां तन्निषेध इति ॥

**॥ इति श्रीमद्रघुवर्यतीर्थपूज्यपादशिष्यरघूत्तमयतिकृते श्रीमज्जयतीर्थ पूज्यचरणविरचिततत्त्वप्रकाशिका-भावबोधे तृतीयाध्यायस्य तृतीयः पादः ॥**

## भावदीपः

**एतमेवेति ॥** अयमभिसन्धिरित्यादिनोक्तमेवार्थमित्यर्थः ॥ **अत इति ॥** सर्वशाखास्वनुक्तस्यान्यथोपपन्नत्वादित्यर्थः । उक्तमुपपन्नमिति फलोक्तिः ।

**॥ इति श्रीमद्भाष्यटीकाभावदीपे श्रीराघवेन्द्रयतिकृते तृतीयाध्यायस्य तृतीयः पादः ॥**

## वाक्यार्थमुक्तावली

**एतमेवार्थं श्रुत्येति ॥** आगम इत्युक्तन्यायं प्रदर्शयितुं श्रुत्या समर्थयदिति पूरणीयम् । दर्शनश्रुतेश्चाङ्गदेवतोपसंहारो देवैः कार्यः । इतरैर्न वेति सूत्रार्थः । अत्राद्ये युक्तिः । द्वितीये श्रुतिरिति सूत्रक्रमः । पेटिका तु भावबोधे द्रष्टव्या । विस्तरभयान्नेहोच्यते ।

**॥ इति श्रीमद्विठ्ठलाचार्यतनूजेन श्रीमत्तीर्थाचार्यचरणसेविना श्रीश्रीनिवासेन रचितायां श्रीमत्तत्वप्रकाशिकावाक्यार्थमुक्तावल्यां तृतीयाध्यायस्य तृतीयः पादः ॥**

## तत्त्वसुबोधिनी

अत्र प्रथमे अङ्गदेवतोपासनाभावे हेतूक्तिः । द्वितीये तदुपलम्भकश्रुत्युक्तिरिति सूत्रक्रमः ॥

**॥ इति तत्वप्रकाशिकाटीकायां तत्वसुबोधिन्यां तृतीयाध्यायस्य तृतीयः पादः समाप्तः ॥**

## वाक्यार्थमञ्जरी

सत्यो ज्ञान इति श्रुतौ देवैस्तथोपासनं कार्यं नान्यैरित्यस्य दर्शनाच्चैवमित्यर्थः ।

**॥ इति श्रीमत्तत्वप्रकाशिकावाक्यार्थतत्त्वमञ्जर्यां श्रीनिवासविरचितायां तृतीयाध्यायस्य तृतीयः पादः ॥**

# अथ तृतीयाध्यायस्य चतुर्थः पादः

## १.पुरुषार्थाधिकरणम्

### सूत्रभाष्यम्

ज्ञानसामर्थ्यमस्मिन्पाद उच्यते —

**।। ॐ पुरुषार्थोऽतः शब्दादिति बादरायणः ॐ ।। १ ।।**

यद्दर्शनार्थमुपासनोक्ता तस्माद्दर्शनात्सर्वपुरुपार्थप्राप्तिरिति बादरायणो मन्यते । 'यं यं लोकं मनसा संविभाति विशुद्धसत्वः कामयते यांश्च कामान् तं तं लोकं जयते तांश्च कामां-स्तस्मादात्मज्ञं ह्यर्चयेद्भूतिकाम' (मु.उ.३-१-१०) इति शब्दात् ।।

### तत्त्वप्रदीपिका

ज्ञानसामर्थ्यमस्मिन्पाद उच्यते । अयमर्थः । उक्तोपासनासमुन्नाहपरिपाकसमुत्पन्नस्य ब्रह्म-दर्शनस्य महिमाऽस्मिन्नारभ्यमाणे चतुर्थे पादेऽनुवर्ण्यते । पुरुपार्थोऽतः शब्दादिति बादरायणः ।। यस्य विष्णोर्दर्शनार्थमुपासनोक्ता तस्माद्दर्शनात् । तस्य प्रसादात्सञ्जाताद्दर्शनात्सर्वपुरुपार्थप्राप्ति रुच्यते– 'यं यं लोकं मनसा संविभाति' इत्यादौ । सा च तस्माद्विष्णोर्दृष्टादिति भावः । न चैतज्ज्ञानसामर्थ्यं न भवति । विपयमपेक्ष्य विवक्षितत्वात् विचक्षणसमाजाधिराजेन । बादरायण इति वादे रतानामधिकतयाऽऽश्रयत्वेन भगवत्तमो वेदेश्वर उच्यते । **संविभाति** मनुते । भा ज्ञान इति धातोः ।

### तत्त्वप्रकाशिका

एतत्पादार्थं दर्शयति **।। ज्ञानेति ।।** भगवदपरोक्षज्ञानार्थमुपासनोक्ता तज्ज्ञानं तया भवति इति चोक्तम् । तस्य ज्ञानस्य सामर्थ्यमत्रोच्यत इत्यर्थः । अत्रादौ ब्रह्मप्राप्तिसाधनज्ञानस्य सर्वपुरुपार्थ-साधनत्वमहिम्नो वर्णनादस्ति शास्त्रादिसङ्गतिः । अन्यथा न तत्रातिशयेन प्रवृत्तिः स्यादिति तद्वर्णनीयम् । उपासनसाध्यतया प्रकृतं ज्ञानमत्र विपयः । किं 'मोक्षमात्रसाधनमुत फलान्तरस्यापि साधनम्' इति सन्देहः । निरवधारणमुक्तिसाधनत्वोक्तेरुभयथा सम्भवः सन्देहबीजम् । ज्ञानं

(तत्त्वप्रकाशिका)

**मोक्षमात्रसाधनमिति पूर्वः पक्षः । ज्ञानिनां मोक्षेतरपुरुषार्थेषु विरक्तत्वेन तदिच्छाया एवाभावात् । 'परीक्ष्य लोकान्कर्मचितान् ब्राह्मणो निर्वेदमायात्' 'प्रजहाति यदा कामान्' इत्यादेः । इच्छाभावेऽपि तत्प्राप्तौ पुरुषार्थत्वमेव न स्यात् । अतो ज्ञानस्य मोक्षमात्रसाधनत्वान्न तत्सर्वथाऽऽपाद्यमिति । सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ॥ पुरुषार्थ इति ॥ यस्य दर्शनस्यार्थे पूर्वमुपासनोक्ताऽतो दर्शनतः पुरुषैरर्थ्यमानं यावच्छुभं तावत्सर्वमाप्यत एव न तु मोक्षमात्रम् । कुतः । यं यमिति शब्दादिति भगवान्बादरायणो मन्यत इत्यर्थः । संविभाति इच्छति । जयते प्राप्नोति । न च श्रुत्यादिना ज्ञानिनां मोक्षेतरपुरुषार्थेच्छाभावान्न ज्ञानात्सर्वपुरुषार्थप्राप्तिरिति युक्तम् । श्रुत्यादेः प्रायेण ज्ञानिनामन्येच्छाभावपरत्वात् । अस्माभिस्तु श्रुत्यवलम्बेन यस्य सौभरिकर्दमादिवद्भवतीच्छा तस्य ज्ञानादेव सर्वपुरुषार्थप्राप्तिर्भवतीत्यभ्युपगमात् ।**

## गुर्वर्थदीपिका

उपासनाफलीभूतापरोक्षज्ञाने मोक्षसाधनत्वस्य मन्दाधिकारिणामपि रुच्युत्पादनाय प्रसङ्गसङ्गत्या प्राक् निरूपितत्वादिदानीं तु तस्यैव ज्ञानस्य मोक्षेतरपुरुषार्थसाधनत्वमप्यस्तीति ज्ञानमाहात्म्यप्रतिपादनाय 'पुरुषार्थोऽतः शब्दात्' इति सूत्रम् । एतदेवाभिप्रेत्य ज्ञानसामर्थ्यमस्मिन्पाद उच्यत इति भाष्यं च । निरवधारणमुक्तिसाधनत्वोक्तेरित्यत्र ज्ञानं मुक्तेरेव साधनमित्यवधारणरहितसाधनत्वोक्तेरित्यर्थः । यद्यपि विद्यैवेत्युक्तज्ञानमेव अत इति परामृष्टुं शक्यते तथापि पूर्वोत्तरपादयोस्सङ्गतिसूचनाय यस्य दर्शनस्यार्थ इत्युक्तम् । इच्छाभावादित्यत्रेच्छाभावप्रतिपादनादित्यर्थः । तस्य ज्ञानादेवेत्यत्र ज्ञानोत्तरकालं प्रारब्धकर्मणैव भोगो भविष्यति किं ज्ञानेनेति चेन्न क्रमिककालपरिपाकानां कर्मणां क्रमिकदेहप्रापकत्वेऽपि युगपत्कायव्यूहसम्पादनं ज्ञानमहिम्नैव न कर्मणा । ज्ञानेन प्रारब्धकर्मणामप्युपमर्दस्य वक्ष्यमाणत्वाच्च । अतस्सुष्ठूक्तं 'पुरुषार्थोऽतश्शब्दात्' इति ज्ञेयम् ।

## भावबोधः

'अस्मिन्' इति भाष्ये 'इदं' शब्दप्रयोगः पूर्वपादेनास्य पादस्य सङ्गतिप्रदर्शनार्थ इत्यभिप्रेत्याह– **भगवदपरोक्षेति** ॥ उक्तं 'विद्यैव तु निर्धारणादित्यत्र' इत्यर्थः । सामर्थ्यमिति ।

(भावबोधः)

स्वर्गाद्यशेषपुरुषार्थसाधनत्वादिरूपमित्यर्थः । **सर्वपुरुपार्थसाधनत्वमहिम्न इति** ॥ पूर्वाधिकरणे 'दर्शनाच्च' इत्यनेनोक्तश्रुतिरूपप्रमाणमेवात्रापि ज्ञानस्याशेषपुरुषार्थसाधनत्वे 'शब्दात्' इत्यनेनोच्यत इत्यनन्तरसङ्गतिरिति भावः ॥ **किमित्यादि** ॥ अत्र ज्ञानं किं मोक्षमात्रसाधनमुत स्वर्गादि-फलान्तरस्यापि साधनमिति चिन्ता । तदर्थं ज्ञानिनां मोक्षेतरपुरुषार्थेच्छा नास्त्युत अस्तीति ॥ तदर्थं 'परीक्ष्य लोकान्' 'प्रजहाति यदा कामान्' इत्यादिवाक्यं किं निरवकाशमुत सावकाश-मिति । ज्ञानस्याशेषपुरुषार्थसाधनत्वेऽपि किं ज्ञानकर्मणोः परस्परशेषशेषिभावो न सम्भवत्युत सम्भवतीति । तदर्थं तदुभयप्रतिपादकप्रमाणानां किं समानविषयत्वेन विरोध उत भिन्नविषयत्वेन विरोध इति ॥ **निरवधारणेति** ॥ 'विद्यैव तु निर्धारणात्' इत्यत्र ज्ञानस्यैव मुक्तिसाधनत्वोक्तावपि मुक्तिमात्रसाधनत्वस्यानुक्तत्वादिति भावः । ज्ञानिनः औदार्यान्मोक्षादन्यफलेच्छाया एवासम्भवा-त्तदुक्तिः प्रशंसामात्रमिति न्यायविवरणं मनसि निधायाह– **ज्ञानिनामिति** ॥ सूत्रे 'अतः' इत्यस्य पूर्वप्रकृतपरामर्शकत्वोपपादनाय प्रवृत्तं यद्दर्शनार्थमिति भाष्यं व्याचष्टे– **यस्येति** ॥ सूत्रे 'सर्व' शब्दाश्रवणात् कथं भाष्ये सर्वपुरुषार्थेत्युक्तमित्यतः पुरुषार्थशब्दसामर्थ्यादेव तल्लब्धमित्यभिप्रेत्याह– **पुरुषैरिति** ॥ प्रायशो न सम्भवत्येव कस्यचित् सौभर्यादिवद्भवति चेज्ज्ञानेनैवाशेषमीप्सितं भवतीति व्यवस्थोपपत्तेरिति न्यायविवरणं मनसि निधायाह– **श्रुत्यादेः प्रायेणेति** ॥

## भावदीपः

कतिचिन्नयैरुच्यत इति भ्रमनिरासायाह ॥ **एतत्पादार्थमिति** ॥ एतत्प्रदर्शनं च 'वैराग्यतो भक्तिदार्ढ्यं तेनोपासा यदा भवेत् । आपरोक्ष्यं भवेद्विष्णोः' इत्यनुभाष्योक्तदिशा पूर्वपादेनास्य पादस्य सङ्गत्युक्त्यर्थमिति भावेन सङ्गतिपरतया भाष्यं व्याचष्टे ॥ **भगवदिति** ॥ **उक्तेति** ॥ तन्निर्धारणार्थनियम इत्यादौ तथा निर्णयादिति भावः ॥ **उक्तमिति** ॥ तत्रैवेत्यर्थः । यद्वोपासनयैव ज्ञानं न तु कर्मत इत्येतत् साधनं ज्ञानसम्पत्तौ प्रधानमिति जिज्ञासासूत्रभाष्ये प्रकाशश्च कर्मण्य-भ्यासादित्यत्र चेत्यर्थः । एतच्च तया ज्ञानं जायते न तु कर्मत इत्येतदनुक्त्वा सामर्थ्योक्तिरयुक्तेति शङ्काव्युदासाय ॥ **सामर्थ्यमिति** ॥ सर्वपुमर्थहेतुत्वपापालेपकरत्वयोग्यजनमात्रलभ्यत्वसन्निधिमात्रेण फलसम्पादकत्वादिसामर्थ्यमित्यर्थः । अस्मिन्नित्यस्य आद्याधिकरण इति सामर्थ्यमित्यस्य सर्वपुरुषार्थहेतुत्वरूपमहिमेत्यर्थमुपेत्यान्तर्भावसङ्गतिसूचकत्वमभ्युपेत्याह ॥ **अत्रादाविति** ॥ ब्रह्मेति

(भावदीपः)

शास्त्रे साधनेत्यध्याये ज्ञानस्य महिम्न इति पादेऽन्तर्भाव उपपादितो ज्ञेयः । एवमग्रेऽपि प्रतिनयं बोध्यम् ॥ **निरवधारणेति** ॥ नान्यः पन्था इति 'दृष्ट्वैव तम्' इत्यवधारणेऽपि 'तं विद्वानमृत एव भवति' इति । 'दृष्ट्वैव तं मुच्यत' एव न तु फलान्तरं प्राप्नोतीत्येवंरूपावधारणं विनोक्तिरित्यर्थः । ज्ञानिनः औदार्यान्मोक्षादन्यफलेच्छाया एवासम्भवादित्यन्यत्रोक्तहेतुमाह ॥ **ज्ञानिनामिति** ॥ असिद्धिनिरासाय औदार्यशब्दार्थतया विरक्तत्वेनेत्युपपादकोक्तिः । कथं ज्ञानिनो विरक्तत्वमित्यतो वैराग्यस्य ज्ञानपूर्वभावित्वादिति भावेन तत्र श्रुतिस्मृती आह ॥ **परीक्ष्येति** ॥ श्रुत्यर्थो जिज्ञासासूत्रे व्यक्तः । सर्वान्पार्थमनोगतान् । 'आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते' इति द्वितीये गीतोक्तिरित्यर्थः । हेतोरप्रयोजकत्वं निराह ॥ **इच्छेति** ॥ **अत इति** ॥ ज्ञानिनः फलान्तरानिच्छुत्वादनिष्टस्य चापुरुषार्थत्वादित्यर्थः । तस्माद्दर्शनादित्यन्तभाष्यं सौत्रातःशब्दारूढं कुर्वन् यद्विषयदर्शनार्थमिति धीनिरासाय भाष्यं व्याचष्टे ॥ **यस्येति** ॥ मुमुक्षोर्मोक्षादन्यफलप्राप्तावनिष्टफलकत्वशङ्कानिरासलाभाय पुरुषार्थपदं व्याचष्टे ॥ **पुरुपैरिति** ॥ भावस्तु अस्माभिस्त्वित्यादिनाऽग्रे व्यक्तः । यद्यपि संविभाति मनुते भा ज्ञान इति धातोरिति तत्वप्रदीपोक्तिस्तथापि धातूनामनेकार्थत्वात्प्रकृतोपयोगायाह ॥ **संविभातीच्छतीति** ॥ प्रागुक्तशङ्कामनूद्य तन्निवर्तकतया प्रायशो न सम्भवत्येवेत्यन्यत्रोक्तं योजयति ॥ **न च श्रुत्यादिनेति** ॥ परीक्ष्येति श्रुत्यादिना इच्छाभावावगमादित्यर्थः । कस्यचित् सौभर्यादिवत् सम्भवतीति चेत् ज्ञानेनैवाशेषमभीप्सितं भवतीत्यन्यत्रोक्तं सौत्रपुरुषार्थपदभावं प्रायःपदव्यावर्त्यं व्यनक्ति ॥ **अस्माभिस्त्विति** ॥ **सौभरिकर्दमेति** ॥ व्यक्तमेतन्नवमस्कन्धे । 'जातस्पृहो नृपं विप्रः कन्यामेकामयाचत' इत्यादिना । तथा तृतीयस्कन्धे 'प्रियायाः प्रियमन्विच्छन्कर्दमो योगमास्थितः' इत्यादिना ।

## अभिनवचन्द्रिका

**एतत्पादार्थमिति** ॥ 'तर्हि अध्यायस्यैकार्थत्वात्पादभेदः किं निवन्धन इत्यतः साधनेऽप्यवान्तरभेदेनेति भावेन' इति वर्तते । तस्य 'एतत्पादार्थं दर्शयति' इत्यनेन सम्बन्धः । अप्रसक्तत्वात् ज्ञानस्य तत्सामर्थ्यं न निरूपणीयमित्यत आह– **भगवदपरोक्षज्ञानार्थमिति** ॥ ज्ञानस्य द्वेधा प्रसक्तिः । अर्थतः कण्ठतश्चेति । तत्राऽऽद्या 'भगवदपरोक्षज्ञानार्थम्' इत्यनेनोक्ता । द्वितीया 'तज्ज्ञानं तया भवतीति चोक्तम्' इत्यनेनोक्ता । ततश्च नाऽप्रसक्तनिरूपणमिति भावः ।

(अभिनवचन्द्रिका)

अनेन अस्य पादस्य पूर्वपादाऽऽनन्तर्ये कारणं चोक्तं भवति । अतिशयेन प्रवृत्तिरिति । अतिशयबुद्ध्या प्रवृत्तिर्न स्यात्, किन्तु स्वप्रयोजनसाधनताबुद्ध्यैव प्रवृत्तिः स्यादित्यर्थः । एतेन सर्वपुरुषार्थसाधनत्वरूपमहिम्नो निरूपणाभावेऽपि तृषार्तस्य अतिशयेन पानीये प्रवृत्तिवत् मुमुक्षोरतिशयेन ज्ञाने प्रवृत्तिसम्भवात् महिमवर्णनमयुक्तमिति परास्तम् । पुरुषार्थत्वमेव न स्यादिति । अनिष्टपुण्यवत् मोक्षविलम्बहेतुत्वात् ज्ञानस्य पुरुषार्थत्वं न स्यादित्यर्थः । एतेन इच्छाभावेऽपि स्वर्गादिप्राप्तिरिति वदता स्वर्गादीनामपुरुषार्थत्वस्याङ्गीकृतत्वात् इष्टापादनमिति परास्तम् । परेणेष्टतयाऽङ्गीकृतस्य ज्ञानस्यैवाऽनिष्टत्वापादनात् ॥ **न तत्सर्वथेति** ॥ सर्वपुरुषार्थहेतुत्वात्सर्वोत्कृष्टं साधनमिति बुद्ध्यौ नापादनीयम्, किन्तु मोक्षसाधनत्वबुद्ध्यैवाऽपादनीयमित्यर्थः । एतेन पुरुषार्थान्तरसाधनत्वाभावेऽपि मोक्षसाधनत्वात् तदिच्छुना सर्वथाऽऽपाद्यमेवेति 'न तत्सर्वथाऽऽपाद्यम्' इत्ययुक्तमिति परास्तम् ॥ **श्रुत्यवलम्बेनेति** ॥ 'यं यं लोकम्' इति श्रुत्यवलम्बेनेत्यर्थः । ज्ञानिनां मोक्षेतरपुरुषार्थेच्छा न भवतीत्याशङ्कापरिहाराय पुराणसिद्धसौभर्यादिदृष्टान्तोक्तिः ।

## वाक्यार्थमुक्तावली

**एतत्पादार्थमिति** ॥ अध्यायस्यैकार्थत्वात्पादभेदः किंनिबन्धनः इत्यतः साधनेऽप्यवान्तरभेदादिति भावेनेति पूरणीयम् । तज्ज्ञानं तया भवतीति चोक्तमिति । तन्निर्धारणार्थनियम इत्यादावुक्तमित्यर्थः ॥ **सर्वपुरुपार्थेति** ॥ अपवर्गस्येव स्वर्गाद्यशेषपुरुषार्थस्यापि साधनत्वमहिम्न इत्यर्थः । देवानामेवाङ्गाश्रितत्वेन तदङ्गे उपसंहारेऽधिकार इति कथनप्रसङ्गात् । तेषामेव तादृशोपासनाजन्यापरोक्षज्ञानेन सकलपुरुषार्थावाप्तिः । **कर्मणा तु** तत्फलेऽतिशयाधानमिति बादरायणीयमतस्य दर्शनाच्चेत्यत्रोक्तश्रुतिरूपप्रमाणेनैवात्र पुरुषार्थोऽतः शब्दात् अधिकोपदेशात्तु बादरायणस्यैवं दर्शनादित्यनेनोपन्यासादनन्तरसङ्गतिः । अन्यथा न तत्रेति । तथा च जिज्ञासासूत्रे ज्ञानाय विचारविधानमयुक्तमिति भावः । एवमुत्तरत्रापि ॥ **किं मोक्षेति** ॥ ज्ञानं किं मोक्षमात्रसाधनमुत फलान्तरस्यापि साधनमिति चिन्ता । तदर्थं ज्ञानिनां मोक्षेतरपुरुषार्थेच्छा नास्त्युतास्तीति ॥ **निरवधारणेति** ॥ 'विद्यैव तु निर्धारणात्' इत्यत्र ज्ञानस्य मुक्तिसाधनत्वोक्तावपि मुक्तिमात्रसाधनत्वस्यानुक्तत्वादिति भावः । 'विशुद्धसत्वः कामयते यांश्च कामानिति

(वाक्यार्थमुक्तावली)

प्रदर्शकेन शब्दात्' इति सूत्रखण्डेन व्यवच्छेद्यमौदार्यमित्युक्तन्यायं वैराग्यमित्यर्थत्वेन प्रदर्शयति । **ज्ञानिनामिति** ॥ 'यद्यपि परीक्ष्य लोकान्' इति श्रुतिः जिज्ञासुविषया तथापि कैमुत्येन ज्ञानिनामन्यकामाभावे प्रमाणं भवत्येवेति तदुदाहरणं युक्तम् । प्रजहातीत्यत्र तु स्थितप्रज्ञस्तदोच्यत इति सर्वकामप्रहाणस्य ज्ञानिलक्षणत्वोक्तेः प्रकृतोपयोगः स्फुटः ।

सूत्रे पूर्वं ज्ञानस्याप्रकृतत्वादत इति कथं परामर्श इत्यतः प्रवृत्तं यद्दर्शनार्थमिति भाष्यं व्याचष्टे ॥ **यस्येति** ॥ सूत्रे सर्वशब्दश्रवणात् कथं भाष्ये सर्वपुरुषार्थ इत्युक्तमित्यतः स्वर्गादीत्यनुक्त्वा पुरुषैरर्थ्यत्वरूपावच्छेदकोक्त्यैव तल्लब्धमित्याह ॥ **पुरुषैरिति** ॥ शब्दादित्यनेन सूचितं व्यवस्थितिरित्युक्तन्यायं दर्शयन् 'ब्राह्मणो निर्वेदमायात् । प्रजहाति यदा कामान्' इत्यादेः गतिमाह ॥ **श्रुत्यादेरिति** ॥

## तत्त्वसुबोधिनी

अस्मिन्निति भाष्ये इदं शब्दप्रयोगः पूर्वयोगः पूर्वपदेनास्य सङ्गतिप्रदर्शनार्थ इत्यभिप्रेत्याह ॥ **भगवदपरोक्षेति** ॥ उक्तं विद्यैव तु निर्धारणादित्यत्रेत्यर्थः । सर्वपुरुषार्थत्वसाधनत्वमहिम्न इति । अत्र पूर्वाधिकरणे दर्शनाच्चेत्यनेनोक्तश्रुतिरूपप्रमाणमेवात्रापि ज्ञानस्याशेषपुरुषार्थसाधनत्वे शब्दादित्यनेनोच्यते इत्यनन्तरसङ्गतिरिति भावः । ननु इच्छाभावेऽपि ज्ञानेनास्तु मुक्तिः ततः पुरुषार्थः तस्यैव मुक्तिमानित्यत आह ॥ **इच्छाभावेऽपि इति** ॥ पुरुषेच्छाद्युपपादनस्यैव पुरुषार्थत्वात् इति भावः । सूत्रे अत इत्यस्य पूर्वप्रकृतपरामर्शोपपादनाय प्रवृत्तं यद्दर्शनार्थमिति भाष्यं व्याचष्टे ॥ **यस्येति** ॥ सूत्रे सर्वशब्दाश्रवाणात् कथं भाष्ये सर्वपुरुषार्थेत्युक्तमित्यतः पुरुषार्थशब्दसामर्थ्यादेव तल्लाभ इत्याह ॥ **पुरुषैरिति** ॥ **संविभाति** इच्छतीति । संविभाति मनुते भा ज्ञान इति तत्वप्रदीपे वर्णकान्तरमुक्तमिति ध्येयम् ॥ **श्रुत्यादिनेति** ॥ परीक्ष्य लोकान्, प्रजहाति यदा कामानिति श्रुतिस्मृतिभ्यामित्यर्थः ।

## वाक्यार्थविवरणम्

**पुरुषार्थत्वमेवेति** ॥ पुरुषैरर्थ्यस्यैव पुरुषार्थत्वादिति भावः ॥ **सर्वथेति** ॥ स्वर्गमात्रसाधनात्कर्मणः सकाशादाधिक्येनेत्यर्थः । श्रुत्यादिनेति 'परीक्ष्य लोकान्' इत्यादिश्रुत्यादिनेत्यर्थः ॥ **इच्छाभावादिति** ॥ इच्छाभावावगमादित्यर्थः ।

## वाक्यार्थमञ्जरी

**उक्तमिति** ॥ विद्यैव तु निर्धारणादित्यत्रेत्यर्थः ॥ **सामर्थ्यमिति** ॥ स्वर्गापवर्गाद्यशेषपुरुपार्थ-साधनत्वादिरूपमित्यर्थः । तथा च कारणनिरूपणानन्तरं कार्यनिरूपणादनन्तरसङ्गतिरिति भावः ॥ **निरवधारणेति** ॥ विद्यैव तु निर्धारणादित्यत्र ज्ञानस्यैव मुक्तिसाधनत्वोक्तावपि मुक्तिमात्र-साधनत्वस्यानुक्तत्वादिति भावः ॥ **न स्यादिति** ॥ पुरुषैरर्थ्यस्यैव पुरुषार्थत्वादिति भावः ।

ॐ पुरुषार्थोऽतःशब्दादिति बादरायणः ॐ ॥ पुरुषार्थः पुरुषैरर्थ्यः अपेक्ष्यः सर्वोऽपि अतः ज्ञानादेव भवति कुतः शब्दात् यं यं लोकमिति श्रुतेरिति बादरायणाचार्यो मन्यत इत्यर्थः ॥ **सौभरीति** ॥ तेन युगपत्पञ्चाशद्देहग्रहणेन तावत्सङ्ख्याकस्त्रीभिः क्रीडनादिति भावः ॥ **कर्दमेति** ॥

## सूत्रभाष्यम्

**॥ ॐ शेषत्वात्पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः ॐ ॥ २ ॥**

**अस्त्येव मोक्षसाधनत्वं ज्ञानस्य । स्वर्गादिषु तत्साधनकर्मशेषत्वेन । 'स्वर्गं धनाद्देहतो वै गृहाच्च प्राप्स्यन्ति धीरा न त्वधीराः कुतश्चित्' इति वदति जैमिनिः ।**

## तत्त्वप्रदीपिका

शेषत्वादित्यादि सूत्रम् । **अस्त्येव मोक्षसाधनत्वं ज्ञानस्यान्यसमुच्चितस्य । स्वर्गादिसाधनत्वं तत्साधनकर्मशेषत्वेन । तत्र प्राधान्यं कर्मणः । एवं सर्वपुरुषार्थसाधनत्ववादो यथा 'स्वर्गं धनात्'** इत्यादिश्रुतौ धनादिषु कर्मशेषत्वेन स्वर्गादिसाधनत्ववादस्तद्वदिति जैमिनिर्मन्यते । ननु नैवं सूत्रयोजना सम्यग्भाति । अस्त्येव मोक्षसाधनत्वं ज्ञानस्येति । मोक्षसाधनत्वमपि कर्मशेषत्वेनेति सध्रीचीना । विभाजकाभावात् । उत्तरसूत्रगतिश्च तादृशी दृश्यते । एवं च बहुश्रुत्यनुग्रहः । जैमिनिमतानुयायिनश्च कर्माङ्गत्वेन ब्रह्मज्ञानस्य पुरुषार्थसाधनत्वमाहुर्न केवलस्य, ब्रह्मवाक्यानां कर्मवाक्येनैकवाक्यतां ब्रुवन्तः । उच्यते । न तावत्सूत्रगतिनिरूपणाय मोक्षे ज्ञानस्य कर्मशेषत्व-मवगन्तुं शक्यते । भाक्तं वाऽनात्मवित्त्वात्तथा हि दर्शयति, विद्यैव तु निर्धारणात्, दर्शनाच्च, श्रुत्यादिबलीयस्त्वाच्च न बाध इत्यादिसूत्रविरोधात्तद्दर्शितश्रुतिविरोधाच्च । न च सूत्राणां श्रुतीनां चान्योन्यविरोधेनार्थः प्रत्येतव्यः । न चात्र श्रुतिर्दृश्यते । न च कर्मशेषत्वे ज्ञानस्य पृथक्

(तत्त्वप्रदीपिका)

जिज्ञासारम्भः सार्थः स्यात् । न च वाच्यं अस्त्वनारम्भणीयत्वं तन्मतसमाश्रयादिति । जैमिनिमत आरम्भणीयत्वात् । अन्यथा स्वमतस्यैव स्वाचार्योक्तिविरोधेन शिष्टापरिग्रहप्रसङ्गात् । 'विविदिषन्ति यज्ञेन' इति च श्रुतिः ।

यत्तु कैश्चिद्विव्रियते कर्तृत्वेनाऽत्मनः कर्मशेषत्वात्तद्विज्ञानमपि व्रीहिप्रोक्षणादिवद्विषयद्वारेण कर्मसम्बन्ध्येवेत्यतस्तस्मिन्नवगतप्रयोजन आत्मज्ञाने या फलश्रुतिः साऽर्थवादः । यथाऽन्येषु द्रव्य-संस्कारकर्मसु 'यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति यदावृङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते यत्प्रयाजानुयाजा इज्यन्ते वर्म वा एतद्यज्ञस्य वर्म यजमानस्य भ्रातृव्याभिभूत्या' इत्यादिरिति जैमिनिर्मन्यत इति । तदयुक्तम् । न हि परमात्मज्ञानार्थं कर्मादिकं वदन् जैमिनिस्तज्ज्ञानस्य सर्वत्र कर्मशेषत्वं ब्रूयात् । उक्तं हि समाकर्षाधिकरणेऽन्यार्थमिति सूत्रे परमगुरुभगवन्मतैकदेशमाश्रित्य जगति शब्दव्यवहारस्य गतिं ब्रुवता जैमिनिना परमात्मज्ञानार्थं कर्मदेवादिकं जगद्वदति वेदराशि-रिति । जीवात्मनोऽन्यस्य परमेश्वरस्य देवानां च विग्रहिणां नाभ्युपगतिः प्रथमकाण्ड इति चेन्न । ईश्वरादिदेवतानभ्युपगमे उद्देश्याभावात्तत्तदुद्देशेन यागासम्भवात्, तद्विधेरानर्थक्यप्रसङ्गात् । अभ्युपैति च जैमिनिर्देवतास्वरूपादिकम् । तत्प्राधान्यं हि सप्रमाणकं नवमाध्याये सूत्रयामास 'देवता वा प्रयोजयेदतिथिवत् भोजनस्य तदर्थत्वात्,' 'स्मृतेरुपचारादन्यार्थदर्शनाच्च,' 'आर्थापत्त्याच्च' इति ॥

ननु पूर्वपक्षसूत्राण्येतानि । तथा हि देवताविग्रहादिवादिनां पक्षं सविस्तरमनुवदत्यैतैर्निरस्यति चोत्तरत्र– 'अपि वाशब्दपूर्वत्वाद्यज्ञकर्म प्रधानं स्यात् गुणत्वे देवताश्रुतिः' इति । मैवम् । बहुप्रमाणोपन्यासाद्देवताप्राधान्यपक्षेऽपि वेत्यन्यपक्षेऽरुचिसूचनाच्च देवताप्राधान्यपक्ष एव प्रेयानिति गम्यते । अन्योऽपि पक्षो दर्शितः कर्मैकभक्तप्राकृतजनच्छन्दानुवृत्त्या । तत्रापि प्राधान्यं ब्रुवता न देवताविग्रहाद्यभावोऽभिप्रेतः । विद्यमानस्य हि देवतादेः स्रुगाज्यवह्न्यादिवद्गुणत्वमपि यथाश्रुतं सम्भवेत् । 'गुणत्वे देवताश्रुतिः' इति हि तत्र चाऽह । न च विग्रहादिकं तत्प्रमाणानि चोपन्यस्तानि प्रत्याचख्यौ । सर्वं प्रत्याचख्यावुत्तरभाष्य इति चेत्, उत्सूत्रं प्रत्याख्यानप्रयत्नेऽपि हन्त न महर्षिः प्रमाणसिद्धं स्वसिद्धान्तं परित्यजति । यदिह फलं ददाति तत्प्रयोजकमिति प्रत्याख्यानप्रयत्नोऽपि ह्याह । देवतार्थता यागस्य गम्यते । फलार्थताऽपि तु न प्रतिषिध्यते । फलं च पुरुषार्थः । पुरुषार्थाय च नः प्रवृत्तिरिति चाऽह ॥

(तत्त्वप्रदीपिका)

यजिर्देवतापूजा, सा पूज्यमानप्रधाना लोके लक्ष्यत इति च न लोकवदिह भवति । पूज्यमानं पूजाप्रधानकं यद्धि फलवत्तन्नः प्रयोजकम् । तस्माद्यज्ञकर्म प्रधानमिति चेन्न । तत्पूजात्मकस्य कर्मणस्तदधीनमेव फलवत्त्वं, देवतैव हि फलदा, अतस्तज्ज्ञानपूर्विकैव तत्पूजा युक्ता । 'यस्यै देवतायै हविर्गृहीतं स्यात् तां ध्यायेद्वषट् करिष्यन् यां ह्यन्यमना वाच वदत्यसुर्या वै सा वागदेवजुष्टा, आहुतिभिरेव देवताः प्रीणाति तस्मै प्रीता इषमूर्जं नियच्छन्ति' इति हि श्रुतयः । 'स इज्यनेन स विशा स जन्मना' 'पुण्येन पुण्यं लोकं नयति' 'एष ह्येव साधुकर्म कारयति' 'जगृम्मा ते दक्षिणमिन्द्र हस्तम्' इत्यादि च । तदन्यार्थवचनं देवताविग्रहभोजनप्रसादैश्वर्य-फलदानाद्यवगमयितुं नालमिति चेत् । अपूर्वार्थो विधिः क्रियाकर्तव्यतां कथमवगमयेत् । यजिपरो वा कथं पय आदिकम् । स्पुत्यादिरूपतयाऽविधिपरत्वादयथार्थत्वमर्थवादादीनमिति चेन्न । प्रमाणविरोधेऽपि वचनानां दशदाडिमादिवाक्यवदयथार्थत्वाङ्गीकारे यज्ञकर्मणः फलवत्त्वश्रुतिः कथं विश्वसनीया स्यात् । न च ते वदन्ति शतवत्सहस्रवदित्यादेरयथात्वम् । तादृशानामभिमानि-देवताविषयत्वं ह्यसीषधाम । विग्रहादिवचनानां विद्यमानवादत्वेऽपि न विरुद्धं स्तुतित्वम् । न च तुविग्रीवादिपदानां तत्तदर्थवचने वाक्यभेदः । 'अरुणयैकहायन्या पिङ्गाक्ष्या गवा क्रीणाति' इत्यादिवदेकवाक्यतोपपत्तेः । देवताद्यभाववादिनश्चास्येन्द्राग्न्यादिस्वरूपवादी वेदो वाच्यरहितत्वाद-प्रमाणमेव स्यात् ।

नास्माभिर्देवतास्वरूपं प्रतिपिध्यते विग्रहाद्येवेति चेन्न । स्वरूपेऽपि स्वोक्तन्यायेनैव प्रमाणा-भावस्याभिप्रेतत्वात् । इन्द्रो नाम कश्चिदस्तीत्यत्र च श्रुतिरेव हि प्रमाणम् । तथा च तद्धर्माः श्रूयमाणाः कथमप्रमाणकाः स्युः । अतो देवतादिनिरासप्रयासो व्यर्थः । न शोभते च वैदिकानाम् । जैमिनिस्तु धर्ममीमांसको न तत्प्रत्याचख्यावित्याख्यातम् । देवतामीमांसा तु भगवतैवाऽरम्भणीयेति न स्वयमारेभे । नानादरात् । तस्मात्परमात्मज्ञानार्थं कर्मदेवतादिकं वदति वेद इति जैमिनिवादो युक्तः । तत्र पुनः प्रकारविशेषाः शिष्यान्तरचिन्तिताः ।

ननु कौशीतकिब्राह्मणगतबालाक्यजातशत्रुसंवादसमन्वयप्रतिपादनेन तत्र जीवप्राधान्यं निरस्य परमात्मज्ञापनार्थं 'एष प्रज्ञात्मैतैरात्मभिर्भुङ्क्ते' इत्यादिको जीवपरामर्श इति वदति जैमिनिरिति केचि-दन्यार्थमित्यादिसूत्रं योजयन्ति । मैवम् । जीवस्य परमात्मनोऽन्यत्वाभ्युपगमे स्वसिद्धान्तविरोधात् । न स्वसिद्धान्तोऽयं जैमिनेरेवेति चेन्न । अप्रत्युक्तत्वात् । एवं च नेष्टसिद्धिः । उत्तरत्र

(तत्त्वप्रदीपिका)

आश्मरथ्यौडुलोमिपक्षयोर्भेदस्पर्शित्वमुपन्यस्य भेदलेशस्याप्यविषह्यत्वेनाभेदविषयत्वेनोपन्यस्तम् । काशकृत्स्नमतमेव हि स्वाभिमतमिति परिजल्पितम् । अन्यत्वेन भ्रान्त्या प्रतीतस्य सम्यग्ज्ञापनार्थं जीवपरामर्श इति चेद्ब्रूयात्स स्वयं ब्रह्मात्मदर्शी कस्येदं व्याचक्षीत । स्वप्नस्थवदन्यं ददर्शेति चेन्न । प्रबुद्धस्य तदभावात् । अप्रबुद्धत्वेन तद्वचनं पुमर्थेच्छवो गृह्णीयुः । प्रपञ्चितं चैतत्प्रागेव प्रथमाध्याये । समन्वयादन्यद्वक्तुमयुक्तमित्युक्तमिति चेत्सत्यम् । अत एव सामान्यतः प्रतिज्ञातं समन्वयं प्रतिवाक्यं प्रतिपदादिकं च प्रतिपाद्य अन्ततो निगमयाञ्चक्रे 'एतेन सर्वे व्याख्याता' इति सर्वशब्दसमन्वयमिति ब्रूमः ॥

न च वाच्यं एतेन सांख्यनिराकरणोक्तन्यायेनावशिष्टा अप्यण्वादिकारणवादिनस्सर्वेऽपि निराकृता व्याख्याता इति सूत्रयोजनेति । समन्वयसम्बन्धादृते केवलसांख्यनिराकरणस्यैवासमञ्जसत्वात् । प्रधानस्य वैदिकत्वं निराक्रियत इति चेन्न । महदादिविकारवतः परतन्त्रस्य प्रधानस्यामुख्यार्थतया वैदिकत्वाविरोधात् । स्वतन्त्रं तूपरिष्टात्प्रत्यादिष्टम् । अतः सर्वशब्दानां ब्रह्मणि प्रवृत्तिप्रतिपादने तैर्जगति व्यवहारस्य सर्वजनीनस्य गतिर्वक्तव्येति तदर्थं युक्तं समाकर्षादिति कथनम् । अधिकारिभेदान्मतभेद इत्यवादि । न च वाक्यान्वयादित्यधिकरणान्तरकल्पना युक्ता । विवेचकाभावात् । एकाधिकरणत्व उक्तसम्बन्धसम्भवाच्च । कर्मादिवाक्यानां शिष्यान्तरमतेऽपि परमात्मसम्बन्धकथनस्य युक्तत्वात् । तत्पक्षे भगवतः स्वमताभावप्रसङ्गाच्च । काशकृत्स्नीयं मतं हि स्वीक्रियत इति चेत्, काशकृत्स्नस्तावत्किं मन्यते? जीवेशैक्यमिति चेन्न । दत्तोत्तरत्वात् । न ह्यवस्थितिशब्दस्तद्वाचक इति ।

अथाप्येवं तत्र सूत्रगतिमुपगच्छन्ति बृहदारण्यके मैत्रेयीब्राह्मणे 'न वा अरे पत्युः कामाय' इत्यारभ्य 'आत्मनस्तु कामाय सर्वं प्रियं भवति । आत्मा वा अरे द्रष्टव्यः श्रोतव्यः' इत्यादिना द्रष्टव्यत्वादिनोपदिश्यमानो जीवः परमात्मा वेत्याकाङ्क्षायां प्रियसंसूचितेन जीवेनोपक्रमात्स एवेत्याशङ्क्य वाक्यस्यावयवशः परमात्मन्येवान्वयात्स एव द्रष्टव्यत्वादिनोपदिश्यत इति प्रक्रान्ते सिद्धान्ते प्रियसंसूचितेन जीवेनोपक्रमस्य गतिरुच्यते 'प्रतिज्ञासिद्धेः' इत्यादिसूत्रे । 'आत्मनि विज्ञाते सर्वमिदं विज्ञातं भवति' इदं सर्वं यदयमात्मा' इति प्रतिज्ञासिध्यर्थमभेदांशेनोपक्रम इत्याश्मरथ्यः । देहेन्द्रियाद्युपाधिवद्धस्य ज्ञानध्यानयोगेन तस्मादुत्क्रमिष्यतो ब्रह्मभावप्राप्तेर्जीवेनोपक्रमः कृत इत्यौडुलोमिः । परस्यैव जीवरूपेणाप्यवस्थितेरभेदेनोपक्रम इति काशकृत्स्नो मन्यते । अधिकृतः

(तत्त्वप्रदीपिका)

पर एव जीव इति तन्मतं भवतीति तदनुसृतमाश्मरथ्येन। भेदांशस्याप्यभ्युपगतत्वात् द्वितीयपक्षस्य चावस्थापेक्षया भेदाभेदप्रणयित्वादिति ॥

अत्र ब्रूमः। नात्र जीवेनोपक्रमोऽस्ति। येन तद्गतिरन्विष्येत। परमात्मन एव सर्वतः प्रियत्वमुच्यते यतस्तत्प्रियत्वेनैवान्यस्य प्रियत्वं भवति। तथा च भागवते–

'प्राणबुद्धिमनःखात्मदेहापत्यधनादयः।
यत्सम्पर्कात्प्रिया आसंस्ततः को न्वपरः प्रियः' इति।

तत्र ह्यात्मनोऽपि परमात्मार्थे प्रियत्वमुदितम्। आव्याकृतब्राह्मणे च 'आत्मेत्येवोपासीत' इति परमात्मानमुपास्यत्वेनोपदिश्य 'अनेन ह्येतत्सर्वं वेद' इत्यादिना तत्प्रसादात्सर्वज्ञत्वादिकमुक्त्वा 'तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मात्' इति तस्य सर्वतः प्रेष्ठत्वं कथयति ॥

'स एष विष्णुर्भगवान् पुत्राद्वित्तात्तथाऽऽत्मनः।
अन्यस्मादपि सर्वस्मात्प्रेष्ठ एव स्वभावतः ॥
आत्मनोऽपि प्रियत्वं तु तेनैव कृतमञ्जसा।
आत्मनो निरयायैव कुर्यात्कर्माणि नित्यशः ॥
यतोऽतस्त्वात्मनश्चापि स्वाप्रियत्वमुदाहृतम्।
स चेदप्रियकृद्विष्णुर्नाऽत्माऽपि प्रियतां व्रजेत् ॥
अस्मिन्प्रिये प्रियं सर्वं तस्मादेकः प्रियो हरिः।
स चाऽत्मशब्देनोद्दिष्टो यस्मादात्तगुणः प्रभुः' इत्याध्यात्मे ॥

अतो जीवेनोपक्रमस्य गतिरुच्यत इत्येतद्दुरुक्तम् ॥

न च बहुभिस्सूत्रैस्तत्र तत्राभेदाशङ्कां निरस्य प्रतिपादितभेदस्य भगवतः शिष्यस्य काशकृत्स्नस्याभेदाभिप्रायो भवति। तद्भावे च स्वसिद्धान्तं किं न पृथक् सूत्रयेत्। न च पूर्वपक्षपर्यवसानं निर्णयशास्त्रे शोभत इत्यास्तां विस्तरः। अतः स सन्देहो व्यपोढः, जैमिनिमतानुसारेण पूर्वपक्षसूत्राण्येतानीति। 'व्यासचित्तस्थिताकाशात्' इत्यादिप्रमाणैः सिद्धान्तैकदेशे योजयितुं सुशकत्वाच्च सूत्राणाम्। अतो विभाजकाभावो नाऽशङ्कनीयः। ये तु ज्ञानस्य मोक्षसाधने कर्मशेषत्वं ब्रूयुस्ते न जैमिनिमतमनुसरन्तीत्यवोचाम। अकुशला व्युत्पत्तावबोद्धारो विधिशेषाणामकर्तारः

(तत्त्वप्रदीपिका)

**परमधर्माणामगन्तारः फलवितानानामित्यस्याः पदव्या दूरतो निरस्ता इति न किल पुरस्तात्प्रास्तविषयः ।**

## तत्त्वप्रकाशिका

**एतमर्थमाक्षिपत्सूत्रमुपन्यस्य व्याचष्टे ॥ शेषत्वादिति ॥ यदुक्तं मोक्षादिसमस्तपुरुषार्थसाधनं ज्ञानमिति तत्रास्तु ज्ञानस्य मोक्षसाधनत्वं न तु स्वर्गादिसाधनत्वम् । तत्साधनं तु कर्मैव । न चैवं यं यं लोकमिति ज्ञानस्य सर्वपुरुषार्थसाधनत्ववादविरोधः । ज्ञानस्यापि कर्मशेषत्वेन स्वर्गादिसाधनत्वाभ्युपगमात् । न च वाच्यं ज्ञानस्य कर्मशेषत्वाभ्युपगमेऽपि पुरुषार्थवादविरोधानतिवृत्तिः । पुरुषार्थवादे ज्ञानस्य प्राधान्यदर्शनात् । न हि शेषत्वे तथा प्रयोगो दृष्ट इति । स्वर्गसाधनकर्मशेषेऽपि धनादौ स्वर्गं धनादिति प्राधान्यप्रयोगदर्शनात् । तद्वदत्राप्युपपत्तेरिति जैमिनिराचार्यो मन्यत इति भावः । अत्र ज्ञानस्य कर्मशेषत्वं नाम कर्मणैव सिध्यत्स्वर्गस्याधिक्यापादकत्वम् ।**

## गुर्वर्थदीपिका

स्वर्गं धनादितीत्यस्य स्वर्गं धनादिति वाक्येनेत्यर्थः ।

## भावबोधः

**प्राधान्यदर्शनादिति** ॥ 'ज्ञानादेव स्वर्गः' इत्यादिनिर्देशबलादिति भावः । ननु धनादेर्यज्ञादिकर्मजनकत्वेन भवतु तच्छेषत्वं, न ज्ञानस्य । अज्ञानिनामपि यज्ञादिदर्शनेन तस्य तदजनकत्वादित्यत आह– **अत्र ज्ञानस्येति** ॥ स्वरूपोपकारकस्येव फलोपकारस्यापि प्रयाजादेः शेषत्वदर्शनादिति भावः ।

## भावदीपः

**एतमिति** ॥ अस्माभिस्त्वित्यादिनोक्तमर्थमित्यर्थः । आक्षिपदित्यापाततः । वस्तुतस्तु देवेतराधिकारिणां ज्ञानस्य मोक्षान्यपुमर्थसाधकत्वं कर्मशेषत्वेनेति प्रतिपादयत्सूत्रमित्यर्थो ज्ञेयः । सर्वान्प्रति साक्षादेव ज्ञानं सर्वपुमर्थहेतुरिति पूर्वसूत्रार्थं भ्रान्तिमत्पुरुषाभिप्रायेणाक्षिपदित्युक्तम् । भाष्यं व्याचष्टे ॥ **यदुक्तमिति** ॥ **तत्रास्त्वित्यादि** ॥ एतच्च मोक्षेऽपि ज्ञानस्य कर्मशेषताशङ्काव्युदासाय

(भावदीपः)

भाक्तं वा, विद्यैव त्वित्यादिसूत्रनिर्णीतार्थस्मारणायोक्तमिति ध्येयम् । शेषत्वेनेति पदतात्पर्यं शङ्कापूर्वं व्यनक्ति ॥ **न चैवमिति** ॥ स्वर्गमित्यादिभाष्यशेषं शङ्कापूर्वं व्याचष्टे ॥ **न च वाच्यमिति** ॥ वक्ष्यमाणेति पदेनान्वयः ॥ **पुरुषार्थवादेति** ॥ यं यं लोकमिति पुरुषार्थसाधनत्ववादविरोधेत्यर्थः ॥ **प्राधान्यदर्शनादिति** ॥ यं यमिच्छति ज्ञानी तं तमाप्नोतीति साक्षाद्धेतुत्वप्रतीतेरिति भावः ॥ **तद्वदत्राप्युपपत्तेरिति** ॥ तदुक्तिः प्रशंसामात्रमिति न्यायविवरणोक्तरीत्या ज्ञानप्रशंसार्थत्वेन साक्षाद्धेतुत्वोक्त्युपपत्तेरित्यर्थः । ज्ञानस्य साधनादेरिव कर्मस्वरूपानिष्पादकत्वात्कथं तच्छेषत्वमित्यतः तन्निष्पादकत्वाभावेऽपि प्रयाजादिवदारादुपकारकत्वरूपं शेषत्वं भविष्यतीत्याह ॥ **कर्मशेषत्वं नामेति** ॥ यदेव विद्ययेति श्रुतेरिति भावः ।

## अभिनवचन्द्रिका

ननु न मोक्षसाधनस्य ज्ञानस्य कर्मशेषत्वं वक्तुं युक्तम् । अपरोक्षज्ञानविधुराणां कर्मिणां फलाभावप्रसङ्गात् । शेषविधुरस्य शेषिणः फलजनकत्वासम्भवादित्यत आह– **अत्र ज्ञानस्येति** ॥ न ब्रूमो वयमपरोक्षज्ञानस्य प्रयाजादिवत्फलसाधनसहकारितयाऽङ्गत्वमिति, येनोक्तदोषः स्यात्, किं नाम कर्मणैव जायमाने स्वर्गेऽतिशयाधायकत्वम् । ततश्च अपरोक्षज्ञानविधुराणां कर्मिणामतिशयाऽसम्भवेऽपि स्वर्गस्तु भविष्यत्येवेति भावः । ननु यथाश्रुतमपि ज्ञानस्य प्राधान्यं कर्मप्राधान्यवचनानुरोधात् न स्वीक्रियते, तथा ज्ञानप्राधान्यवचनानुसारात् कर्मणोऽपि प्राधान्यं परित्याज्यम्, किन्तु ज्ञानस्य कर्मशेषत्वमिव कर्मणो ज्ञानशेषत्वमङ्गीकार्यम् । न च परस्परशेषत्वमयुक्तमिति वाच्यम् । क्वचित् ज्ञानस्य प्राधान्यं, कर्मणः शेषत्वम्; क्वचित्तु कर्मणः प्राधान्यं, ज्ञानस्य शेषत्वमिति व्यवस्थासम्भवात् ।

## वाक्यार्थमुक्तावली

अस्त्येव मोक्षसाधनत्वं ज्ञानस्येत्युपस्कार्यप्रदर्शकभाष्ये मोक्षसाधनत्वमेवास्तीत्येवकारान्वयं मत्वा तद्व्यवच्छेदार्थं दर्शयति ॥ **न त्विति** ॥ तत्साधनकर्मेत्यंशस्यार्थमाह ॥ **तत्साधनं त्विति** ॥ सूत्रे पुरुषार्थवादस्य गतिप्रदर्शनात् तत्सङ्गमयितुं तद्व्यवच्छेद्यं विरोधमाशङ्क्य निषेधति ॥ **न चेति** ॥ सूत्रेऽत इत्येतद्विपरिणम्यास्येत्यनुवर्तते । अस्य ज्ञानस्य पुरुषार्थवादः स्वर्गादिपुरुषार्थ-

(वाक्यार्थमुक्तावली)

साधनत्ववादः शेषत्वात् स्वर्गादिहेतुकर्मशेषत्वात् न साक्षादिति मत्वा प्रवृत्तं ज्ञानस्य स्वर्गादिसाधनत्वं तत्साधनकर्मशेषत्वेनैवेति भाष्यं व्याचष्टे ॥ **ज्ञानस्यापीति** ॥ प्राधान्यदर्शनादिति । 'विशुद्धसत्वः कामयते यांश्च कामान् तान् कामान् जयते तस्मादात्मज्ञं ह्यर्चयेद्भूतिकामः' इति ज्ञानस्यानन्यशेषतया पुरुषार्थसाधनत्वदर्शनात् । कामी यान्कामान् कामयते इति शेषीभूतकर्म-प्राधान्यं प्रतीयेत । तस्मात् कर्मिणमर्चयेदित्यविधिः स्यात् । नत्वात्मज्ञमर्चयेदिति प्रयोग इति भावः । यथाऽन्येष्वित्यत्र पुरुषार्थवाद इत्यनुवर्तत इति व्याचष्टे ॥ **स्वर्गसाधनेति** ॥ स्वर्गसाधन-कर्मशेषेऽपि दक्षिणादिरूपेण दीयमाने धनादौ देहतः केवलदेहसाध्यात् नमस्कारपरिचर्यादिः गृहात् गृहस्थैरनुष्ठीयमानत्वात् ज्योतिष्टोमादेश्चेति कर्मसमानयोगक्षेमत्वे स्वर्गं धनादिति धनस्योक्त्या प्राधान्यप्रतीतेरिति भावः ।

ननु ज्ञानस्य कर्मशेषत्वं नाम व्रीहिमोक्षणादीनां प्रधानात् पूर्वस्वरूपनिष्पत्तावुपयोगि-त्वेनाङ्गत्ववत् न कर्मस्वरूपोपकारकाङ्गत्वम् । अज्ञानिनामपि कर्मदर्शनात् । नापि प्रयाजादिवत् फलसम्पादने सहकारितयाङ्गत्वम् । अज्ञानिकर्मणापि स्वर्गादिदर्शनात् । तदभावेऽपि फलोत्पत्तौ तस्य सहकारित्वानुपपत्तेः । दक्षिणादेरपूर्वनिष्पत्तावेवाङ्गत्वे दृष्टान्तानानुगुण्याच्च । मन्त्रहीनम-दक्षिणम् । 'श्रद्धाविरहितं यज्ञं तामसं परिचक्षते' इति भगवद्वचनात् । स्वर्गहेतुभूतापूर्वस्यैव दक्षिणाभावेऽनुत्पादात् । नापि कर्मसाध्ये स्वर्गे सुखविशेषाधायकत्वं शेषत्वं विवक्षितम् । दृष्टान्तानानुगुण्यादित्यत आह ॥ **अत्र ज्ञानस्येति** ॥ दार्ष्टान्तिक इत्यर्थः । शेषत्वमात्रे दृष्टान्त इति भावः । यद्वा यस्य यागस्य यावद्दक्षिणा क्लृप्ता । तावत्याः स्वरूपोपकारकत्वेन कर्मशेषत्वेऽपि तदपेक्षया द्वित्रिगुणाधिकायाः तत्फलेऽतिशयासाधकत्वं न सम्भवत्येवेति तदिह दृष्टान्तत्वेन विवक्षितमित्यदोषः ।

## तत्त्वसुबोधिनी

विरोधानतिवृत्तिमेव दर्शयति । पुरुषार्थवाद इति प्राधान्यदर्शनादिति । ज्ञानादेव स्वर्ग इत्यादीति भावः । ननु दोषत्वेऽप्यस्तु प्राधान्यप्रयोग इत्यत आह ॥ **न हीति** ॥ ननु धनादेः यज्ञादिकर्मजनकत्वेन भवतु तच्छेषत्वम् ॥ **न ज्ञानस्य** ॥ अज्ञानिनामपि यज्ञादिदर्शनेन तस्य तदजनकत्वादिति तत्राह ॥ **अत्र ज्ञानस्येति** ॥ स्वरूपोपकारकावघातादेरिव फलोपकारकस्यापि प्रयाजादेः शेषत्वदर्शनादिति भावः ।

## वाक्यार्थविवरणम्

**पुरुपार्थवादेति ॥** ज्ञानस्य प्राधान्येन सर्वपुरुषार्थसाधनत्वप्रतिपादक 'यं यं लोकम् ' इति श्रुतिविरोधानतिवृत्तिश्रुतिविरोध एव स्यादित्यर्थः । तदुपपादयति **॥ पुरुपार्थवाद इति ॥**

## वाक्यार्थमञ्जरी

पुरुषार्थवादः ज्ञानादेवाशेषपुरुषार्थो भवतीत्युक्तिः शेषत्वात् ज्ञानस्य कर्मोपकारकत्वात् कथं यथान्येषु धनादिषु कर्मोपकारकत्वेन पुरुषार्थवादस्तथेति जैमिनिराचार्यो मन्यत इत्यर्थः ॥ **प्राधान्यदर्शनादिति ॥** ज्ञानादेव स्वर्ग इति निर्देशबलादिति भावः । ननु धानाक्षेती विकर्मजनकत्वेन भवतु तच्छेषत्वं न ज्ञानस्याज्ञानिनामपि यज्ञादिदर्शनेन कर्मणस्तदजन्यत्वादित्यत आह **॥ अत्र ज्ञानस्येति ॥** स्वरूपोपकारकस्येव फलोपकारकस्यापि प्रयाजादेः शेषत्वदर्शनादिति भावः ।

## सूत्रभाष्यम्

**॥ ॐ आचारदर्शनात् ॐ ॥ ३ ॥**

**ज्ञानिनामेव देवादीनामाचारदर्शनात् ।**

## तत्त्वप्रदीपिका

उत्तरसूत्रगतिरप्येतादृशी । तद्यथा 'यं यं लोकम्' इति स्पष्टार्थश्रुतेर्दृष्टान्तमात्रावष्टम्भादर्थसङ्कोचकल्पः कष्ट इत्यत आह– **आचारदर्शनात् ॥** अपरोक्षज्ञानिनामेव देवानां कर्माचरणं दृश्यते– 'यज्ञेन वै देवा ऊर्ध्वाः स्वर्गलोकमायन्' 'प्रजापतिर्वा एतेनाग्रेऽयजत द्वादशाहेन' इत्यादिपु । अतो न ज्ञानेनैव सर्वं समाप्यते ।

## तत्त्वप्रकाशिका

ननु ज्ञानस्यैव सर्वपुरुषार्थसाधनत्वं किं न स्यात् श्रुतिवलात् । कुतः श्रुतेरर्थान्तरपरिकल्पनेत्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे **॥ आचारेति ॥** देवास्तावज्ज्ञानिनः । 'नैव देवपदं प्राप्ता ब्रह्मदर्शनवर्जिताः' । इति वचनात् । तेपां च कर्मानुष्ठानं दृश्यते 'यज्ञेन यज्ञमयजन्त देवाः' इत्यादौ । तथा च ज्ञानस्यैव सर्वपुरुपार्थसाधनत्वे कर्मानुष्ठानवैयर्थ्यं स्यात् । अतो न ज्ञानादेव सर्वपुरुपार्थप्राप्तिरिति भावः ।

## भावदीपः

सूत्रे चशब्दस्य ज्ञानिनां च देवानामित्यर्थमुपेत्य शङ्कानिवर्तकतया सूत्रमवतारयति ॥ **नन्विति** ॥ तत्वप्रदीपादौ क्वचिदाचारदर्शनादित्येव पाठो दृश्यते ॥ **श्रुतीति** ॥ यं यं लोकमिति श्रुतिबलादित्यर्थः ॥ **अर्थान्तरेति** ॥ कर्मशेषत्वरूपेत्यर्थः । यथाऽन्येष्वित्युक्तदृष्टान्तमात्रं तु न कल्पकमिति भावः । भाष्यं व्याचष्टे ॥ **देवा इति** ॥ **वचनादिति** ॥ द्वितीये गीतातात्पर्योक्त-वचनात् । इत्यादावित्यादिपदेन देवा यज्ञमतन्वत । यज्ञेन वै देवा ऊर्ध्वाः स्वर्गमायन्नित्यादिग्रहः । किं तत इत्यतो भावमाह ॥ **तथा चेति** ॥ आचारदर्शनस्य वक्ष्यमाणदिशा कर्मशेषत्वरूप-साध्यासाधकतया साध्यान्तरमाह ॥ **अतो न ज्ञानादेवेति** ॥ आचारदर्शनादित्यर्थः । आचार-दर्शनमेव श्रुतेरर्थान्तरकल्पकमिति प्रागुक्तशङ्कानिवृत्तिरिति भावः ।

## वाक्यार्थमुक्तावली

अत्र ज्ञानिनामपि देवादीनामिति शेषः । शेषत्वात् पुरुषार्थवाद इतिवदिति भावेन प्रवृत्तं ज्ञानिनामपीति भाष्यं व्याचष्टे ॥ **देवा इत्यादिना** ॥ देवाः देवपदयोग्याः । पदप्राप्तेः पूर्वमेव ब्रह्मणां शतकालात्तु पूर्वमारब्धसङ्ख्या इत्युक्तरीत्या प्राप्तापरोक्षाः । ब्रह्मदर्शनाभावे पदप्राप्तेरेव निषिद्धत्वात् । तेषां प्राप्तापरोक्षाणां देवत्वयोग्यानामपि यज्ञेन यज्ञमयजन्त देवा इत्यत्र कर्मानुष्ठानं दृश्यत इति टीकार्थः । यज्ञेनेति श्रुतौ देवत्वयोग्यग्रहणस्य देवताधिकरणविरोधः । कर्मणीति सूत्र एव स्पष्टत्वात् । यद्वा श्रुतेः प्राप्तदेवतापदविषयत्वेनार्थान्तरमङ्गीकृत्यैतट्टीकाप्रवृत्तिः । ननु तर्हि ये देवा यज्ञमयजन्त ते महिमानो देवाः नाकं मोक्षं तद्गतानन्दातिशयादिकं सचन्ते प्राप्नुवन्निति तदर्थोपपत्तेरिति भावः । भाष्ये देवादीनामित्यादिपदेन प्रजापादीनां ग्रहणम् । टीकायामित्यादिपदेन 'यज्ञेन वै देवा ऊर्ध्वं स्वर्गं लोकमायन् । प्रजापतिर्वा एतेनाग्रे यजत द्वादशाहेन' इति तत्वप्रदीपोदाहृता श्रुतिर्गृह्यते ।

## वाक्यार्थविवरणम्

**सर्वपुरुपार्थावाप्तिरिति** ॥ मोक्षतदितरपुरुषार्थावाप्तिरित्यर्थः ।

## वाक्यार्थमञ्जरी

यज्ञेनेति श्रुतौ देवानामाचारस्य कर्मानुष्ठानदर्शनाच्च ज्ञानस्य कर्मशेषत्वमित्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ तच्छ्रुतेः ॐ ॥ ४ ॥**

**'यदेव विद्यया करोति श्रद्धयोपनिपदा तदेव वीर्यवत्तरं भवति'**(छां.उ.१-१-१०)इति शेपत्वश्रुतेः ।

## तत्त्वप्रदीपिका

**'यदेव विद्यया करोति' इत्यादौ विदुषः कर्म वीर्यवत्तरमित्युक्तेः कर्मणः स्वकीयस्वर्गादिफलदाने विद्यायाः शेपत्वमीयते ।**

**'महिम्ना सारभूतेन विष्णुनाऽज्ञो ज्ञ एव च । कुरुतः कर्म नाज्ञस्य मुक्तिर्ज्ञस्य भवेत्तु सा ॥ स्वयोग्यं तु परिज्ञानं यत्तस्योपनिपत्स्मृतम्' इति तार्तीये ॥** उपनिपादयतीति चोपनिपत्परमात्मविद्या ।

## तत्त्वप्रकाशिका

**नन्वेवमस्तु ज्ञानकर्मणोरुभयोरपि स्वर्गादिसाधनत्वं ज्ञानस्य कर्मशेपत्वं कुत इत्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे ॥ तदिति ॥ न ज्ञानस्य कर्मशेपत्वाभावः । 'यदेव विद्यया' इति तदभिधायकश्रुतेरिति भावः । उपनिषदा स्वयोग्यया । वीर्यवत्तरमधिकफलसाधनम् ।**

## गुर्वर्थदीपिका

यदेव विद्ययेतीत्यत्र 'यदेव विद्यया' इति वाक्य इत्यर्थः । उपनिषदेत्यस्य उप तस्य समीपे उप उपपन्नतया च निषीदति तिष्ठति या सा उपनिषत्स्वयोग्यता तयेत्यर्थः ।

## भावदीपः

**नन्वेवमिति** ॥ देवानामाचारदर्शने सतीत्यर्थः ॥ **कर्मशेपत्वं कुत इति** ॥ ज्ञान्याचारस्य ज्ञानकर्मणोः समप्रधानत्वेऽप्युपपत्तेरिति भावः । सूत्रभाष्यस्थहेतोः साध्यमाह ॥ **न ज्ञानस्येति** ॥

(भावदीपः)
एतेनाद्यसूत्रस्थमतः इतिपदं षष्ठ्यन्ततया शेषत्वादित्यत्रान्वितं सदिहापि ज्ञानस्य शेषत्वमिति साध्यार्पकतयान्वेतीति दर्शितम् । स्वयोग्यं तु परिज्ञानं यत्तस्योपनिषत्स्मृतमित्याद्याध्याय-छान्दोग्यभाष्यानुरोधेनोपनिषदा विद्ययेत्यन्वयमुपेत्यार्थमाह ॥ **स्वयोग्ययेति** ॥

## वाक्यार्थमुक्तावली

तदिति व्यस्तं समस्तं च पदम् । तस्य कर्मप्रतिज्ञाने शेषत्वश्रुतेः श्रवणात् । यद्वा तत्र शेषत्वश्रुतेः सत्वात् तच्छेषत्वमिति सूत्रार्थमाह ॥ **न ज्ञानस्येति** ॥

## तत्त्वसुबोधिनी

स्वयोग्यं तु परिज्ञानं तस्योपनिषत्स्मृतमिति प्रमाणानुसारेण महोपनिषदा विद्ययेत्यन्वय-मुपेत्यार्थमाह ॥ **स्वयोग्येति** ॥

## वाक्यार्थविवरणम्

उपनिषीदतीत्युपनिषदिति व्युत्पत्तिमभिप्रेत्य स्वयोग्ययेत्युक्तम् ।

## वाक्यार्थमञ्जरी

तस्य कर्मप्रतिज्ञानशेषत्वस्य श्रुतेर्यदेवेति श्रवणात्तस्य तच्छेषत्वमेवेत्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ समन्वारम्भणात् ॐ ॥ ५ ॥**

'कर्मैव देहं दैविकं मानुषं वाऽप्यन्वारभेन्नापरस्तत्र हेतुः ।

भोगांस्तदीयांश्च यथाविभागं ददाति कर्मैव शुभाशुभं यत्' इति माठरश्रुतेश्च ।

संशब्दः प्राधान्यं दर्शयति ।

## तत्त्वप्रदीपिका

**नापरस्तत्र हेतुः अपरो नात्र हेतुरित्यर्थो विष्णोरितरापेक्षया । परमपुरुषस्त्वत्र स्वतन्त्रहेतुरिति चार्थसद्भावात् । आरम्भणीयदेहस्यात्र कर्माधीनत्वं विवक्षितं न मोक्षस्य ॥**

## तत्त्वप्रकाशिका

**ननु यथा ज्ञानस्य प्राधान्यं श्रुतमपि न स्वीक्रियते किं तु शेषत्वमेवैवं 'यदेव विद्यया' इति श्रुतमपि कर्मणः प्राधान्यं नाङ्गीकार्यम् । किं नाम ज्ञानशेषत्वं कर्मणः साम्यं वा भवतु विशेष-प्रमाणाभावादित्याशङ्कां परिहरत्सूत्रं पठित्वा तदभिमतश्रुतिमुदाहरति ॥ समिति ॥** न स्वर्गादि-साधने कर्मणः शेषत्वं साम्यं वा ज्ञानेनाऽपि तु प्राधान्येनारम्भकत्वम् । कुतः । कर्मैवेति कर्मण एव प्राधान्येन स्वर्गाद्यारम्भकत्वश्रुतेरिति भावः । नापरस्तत्र हेतुरिति । कर्मशेषतयैव हेतुर्भवति न प्राधान्येन हेतुरस्तीत्यर्थः । ननु कर्मणः स्वर्गाद्यारम्भकत्वमेव सूत्रितं न प्राधान्यं तच्च परस्यापि सिद्धमित्यत आह **॥ संशब्द इति ॥**

## भावदीपः

सौत्रसंशब्दव्यावर्त्यद्वयं दर्शयन्नवतारयति ॥ **नन्विति** ॥ **श्रुतमपीति** ॥ यं यमिति श्रुता-वित्यर्थः । अन्वारम्भणादित्येतद्व्यावर्त्यमाह ॥ **विशेषेति** ॥ ज्ञानस्य शेषत्वमित्यनुवृत्तसाध्यस्यात्र विवक्षितार्थोक्तिपूर्वकं भाष्यं व्याचष्टे ॥ **न स्वर्गादीति** ॥ प्रकृतप्रमेयाविरोधकत्वेन श्रौतपदार्थमाह ॥ **नापर इति** ॥

## वाक्यार्थमुक्तावली

**साम्यं वेति** ॥ मदीयश्रुत्यनादरे ज्ञानस्य शेषत्वे न्यायसाम्ये च त्वदीयश्रुत्यनादरेण कर्मणो ज्ञानशेषत्वं स्यात् । श्रुत्यादरे चोभयोः साम्यं भवतु । पक्षद्वये च न ज्ञानस्य शेषत्वमिति शङ्कार्थः । सूत्रे कर्मण इति प्रकृतं समन्वारम्भणादित्येतद्यथाश्रुतं पञ्चम्यन्तं प्रथमान्तं च । तथा च कर्मण एव स्वर्गादेः सं प्राधान्येनारम्भणमुत्पादनम् । कुतः । कर्मण एव सं प्राधान्येन स्वार्गाद्य-न्वारम्भकत्वश्रुतेरिति सपरिकरं सूत्रार्थमाह ॥ **न स्वर्गादिरिति** ॥

## तत्त्वसुबोधिनी

ननु नापरस्तत्रहेतुरिति भाष्ये कर्मण एव देहस्वर्गादिसाधनत्वमुक्तं तदयुक्तं ज्ञानादि-शेषत्वोक्तिविरुद्धत्वादित्यतः तद्व्याचष्टे ॥ **कर्मशेषतयेति** ॥

## वाक्यार्थविवरणम्

**आरम्भकत्वम्** उत्पादकत्वम् ॥ **कर्मैवेतीति** ॥ अनेन सम्यक् प्राधान्येन कर्मणः अन्वा-रम्भणात् अन्वारम्भकत्वश्रुतेः स्वर्गाद्यारम्भकत्वश्रुतेरिति सूत्रार्थ उक्तो भवतीति ज्ञातव्यम् । भाष्ये 'कर्मैव देहम्' इति श्रुतौ शुभशब्देन स्वर्गो ग्राह्यः ।

## वाक्यार्थमञ्जरी

कर्मैव देहमिति श्रुतौ देहादेः सर्वस्य कर्मणैव सं प्राधान्येन अन्वारम्भणादुत्पादनोक्तेः कर्मण एव प्राधान्यमित्यर्थः ॥ **सिद्धमिति** ॥ तेन कर्मणो ज्ञानशेषतया पुरुषार्थहेतुत्वाङ्गीकारादिति भावः ॥ **फलाभावादिति** ॥ तथा च न तत्रातिशयाधायकत्वमिति भावः ।

## सूत्रभाष्यम्

**॥ ॐ तद्वतो विधानात् ॐ ॥ ६ ॥**

**'ज्ञानी च कर्माणि सदोदितानि कुर्यादकामः सततं भवेत्' इति कमठश्रुतौ ज्ञानवतोऽपि विधानात् ।**

## तत्त्वप्रदीपिका

इतश्च ज्ञानकर्मणोः शेषशेषित्वम् ॥ तद्वतो विधानात् ॥ सदा कुर्यान्नित्यत्वेनोदितानि ॥

## तत्त्वप्रकाशिका

तथापि न ज्ञानस्य कर्मशेषत्वं युक्तं किं तु स्वयमेव पुरुषार्थहेतुः । कस्मात् । ज्ञानिकृतकर्मणः फलाभावात् । फलाभावेऽप्याचारस्तु मुक्तवल्लीलयैवेत्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ **तद्वत इति** ॥ न ज्ञानिनां कर्म लीलया मुक्तवत् । येन फलाभावः । ज्ञानी च कर्माणीति ज्ञानिनः कर्मविधानात् । विहिताचरणस्य लीलात्वाभावादिति भावः ।

## भावदीपः

सौत्रविधानपदव्यावर्त्यं वदन्नवतारयति ॥ **तथापीति** ॥ कर्मणः प्राधान्येऽपीत्यर्थः ॥ **स्वयमेवेति** ॥ कर्मवत्प्रधानमेवेत्यर्थः । आचारेत्यादिसूत्रद्वयोक्तहेतोः का गतिरिति भावेन पृच्छति ॥ **कस्मादिति** ॥ **लीलयैवेति** ॥ वीर्यवत्तरमित्युक्तिरपि ज्ञानप्रशंसामात्रपरमिति भावः । योग्य-साध्यमध्याहृत्य भाष्यं व्याचष्टे ॥ **न ज्ञानिनामिति** ॥

## वाक्यार्थमुक्तावली

**ज्ञानिकृत कर्मण इति** ॥ ज्ञानिकर्मणः फलसत्वे हि तस्मिन् फलेऽतिशयाधायकत्वेन पूर्वभाविज्ञानस्य शेषत्वं स्यात् । न चैवम् । कर्मैव देहमिति श्रुतिस्तु अज्ञानिकृतकर्मविपयमपि सम्भवतीति भावः । सूत्रे तद्वतः ज्ञानिकर्मणः फलारम्भकत्वमिति वर्तते । तथा च ज्ञानिकर्मणः फलारम्भकत्वमस्त्येव । लीलामात्रत्वं कुतः । तद्वतो ज्ञानवतोऽपि कर्मविधानादिति भावेन सूत्रार्थं स्पष्टयति ॥ **न ज्ञानिनामिति** ॥

## तत्त्वसुबोधिनी

विहितत्वे तैस्तु लीलात्वमुक्तं तदप्ययुक्तम् । ज्ञानादेः शेषत्वमित्यत आह ॥ **विहितेति** ॥ अन्यथा ज्ञानावरणस्यापि लीलात्वं स्यादिति भावः ।

## वाक्यार्थमञ्जरी

ज्ञानी चेति श्रुतौ तद्वतः ज्ञानवतः कर्मविधानान्न लीलात्वमित्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ नियमाच्च ॐ ॥ ७ ॥**

**'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳसमाः ।**
**एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे'** (ई.उ.२) इति ॥

## तत्त्वप्रदीपिका

**इह परमेश्वरे । 'इशावास्यम्' इत्यादिपूर्ववाक्ये तस्य प्रस्तुतत्वात् । तस्मिन्नुपास्ति तदर्पणेनान्यानि वा कर्माणि कुर्वन्नेव जिजीविषेत् । एवं त्वयि नरे न कर्म लिप्यते । इतोऽन्यथा कर्म न लिप्यत इति नास्ति ।**

**'अज्ञस्य कर्म लिप्येत कृष्णोपास्तिमकुर्वतः ।**
**ज्ञानिनोऽपि यतो ह्रास आनन्दस्य भवेद्ध्रुवम् ।**
**अतोऽलेपेऽपि लेपः स्यादतः कार्यैव सा सदा' इति नारदीये ॥**

## तत्त्वप्रकाशिका

**न केवलं विहितत्वाज्ज्ञानिनः कर्म न लीलामात्रमपि त्वकरणे प्रत्यवायश्रुतेश्चेत्यर्थप्रतिपादकं** सूत्रं पठित्वा तां **श्रुतिमुदाहरति ॥ नियमाच्चेति ॥** एवं **कर्मकरणे त्वयि कर्म न** लिप्यते । इतोऽन्यथाऽ**करणे नरे ज्ञानिन्यपि त्वयि पापं कर्म न लिप्यत इति नास्तीत्यर्थः ।**

## भावदीपः

सूत्रे चशब्दादाह ॥ **न केवलमिति** ॥ नियमशब्दार्थोऽकरणे प्रत्यवायेति । ज्ञानिनोऽपि यतो ह्रास आनन्दस्य भवेद्ध्रुवम् इतीशावास्यभाष्यदिशा नान्यथेत्यादेरर्थमाह ॥ **इतोऽन्यथेति** ॥ **तस्यार्थोऽकरण इति** ॥ न लिप्यत इत्यस्यावृत्तिरिति भावः ।

## वाक्यार्थमुक्तावली

अकरणे प्रत्यवायेन श्रुत्या कर्मणो नियतत्वाच्चास्त्येव कर्मणः फलारम्भकत्वं लीलामात्रत्वमिति सूत्रार्थः । एवमित्यनूद्यार्थमाह ॥ **एवं कर्मकरणमिति** ॥ **नरे ज्ञानिन्यपीति** ॥ न रीयते न क्षीयत इति व्युत्पत्त्या नरशब्देन ज्ञानमुच्यते । तद्वानपि नर इति नरपदेन ज्ञानिलाभ इति ध्येयम् ।

## तत्त्वसुबोधिनी

एवमित्यस्यार्थः कर्मकरण इति । अज्ञस्य कर्मलिप्येत कृष्णोपास्तिमकुर्वतः । 'ज्ञानिनोऽपि यतो ह्रास आनन्दस्य भवेद्ध्रुवम् । अतोऽलेपेऽपि लेपः स्यादतः कार्यैव सर्वदा' इति नारदीय-

(तत्त्वसुबोधिनी)

वचनमूलकमकुर्वतः कर्म न लिप्यत इति नास्तीति ईशावास्यभाष्यं मनसि निधायाह । **नान्यथेतोऽस्तीति** ॥ तृतीयपादं व्याचष्टे ॥ **अकरण इति** ॥ द्वौ नञौ प्रकृतमर्थमिति न्यायेन कर्म लिप्यत इत्यर्थः ।

## वाक्यार्थविवरणम्

न रीयते रीङ्क्षय इति धातोर्न क्षीयते पुमान् येन तत् नरं ज्ञानम् । मत्त्वर्थीयार्श आद्यजन्तम् इत्यभिप्रेत्य नरे ज्ञानिनीत्युक्तमित्यवधेयम् ॥ **नास्तीति** ॥ किन्तु लिप्यत एवेत्यर्थः । लेपस्त्वानन्दह्रासः इति ज्ञातव्यम् ।

## वाक्यार्थमञ्जरी

कुर्वन्नेवेति श्रुतौ ज्ञानिनोऽपि कर्मणो नियमकथनात् नियमादकरणे प्रत्यवायप्राप्तेरिति यावत् । न लीलामात्रत्वमित्यर्थः ॥ **न लिप्यत इति नास्तीति** ॥ लिप्यत एवेत्यर्थः । इदं नचिकेतसं प्रति यमवाक्यं न चैवं तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ इति ज्ञानिनः कर्माश्लेषस्य वक्ष्यमाणत्वात्तद्विरोध इति वाच्यम् । भिन्नविषयत्वात् । अत्र नर इति मनुष्याद्युक्तेः वक्ष्यति चैतत् स्पष्टं चतुर्थाधिकरणे ।

## सूत्रभाष्यम्

**॥ ॐ अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॐ ॥ ८ ॥**

**'ज्ञानादेव स्वर्गो ज्ञानादेवापवर्गो ज्ञानादेव सर्वे कामाः सम्पद्यते ।**
**अथापि यथा यथा कर्म कुरुते तथा तथाऽधिको भवति' इति कौण्ठरव्यश्रुतेः ॥**

**युधिष्ठिरादीनां राजसूयादिना फलाधिक्यदर्शनाच्चेति बादरायण(स्य)मतम् ।**

## तत्त्वप्रदीपिका

अधिकोपदेशादित्यादिसूत्रम् ॥ **ज्ञानादेव सर्वं ज्ञानिनः कर्मभिः स्वर्गादिष्वाधिक्यमिति विशेषश्रुतेः । उक्तश्रुतीनामेवं गतिर्बादरायणमते । अन्येषां देवजातीनां स्वर्गजुषां मध्ये युधिष्ठिरादीनां राजसूयादिना फलाधिक्यदर्शनात् । उक्तं हि स्वर्गारोहणके–**

(तत्त्वप्रदीपिका)

'राजसूयजितान् लोकानश्वमेधाभिवर्धितान् ।
प्राप्नुहि त्वं महाभाग तपसश्च फलं महत्' इत्यादि ॥

## तत्त्वप्रकाशिका

एवं जैमिनिमतावलम्बेन चोदिते स्वमतं समर्थयत्सूत्रमुपन्यस्य व्याचष्टे ॥ अधिकेति ॥ यदुक्तं ज्ञानादेव सर्वपुरुपार्थप्राप्तिरिति तदेवं तथैव न तु ज्ञानं कर्मशेषतया पुरुषार्थसाधनम् । न चैवं ज्ञानिनामाचारवैयर्थ्यं विध्याद्यनुपपत्तिश्चेति वाच्यम् । ज्ञानादेव जायमाने पुरुषार्थे कर्मणाऽतिशयापादकत्वेन ज्ञानशेपत्वात् । ज्ञानादेव फलप्राप्तिः कर्मणस्तु फलेऽतिशयाधायकत्वेन शेपत्वमिति कुतः । ज्ञानादेवेति श्रुतेर्लिङ्गदर्शनाच्चेति भगवतो बादरायणस्य मतमिति भावः ।

## भावबोधः

सूत्रे 'अधिकोपदेशात्' इत्यस्य ज्ञानफले स्वर्गे कर्मणाऽधिक्यं भवतीति प्रतिपादकश्रुतेरित्यर्थत्वम् । 'तद्दर्शनात्' इत्यस्य ज्ञानिकृतकर्मणा ज्ञानफले आधिक्यरूपस्य लिङ्गस्य दर्शनादित्यर्थत्वम् । 'तु'शब्दः 'च'शब्दार्थः । तस्य 'दर्शनाच्च' इत्यन्वय इत्यभिप्रेत्य प्रवृत्तम् । ज्ञानादेवेत्यादिभाष्यं व्याचष्टे– **ज्ञानादेवेति** ॥

## भावदीपः

**स्वमतमिति** ॥ देवरूपोत्तमाधिकार्यपेक्षया साक्षादेव सर्वपुमर्थहेतुत्वमितीत्यर्थः । एवं तदिति सौत्रतत्पदपरामर्शं दर्शयति ॥ **यदुक्तमिति** ॥ पुरुषार्थोऽत इत्यत्रेत्यर्थः । सौत्रपदयोरनुवादः ॥ **तदेवमिति** ॥ एवंपदार्थमाह ॥ **तथैवेति** ॥ तात्पर्यार्थमाह ॥ **न त्विति** ॥ श्रुतेरित्यन्तभाष्यं पूर्वोक्तशङ्कानिवर्तकतया तात्पर्यतो व्याचष्टे ॥ **न चैवमिति** ॥ विध्यादीत्यादिपदेन नियमाच्चेत्युक्तनियमो ग्राह्यः ॥ **फलप्राप्तिरिति** ॥ स्वर्गादिसर्वफलप्राप्तिरित्यर्थः । युधिष्ठिरेत्यादेरर्थो लिङ्गदर्शनाच्चेति । राजसूयादिना फलाधिक्यरूपलिंगदर्शनाच्चेत्यर्थः । पूर्वस्माच्चशब्दानुवृत्तिरिति भावः । एतच्च विवृतं तत्वप्रदीपे । उक्तं च स्वर्गारोहिणिके राजसूयार्जितांल्लोकानश्वमेधाभिवर्धितान् । प्राप्नुहि त्वं महाभाग तपसश्च फलं महदित्यादिग्रन्थेन ।

## वाक्यार्थमुक्तावली

तुशब्दोऽवधारणे । तदिति बुद्ध्या विवेकेनानुवर्तते । तथा च तदेवमेवेति पर्यवसन्नम् । तस्यार्थमाह ॥ **यदुक्तमिति** ॥ पुरुषार्थसूत्रे यदुक्तमित्यर्थः । एवकारव्यावर्त्यमुक्तं न त्विति ॥ **ज्ञानशेषत्वादिति** ॥ नाचारवैयर्थ्यादिकमित्यन्वयः । एतेनाधिकेति भावप्रधानम् । ज्ञानफले आधिक्याय यज्ञेन यज्ञमयजन्त । ज्ञानी च कर्माणि । 'कुर्वन्नेवेह कर्माणि' इत्यादिश्रुतावाचार-विधिनियमोपदेशः स्यादित्यर्थ उक्तो भवति । तच्छ्रुतेः समन्वारम्भणादिति सूत्रोपात्तयोः 'यदेव विद्यया करोति' 'कर्मैव देहम्' इति श्रुत्योर्बादरायणेन गत्यर्थदर्शनस्याभिप्राय उत्तरत्र स्फुटी-भविष्यति ॥ **ज्ञानादेवेति श्रुतेरिति** ॥ एतेनाधिकोपदेशादित्यस्य ज्ञानफले कर्मणोऽधिकस्योपदेशात् कर्मणो ज्ञानशेषत्वोपदेशादित्यर्थान्तरमुक्तं भवति ॥ **लिङ्गदर्शनाच्चेति** ॥ एतेन तुशब्दश्चशब्दार्थः सन् तद्दर्शनाच्चेत्यप्यन्वेति । ततश्च तत् तत्र ज्ञानफले कर्मणोऽतिशयापादकत्वेन शेषत्वमित्यस्य तादृशस्य युधिष्ठिरादिराजसूयादिफलाधिक्याख्यलिङ्गस्य 'राजासूयार्जितान् लोकान् अश्वमेधाभि-वर्धितान् । प्राप्नुहि त्वं महाभाग तपसश्च महाफलम्' इति स्वर्गारोहणपर्वणि दर्शनाच्चेत्यर्थः । ज्ञानिकर्मजातीये एकत्वं तथात्वं तत्सामान्यादितरेषु तथात्वमिति न्यायेन सर्वत्राप्येवमित्यत्र लिङ्गमिति भावः ।

## तत्त्वसुबोधिनी

सूत्रे अधिकोपदेशादित्यस्य ज्ञानफले कर्मणा आधिक्यं भवति । तत्प्रतिपादकश्रुतेरित्यर्थत्वं तद्दर्शनादित्यत्र तच्छब्दस्य तेन तस्मिन् अस्येति अज्ञानिकृतकर्मणा ज्ञानफले आधिक्यरूपलिङ्गस्य दर्शनादित्यर्थे तुशब्दश्चब्दार्थः । तस्य दर्शनाच्चेत्यन्वयमभिप्रेत्य प्रवृत्तम् । ज्ञानादेवेति भाष्यं व्याचष्टे ॥ **ज्ञानादेवेति** ॥

## वाक्यार्थविवरणम्

**विध्यादीति** ॥ ज्ञानी च कर्माणीत्युक्तविधीत्यर्थः । आदिपदेन नियमाच्चेत्युक्ताकरणे प्रत्यवायग्रहणम् ॥ **अनेनेति** ॥ भगवन्मतमुनिमतयोरविरोधप्रतिपादनेनेत्यर्थः । यद्वा ब्रह्मदर्शनात् स्यादेव मोक्षो नान्यस्मात्कर्मणः इति वचनेनेत्यर्थः ॥ **कर्मशेषत्वम्** ॥ मोक्षविशेष इति शेषः ।

(वाक्यार्थविवरणम्)
कर्मैव मोक्षसाधनम् । ज्ञानं तु तच्छेषभूतमिति मोक्षस्य ज्ञानकर्मसमुच्चयसाधनत्वमुच्यते । तथा च मोक्षे कर्मशेषत्वं ज्ञानस्योच्यत इति यज्जैमिनिमतं तस्याप्रामाण्यमुच्येत इति यत्परैरुच्यते तदप्यनेनैव निरस्तम् । ब्रह्मदर्शनान्मोक्षो नान्यस्मादिति कर्मणो मोक्षसाधनत्वनिषेधात् वक्ष्यमाणरीत्या मतयोरविरोधोपपत्तेरिति भावः ॥ **अनन्वयदृष्टान्त इति** ॥ समभिव्याहृतेन पश्यन्निति पदेनान्वयो नास्तीत्यर्थः । तर्हि तस्य कथमन्वय सत्यतोऽनन्ताकाशवद्व्याप्तज्ञानेत्यन्वय इत्यभिप्रेत्याह ॥ **यथाकाश इति** ॥ **गतिरुक्तेति** ॥ अधिकोपदेशादित्यनेनेत्यर्थः ।

## वाक्यार्थमञ्जरी

बादरायणस्य मतमेवं प्राधान्येन ज्ञानस्य पुरुषार्थहेतुत्वं न चैवमाचारादिवैयर्थ्यं कुतः अधिकोपदेशात्, ज्ञानार्जिते फलेऽधिकस्य कर्माधीनातिशस्य यथा यथेति श्रुत्युक्तत्वात्, युधिष्ठिरादेस्तद्दर्शनात् तादृशातिशयोपलम्भाच्चेत्यर्थः ॥ **किं न स्यादिति** ॥ फलोपकारापेक्षया स्वरूपोपकारस्य ज्यायस्त्वादिति भावः ।

## सूत्रभाष्यम्

**॥ ॐ तुल्यं तु दर्शनम् ॐ ॥ ९ ॥**

**राजसूयादिकृतावकृतौ च सममेव तेषां विज्ञानम् ।**

**'विज्ञातमेतत्सर्वेषां मुनीनां ब्रह्मदर्शनात् ।**
**स्यादेव मोक्षो नान्यस्मादिति तत्रापि चित्रता ॥**
**स्वर्गादयः कर्मणैव नान्येनेत्यपरे विदुः ।**
**ज्ञानेनाऽऽधिक्यमित्याहुर्जैमिन्याद्यास्तु केचन ॥**
**अदृष्टमेव ज्ञानेन दृष्टं नैवोपलभ्यते ।**
**इति केचिद्विदः प्राहुर्व्यासशिष्या इमेऽखिलाः ॥**
**यस्माद्व्यासमतं सर्वं सत्यमेव ततोऽखिलम् ।**
**यथाऽऽकाशस्त्वनन्तोऽपि व्यामो हस्तावधिस्तथा ।**
**प्रादेशोऽपि हि सत्येन तथैतेषां मतानि तु ॥**

(सूत्रभाष्यम्)

स्वयं तु भगवान् व्यासो व्याप्तज्ञानमहांशुमान् ।
अनन्ताकाशवत्पश्यन्निखिलं पुरुषोत्तमः ।
ज्ञानेनैवाऽऽप्यते सर्वं कर्मणा त्वधिकं भवेत् ।
इति प्राह महायोगी पुमर्थानां विनिर्णयम्' इति भविष्यत्पर्वणि ।

'ज्ञानिनामपि देवानां विशेषः कर्मभिर्भवेत् ।
चीर्णेऽकृते वा ज्ञानस्य न विशेषोऽस्ति कर्मणि' इति ब्रह्मतर्के ॥

॥ इति पुरुषार्थाधिकरणम् ॥ १ ॥

## तत्त्वप्रदीपिका

'विज्ञातमेतत्' इत्यादेरयमर्थः । जैमिन्यादीनां वेदव्यासशिष्याणां मुनीनां ब्रह्मदर्शनात्स्यादेव मोक्षो न कर्मणेत्येतद्विज्ञातम् । तथाऽपि तद्विज्ञाने नानाप्रकारत्वमस्ति ब्रह्मदर्शनमधिकृत्यैव विपयान्तरे । 'यस्माद्व्यासमतं सर्वं सत्यमेव ततोऽखिलम्' इत्यधिकारिभेदात् । तत्र सत्यत्वे दृष्टान्तमाह– 'यथाऽऽकाश' इत्यादि । यथाऽऽकाशः कात्स्न्येंन गृह्यमाणोऽनन्तोऽपि परिमाण-भेदापेक्षया व्यामः पुरुषप्रमाणः हस्तप्रमाण इत्याद्युच्यते सत्यवचनेनैव । तथैतेपां मतानि सत्यान्यधिकारिभेदापेक्षया । उक्तं चानुव्याख्याने–

'एवमुत्पन्ननिर्दोषभगवद्दर्शनात्सदा ।
अपेक्षितफलप्राप्तिरारब्धस्यानतिक्रमात् ॥
देवर्षिमानुषादीनां तत्तज्ज्ञात्यनुसारतः ।
जैमिन्युक्तं मानुषाणां तद्विशेषाश्च केचन ॥
सामान्यं भगवत्प्रोक्तं देवादीनां विशेषतः ।
वलवद्विरोधिसद्भावे जैमिन्याद्युक्तिरिष्यते' इति ॥

राजसूयादिना फलाधिक्यमित्याद्युक्तं तत्र प्रमाणमाह– 'ज्ञानिनामपि देवानाम्' इत्यादि ॥

## तत्त्वप्रकाशिका

नन्वस्तु ज्ञानस्य पुरुषार्थहेतुत्वं कर्मणस्तु तच्छेपत्वम् । शेषत्वं च न ज्ञानफलेऽतिशया-

(तत्त्वप्रकाशिका)

धायकत्वेन किन्तु ज्ञानेऽतिशयाधायकत्वेन किन्न स्यादित्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे ॥ **तुल्यं त्विति** ॥ न ज्ञानिकर्मणो ज्ञानेऽतिशयाधायकत्वं किं तु ज्ञानफल एव । कुतः । कर्मकरणाकरणयोर्ज्ञानस्य तुल्यत्वात् । अन्यथा कर्मकरणे ज्ञानं पुरुषार्थसाधने समर्थमकरणेऽसमर्थमिति ज्ञाने विशेषः स्यात् । एतच्चोपपादयिष्यत इति भावः । नन्वेवं तर्हि भगवन्मतविरोधेन जैमिनिमतस्याप्रामाण्यं प्रसज्येत । न च मुनिमतस्य तद्युक्तम् । प्रामाण्ये तु भगवन्मतस्याप्रामाण्यमित्याशङ्कां स्मृत्या परिहरति ॥ **विज्ञातमिति** ॥ संमतमिति यावत् । अनेनैतदपि निरस्तम् । यत्परैरुच्यते पुरुषार्थादिसूत्रैर्भगवता केवलज्ञानस्य मोक्षसाधनत्वमुच्यते शेषत्वादित्यादिसूत्रैस्तु कर्मशेषत्वं ज्ञानस्येति जैमिनिमतमुच्यत इति । तत्रापि तेषां मतेष्वपि चित्रता विषयान्तरे । आधिक्यं कर्मफले । विचित्रतायामपि न मुनिमतानामसत्यत्वं भगवन्मतान्तर्भूतत्वादित्यत्र दृष्टान्तमाह ॥ **यथेति** ॥ यथाऽनन्ताकाशः सत्येन सत्यत्वेन वर्तते तदवान्तरभेदाश्च । तथा भगवन्मतं तदन्तर्गतमतान्यपि सत्यानीत्यर्थः ।

ननु ज्ञानादेव सर्वपुरुषार्थः कर्मणा तदाधिक्यमिति भगवन्मतमतः कथमनन्ताकाशवदन्तर्भावितान्यमतत्वं तस्येत्यत आह ॥ **स्वयं त्विति** ॥ निखिलं स्वमतत्वेन पश्यन्नपि व्यासः केनचिद्विशेषेणैवं पुरुषार्थनिर्णयं प्राहेत्यर्थः । अनन्ताकाशवदित्यनन्वयदृष्टान्तो यथाऽऽकाशो व्याप्तस्तथा ज्ञानमिति । तथा चोक्तम् । 'व्यत्यासोऽनन्वयश्चैव प्रसिद्धो भूत एव च । सर्वसंहारिकश्चेति दृष्टान्तः पञ्चधा स्मृतः' इति । नन्वेवं मतानां स्मृत्या प्रामाण्योक्तावपि परस्परविरुद्धत्वात् कथं तत्स्यादित्यतो भगवन्मतं देवताविषयं जैमिन्यादिमतं तु तदन्यविषयमिति भावेनात्र स्मृतिमाह ॥ **ज्ञानिनामिति** ॥ अत एव सूत्रकृता देवताचारस्य तद्विषयकर्मविध्यादेरेव गतिरुक्ता न तु 'यदेव विद्यया करोति कर्मैव देहम्' इति श्रुत्योस्तयोर्मानुषविषयत्वोपपत्तेः । प्रतिबन्धकयुक्तदेवताविषयत्वोपपत्तेश्च । अतो ज्ञानस्य सर्वपुरुषार्थसाधनत्वादत्यन्तापेक्षितं तदिति सिद्धम् ॥

## गुर्वर्थदीपिका

अदृष्टमेवेत्यत्र अदृष्टं स्वर्गादिकं दृष्टं पुत्रकामेष्ट्या कारीर्यादियागेन जायमानपुत्रवृष्टिधनादिकमित्यर्थः । अनन्वयदृष्टान्त इत्यत्र साक्षादुक्तार्थे यस्यान्वयो नास्ति अस्ति च प्रकारान्तरेणान्वयोऽपि यस्य सोऽयमनन्वयः । प्रकृतेऽपि 'अनन्ताकाशवत्पश्यन्' इत्यत्र सूर्यवदग्निस्तपतीत्यादौ

(गुर्वर्थदीपिका)

यथा सूर्यस्तपति तथाऽग्निरपि तपतीतिवदनन्ताकाशो यथा पश्यति तथा व्यासोऽपि पश्यतीत्येक-क्रियायामन्वयो नास्ति । अस्ति यथाऽऽकाशो व्याप्तस्तथा ज्ञानमपीति प्रकारान्तरेणान्वयोऽपि । अतः सोऽयमनन्वयदृष्टान्तः । सङ्ग्रहश्लोके वक्ष्यमाणो व्यत्यासस्तु केवलव्यतिरेकी । 'अधिकोपदेशात्तु बादरणयणस्यैवं तद्दर्शनात्' इति सूत्रे 'तुल्यं तु दर्शनम्' इति सूत्रे च कर्मणा ज्ञानफलेऽतिशयस्योक्तत्वेन देवताचारस्यैव विचारः कृतः न तु पूर्वसूत्रोक्तमतद्वयमिति भावेनाह- **अत एवेति** ॥

## भावबोधः

सौत्रः 'तु' शब्दः 'एवार्थः' इत्यभिप्रेत्य भाष्ये सममेवेत्युक्तम् । तद्व्यावर्त्यमाह– **अन्यथेति** ॥ ज्ञाने विशेषः स्यादिति । नास्ति च ज्ञाने विशेष इति भावः । कुतो नास्तीत्यत आह– **एतच्चेति** ॥ 'कामकारेण चैके' इत्यत्रेत्यर्थः ॥ **अनेनेति** ॥ भगवन्मतमुनिमतयोरविरोधप्रतिपादक-स्मृतिविरोधेनेत्यर्थः । नन्वाकाशस्य दर्शनाभावात् कथमनन्ताकाशवत् पश्यन्नित्युक्तमित्यत आह– **अनन्ताकाशवदिति** ॥

'जैमिन्युक्तं मनुष्याणां तद्विशेषाश्च केचन ।
सामान्यं भगवत्प्रोक्तं देवादीनां विशेषतः ॥'

इत्यनुव्याख्यानानुसारेण स्मृत्यभिप्रायं वदन्नवतारयति– **भगवन्मतमित्यादिना** ॥ **जैमिन्यादिमतमिति** ॥ यद्यप्यत्र सूत्रकारेण जैमिनिमतमेवोपन्यस्तम् । तथाप्युदाहृतस्मृतौ– 'स्वर्गादयः कर्मणैव नान्येनेत्यपरे विदुः' इत्यादिनानेकमुनिमतस्योक्तत्वात् 'आदि' पदम् । तदन्यविषयमिति । कर्मसाध्ये सर्वत्र दृष्टादृष्टरूपफले ज्ञानस्य शेषत्वमिति जैमिनिमतम् । यथोक्तं– 'कर्मैव देहं दैविकं मानुषं वा' इत्यादि । तच्चापरोक्षज्ञान्युत्तममनुष्यविषयम् । अदृष्टमेवेत्युक्तमुनिमतं त्वैहिके ज्ञानस्योपयोगो नास्त्येव । अदृष्टफले ज्ञानस्य कर्मशेषतयोपयोगोऽस्तीत्यभिमतम् । स्वर्गादयः कर्मणैवेति मुनिमते तु स्वर्गादौ नश्वरफले ज्ञानस्योपयोगो नास्त्येवेत्यभिप्रेतम् । एतन्मतद्वयं तु मध्यमाधममनुष्यविषयम् । यथोक्तं सुधायां– 'मानुषा अप्युत्तममध्यमाधमभेदभिन्ना यथायोग्यं विचित्रमतिविषया भवन्त्येव' इति ॥ **गतिरुक्तेति** ॥ 'अधिकोपदेशात्' इत्यनेनेत्यर्थः ।

(भावबोधः)

'बलवद्विरोधिसद्भावे जैमिन्याद्युक्तिरिष्यते' इत्यनुव्याख्यानं मनसि निधायाह– **प्रतिबन्धकयुक्तेति** ॥ येषां देवानां ज्ञानस्य स्वर्गारम्भकत्वेऽस्ति प्रतिबन्धकं कर्मणस्तु नास्ति, तद्देवताकर्मणः स्वर्गादौ ज्ञानस्य तच्छेषत्वमित्यर्थः । उक्तं च सुधायाम्– 'न हि यत् ज्ञानस्य प्रतिबन्धकं कर्म तत्कर्मणोऽपीत्यस्ति नियमः । लोकेऽन्यथा दर्शनादिति । अनेन भगवन्मततदितरमतयोः प्रकारान्तरेण विषयव्यवस्था दर्शिता । अत एव सुधायां प्रकारान्तरेण मतयोर्विषयभेदं दर्शयति, 'इति बलवत्' इत्येतदनुव्याख्यानमवतारितम् । अत्राद्ये सूत्रे स्वमतेन श्रुत्या ज्ञानस्य सर्वपुरुषार्थसाधनत्वसमर्थनम् । द्वितीये जैमिनिमतावलम्बेन ज्ञानस्य स्वर्गादिसाधनकर्मशेषत्वोक्तिः । तृतीये ज्ञानस्यैवाशेषपुरुषार्थसाधनत्वे देवसम्बन्ध्याचारवैयर्थ्यलक्षणबाधकोक्तिः । चतुर्थे ज्ञानस्य कर्मशेषत्वे 'यदेव' इति श्रुतिरूपसाधकोक्तिः । पञ्चमे **'यदेव'** इति श्रुतेर्ज्ञानस्य सर्वपुरुषार्थसाधकत्वश्रुतिसमानयोगक्षेमत्वनिरासाय कर्मणः प्राधान्ये निरवकाशप्रमाणोक्तिः । षष्ठसप्तमयोः ज्ञानस्यैव सर्वपुरुषार्थसाधकत्वे बाधकत्वेनोक्ताचारस्य लीलात्वेनान्यथासिद्धि निरासाय ज्ञानिनोऽपि कर्मकरणाकरणयोर्विधिप्रत्यवाययोरुक्तिः । अष्टमे ज्ञानस्याशेषपुरुषार्थहेतुत्वे बाधकत्वेनोक्तानामाचारविधिनियमानां गतिप्रदर्शनाय स्वमतेन कर्मणो ज्ञानसाध्ये स्वर्गादावाधिक्यापादकत्वरूपज्ञानशेषत्वसमर्थनम् । नवमे विवक्षितशेषत्वसिद्ध्यर्थं कर्मणो ज्ञानस्वरूपातिशयाधायकत्वरूपज्ञानशेषत्वनिराकरणमिति सूत्रक्रमः ।

## भावदीपः

**ज्ञानफले** ज्ञानजन्यफल इत्यर्थः । सममेवेत्येवकारव्यावर्त्यमाह ॥ **न ज्ञानीति** ॥ सममित्यन्तभाष्यं हेतुत्वेन व्याचष्टे ॥ **कर्मेति** ॥ एतेन सूत्रे तुशब्दः शङ्काव्यावर्तकः । दर्शनं तुल्यमिति हेतुगर्भमिति सूचितम् । हेतोरप्रयोजकत्वनिरासाय विपक्षे बाधकमाह ॥ **अन्यथेति** ॥ कर्मणो ज्ञान एवातिशयाधायकत्व इत्यर्थः । यद्वा मास्तु तुल्यत्वमित्यत आह ॥ **अन्यथेति** ॥ तौल्याभाव इत्यर्थः । अस्त्वयं विशेषः को दोष इत्यत आह ॥ **एतच्चेति** ॥ सदसत्प्रवृत्त्योर्ज्ञानस्य मोक्षाख्यपुमर्थसमर्थत्वरूपतुल्यत्वं स्तुतयेऽनुमतिर्वेति नये कामकारेणेत्यादिनोपपादयिष्यते । तथा च तद्विरोध इति भावः ॥ **अनेनेति** ॥ ब्रह्मदर्शनादेव मोक्षः स्यात्राप्यस्मादिति व्यासमतं सर्वेषां जैमिन्यादिमुनीनां संमतमिति स्मृतौ कथनेनेत्यर्थः । इतीत्यस्य इत्येतदिति पूर्वेणान्वयः । तत्रापीति

(भावदीपः)

स्मार्तपदानुवादः । तेषां **मतेष्वपीति** व्याख्या । ज्ञानान्मोक्ष इति प्रमेय एव विचित्रतेति भ्रमनिरासायाह ॥ **विषयान्तर इति** ॥ कर्मफल इति च शेषोक्तिः । एतच्च तच्छ्रुतेरित्यत्रोक्तं प्रमेयम् । एतेन पूर्वसूत्रेषु जैमिनिमतोक्तिरुपलक्षणमिति सूचितम् । स्वयं त्वित्यादिना व्यासमतोक्तेः कृत्याप्रतीतेराह– **ननु ज्ञानादेवेति** ॥ पश्यन्नित्यस्याकाशेऽनन्वयादाह ॥ **अनन्तेति** ॥ **उक्तमिति** ॥ प्रथमस्कन्धतात्पर्ये उक्तमित्यर्थः । तत्रैव दशमेऽध्याये । 'यत्तदीशमनीशस्य प्रकृतिस्थोऽपि तद्गुणैः । न युज्यते तदात्मस्थैर्यथा बुद्धिस्तदाश्रया' इत्यत्र तज्ज्ञानिनामपि प्रकृतिस्थानां न तत्सङ्गः किमु तस्येति व्यत्यासदृष्टान्तः । तथा च षष्ठे बृहद्भाष्ये ज्योतिर्ब्राह्मणे 'सामान्यधर्मो बलवान् धर्माद्वैशेषिकाद्यथा । बलवद्विशेषवचनं सामान्यवचनात्तथा' इत्युदाहृतस्मृतौ । अनन्वयदृष्टान्तस्तु अयं प्रकृत एव । प्रसिद्धदृष्टान्तो यथोर्णनाभिः सृजत इत्यादिः । अभूतदृष्टान्तो 'दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता । यदि भाः सदृशी सा स्याद्भासस्तस्य महात्मनः' ॥ 'सहोदयेतामुदयाद्रिशृंङ्गे रवी यदि द्वौ' इत्यादिस्मृतौ । देवविषयमतमात्रोक्तावपि तदुक्त्यैव तदन्यविषयमतमप्युक्तप्रायं मत्त्वा देवविषयत्वेनोक्तं कस्य मतमित्यतो विवृण्वन्नेव स्मृतिमवतारयति ॥ **भगवन्मतमिति** ॥ **अत्रेति** ॥ कर्मणो ज्ञानजन्यफल एवाधिक्यं न तु ज्ञान इत्युक्तव्यासमत इत्यर्थः । उक्ताधिकारिभेदेन मतभेदे सूत्रकृज्ज्ञापकमाह ॥ **अत एवेति** ॥ स्वमतस्य देवताविषयत्वादेवेत्यर्थः ॥ **उक्तेति** ॥ अधिकोपदेशादित्यनेनेत्यर्थः । तथैव व्याख्याततत्वात्पूर्वमिति भावः । एतेन जैमिन्युक्तं मानुषाणां तद्विशेषाश्च केचन । सामान्यं भगवत्प्रोक्तं देवादीनां विशेषत इत्यनुभाष्योक्तोऽधिकारिभेदः सूत्रमूल इति दर्शितम् । ननु मानुषविषयत्वे चोदनाद्यविशेषादित्युक्तयुक्तिविरोधः । अन्यथा ज्ञानी च कर्माणीति कुर्वन्नेवेति च श्रुत्योर्देवमात्रविषयत्वं स्यादित्यत आह ॥ **प्रतिबन्धकेति** ॥ बलवद्विरोधिसद्भावे जैमिन्याद्युक्तिरिष्यत इत्यनुभाष्योक्तेरिति भावः । अन्यथा ज्ञानादेवेत्यादिवाक्यविरोधापातादिति भावः ॥ **अत इति** ॥ श्रुत्यादिबलादित्यर्थः ।

## अभिनवचन्द्रिका

अथवा उभयवाक्यान्यथाऽनुपपत्त्या ज्ञानकर्मणोरुभयोः सर्वत्र प्राधान्यमेवाऽस्तु नाऽन्यतरस्य अन्यतरशेषत्वमित्याशङ्कते– **नन्विति** ॥ एतेन 'यथा ज्ञानस्य प्राधान्यं श्रुतमपि' इत्यस्य विपर्यये पर्यवसानबलेन ज्ञानकर्मणोः साम्य एव पर्यवसानात् 'साम्यं वाऽस्त्विति पक्षान्तरकथनमयुक्तमिति

(अभिनवचन्द्रिका)

परास्तम् । अकरणे प्रत्यवायेति । ईषत्प्रत्यवायश्रुतेरित्यर्थः । एतेन 'येन स्यात् केन स्यात् तेन ईदृश एव' इति ज्ञानिप्रशंसावचनविरोध इति परास्तम् । तद्वचनस्य बहुधालेपाभावपरत्वात् ॥ **नन्वेवं तर्हीति** ॥ ज्ञानमेव पुरुषार्थसाधनम् । कर्म तु तत्राऽतिशयाधायकत्वेन ज्ञानशेष इति बादरायणमतस्य वास्तवत्वे सतीत्यर्थः । आपाद्यस्यानिष्टत्वदर्शनाय 'न च मुनिमतस्य' इत्युक्तम् । 'प्रामाण्येत्यादि विपर्ययपर्यवसानम् । ततश्चैवं योजना । यदि सूत्रोक्तं प्रमेयं वास्तवं स्यात् तर्हि मुनिमतस्याऽप्रामाण्यं स्यात् । न च तस्याप्रामाण्यम् । अतः सूत्रोक्तमेवायुक्तमित्याशङ्कां स्मृत्या परिहरतीति । ननु 'अनन्ताकाशवदित्ययुक्तं तस्य 'पश्यन्नित्यनेन वा, व्याप्तज्ञानमहांशुमानित्यनेन वा अन्वयाऽसम्भवात् आकाशस्याचेतनत्वेन द्रष्टृत्वस्य वा ज्ञानवत्त्वस्य वा, अभावादित्यत आह– **अनन्ताऽऽकाशवदिति** ॥ नन्वनेन दृष्टान्तेन किं लब्धमित्यत आह– **यथाऽऽकाशो व्याप्त इति** ॥ आकाशवद्भगवज्ज्ञानस्याऽऽनन्त्यं लब्धमिति भावः ॥ **तथा चोक्तमिति** ॥ प्रथमस्कन्धतात्पर्य इति शेषः ॥ **व्यत्यासोऽनन्वयश्चेति** ॥ 'गवादिवत् द्विशफो न भवत्यश्व' इति व्यत्यासदृष्टान्तः । अनन्ताकाशवत् व्याप्तज्ञानमहांशुमानिति अनन्वयदृष्टान्तः, अनन्ताकाशवदिति पदस्य बुद्ध्या विवेकेन 'व्याप्तज्ञानेति ज्ञानपदेन सम्बन्धनीयत्वात् । 'यथोर्णनाभिः सृजते गृह्णते च' इति प्रसिद्धदृष्टान्तः । विश्वकर्तृत्वरूपसाध्यस्याभावेऽपि बाह्यसाधननिरपेक्षेण यत्किञ्चित्कर्तृत्वस्य प्रसिद्धत्वेन केवलं बुद्ध्यारोहायोपात्तत्वात् । 'दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता । यदि भाः सदृशी सा स्याद्भासस्तस्य महात्मनः' इति अभूतदृष्टान्तः । महानसादिः सर्वसंहारकदृष्टान्तः । साध्यसाधनयोरुभयोरपि तत्रोपसंहारात् ॥ **तदन्यविषयमिति** ॥ मानुषविषयं, प्रतिबन्धकयुक्तदेवताविषयं चेत्यर्थः । **गतिरुक्तेति** ॥ अधिकोपदेशात् इत्यत्रेत्यर्थः ।

पूर्वपक्षस्तु– ज्ञानं मोक्षमात्रसाधनम् । न स्वर्गादिपुरुषार्थान्तरस्य । ज्ञानिनो मोक्षेतरपुरुषार्थे कामनाविधुरत्वात् । अकामितपुरुषार्थप्रदत्वे चाऽनिष्टपुण्यवन्मोक्षविलम्बहेतुत्वेन पुरुषार्थत्वमेव न स्यात् । अतो ज्ञानस्य मोक्षमात्रहेतुत्वात् सर्वपुरुषार्थसाधनत्वबुद्ध्या न तदापाद्यमिति ।

सिद्धान्तस्तु– ज्ञानेन यावदपेक्षितं भवति तत्सर्वमाप्यते । न तु मोक्षमात्रम् । 'यं यं लोकं मनसा संविभाति' इति श्रुतेः । न च 'परीक्ष्य लोकान् कर्मचितान्' इति श्रुत्या, 'प्रजहाति यदा कामानिति स्मृत्या च ज्ञानिनां कामगावस्योत्वात्, कामितं ज्ञानेन भवतीत्ययुक्तमिति वाच्यम् ।

(अभिनवचन्द्रिका)

प्राय: कामाभावस्य श्रुत्याद्यर्थत्वेन सर्वथा कामाभावस्यातदर्थत्वात् । ननु कर्मैव पुरुषार्थसाधनम्, न ज्ञानम् । न च 'यं यं लोकं मनसा संविभाति' इति पुरुषार्थवादविरोधः । तस्य कर्मणैव सिध्यति स्वर्गे अतिशयाधायकत्वरूपतच्छेषार्थत्वात् । किंचैवमेव आप्ततमो जैमिनिराचार्यो मन्यते । न च ज्ञानस्यैव सर्वपुरुषार्थसाधनत्वं युक्तम् । देवानां कर्मानुष्ठानवैयर्थ्यप्रसङ्गात् । न च श्रुतिद्वयबलात् ज्ञानकर्मणोरुभयोरपि स्वातन्त्र्यं युक्तम् । 'यदेव विद्यया करोति' इति ज्ञानस्य कर्मशेषत्वाभिधानात् । 'कर्मैव देहं दैविकं मानुषं वा' इति कर्मणः प्राधान्यदर्शनाच्च । न च ज्ञानिकृतकर्मणः फलाभावश्रवणात् न कर्म पुरुषार्थसाधनम्, अपि तु ज्ञानमेव । कर्मानुष्ठानं तु मुक्तवत् लीलयापि भविष्यतीति वाच्यम् । 'ज्ञानी च कर्माणि' इति ज्ञानिनोऽपि कर्मविधानेन फलसिद्धेः । ज्ञानिकृतफलाभावश्रुतिस्तु दुष्कर्मविषया । एवम् 'एवंविदि पापं कर्म न श्लिष्यत' इति वचनात् । 'एवं त्वयि नान्यथेतोऽस्ति' इति कर्माकरणे प्रत्यवायश्रुतेश्चेति चेत्, न ज्ञानस्यैव सर्वपुरुषार्थसाधनत्वात् । 'ज्ञानादेव' इति श्रुतौ तथाभिधानात् । युधिष्ठिरादीनां ज्ञानेनैव सिध्यति पुरुषार्थे कर्मणाऽतिशयदर्शनाच्च । न च अस्तु ज्ञानमेव प्रधानम्, तथापि न कर्म तत्फले अतिशयाधायकतया तच्छेषः, किं तु ज्ञान एवातिशयाधायकतयेति वाच्यम् । कर्मकरणाकरणयोर्ज्ञानस्य तुल्यत्वात् । अन्यथा कर्माभावे ज्ञानस्य पुरुषार्थहेतुत्वं न स्यात् । नापि जैमिनिमतस्याप्रामाण्यम् । तस्य भगवन्मतैकदेशत्वेन प्रामाण्यात् । न च विरुद्धयोः प्रामाण्यायोगः । भगवन्मतस्य देवताविषयत्वात् । जैमिनिमतस्य प्रतिबद्धदेवताविषयत्वेन वा, मानुषविषयत्वेन वा अविरोधात् । अतो ज्ञानस्य सर्वपुरुषार्थसाधनत्वात् अत्यन्तापेक्षितं तदिति सिद्धम् ।

## वाक्यार्थमुक्तावली

शेषत्वं त्रिविधम् । साधनस्वरूपोत्पत्त्युपयोगिनः प्रधानफलसम्पादनविषये सहकारितया साधन एवातिशयाधायकत्वेन, साधनेन क्लृप्ते फलेऽतिशयासाधकत्वेनेति । तत्रोत्तरभाविकर्मणः आद्यशेषत्वाभावेऽपि द्वितीयमस्तु किं तृतीयेनेति शङ्कते ॥ **नन्वस्त्विति** ॥ सौत्रस्तुशब्दोऽवधारणार्थ इत्यभिप्रेत्य भाष्ये सममेवेत्युक्तम् । तद्व्यावर्त्यमाह ॥ **अन्यथेति** ॥ **विशेषः स्यादिति** ॥ न च विशेषोऽस्तीति पूरणीयम् । कुत इत्यत आह ॥ **एतच्चेति** ॥ कामकारेणेत्यत्र सत्कर्मकरणेऽकरणे विरुद्धकरणे च ज्ञानस्य मोक्षसाधनत्वाभावस्य निराकरिष्यमाणत्वादित्यर्थः ॥ **पुरुषार्थादिसूत्रैरिति** ॥

(वाक्यार्थमुक्तावली)

पुरुषार्थादिशब्दघटितैः पुरुषार्थोऽतः, अधिकोपदेशात्, तुल्यमिति सूत्रैरित्यर्थः । तथा हि- किं कर्मानुप्रवेशेन ज्ञानं मोक्षसाधनं, किं वा स्वतन्त्रमेवेति संशये कर्मानुप्रवेशेनेति पूर्वपक्षे शब्दात् तमेवं विद्वानित्यादिशब्दाज्ज्ञानादेव पुरुषार्थः । किं चाधिकोपदेशाज्ज्ञानान्मोक्षाधिक्याख्यफलान्तर-स्याप्युपदेशात् कैमुत्येन ज्ञानस्य मोक्षसाधनत्वम् । तुल्यं तु दर्शनं कर्मभावेऽभावे च दर्शनं मोक्षहेतुरेवेति ज्ञानस्यैव मोक्षसाधनत्वमुच्यत इति भावः ॥ **शेषत्वादित्यादिसूत्रैरिति** ॥ अत एव शेषत्वादित्यादिसूत्रैर्मोक्षसम्पादन एव ज्ञानस्य कर्मशेषत्वमिति पूर्वपक्षतया जैमिनिमतमाशङ्क्य सूत्रद्वयेन तदप्रामाण्यमुच्यत इति यत्परैरुक्तं तत्सर्वेषां मुनीनां ब्रह्मदर्शनादेव मोक्षोऽन्यस्मान्न स्यादिति सम्मतमित्युक्त्या निरस्तमित्यर्थः । किञ्च विद्यैव निर्धारणादित्यत्रैवास्यार्थस्य समर्थितत्वात् गतार्थं च भाक्तं वाऽनात्मवित्त्वादिति सूत्रे लिङ्गभङ्गरूपमोक्षे न कर्मावकाश इत्युक्तत्वाच्च । अन्यार्थं तु जैमिनिः परामर्शं जैमिनिरिति सूत्रयोश्च परमात्मज्ञानार्थं कर्मादिकं जैमिनिर्वक्तीत्युक्तत्वेन स कथं ज्ञानस्य कर्मशेषत्वं ब्रूयात् । स्पष्टमेतत् तत्वप्रदीपिकायां सुधायां चेति । ज्ञानस्य मोक्षसाधनत्वमंशेऽपि मुनिमतवैचित्र्यमुच्यत इति भ्रान्तिनिरासायाह ॥ **तत्रापीति** ॥ यथाऽकाशः कार्त्स्न्येन गृह्यमाणः सत्येन सत्यत्वेन वर्तते प्रादेशेनैकदेशेन गृह्यमाणः व्यामो बाहुद्वयपरिमितः हस्तावधिश्च सत्यत्वेन वर्तते । प्रादेशेन प्रादेशपरिमाणेन वर्तमानोऽपि सत्यत्वेन वर्तते । तथैतेषां मतानि कार्त्स्न्येन प्रत्येकं च सत्यानीति मूलार्थमभिप्रेत्य व्याचष्टे ॥ **यथाऽनन्तेति** ॥ **केनचिद्विशेषेणेति** ॥ अधिकारिविशेष-विवक्षयेत्यर्थः ॥ **एवमिति** ॥ ज्ञानेनैव सर्वं पुरुषार्थजातमाप्यते । कर्मणा त्वखिलं पूर्णमतिशय-वद्भवेदित्येवमर्थः ।

नन्वाकाशस्य दर्शनान्वयाभावात् कथमनन्ताकाशवत्पश्यन्नित्युक्तमित्यत आह ॥ **अनन्ताकाशवदित्यनन्वयेति** ॥ अध्याह्रियमाणेनान्वयेऽपि श्रूयमाणेनान्वयरहितोऽनन्वयः । प्रकृते चानन्ताकाशवद्व्याप्तेन ज्ञानेन पश्यन् विषयीकुर्वन्नित्यध्याहारो विवक्षित इति भावः । तथा चोक्तं भागवततात्पर्यनिर्णये । व्यत्यासो व्यतिरेकदृष्टान्तः । यथा लक्ष्म्यादिवदस्वतन्त्रो न भवतीश्वर इति । अनन्वयस्तु प्रकृतः । प्रसिद्धस्तु स्पष्टः । अभूतस्तु 'दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता । यदि भाः सदृशी सा स्यात् भासस्तस्य महात्मनः ' इति गीतोक्तेः । 'गगनं गगनाकारं सागरं सागरोपमम् । रामरावणयोर्युद्धं रामरावणयोरिव' इति सर्वगुणोपसंहारेण प्रवृत्तसर्वसांहारिक इति

विवेक: । अत एव तत्वप्रदीपे तत्रापि चित्रतेत्यस्य ब्रह्मदर्शनमधिकृत्यैव विषयान्तरे चित्रतेति व्याख्यातम् । नन्वङ्गेनापि करणात् कथं ज्ञानस्य तत्स्वरूपोपकारकाङ्गत्वमिति चेत्पूर्वभाव्यश्व-मेधादिकर्मापेक्षयोत्तरभाविकर्मणस्तस्यैव स्वर्गाधिकफलहेतुत्वात् अज्ञस्य स्वापेक्षितफलापादककर्म-सम्पादनस्यैवाशक्यत्वात् । ज्ञानिनस्तु यद्यदपेक्षितं तत्सर्वापादककर्मार्जनोपपत्तेरिति ज्ञेयम् । तदुक्तं देवर्षिमानुषादीनां तत्तज्ज्ञात्यनुसारतः । अपेक्षितफलावाप्तिरारब्धस्यानतिक्रमादिति । ज्ञानेनाधिक्य-मित्याहुः जैमिन्याद्यास्तु केचनेत्युक्तम् । दृष्टादृष्टलक्षणे कर्मफले सर्वत्र ज्ञानेनाधिक्यमिति जैमिन्यादिमतं मध्यममनुष्योत्तमविषयम् । अदृष्टमेव ज्ञानेन दृष्टं नैवोपलभ्यत इत्युक्तम् । केवलज्ञानमहिम्नैवादृष्टं फलम् । ऐहिकं धनादिकं केवलज्ञानेन न भवति । किन्तु कर्मशेषभूतज्ञाने-नैवेति मुनिमतमुत्तममनुष्योत्तमविषयम् । तदुक्तं सुधायां मनुष्या अप्युत्तमाधममध्यमभेदभिन्नाः यथायोग्यं विचित्रमतविषया भवन्तीति । भावबोधे तु स्वर्गादयः कर्मणैवेत्यधमविषयम् । जैमिनिमतमुत्तमविषयम् । अदृष्टमेवेत्युक्तमुनिमतं त्वैहिके ज्ञानस्योपयोगो नास्त्येव । अदृष्टफले ज्ञानस्य कर्मशेषतयोपयोगोऽस्तीत्येदभिप्रायेण प्रवृत्तं मध्यमविषयमित्युक्तम् । यद्यप्यत्र श्रीमता सूत्रकारेण जैमिनिमतमेवोक्तम् । तथापि मतान्तरयोः तद्विभेदत्वात्स्मृतिमनुसृत्य भाष्यकारैस्तदुप-न्यासः कृतः । तदुक्तम् । तद्विशेषाश्च केचनेति । विस्तृतः प्रमेयमुक्तावल्याम् । अत्राद्ये ज्ञानस्य सर्वपुरुषार्थसाधनत्वे श्रुत्युपन्यासः । द्वितीये तस्याः शेषत्वपरत्वे सावकाशत्वचोदनम् । तृतीये शेषत्वोपपादनाय विपक्षे आचारवैयर्थ्यरूपबाधकोक्तिः । चतुर्थे ज्ञानस्य कर्मशेषत्वाभावेऽपि समप्रधानभावेनाचारे आर्थिक्यमाशङ्क्य शेषत्वे श्रुत्युपन्यासः । पञ्चमे यदेवेति शेषत्वश्रुतेर्ज्ञानस्य सर्वपुरुषार्थसाधकं यं यं लोकं मनसा संविभातीति श्रुतिसमानयोगक्षेमत्वमाशङ्क्य शेषत्व-निरवकाशप्रमाणोक्तिः । षष्ठसप्तमयोर्ज्ञानिकर्मणः फलाभावात् ज्ञानस्य तच्छेषत्वं दूरनिरस्तम् । पञ्चमोक्तश्रुतिस्त्वज्ञानिकर्मविषये ज्ञान्याचारस्तल्लीलयेत्याशङ्क्य ज्ञानिनोऽपि कर्मकरणाकरणयोः विधिप्रत्यवायोक्तिः । अष्टमे पूर्वपक्ष्युक्तानामाचारविधिनियमानां गतिप्रदर्शनपूर्वं कर्मणो ज्ञानशेषत्वसमर्थनम् । नवमे कर्मणः शेषत्वं च ज्ञानफलेऽतिशयाधायकत्वेनैव न तु ज्ञाने फलहेतुत्वशक्त्युद्बोधकत्वेन शेषत्वमिति समर्थनमिति सूत्रक्रमः ।

## तत्त्वसुबोधिनी

**ज्ञानकर्मणः** ज्ञानशेषभूतकर्मणः । सौत्रस्तुशब्द एवार्थ इत्यभिप्रेत्य सममेवेत्युक्तम् । तद्व्यावर्त्यमाह ॥ **अन्यथेति** ॥ ज्ञानस्यानुत्तमत्वे इत्यर्थः ॥ **ज्ञाने विशेषः स्यादिति** ॥ नास्ति च ज्ञाने विशेष इति भावः । कुतो नास्तीत्यत आह ॥ **एतच्चेति** ॥ कामकारेण चैके इत्यत्रेत्यर्थः । तत्र कामचाराणामपि मोक्षस्य प्रतिपादितत्वेन ज्ञाने विशेषसद्भावेन च मोक्षानुपपत्तेरिति भावः ॥ **अनेनेति** ॥ भगवन्मतमुनिमतयोरविरोधमतिदक्रमस्मृतिविरोधेनेत्यर्थः । तत्रापीत्यस्य अर्थः तेषां मतेष्वपीति । चित्रतेत्युक्तं ज्ञानान्मोक्ष इत्यस्मिन् अर्थे । चित्रताविपरीतप्रतीतिनिरासायाह ॥ **विषयान्तर इति** ॥ मोक्षेतरविषय इत्यर्थः । ज्ञानेनाधिक्यमित्यत्र कुत्राधिक्यमिति न प्रतीयते अत आह- **कर्मफल इति** ॥

ननु अनन्ताकाशवत्पश्यन्नित्यत्र हि यथाऽऽकाशः सर्वं पश्यति तथाऽयमपीति वक्तव्यम् । तच्चायुक्तं आकाशस्याचेतनत्वेन प्रकृतदर्शनक्रियायां अन्वयासम्भवादित्यत आह ॥ **अनन्ताकाशवदिति** ॥ अन्वयदृष्टान्तः । प्रकृतदर्शनक्रियान्वयराहित्येऽप्ययमन्वयसंज्ञक एवायं दृष्टान्तः । कथं तर्हि अयं प्रकृते योजनीय इत्यत आह ॥ **यथाऽऽकाश इति** ॥ अन्वयसंज्ञकदृष्टान्तस्य काप्यप्रसिद्धत्वात् कथमयुक्तमित्यत आह ॥ **तथा चोक्तमिति** ॥ यद्वा आकाशस्य दर्शनासम्भवात् कथं अनन्ताकाशवत्पश्यन्नित्युक्तमित्यत आह ॥ **अनन्ताकाशवदिति** ॥

तदेव विवृणोति ॥ **यथेति** ॥ अयं भावः पूर्वोत्तरसमभिव्यवह्रीयमाणपदार्थान्वयाभावेऽपि यो दृष्टान्तः सोऽन्वयदृष्टान्तः अनन्ताकाशवदित्यस्य च व्याप्तज्ञानमहांशुमानिति पूर्वपदार्थेनान्वयो नास्ति तथा पश्यन्नित्युक्तिः अवदार्थेनान्वयो नास्तीत्यतोऽनन्वयदृष्टान्तोऽयमिति ।

ननु अनन्वयदृष्टान्तस्याप्रसिद्धत्वात् कथं तदुक्तिरित्यतस्तत्र प्रमाणमाह ॥ **तथा चोक्तमिति** ॥ ब्राह्म इति शेषः । यत्तदीशनमीशस्य प्रकृतिस्थोऽपि तद्गुणैः । न युज्यते सदात्मस्थैः यथाबुद्धिस्तदाश्रयेति व्यत्यासदृष्टान्तः । तत्रायं भावः । उदाहृतश्लोके प्रकृतिस्थोऽपि भगवान् सदात्मस्थैः प्रकृतिगुणैः न युज्यते इत्यत्र ज्ञानिनां प्रकृतिस्थत्वेऽपि आत्मस्थप्रकृतिगुणसम्बन्धाभावात् यथा ज्ञानिनः वक्तव्यं तदाश्रयेति कथमित्यतो यथा ज्ञानिनः इति वक्तव्येऽपि यथा तदाश्रया बुद्धिरिति

(तत्त्वसुबोधिनी)

यदुच्यते तद्भगवद्विषयकज्ञानसम्बन्धात् ज्ञानिनः प्रकृतिस्थत्वेऽपि प्रकृतिस्थगुणसम्वन्धो यदा नास्ति तदा भगवतो नास्तीति किमु वक्तव्यमिति कैमुत्यसूचनार्थ इति व्यत्यासदृष्टान्तोऽयमिति अनन्ताकाशवदित्युक्तरीत्याऽन्वयदृष्टान्तः । महानसादिः प्रसिद्धदृष्टान्तः । अभूतदृष्टान्तस्तु अभूतोपमा द्रष्टव्या । तदुदाहरणं तु प्रेक्षां क्षियन्त हरितोपलाद्रेः सन्ध्याभ्रनीवेरुरुग्ममूर्ध्न इत्यादि द्रष्टव्यम् । सर्वसांहारिकश्च सर्वोपसंहारेण तेषामिदं दर्शनमिति ज्ञातव्यम् ॥ **जैमिन्यादिमतमिति** ॥ यत्र यत्र सूत्रकारेण जैमिनिमतमेवोपन्यस्तं तथापि उदाहृतस्मृतौ स्वर्गादय इत्यादिनाऽनेक-मुनिमतस्योक्तत्वादादिपदम् ॥ **तदन्यविषयमिति** ॥ कर्मसाध्ये दृष्टादृष्टफले ज्ञानस्य कर्मशेषत्व-मिति मतमपरोक्षज्ञानिमनुष्यविषयम् । अदृष्टमेवेत्युक्तमुनिमतस्य तु ऐहिकफले ज्ञानस्योपयोगो नास्तीत्येव अदृष्टफले ज्ञानस्य कर्मशेषतया उपयोगोऽस्तीत्यभिमतम् । स्वर्गादयः कर्मणैवेति मुनिमते तु स्वर्गादौ नश्वरफले ज्ञानोपयोगो नास्तीत्यभिप्रेतं एतन्मतद्वयं उत्तममध्यमाधम-विषयमित्यर्थः । अत एवसुधायां मानुषा अपि उत्तमाधमध्यमभेदाद्भिन्नाः यथायोग्यं विचित्रमत-विषया भवन्त्येवेत्युक्तम् । ज्ञानिनामिति स्मृतौ विशेष इत्यत्र फले इति शेषः । कृते वा इत्यत्र वाशव्दोऽप्यर्थः । एवं च कर्मणि चीर्णे अकृतेऽपि न ज्ञानस्य विशेष इत्यर्थः ॥ **अत एवेति** ॥ भगवन्मतस्य देवताविषयत्वादित्यर्थः ॥ **गतिरुक्तेति** ॥ 'अधिकोपदेशात्,' इत्यनेनेत्यर्थः । 'बलवद्विरोधि सद्भावे जैमिन्याद्युक्तिरिष्यते' इत्यनुव्याख्यानासुसारेण भगवन्मततदितरमतानां प्रकारान्तरेण विषयभेदमाह ॥ **प्रतिबन्धकयुक्तेति** ॥ एवं चैतन्मतानां प्रतिबन्धकयुक्त-देवताविषयत्वात् । भगवन्मतं तु प्रतिबन्धकरहितदेवताविषयमिति भावः । अत्राद्ये सूत्रे स्वमतेन ज्ञानस्य सर्वपुरुषार्थत्वसमर्थनम् । द्वितीये जैमिनिमतावलम्बेन ज्ञानस्य स्वर्गादिसाधनकर्मशेष-त्वोक्तिः । तृतीये देवतासम्बन्धाचारवैयर्थ्यलक्षणबाधकोक्तिः । चतुर्थे श्रुतिरूपसाधकोक्तिः । पञ्चमे कर्मणः प्राधान्येन निरवकाशप्रमाणोक्तिः । षष्ठसप्तमयोः ज्ञानिनामपि कर्मकरणाकरणयोः विधिप्रत्यवाययोरुक्तिः । अष्टमे कर्मणः ज्ञानसाध्ये स्वर्गादावाधिक्यप्रतिपादकत्वरूपशेषत्वसमर्थनम् । नवमे कर्मणो ज्ञानस्वरूपातिशयाधायकत्वरूपज्ञानशेषत्वनिराकरणमिति सूत्रक्रमः ।

## वाक्यार्थमञ्जरी

कर्मकृतावकृतौ च ज्ञानिनां दर्शनं ज्ञानं तुल्यं समं वेत्यर्थः ॥ **ज्ञाने विशेषः स्यादिति** ॥ न चास्ति ज्ञाने विशेष इति भावः । कुतो नास्तीत्यत आह ॥ **एतच्चेति** ॥ कामकारेण चैक

(वाक्यार्थमञ्जरी)

इत्यत्रेत्यर्थः ॥ **प्रामाण्येति** ॥ मुनिमतस्य तद्विरोधादिति भावः ॥ **अनेनेति** ॥ भगवन्मत-मुनिमतयोरविरोधप्रतिपादकस्मृतिविरोधेनेत्यर्थः । मोक्षहेतुत्वे वैचित्र्याभावादाह ॥ **विषयान्तर इति** ॥ **अतः कथमिति** ॥ आकाशे नागप्रवेशवन्मुनिमतानां विलक्षणे व्यासमते प्रवेशायोगादिति भावः ॥ **निखिलमिति** ॥ तथा च नोक्तमविशेषेऽन्यमतप्रवेश उच्यते । किं तु बुद्धिस्थे सामान्यमत एवेति भावः । नन्वाकाशस्य दर्शनाभावात्कथमनन्ताकाशवत्पश्यन्नित्युक्तमित्यत आह ॥ **आनन्ताकाश-वदिति** ॥ व्यत्यासः व्यतिरेकः । प्रसिद्धोऽन्वयः । अभूतो यथा गगनं गगनाकारमित्यादि ॥ **तदन्यविषयमिति** ॥ कर्मसाध्ये सर्वत्र दृष्टफले ज्ञानस्य शेषत्वमितिमतम् । अदृष्टमेवेत्युक्तमुनिमते हि दृष्टेर्ज्ञानस्योपयोगो नास्त्येव दृष्टफलमात्रज्ञानस्य कर्मशेषतया उपयोगोऽस्तीत्यभिमतम् । स्वर्गादयः कर्मणैवेत्युक्तमुनिमते तु स्वर्गादौ नश्वरफले ज्ञानस्योपयोगो नास्त्येवेत्यभिमतम् । अत्राद्यं मनुष्योत्तमविषयं उत्तरद्वयन्तु मध्यमाधममनुष्यविषयम् । यथोक्तं सुधायाम् । मानुषा अप्युत्तममध्यमाधमभेदभिन्ना यथायोग्यं विचित्रमतिविषया भवन्त्येवेति । अत एव भिन्नविषयत्वादेव गतिरुक्तेति अधिकोपदेशादित्यनेनेत्यर्थः ॥ **प्रतिबन्धकेति** ॥ तैरपि कर्मकृत्वैव प्रतिबन्धकस्य निरसनीयत्वादिति भावः ।

**॥ इति पुरुषार्थाधिकरणम् ॥ १ ॥**

## २. असार्वत्रिकाधिकरणम्

### सूत्रभाष्यम्

सर्वेषां पुरुषार्थापेक्षित्वाज्ज्ञानाधिकारितेत्यत आह —

**॥ ॐ असार्वत्रिकी ॐ ॥ १० ॥**

**न सर्वेषामधिकारः ।**

### तत्त्वप्रदीपिका

किमनियमेन सर्वे ज्ञानाधिकारिणः किं वा नेत्याकाङ्क्षायां सर्वेषां निर्दुःखं सुखमाप्नुवानीति पुरुपार्थापेक्षित्वात्तस्य च ज्ञानैकहेतुकत्वादुक्तरीत्या स्वर्गादेरपि ज्ञानेन लभ्यत्वात्सर्वेषां ज्ञानाधिकार इत्यत आह– **असार्वत्रिकी ॥ न सर्वेषामुच्चनीचादिभावानामुक्तसामर्थ्ये वदिष्यमाणसामर्थ्ये च** ज्ञानेऽधिकारः ।

### तत्त्वप्रकाशिका

अत्र भगवत्प्राप्तिसाधनज्ञाने सर्वेषामधिकाराभावमहिम्नो वर्णनादस्ति शास्त्रादिसङ्गतिः । सर्वाधिकारिकत्वेन तस्य यागाद्यतिशयः सिध्यतीत्येतद्वर्णनीयम् । प्रकृतं ज्ञानमेव विषयः । किं तत्र सर्वेपामधिकारोऽस्ति न वा इति सन्देहः । लोके साधनद्वैविध्यप्रतीतिः सन्देहवीजम् । पूर्वपक्षयति ॥ **सर्वेषामिति** ॥ सर्वेषामप्यस्ति ज्ञानेऽधिकारः । फलार्थी समर्थो विद्वान्हि साधनेऽधिक्रियते । तत्रास्त्येव सर्वेपां ज्ञानफले मोक्षेऽर्थिता । निर्दुःखानन्दात्मकत्वात्तस्य । तादृशस्य च पुरुषार्थत्वात् । अस्ति च सर्वेषां श्रवणादौ सामर्थ्यं तदुपयोगिनी विद्वत्ता च । एवं च सर्वेपामधिकाराभावे निरधिकारित्वं ज्ञानस्य स्यात् । अतः सर्वेपां ज्ञानेऽधिकारित्वान्न तदतिशयवदिति भावः । वक्ष्यमाणसूत्रमनुकरोति स्त्रीलिङ्गप्रयोगेण । सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ **अत इति** ॥

### गुर्वर्थदीपिका

भगवत्प्राप्तिसाधनज्ञान इत्यत्र ज्ञानपदेन वेदान्तश्रवणादिजन्यापरोक्षज्ञानं गृह्यते । 'यावदधिकारमवस्थितिराधिकारिकाणाम्' इत्यधिकरणे उपासनेऽधिकारिणां निरूपितत्वात्तज्जन्यज्ञानेऽ-

(गुर्वर्थदीपिका)

प्यधिकारी निरूपितप्राय एव । तस्यैव ज्ञानेऽधिकारित्वात् । अतः किं पुनर्विचारेणेति चेत्सत्यम् । अधिकारिपदमात्रेणाधिकारिणां कथनेऽपि तल्लक्षणस्याकथितत्वेन तदर्थं पुनरारम्भस्यावश्यकत्वात् । न च वाच्यं प्रथमाधिकरणे 'भक्तिमान्परमे विष्णौ यस्त्वध्ययनवान्नरः' इत्यादिनाऽधिकारिलक्षणं तद्विशेषश्च भाष्यकारेण निरूपित इति । तथापि सूत्रमर्यादया निरूपणाय पुनरारम्भ इति ज्ञेयम् । अत एव 'अध्ययनमात्रवतः' 'नाविशेषादिति चोपरि' इति तत्रैव भाष्यम् ।

## भावबोधः

**अधिकाराभावेति ॥** 'अधिकोपदेशात्तु बादरायणस्य' इति ज्ञानशेषत्वेन कर्मणः सकाशाद्योऽतिशय उक्तः । स कर्मवज्ज्ञानस्यापि सर्वाधिकारिकत्वे न सम्भवतीति पूर्वाक्षेपादनन्तरसङ्गतिरिति भावः । अत एव वक्ष्यति– सर्वाधिकारिकत्वेन तस्य यागाद्यतिशयः सिध्यतीति ॥ **किं तत्रेति ॥** अत्र ज्ञानेऽधिकारः सर्वेषामस्त्युत नास्तीति चिन्ता । तदर्थं मोक्षार्थित्वादिमात्रस्य ज्ञानाधिकारोपयोगित्वं सम्भवत्युत न सम्भवतीति । तदर्थमर्थित्वादिव्यतिरिक्तं ज्ञानाधिकारनियामकं नास्त्युतास्तीति । ननु भाष्ये लाघवाज्ज्ञानाधिकार इत्येव वक्तव्येऽधिकारितेति किमर्थमुक्तमित्यत आह– **वक्ष्यमाणसूत्रमिति ॥**

## भावदीपः

**ज्ञाने सर्वेषामित्यादि ॥** एतेन पूर्वत्र ज्ञानादेव स्वर्ग इत्यादिश्रुत्युक्तेर्ज्ञानजन्यस्वर्गादिरूपकाम्यफले प्रसङ्गात्त्र सर्वज्ञानिनामधिकार इत्युक्तम् । इह तु ज्ञान एव तत्कामिनां सर्वेषां नाधिकार इत्युच्यत इति पूर्वसङ्गतिरपि सूचिता । चिन्ताफलमाह ॥ **सर्वाधिकारिकत्व इति ॥ प्रकृतमिति ॥** पुरुषार्थोऽत इत्यत्रातःशब्देन प्रकृतमित्यर्थः ॥ **लोक इति ॥** भोजनादिकं सर्वाधिकारिकम् । वाणिज्यादिकमसर्वाधिकारिकं प्रतीयत इति भावः । भाष्ये सर्वेषामधिकारितेत्यन्वयमुपेत्याह ॥ **सर्वेषामपीति ॥** अन्धपंग्वादीनामर्थिनामपि कर्मादाविव एडमूकादीनां ज्ञानेऽनधिकारेण व्यभिचारितया भाष्योक्तार्थित्वमात्रस्याधिकाराप्रयोजकत्वादुपलक्षणत्वेन हेत्वंशं व्यनक्ति ॥ **फलार्थीत्यादिना ॥** सामर्थ्यविदुष्यवत्त्वे सति तज्जन्यफलार्थित्वादितिं हेतोः पक्षधर्मतामुपपाद्याप्रयोजकत्वं निराह ॥ **एवं चेति ॥** अधिकाराप्रयोजके सत्यपीत्यर्थः । इतोऽन्यस्याधिकार-

(भावदीपः)

प्रयोजकस्याभावादिति भावः । फलोक्त्या भाष्यार्थमुपसंहरति ॥ **अत इति** ॥ अर्थित्वादेरधिकार-प्रयोजकस्य भावादित्यर्थः । उत्तरभाष्य इवात्रापि भाष्ये अधिकार इति वाच्ये अधिकारितेत्युक्तेः कृत्यमाह ॥ **वक्ष्यमाणेति** ॥ एतेन कस्याधिकार इत्युत्तरभाष्यस्थषष्ठ्यप्युक्तप्रयोजनेति ध्येयम् ॥

## अभिनवचन्द्रिका

**सर्वेषामिति** ॥ प्राणिभृन्मात्रस्येत्यर्थः ॥ **सर्वाधिकारिकत्वेनेति** ॥ असर्वाधिकारिका-द्यागाद्वैन्यमेव स्यान्नाऽऽधिक्यमिति भावः । ननु 'पुरुषार्थापेक्षित्वात् ज्ञानेऽधिकारिता' इति भाष्यमनुपपन्नम् । फलार्थित्वमात्रस्याऽधिकाराप्रयोजकत्वादित्यतः भाष्यमुपलक्षणपरमिति भावेनाह– **फलार्थीति** ॥ **तत्रास्त्येवेति** ॥ अनन्तकालिके संसारे सर्वेषां क्रमेण ज्ञानफले मोक्षे अर्थिता भवेदेवेत्यर्थः । एतेन पामराणां मोक्षेऽर्थित्वाभावात् 'अस्त्येवेत्ययुक्तमिति परास्तम् । कदाचिद्भविष्यतीत्यर्थस्यैव विवक्षितत्वेन वर्तमानत्वस्याविवक्षितत्वात् कुतस्तदर्थिता भविष्यतीत्यत आह– **निर्दुःखेति** ॥ मोक्षस्वरूपज्ञाने तदर्थित्वमवर्जनीयमिति भावः । एवमपि सामर्थ्या-भावान्नाधिकारितेत्यत आह– **अस्ति चेति** ॥ श्रवणादावपि सामर्थ्यं कदाचिद्भविष्यतीति भावः । **तदुपयोगिनीति** ॥ विद्वत्तापि प्रयत्नेन भविष्यतीति भावः ॥ **एवं च सर्वेषामिति** ॥ अधिकारि-प्रयोजकस्य अर्थित्वादेः सद्भावेऽपि कस्यचिदधिकाराभावे कस्यापि न स्यात् अविशेषादिति भावः । ननु भाष्ये लाघवात् 'ज्ञानाधिकार' इति वक्तव्ये 'अधिकारिता' इति किमर्थमुक्तमित्यत आह– **वक्ष्यमाणसूत्रमिति** ॥

## वाक्यार्थमुक्तावली

यदि सर्वपुरुषार्थसाधनत्वं ज्ञानस्य तर्हि सर्वेषां पुरुषार्थापेक्षितत्वात् ज्ञाने सर्वेऽप्यधिकारिणः स्युरिति पूर्वोक्तमुपजीव्य पूर्वपक्षोत्थानादनन्तरसङ्गतिः ॥ **तत्रेति** ॥ ज्ञाने सर्वेषामधिकारोऽस्ति न वेति चिन्ता । तदर्थं किमर्थित्वादिकमेवाधिकारप्रयोजकमुतान्यदिति । औदार्यमित्युक्तपूर्वपक्षन्याय-मेवार्थित्वसामर्थ्यविद्वत्वरूपोदाहरणगुणवत्वमित्यर्थतयैतदधिकरणेऽपि प्रदर्शयत्पूर्वपक्षभाष्यं व्याचष्टे ॥ **सर्वेषामपीति** ॥ भाष्ये पुरुषार्थापेक्षितत्वादित्येतदुपलक्षणं मत्वाऽऽह ॥ **अस्ति चेत्यादिना** ॥ **एवं चेति** ॥ एवमप्यधिकारोपयुक्तसद्भावेऽपीत्यर्थः ॥ **अनुकरोतीति** ॥ ज्ञानाधिकारिता न

(वाक्यार्थमुक्तावली)
सार्वत्रिकी इत्यन्वयलाभायेति भावः । एवं सति न सर्वेषामिति भाष्यं स्वपदवर्णनपरतया पर्यवस्यतीति ज्ञेयम् ।

## तत्त्वसुबोधिनी

**अधिकाराभावेति ॥** अधिकोपदेशात्तु बादरायणस्येति ज्ञानस्य कर्मशेषित्वे कर्मणः सकाशात् ज्ञानस्य यः विशेषः उक्तः सः कर्मवत् ज्ञानस्यापि सर्वाधिकारिकत्वे न सम्भवतीति पूर्वाक्षेपादनन्तरसङ्गतिरिति भावः । अधिकारप्रयोजकाभावात् अधिकाराभाव इत्यतः तत्प्रयोजकार्थित्वादेः सद्भावात् युक्तोऽधिकार इत्यत आह ॥ **निर्दुःखेति ॥** निर्दुःखानन्दात्मकत्वस्येत्यर्थः । ननु अधिकारप्रयोजकार्थित्वादेः सर्वेषु सत्वेऽपि कथं न सर्वेषामधिकार इत्यत आह ॥ **एवं चेति ॥** ननु भाष्ये लाघवात् ज्ञानाधिकार इत्येव वक्तव्ये अधिकारितेति किमर्थमुक्तमित्यत आह ॥ **वक्ष्यमाणेति ॥**

## वाक्यार्थमञ्जरी

सर्वेषु विशेषत्रयं क्रमेणोपपादयति ॥ **तत्रेत्यादिना ॥** पुरुषार्थत्वात्, पुरुषैरर्थ्यत्वात् एवं च एवमपि । ननु भाष्ये लाघवायाधिकार इति वक्तव्ये अधिकारितेति किमर्थमुक्तमित्यत आह ॥ **वक्ष्यमाणेति ॥ ॐ असार्वत्रिकी ॐ ॥** ज्ञानाधिकारिता असार्वत्रिकी न सर्वजननिष्ठेत्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ विभागश्शतवत् ॐ ॥ ११ ॥**

**'नवकोट्यो हि देवानां तेषां मध्ये शतस्य तु ।**
**सोमाधिकारो वेदोक्तो ब्रह्मणी द्वे शताधिके ॥**
**यथा तथैवासङ्ख्येयाः प्रजास्तासु कियाञ्जनः ।**
**ज्ञानाधिकारी सम्प्रोक्तो विष्णुपादैकसंश्रयः'**

इति वचनात्सुखापेक्षासाम्येऽपि विभाग इष्यतेऽधिकारार्थम् ॥

## तत्त्वप्रदीपिका

**यथा नवकोटीनां देवानां मध्ये शतमेव सोमाऽधिकारिणः, प्रधानवायु (१) वसु (८) रुद्र (११) मरुत् (४९) आदित्यादयो (१२) विश्वेदेवाः (१०) बृहस्पतिः (१) पितृपतयः (३) अश्विनौ (२) ऋभवो (१) द्यावापृथिव्यन्ता (२)। द्वे ब्रह्मणी परावरे। परं विष्ण्वाख्यमवरं चतुर्मुखम्। एवमनन्तानां जीवानां मध्ये कियन्त एव ज्ञानाधिकारिणः।**

## तत्त्वप्रकाशिका

**नन्वर्थित्वादेः सर्वेषामपि सद्भावात्कथं नाधिकारितेत्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ विभाग इति ॥ यथा खलु देवत्वसाम्येऽपि नवकोटीनां न साधारण्येन सोमाधिकारः किं तु परापरब्रह्मद्वयाधिकशतस्येति विभाग एव। तथा सर्वेषां पुरुषार्थापेक्षासाम्येऽपि न ज्ञानाधिकारः किं तु ज्ञानाधिकारार्थं पुरुषविभागोऽङ्गीकार्यः। यद्युच्येत न देवत्वं सोमाधिकारोपयोगीति तर्हि नार्थित्वादिमात्रं ज्ञानाधिकारोपयोगीति वक्तव्यमिति भावः।**

## भावदीपः

भाष्यं स्पष्टार्थमित्यव्याख्याय प्रागुक्तहेतोरप्रयोजकत्वोक्तिपरतयोत्तरसूत्रमवतारयति ॥ **नन्विति** ॥ सुखेत्यादिभाष्यं वचनोक्तदृष्टान्तोक्तेरुपलक्षणं मत्वा व्याचष्टे ॥ **यथेति** ॥ **परापरब्रह्मेति** ॥ विष्णुविरिञ्चेत्यर्थः। सूत्रे शतेत्युपलक्षणमिति भावः ॥ **शतस्येति** ॥ प्रधानवायुः (१) वसवः (८) रुद्राः (११) मरुतः (४९) आदित्याः उरुक्रमसहिताः (१२) विश्वेदेवाः (१०) बृहस्पतिः (१) पितृपाः (३) अश्विनौ (२) ऋभुगणः (१) द्यावापृथिव्यौ (२) इति। प्रधानवायुवसुरुद्रमरुदादित्या विश्वेदेवा बृहस्पतिः पितृपतयः अश्विनावृभवो द्यावापृथिव्यन्ताः तत्वप्रदीपोक्ताः। हेतोः को दोष उक्त इत्यतः सौत्रवतिप्रत्ययसूचितप्रतिबन्दीमुखेनाह ॥ यदीति ॥

## वाक्यार्थमुक्तावली

नवकोटिदेवानां मध्ये सोमार्थं द्व्यधिकशतस्येव सर्वेषामर्थित्वादिसाम्येऽपि ज्ञानाधिकारार्थं पुरुषेषु विभागोऽङ्गीकार्य इति सोपस्करं सूत्रार्थं स्पष्टयति ॥ **यथा खल्वित्यादिना** ॥ अनेन व्यवस्थेत्युक्तपूर्वाधिकरणसिद्धान्तन्याय एवात्रापीति सूत्रारूढो दर्शितो भवति। सोमाधिकारिशत-

(वाक्यार्थमुक्तावली)
देवाश्च तत्वप्रदीपे यथा नवकोटिदेवानां मध्ये शतमेव सोमाधिकारिण: प्रधानवायुवसुरुद्र-मरुदादित्याः विश्वेदेवा बृहस्पतिः पितृपतय अश्विनावृषभो द्यावापृथिव्यन्ताः । द्वे ब्रह्मणी परापरे । परं विष्ण्वाख्यम् । अपरं चतुर्मुखाख्यमिति निरूपिताः ।

## तत्त्वसुबोधिनी

**परापरब्रह्मद्वयाधिकशतस्येति** ॥ प्रधानवायुवसुरुद्रादित्या मरुदादयो विश्वेदेवाः बृहस्पतिः पितृपतयोऽश्विनावृभवो द्यावापृथिव्यन्ताः परंब्रह्मविष्णाख्यम् अपरं चतुर्मुख इति परापरब्रह्म-द्वयाधिकशतस्येत्यर्थः ।

## वाक्यार्थविवरणम्

**परापरेति** ॥ परं ब्रह्म नारायणाख्यं, अपरं ब्रह्म चतुर्मुखः ॥ **शतस्येति** ॥ प्रधानवायुना सहैकोनपञ्चाशन्मरुत इति पञ्चाशत् । रुद्रा एकादश । उरुक्रमव्यतिरिक्ता एकादशादित्याः । विश्वे देवा दश । वसवोऽष्टौ । पितरस्त्रयः । ऋभवस्त्रयः । द्यावापृथिव्यौ द्वे । अश्विनौ द्वौ । इति पञ्चाशत् । इति शतस्येत्यर्थः ।

## वाक्यार्थमञ्जरी

ज्ञानाधिकारः केषाञ्चिदस्ति केषाञ्चिन्नास्तीति विभागः व्यवस्था शतवत् यथा द्व्यधिक-शतदेवानां सोमपानाधिकारो नान्येषामिति व्यवस्था तथेत्यर्थः ।

## सूत्रभाष्यम्

**कस्याधिकारः ?**

**॥ ॐ अध्ययनमात्रवतः ॐ ॥ १२ ॥**

'अवैष्णवस्य वेदेऽपि ह्यधिकारो न विद्यते ।
गुरुभक्तिविहीनस्य शमादिरहितस्य च ॥
न च वर्णावरस्यापि तस्मादध्ययनान्वितः ।
ब्रह्मज्ञाने तु वेदोक्तेऽप्य(ह्य)धिकारी सतां मत' इति ब्रह्मतर्के ॥

(सूत्रभाष्यम्)

**'पठेद्वेदानथार्थानधीयीताथ विचार्य ब्रह्म विन्देत्' इति(च)कौपारवश्रुतिः ।**

**॥ इति अधिकाराधिकरणम् (पा. असार्वत्रिकाधिकरणम्) ॥ २ ॥**

## तत्त्वप्रदीपिका

अथ के तेऽधिकारिण इत्याकाङ्क्षायामाह– अध्ययनमात्रवत इत्युक्तेरेव अधिकारिलक्षणं कृत्स्नमर्थत उक्तं भवतीत्येतद्वेदनार्थं प्रमाणवाक्यमाह– 'अवैष्णवस्य वेदेऽपि ह्यधिकारो न विद्यते' इत्यादि । अवैष्णवादीनामध्ययनेऽपि तत्फलानुत्पत्तेः सफलाध्ययनवत इत्यर्थः । मात्रशब्दस्य कार्त्स्न्येऽवधारणे च वृत्तेः साङ्गसर्ववेदाध्ययनवत इति चार्थः । अशक्तौ च यथासम्भवं वेदाध्ययनवत इति भवति ॥

## तत्त्वप्रकाशिका

यद्यर्थित्वादिसाम्येऽपि न सर्वेषामधिकारस्तर्हि कस्याप्यसौ न स्यात् । यदि केषाञ्चिदस्ति तर्ह्यर्थित्वाद्यतिरिक्तं विशेषणं वक्तव्यम् । न च तदस्तीति भावेनाक्षिपति ॥ कस्येति ॥ अर्थित्वाद्यतिरिक्तेन केन विशेषणेन युक्तस्येत्यर्थः । परिहाराय सूत्रं पठति ॥ अध्ययनेति ॥ नार्थित्वादेरधिकाराप्रयोजकत्वे तत्प्रयोजकविशेषणान्तराभावात्कस्याप्यधिकाराभावः । यथाशक्त्यखिलवेदाध्ययनवत्त्वेन विशेषणान्तरेण युक्तस्य ज्ञानाधिकारसम्भवादिति भावः । यद्यध्ययनवतोऽधिकारस्तर्ह्युक्तविभागभङ्गः स्यात् । सर्वैरपि वेदस्याध्येतुं शक्यत्वादित्यत आह ॥ **अवैष्णावस्येति** ॥ यस्मादध्ययने भगवद्भक्त्यादिमतामेवाधिकारो नान्येषां तस्मादध्ययनान्वितो ब्रह्मज्ञानेऽधिकारीति युक्तम् । विभागभङ्गाभावादिति भावः । अध्ययनवतो वैदिके ब्रह्मज्ञानेऽधिकार इति स्मृत्या सिद्धम् । तत्र श्रुतिं चाह ॥ पठेदिति ॥ अतो ज्ञाने सर्वेषामधिकाराभावादतिशयितं तदिति सिद्धम् ।

## भावबोधः

अर्थित्वादिव्यतिरिक्तं किमधिकारप्रयोजकमिति वक्तव्ये कस्येति कथमुक्तमित्यत आह– **अर्थित्वाद्यतिरिक्तेनेति** ॥ सौत्र'मात्र'शब्दः चतुर्मुखव्यतिरिक्ते अव्याप्तिपरिहाराय यथाशक्तीति वक्तव्यमित्यभिप्रेत्याह– **यथाशक्त्यखिलेति** ॥ 'अर्थसिद्धं' इति स्मृतौ संमतमित्येवोक्तं, न तु वेदोक्तम् । ब्रह्मज्ञानार्थमध्ययनं कर्तव्यमिति विधिरस्तीति भावः । अत्राद्ये सर्वेषामधिकारा-

(भावबोधः)
भावप्रतिज्ञा । द्वितीये तत्र निमित्तत्वेनोक्तार्थित्वादेरप्रयोजकत्वोक्तिः । तृतीये तदुपपादनायार्थित्वादिव्यतिरिक्ताधिकारप्रयोजकाभिधानमिति सूत्रक्रमः ।

## भावदीपः

पूर्वं स्वोक्तनिरधिकारिकत्वापत्तिदोषं भाष्यारूढं कुर्वन्नवतार्य व्याचष्टे ॥ **यद्यर्थित्वादीति** ॥ प्रागुक्तशङ्कां निराह ॥ **नार्थित्वादेरिति** ॥ तत्र हेतुत्वेन सूत्रार्थं तस्मादित्यादिस्मृतिशेषोक्तमाह ॥ **यथाशक्तीति** ॥ सलिलवच्चेत्युक्तन्यायादिति भावः । मात्रपदं कात्स्न्यर्थपरं मत्त्वोक्तमखिलेति । तस्मादित्यन्तस्मृतेरुपयोगाप्रतीतेराह ॥ **यदीति** ॥ सूत्राक्षरार्थमनुवदति ॥ **अध्ययनेति** ॥ भाष्ये इति चेति चशब्दादाह ॥ **स्मृत्या सिद्धं श्रुतिं चाहेति** ॥ अध्ययनान्वित इत्यादिस्मृतिशेषेणैवार्थस्य सिद्धत्वेऽप्यध्ययनस्यातिप्रसक्तिनिरासकतया पूर्वांशस्योपयोगसूचनाय स्मृत्या सिद्धमित्युक्तम् ॥ अत इति ॥ अध्ययनवत्त्वे सत्यर्थित्वादेरेव प्रयोजकत्वात्तस्य चासार्वत्रिकत्वादित्यर्थः ।

## अभिनवचन्द्रिका

**भगवद्भक्त्यादिमतामेवेति** ॥ तत्वज्ञानपर्यवसन्नाध्ययनाधिकारो भगवद्भक्तिमतामेव नाऽन्येषामित्यर्थः । एतेनाऽभक्तस्य वेदाध्ययनानधिकारे महानुभावस्य चतुर्मुखस्य विरोचनाध्ययनादौ प्रवृत्तिर्न स्यादिति परास्तम् । तदध्ययनस्य मिथ्याज्ञानपर्यवसायित्वेन भक्तेरनङ्गत्वात् ॥

पूर्वपक्षस्तु– सर्वेषामप्यस्ति ज्ञानेऽधिकारः । तदुपयोगिनोऽर्थित्वादेः सर्वत्र सौलभ्यात् । सत्यप्यधिकारप्रयोजके कस्यचिदनधिकारे कस्यापि न स्यादिति निरधिकारिताप्रसङ्गः । अतः सर्वेषां ज्ञानाधिकारित्वात् न तदतिशयवदिति ।

सिद्धान्तस्तु– न सर्वेषां ज्ञानाधिकारः । किं नाम सत्यपि देवत्वे, यथा ब्रह्मद्वयाधिकशतानामेव सोमाधिकार इति विभागः, तथा सत्यप्यर्थित्वे केषांचिदधिकारो न सर्वेषामिति विभागः । यदि नार्थित्वम् अधिकारप्रयोजकं तर्हि किं विशेषेण विशिष्टानामधिकार इति चेत् हरिभक्तिपूर्वकाध्ययनवतामिति गृहाण । अतो ज्ञाने सर्वेषामधिकाराभावात् अतिशयितं तदिति सिद्धम् ।

## वाक्यार्थमुक्तावली

**अर्थित्वाद्यतिरिक्तेति** ॥ अर्थित्वादीनां अनधिकारिसाधारण्यात् अनधिकारिव्यावर्तकमधिकारिविशेषणं वक्तव्यमित्यर्थः ॥ **केनेति** ॥ न केनापीत्यर्थः । तथा च कस्याधिकारो न कस्यापीति भाष्यार्थ इति भावः । यद्यपि विष्णुपादैकसंश्रय इति भक्तस्याधिकार इत्युक्तं तथापि वक्ष्यमाणमपेक्ष्य भाष्यकृता एवोक्तत्वात् भवति शङ्केति बोध्यम् । सूत्रे अध्ययनमात्रवत इत्यत्र मात्रशब्दस्यान्ययोगव्यवच्छेदकावधारणार्थत्वे विष्णुभक्त्यादिकमनपेक्षितमिति प्रतीयते । तथात्वे भक्तिमान्परमे विष्णाविति जिज्ञासाधिकरणभाष्यविरोधः । अत्र चाध्ययनेनैव विष्णुभक्तिः वक्ष्यमाणरीत्या लभ्यते । अत एव तत्वप्रदीपे । अध्ययनमात्रवत इत्युक्तेरेवाधिकारिलक्षणं कृत्स्नमर्थत उक्तं भवतीत्येतद्भेदनार्थं प्रमाणवाक्यमाह ॥ **वैष्णवस्येति** ॥ **इत्यवतारितमिति** ॥ अर्थतो लाभेऽपि मुखतोऽलाभेनाध्ययनपदेन गुरूक्त्यनुक्तिमात्रग्रहणेऽवधारणार्थकमात्रशब्दस्य प्रागुक्तविरोधतादवस्थ्यात् । अत एवोक्तं जिज्ञासाधिकरणटीकायाम् । अध्ययनलब्धापि विष्णुभक्तिरन्यस्याध्ययननिवृत्त्यर्थं पृथगुक्तेति । किञ्च मात्रशब्दस्यान्ययोगव्यवच्छेदकत्वेऽर्थित्वादेरपि व्यावर्तितत्वान्मुक्तानामपि व्यावर्तितत्वान्मुक्तानामपि वेदाधिकारित्वं स्यात् । अध्ययनायोगव्यवच्छेदकत्वे 'यथाशक्त्यखिलान् वेदान् विज्ञायोपासनं भवेत्' इत्युक्तरीत्याधिकारिप्रयोजकयथाशक्त्यखिलवेदाध्ययनस्य लाभ इत्यतो मात्रशब्दस्य कात्स्न्र्यपरत्वं स्वीकृत्य सर्वेषां कृत्स्नाध्ययनाभावादव्याप्तिपरिहाराय यथाशक्तीति विशेषणं च स्वीकृत्य अधिकार इत्यनुवृत्तिं चाभिप्रेत्य सूत्रार्थमाह ॥ **यथाशक्तीति** ॥ **भक्त्यादिमतामेवाधिकार इति** ॥ नन्वभक्तस्यानधिकारित्वे चतुर्मुखस्य विरोचनाध्यापने कथं प्रवृत्तिरिति चेन्न । अभक्तत्वादेव तस्यानधिकारितया विफलमिति ज्ञापनायाध्यापनोपपत्तेः ॥ **स्मृत्यर्थसिद्धमिति** ॥ अवैष्णवस्येति स्मृत्या सिद्धम् । अर्थादन्यथानुपपत्त्या 'प्रजास्तासु कियान् जनः ज्ञानाधिकारी सम्प्रोक्तः' इति प्रमितविभागान्यथानुपपत्त्या सिद्धमित्यर्थः । यद्वा सतां मत इत्यत्राध्ययनवति स्तुत्या यदर्थात्सिद्धमध्ययनं कर्तव्यमिति तत्र स्मृतिमाहेत्यर्थः । यद्वा स्मृतौ सतां मत इत्येवोक्तम् । न च वेदोक्तब्रह्मज्ञानार्थमध्ययनं कर्तव्यमिति विधिरस्तीति भावेन स्मृत्यर्थपर्यालोचनया कर्तव्यत्वेन सिद्धमित्यर्थः । अत्राद्ये सर्वेषां ज्ञानाधिकाराभावं प्रतिज्ञाय परोक्ताधिकारप्रयोजकस्य द्वितीयेऽप्रयोजकत्वमुक्त्वा तृतीये भक्तिपूर्वाध्ययनस्य प्रयोजकत्वोक्तिरिति सूत्रक्रमः ।

## तत्त्वसुबोधिनी

अर्थित्वादिव्यतिरिक्तं किमधिकारप्रयोजकमिति वक्तव्ये कस्येति कथमुक्तमित्यत आह ॥ **अर्थित्वाद्यतिरिक्तेनेति** ॥ सौत्रमात्रशब्दः कात्स्न्र्यपरः ततश्च साङ्गसर्ववेदाध्ययनवत इति सूत्रार्थः । चतुर्मुखव्यतिरिक्तेऽव्याप्तिपरिहाराय यथाशक्तीति वक्तव्यमित्यभिप्रेत्याह ॥ **यथाशक्त्याखिलेति** ॥ **यस्मादित्यादि** ॥ अनेनावैष्णवानामध्ययनेऽपि तत्फलानुपपत्तेः सफलाध्ययनवतः इति वार्थ इत्युक्तं भवति । उक्तविभागभङ्गः । भगवद्भक्तिमतामेवाधिकार इत्युक्तविभागभङ्गः ॥ **स्मृत्यासिद्धमिति** ॥ स्मृतौ सतां मत इत्येवोक्तं न तु वेदोक्तब्रह्मज्ञानार्थमध्ययनं कर्तव्यमिति विधिरस्तीति भावः । अत्राद्ये सर्वेषामधिकाराभावप्रतिज्ञा । द्वितीये अर्थित्वादेरप्रयोजकत्वोक्तिः तृतीये च अर्थित्वादिव्यतिरिक्ताधिकारप्रयोजकाभिधानमिति सूत्रक्रमः ।

## वाक्यार्थमञ्जरी

मात्रशब्दः कात्स्न्र्ये कात्स्न्र्याध्ययनवतोऽधिकारितेत्यर्थः ॥ **अर्थसिद्धमिति** ॥ तत्र सतां मत इत्येवोक्तं न तु वेदो ब्रह्मज्ञानार्थमध्ययनं कर्तव्यमिति विधिरस्तीति भावः ।

॥ **इति असार्वत्रिकाधिकरणम्** ॥ २ ॥

## वाक्यार्थमुक्तावली

**अर्थित्वाद्यतिरिक्तेति** ॥ अर्थित्वादीनां अनधिकारिसाधारण्यात् अनधिकारिव्यावर्तकमधिकारिविशेषणं वक्तव्यमित्यर्थः ॥ **केनेति** ॥ न केनापीत्यर्थः । तथा च कस्याधिकारो न कस्यापीति भाष्यार्थ इति भावः । यद्यपि विष्णुपादैकसंश्रय इति भक्तस्याधिकार इत्युक्तं तथापि वक्ष्यमाणमपेक्ष्य भाष्यकृता एवोक्तत्वात् भवति शङ्केति बोध्यम् । सूत्रे अध्ययनमात्रवत इत्यत्र मात्रशब्दस्यान्ययोगव्यवच्छेदकावधारणार्थत्वे विष्णुभक्त्यादिकमनपेक्षितमिति प्रतीयते । तथात्वे भक्तिमान्परमे विष्णाविति जिज्ञासाधिकरणभाष्यविरोधः । अत्र चाध्ययनेनैव विष्णुभक्तिः वक्ष्यमाणरीत्या लभ्यते । अत एव तत्वप्रदीपे । अध्ययनमात्रवत इत्युक्तेरेवाधिकारिलक्षणं कृत्स्नमर्थत उक्तं भवतीत्येतद्भेदनार्थं प्रमाणवाक्यमाह ॥ **वैष्णवस्येति** ॥ **इत्यवतारितमिति** ॥ अर्थतो लाभेऽपि मुखतोऽलाभेनाध्ययनपदेन गुरूक्त्यनुक्तिमात्रग्रहणेऽवधारणार्थकमात्रशब्दस्य प्रागुक्तविरोधतादवस्थ्यात् । अत एवोक्तं जिज्ञासाधिकरणटीकायाम् । अध्ययनलब्धापि विष्णुभक्तिरन्यस्याध्ययननिवृत्त्यर्थं पृथगुक्तेति । किञ्च मात्रशब्दस्यान्ययोगव्यवच्छेदकत्वेऽर्थित्वादेरपि व्यावर्तितत्वान्मुक्तानामपि व्यावर्तितत्वान्मुक्तानामपि वेदाधिकारित्वं स्यात् । अध्ययनायोगव्यवच्छेदकत्वे 'यथाशक्त्यखिलान् वेदान् विज्ञायोपासनं भवेत्' इत्युक्तरीत्याधिकारिप्रयोजकयथाशक्त्यखिलवेदाध्ययनस्य लाभ इत्यतो मात्रशब्दस्य कात्स्न्र्यपरत्वं स्वीकृत्य सर्वेषां कृत्स्नाध्ययनाभावादव्याप्तिपरिहाराय यथाशक्तीति विशेषणं च स्वीकृत्य अधिकार इत्यनुवृत्तिं चाभिप्रेत्य सूत्रार्थमाह ॥ **यथाशक्तीति** ॥ **भक्त्यादिमतामेवाधिकार इति** ॥ नन्वभक्तस्यानधिकारित्वे चतुर्मुखस्य विरोचनाध्यापने कथं प्रवृत्तिरिति चेन्न । अभक्तत्वादेव तस्यानधिकारितया विफलमिति ज्ञापनायाध्यापनोपपत्तेः ॥ **स्मृत्यर्थसिद्धमिति** ॥ अवैष्णवस्येति स्मृत्या सिद्धम् । अर्थादन्यथानुपपत्त्या 'प्रजास्तासु कियान् जनः ज्ञानाधिकारी सम्प्रोक्तः' इति प्रमितविभागान्यथानुपपत्त्या सिद्धमित्यर्थः । यद्वा सतां मत इत्यत्राध्ययनवति स्तुत्या यदर्थात्सिद्धमध्ययनं कर्तव्यमिति तत्र स्मृतिमाहेत्यर्थः । यद्वा स्मृतौ सतां मत इत्येवोक्तम् । न च वेदोक्तब्रह्मज्ञानार्थमध्ययनं कर्तव्यमिति विधिरस्तीति भावेन स्मृत्यर्थपर्यालोचनया कर्तव्यत्वेन सिद्धमित्यर्थः । अत्राद्ये सर्वेषां ज्ञानाधिकाराभावं प्रतिज्ञाय परोक्ताधिकारप्रयोजकस्य द्वितीयेऽप्रयोजकत्वमुक्त्वा तृतीये भक्तिपूर्वाध्ययनस्य प्रयोजकत्वोक्तिरिति सूत्रक्रमः ।

## तत्त्वसुबोधिनी

अर्थित्वादिव्यतिरिक्तं किमधिकारप्रयोजकमिति वक्तव्ये कस्येति कथमुक्तमित्यत आह ॥ **अर्थित्वाद्यतिरिक्तेनेति** ॥ सौत्रमात्रशब्दः कात्स्न्र्यपरः ततश्च साङ्गसर्ववेदाध्ययनवत इति सूत्रार्थः । चतुर्मुखव्यतिरिक्तेऽव्याप्तिपरिहाराय यथाशक्तीति वक्तव्यमित्यभिप्रेत्याह ॥ **यथाशक्त्याखिलेति** ॥ **यस्मादित्यादि** ॥ अनेनावैष्णवानामध्ययनेऽपि तत्फलानुपपत्तेः सफलाध्ययनवतः इति वार्थ इत्युक्तं भवति । उक्तविभागभङ्गः । भगवद्भक्तिमतामेवाधिकार इत्युक्तविभागभङ्गः ॥ **स्मृत्यासिद्धमिति** ॥ स्मृतौ सतां मत इत्येवोक्तं न तु वेदोक्तब्रह्मज्ञानार्थमध्ययनं कर्तव्यमिति विधिरस्तीति भावः । अत्राद्ये सर्वेषामधिकाराभावप्रतिज्ञा । द्वितीये अर्थित्वादेरप्रयोजकत्वोक्तिः तृतीये च अर्थित्वादिव्यतिरिक्ताधिकारप्रयोजकाभिधानमिति सूत्रक्रमः ।

## वाक्यार्थमञ्जरी

मात्रशब्दः कात्स्न्र्ये कात्स्न्र्याध्ययनवतोऽधिकारितेत्यर्थः ॥ **अर्थसिद्धमिति** ॥ तत्र सतां मत इत्येवोक्तं न तु वेदो ब्रह्मज्ञानार्थमध्ययनं कर्तव्यमिति विधिरस्तीति भावः ।

**॥ इति असार्वत्रिकाधिकरणम् ॥ २ ॥**

## ३. अविशेषाधिकरणम्

### सूत्रभाष्यम्

**॥ ॐ नाविशेषात् ॐ ॥ १३ ॥**

न सामान्येनाधिकारो देवादीनाम् ।

'अथ पुमर्थसाधनान्यर्थो धर्मो ज्ञानमित्युत्तरोत्तरम् ।
तत्राधिकारिणो मनुष्या ऋपयो देवा इत्युत्तरोत्तरम् ' इति कौण्डिन्यश्रुतिः ॥

॥ इति अधिकारविशेपाधिकरणम् (अविशेपाधिकरणम्) ॥ ३ ॥

### तत्त्वप्रदीपिका

अधिकारितारतम्यस्पष्टीकारि सूत्रमवतारयति– **नाविशेषात्** ॥ न सामान्येनाधिकारो देवाना-मृपिगन्धर्वाणां मनुष्याणां च, न च देवानामपि सामान्येनाधिकारः, नाप्यृष्यादीनां नापि मनुष्याणाम् । अर्थो धर्मो ज्ञानमित्युत्तरोत्तरत पुमर्थानां कामस्वर्गापवर्गाणां साधनानि । साधनं चोत्तरोत्तरमविकमित्यर्थः । तेपु त्रिष्वप्यधिकारिणो मनुष्यऋष्यादिदेवा उत्तरोत्तरं प्रत्येकं प्रत्येकं चेत्यर्थः ।

### तत्त्वप्रकाशिका

अत्र भगवत्प्राप्तिसाधनज्ञानाधिकारस्य संपूर्णस्य दौर्लभ्यलक्षणज्ञानमहिम्नो वर्णनादस्ति शास्त्रादिसङ्गतिः । सौलभ्येऽतिशयाभावप्रसङ्गादेतत्समर्थनीयम् । प्रकृतो ज्ञानाधिकारो विपयः । किं सर्वेपां देवादीनामेकप्रकारेणाथ नानाप्रकारेणेति सन्देहः । लौकिकसाधनेषूभयथा दर्शनं सन्देह-वीजम् । सर्वेपामविशेपेण ज्ञानाधिकार इति पूर्वः पक्षः । अधिकारतारतम्यकल्पनस्य व्यर्थत्वात् । न च वाच्यं प्रज्ञान्तरपृथक्त्ववद्दृष्टिरिति ज्ञाने तारतम्यस्योक्तत्वात्तदधिकारेऽपि तारतम्यमिति । अधिकारे विशेपाभावेऽपि ज्ञानतारतम्यस्याधिकारिणामुच्चावचशक्त्यैव सम्भवात् । अतः सर्वेपां ज्ञानाधिकारसाम्येन सर्वसौलभ्यात्पूर्णाधिकारस्य न ज्ञानमतिशयितमिति । सिद्धान्तयत्सूत्रं पठित्वा व्याचष्टे ॥ **नेति** ॥ न देवाद्यधिकारिणां साम्येन ज्ञानाधिकारः । तथात्वे ज्ञानेऽपि साम्यप्रसङ्गात् ।

(तत्त्वप्रकाशिका)

तस्याधिकारानुसारित्वात् । **न चाधिकारसाम्येऽपि शक्तितारतम्येन ज्ञानतारतम्यमिति युक्तम् ।** अधिकारसाम्ये **शक्तितारतम्यस्यैवायोगात् । अधिकारतारतम्यमन्तरेण तत्कारणाभावादिति** भावः । **ज्ञानाधिकारतारतम्ये श्रुतिं चाह ॥ अर्थेति ॥ पुमर्थो मोक्षः । अर्थस्य धर्मज्ञानद्वारा मोक्षसाधनत्वं धर्मस्य ज्ञानद्वारा ज्ञानस्य साक्षादिति । अतः संपूर्णज्ञानाधिकारस्य सर्वसुलभत्वाभावात्सातिशयं** ज्ञानमिति सिद्धम् ॥

## भावबोधः

**सम्पूर्णस्येति** ॥ उत्तमस्येत्यर्थः । पूर्वं सामान्यतोऽधिकारस्वरूपं विचार्येदानीं तद्विशेष-विचारादनन्तरसङ्गतिरिति भावः ॥ **किं सर्वेषामिति** ॥ अत्र ब्रह्मज्ञाने देवादीनां सर्वेषामेक-प्रकारेणाधिकार उतानेकप्रकारेणेति चिन्ता । तदर्थं 'प्रज्ञान्तरपृथक्त्ववद्दृष्टिः' इत्युक्तापरोक्षज्ञान-तारतम्यमधिकारतारतम्यं विना सम्भवत्युत न सम्भवतीति । तदर्थं साधकानामुच्चावचशक्ति-रधिकारानुसारिणी न भवत्युत भवतीति । तदर्थमधिकारतारतम्ये प्रमाणं नास्त्युतास्तीति । न सामान्येनाधिकारो देवादीनामिति भाष्यानुरोधेन पूर्वपक्षमाह– **सर्वेषामविशेषेणेति** ॥ अधिकारे समेऽपि तेषामेवोच्चावचशक्तियोगात् फलभेदोपपत्तेः अधिकारिविशेषकल्पनं व्यर्थमिति न्यायविवरणं संयोजयति– **अधिकारतारतम्येति** ॥ भक्त्याद्यधिकारतारतम्यानुसारेण शास्त्रात् फलप्राप्तेः सर्वेषामविशेषादिति न्यायविवरणं तात्पर्यतो व्याचष्टे– **तथात्व इति** ॥ उच्चावचशक्तेरपि तन्निबन्धनत्वादिति न्यायविवरणं पूर्वपक्षहेत्वसिद्धिप्रतिपादकत्वेन व्याचष्टे– **अधिकारसाम्य इति** ॥ **श्रुतिं चाहेति** ॥ अनेन दृश्यमानत्वाच्च भक्त्याद्यधिकारतारतम्यस्येति न्याविवरणमप्युक्तार्थं भवति । श्रौतस्य 'ज्ञानमित्युत्तरोत्तरं' इत्यस्याभिप्रायमाह– **अर्थस्येति** ॥ 'यावदधिकारमवस्थिति-राधिकारिकाणां' इत्यत्र 'वृद्धिह्रासं' इत्यत्रोक्तस्य मोक्षगततारतम्यस्य प्रयत्नादिनान्यथासिद्धि-शङ्कानिरासाय उपासनायां अधिकारतारतम्यसमर्थनम् । अत्र पुनः 'प्रज्ञान्तरपृथक्त्ववद्दृष्टिः' इत्युक्तापरोक्षज्ञानरूपफलतारतम्यस्य प्रयत्नादिनान्यथासिद्धिशङ्कानिरासाय ज्ञानाधिकारतारतम्य-समर्थनमिति महान् भेदः ।

## भावदीपः

**सम्पूर्णस्येति** ॥ पुष्कलस्येत्यर्थः । अधिकारो हि पुष्कलाध्ययनभक्तिशमादिसम्पत्तिरूपा योग्यता सा दुर्लभेत्येवंरूपमहिम्न इत्यर्थः । एतेन पूर्वोक्तसामान्यस्यात्र विशेषचिन्तनाद्वा यथाशक्त्यखिलवेदाध्ययनवतोऽधिकारित्वोक्तौ तर्हि तत्तदीयोच्चावचशक्त्यैव फलभेदसिद्धौ किमधिकारभेदकल्पनयेति शङ्कनाद्वा पूर्वसङ्गतिरपि सूचिता । सामान्येनाधिकारो देवादीनामिति भाष्योक्तमाह ॥ **सर्वेषामिति** ॥ अधिकारिणामित्यर्थः । सामान्येनेत्यस्य व्याख्येयसौत्रपदानुकारोऽविशेषेणेति । अधिकारविशेषकल्पनं व्यर्थमित्यन्यत्रोक्तं हेतुत्वेन योजयति ॥ **अधिकारेति** ॥ अधिकारे समेऽपि तेषामेवोच्चावचशक्तियोगात्फलभेदोपपत्तेरिति न्यायविवरणांशं गतार्थताशङ्कानिवर्तकतया योजयति ॥ **न चेति** ॥ प्रज्ञान्तरपृथक्त्ववदुपासनातारतम्यवत् दृष्टिश्च पृथङ्नानाप्रकारेत्युपासनापादीयद्वात्रिंशन्नये उक्तत्वादित्यर्थः । यद्यपि तत्र साधनतारतम्येनैव दृष्टितारतम्यमुक्तं तथापि तस्याप्यधिकारतारतम्यमूलकत्वात्तदधिकारेऽपि तारतम्यमित्युक्तम् । ज्ञानेत्युपलक्षणम् । मुक्तितारतम्यस्येत्यपि ध्येयम् । तेन यावदधिकारमवस्थितिरित्यत्र मुक्तितारतम्यान्यथानुपपत्त्या प्राचीनाधिकारतारतम्यं सिद्धमिति तदप्याक्षिप्तं ध्येयम् । अत एव न्यायविवरणे फलभेदानुपपत्तेरिति सामान्योक्तिः ॥ **उच्चावचेति** ॥ महदल्पेत्यर्थः ॥ **अत इति** ॥ शक्तिभेदेनैव फलभेदोपपत्त्या अधिकारिविशेषकल्पनस्य व्यर्थत्वादित्यर्थः । सर्वेषामध्ययनवतामित्यर्थः । भाष्यं व्याचष्टे ॥ **न देवेति** ॥ सौत्राविशेषपदार्थः साम्येनेति । अविशेषप्रसङ्गादित्यर्थांतरं चोपेत्याह ॥ **साम्यप्रसङ्गादिति** ॥ **तस्येति** ॥ ज्ञानेऽपि साम्यस्येत्यर्थः । तच्च नेत्युक्तम् । प्रज्ञान्तरेत्यत्रेति भावः । प्रागुक्तशङ्कामनूद्योच्चावचशक्तेरपि तन्निबन्धनत्वादित्यन्यत्रोक्तयुक्तिविवरणेन निराह ॥ **न चेति** ॥ न केवलं ज्ञानेऽप्यविशेषप्रसङ्गरूपयुक्तिरिति चार्थः । उत्तरोत्तरमित्यस्यार्थोऽर्थस्येत्यादि ॥ **अत इति** ॥ अधिकारिभेदस्य युक्तिश्रुतिसिद्धत्वादित्यर्थः ।

## अभिनवचन्द्रिका

पूर्वपक्षस्तु– सर्वेषामेकप्रकारेणैव ज्ञानाधिकारः । अधिकारतारतम्यकल्पकाभावात् । न च ज्ञानतारतम्यान्यथानुपपत्त्या तत्सिद्धिः । अधिकारसाम्येऽपि प्रयत्नतारतम्यादेव तत्सिद्धेः । अतो न ज्ञानं कर्मणः सकाशादतिशयवदिति ।

(अभिनवचन्द्रिका)

सिद्धान्तस्तु– न देवादीनां साम्येन ज्ञानाधिकारः । ज्ञानसाम्यप्रसङ्गात् । न च शक्ति-तारतम्येन ज्ञानतारतम्यमुपपन्नमिति वाच्यम् । अधिकारतारतम्याभावे शक्तितारतम्यस्यैवायोगात् । अतः संपूर्णज्ञानाधिकारस्य सर्वसुलभत्वाभावात् सातिशयं ज्ञानमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

**सम्पूर्णस्येति** ॥ पूर्वं ब्रह्मज्ञानाधिकारो न सर्वेषां किन्तु वैष्णवानामेवेत्युक्तमधुना वैष्णवेष्वपि सम्पूर्णज्ञानाधिकारस्य सार्वत्रिकत्वनिरासादनन्तरसङ्गतिरिति भावः । किं सर्वेषामिति । अत्र ब्रह्मज्ञाने देवादीनां सर्वेषामेकप्रकाराधिकार उतानेकप्रकार इति चिन्ता । तदर्थमधिकारतारतम्यं निष्प्रयोजनमुत सफलमिति । तदर्थं फलत्वेनाभिमतं ज्ञानतारतम्यं शक्तितारतम्येनैवान्यथासिद्धमुत नेति । न देवादीनामविशेषादधिकार इति साक्षात्सूत्रनिरस्यं पूर्वपक्षमाह ॥ **न सर्वेषामविशेषेणेति** ॥ सिद्धान्तेऽधिकारतारतम्याभावेऽविशेषात् तत्फले ज्ञाने विशेषाभावप्रसङ्गादित्युक्त्या निरस्यां युक्तिमाह ॥ **अधिकारितारतम्यकल्पनस्येति** ॥ कुतो न वाच्यमित्यत उच्चावचशक्तिरित्युक्तन्यायो नोपपादयति ॥ **अधिकारेति** ॥ सूत्रे देवादीनां ज्ञानाधिकार इत्यध्याहारः । तथा चाविशेषाद-विशेषेण साम्येनैकप्रकारतया देवादीनां न ज्ञानाधिकार इत्यर्थपरं न साम्येनेति भाष्यं व्याचष्टे ॥ **न देवादीनामिति** ॥ कुतो नेत्यतः अविशेषादित्युक्तसिद्धान्तन्यायप्रदर्शकस्याविशेषादित्यस्य ज्ञानेऽविशेषप्रसङ्गादित्यर्थान्तरं भाष्येऽपि साम्येनेत्यस्य साम्यप्रसङ्गेनेत्यर्थं मत्वा व्याचष्टे ॥ **तथात्व इति** ॥ अधिकारज्ञानयोरविशेषेण साम्येनैकप्रकारत्वेनेत्यर्थं मत्वा व्याचष्टे ॥ **तस्याधिकारानु-सारित्वादिति** ॥ अधिकारसाम्ये शक्तितारतम्यस्यैवायोगादिति । एतेनाधिकारशक्त्योरविशेषेण साम्येनैकप्रकारत्वेनेत्यर्थान्तरमुक्तं भवति । अर्थो धर्मो ज्ञानमित्येतान्युत्तरोत्तरं द्वारद्वारिभावेन पुमर्थसाधनानि । तत्र तेषु मनुष्या ऋषयो देवा उत्तमोत्तमाधिकारिण इति श्रुत्यर्थमभिप्रेत्याह ॥ **पुमर्थो मोक्ष इत्यादिना** ॥

ननु भक्तिवैराग्यादिरूपस्य ज्ञानाधिकारस्य तारतम्यसमर्थनं गतार्थम् । भक्तिपादे वृद्धिह्रास-भाक्त्वमित्यत्र फलतारतम्येन भक्त्याद्यधिकारतारतम्यस्य समर्थितत्वात् । उपासनापादे याव-दधिकारमित्यत्र च वृद्धिह्रासभाक्त्वमित्यत्रोक्तस्य फलतारतम्यस्याधिकारतारतम्यं विहाय

(वाक्यार्थमुक्तावली)

प्रयत्नतारतम्येनान्यथासिद्धेर्निरस्तत्वाच्चेति चेन्न । तत्र मुक्त्याख्यफलतारतम्यस्योपासनादिप्रयत्न-तारतम्येनान्यथासिद्धिशङ्कानिरासायोपासनायामधिकारतार तम्यसमर्थनम् । इह तु प्रज्ञान्तरपृथक्त्व-मित्युक्तापरोक्षज्ञानरूपफलतारतम्यस्य प्रयत्नादिनान्यथासिद्धिशङ्कानिरासाय ज्ञानाधिकारतारतम्य-समर्थनमिति भेदात् । तदुक्तं न्यायविवरणे । भक्त्याद्यधिकारानुसारेण शास्त्रफलप्राप्तेरिति ।

## तत्त्वसुबोधिनी

**सम्पूर्णस्येति** ॥ उत्तमस्येत्यर्थः । पूर्वं सामान्यतोऽधिकारस्वरूपं विचार्य इदानीं तद्विशेष-विचारादनन्तरसङ्गतिरिति भावः । ज्ञानतारतम्यस्यान्यथासिद्धत्वान्नाधिकारतारतम्यकल्पकत्व-मित्याह ॥ **अधिकारेति** ॥ श्रौतस्य प्रथमस्योत्तरोत्तरमित्यस्याभिप्रायमाह ॥ **अर्थस्येति** ॥ तत्राधिकारिण इत्यादेरयमर्थः । तत्र मोक्षसाधनज्ञाने मनुष्याः, ऋषयः, देवाः, अधिकारिणः ते च पूर्वपूर्वापेक्षया उत्तरोत्तरं विशिष्टा एव न तु समाना इति । एतच्च ज्ञानाधिकारतारतम्ये श्रुतिं चाहेत्यवतारिकाग्रंथेनैव व्याख्यातप्रायत्वान्न तत्र टीकाकृता पृथक्व्याख्यातम् । तत्वप्रदीपे तु साम्येनाधिकारो देवानां ऋषिगन्धर्वाणां मनुष्याणां च न च देवानामपि सामान्येनाधिकारः नापि ऋष्यादीनां नापि मनुष्याणां अर्थो धर्मो ज्ञानमित्युत्तरोत्तरतः पुमर्थानां कामस्वर्गापवर्गाणां साधनानां साधनत्वं चोत्तरोत्तरमधिकम् । एतेषु अधिकारिणो मनुष्यादिदेवाः उत्तरोत्तरं प्रत्येकं प्रत्येकं चेत्यर्थः इति प्रकारान्तरेण व्याख्यातमिति ज्ञातव्यम् । यावदधिकारमित्यत्र वृद्धिह्रास-मित्यत्रोक्तस्य मोक्षगततारतम्यस्य प्रयत्नादिनाऽन्यथासिद्धिशङ्कापरिहाराय उपासनायामधिकारतम्य-समर्थनमिति महान् भेदः ।

## वाक्यार्थविवरणम्

**लौकिकसाधनेष्विति** ॥ कृषीवलानां धान्यसाधनीभूतकर्षणादिसाधनानामेकप्रकारत्वं दृष्टम् । धनप्राप्तिसाधनानां कुसीदराजसेवादीनामनेकप्रकारत्वं दृष्टमित्यर्थः ।

## वाक्यार्थमञ्जरी

**उच्चेति** ॥ उत्तमम् । **अवचेति** ॥ नीचेत्यर्थः ॥ ॐ नाविशेषात् ॐ ॥ अविशेषा-द्विशेषतारतम्यं विना ज्ञानाधिकारिता न कुतः अविशेषात् मानस्याप्यविशेषप्रसङ्गादित्यर्थः ।

**॥ इति अविशेषाधिकरणम् ॥ ३ ॥**

## ४. स्तुत्यधिकरणम्

### सूत्रभाष्यम्

'अथ मुनिरमौनं च मौनं च निर्विद्याथ ब्राह्मणः स ब्राह्मणः केन स्याद्येन स्यात्तेनेदृश एव' (बृ.उ.५-५-१) इति ज्ञानिनो यथेष्टाचरणं विधीयत इत्यत आह—

**॥ ॐ स्तुतयेऽनुमतिर्वा ॐ ॥ १४ ॥**

न विधिः । ज्ञानिनः स्तुतये अनुमतिमात्रं वा । युज्यते च ॥

### तत्त्वप्रदीपिका

मौनमुपासनम् । अमौनमपरोक्षज्ञानम् । निर्विद्य नितरां लब्ध्वा, विद् लाभ इति धातोः । अथ ब्राह्मणः ब्रह्मनिष्ठो भवति । स येन केनापि वर्तेत, तेनेदृश एव स्यात् । न किञ्चिदपि हीयते । एवं श्रुतियोजनायां ज्ञानिनो यथेष्टचरणं विधीयत इत्यायातम् । युज्यते च । किन्नु खल्वेवंविधं ब्रह्मदर्शनं तस्य दर्शनवतोऽभिमत न कुर्वीतेत्यत आह– स्तुतयेऽनुमतिर्वा ॥ नायं विधिः यो ज्ञानी स यथेष्टं चरेदेवेति । प्रमाणाभावात् । अपि तु 'केन स्याद्येन स्यात्तेनेदृश एव' इत्युक्तिर्ज्ञानिस्तुतये । यथेष्टप्रवृत्तावनुमतिमात्रं वैतत् । 'स्तुतिः' सामर्थ्यप्रकटनम् । 'अनुमतिः' क्रियमाणस्याभ्यनुज्ञा । यथेष्टचरणेऽपि तस्य ज्ञानिनो मुक्तेर्नियतत्वात् ।

### तत्त्वप्रकाशिका

अत्र भगवत्प्राप्तिसाधनज्ञानस्यासत्प्रवृत्तावपि मोक्षसाधनत्वनियमलक्षणमहिम्नो वर्णनादस्ति शास्त्रादिसङ्गतिः । अन्यथा साधनान्तरादतिशयाभावप्रसङ्गात्समर्थनीयमेतत् । प्रकृतज्ञानवानत्र विषयः । किं तस्य सदसत्प्रवृत्त्योर्विशेषोऽस्ति न वा इति सन्देहः । लौकिकदृष्टिस्तुल्यं त्वित्युक्तिश्च सन्देहबीजम् । पूर्वपक्षं सूचयति ॥ अथेति ॥ न ज्ञानिनः सदसत्प्रवृत्त्योर्विशेषोऽस्ति । ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेद्बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिरमौनं च मौनं च निर्विद्याथ ब्राह्मणः स ब्राह्मणः केन स्याद्येन स्यात्तेनेदृश एव इति श्रुतौ ज्ञानिनो यथेष्टप्रवृत्तिविधानात् । तथा हि । यो ब्रह्मप्राप्तियोग्योऽसावागमजं ज्ञानं लब्ध्वा युक्तिजज्ञानमापादयेत् । तदुभयलाभानन्तरं ध्यानी भवति । तेन चापरोक्षज्ञानं प्राप्नोति अथ जीवन्मुक्त उच्यते । स च सता वाऽसता वा केनाऽपि

(वाक्यार्थमुक्तावली)
प्रयत्नतारतम्येनान्यथासिद्धेर्निरस्तत्वाच्चेति चेन्न । तत्र मुक्त्याख्यफलतारतम्यस्योपासनादिप्रयत्न-तारतम्येनान्यथासिद्धिशङ्कानिरासायोपासनायामधिकारतार तम्यसमर्थनम् । इह तु प्रज्ञान्तरपृथक्त्व-मित्युक्तापरोक्षज्ञानरूपफलतारतम्यस्य प्रयत्नादिनान्यथासिद्धिशङ्कानिरासाय ज्ञानाधिकारतारतम्य-समर्थनमिति भेदात् । तदुक्तं न्यायविवरणे । भक्त्याद्यधिकारानुसारेण शास्त्रफलप्राप्तेरिति ।

## तत्त्वसुबोधिनी

**सम्पूर्णस्येति** ॥ उत्तमस्येत्यर्थः । पूर्वं सामान्यतोऽधिकारस्वरूपं विचार्य इदानीं तद्विशेष-विचारादनन्तरसङ्गतिरिति भावः । ज्ञानतारतम्यस्यान्यथासिद्धत्वान्नाधिकारतारतम्यकल्पकत्व-मित्याह ॥ **अधिकारेति** ॥ श्रौतस्य प्रथमस्योत्तरोत्तरमित्यस्याभिप्रायमाह ॥ **अर्थस्येति** ॥ तत्राधिकारिण इत्यादेरयमर्थः । तत्र मोक्षसाधनज्ञाने मनुष्याः, ऋषयः, देवाः, अधिकारिणः ते च पूर्वपूर्वापेक्षया उत्तरोत्तरं विशिष्टा एव न तु समाना इति । एतच्च ज्ञानाधिकारतारतम्ये श्रुतिं चाहेत्यवतारिकाग्रन्थेनैव व्याख्यातप्रायत्वान्न तत्र टीकाकृता पृथक्व्याख्यातम् । तत्वप्रदीपे तु साम्येनाधिकारो देवानां ऋषिगन्धर्वाणां मनुष्याणां च न च देवानामपि सामान्येनाधिकारः नापि ऋष्यादीनां नापि मनुष्याणां अर्थो धर्मो ज्ञानमित्युत्तरोत्तरतः पुमर्थानां कामस्वर्गापवर्गाणां साधनानां साधनत्वं चोत्तरोत्तरमधिकम् । एतेषु अधिकारिणो मनुष्यादिदेवाः उत्तरोत्तरं प्रत्येकं प्रत्येकं चेत्यर्थः इति प्रकारान्तरेण व्याख्यातमिति ज्ञातव्यम् । यावदधिकारमित्यत्र वृद्धिह्रास-मित्यत्रोक्तस्य मोक्षगततारतम्यस्य प्रयत्नादिनाऽन्यथासिद्धिशङ्कापरिहाराय उपासनायामधिकारतम्य-समर्थनमिति महान् भेदः ।

## वाक्यार्थविवरणम्

**लौकिकसाधनेष्विति** ॥ कृषीवलानां धान्यसाधनीभूतकर्षणादिसाधनानामेकप्रकारत्वं दृष्टम् । धनप्राप्तिसाधनानां कुसीदराजसेवादीनामनेकप्रकारत्वं दृष्टमित्यर्थः ।

## वाक्यार्थमञ्जरी

**उच्चेति** ॥ उत्तमम् । **अवचेति** ॥ नीचेत्यर्थः ॥ ॐ नाविशेषात् ॐ ॥ अविशेषा-द्विशेषतारतम्यं विना ज्ञानाधिकारिता न कुतः अविशेषात् मानस्याप्यविशेषप्रसङ्गादित्यर्थः ।

॥ इति अविशेषाधिकरणम् ॥ ३ ॥

## ४. स्तुत्यधिकरणम्

### सूत्रभाष्यम्

'अथ मुनिरमौनं च मौनं च निर्विद्याथ ब्राह्मणः स ब्राह्मणः केन स्याद्येन स्यात्तेनेदृश एव' (बृ.उ.५-५-१) इति ज्ञानिनो यथेष्टाचरणं विधीयत इत्यत आह—

**॥ ॐ स्तुतयेऽनुमतिर्वा ॐ ॥ १४ ॥**

**न विधिः । ज्ञानिनः स्तुतये अनुमतिमात्रं वा । युज्यते च ॥**

### तत्त्वप्रदीपिका

मौनमुपासनम् । अमौनमपरोक्षज्ञानम् । निर्विद्य नितरां लब्ध्वा, विद् लाभ इति धातोः । अथ ब्राह्मणः ब्रह्मनिष्ठो भवति । स येन केनापि वर्तेत, तेनेदृश एव स्यात् । न किञ्चिदपि हीयते । एवं श्रुतियोजनायां ज्ञानिनो यथेष्टचरणं विधीयत इत्यायातम् । युज्यते च । किन्नु खल्वेवंविधं ब्रह्मदर्शनं तस्य दर्शनवतोऽभिमत न कुर्वीतेत्यत आह– स्तुतयेऽनुमतिर्वा ॥ नायं विधिः यो ज्ञानी स यथेष्टं चरेदेवेति । प्रमाणाभावात् । अपि तु 'केन स्याद्येन स्यात्तेनेदृश एव' इत्युक्तिर्ज्ञानिस्तुतये । यथेष्टप्रवृत्तावनुमतिमात्रं वैतत् । 'स्तुतिः' सामर्थ्यप्रकटनम् । 'अनुमतिः' क्रियमाणस्याभ्यनुज्ञा । यथेष्टचरणेऽपि तस्य ज्ञानिनो मुक्तेर्नियतत्वात् ।

### तत्त्वप्रकाशिका

अत्र भगवत्प्राप्तिसाधनज्ञानस्यासत्प्रवृत्तावपि मोक्षसाधनत्वनियमलक्षणमहिम्नो वर्णनादस्ति शास्त्रादिसङ्गतिः । अन्यथा साधनान्तरादतिशयाभावप्रसङ्गात्समर्थनीयमेतत् । प्रकृतज्ञानवानत्र विषयः । किं तस्य सदसत्प्रवृत्त्योर्विशेषोऽस्ति न वा इति सन्देहः । लौकिकदृष्टिस्तुल्यं त्वित्युक्तिश्च सन्देहबीजम् । पूर्वपक्षं सूचयति ॥ अथेति ॥ न ज्ञानिनः सदसत्प्रवृत्त्योर्विशेषोऽस्ति । ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेद्बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिरमौनं च मौनं च निर्विद्याथ ब्राह्मणः स ब्राह्मणः केन स्याद्येन स्यात्तेनेदृश एव इति श्रुतौ ज्ञानिनो यथेष्टप्रवृत्तिविधानात् । तथा हि । यो ब्रह्मप्राप्तियोग्योऽसावागमजं ज्ञानं लब्ध्वा युक्तिजज्ञानमापादयेत् । तदुभयलाभानन्तरं ध्यानी भवति । तेन चापरोक्षज्ञानं प्राप्नोति अथ जीवन्मुक्त उच्यते । स च सता वाऽसता वा केनाऽपि

(तत्त्वप्रकाशिका)

प्रकारेण वर्तेतेति । यदि ज्ञानिनः सदसत्प्रवृत्त्योरस्ति विशेषस्तर्हि सदेवाचरेन्नासदिति वक्तव्यम् । न तु यथेष्टाचरणं विधातुं युक्तम् । श्रूयते च ज्ञानिनः सदसत्प्रवृत्त्योरविशेषो येन स्यात्केन स्यात्तेनेदृश एवेति । अयुक्तश्च ज्ञानिनः सदसत्प्रवृत्त्योर्विशेषः । न हि मोक्षादतिशयितं फलमस्ति यत्सत्प्रवृत्त्या भवेत् । न च समुच्चयसाध्यत्वं मोक्षस्य नापि ज्ञानिनो मोक्षाभावो योऽसत्प्रवृत्त्या भविष्यति । अतः सदसत्प्रवृत्तिभ्यां ज्ञानिनो विशेषाभावादाद्याधिकरणोक्तमयुक्तमिति । सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे **॥ अत इति ॥** अस्त्येव ज्ञानिनः सदसत्प्रवृत्त्योर्विशेषस्तर्हि कथमयं यथेष्टाचरणविधिः । मैवम् । केन स्यादित्यस्य विधित्वाभावात् । तर्हि किमर्थमुच्यते । यथा कश्चित् भृत्यं प्रति तत्स्तुतये कथ्यते यथेष्टं कुर्विति न तु विधिस्तथैतदपि ज्ञानिनः स्तुतय एवोच्यते । अथवा यथेष्टाचारेऽनुज्ञानमात्रमेतत् । सर्वथा तु न विधिरिति भावः । न सदसत्प्रवृत्तिभ्यां ज्ञानिनो विशेषो युज्यते । तथा सत्यसत्प्रवृत्त्या कुण्ठितस्य ज्ञानस्य मोक्षसाधनत्वाभावप्रसङ्गादित्यत आह **॥ युज्यते चेति ॥** सदसत्प्रवृत्तिभ्यां विशेष इति शेषः ॥

## गुर्वर्थदीपिका

न ज्ञानिनः सदसत्प्रवृत्त्योर्विशेषोऽस्तीत्यत्र ज्ञानिनां सदसत्प्रवृत्तिभ्यां सर्वथा शुभाशुभफले न स्त इति पूर्वपक्षिणोऽभिसन्धिः । सिद्धान्तिनस्तु सत्प्रवृत्तेर्न मोक्षसाधकत्वं नाप्यसत्प्रवृत्तेर्मोक्षप्रतिबन्धकत्वम् । मुक्तावानन्दवृद्धिह्रासफलकत्वात्सर्वथा निष्फलत्वं च नेत्याहुरिति विवेकोऽनुसन्धेयः । बाल्येन तिष्ठासेदित्यत्र युक्त्यनुसन्धानाख्यबलवान्बली बलिनो भावः बाल्यमिति व्युत्पत्या बाल्यपदेन युक्त्यनुसन्धानात्मकं मननं गृह्यते । प्राथमिकब्राह्मणशब्दस्य 'अणपणगतौ' इति धातोः ब्रह्माणतीति व्युत्पत्या ब्रह्मप्राप्तियोग्यत्वमर्थः । यद्वा ब्रह्म वेदमणति पठतीति ब्राह्मणो वेदाध्ययनवानित्यधिकारिणस्सामान्यलक्षणमुच्यते । प्राथमिकपाण्डित्याख्यश्रवणस्यैव मौनं निर्विधेति पुनरनुवादः । गत्यर्थानां ज्ञानार्थत्वात् द्वितीयब्राह्मणशब्दस्य ब्रह्मापरोक्षज्ञानित्वमर्थ इत्यनुसन्धेयम् । आद्याधिकरणोक्तमित्यत्र 'अधिकोपदेशात्' इत्यधिकरणे यदुक्तं तन्नेत्यर्थः ।

## भावबोधः

अत्र पूर्वाधिकरणोक्तज्ञानाधिकारतारतम्यानुसारेणैव 'केन स्यात्' इति श्रुतिविचारादनन्तरसङ्गतिरिति ज्ञेयम् ॥ **किमित्यादि** ॥ अत्र ज्ञानिनां सदसत्प्रवृत्त्योर्विशेषो नास्त्युतास्तीति चिन्ता । तदर्थं 'केन स्यात्' इति श्रुतिर्निरवकाशोत सावकाशेति । तदर्थं ज्ञानिनां सदसत्प्रवृत्योर्विशेषः किं न युक्त उत युक्त इति । तदर्थं सदसत्प्रवृत्त्योर्विशेषः किं मोक्षतदभावयोरन्यतर उत तदतिरिक्त इति । तदर्थं ज्ञानिनां विहितनिषिद्धकरणाकरणयोः प्रमाणं नास्त्युतास्तीति । श्रुतौ यथेष्टाचरणविधेरप्रतीतेः कथमेतदित्यतो द्वितीये ब्राह्मणो ब्रह्माणितुं योग्यः । पाण्डित्यमागमजज्ञानं, बाल्यं युक्तिसहितं बलयुक्तत्वात् । मौनमुपासनाजं, अमौनमपरोक्षज्ञानं, निर्विद्यं नितरां प्राप्य लब्ध्वा 'विद् लाभे' इति धातोः । अथ ब्रह्मणो मुक्तो भवतीत्यर्थ इति बृहदारण्यकभाष्यं मनसि निधाय श्रुतिव्याख्यानपूर्वकं पूर्वपक्षमुपपादयति– **तथा हीत्यादिना** ॥ अधिकारज्ञापकस्याद्यब्राह्मणशब्दस्यार्थो ब्रह्मप्राप्तियोग्य इति । 'पाण्डित्यं' इत्यस्यार्थं आगमजज्ञानमिति । 'निर्विद्य' इत्यस्यार्थो लब्ध्वेति । यद्यपि निःपूर्वो विदिर्वैराग्ये रूढः । तथापि निः उपसर्गः । सत्तार्थस्यैव विदेरर्थं बाधित्वा तं वैराग्यार्थं व्यवस्थापयति । निर्विद्यत इति कर्तरि प्रयोगदर्शनात् लाभार्थस्यार्थं तु विशिनष्ट्येव केवलम् । निर्विदन्ति निविदन्त इति वैराग्ये तत्प्रयोगादर्शनादिति गीताभाष्यटीकायामेवोक्तम् । बाल्यमित्यस्य युक्तिरूपबलसम्बन्धीत्यर्थमभिप्रेत्याह– **युक्तिजज्ञानमिति** ॥ तिष्ठासेदित्युक्तायाः स्थितीच्छाया अविधेयत्वात्; तदिच्छायां बाल्यस्याकारणत्वाच्च युक्तिजज्ञानमापादयेदिति तात्पर्यमुक्तमिति ज्ञातव्यम् । अथ 'मुनिः' इत्यस्यार्थो तदुभयलाभादनन्तरं ध्यानी भवतीति । तेन चापरोक्षज्ञानं प्राप्नोतीति । अनेन मौनं निर्विद्यामौनं प्राप्नोतीति शेषपूरणेन वाक्यं योजितं भवति । जीवन्मुक्त उच्यत इति । 'न चाथ ब्राह्मणो मुक्तो भवति' इति बृहदारण्यकभाष्यविरोधः । ब्राह्मणशब्दस्य जीवन्मुक्तपरममुक्तोभयपरत्वेन तदुपपत्तेः । अत एव तत्र–

'प्रथमो ब्राह्मणो मुक्तो द्वितीयो योग्य उच्यते ।
अपरोक्षविन्मुक्तियोग्यस्तुतार्तीयिनोभयोर्ग्रहः ॥'

इत्युक्तमिति भावः । ज्ञानिनामात्मस्वरूपस्यैव दाढ्र्यात् सत्प्रवृत्तिविपरीतप्रवृत्त्योरविशेष इति न्यायविवरणं मनसि निधाय आह– **अयुक्तश्चेति** ॥ **न हि मोक्षादिति** ॥ मोक्षश्च ज्ञानिनां निश्चित

(भाववोधः)

एवेति भावः । अनेनात्मस्वरूपस्य आनन्दाविर्भावादिलक्षणस्य दाढ्र्येन निश्चितत्वादिति व्याख्यातं भवति । न मोक्षातिरिक्तातिशयितफलार्थं सत्प्रवृत्तिः । किं तु मोक्षार्थमेव । सत्प्रवृत्त्यभावे ज्ञानेन मोक्षस्यैवाजननादित्यत आह– **न च समुच्चयेति ॥**

'विना कर्म न मोक्षः स्याज्ज्ञानेनेत्यपि सा श्रुतिः ।
नान्यः पन्था इति ह्येव निवारयति सादरम् ॥'

इत्यनुव्याख्यानोक्तरीत्या 'विद्यैव तु निर्धारणात्' इत्यत्र समुच्चयवादस्यापि दूषितत्वादित्यर्थः । 'कामचारेण चैके' इत्यादिसूत्रनिवर्तनीयमाह– **नापि ज्ञानिन इति ॥** ज्ञानिन आत्मस्वरूप-लक्षणमोक्षस्य दृढत्वादेवेत्यर्थः । अन्यथा 'अनियमः सर्वेषां' इत्युक्तविरोधः स्यादिति भावः ॥ **आद्येति ॥** पुरुषार्थनये 'तद्वतो विधानात्' । 'नियमाच्च' इत्यादिना कर्मावश्यकमित्युक्त-मयुक्तमित्यर्थः । ज्ञानिनः स्तुतय एवेति । सर्वाधिकारिसाधारणमिदमिति ज्ञातव्यम् ।

'प्रारब्धकर्मजस्यैव विषभक्षान्मृतेरिव ।
प्राप्तस्याप्यनिवर्त्यस्य किञ्चिद्भुक्तस्य संविदा ॥
उपमर्द इति प्रोक्तो देवादीनां यथा क्रमम् ॥'

इत्यनुव्याख्यानानुसारेण सूत्रं व्याचष्टे– **ज्ञानिनां हि विषभक्षणादिति ॥**

## भावदीपः

**मोक्षसाधनत्वनियमेति ॥** ज्ञानिनोऽसद्वृत्तावपि मोक्षो भवत्येवेति नियमेत्यर्थः । एतेनास्तु पूर्वत्र ज्ञानरूपफले प्रज्ञान्तरेत्यत्र निर्णीतविशेषाभावप्रसङ्गात्तदधिकारे विशेषः । ज्ञाने तु नासत्प्रवृत्तिकृतो विशेषः । तत्फले मुक्तौ तत्कृतविशेषस्य निर्णीतस्य कस्यचिदभावादिति शङ्कनाद्वा पूर्वत्रैवात्रापि मुक्तिफले सम्भवत्यपि तत्रानन्दह्रासरूपविशेषेण ज्ञानेऽप्यस्ति सम्पूर्ण-मुक्त्यजनकत्वरूपविशेष इति सिद्धान्तकरणाद्वा पूर्वमाचार्यमतजैमिनिमतयोरुपन्यासव्याजेन ज्ञानस्य कर्मशेषत्ववाक्यानां कर्मणो ज्ञानशेषत्ववाक्यानां चाधिकारिभेदेनाविरोधमुक्त्वा मध्ये प्रसङ्गा-दधिकारचिन्तां च कृत्वाऽत्र पुनरेकस्मिन्नेव वाक्ये त्रिविधवाक्यैर्विरुद्धार्थत्रयपरत्वमुपेत्यात्र त्रिविधाधिकारिभेदेनाविरोधकथनाद्वा पूर्वसङ्गातिरपि सूचिता ॥ **लौकिकेति ॥** लोके सदसत्प्रवृत्त्या

(भावदीपः)

भृत्यादेः फले विशेषदृष्टिरित्यर्थः । ज्ञानिनां सत्प्रवृत्तिविपरीतप्रवृत्तयोरविशेष इत्यन्यत्रोक्तप्रतिज्ञामाह ॥ **न ज्ञानिन इति** ॥ एकवचनोक्तिर्ब्रह्मादिमानुषान्तज्ञानिसामान्यसूचनाय । कुत इत्यतो भाष्यार्थं हेतुत्वेन योजयितुं भाष्योक्तश्रुतावथपदोक्तानन्तर्यप्रतियोगिज्ञापनाय निर्विद्येत्यत्र कर्तृज्ञापनाय च पूर्वशेषमाह ॥ **ब्राह्मण इति** ॥ **इति श्रुताविति** ॥ पञ्चमाध्यायपञ्चमब्राह्मणस्थकाण्वश्रुतावित्यर्थः ॥ **इति श्रुतौ ज्ञानिन इति** ॥ 'तां चतुर्थीं माहाचमस्यः प्रवेदयते' इति व्याहृतिविद्यादाविव न ह वै देवान् पापं गच्छतीति सप्तान्नविद्यादादिव हंतकारं मनुष्या इत्यादाविव च केन स्यादिति वाक्ये कर्तृविशेषाभावेनास्य वाक्यस्य ब्रह्मादिमानुषान्तज्ञानिसामान्यपरत्वाद्यदेव विद्ययेत्यादेर्वाक्यस्य मानुषविषयत्वे ज्ञानादेव स्वर्गः । ज्ञानेनैवाप्यते सर्वमित्यादिवाक्यस्येव ज्ञानादेव स्वर्ग इत्यादेर्देवताविषयत्वे यदेव विद्ययेत्यादेरिव चेहाधिकारिविशेषपरत्वे कल्पकस्य कस्यचिदभावाच्च ।

न च ब्रह्मैव स्वेच्छानियत इत्यादिवाक्यमेवास्य चतुर्मुखमात्रपरत्वकल्पकमिति वाच्यम् । तस्य कार्यं न विद्यत इति स्मृतिबलाज्ज्ञानिसामान्यपरत्वस्य सम्भवात् । न च तदपि विशेषपरं कल्पकाभावात् । न च प्रातरुत्थाय सन्ध्यामुपासीत इति, ब्राह्मणो न हन्तव्यः, इत्यादिवाक्यमेव तस्य कार्यमित्यादेर्विशेषपरत्वकल्पकमिति वाच्यम् । तस्याज्ञविषयत्वोपपत्तेरिति भावः । स्याच्छब्दस्य विधौ स्मरणादाह ॥ **विधानादिति** ॥ ननु ज्ञानिनो यथेष्टेत्याद्युक्तिरयुक्ता । बृहद्भाष्ये अथ ब्राह्मणः मुक्तो भवतीत्यर्थः । स मुक्तः येन केनापि वर्तयन्नीदृश एव भिक्षुक एव न कदाचित्स्वतन्त्रो भवतीति ग्रन्थेन मुक्तस्य भगवतः सकाशादात्मानं विदित्वा भिक्षाचर्यं चरन्तीति पूर्वप्रकृतानन्दभिक्षुकत्वपरतया व्याख्याततत्वेन ब्राह्मणशब्दस्य ज्ञानिपरत्वाभावादित्यतः सत्यमेवं तथापि ।

'ततो ब्रह्माणने योग्यः पाण्डित्यं प्राप्नुयात्परम् ।
पाण्डित्यमागमज्ञत्वं बाल्यं युक्तिसहायता ।
मौनं तूपासनासिद्धिरमौनं भगवद्दृशिः ।
एतान्याप्य भवेन्मुक्तिर्मुक्तो वै भिक्षुको भवेत् ॥'

इत्यादिनैकमर्थमुक्त्वा 'प्रथमो ब्राह्मणो मुक्तो द्वितीयो योग्य उच्यते । अपरोक्षविन्मुक्तयोग्यस्तु तार्तीयिनोभयोर्ग्रहः' इति ज्ञानिपरत्वस्यापि प्रमाणेनोक्तत्वादज्ञानिपरत्वमप्यविरुद्धमिति भावेनादि-

(भावदीपः)

तस्तदर्थमाह ॥ **यो ब्रह्मेति** ॥ मुनिशब्दार्थो ध्यानीति । अमौनमित्यस्यार्थोऽपरोक्षज्ञानमिति । अथ ब्राह्मण इत्यस्यार्थेऽथ जीवन्मुक्त इति । वर्तत इतीतिशब्दस्य इति विधानादिति पूर्वेणान्वयः । तेनेदृश एवेत्यस्य हेत्वंशानर्पकत्वादत्र तदर्थानुक्तिः । व्याख्यास्यते चाग्रेऽनुपदम् । हेतोर-प्रयोजकत्वमाशङ्क्य हेतूच्छित्तिरेव विपक्षे बाधिकेत्याह ॥ **यदीति** ॥

भाष्ये श्रुतिशेषोक्तेरुपयोगमाह ॥ **श्रूयते चेति** ॥ न केवलं विधानान्यथानुपपत्त्याऽनुमीयत इति चार्थः । एवमविशेषेणानुमानागमावुक्त्वा विशेषस्यायोगाच्चाविशेषः सिद्ध इति भावेन युज्यते चेति भाष्यसूचितं शमदमादीति सूत्रव्यावर्त्यमाह ॥ **अयुक्तश्चेति** ॥ स किं मोक्षादन्यो मोक्ष एव वेति विकल्प्याद्यमाह ॥ **न हीति** ॥ भवेदित्युपलक्षणम् । असत्प्रवृत्त्या न भवेदित्यपि ध्येयम् । द्वितीये ज्ञानकर्मणी द्वे अपि रज्ज्वाः सूत्रद्वयमिव मोक्षस्य साधनं स्यात् । असत्प्रवृत्त्या च मोक्षः प्रतिबध्येतेति स्यात् । तदुभयमपि नेति क्रमेणाह ॥ **न चेति** ॥ विद्यैव त्वित्यादौ तथोक्तेः । विस्तृतं चैतत्तत्रैवानुव्याख्यानादाविति भावः ॥ **नापीति** ॥ अनियमः सर्वेषामित्यत्र तथोक्तेरिति भावः । एतेन ज्ञानिनामात्मस्वरूपदार्ढ्यादित्यन्यत्रोक्तहेतोः आत्मस्वरूपरूपमोक्षस्य दृढत्वेन ततोऽतिशयस्य प्राप्तव्यस्याभावात्तत्प्रतिबन्धस्य चाभावदिति द्वेधार्थः सूचितः ॥ **अत इति** ॥ अविशेषसाधकयुक्तिश्रुतिबलाद्विशेषस्यायुक्तत्वाच्चेत्यर्थः ॥ **आद्येति** ॥ पुरुषार्थनये तद्वतो विधानान्नियमाच्चेत्यादिना कर्मावश्यकमित्युक्तमित्यर्थः ।

अत आहेत्युक्तं पूर्वपक्षशङ्कानिवर्तकत्वं सूत्रभाष्ययोर्विवरितुमाह ॥ **अस्त्येवेति** ॥ एवकारेण न त्वविशेष इति पूर्वपक्षनिरासः । तत्र हेतुत्वेन न विधिरिति भाष्यार्थमाह ॥ **विधित्वाभावादिति** ॥ तथा च प्रागुक्तहेतोरसिद्धिरिति भावः । सूत्रभाष्ये अवतारयति ॥ **तर्हीति** ॥ चतुर्थीनिर्वाहाय किमर्थमित्युक्तिः । ज्ञानिनः स्तुतय इत्यादि व्याचष्टे ॥ **यथेति** ॥ स्तुतिः सामर्थ्यप्रकटनम् ॥ **एतदिति** ॥ केन स्यादिति वचनमित्यर्थः । अनुमतिर्वेत्यस्यार्थोऽथवेति । अयुक्तश्चेत्यादिनोक्तचोद्य-मनुवदति ॥ **सदसदिति** ॥ साधनत्वप्रसङ्गादित्यनन्तरं तथा च विद्यैव त्वित्याद्युक्तव्याघात इति योज्यम् ।

## अभिनवचन्द्रिका

**असत्प्रवृत्तावपीति** ॥ ज्ञानिनः सदसत्प्रवृत्त्योर्विशेषसमर्थनव्याजेन असत्प्रवृत्तावपि ज्ञानस्य मोक्षसाधनत्वनियमलक्षणमहिम्नः समर्थनादित्यर्थः । एतेनाऽसत्प्रवृत्तौ न ज्ञानिनो मोक्ष इति पूर्वः पक्षः । असत्प्रवृत्तावपि मोक्षो भवत्येवेति सिद्धान्तश्चाभिधेयः । न तु ज्ञानिनः सदसत्प्रवृत्तिभ्यां न विशेष इति पूर्वपक्षः, अस्ति विशेष इति सिद्धान्तश्च वक्तव्य इति परास्तम् । 'येन स्यात्केन स्यात्' इत्यस्याऽर्थमाह– **स च सता वासता वेति** ॥ **आद्याधिकरणोक्तमिति** ॥ कर्मणो ज्ञानशेषत्वमयुक्तमित्यर्थः ॥ **यथाकश्चिद्भृत्यं प्रतीति** ॥ यथा अहं स्वतन्त्रः, तथा त्वमपीति भृत्यस्तुतिलाभाय यथा यथेष्टं कुर्वित्युच्यते तथेत्यर्थः ॥ **अथवेति** ॥ स्तुत्यर्थमिति पूर्वोक्तः पक्षो मनुष्यविषय एव । अनुज्ञामात्रमिति पक्षस्तु देवताविषय एव । न मनुष्यविषयः । 'विधिनियता मनुष्या अनियता हि देवा' इति गौपवनश्रुतिरिति विवेकः । असत्प्रवृत्त्या विशेषो न युज्यत इत्यत्र हेतुमाह– **तथा सतीति** ॥

(अस्तु येषामसत्प्रवृत्तिः तेषां न मोक्षो भविष्यतीत्यत आह– **तथा चेति** ॥ 'अनियमः सर्वेषाम्' इत्यत्र ज्ञानिषु केषाञ्चिन्मोक्षः केषाञ्चिदमोक्ष इति न नियमः अपि तु सर्वेषां मोक्ष एवेत्युक्ताऽनियमव्याघात इत्यर्थः । 'सत्प्रवृत्त्या विशेषो न युज्यत' इति प्राक्प्रतिज्ञातार्थे हेतुमाह– **सत्प्रवृत्तिसमुचितस्येति** ॥ **इत्यत आहेति** ॥ 'कामकारेण चैके' इति सूत्रोदाहृतश्रुत्या एतमर्थं समर्थयितुं प्रतिजज्ञ इत्यर्थः ।)

## वाक्यार्थमुक्तावली

अत्र पूर्वाधिकरणोक्तज्ञानाधिकारतारतम्यानुसारेणैव केन स्यादिति श्रुतिविचारादनन्तरसङ्गतिः ॥ **मोक्षसाधनत्वेति** ॥ ज्ञानिनः सदसत्प्रवृत्तिभ्यामानन्दातिशयह्रासरूपविशेष एव न मोक्षहानिरिति प्रतिपादनादित्यर्थः । एतेन संशयपूर्वपक्षसिद्धान्तानामसत्प्रवृत्तावपि मोक्षो भवतीत्येतद्विषयप्रवृत्तेः कथमत्र तद्वर्णनमिति निरस्तम् । सदसत्प्रवृत्तिभ्यां विशेषप्रतिपादनमुखेनास्यैवार्थस्य कामकारेणेत्यत्र स्पष्टत्वादिति भावः ॥ **किमिति** ॥ अत्र ज्ञानिनां सदसत्प्रवृत्तिभ्यां विशेषो नास्त्युतास्तीति चिन्ता । तदर्थं सदसत्प्रवृत्तिभ्यां विशेषसद्भावे केन स्यादिति यथेष्टाचारविधिरीदृश

(वाक्यार्थमुक्तावली)

एवेति साम्यश्रुतिः मोक्षस्य ज्ञानैकसाध्यतया क्लृप्तत्वात्तदधिकारस्य सदसत्प्रवृत्तिभ्यां वर्धनीयस्य कुण्ठनीयस्य फलस्याभावयुक्तिश्च विरुध्यत उत न विरुध्यत इति ॥ **सूचयतीति** ॥ विधीयत इत्युक्त्या विशेषसद्भावे विध्यनुपपत्तिरिति सूचनात् । ईदृश एवेत्यन्तोदाहरणेन साम्यश्रुतेरिति सूचनात् । उपलक्षणतया युक्तेश्चेति वक्ष्यमाणयुक्तेरपि सूचनादिति भावः ।

ब्राह्मणो ब्रह्माणितुं योग्यः पाण्डित्यमागमजं ज्ञानं बाल्यं युक्तिसहितं ज्ञानं बलरूपत्वात् मौनमुपासनममौनमपरोक्षज्ञानं निर्विद्य निरन्तरां प्राप्य 'विद् लाभे' इति धातोः अथ ब्राह्मणो मुक्तो भवतीति बृहद्भाष्यं मनसि निधाय श्रुत्यर्थमाह ॥ **तथाहीत्यादिना** ॥ तदुभयलाभानन्तरं ध्यानी भवति । तेन चापरोक्षज्ञानं प्राप्नोतीति । अनेन मौनं निर्विद्य प्राप्यामौनं प्राप्नोति । मौनं तत्साध्यममौनं च निर्विद्येति शेषपूरणेन वाक्यं योजितं भवति । अनेन केन स्यादित्यादेरर्थः **सतामेवेति** ॥ युज्यते चेत्युत्तरभाष्यसूत्रनिरस्यं आत्मस्वरूपदार्ढ्यमित्युक्तन्यायविरोधमप्याह ॥ **अयुक्तश्चेति** ॥ यदि ज्ञानिनः सत्प्रवृत्त्या विशेषः स्यात्तर्हि मोक्षादतिशयफलं स्यादिति तर्कस्य विपर्यये पर्यवसानमाह ॥ **न हीति** ॥ एतच्च शमाद्युपेतः स्यादित्यादावुत्तरभाविसत्कर्मणानन्दातिशयसमर्थनात्तन्निरसनीयमिति ज्ञेयम् । यदि मोक्षादधिकफलाभावेऽपि ज्ञानिनः सत्प्रवृत्त्या विशेषः स्यात्तर्ह्ययं ज्ञानसहकार एवेति मोक्षस्य केवलज्ञानसाध्यत्वाभावात् समुच्चयसाध्यत्वं स्यादिति तर्कस्य विपर्यये पर्यवसानमाह ॥ **न चेति** ॥ एतच्चात एव चाग्नीन्धनेति सूत्रनिरस्यं बोध्यम् । यद्यसत्प्रवृत्त्या विशेषो भवेत्तर्हि ज्ञानिनो मोक्षाभावः स्यादिति तर्कस्य विपर्यये पर्यवसानमाह ॥ **नापीति** ॥ एतच्च कामकारेणेति सूत्रनिरस्यम् । एवमापाद्य विपर्यये पर्यवसानमुक्त्वा तद्धेतूकृत्यापादकविपर्यये पर्यवसानमाह ॥ **अत इति** ॥ मोक्षादतिशयफलाभावात् मोक्षस्य समुच्चयसाध्यत्वाभावादसत्प्रवृत्त्या ज्ञानिनो मोक्षकुण्ठनाभावाच्चेत्यर्थः ॥ **आद्याधिकरणेति** ॥ पुरुषार्थाधिकरणोक्तं कर्मणो ज्ञानफलेऽतिशयाधायकत्वमित्यर्थः ।

सूत्रेऽचोदनेत्येतत् चोदनमाकृष्यते । किन्त्विति शेषः । तथा च केन स्यादिति श्रुतिरचोदना न यथेष्टाचारविधिः किन्तु ज्ञानिनः स्तुतये उच्यते । यदि सता वासता वा कर्मणावर्तेत तदापीदृश एव मोक्षवान् भवत्येवेति ज्ञानिनो गुणवर्णनायैवोच्यते । अथवानुमतिरनुष्ठेयानां सदाचाराणां मध्ये येन केनापि वा सदाचारेण वर्तेत तदापीदृश एव तस्यावश्यकार्याभावादनियतत्वादिति

(वाक्यार्थमुक्तावली)

क्रियमाणस्याभ्यनुज्ञामात्रं वेति सूत्रार्थं स्पष्टयति । **अस्त्येवेत्यादिना ॥ यथा किञ्चिदिति ॥** यथेष्टकरणेऽपि मत्प्रीतिभावात् तवाधिकारश्रुतिर्नास्तीति प्रियभृत्यस्य श्रुतिर्लभ्यत इति भावः ।

## तत्त्वसुबोधिनी

पूर्वाधिकरणोक्तज्ञानाधिकारतारतम्यानुसारेणैव किं न स्यादिति श्रुतिविचारादनन्तरसङ्गतिरिति भावः । ननु श्रुतौ यथेष्टाचारणविधिप्रतीतेः कथमेतदित्यतः द्वितीयो ब्राह्मणो ब्रह्माणितुं योग्याः पाण्डित्यमागमजं ज्ञानं, बाल्यं युक्तिसहितं बलयुक्तत्वात्, मौनमुपासनं, अमौनमपरोक्षज्ञानं, निर्विद्य नितरां प्राप्य लब्ध्वा 'विद् लाभे' इति धातोः । अथ ब्राह्मणः मुक्तो भवति इति श्रुतिव्याख्यानपूर्वकं पूर्वपक्षमुपपादयति ॥ **तथा हीति** ॥ अधिकारज्ञापकस्याद्यब्राह्मणशब्दस्यार्थो ब्रह्मप्राप्तियोग्य इति । पाण्डित्यमित्यस्यार्थो आगमजं **ज्ञानमिति** ॥ निर्विद्येत्यस्यार्थो लब्ध्वेति । यद्यपि निःपूर्वो विदिः वैराग्ये रूढः, तथापि निरुपसर्गस्य सत्तार्थस्यैवंविधकथनबाधितत्वात्तं वैराग्यार्थं व्यवस्थापयतीति भावः । **ज्ञानमिति** ॥ तिष्टासेदित्युक्तायाः स्थितीच्छाया अविधेयत्वात् तदिच्छायां बाल्यस्याकरणत्वाच्च युक्तिजज्ञानमापादयेदिति तात्पर्यमुक्तं इति ज्ञातव्यम् । अथ मुनिरित्यस्यार्थः तदुभयलाभानन्तरं ध्यानी भवतीति । तेनापरोक्षज्ञानं प्राप्नोतीति । अनेन मौनं निर्विद्यामौनं प्राप्नोति इति शेषपूरणेन व्याख्यातम् । जीवन्मुक्त उच्यत इति । न चाथ ब्राह्मणो मुक्तो भवतीति बृहदारण्यकभाष्यविरोधः । ब्राह्मणशब्दस्य जीवन्मुक्तपरममुक्तोभयपरत्वोपपत्तेः ॥ **न हि मोक्षादिति** ॥ मोक्षश्च ज्ञानिनां निश्चित एवेति भावः ।

ननु न मोक्षातिरिक्तातिशयितफलार्थं सत्प्रवृत्तिः, किन्तु मोक्षार्थमेव सत्प्रवृत्त्यभावे ज्ञानेन मोक्षस्यैवाजननादितित्यत आह ॥ **न च समुच्चयेति** ॥ 'विना कर्म न मोक्षः स्यात् ज्ञानेनापीति सा श्रुतिः । नान्यः पन्था इति ह्येवं निवारयति सादरं' इत्यनुव्याख्यानोक्तरीत्या 'विद्यैव तु निर्धारणात्' इत्यत्र समुच्चयवादस्यापि पठितत्वादित्यर्थः । असत्प्रवृत्तौ ज्ञानिनो मोक्ष एव न स्यादित्यतः आह ॥ **तावतापीति** ॥ ज्ञानिनः आत्मस्वरूपलक्षणमोक्षस्य दृढत्वादेवेत्यर्थः । अन्यथा 'अनियमः सर्वेषां' इत्युक्तविरोधः स्यादिति भावः । आद्याधिकरणोक्तमिति । कर्मणः आधिक्यं अधिकोपदेशादित्यत्रोक्तं तद्युक्तमित्यर्थः ॥ **ज्ञानिन स्तुतये इति** ॥ सर्वाधिकारि-

(तत्त्वसुबोधिनी)

साधारणमिति ज्ञातव्यम् । **स्तुतिः** सामर्थ्यप्रकटनम् । **अनुमतिः** क्रियमाणस्यानुज्ञा इति ज्ञेयम् । कामितवरणमिति तत्वप्रदीपे स्पष्टम् ।

## वाक्यार्थविवरणम्

**मोक्षसाधनत्वेति** ॥ लिङ्गशरीरभङ्गरूपमोक्षेत्यर्थः ॥ **अन्यथेति** ॥ असत्प्रवृत्तावपि मोक्षसाधनत्वाभाव इत्यर्थः ॥ **साधनान्तरादिति** ॥ स्वर्गादिसाधनात्कर्मरूपादित्यर्थः । असत्प्रवृत्तिपूर्वकं कर्मकरणे तस्यापि स्वर्गसाधनत्वाभावेन तत्साम्यापत्त्या तस्मादतिशयो न स्यादित्यर्थः ॥ **लोकदृष्टिरिति** ॥ लोकेऽसत्प्रवृत्त्यादिनाऽसंव्यवहार्यत्वादिरूपविशेषो दृश्यत इत्यर्थः । तमेव विशेषमुपपादयितुं तावत्सत्प्रवृत्त्याऽविशेषमुपपादयति ॥ **न हीति** ॥ असत्प्रवृत्त्याप्यविशेषमुपपादयति ॥ **नापीति** ॥ **आद्याधिकरणोक्तमिति** ॥ अधिकोपदेशादित्यत्र यथा यथा कर्म कुरुते तथा तथाऽधिको भवतीति सत्प्रवृत्त्या विशेषकथनमित्यर्थः ॥ **अनुज्ञामात्रमेतदिति** ॥ दैवात् कदाचिज्ज्ञानिनां कामचरणेच्छा चेत् क्रियतामित्यनुज्ञामात्रमेवैतत् । न विधिरित्यर्थः । सत्प्रवृत्तिसापेक्षत्वे दूषणमाह ॥ **सत्प्रवृत्तिसमुचितस्येति** ॥ तच्च भवतामनिष्टमिति भावः ॥ **मोक्षं** लिङ्गभङ्गरूपम् ॥ एवमुत्तरत्रापि मोक्षशब्दस्यायमेवार्थो ज्ञातव्यः ।

## वाक्यार्थमञ्जरी

**तुल्यं त्विति** ॥ तत्र कर्मकरणाकरणयोर्ज्ञानस्य तुल्यत्वोक्तिरित्यर्थः । आद्यब्राह्मणशब्दार्थो ब्रह्मप्राप्तियोग्य इति । पाण्डित्यमित्यस्यागमजन्यज्ञानमिति, निर्विद्येत्यस्य लब्ध्वेति, 'विदॢ लाभे' इति धातोः । बाल्यमित्यस्य युक्त्यनुसन्धानमिति, तिष्ठासेदित्यस्यापादयेदिति, मुनिरित्यस्य ध्यानी भवतीति, अमौनशब्दार्थः अपरोक्षज्ञानमिति, ब्राह्मणशब्दार्थो जीवन्मुक्त इति, ईदृशः विशिष्टः तदेव व्यनक्ति ॥ **न हीत्यादिना** ॥ मोक्षश्च ज्ञानिनां निश्चित एवेति भावः । ननु न मोक्षातिरिक्तातिशयितफलार्थं सत्प्रवृत्तिः किं तु मोक्षार्थमेव, सत्प्रवृत्त्यभावे ज्ञानेन मोक्षस्यैवाजननादित्यत आह ॥ **न च समुच्चयेति** ॥ 'विद्यैव तु निर्धारणात्' इत्यत्र समुच्चयवादस्य दूषितत्वादिति भावः ॥ **नापीति** ॥ तथात्वे 'अनियमः सर्वेषाम्' इत्युक्तज्ञानिनां मोक्षानियमविरोध इति भावः ॥ **आद्याधिकरणोक्तमिति** ॥ ज्ञानस्य सर्वपुरुषार्थसाधनत्वरूपमाहात्म्यमित्यर्थः ।

(वाक्यार्थमञ्जरी)

ॐ स्तुतयेऽनुमतिर्वा ॐ ॥ स ब्राह्मण इति श्रुत्युक्तं यथेष्टाचरणं स्तुतये ज्ञानिस्तुत्यर्थः अनुमतिरनुज्ञामात्रं वा न विधिरित्यर्थः । उत्तरमाह ॥ **यथेति** ॥

## सूत्रभाष्यम्

**॥ ॐ कामकारेण चैके ॐ ॥ १९ ॥**

**'कामचाराः कामभक्षाः कामवादाः कामेनैवेमं देहमुत्सृज्याथ परात्परमीयुरनारम्भणम्'(सामशाखा) इति चैके पठन्ति ॥**

## तत्त्वप्रदीपिका

अत्र प्रमाणमाह– **कामकारेण चैके** ॥ एके शाखिनः कामकारेणापि ज्ञानिनो मोक्षं पठन्ति । अत उक्तं युज्यते । 'कामकारः' कामितकरणम् । तत्कामचारभक्षवादेषु त्रिष्वपि समम् ।

## तत्त्वप्रकाशिका

असत्प्रवृत्त्या कुण्ठितशक्तेर्ज्ञानस्य मोक्षसाधनत्वाभावप्रसङ्गात्कथं युज्यते इत्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ **कामेति** ॥ नासत्प्रवृत्त्या कुण्ठितत्वेन ज्ञानस्य मोक्षसाधनत्वाभावः प्रसज्यते । यतो यथेष्टाचारेणापि ज्ञानिनो मोक्षमेके शाखिनः पठन्ति इति भावः । अनारम्भणमनादि ॥

## गुर्वर्थदीपिका

'स्तुतयेऽनुमतिर्वा' इत्यधिकरणे 'केन स्याद्येन स्यात्' इत्युक्तं सदसत्कर्मिणोः कामचरणं ज्ञानिनस्स्तुतये कथ्यते । आज्ञामात्रं वा न तु विधिरित्युक्तम् । इदं तु देवताविषयम् । 'कामकारेण चैके' इति सूत्रे कदाचिदसत्प्रवृत्तावपि मोक्षप्रतिबन्धो न । असत्प्रवृत्तेश्च संसारध्वंसाख्यमोक्षकारणत्वं च नेत्युच्यते । किन्तु मोक्षे सत्प्रवृत्त्या आनन्दवृद्धिः असत्प्रवृत्त्याऽऽनन्दह्रासश्च भवतीत्युच्यते । इदं च मानुषविषयम् । 'गुणदोषैस्सुखस्यापि वृद्धिह्रासौ विमुक्तिगौ । नृणां सुराणां मुक्तौ तु सुखं क्लृप्तं यथाक्रमम्' इत्यणुभाष्ये कथनात् ।

## भावबोधः

**एके शाखिन इति ॥** अनेन 'च'शब्दः पूर्वसूत्रगतस्य 'एके' इत्यनुकर्षणार्थ इत्युक्तं भवति ।

## भावदीपः

सत्प्रवृत्तिसमुच्चितस्येत्यादिचोद्यमत एव चाग्नींधनेत्यत्र निरसिष्यत इति भावेनान्यनरचोद्य-निरासकत्वेनैव सूत्रमवतार्य व्याचष्टे ॥ **असत्प्रवृत्त्येति ॥** साध्यमध्याहृत्य तत्र हेतुत्वेन भाष्यं व्याचष्टे ॥ **नासदिति ॥** चशब्दस्य वाऽयमर्थः । यद्वा चोऽप्यर्थे । यथेष्टाचारेणापीत्याद्युक्त्यैव तात्पर्यतो लब्धार्थस्योक्तिर्नासत्प्रवृत्त्येत्यादि । युज्यते च विशेष इति पूर्वभाष्यभावार्थो वा । अनारम्भणमिति श्रौतपदानुवादोऽनादीति व्याख्या ।

## वाक्यार्थमुक्तावली

चशब्दो हेतावप्यर्थे च वर्तत इति भावेन व्याचष्टे ॥ **नासत्प्रवृत्त्येति ॥ यथेष्टाचारेणेति ॥** अत्राचारपदं चरणभक्षवादक्रियासामान्यपरम् । अत एव तत्वप्रदीपे कामकारः कामितकरणम् । तत्कामचरणभक्षवादे चतुर्ष्वपि समर्थमित्युक्तम् । ननु तर्कस्य किमनेन दूषणमुक्तम् । प्रमाणबाध इति चेदापाद्यानिष्टत्वोपपादकत्वेन तदङ्गत्वात् । श्रुतावसत्प्रवृत्तावपि मोक्षोक्त्या तर्कस्या-प्रयोजकत्वमुक्तमिति चेन्नासत्प्रवृत्तिकृतविशेषस्यैवापादकत्वेन श्रुतौ तत्सद्भावेऽपि मोक्षोक्तभावादिति चेत्सत्यम् । श्रुतौ कामचाराणामपि मोक्षोऽस्तीत्येतावन्मात्रमुक्तमिति । तथापि श्रुत्या कामचारस्य मोक्षविघातकत्वाभावलाभात् । कामचारकृतविशेषो मोक्षविघातरूपो न भवतीति तर्कस्या-प्रयोजकत्वमिति पर्यवसानादिति भावः ।

## तत्त्वसुबोधिनी

न आरभ्यत इत्यनारम्भणमित्यन्यथाप्रतीतिनिरासायाह **अनारम्भणमनादीति ॥** एवं च न आरम्भणं यस्य तत् अनारम्भणमिति विग्रहः सूचितः ॥ **एके शाखिन इति ॥** अनेन चशब्दः पूर्वसूत्रगतस्यैक इत्यस्यानुकर्षणार्थः इत्युक्तं भवति ।

## वाक्यार्थमञ्जरी

ज्ञानिनः कामकारेण यथेष्टाचारेणापि मोक्षमेके शाखिनः कामकारा इति पठन्तीत्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ उपमर्दं च ॐ ॥ १६ ॥**

**'ओमित्युच्चार्यान्तरिममात्मानमभिपश्योपमृद्य पुण्यं च पापं च काममाचरन्तो ब्रह्मानुव्रजन्ति' इति च तुरश्रुतौ ।**

## तत्त्वप्रदीपिका

परमात्मदर्शिनां **पुण्यपापयोरुपमर्दं काममाचरतामपि तेषां मोक्षं च वक्ति श्रुतिः** । उपमर्दः फलह्रासः । **प्रारब्धकार्ययोः पूर्वयोः विनष्टत्वात्** । **ह्रासाभावे काम्यविधिवैयर्थ्यात्** । पुण्ये त्वनिष्टविषय उपमर्दः ।

## तत्त्वप्रकाशिका

**कैमुत्येनैतमर्थं समर्थयत्सूत्रं पठित्वा तत्सूचितां श्रुतिमुदाहरति ॥ उपमर्दं चेति ॥** ज्ञानिनो हि विषभक्षणान्मृतेरिवानिवर्त्यतया **प्राप्तस्यारब्धकर्मणोऽपि किंचिद्भुक्तस्य ज्ञानेनोपमर्दमेके** शाखिनः पठन्ति । **तदोत्तरकालीनासत्कर्म न मोक्षप्रतिबन्धकमिति किं वर्णनीयमिति** भावः । **तदुक्तम्** । **'न वै जनो जातु कथं च नाव्रजेन्मुकुन्दसेव्यन्यवदङ्ग संसृतिम्' इति** । **ॐमित्युच्चार्येति** श्रवणाद्युपलक्षणम् । **अन्तर्हृदयस्यैतदप्युपलक्षणम् ॥**

## गुर्वर्थदीपिका

अन्तर्हृदयस्येत्यत्र हृदयस्येति पदं **सौत्रान्तःपदस्य** शेषपूरणम् । हृदयस्यान्तरित्यर्थः । उपलक्षणं **प्रतिमादेरपि सङ्ग्राहकम्** ।

## भावबोधः

तदुक्तमिति ॥ हे अङ्ग मुकुन्दसेव्यपरोक्षज्ञानीजनोऽन्यवदज्ञानिवत् संसृतिं प्रारब्धकर्मफलरूपां

(भावबोधः)

जातु कथंचन केनापि प्रकारेण नाव्रजेदित्युक्तार्थादज्ञान्यपेक्षया अल्पमेव संसारभोगं प्राप्नोतीति लाभादुपमर्दप्रतिपादकत्वं भागवतवाक्यस्येति ज्ञातव्यम् ।

ननु श्रवणादेरेवापरोक्षज्ञानसाधनत्वेन कथं 'उच्चार्याभिपश्येदित्युक्तं' इत्यत आह– **श्रवणाद्युपलक्षणमिति** ॥ ननु व्याप्तदर्शिदेवादिसर्वापरोक्षज्ञानिनां प्रारब्धस्योपमर्दोऽस्त्येव । 'देवादीनां यथाक्रमं' इत्यनुव्याख्यान उक्तत्वात् । तत्कथं श्रुतौ 'अन्तरिमं' इति संकोचः इत्यत आह– **अन्तर्हृदयस्येति** ॥ **एतदिति** ॥ हृदयस्येति शेषोक्तिः ।

## भावदीपः

**एतमिति** ॥ नासत्प्रवृत्त्येत्यादिनोक्तमर्थम् । भाष्यस्य सूत्रेणान्वयमेके पठन्तीत्यस्यानुवृत्तिं चोपेत्यार्थमाह ॥ **ज्ञानिनो हीति** ॥ चशब्दस्यार्थः आरब्धकर्मणोऽपीति । प्रारब्धकर्मजस्येव विषभक्षणान्मृतेरिव । 'प्राप्तस्याप्यनिवर्त्यस्य किंचिद्भुक्तस्य संविदा । उपमर्द इह प्रोक्तो देवादीनां यथा क्रमम्' इत्यनुभाष्योक्तेरिति भावः । **उपमर्दः** फले ह्रासः ॥ **तदुक्तमिति** ॥ प्रथमस्कन्धे । अङ्गेति व्यासं प्रति नारदकृतसम्बोधनम् ॥ **उच्चार्येति** ॥ तन्मात्रस्य दृष्ट्यहेतुत्वादाह ॥ **श्रवणादीति** ॥ अन्तरित्यत्रापेक्षितं पूरयति ॥ **हृदयस्येति** ॥ योगिनामेवोपमर्द इति भ्रमनिरासायाह ॥ **एतदपीति** ॥ 'अग्नौ क्रियावतां विष्णुर्योगिनां हृदये हरिः । प्रतिमास्वप्रबुद्धानां सर्वत्र विदितात्मनाम्' इत्युक्तदिशा बहिरन्तरपि पश्येदित्यर्थः । **देवादीनामिति** पूर्वोक्तानुभाष्योक्तेरिति भावः ।

## वाक्यार्थमुक्तावली

चोऽप्यर्थे । प्रारब्धकर्मण इति शेषः । प्रारब्धकर्मणोऽप्युपमर्दं फलह्रासमेके पठन्ति । तदा किमु वाच्यमुत्तरकालीनासत्कर्म न मोक्षविघातकमिति चशब्दस्य कैमुत्यद्योतकापिशब्दार्थत्वमेक इत्यस्यानुकर्षणार्थत्वं च मत्वा व्यचष्टे ॥ **ज्ञानिनामिति** ॥ **प्रारब्धकर्मण इति** ॥ तत्फलस्येत्यर्थः । प्रारब्धकर्मजस्यैव विषभक्षणान्मृतेरिव । 'प्राप्तस्याप्यनिवृत्तस्य किञ्चिद्भुक्तस्य संविदा । उपमर्द इह प्रोक्तो देवादीनां यथाक्रमम्' इत्यनुव्याख्यानोक्तेः उपमर्दमिति ह्रासमित्यर्थः । कर्माणि न तावत् स्वफलं प्राप्नुवन्ति । यावज्ज्ञानमिति भावः । मुकुन्दसेवकापरोक्षज्ञानिजनोऽन्यवत्संसृतिं

(वाक्यार्थमुक्तावली)

प्रारब्धकर्मफलरूपां जातु कदाचिदपि कथंचन केनापि प्रकारेण वा नाव्रजेदिति भागवतश्लोकार्थः । अन्तर्हृदयस्येत्यतदुपलक्षणमिति ॥ अन्यथाग्नौ क्रियावतां विष्णुरित्याद्युक्तप्रकारेणाग्र्यधिष्ठाने भगवदपरोक्षिणामुपमर्दोऽनया श्रुत्या न सिद्ध्येदिति भावः ।

## तत्त्वसुबोधिनी

**तदुक्तमिति ॥** हे अङ्ग मुकुन्दसेव्यपरोक्षज्ञानीजनोऽन्यवदज्ञानिवत्संसृति प्रारब्धकर्मफलरूपां जातु कथंचन केनापि प्रकारेण वानाव्रजेदित्युक्त्या अर्थादन्यापरोक्षयाल्पमेव संसारभागं प्राप्नोतीति तावदुपमर्दप्रतिपादकत्वं भागवतवाक्यस्येति ज्ञातव्यम् । ननु श्रवणादेरेवापरोक्षज्ञानसाधनत्वेन कथमुचार्याभिपश्येदित्युक्तमित्यत आह । **श्रवणाद्युपलक्षणमिति ॥** ननु व्याप्तदर्शिदिवादि-सर्वापरोक्षज्ञानिनां प्रारब्धस्योपमर्दोऽस्त्येव । तत्कथं श्रुतावन्तरिममिति संकोच इत्यत आह ॥ **अन्तर्हृदयस्यैतदिति ॥** हृदयस्येति शेषोक्तिः ।

## वाक्यार्थविवरणम्

**आरब्धकर्मण इति ॥** अपरोक्षज्ञानात्पूर्वं कृतस्येत्यर्थः **॥ न वै जनो जात्विति ॥** मुकुन्दसेवी जनः अन्यवत् अज्ञानिवत् संसृतिं न याति । हे अङ्गेति सम्बुद्धिः । प्रारब्धं कर्म यावदज्ञानिनं भोजयति न तावज्ज्ञानिनमिति भावः । अयमेव सिद्धान्ते उपमर्दशब्दार्थ इति ज्ञातव्यम् । ज्ञानिनो गालीशतसमाकुलाश्वजन्मप्रापकं किञ्चित्प्रारब्धं कर्मास्ति । तस्य अश्वजन्म-प्राप्तौ सत्यां राज्ञां गृहेऽश्वो भूत्वा घृतशर्कराद्यदनेन सुखमास्ते । अश्वजन्म आप्नोति परं तु ज्ञानमहिम्ना गालीशतसमाकुलत्वं न भवतीत्येवमुपमर्दप्रकारो द्रष्टव्यः ।

## वाक्यार्थमञ्जरी

ज्ञानेन किंचिद्भुक्तस्य प्रारब्धकर्मण उपमर्दं फलह्रासं चैके पठन्तीत्यर्थः ॥ **न वै जन इति ॥** हे अङ्ग मुकुन्दसेव्यपरोक्षज्ञानीजनोऽन्यवदज्ञानिवत् संसृतिप्रारब्धकर्मफलरूपां जातु कदाचन कथञ्चन केनापि प्रकारेण नाव्रजेदित्यर्थः । ननु श्रवणादेरेवापरोक्षज्ञानसाधनत्वेन कथमुचार्याभिप-श्येदित्युक्तमत्राह ॥ **श्रवणाद्युपलक्षणमिति ॥** ननु व्याप्तिदर्शिदिवादिसर्वापरोक्षज्ञानिनां प्रारब्ध-स्योपमर्दोऽस्त्येव तत्कथमन्तरिममित्येवोक्तिरित्यत आह ॥ **अन्तरिति ॥** हृदयस्येति शेषोक्तिः ।

## सूत्रभाष्यम्

**॥ ॐ ऊर्ध्वरेतस्सु च शब्दे हि ॐ ॥ १७ ॥**

न तावता कामचाराणां ज्ञानेऽधिकारः ।

'य इमं परमं गुह्यमूर्ध्वरेतस्सु भाषयेत् ।
न तथा विद्यते भूयान् यं प्राप्यान्येऽपि भूयस' इति माठरश्रुतेः ॥

## तत्त्वप्रदीपिका

अथ यथोत्पन्नज्ञानिनामधिकारिणां कामचरणं न मोक्षं रुणद्धि । एवमुत्पत्स्यमानज्ञानानां गुरुदेवताशुश्रूषुणां ज्ञानं न रोत्स्यतीत्याशङ्कायामाह– ऊर्ध्वरेतस्सु च शब्दे हि ॥ ऊर्ध्वरेतस्वित्युक्तं प्रधानत्वादुपलक्षणमन्यगुणानाम् ।

## तत्त्वप्रकाशिका

यदि कामचारिणामपि ज्ञानिनां मुक्तियोग्यता तर्हि तद्वज्जिज्ञासूनामपि कामचाराणां ज्ञानाधिकारः स्यादविशेषात्तथा चाध्ययनमात्रवत इत्युक्तबाध इत्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे **॥ ऊर्ध्वेति ॥ कामचाराणामपि ज्ञानिनां मुक्तियोग्यताऽस्तीत्येतावता तद्वत्कामचाराणां ज्ञानाधिकारो न मन्तव्यः । 'य इमं' इति शब्दे श्रुतौ ऊर्ध्वरेतस्त्वादिगुणवत्स्वेव ज्ञानोपदेशविधानात् । अपरोक्षज्ञानस्य च परोक्षज्ञानपूर्वकत्वादिति भावः । भूयसो भूयांसः ।**

## गुर्वर्थदीपिका

'अध्ययनमात्रवत' इत्युक्तबाध इत्यत्राध्ययनपदेन विष्णुभक्तिशमदमादिगुणानां सङ्गृहीतत्वेन कामचाराणां ज्ञानाधिकारस्य निवारितत्वादिति भावः । ऊर्ध्वरेतस्सु भाषयेदित्यत्र भाषयेदित्युक्तत्वात्प्रवचनश्रवणादिविषयेयं श्रुतिरित्यवगम्यत इत्यर्थः ।

## भावबोधः

सूत्रे 'च'शब्द 'एवार्थः' । अत एव भाष्ये न तावतेत्यादिप्रतिज्ञाध्याहार कृतो ज्ञानोपदेशविधानमिति शेष इत्यभिप्रेत्य सूत्रं व्याचष्टे– **य इममिति ॥**

(भाववोधः)

ननु 'य इयं' इति श्रुतावर्थात् कामचाराणां श्रवणादिपरोक्षज्ञाने अधिकाराभावो लभ्यते । तत्कथमपरोक्षज्ञाने तेषामधिकाराभावप्रतिपादनायेयं श्रुतिरुपात्तेत्यत आह– **अपरोक्षज्ञानस्येति** ॥ श्रवणादिरूपपरोक्षज्ञाने तेषामधिकाराभावे सुतरां तज्जन्यापरोक्षानेऽधिकारो नास्तीति भावः ।

## भावदीपः

**इत्युक्तबाध इति** ॥ अध्ययनपदेन शमदमादिसत्प्रवृत्तेरपि ग्रहणादिति भावः । भाष्यं व्याचष्टे ॥ **कामेति** ॥ उपलक्षणं मत्त्वाऽह ॥ **ऊर्ध्वरेतस्त्वादीति** ॥ श्रुतौ कामचारिणां परोक्षज्ञानिनामेवाधिकारप्राप्त्या प्रकृतापरोक्षज्ञानेऽनधिकारप्राप्तेराह ॥ **अपरोक्षेति** ॥ कैमुत्यलब्धस्तत्रानधिकार इति भावः ।

## अभिनवचन्द्रिका

**ज्ञानोपदेशविधानादिति** ॥ अपरोक्षज्ञानायोपदेशविधानादित्यर्थः । ननु अपरोक्षज्ञानायोपदेशविधानादित्ययुक्तम् । उपदेशस्य परोक्षज्ञानसाधनत्वेन भावादित्यत आह ॥ **अपरोक्षज्ञानस्य चेति** ॥ तथा च अपरोक्षज्ञानोत्पादाय अपरोक्षज्ञानस्य परोक्षज्ञानजनकोपदेशविधानं नाऽनुपपन्नमिति भावः । **नाप्ययं सदसत्प्रवृत्तिविषय इति** । यद्यपि सूत्रकृता 'स्तुतये' इति सूत्रखण्डेन श्रुत्यर्थतयोक्तः कामचारः सदसत्प्रवृत्तिविषय इति निषेध उपपन्नो बोध्यः । द्वाविह कामचारौ श्रुत्यर्थौ तत्रैको बादरायणोक्तः सदसत्प्रवृत्तिविषयः । अपरस्तु जैमिनिविज्ञानः सत्प्रवृत्तिमात्रविषय इति विवेकः । एतेन सूत्रकृता श्रुत्यर्थकामचारस्य सदसत्प्रवृत्तिविषयत्वस्योक्तत्वात् पुनस्तन्निषेधोऽनुपपन्न इति परास्तम् । पूर्वं सदसत्प्रवृत्तिविषयकामचाराभिधानमुखेन निषेधशास्त्राबद्धत्वेन स्तुतिरुक्ता । इह तु विध्यबद्धत्वेन स्तुतिरुच्यत इति भेदः ।

## वाक्यार्थमुक्तावली

**अध्ययनमात्रवत इत्युक्तबाध इति** ॥ शमादिरहितस्याप्यध्ययनाधिकाराभावात्तद्विना ज्ञानाधिकाराभावादुक्तबाध इति भावः । सूत्रे चशब्द एवार्थः । साध्यसमुच्चये च । हिशब्दो हेत्वर्थः । अत एव भाष्ये न तावता इति प्रतिज्ञाय समुच्चयः कृतः । ज्ञानोपदेशविधानमिति शेषः ।

(वाक्यार्थमुक्तावली)

ऊर्ध्वरेतस्स्वित्युक्तिः प्रधानत्वादुपलक्षणमन्यगुणानामित्यभिप्रेत्य व्याचष्टे ॥ **कामचाराणामिति** ॥ ननु य इममिति श्रुताविन्द्रियनिग्रहादिमतामुपदेशजन्यापरोक्षज्ञानाधिकारोक्तेः कथमियं श्रुति-र्जिज्ञासूनामकामचाराणामेवापरोक्षज्ञानाधिकार इत्यत्रोदाह्रियत इत्यत आह- **अपरोक्ष इति** ॥ तथा च यदाकामचाराणामेवापरोक्षज्ञानेऽधिकारः तदा तेषामेवापरोक्षेऽधिकारः न तु कामचाराणामिति कैमुत्याभिप्रायेण श्रुत्युदाहरणमिति भावः ।

## तत्त्वसुबोधिनी

**तथा चेति** ॥ तत्र शमदमादिमतामेवाधिकारः इत्युक्तबाधः स्यादित्यर्थः । सूत्रे चशब्द एवार्थः । हि शब्दो हेत्वर्थः । अत एव भाष्ये न तावतेत्यादि प्रतिज्ञाध्याहारः कृतः । ज्ञानोपदेशविधानमिति शेष इत्यभिप्रेत्य सूत्रं व्याचष्टे ॥ **य इममिति** ॥ य इममिति श्रुतावर्थात् कामचाराणां श्रवणादिपरोक्षज्ञाने तेषां अधिकाराभावप्रतिपादनाय इयं श्रुतिः उपपात्ता इत्यत आह ॥ **अपरोक्षज्ञानस्येति** ॥ श्रवणादिपरोक्षज्ञाने तेषां अधिकाराभावे सुतरां तज्जन्यापरोक्षज्ञाने अधिकारो नास्तीति भावः ।

## वाक्यार्थविवरणम्

**ज्ञाने** ॥ अपरोक्षज्ञाने । ऊर्ध्वरेतस्त्वादिगुणवत्स्विति । रेतसो अधोविसर्जनमकृत्वा ऊर्ध्वरेतस्कत्वोक्त्या कामचाराभावो ज्ञायत इति भावः ।

## वाक्यार्थमञ्जरी

शब्दे य इममिति श्रुतौ ऊर्ध्वरेतस्सुवैराग्यादिगुणवत्स्वेव ज्ञानोपदेशो हि यस्माद्विहितस्तस्मात्कामचारेण न ज्ञानप्राप्तिरित्यर्थः । ननु य इममिति श्रुतावर्थात्कामचाराणां श्रवणादिपरोक्ष-ज्ञानाधिकाराभावो लभ्यते । तत्कथमपरोक्षज्ञाने तेषामधिकाराभावप्रतिपादनायेयं श्रुतिरुक्तेत्यत आह ॥ **अपरोक्षज्ञानस्येति** ॥ श्रवणादिरूपपरोक्षज्ञाने तेषामधिकाराभावे सुतरां तज्जन्यापरोक्ष-ज्ञानेऽधिकारो नास्तीति भावः ।

## सूत्रभाष्यम्

**॥ ॐ परामर्शं जैमिनिरचोदना चापवदति हि ॐ ॥ १८ ॥**

'प्रातरुत्थायाथ सन्ध्यामुपासीत यत्सन्ध्यामुपासते ब्रह्मैव तदुपासतेऽथ देवान्नमेज्जुहुया-द्वेदानावर्तयीत नान्यत्किञ्चिदाचरेन्न सुरां पिवेन्न पलाण्डुं भक्षयीत न भृशं वदेन्न विस्मरेदात्मानं सोमं पिवेद्धुतशेषेण वर्तयेत्' इत्युक्ताचारपरामर्शेन विधिवन्धवर्जितत्वेन कामत एव तस्य चरणं कामचार इति जैमिनिर्मन्यते । न च निषिद्धं कर्म कर्तव्यमेवेति चोदना । 'ब्राह्मणो न हन्तव्यः' इत्याद्यपवादश्च ॥

## तत्त्वप्रदीपिका

कामचरणश्रुतेः विषयभेदमपेक्ष्यार्थभेदाभिप्रायेण मतद्वयं दर्शयति । परामर्शं जैमिनिरित्यादि सूत्रम् । 'प्रातरुत्थायाथ सन्ध्यामुपासीत' इत्यादिना विहितानाचारान् परामृशतीयं श्रुतिः । 'कामचाराः कामभक्षाः कामवादा' इति परामृशन्ती ज्ञानिनां विधिवन्धवर्जितत्वेन कामत एव तेषां चरणमभिधत्ते स कामचार इति जैमिनिः । न पुनर्निषिद्धानामपि चरणम् । सन्ध्यो-पास्तिदेवप्रमाणामाग्निहोत्रहोमादीन् कामत एवाऽचरन्ति निषिद्धानि नाचरन्ति चेति कामचाराः, कामत एव सोमादिभक्षणात्सुराद्यभक्षणाच्च कामभक्षाः, कामत एव वेदानां शब्दतोऽर्थतो वाऽऽ-वर्तनादतिभाषणवर्जनाच्च कामवादाः । एतेषां विहितानामकरणेऽपि ज्ञानिनोऽधः पातहेतु-प्रत्यवायाभावाद्विधिवन्धवर्जितत्वेनेत्याह । न च ज्ञानिनोऽपि शास्त्रनिषिद्धमशुभं कर्तव्यमेवेति विधिः । ज्ञानिनो निषेधोऽपि नास्तीत्यत आह– 'ब्राह्मण' इत्यादि । 'ब्राह्मणो न हन्तव्यः' इत्यादिप्रतिषेधे च ज्ञानिनोऽप्युक्तन्यायेनाधिकृता एव ।

## तत्त्वप्रकाशिका

एवं केन स्यादित्यस्याविधित्वमङ्गीकृत्याऽर्थ उक्तः । तथैव जैमिनिमतेनार्थान्तरं प्रतिपादय-त्सूत्रमुपन्यस्य व्याचष्टे ॥ **परामर्शमिति** ॥ नायं श्रुत्या कामचारो विहितो नाप्ययं सदसत्प्रवृत्ति-विषयः । किं तु सदाचारस्यैव नियमेनाचरणमेव श्रुत्योच्यमानः कामचारः । न चात्राचारानुक्ति-दोषः । 'प्रातरुत्थाय' इत्यादिश्रुतिस्मृत्युक्ताचारपरामर्शेन श्रुत्या तच्चरणविधानात् । न चैवं नियमेन

(तत्त्वप्रकाशिका)
चरणे केनेति **कामचारोक्त्ययोगः । विधिबन्धवर्जितत्वेन स्वेच्छयैव चरणादिति** जैमिनिराचार्यो मन्यत इति भावः । **किमर्थं सर्वसत्प्रवृत्तौ कामचरणं निमयेनात्रोक्तमित्युच्यते** । निषिद्ध-प्रवृत्तिरप्यत्रोक्ता किं न स्यादिति चेत् । किं निषिद्धं ज्ञानिना कर्तव्यमिति स्फुटविधिसद्भावादेतदुच्यते निषेधाभावाद्वा । आद्यं पराचष्टे ॥ **न चेति** ॥ द्वितीयं पराह ॥ **ब्राह्मण इति** ॥ अयं च सामान्यनिषेधो ज्ञानिष्वपि वर्तते ।

## गुर्वर्थदीपिका

नायं श्रुत्या कामचारो विहित इत्यत्रायं कामचारः शुभाशुभविषये स्वेच्छयाऽऽचरणं विहितो न किन्तु शुभविषय एवाचरणं विहितम् । तदपि यथाविधिरस्ति तथैव कुर्वन्ति कुत्रापि व्यत्यासं न कुर्वन्ति । तत्करणं च केवलं विधेर्निर्बन्धनादेव न किन्तु धूतमनोमलिनत्वेन तेषामिच्छैव तादृशी । अतोऽयमप्याचारः कामचार इत्युच्यते । इदं च जैमिनिमतं मानुषज्ञानिविषयमित्यनुसन्धेयम् । विधिबन्धवर्जितत्वेन स्वेच्छयैव चरणादित्यस्यास्ति विधिः तस्माद्बन्धो निर्बन्धः तद्वर्जितत्वेनेत्यर्थः । अत एव स्वेच्छयैव चरणादित्युक्तम् । अन्यथा विधिनियता इति वक्ष्यमाणविरोधः ।

## भावबोधः

'केन स्यात्' इति श्रुतेः पूर्वपक्ष्युक्तमर्थं निराकरोति– **नायं श्रुत्येति** ॥ 'स्तुतयेऽनुमतिर्वा' इत्युक्तं प्रतिक्षिपति– **नाप्ययमिति** ॥ 'तस्य चरणं कामचार' इति भाष्यं व्याचष्टे– **किं तु सदाचारस्यैवेति** ॥ इत्युक्ताचारपरामर्शेनेति भाष्यं तन्निवर्तनीयाशङ्कानिरासपूर्वकं व्याचष्टे– **न चात्रेति** ॥ अत्र 'केन स्यात्' इति श्रुतौ ॥ **परामर्शेनेति** ॥ प्रातरुत्थायेत्यादिश्रुत्युक्ता-चाराभिप्रायेणेत्यर्थः । विधिसम्बन्धवर्जितत्वेनेति भाष्यं व्याचष्टे– **न चैवमिति** ॥ **अयोग इति** ॥ विहितत्वस्यैव नियमेन कर्तव्यत्वादिति भावः । 'ब्राह्मणो न हन्तव्यः' इत्येतदज्ञानिमात्रविषयं किं न स्यादित्यत आह– **अयं चेति** ॥ यथेष्टाचारविधिर्न भवतीति पूर्वपक्षयुक्तिनिषेधः ।

## भावदीपः

**अर्थ इति** ॥ स्तुत्यनुमतिरूपोऽर्थ इत्यर्थः ॥ **तथैवेति** ॥ विधित्वमनङ्गीकृत्यैवेत्यर्थः ॥ **अर्थान्तरमिति** ॥ नियमेन सत्कर्ममात्रानुष्ठानपरत्वरूपमित्यर्थः । कामत एवेत्यादिभाष्यं एवकारस्य

(भावदीपः)

तस्येत्यत्राप्यन्वयमुपेत्य तद्व्यावर्त्योक्तिपूर्वं व्याचष्टे ॥ **नायमिति** ॥ उत्तरत्रानुष्ठेयमध्ये कामचारोक्त्याऽत्रार्थलब्धमुपेत्योक्तं नियमेनेति । स्यादिति लिङ्प्रत्ययो विधिनिमंत्रणामंत्रणेत्यादेर्निमंत्रणार्थ इति भावः । परामर्शनेत्यन्तभाष्यं व्यावर्त्यपूर्वं व्यनक्ति ॥ **न चात्रेति** ॥ कामत एवेत्यस्यार्थः स्वेच्छयैवेति । एवकारव्यावर्त्योक्तिर्विधिबन्धवर्जितत्वेनेति । अत एव प्रागेवकारतात्पर्यं व्यक्तीकृतम् । कामचारो न विहित इति । उभयोक्तेः फलवत्त्वाय विकल्पमुखेन भाष्यं व्याचष्टे ॥ **किमिति** ॥ आद्यं पराचष्टे ॥ **न चेतीति** ॥

ननु ईदृश एवेति वाक्यशेषे साम्योक्त्यन्यथानुपपत्त्यैव निषिद्धप्रवृत्तिरप्यत्रोक्तेति ज्ञायते । अन्यथा असाम्याप्रसक्त्या साम्योक्तिवैयर्थ्यापत्तेरिति चेन्न । नियमेन सर्वाचरणप्राप्तसाम्यस्यानुवादोपपत्तेः । तेन नियमेन सर्वसदाचरणेनेदृश एवान्यथा त्वनीदृश एवेत्यर्थसम्भवादिति भावः । ननु यदेव विद्ययेत्यादिप्रागुक्तश्रुतेर्मानुषविषयत्वमिवेयमप्यज्ञविषयैवास्त्वित्यत आह ॥ **अयं चेति** ॥ तत्रेवेह बाधकाभावात् । केन स्यादिति श्रुतेरेव बाधकत्वे चान्योन्याश्रयात् साम्योक्तिरप्यन्यथोपपन्नेति भावः ॥

## अभिनवचन्द्रिका

'ब्राह्मणो न हन्तव्य' इत्यस्य विद्वदधिकारिकत्वं कुत इत्यत आह **अयं चेति** ॥ अधिकारिविशेषानुक्तेः सामान्यनिषेधोऽयं ज्ञानिष्वपि वर्तन्त इत्यर्थः ।

## वाक्यार्थमुक्तावली

शब्द इत्यनुवर्तते । कामचारेणेत्यतः कामचार इत्यनुवर्तते । अवधारणार्थः चशब्दोऽप्यन्वेति । तस्येति शेषः । तथा च शब्दे केन स्यादिति श्रुतौ प्रातरुत्थायेत्यादिश्रुतौ च निषिद्धत्यागरूपविहितसकलाचारपरामर्शं विधाय तस्यैव कामत एव चरणाख्यः कामचार उच्यत एवेति जैमिनिरिति सूत्रवृत्तिः । भाष्ये च कामत एव तस्येति मध्यस्थ एवकारः देहलीदीपन्यायेनोभयत्र सम्बध्यते । उच्यत एवेत्येवकारमनुसृत्य पूर्वपक्ष्युक्तमर्थं निराकरोति । **नायमिति** ॥ अयं शब्दः सत्प्रवृत्तिविषयः । कामचारः श्रुत्या न विहित इत्यर्थः । तस्यैव सदाचारस्यैवेत्यवधारणमनुसृत्यैव पूर्वपक्षिणा स्तुतयेऽनुमतिर्वेत्यनेन चोक्तं सदसत्प्रवृत्त्युभयविषयत्वं निराकरोति ॥ **नापीति** ॥

(वाक्यार्थमुक्तावली)

कामचारः सदसत्प्रवृत्तिविषयो न भवतीत्यर्थः । तस्यैव चरणं कामचार इति भाष्यांशं व्याचष्टे । **किन्तु सदाचारस्यैवेति** ॥ नियमेनाचरणं नाम सदाचारमध्ये कस्याप्यपरित्याग इति ज्ञेयम् । श्रुत्योच्यमानेत्युक्त्या न विधीयमान इति लभ्यते ॥ **न चात्रेति** ॥ केन स्यादिति श्रुतौ प्रागाचारस्यानुक्तत्वादनेन सर्वेण सदाचारेण स्यादिति कथमुक्तिरिति भावः । तत्परिहारायेत्युक्ताचारपरामर्शेणेत्युक्तं भाष्यं व्याचष्टे ॥ **प्रातरिति** ॥ **परामर्शेनेति** ॥ येन केनानेन सर्वेण सदाचारेणेति तत्परामर्शं विधाय स्यादिति तच्चरणं स्यादिति तच्चरणविरोधादित्यर्थः । विरोधस्तु उत्तरत्र निरसिष्यते ॥ **केनेति कामचारोक्त्ययोग इति** ॥ अनेन सर्वेण सदाचारेण नियमेन वर्तत इति वक्तव्ये केन येनेति स्वाभिप्रेतेन येन केन वा स्यात् वर्तत इति कामचारोक्त्ययोग इत्यर्थः । एतत्परिहाराय भाष्ये कामत एवेत्युक्तैवकारव्यावर्त्यविधिबन्धवर्जितत्वेन चरणमित्युक्तं तद्व्याचष्टे ॥ **विधीति** ॥ जायमानो वै ब्राह्मणः सृती(त्रिभिः)ऋणवान् जायते । ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य इत्यादिश्रुतेरज्ञस्य तदकरणे नरकाद्यापादकप्रत्यवायलक्षणो यो विधिवन्धस्तस्यापरोक्षज्ञानिनोऽभावात् तद्वर्जितत्वेन करणेऽभ्युच्चयोऽस्तीत्येवमिच्छयैवाशेषविहितानुष्ठानं श्रुतितात्पर्यविषयतया जैमिनिराचार्यो मन्यत इत्यर्थः । तथा च विहितसमाचारमभिप्रेत्यापि केन येनेति कामचारसूचकपदप्रक्षेपः । करणे आनन्दातिशयस्याकरणे तद्ध्रास्यसत्वेनानुष्ठेयत्वेऽप्यकरणे नरकाद्यनर्थाभावात् । महालक्ष्मीव्रतादेरिव कामचारसूचनायेति भावः । सूत्रखण्डेतिशब्दस्य स्फुटाप्रसिद्धेरित्यर्थः । तथा च न स्फुटा विधिरस्ति । प्रत्युत प्रसिद्धा श्रुतिरपवदति चेत्यर्थः । यद्वा हिशब्दो हेतौ । अतः सदाचारपरामर्शेनेत्यादिपूर्वान्वयः । ब्राह्मणो न हन्तव्य इत्येतदज्ञानिमात्रविषयं किन्न स्यादित्यत आह ॥ **अयं चेति** ॥

## तत्त्वसुबोधिनी

केन स्यादिति श्रुतेः पूर्वपक्ष्युक्तमर्थं निराकरोति । **नायं श्रुत्येति** ॥ 'स्तुतयेऽनुमतिर्वा' इत्युक्तं प्रतिक्षिपति ॥ **नाप्ययमिति** ॥ तस्य विवरणं कामचार इति भाष्यं व्याचष्टे । **किं तु सदाचारस्यैवेति** ॥ इत्युक्ताचारस्येति भाष्यं तन्निवर्तनीयाशङ्कानिरासपूर्वकं व्याचष्टे ॥ **न चात्रेति** ॥ अत्र केन स्यादिति **श्रुतौ** ॥ **परामर्शेनेति** ॥ प्रातरुत्थायेत्यादि श्रुत्युक्तावानभिप्रायेणेत्यर्थः ॥ **न चैवमिति** ॥ विहितस्य नियमेन कर्तव्यत्वादिति भावः । ब्राह्मणो न हन्तव्य इत्येतदज्ञानिमात्रविषयं

(तत्त्वसुबोधिनी)
किं न स्यादित्यत आह ॥ **अयं चेति** ॥ सामान्यनिषेध इति हेतुगर्भविशेषणं अधिकारिविशेष-कल्पकाभावात्तदभावेऽपि तत्कल्पने 'चोदनाद्यविशेषादित्युक्तव्याघातादिति भावः । यथेष्टाचार-विधिर्न भवति इति पूर्वपक्ष्युक्तनिषेधः ।

## वाक्यार्थविवरणम्

**सदसत्प्रवृत्तिविषय इति** ॥ सदसत्प्रवृत्त्युभयविषयको नेत्यर्थः ॥ **अत्र** ॥ केन स्यादिति श्रुतौ ॥ **श्रुत्या** ॥ केन स्यादिति श्रुत्या ॥ **तच्चरणेति** ॥ तथा च विहितानां मध्य एव कामतस्तच्चरणं केन स्यादित्यनेन विधीयत इति भावः ॥ **अत्रोक्तेति** ॥ केन स्यादिति श्रुतौ उक्तेत्यर्थः ।

## वाक्यार्थमञ्जरी

केन स्यादिति श्रुतिः प्रातरुत्थायेत्यादि श्रुत्युक्तसदाचारस्य परामर्शं कृत्वा तत्र स्वेच्छयावर्तनं प्रतिपादयति न त्वसदाचारविषया कुतः हि यस्मादचोदनानिषिद्धं कार्यमिति विधिर्नास्ति, प्रत्युत ब्राह्मणो न हन्तव्य इति श्रुतिरसदाचारमपवदति निषेधतीत्यर्थः । पूर्वपक्ष्युक्तमर्थं निराकरोति ॥ **नायमिति** ॥ स्तुतय इत्यनेनोक्तं निराकरोति ॥ **नाप्ययमिति** ॥ ब्राह्मणो न हन्तव्य इत्येतदज्ञानमात्रविषयं किं न स्यादित्यत आह ॥ **अयं चेति** ॥ यथेष्टाचारविधिर्न भवतीति पूर्वपक्ष्युक्तनिषेधः ।

## सूत्रभाष्यम्

**॥ ॐ अनुष्ठेयं बादरायणः साम्यश्रुतेः ॐ ॥ १९ ॥**

**अनुष्ठेयानां मध्य एव कामतश्चरणं कामतो निवृत्तिरिति बादरायणो मन्यते । 'केन स्याद्येन स्यात्तेनेदृश एव' (बृ.उ.५-५-१) इति साम्यश्रुतेः ।**

**'यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।**
**आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यत' इति भगवद्वचनाच्च ॥**

## तत्त्वप्रदीपिका

अनुष्ठेयत्वेन विहितानां मध्ये यस्मिन्करवाणीति कामस्तस्य चरणं यस्मिन्न करवाणीति तस्य निवृत्तिरित्ययं श्रुत्युदितः कामचार इति भगवन्मतम्। तेनेदृश एवेति करणाकरणयोः साम्यश्रुतेः। 'यस्त्वात्मरतिरेव स्यात्' इत्यादेरयमर्थ उक्तो भगवतैव श्रीमद्गीताभाष्ये– 'रमणं परदर्शनादिनिमित्तं सुखम्। तृप्तिरन्यत्रालम्बुद्धिः। सन्तोषः तज्जनकं सुखम्। 'सन्तोषस्तृप्तिकारणम्' इत्यभिधानात्। परमात्मदर्शनादिनिमित्तं सुखं, प्राप्तः, अन्यत्रालम्बुद्धिं च। महच्च तत्सुखं तेनैवालम्बुद्धिरिति दर्शयति– 'आत्मन्येव च सन्तुष्टः' इति। तत्स्थ एव सन् सन्तुष्ट इत्यर्थः। नान्यत्किमपि सन्तोषकारणमित्येवेत्यवधारणम्। आत्मना तृप्तः। न ह्यात्मन्यलम्बुद्धिर्युक्ता। तद्वाचित्वं च– 'वयं तु न वितृप्याम उत्तमश्लोकविक्रमैः' इति प्रयोगसिद्धमिति॥

## तत्त्वप्रकाशिका

एवमस्य वाक्यस्य जैमिनिमतानुसारेण सदाचारविधित्वमेवोक्त्वा यत् स्तुतयेऽनुमतिर्वेत्युक्तं तदेव प्रतिपादयत्सूत्रमुपन्यस्य व्याचष्टे॥ **अनुष्ठेयमिति**॥ केन स्यादिति यथेष्टाचारविधिर्न भवति नापि सर्वस्य कर्तव्यताविधिः। किं तु श्रुत्याद्युक्तानामनुष्ठेयानां मध्ये स्वेच्छया केषाञ्चिच्चरणं केषाञ्चिदचरणमित्यनुज्ञानमेव कामचारश्रुत्यर्थ इति भगवान् बादरायणो मन्यत इति भावः। कामेन सर्वचरणमेवार्थः किं न स्यादित्यत आह॥ **केनेति**॥ अनुष्ठेयानां मध्य एवायं कामचारो न सर्वेषां केनापि प्रकारेण प्रवृत्तावपि ज्ञानिनः साम्योक्तेः। साम्योक्तिश्चोक्तकामचरण एव सम्यक्सम्बध्यते प्राप्तिसद्भावात्। सर्वाचरणपक्षे तु सम्भवमात्रज्ञापनं स्यात्। सम्भवज्ञापनादप्यसम्भवनिवृत्तेर्ज्यायस्त्वादिति भावः। सत्यमस्मिन्पक्षे साम्योक्तिः सम्यक्सम्बध्यत इति। तथाऽपि न युज्यते। कर्तव्यपरित्यागे साम्यायोगात्। अतो मुख्यापि योजना साध्वीत्यत आह॥ **यस्त्विति**॥ ज्ञानिनां कार्याभावोक्तेर्न तत्परित्यागे साम्यायोग इति भावः। आत्मरतिः परमात्मदर्शननिमित्तसुखमाप्तः। आत्मतृप्तः परमात्मप्रसादेन विषयेष्वलम्बुद्धिमाप्तः। तत्कुतः। परमात्मनि सन्तोषवत्त्वात्तद्दर्शनादिनिमित्तसुखवत्त्वादिति भावः। एवं केन स्यादिति वाक्यशेषस्य यथेष्टाचरणविधित्वाभावमभ्युपेत्यार्थद्वयमुक्तम्।

## गुर्वर्थदीपिका

तदेव प्रतिपादयदित्यत्र तदेव देवानां विषय एवानुष्ठेयेषु आज्ञाप्रतिपादकं सूत्रमित्यर्थः । अनुष्ठेयानां मध्य एव कामतश्चरणं कामतो निवृत्तिः सदसत्कर्मणोः कामचरणं ज्ञानिनः स्तुतये कथ्यते । आज्ञामात्रं वेत्येतत्सूत्रद्वयोक्तं व्यासमतं देवताविषयम् । अत एव कर्णादिभिरुपनय-नादिकमकृत्वैव वेदाभ्यासः कृतः । 'विधिर्वा धारणवत्' 'भावशब्दाच्च' इति सूत्रद्वयोक्तं सदसत्कर्माचरणविधानं ब्रह्मविषयमिति ज्ञेयम् । ब्रह्मण इत्युक्तेऽपि ज्ञानिनामित्येव ज्ञातव्यमिति ब्रह्मपदयोग्यवाय्वादीनां ग्रहणायोक्तम् ।

## भावबोधः

**नापि सर्वस्येति** ॥ जैमिनिमतनिषेध इति ज्ञेयम् । **प्राप्तिसद्भावादिति** ॥ 'केन स्यात्' इति वाक्यानुष्ठेयानां मध्ये केषाञ्चित् करणं केषाञ्चिदकरणमित्यर्थत्वे विहिते किञ्चिदकरणनिमित्तक-साम्यसम्भवस्य प्राप्तिसद्भावात् तेनेदृश एवेति साम्योक्तिः प्राप्तासम्भवनिवर्तकत्वेन सम्यक् सम्बध्यत इत्यर्थः ॥ **सर्वाचरणेति** ॥ 'केन स्यात्' इति वाक्यस्य कामतः प्रातरुत्थायेत्यादिश्रुत्युक्तसर्व-सत्कर्मकरणार्थत्वे तु सर्वकरणस्य च साम्यसम्भावकत्वेन तेनेदृश एवेति वाक्येन यदि सर्वं कुर्यात्तर्हि सम इति साम्यसम्भवमात्रज्ञापनं कृतं स्यादित्यर्थः । पक्षद्वयेऽपि साम्योक्तेः सप्रयोजन-त्वात् को विशेष उक्तपक्षपरिग्रह इत्यत आह– **सम्भवेति** ॥ **रमणं** परदर्शननिमित्तं सुखम् । **तृप्तिः** अलम्बुद्धिः । **सन्तोषः** तज्जनकं सुखं,' इति गीताभाष्यानुसारेण गीतावाक्यं व्याचष्टे ॥ **आत्मरतीत्यादिना** ॥ विधित्वस्य जैमिनिमतेऽपि विद्यमानत्वात्ततः पक्षान्तरत्वज्ञापनायाह– **यथेष्टाचरणविधिरिति** ॥

## भावदीपः

**तदेवेति** ॥ अनुमतिपरत्वमेव सदाचारविषयतया व्यवस्थापयत्सूत्रमित्यर्थः । मध्य एवेति भाष्यस्थैवकारव्यावर्त्यमाह ॥ **यथेष्टेति** ॥ पूर्वसूत्रोक्तमपि निराह ॥ **नापि सर्वस्येति** ॥ सर्वसदाचारस्येत्यर्थः । भाष्यं व्याचष्टे ॥ **श्रुत्याद्युक्तानामिति** ॥ प्रातरुत्थायेत्याद्युक्तानामित्यर्थः । केन स्यादिति लिङामंत्रणार्थ इति भावः ॥ **सर्वेति** ॥ नियमेन सर्वसाधुकर्माचरणं जैमिन्युक्तमेवार्थः

(भावदीपः)

किं न स्यादित्यर्थः । पूर्वभाष्योक्तसाध्यमेवानूद्य केनेत्यादिभाष्यं विवृण्वन् संयोजयति ॥ **अनुष्ठेयानामिति** ॥ **केनापीति** ॥ करणेनाकरणेनापीत्यर्थः ॥ **प्राप्नीति** ॥ विहिताकरणनिमित्ता-साम्यप्रसक्तिसम्भवेन तन्निवृत्त्यर्थं कदाचिद्विहिताकरणेऽपि ईदृश एव सम एवेति साम्योक्त्यर्थं वाक्यशेषस्य श्लिष्टत्वादित्यर्थः । जैमिनिमते वाक्यशेषोपपत्तिं सूचयन्नेव बादरायणमतेऽतिशयमाह ॥ **सर्वाचरणेति** ॥ सर्वाचरणेन सम्भवद्यत्साम्यं तन्मात्रज्ञापनमेव कृतं स्यात् न तु प्रसक्तासाम्यनिवर्तकमित्यर्थः ॥ **अत आहेति** ॥ ननु कथमेतत्स्मृत्योक्तशङ्कानिरासः । गीतातात्पर्ये द्वितीये यस्त्वात्मरतिरेवेत्यादि तु मुक्तविषयम् । यस्त्वेवात्मरतो मुक्तः कार्यं तस्यैव नास्ति हि । तस्मात्कुर्वेव कर्माणीत्याह कृष्णोऽर्जुनं स्मयन्निति स्कान्द इत्युक्तेः । तथा तृतीये स्वस्थानेऽपि

'विष्णुप्रसादाद्रतिमांस्तृप्तो विष्णुप्रसादतः ।
विष्णावेवातितृप्तश्च मुक्तोऽसौ विध्यगोचर ॥'

इत्याग्नेय इत्यादिना च मुक्तपरत्वोक्तेः । गीताभाष्येऽपि आत्मरतिरेवेत्यवधारणादसंप्रज्ञात-समाधिस्थस्यैव कार्यं न विद्यत इत्युक्त्या अमुक्तपरत्वेऽप्यसंप्रज्ञातसमाधिस्थविषयत्वोक्तेरित्यतोऽ-त्रोदाहरणबलेन प्रकृतोपयोगाय भावमाह ॥ **ज्ञानिनामिति** ॥ समाधिस्थस्यापि ज्ञानित्वादिति वा ज्ञानिसामान्यपरत्वमप्यस्तीति वाऽभिप्रायः । रमणं परदर्शनादिनिमित्तं सुखम् । तृप्तिरन्यत्रा-लम्बुद्धिरिति गीताभाष्योक्तदिशा पदयोरपौनरुक्त्यायार्थमाह ॥ **आत्मेति** ॥ तेनैवान्यत्रा-लम्बुद्धिरिति दर्शयति । आत्मन्येव च सन्तुष्ट इति भाष्यदिशा हेतुत्वेन योजयति ॥ **तत्कुत इति** ॥ **अर्थद्वयमिति** ॥ नियमेन साध्वाचारपरत्वं तेष्वेव स्वेच्छाचारपरत्वं चेत्यर्थद्वयमित्यर्थः ।

## अभिनवचन्द्रिका

**सदाचारविधित्वमेवेति** ॥ सदाचारपरत्वमेवोक्तत्वेत्यर्थः । 'अनुष्ठेयं बादरायण' इति सूत्राभिप्रायमाह– **केन स्यादित्यादिना** ॥ 'येन स्यात्केन स्यात्' इति वाक्यं देवानां प्रागुक्तरीत्या मनुष्याणामिव सदसत्प्रवृत्तिविषयकामचाराभिधानमुखेन न स्तावकम्, नापि जैमिन्युक्तदिशा विधिबन्धवर्जितत्वेन स्वेच्छया सर्वाचरणाभिधानमुखेन विध्यबद्धत्वेन स्तावकम्, किन्तु अनुष्ठेयानां मध्ये स्वेच्छया केषाञ्चिच्चरणं, केषाञ्चिदचरणमिति कामचाराभिधायकमित्यर्थः । एतेन यथेष्टा-

(अभिनवचन्द्रिका)

चारित्वेन विधिबन्धवर्जितत्वेन स्तुत्योश्च कामचारश्रुतितात्पर्यविषयतया प्रागुक्तत्वात्तन्निषेधोऽनुपपन्न इति परास्तम् ॥ **कामेनेति** ॥ ननु इदं वाक्यं देवान्प्रति अनुष्ठेयानां मध्ये कामचरणप्रतिपादकमिति कुतोऽङ्गीक्रियते । निषिद्धाचरणेऽपि अनुज्ञाप्रतिपादकं किं न स्यादित्यत आहेत्यर्थः ॥ **प्राप्तिसद्भावादिति** ॥ विहितमध्य एव स्वेच्छया कस्यचित्परित्यागे सर्वानुष्ठातृसाम्यं तावत् सम्भावितम् । स्वेच्छया एकग्रासमात्रं परित्यजतः संपूर्णं भुक्तवता तृप्तत्वेन साम्यस्य दर्शनादिति भावः ॥ **सर्वाचरणपक्षेत्विति** ॥ निषिद्धस्याप्याचरणपक्षे अभक्ष्यमशकादेरन्नेन सह भुक्तवतो वमनाऽवश्यम्भावात् अन्नमात्रं भुक्तवता साम्याभावस्य दर्शनेन निषिद्धाचरणं कुर्वतो विहितमात्रा-नुष्ठातृसाम्यस्य न सम्भावितत्वात् 'येन स्यात् केन स्यात्' इति प्रमाणदर्शने साम्यसम्भावनाबुद्धिरेव स्यात् न तु निश्चयः । सम्भाविते्ऽर्थे प्रवृत्तस्य प्रमाणस्य निश्चायकत्वात् । असम्भाविते प्रवृत्तस्य सम्भावनाबुद्धिमात्रजनकक्षमत्वादिति भावः ॥ **सम्भवज्ञापनादिति** ॥ असम्भवनिवृत्तिशब्दोऽत्र तत्साधननिश्चयपरः । अस्मत्पक्षे साम्यनिश्चयो भवति । त्वत्पक्षे तु साम्यसम्भावना । सम्भावनातो निश्चयस्य ज्यायस्त्वात् । विहितेष्वेव कस्यचिच्चरणं, कस्यचित्त्याग इति अनुज्ञानमेव कामचार-श्रुत्यर्थोऽभ्युपगन्तव्य इत्यर्थः ॥ **सत्यमस्मिन्पक्ष इति** ॥ अस्मिन्पक्षे साम्योक्तिः निश्चयजनकत्वेन सम्यक् सम्बध्यत इति सत्यम्, तथापि साधनतारतम्ये फलतारतम्यावश्यम्भावात् सकल-विहितानुष्ठात्रा किञ्चित्परित्यक्तवतः साम्यायोगेन मुख्यापि योजना न साध्वीत्यत आहेत्यर्थः ।

## वाक्यार्थमुक्तावली

**सदाचारविधित्वमेवोक्त्वेति** ॥ न च विधिबन्धवर्जितत्वेनेत्युक्तिविरोधः विहिताकरणेऽपि नरकाद्यापादकप्रत्यवायाभावेन विधिबन्धवर्जितत्वेनेत्यस्य प्रवृत्तत्वात् । आनन्दातिशयसिद्ध्यर्थं ह्रासाभावार्थं च निषिद्धपरित्यागस्य सदाचारस्य च चरणविधित्वस्यैव जैमिनिनाऽङ्गीकाराद-विरोधः । यत्स्तुतयेऽनुमतिर्वेत्युक्तं तदेवेति । अनुमतित्वमेवेत्यर्थः । सूत्रेऽनुष्ठेयमित्यनुष्ठेयानामिति विभक्तिवचनव्यत्ययः । निर्धारणे च षष्ठी । कामचार इत्यनुवर्तते । अनुमतिरिति चावर्तते । इतिशब्दोऽध्याहार्यः । अनुष्ठेयमिति यथास्थितं च विवक्षितम् । अनुष्ठेयविषयमभ्यनुज्ञानमित्यर्थः। तथा चानुष्ठेयानां विहितानां मध्ये यस्मिन् करवाणीति कामः तस्य चरणं यस्मिन्न करवाणीति कामः तस्याचरणमनुज्ञानमेव केन स्यादिति कामचारश्रुत्यर्थः । इति बादरायणो मन्यत इत्यभिप्रेत्य

(वाक्यार्थमुक्तावली)

प्रवृत्तमनुष्ठेयानामिति भाष्यं परिष्कारपूर्वं व्याचष्टे ॥ **केन स्यादिति** ॥ यथेष्टाचारविधिर्न भवतीति ॥ **अन्यविषयमिति** ॥ 'जैमिन्युक्तं मानुषाणां तद्विषयाश्च केचन । सामान्यं भगवत्प्रोक्तं देवादीनां विशेषतः' इत्यनुव्याख्यानवचनादिति भावः ॥ **इति भावेनात्रेति** । उपलक्षणमेतत् । कर्मणां फलेऽतिशयाधायकत्वमेव न तु ज्ञाने विशेषाधायकत्वमित्यत्रापीति ज्ञेयम् ॥ **अत एवेति** ॥ देवान्याविषयत्वादेवेत्यर्थः । कर्मविध्यादेः कर्मविधिनियमयोरित्यर्थः ॥ **गतिरुक्तेति** ॥ अधिकोपदेशादिति सूत्रखण्डेनेति शेषः । यद्यपि कर्मविधिनियमयोः सर्वविषयत्वं न त्वाचारश्रुतिवद्देवतामात्रविषयत्वम् । तथापि तद्विषयत्वस्यापि भावात् तस्यां दिशायां गतिरुक्तेत्यर्थः ॥ **तयोर्मानुपेति** ॥ कर्मैव देहं दैविकं मानुषं वेत्यत्र दैविकदेहपदं मनुष्याणामेव देवलोके ज्योतिर्मयदेहविषयमिति भावः । बलवद्विरोधिसद्भावे जैमिन्याद्युक्तिरिष्यत इत्यनुव्याख्यानं मनसि निधायाह ॥ **प्रतिबन्धकयुक्तेति** ॥ एतेन भगवन्मततदितरमतयोः प्रकारान्तरेण विषयव्यवस्था दर्शिता । तदुक्तं सुधायाम् । जैमिन्याद्युक्तबलवत्प्रतिबन्धककर्मसद्भावे ज्ञानस्य पुरुषार्थासाधनत्वमभिप्रेत्य न स्वतन्त्राज्ज्ञानात् स्वर्गादिप्राप्तिर्भवतीत्युक्तवन्तः । तथा च प्रतिबद्धज्ञानविषयं भगवन्मतमवतिष्ठत इति ॥ **उक्तं च** ॥ तारादेः सूर्यजस्याङ्गसङ्गात् स्वर्गे नागादन्तरिक्षादिहासीदिति । तत्र प्रारब्धोपद्धलितात् सूर्यजस्याङ्गादिति विवक्षितत्वादविरोधः । अत्रायं विवेकः । स्वर्गादयः कर्मणैव नान्येनैवेत्यपरे विदुरित्युक्तम् । कर्मणैव स्वर्गादिकं न ज्ञानस्य शेषतयाप्युपयोग इति मुनिमतमधममनुष्योत्तमविषयम् । नन्वेवं चेदधममनुष्येषु ज्ञानस्य पुरुषार्थसाधकत्वाभावान्न ज्ञानस्य माहात्म्यमिति चेदपरोक्षोत्पादान्तरं यद्यपेक्षितं तत्सर्वं ज्ञानमहिम्ना जातकर्मणैवेति ज्ञानस्य कर्मस्वरूपोपकारकत्वेनापेक्षितत्वेन कर्मद्वारा पुरुषार्थहेतुत्वेन ज्ञानस्य माहात्म्यसिद्धेः पूर्वपक्ष्युक्तनिषेधः । नापि सर्वस्येति जैमिनिमतनिषेध इति ज्ञेयम् । **उक्तकामचरण एवेति** ॥ येन करणेन वा स्यात् येनाकरणेन वा स्यादित्युक्तकामचरण एवेत्यर्थः ॥ **प्राप्तिसद्भावादिति** ॥ केन स्यादित्यस्य केषाञ्चित्करणं केषाञ्चिदकरणमित्यर्थत्वे कारणाभावे साम्यं न स्यादित्यसाम्यप्राप्तिसद्भावादित्यर्थः ॥ **सम्भवमात्रेति** ॥ केन स्यादिति सर्वाचरण उक्ते सर्वचरणसद्भावात् साम्यं सम्भवतीति साम्यसम्भवमात्रज्ञापनं कुतः स्यादित्यर्थः । पक्षद्वयेऽपि साम्योक्तेः सप्रयोजनत्वात् को विशेष उक्तपक्षपरिग्रह इत्यत आह ॥ **सम्भव इति** ॥ **कार्याभावोक्तेरिति** ॥ ननु 'अतीतानागतज्ञानी त्रैलोक्योद्धारणक्षमः । एतादृशोऽपि नाचारं श्रौतं स्मार्तं विसर्जयेत्' इति कार्योक्तेर्विरोध इति

(वाक्यार्थमुक्तावली)

चेन्न। तेषां विहिताकरणे एष्यदलाभात् तदर्थं कार्यत्वस्य तत्रोक्तावपि सिद्धहान्यभावेन नरकाद्यभावेन च कार्यं न विद्यत इत्युक्तिसम्भवात्।

## तत्त्वसुबोधिनी

**नापि सर्वस्येति** ॥ जैमिनिमतनिषेधत इति ज्ञेयम्। कुतो न सर्वेषामननुष्ठेयानां कर्मणां कामतश्चरणमित्यत आह ॥ **केनापीति** ॥ अस्तु साम्येक्तिः ततोऽपि किमित्यत आह ॥ **साम्योक्तिश्चेति** ॥ **प्राप्तिसद्भावादिति** ॥ केन स्यादिति वाक्यस्यानुष्ठेयानां मध्ये केषाञ्चित्करणं केषाञ्चिदकरणं इत्यर्थत्वे विहिते किञ्चिदकरणनिमित्तकसाम्यासम्भवस्य प्राप्तिसद्भावात्तेनेदृश एवेति साम्योक्तिः प्राप्तासम्भवनिवर्तकत्वेन सम्यक्सम्बध्यत इत्यर्थः ॥ **सर्वाचरणपक्षे त्विति** ॥ केन स्यादिति वाक्यस्य कामतः श्रुत्युक्तसर्वाचरणार्थत्वे तु सर्वकरणस्य च साम्यसम्भावकत्वेनेदृश एवेति वाक्येन यदि सर्वं कुर्यात् तर्हि सम इति साम्यसम्भवमात्रज्ञापनं कृतं स्यादित्यर्थः। पक्षद्वयेऽपि साम्योक्तेः सप्रयोजनत्वात् को विशेष उक्तपक्षद्वयनिग्रह इत्यत आह ॥ **सम्भवेति** ॥ **कर्तव्यपरित्याग इति** ॥ अनुष्ठेयमध्ये कस्यचिदचरणे कर्तव्यपरित्याग इत्यर्थः। परमात्मप्रसादेऽपि विषयेषु अलम्बुद्धिमत्वं कुत इति पृच्छति ॥ **तत्कुत इति** ॥ तदुत्तरत्वेनात्मन्येव च सन्तुष्ट इति व्याचष्टे ॥ **परमात्मनि सन्तोषवत्वादिति** ॥ सन्तोषेष्वलम्बुद्धिः कुत इत्यत आह ॥ **तद्दर्शनेति** ॥

## वाक्यार्थविवरणम्

जैमिनिमतनिरासायाह ॥ **नापि सर्वस्येति** ॥ प्रातरुत्थायेति श्रुत्युक्तसर्वसदाचारस्येत्यर्थः। ननु पक्षद्वयेऽपि साम्योक्तेः असम्भवनिवृत्तिसम्भवज्ञापनरूपप्रयोजनवत्त्वादुक्तपक्षपरिग्रहे को विशेष इत्यत आह ॥ **सम्भवज्ञापनादिति** ॥ **अमुख्याऽपि योजनेति** ॥ सम्भवमात्रज्ञापनरूपेत्यर्थः ॥ इत्यत **आहेति** ॥ कर्तव्यपरित्यागेऽपि साम्यं स्मृत्या आहेत्यर्थः ॥ **अर्थद्वयमिति** ॥ ज्ञानिस्तुतिरनुमतिमात्रं वेत्यर्थद्वयमित्यर्थः।

## वाक्यार्थमञ्जरी

बादरायणोऽनुष्ठेयमवश्यं कर्तव्यमेव नियमेन कर्तव्यमित्यनुज्ञानं कामचारश्रुत्यर्थं मन्यते कुतः साम्यश्रुतेः, केनापि प्रकारेण वृत्तावपीदृश एवेति सामान्योक्तेरित्यर्थः। अत्र केन स्यादिति

(वाक्यार्थमञ्जरी)

श्रुतावयोग इति विहितस्यैव नियमेन कर्तव्यत्वादिति भावः । नापि सर्वस्येति जैमिनिमतनिषेध इति ज्ञेयम् ॥ **प्राप्तिसद्भावादिति** ॥ केन स्यादिति वाक्यस्यानुष्ठेयानां मध्ये केषाञ्चित्करणं केषाञ्चिद-करणमित्यर्थत्वेन विहितेषु किञ्चिदकरणनिमित्तकसाम्यासम्भवस्य प्राप्तिसद्भावात्तेनेदृश एवेति साम्योक्तिः प्राप्तासम्भवनिवर्तकत्वेन सम्यक् सम्बध्यत इत्यर्थः ॥ **सर्वाचरणेति** ॥ केन स्यादिति वाक्यस्य कामतः श्रुत्युक्तसर्वाचरणार्थत्वे तु सर्वकरणस्य च साम्यसम्भावकत्वेन तेनेदृश एवेति वाक्येन यदि सर्वं कुर्यात्तर्हि सम इति साम्यसम्भवमात्रज्ञापनं कृतं स्यादित्यर्थः । पक्षद्वयेऽपि साम्योक्तेः सप्रयोजनत्वात्को विशेष उक्तपक्षपरिग्रह इत्यत आह ॥ **सम्भवेति** ॥ **अर्थद्वयमिति** ॥ सर्वसदाचारस्येच्छया कर्तव्यत्वविधिरूपं सदाचारानुज्ञामात्ररूपं चेत्यर्थद्वयमित्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ विधिर्वा धारणवत् ॐ ॥ २० ॥**

**'केन स्याद्येन स्यात्' इति विधिर्वा । यथा वेदधारणं त्रैवर्णिकानां विहितं नान्येषाम् । एवं स्वमतानुसारिणी प्रवृत्तिर्ज्ञानिनां विहिता । न तत्राधर्मशङ्का कार्या । नान्येषमिति वा ।**

**'स्वेच्छयैव प्रवृत्तिस्तु ब्रह्मणो विधिचोदिता ।**
**नाऽऽशङ्क्यं तन्मतं क्वापि विष्णोः प्रत्यक्षचोदना ।**
**इतरेषां न विहिता स्वेच्छावृत्तिः कथञ्चन' इति हि ब्राह्मे ॥**

## तत्त्वप्रदीपिका

यथा वेदपाठादिकं ब्राह्मणक्षत्रियविशां विहितं 'स्वाध्यायोऽध्येतव्यः' 'वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना' इत्यादिना, न शूद्रादीनाम् । प्रत्युत श्रवणोदाहरणधारणेषु विपुलो दण्डः श्रुतः । एवं स्वमतानुसारिणी प्रवृत्तिर्ब्रह्मदर्शिनां विहिता । तेषां कामचरणे नाधर्माशङ्का कार्या । विशुद्धबुद्धित्वात् । नेतरेषां विहिता । किन्तु निषिद्धा च । वाशब्दात् ज्ञानिनामपि केषाञ्चिदेवेति सूचितं विषयभेदं प्रकटयति– 'स्वेच्छयैव प्रवृत्तिस्तु ब्रह्मणो विधिचोदिता' इत्यादिना । नाऽशङ्क्यं विरिञ्चस्य मतं कदाचिदपि । विष्णोः प्रेरणा प्रत्यक्षाऽस्ति हि तस्य ।

## तत्त्वप्रकाशिका

अथाऽयं **स्वेच्छाचरणविधिर्वा** भवतीत्यर्थप्रतिपादकं सूत्रं पठित्वा व्याचष्टे ॥ **विधिर्वेति** ॥ विधिरिति यथेष्टाचरणविधिरित्यर्थः । न ज्ञानिनां स्वेच्छाचरणविधिर्युक्तोऽज्ञानिनामपि तथात्वप्रसङ्गादित्यत आह ॥ **यथेति** ॥ विहिता नान्येषामित्यन्वयः । उक्तस्यैव विवृतत्वात्पुनर्वाशब्दः । नायं यथेष्टाचरणविधिः सम्भवति । अचोदनेत्युक्तविरोधात् । अधर्मकरणस्यापि सम्भवादित्यत आह ॥ **न तत्रेति** ॥ कुतो न तत्राधर्मशङ्का कार्येत्यत आह ॥ **स्वेच्छयेति** ॥ अत्र ब्रह्मण इत्युक्तेऽपि ज्ञानिनामित्येव ज्ञातव्यं विषयविभागस्य वक्ष्यमाणत्वात् । चोदना यत इति शेषः ।

## भावबोधः

भाष्ये विधिर्वा नान्येषामिति वेति पक्षद्वयोक्तिरिति प्रतीतिनिरासायाह– **उक्तस्यैवेति** ॥ ननु 'स्वेच्छयैव' इति स्मृत्या एतत्सूत्रं चतुर्मुखविषयमिति निर्णये पारिप्लवार्थ इति शङ्काया एतद्विषयत्वासम्भवेन 'विशेषितत्वात्' इति तत्सिद्धान्तसूत्रांशेन ब्रह्मैव स्वेच्छानियत इति विषयविभागकथनं व्यर्थं स्यादित्यत आह– **अत्र ब्रह्मण इत्युक्तेऽपीति** ॥ अत एव भाष्ये ज्ञानिनामित्येवोक्तमिति भावः । उपलक्षणमेतत् । 'ब्रह्मणः स्वेच्छया कृतौ' इति 'भावे प्रजापतेः' इत्यत्रापि वाक्यद्वयेऽयं न्यायो द्रष्टव्यः ॥ **चोदना यत इति** ॥ यथेष्टं कुर्विति विष्णुविहितकरणस्याधर्मत्वशङ्काविषयत्वासम्भवादिति भावः ।

## भावदीपः

अथेत्यर्थान्तरद्योतकः । तदेवाह ॥ **स्वेच्छेति** ॥ सर्वसाध्वाचारविधिरिति भ्रमनिरासाय भाष्यार्थमाह ॥ **यथेष्टेति** ॥ इति वेत्युक्त्या विधिर्वेत्यतः पक्षान्तरमेतदिति धीनिरासायाह ॥ **उक्तस्यैवेति** ॥ तत्वप्रदीपे वाशब्दाज्ज्ञानिनामपि केषाञ्चिदेवेति सूचितं विषयभेदं प्रकटयति । स्वेच्छयेतीत्युक्त्याऽत्रैव विषयविभागः क्रियत इति धीनिरासायाह ॥ **अत्र ब्रह्मण इत्युक्तेऽपीति** ॥ इह भाष्ये ज्ञानिनामिति उत्तरसूत्रभाष्ये च तैरपीत्युक्ते ज्ञानिनामेवेत्युक्तम् ॥ **त्रेधा हि ज्ञानिन** इत्यादिना ॥ तथा च पुनरुक्तिः स्यादिति भावः ।

## अभिनवचन्द्रिका

**ज्ञानिनामिति ॥** परमात्मदर्शनप्रयुक्ताऽऽह्लादनिमग्नानां कर्तव्यकर्मपूर्तेः वालखिल्यादिभिः क्रियमाणत्वेन परमात्मदर्शनप्रयुक्तकर्मपरित्यागस्य न फलपूर्णताविरोधित्वमिति भावः । भाष्ये येन स्यात्केन स्यात् इति । 'विधिर्वेति, तथा नाऽन्येषामिति वा' इति वाशब्दद्वयश्रवणात् अस्मिन्नेव सूत्रे मतद्वयमुच्यत इति भ्रमनिरासायाह– **उक्तस्यैवेति ॥** आद्यो वाशब्दः 'येन स्यात्केन स्यात्' इति श्रुतेः । 'स्तुतयेऽनुमतिर्वा' इत्यादिपूर्वसूत्रोक्तव्याख्यानात् । 'विधिर्वा धारणवत्' इति सूत्रोक्तं व्याख्यानमन्यदेवेति ज्ञापनाय 'येन स्यात्केन स्यात्' इति भाष्यस्य, 'एवं स्वमतानुसारिणी' इत्यादिभाष्यं विवरणम् । ततश्च प्रथमवाशब्दोक्तमेव द्वितीयवाशब्देनोच्यत इति पुनर्वाशब्दो नाऽनुपपन्न इत्यर्थः । नायं यथेष्टाचरणविधिरिति । 'येन स्यात्' इति यथेष्टाचरणविधिरिति न युक्तं, 'निषिद्धं कर्तव्यमेव' इति विस्पष्टचोदनाभावेन विधित्वस्य दूषितत्वात् । अधर्मानुष्ठान प्रसङ्गाच्चेत्यर्थः । भाष्ये– **न तत्रेति ॥ तत्र** ज्ञानिकामनाविषये **अधर्मशङ्का** निषिद्धत्वशङ्का । न कार्येत्यर्थः । ततश्च निषिद्धं कर्तव्यमेवेति विस्पष्टविध्यभावेऽपि 'ब्राह्मणो न हन्तव्यः' इति निषेधसद्भावेऽपि अस्य विधित्वं नाऽनुपपन्नम्, ज्ञानिनो निषिद्धे कामनाऽभावादिति भावः । कुतो न तत्रेति ॥ ज्ञानिनामपि विश्वामित्रादीनां निषिद्धे कामनादर्शनादधर्मशङ्का न कार्येत्येतत् कुतः स्यात् न कुतोऽपि स्यादित्यर्थः । अत्र टीकायां 'स्वेच्छयैव' इति भाष्यप्रतीकग्रहणानन्तरं 'चोदनायत इति शेषः' इत्यतः प्राक् 'अत्र ब्रह्मण इत्युक्तेऽपि ज्ञानिनामित्येव ज्ञातव्यम् । विषयविभागस्य वक्ष्यमाणत्वादिति वाक्यद्वयं श्रूयमाणमपि न टीकान्तर्गतं मन्तव्यम् । अपि तु प्रक्षिप्तम् । अवश्यं चैतदेवं विज्ञेयम्, 'भावशब्दाच्च' पारिप्लवार्था इति चेन्न विशेषितत्वादिति सूत्राभ्यां स्वेच्छानियतत्वं ब्रह्मण एवेति निर्णीतत्वेन 'स्वेच्छैयैव इति स्मृतिगतब्रह्मशब्दस्य ज्ञानिमात्रपरतया व्याख्यानस्यायुक्तत्वात्, विषयविभागस्येत्युत्तरवाक्यस्यासङ्गतत्वाच्च । भावबोधे तु गङ्गाजलाऽनुप्रविष्टरथ्योदकस्य सेव्यत्वदर्शनात् टीकाप्रवेशमात्रेण प्रक्षिप्तयोरपि वाक्ययोर्व्याख्येयत्वमिति बुद्ध्या व्याख्यानं कृतम् । न तु टीकान्तर्गतत्वबुद्ध्येति द्रष्टव्यम् । चोदनायत इति शेष इति । अनेन चतुर्मुखस्य, विष्णोः प्रत्यक्षचोदना साक्षादुपदेशो यतोऽस्ति, अतः तन्मतम् अधर्ममिश्रत्वेन नाऽऽशङ्क्यमिति मूलस्य योजनोक्ता भवति ।

(अभिनवचन्द्रिका)

इदमुक्तं भवति । विश्वामित्रादीनां निषिद्धे कामनासद्भावेऽपि 'येन स्यात्' इति कामचार-विधिविषयस्य चतुर्मुखस्य निषिद्धविषयकामनाभावस्य प्रमाणसिद्धत्वात् न तत्राधर्मशङ्का कार्येत्युक्तं युक्तमिति ॥

## वाक्यार्थमुक्तावली

ननु लिङ्लोट्तव्यप्रत्ययाश्रवणात् कथं विधित्वमिति चेन्न । प्रतितिष्ठन्ति ह वा एता रात्री-रुपयन्तीत्यत्र प्रतिष्ठाकामो रात्रिसत्रं कुर्यादिति विध्युन्नयनस्याङ्गीकृतत्वात्तन्न्यायेन केन स्यादित्यत्रापि यथेष्टं ज्ञानिना कर्तव्यमिति विध्युन्नयनोपपत्तेरिति ज्ञेयम् । जैमिन्याचार्येणापि सर्वसदाचारस्वीकारात् तद्वैलक्षण्यायोक्तं **यथाचरविधिरित्यर्थ इति** ॥ भाष्ये विधिर्वेति नान्येषामिति वेति वाशब्दस्य द्विवारं श्रवणादस्मिन्नेव सूत्रे पक्षद्वयमुच्यत इति भ्रमनिरासायाह । **उक्तस्यैवेति** ॥ केन स्यात् येन स्यादिति विधिर्वेत्युक्तस्यैव धारणवदिति दृष्टान्तविवरणपूर्वं एवं स्वमतानुसारिणी प्रवृत्तिर्ज्ञानिनां विहिता नान्येषामिति वेति दार्ष्टान्तिकोपपादनव्याजेन निवृत्तत्वादित्यर्थः । ततश्चायं सूत्रार्थः । त्रैवर्गिकाणामेव वेदधारणस्येव ज्ञानिनामेव केन स्यादिति यथेष्टाचारविधिर्वेति ॥ **विषयविभागस्येति** ॥ पारिप्लवार्था इत्यत्र विधिनियता मनुष्या अनियता देवा ब्रह्मैव स्वेच्छानियत इति वक्ष्यमाणत्वात् । अत्रैव धारणवदिति सूत्रार्थतया ब्रह्मणः स्वेच्छाचरणविधिः मनुष्याणां स्वेच्छाचारेऽचोदनेति स्मृत्या विषयव्यवस्थापने उत्तरसूत्रं गतार्थं स्यादतो ज्ञानिनामिति सामान्यविषयत्वेन स्मृतिर्द्रष्टव्या । अत एव स्ववाक्ये स्वमतानुसारिणी प्रवृत्तिर्ज्ञानिनां विहिता इत्युक्तमिति भावः । उत्तरत्राप्येवमेव ब्रह्मणः स्वेच्छया कृतौ विधिर्भावे प्रजापतेरित्यत्र ज्ञानिन इति सामान्येनैव द्रष्टव्यम् । नाशङ्क्यमिति भाष्यस्य तन्मतं पुत्रिकाकामनाद्यधर्मत्वेन नाशङ्क्यमित्यर्थः । न केवलं ब्रह्म स्वेच्छयैव वर्ततेति विधिसद्भावात् तन्मतस्य शङ्कानर्हत्वम् । किन्तु विध्यन्तर-मस्तीत्याह ॥ **विष्णोरिति** ॥ यतो विष्णोः प्रत्यक्षचोदनाऽस्ति अतश्च नाशङ्क्यमित्यर्थः ।

## तत्त्वसुबोधिनी

विधित्वस्य जैमिनिमतेऽपि विद्यमानत्वात्ततः पक्षान्तरज्ञापनायाह ॥ **यथेष्टाचरणविधिरिति** ॥ तथाभावप्रसङ्गादिति स्वेच्छाचारविधिप्रसङ्गादित्यर्थः । व्यवहितत्वान्वयमाह ॥ **विहितेति** ॥

(तत्त्वसुबोधिनी)

विधिर्वेत्युक्तस्यैव यथेत्यादिना विवृतत्वादिति भावः । अनेन उक्तमेव विवृणोतीति । तद्वाक्यमेव ॥ **अचोदनेत्युक्तेति** ॥ निषिद्धं कर्तव्यमिति विधिर्नेत्युक्तेत्यर्थः । अधर्मकरणस्यापीति अपिशब्दस्य समुच्चयार्थत्वेन दूषणान्तरमेतदिति भावः । ननु स्वेच्छयैव प्रवृत्तिस्तु इति स्मृत्या एतत्सूत्रं चतुर्मुख-निर्णये विषयपारिप्लवा इति शङ्कायाः एतद्विषयत्वासम्भवेन विशेषितत्वादिति सूत्रात् सिद्धान्त-सूत्रांशेन ब्रह्मैव स्वेच्छानियत इति विषयविभागकथनं व्यर्थं स्यादित्यत आह ॥ **अत्र ब्रह्मण इत्युक्तेपीति** ॥ अत एव भाष्ये ज्ञानिनामित्येवोक्तमिति भावः ।

उपलक्षणमेतत् । ब्रह्मणः स्वेच्छयाकृताविति भाष्ये ज्ञानिनमित्युक्तमिति भावः । उपलक्षण-मेतत् । ब्रह्मणः स्वेच्छया कृताविति भाष्ये प्रजापतेरित्यत्रापि वाक्यद्वयेऽयं मन्त्रार्थो द्रष्टव्यः । **चोदना यत इति** ॥ **शेषत इति** ॥ प्रत्यक्षा चासौ चेति विग्रहः । यथेष्टं कुरु इति विष्णुविहितकरणस्याधर्मशङ्काविषयत्वासम्भवादिति भावः ।

## वाक्यार्थविवरणम्

**नायमित्यादि** ॥ कुतो नायं यथेष्टाचरणविधिरित्यत उक्तम् ॥ **अधर्मकरणस्यापि सम्भवादिति** ॥ तथा च यथेष्टतोऽधर्माचरणविधिरपि प्राप्तः स्यादित्यर्थः । अस्तु को दोष इत्यत उक्तम् ॥ **अचोदनेत्युक्तेति** ॥ न च निषिद्धं कर्म कर्तव्यमेवेति चोदनेत्युक्तत्वेनाधर्माचरण-विध्यङ्गीकारे तद्विरोधः स्यादिति भावः ॥ **तत्र** ॥ यथेष्टाचरणे ॥ **चोदना यत इति** ॥ तथा च अधर्माचरणविधिरपि ब्रह्मणो भवत्येव । यथेष्टं कुर्विति प्रत्यक्षतो विष्णुना तं प्रति विहितत्वेन अधर्मशङ्कानास्पदत्वात् । अचोदनेत्यस्य चतुर्मुखेतरविषयत्वादिति भावः ।

## वाक्यार्थमञ्जरी

केन स्यादिति ज्ञानिनः कामचारविधिर्वास्तु तर्ह्यज्ञस्याप्येवं स्यादित्यत उक्तम् ॥ **धारण-वदिति** ॥ यथा वेदधारणं त्रैवर्णिकानामेव विहितं तथा कामचारो ज्ञानिनामेव विहित इत्यर्थः ॥ **यथेष्टाचारविधिरिति** ॥ तेन सदाचारविधिमज्जैमिनिमतभेद इति भावः । इत्यन्वयः इति वक्ष्यमाणेनान्वयः । भाष्ये विधिर्वा नान्येषामिति वेति पक्षद्वय उक्तरिति प्रतीतिनिरासायाह ॥ **उक्तस्यैवेति** ॥ विधिर्वेत्यन्तेनोक्तस्यैव यथा देवेत्यादिना विवृतत्वादित्यर्थः । स्मृतौ ब्रह्मण

(यत्न्यार्थमञ्जरी)

इत्येवोक्तत्वात्कथं भाष्ये ज्ञानिनामित्युक्तिरित्यत आह ॥ अत्रेति ॥ कुत इत्यत आह ॥ विषयविभागस्येति ॥ यद्येतत्स्मृत्यनुसारेणैतत्सूत्रं चतुर्मुखविषयमिति निर्णीयते तर्हि पारिप्लवार्था इति शङ्कायाः एतद्विषयत्वासम्भवेन विशेषितत्वादिति तत्सिद्धान्तसूत्रांशेन ब्रह्मैव स्वेच्छानियत इति विषयविभागकथनं व्यर्थं स्यादिति भावः । चोदना यत इति विशेष इति यथेष्टं कुर्विति विष्णुविहितकर्मकरणस्याधर्मत्वशङ्काविषयत्वादिति भावः ।

## सूत्रभाष्यम्

**॥ ॐ स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॐ ॥ २१ ॥**

**स्तुतिमात्रमेव स्वेच्छाचरणं न विधिः । तैरपि सामान्यविधिस्वीकारादिति चेन्न ।** अपूर्वत्वात् परवशत्वात् । **सर्वविध्यतिक्रमेण स्तुतिमात्रविषयत्वं परब्रह्मण एव हि ।**

**'विधीनां विषयास्त्वन्ये ब्रह्मणः स्वेच्छया कृतौ ।**
**परस्य ब्रह्मणो ह्येव सर्वविध्यतिदूरता' इति ब्रह्मतर्के ॥**

## तत्त्वप्रदीपिका

**स्तुतिमात्रमित्यादिसूत्रम् । स्तुतिरेव स्वेच्छाचरणवचनं न यथेष्टं कुर्यादिति विधिर्युक्तः । तैर्ज्ञानिभिरपि ज्ञानदानादिसामान्यविधिस्वीकारात् स्वेच्छाचरणासम्भवात् ज्ञानिस्तुतय इति पूर्वोक्तविरोधाच्चेति चेन्न । अपूर्वत्वात् । न ह्ययं विरिञ्चः पूर्वमनादि ब्रह्म भवति, किन्तु तस्य परब्रह्मणो वशगः । अतो नास्य सर्वविधिनिषेधागोचरत्वेन स्तुतिमात्रविषयत्वम् । तस्यैकस्यैव हि तद्भवति नित्याव्ययानतिशयनीयगुणगणपूर्णत्वादशेषदोषदूरत्वाच्च । 'एष नित्यो महिमा ब्राह्मणस्य' 'न वर्धते कर्मणा नो कनीयान्' इति हि श्रुतिः । 'विधीनां विषयास्त्वन्ये' इति तु शब्दात्तेष्वपि विशेषोऽस्ति । वक्ष्यते च विशेषितत्वादिति ॥**

## तत्त्वप्रकाशिका

**उक्तमाक्षिप्य समादधत्सूत्रमुपन्यस्याऽऽक्षेपांशं तावद् व्याचष्टे ॥ स्तुतिमात्रमिति ॥ यदुक्तं केन स्यादिति स्वेच्छाचरणं ज्ञानिनां विधीयत इति । मैवम् । किं तु पूर्वोक्तस्तुतिरेव । कुतः ।**

(तत्त्वप्रकाशिका)

ज्ञानिभिरपि सन्ध्यामुपासीतेत्यादिसर्वजनसाधारणविधिस्वीकारात् । स्वेच्छाचरणविधिर्नास्ति । किं तु स्तुतिमात्रमेतदिति न युक्तम् । ज्ञानिनां स्वेच्छाचरणविध्यभावेन स्तुतिविषयत्वे सर्वविध्यतिदूरत्वेन स्तुतिमात्रविषयत्वप्रसङ्गात् । न च तद्युक्तं परमात्माधीनत्वादिति भावः । परमात्माधीनत्वेऽपि सर्वविध्यतिदूरत्वेन स्तुतिमात्रविषयत्वं किं न स्यादित्यत आह ॥ सर्वेति ॥ ज्ञानिनां सामान्यविधिसद्भावात्स्वेच्छाविध्यभावेऽपि न सर्वविधिदूरत्वमित्याशङ्कां परिहर्तुमुक्तार्थे स्मृतिं चाह ॥ विधीनामिति ॥

## गुर्वर्थदीपिका

परमात्माधीनत्वादिति टीकावाक्ये सर्वविध्यतिदूरत्वस्येति प्रागुपस्कर्तव्यम् ।

## भावबोधः

**परमात्माधीनत्वादिति** ॥ अनेन सूत्रे अः परः परमात्मा पूर्वो नियामको ये अपूर्वास्तेषां भावः अपूर्वत्वं तस्मादिति सूत्रं परवशत्वादिति भाष्येण योजितमित्युक्तं भवति ।

## भावदीपः

भाष्ये मात्रमेवेति मात्रपदस्य व्याख्यानमेवेत्येतदिति भावेन तद्व्यावर्त्यपूर्वं तदनुवदति ॥ **यदुक्तमित्यादिना स्तुतिरेवेत्यन्तेन** ॥ सूत्रे पूर्वपदेनानादिब्रह्मोच्यते । अपूर्वत्वादब्रह्मत्वादित्यर्थः । तस्य तात्पर्योक्तिर्भाष्ये परवशत्वादित्येवमभिप्रेत्य भावार्थमाह ॥ **ज्ञानिनां स्वेच्छेति** ॥ **न च तदिति** ॥ सर्वविध्यतिदूरत्वप्रकारकस्तुतिमात्रविषयत्वमित्यर्थः । अधीनत्वाज्ज्ञानिनामित्यनुषङ्गः ॥ **स्मृतिं चाहेति** ॥ स्मृतौ ब्रह्मण इत्युक्तावपि ज्ञानिनामित्येव पूर्ववद्धयेयम् । ज्ञानिनामित्युक्तावपि येषां ज्ञानिनामित्यादिवक्ष्यमाणविभागपर्यालोचनया ब्रह्मण एव पर्यवसानात् ब्रह्मण इत्युक्तिः ।

## अभिनवचन्द्रिका

**उक्तमाक्षिप्येति** ॥ 'विधिर्वेति पूर्वसूत्रोक्तं विधित्वमाक्षिप्येत्यर्थः ॥ **पूर्वोक्तेति** ॥ 'येन स्यात् इति वाक्यस्य स्तुतित्वं विधित्वं चोक्तम् । तत्र पूर्वसूत्रोक्तं स्तुतित्वमेव युक्तं न तु 'विधिर्वेति सूत्रोक्तं विधित्वमित्यर्थः । एतेन स्तुतिरित्येतावता पूर्णत्वात् 'पूर्वोक्तेति व्यर्थमिति परास्तम् ॥ कुत

(अभिनवचन्द्रिका)

इति ॥ स्वेच्छाचरणविधिः कुतो न भवतीत्यर्थः ॥ **स्वीकारादिति** ॥ अकरणे प्रत्यवायभयेन स्वीकारादित्यर्थः ॥ **स्तुतिमात्रमिति** ॥ 'येन स्यात्' इति वाक्यं सर्वान्प्रति स्तुतिरेव न तु कश्चित्प्रति स्वेच्छाचरणविधिरित्यर्थः ॥ **ज्ञानिनामिति** ॥ इदं वाक्यं ज्ञानिनां न स्वेच्छाचरणविधिः, अपि तु स्तुतिरित्यङ्गीकारे त्वदुक्तं स्तुतिमात्रविषयत्वं सर्वविध्यतिदूरत्वे पर्यवसन्नं स्यादिति भावः। एतेन सर्वविध्यतिदूरत्वेन स्तुतिविषयत्वं स्यादित्येतावता पूर्णत्वात्, मात्रपदं व्यर्थं स्यादिति परास्तम् । मात्रशब्दस्यावधारणार्थकस्य परोक्तविधित्वानुवादार्थत्वात् । अयमत्र विवेकः। यदीदं ज्ञानिनां स्वेच्छाचरणविधिर्न भवति अपि तु स्तुतिरित्येतावदापादकं, तर्हि सर्वविध्यतिदूरत्वं स्यादित्यापाद्यमिति । अस्तु अविध्यात्मकस्तुतिविषयत्वं सर्वविध्यतिदूरत्वे पर्यवसन्नम्। इष्टत्वादित्यत आह– **न चेति** ॥ **परमात्माधीनत्वेऽपीति** ॥ परमात्माधीनत्वेऽपि ज्ञानिनां सर्वविध्यतिदूरत्वप्रापककेवलस्तुतिविषयत्वं किं न स्यादित्यर्थः ॥ **ज्ञानिनामिति** ॥ अस्य वाक्यस्य स्वेच्छाविधित्वाभावेऽपि न सर्वविध्यतिदूरत्वे पर्यवसन्नता । ज्ञानिनां सामान्यविधिसद्भावात् । ततश्च केवलस्तुतिविषयत्वेऽपि न ज्ञानिनां सर्वविध्यतिदूरत्वं प्राप्नोतीति शङ्कां परिहर्तुमित्यर्थः ।

## वाक्यार्थमुक्तावली

अत्र विधिरित्यनुवर्तते । प्रथमान्तं षष्ठ्यन्तं चानुसन्धेयम् । स्वेच्छाचरणमिति शेषः । सिद्धान्तखण्डात् नेत्यनुकृष्यते। किन्त्वित्युपस्कार्यम्। तथा च केन स्यादित्यनेन स्वेच्छाचरणं न विधिः न विधीयते। किन्तु स्तुतिमात्रं स्तुतिरेव। कुतस्तैरपि विधेः सामान्यविधेरुपादानादिति सूत्रार्थमभिप्रेत्य प्रवृत्तं स्तुतिमात्रमेवेत्यादिभाष्यं व्याचष्टे। **यदुक्तमित्यादिना** ॥ भाष्ये स्तुतिमात्रमित्यनूद्य एवेति मात्रपदार्थकथनम् ॥ **पूर्वोक्तेति** ॥ करणेऽकरणे च मोक्षप्रतिबन्धो नास्तीति पूर्वोक्तस्तुतिरेवेत्यर्थः । नापूर्वत्वादित्यत्र नञा निषेध्यमाह ॥ **ज्ञानिनामिति** ॥ कुतो न युक्तमित्यतस्तथात्वमित्यध्याहारः । स्तुतिमात्रमित्यनुवृत्तिः । स्यादिति शेष इत्यभिप्रेत्य मात्रशब्दव्यावर्त्यकथनपूर्वं योजयति । ज्ञानिनां स्वेच्छाचरणविध्यभावेनेति । न स्तुतिमात्रमिति विपर्यये पर्यसानपरत्वेन योजयति ॥ **न चेति** ॥ तत्र हेतुतया पूर्वत्वादित्यनेन लब्धमर्थमाह। परमात्माधीनत्वात् । एतेन पूर्वमनादिब्रह्मज्ञानिनो ब्रह्मत्वात् ब्रह्माधीनत्वादिति यावदित्युक्तं भवति । तदुक्तं

(वाक्यार्थमुक्तावली)
तत्वप्रदीपे । न ह्ययं विरिञ्चः पूर्वमनादि ब्रह्म भवति । किन्तु तस्य परब्रह्मणो वश इति । केचित्तु चतुर्मुखस्यापूर्वत्वात् पूर्वत्वाभावात् जगत्कारणत्वाभावात् भगवत एव कारणत्वेन तद्वशत्वादिति यावदित्याहुः । अन्ये तु अः ब्रह्म पूर्वं नेतृ यस्य तस्य भावस्तस्मादित्यर्थमाहुः । अपूर्वत्वात् पूर्वं प्रलयेऽसत्वात् भगवज्जन्यत्वाच्चेत्यर्थ इत्येके । विधीनां विषयोऽस्त्वित्यस्य सामान्यविधीनामपीत्यर्थः ।

## तत्त्वसुबोधिनी

अङ्गीकृत्याह ॥ **ज्ञानिनामिति** ॥ तर्हि सिद्धं नः समीहितमित्याशङ्क्याह ॥ **किं त्विति** ॥ यदि ज्ञानिनां स्वेच्छाचरणविधिविषयत्वाभावेन स्तुतिविषयत्वमङ्गीक्रियते तर्हि तेषां विधिमात्र-विषयत्वाभावेन सर्वविध्यतिदूरत्वेन स्तुतिविषयत्वं स्यादित्यत आह ॥ **ज्ञानिनामिति** ॥ तथा च परमात्मसाम्यं स्यादिति भावः । अस्तु तदित्याशङ्क्याह ॥ **न चेति** ॥ **परमात्माधीनत्वादिति** ॥ अनेन सूत्रे अः परमात्मा पूर्वो नियामको येषां ते तथोक्ताः, तेषां भावोऽपूर्वत्वं तस्मादिति सूत्रं परवशत्वादिति भाष्ये व्याख्यातमिति ज्ञेयम् ॥ **विधीनामिति** स्मृतौ अन्य इत्यत्र ज्ञानिभ्योऽन्ये अज्ञानिन इति ग्राह्यम् । स्वेच्छया कृतावित्यत्र विधिरिति शेषः । तथा च सामान्यविधेः अज्ञानिविषयत्वात् ज्ञानिनां तद्भावेन स्वेच्छाविधेश्चाभावे सर्वविध्यतिदूरत्वेन स्तुतिविषयत्वं स्यात् । तच्चायुक्तमिति स्वेच्छाचरणमेव ।

## वाक्यार्थमञ्जरी

केन स्यादिति स्तुतिमात्रं न विधिः कुतः ज्ञानिभिरपि सन्ध्यामुपासीतेत्यादिसामान्यविधे-रुपादानात्स्वीकार इति चेन्न तथात्वे तेषां सर्वविध्यतिदूरत्वेन प्रकारेण स्तुत्यत्वप्रसङ्गात् न चैतद्युक्तं तेषामपूर्वत्वात् अः विष्णुः, पूर्वः प्रेरको येषां ते अपूर्वाः तेषां भावस्तत्त्वं तस्माद्भगवदधीनत्वा-दित्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ भावशब्दाच्च ॐ ॥ २२ ॥**

**'यथाविधानमपरे विधिर्भावे प्रजापतेः ।**
**ब्रह्मणः परमस्यैव सर्वविध्यतिदूरता' इति च तुरश्रुतौ ॥ २२ ॥**

## तत्त्वप्रकाशिका

ननु ज्ञानिनां स्वेच्छाचरणविधेः स्फुटप्रमाणसिद्धत्वे भवेदेतद्वाक्यं तदर्थं तदेव कुत इत्याशङ्कां परिहरत्सूत्रमुपन्यस्य तत्सूचितश्रुतिमेवोदाहरति ॥ **भावेति** ॥ भावे इच्छायाम् । अतीतसूत्रे स्वेच्छाचरणविधेरर्थसिद्धत्वाच्चशब्दः ।

## भावबोधः

**अर्थसिद्धत्वादिति** ॥ सामान्यविध्यविषयस्य परब्रह्मसाम्यव्यवच्छेदाय स्वेच्छाविधिविषयत्वस्य 'अपूर्वत्वात्' इत्यनेन अर्थसिद्धत्वादित्यर्थः ।

## भावदीपः

श्रौतभावपदार्थमाह ॥ **भाव इति** ॥ श्रुतौ प्रजापतेरिति ज्ञानिमात्रपरं पूर्ववद्ध्येयम् । अत एव सम्बन्धटीकायां ननु ज्ञानिनामित्युक्तम् ॥ **अर्थसिद्धत्वादिति** ॥ अपूर्वत्वादित्यनेन परवशत्वोक्त्या स्तुतिमात्रत्वे तद्विरुद्धसर्वविध्यतिदूरत्वस्याब्रह्मधर्मवत्त्वापत्त्या विधेरर्थसिद्धत्वादित्यर्थः ।

## अभिनवचन्द्रिका

**ननु ज्ञानिनामिति** ॥ नन्विदमचोद्यं चोद्यते ज्ञानिनां स्वेच्छाचरणविधौ 'स्वेच्छयैव प्रवृत्तिस्तु ब्रह्मणो विधिचोदिता । विधीनां विषयास्त्वन्ये ब्रह्मणः स्वेच्छया कृतौ' इति स्फुटप्रमाण-द्वयस्योदाहृतत्वादिति चेत्, न ब्रूमो वयम् 'विधिर्वा धारणवत्, स्तुतिमात्रमुपादानादिति चेन्ना-पूर्वत्वात्' इति पूर्वसूत्रे स्तुतिमात्रत्वनिषेधेन अर्थात् स्वेच्छाविधित्वसिद्धेः तत्समुच्चयमात्रचशब्द इत्यर्थः । पुनश्च यथाविधानमित्याद्यनुसारेणेति । यद्यपि प्रातरुत्थाय, यस्त्वात्मरतिरित्यादिवाक्यानां पारिप्लवार्थत्वप्रसक्तावपि 'न यथाविधानमित्यादिवाक्यस्य पारिप्लवार्थत्वप्रसक्तिः 'विधिर्भावि प्रजापतेरिति शब्दश्रवणात् तथापि 'प्रातरुत्थाय' इत्यादिवाक्यानां चतुर्मुखेतरपरत्ववत् चतुर्मुख-परत्वमप्यस्तीति मन्यमानस्य यथाविधानमिति वाक्येऽपि पारिप्लवार्थत्वशङ्का भवत्येवेति द्रष्टव्यम् । केन स्यादित्यादिव्यपदेशा इति । यथावस्थितार्थनिर्णायकत्वाभावात् इदमपि वाक्यं न निर्णायक-मिति भावः ।

(वाक्यार्थमुक्तावली)

तत्वप्रदीपे । न ह्ययं विरिञ्चः पूर्वमनादि ब्रह्म भवति । किन्तु तस्य परब्रह्मणो वश इति । केचित्तु चतुर्मुखस्यापूर्वत्वात् पूर्वत्वाभावात् जगत्कारणत्वाभावात् भगवत एव कारणत्वेन तद्वशत्वादिति यावदित्याहुः । अन्ये तु अः ब्रह्म पूर्वं नेतृ यस्य तस्य भावस्तस्मादित्यर्थमाहुः । अपूर्वत्वात् पूर्वं प्रलयेऽसत्वात् भगवज्जन्यत्वाच्चेत्यर्थ इत्येके । विधीनां विषयोऽस्त्वित्यस्य सामान्यविधीनामपीत्यर्थः ।

## तत्त्वसुबोधिनी

अङ्गीकृत्याह ॥ **ज्ञानिनामिति** ॥ तर्हि सिद्धं नः समीहितमित्याशङ्क्याह ॥ **किं त्विति** ॥ यदि ज्ञानिनां स्वेच्छाचरणविधिविषयत्वाभावेन स्तुतिविषयत्वमङ्गीक्रियते तर्हि तेषां विधिमात्र-विषयत्वाभावेन सर्वविध्यतिदूरत्वेन स्तुतिविषयत्वं स्यादित्यत आह ॥ **ज्ञानिनामिति** ॥ तथा च परमात्मसाम्यं स्यादिति भावः । अस्तु तदित्याशङ्क्याह ॥ **न चेति** ॥ **परमात्माधीनत्वादिति** ॥ अनेन सूत्रे अः परमात्मा पूर्वो नियामको येषां ते तथोक्ताः, तेषां भावोऽपूर्वत्वं तस्मादिति सूत्रं परवशत्वादिति भाष्ये व्याख्यातमिति ज्ञेयम् ॥ **विधीनामिति** स्मृतौ अन्य इत्यत्र ज्ञानिभ्योऽन्ये अज्ञानिन इति ग्राह्यम् । स्वेच्छया कृतावित्यत्र विधिरिति शेषः । तथा च सामान्यविधेः अज्ञानिविषयत्वात् ज्ञानिनां तद्भावेन स्वेच्छाविधेश्चाभावे सर्वविध्यतिदूरत्वेन स्तुतिविषयत्वं स्यात् । तच्चायुक्तमिति स्वेच्छाचरणमेव ।

## वाक्यार्थमञ्जरी

केन स्यादिति स्तुतिमात्रं न विधिः कुतः ज्ञानिभिरपि सन्ध्यामुपासीतेत्यादिसामान्यविधे-रुपादानात्स्वीकार इति चेन्न तथात्वे तेषां सर्वविध्यतिदूरत्वेन प्रकारेण स्तुत्यत्वप्रसङ्गात् न चैतद्युक्तं तेपामपूर्वत्वात् अः विष्णुः, पूर्वः प्रेरको येषां ते अपूर्वाः तेषां भावस्तत्त्वं तस्माद्भगवदधीनत्वा-दित्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ भावशब्दाच्च ॐ ॥ २२ ॥**

**'यथाविधानमपरे विधिर्भावे प्रजापतेः ।**
**ब्रह्मणः परमस्यैव सर्वविध्यतिदूरता' इति च तुरश्रुतौ ॥ २२ ॥**

## तत्त्वप्रकाशिका

ननु ज्ञानिनां **स्वेच्छाचरणविधेः** स्फुटप्रमाणसिद्धत्वे भवेदेतद्वाक्यं तदर्थं तदेव कुत इत्याशङ्कां परिहरत्सूत्रमुपन्यस्य तत्सूचितश्रुतिमेवोदाहरति ॥ **भावेति** ॥ भावे इच्छायाम् । अतीतसूत्रे स्वेच्छाचरणविधेरर्थसिद्धत्वाच्चशब्दः ।

## भावबोधः

**अर्थसिद्धत्वादिति** ॥ सामान्यविध्यविषयस्य परब्रह्मसाम्यव्यवच्छेदाय स्वेच्छाविधिविषयत्वस्य 'अपूर्वत्वात्' इत्यनेन अर्थसिद्धत्वादित्यर्थः ।

## भावदीपः

श्रौतभावपदार्थमाह ॥ **भाव इति** ॥ श्रुतौ प्रजापतेरिति ज्ञानिमात्रपरं पूर्ववद्ध्येयम् । अत एव सम्बन्धटीकायां ननु ज्ञानिनामित्युक्तम् ॥ **अर्थसिद्धत्वादिति** ॥ अपूर्वत्वादित्यनेन परवशत्वोक्त्या स्तुतिमात्रत्वे तद्विरुद्धसर्वविध्यतिदूरत्वस्याब्रह्मधर्मवत्त्वापत्त्या विधेरर्थसिद्धत्वादित्यर्थः ।

## अभिनवचन्द्रिका

**ननु ज्ञानिनामिति** ॥ नन्विदमचोद्यं चोद्यते ज्ञानिनां स्वेच्छाचरणविधौ 'स्वेच्छयैव प्रवृत्तिस्तु ब्रह्मणो विधिचोदिता । विधीनां विषयास्त्वन्ये ब्रह्मणः स्वेच्छया कृतौ' इति स्फुटप्रमाण-द्वयस्योदाहृतत्वादिति चेत्, न ब्रूमो वयम् 'विधिर्वा धारणवत्, स्तुतिमात्रमुपादानादिति चेन्ना-पूर्वत्वात्' इति पूर्वसूत्रे स्तुतिमात्रत्वनिषेधेन अर्थात् स्वेच्छाविधित्वसिद्धेः तत्समुच्चयमात्रचशब्द इत्यर्थः । पुनश्च यथाविधानमित्याद्यनुसारेणेति । यद्यपि प्रातरुत्थाय, यस्त्वात्मरतिरित्यादिवाक्यानां पारिप्लवार्थत्वप्रसक्तावपि 'न यथाविधानमित्यादिवाक्यस्य पारिप्लवार्थत्वप्रसक्तिः 'विधिर्भावे प्रजापतेरिति शब्दश्रवणात् तथापि 'प्रातरुत्थाय' इत्यादिवाक्यानां चतुर्मुखेतरपरत्ववत् चतुर्मुख-परत्वमप्यस्तीति मन्यमानस्य यथाविधानमिति वाक्येऽपि पारिप्लवार्थत्वशङ्का भवत्येवेति द्रष्टव्यम्। केन स्यादित्यादिव्यपदेशा इति । यथावस्थितार्थनिर्णायकत्वाभावात् इदमपि वाक्यं न निर्णायक-मिति भावः ।

## वाक्यार्थमुक्तावली

विधिरित्यनुवर्तते । **भावशब्दघटितश्रुतेश्च स्वेच्छाचारे विधिरिति सूत्रार्थः** । विधिर्भावि प्रजापतेरित्यत्र भाव इत्यस्यार्थमाह **॥ भावे इच्छायामिति ॥** इच्छानुसार्याचरणमित्यर्थः । यद्वा सूत्रे भावे शब्दः भावशब्दः । तथा च भावे इच्छायां स्वेच्छाचरणे विधिरस्तीति शब्दाद्यथा-विधानमिति **स्पष्टश्रुतेश्च स्वेच्छाचारे विधिरिति सूत्रार्थः ॥ अर्थसिद्धत्वादिति ॥** परवश-त्वान्यथानुपपत्त्या सिद्धत्वादित्यर्थः । सर्वविध्यतिदूरत्वेन स्तुतिमात्रविषयत्वे ब्रह्माभेदप्रसङ्गेन तद्वशत्वायोगादिति भावः ।

## तत्त्वसुबोधिनी

ननु स्वेच्छाचारविधौ पूर्वमेकस्य हेतोरनुक्तत्वेन चशब्दायोग इत्यत आह ॥ **अतीतसूत्र इति** ॥ **अर्थसिद्धत्वादिति** ॥ सामान्यविध्यविषयस्य ज्ञानिजातस्य परब्रह्मसाम्यव्यवच्छेदाय स्वेच्छा-विधिविषयत्वस्यापूर्वत्वादित्यनेनार्थसिद्धत्वादित्यर्थः ।

## वाक्यार्थमञ्जरी

विधिर्भावि प्रजापतेरिति श्रुतौ इच्छापरपर्यायभावशब्दप्रयोगाच्च केन स्यादिति स्वेच्छाचार-विधिरित्यर्थः ॥ **अर्थसिद्धत्वादिति** ॥ स्वेच्छाचारविधिरित्यर्थः ॥ **अर्थसिद्धत्वादिति** ॥ सामान्यविध्यविषयस्य परब्रह्मसाम्यव्यवच्छेदाय स्वेच्छाविधिविषयत्वस्यापूर्वत्वादित्यनेनार्थसिद्धत्वा-दित्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ पारिप्लवार्था इति चेन्न विशेषितत्वात् ॐ ॥ २३ ॥**

**'केन स्याद्येन स्यात्' (बृ.उ.५-५-१) इत्यादयः स्थिरत्वनिवृत्त्यर्था इति चेन्न । 'त्रेधा हि ज्ञानिनो ह वाव भवन्ति विधिनियता अनियताः स्वेच्छानियता इति विधिनियता मनुष्या अनियता हि देवा ब्रह्मैव स्वेच्छानियत' इति गौपवनश्रुतौ विशेषितत्वात् ॥**

## तत्त्वप्रदीपिका

पारिप्लवेत्यादि सूत्रम् । एवं च स्तुतित्वासम्भवादनुमतौ च फलह्रासस्य समत्वात्, कामत एव विहितचरणस्य विधिवन्धादपि दारुणत्वात्, बादरायणमतेनोपरुद्धत्वाच्च, तस्य पूर्वोक्तिचालितत्वेनाविशेषितत्वेन च सङ्कीर्णधीगोचरत्वात्, स्वेच्छाविधेः सर्वज्ञानिष्ववितततत्वात्, गत्यन्तराप्रतीतेर्ज्ञानिनां निश्चेष्टत्वस्याशक्यत्वेन तन्निवृत्त्यर्थाः 'केन स्यायेन स्यात्' 'कामचाराः' 'काममाचरन्त' इत्यादय इति चेन्न । ज्ञानिनां त्रेधा विशेषितत्वात् 'विधिनियता मनुष्या अनियता हि देवा ब्रह्मैव स्वेच्छानियतः' इति ।

## तत्त्वप्रकाशिका

उक्तमाक्षिप्य समादधत्सूत्रं पठित्वाऽऽक्षेपांशं तावद् व्याचष्टे ॥ **पारिप्लवार्था इति** ॥ प्रथमं जैमिनिमतानुसारेण ज्ञानिभिः समस्तं कार्यमिति प्रातरुत्थायेत्यादिवाक्यान्यनुसृत्योक्तम् । अथ यस्त्वात्मरतिरित्याद्यनुसारेण स्वेच्छाचरणमनुज्ञातम् । पुनश्च यथाविधानमित्याद्यनुसारेण स्वेच्छाचरणविधिरुक्तः । त्रयं च केन स्यादित्याद्यर्थतयोक्तम् । एवं च केन स्यादित्यादिव्यपदेशा न यथावस्तुबोधका भवन्ति । प्रकारत्रयप्रतिपादकवाक्यानां परस्परविरुद्धत्वात् । वस्तुनि विकल्पासंभावादिति भावः । परिहारांशं व्याचष्टे ॥ **नेति** ॥ अनियता अनुष्ठेयानां मध्ये कामचारानुज्ञावन्तः ।

## भावदीपः

भाष्यं व्याकर्तुं परिष्करोति ॥ **प्रथममित्यादिना** ॥ अर्थत्रयस्य प्रामाणिकत्वद्योतनाय वा इत्यादय इति भाष्यस्थबहुवचनोपपत्तये वाक्यान्तरसूचनाय वा इत्यादिविधिवाक्यान्यनुसृत्येत्याद्युक्तम् । आदिपदोक्त्या भाष्योक्तमुपलक्षणम् । अन्यान्यप्येवंजातीयकानि ग्राह्याणीति सूचितम् ॥ **अनुज्ञातमिति** ॥ ज्ञानिभिरित्यस्य ज्ञानिनामिति विपरिणामेनानुषङ्गः ॥ **विधिरिति** ॥ ज्ञानिनामित्यनुषङ्गः । इत्याद्यनुसारेणेत्यादिपदेन स्वेच्छयैव प्रवृत्तिस्त्विति विधीनां विषयास्त्वन्य इत्यादिवाक्यग्रहः । तत्र ब्रह्मादिपदस्य ज्ञानिमात्रोपलक्षणत्वात् । यथाविधानामित्यस्योक्तिस्तु विधिर्वेत्याद्यारभ्य तदन्तमेकार्थपरमिति द्योतनाय वा साक्षाद्विधिपदश्रवणाद्वा श्रुतित्वाद्वेति ज्ञेयम् । भाष्यं व्याचष्टे ॥ **एवं चेति** ॥ अर्थत्रयपरत्वे सतीत्यर्थः । इत्यादीत्यादिपदेन प्रातारुत्थायेत्याद्युक्तत्रिविधवाक्यानां ग्रहः । पुल्लिङ्गनिर्वाहाय व्यपदेशा इत्युक्तम् । स्थिरत्वनिवृत्त्यर्था इत्यस्यास्थिरार्थ

(भावदीपः)

इत्यक्षरार्थमुपेत्य भावार्थमाह ॥ **न यथावस्त्विति** ॥ **वाक्यानामिति** ॥ सुतरामेकस्यैव केन स्यादित्यस्येति भावः ॥ **वस्तुनीति** ॥ अनुष्ठानादिक्रियायां विकल्पसम्भवेऽपि साधुकर्माख्यवस्तुनि विधितः कार्यत्वेच्छाकार्यत्वादिरूपविकल्पायोगादित्यर्थः । यद्वा वस्तुनि ज्ञानाख्यवस्तुनि विधिनियतत्वादिरूपविकल्पेत्यर्थः । अथवा वस्तुनि केन स्यादिति वाक्ये विधिपरत्वेच्छाचार-परत्वादिरूपविकल्पेत्यर्थः ।

## अभिनवचन्द्रिका

ननु 'प्रातरुत्थाय' इत्यादिवाक्यानां व्रीहियवशास्त्रवत् अविरुद्धार्थत्वं न स्यादित्यत आह– **वस्तुनि चेति** ॥ क्रियासु विकल्पसम्भवात् व्रीहियवशास्त्रयोरविरुद्धार्थत्वसम्भवेऽपि वस्तुनि क्रियाभिन्ने विकल्पासम्भवात् 'प्रातरुत्थाय' इत्यादिवाक्यानां विरुद्धार्थत्वमवर्जनीयमेवेति भावः । अत्र गुणसूत्रम् **'तथा चैकवाक्योपबन्धात्'** इति । **अस्यार्थः** । एवं ज्ञानिनां त्रैविध्ये सिद्धे एकैकस्य वाक्यस्य स्वस्वविषयेणोपबन्धात् प्रतिपाद्यप्रतिपादकभावलक्षणसम्बन्धात् 'प्रातरुत्थाय इत्यादि-वाक्यानां न पारिप्लवार्थत्वमिति । एतेन भिन्नविषयाणामेवैषां वाक्यानामेकवाक्यत्वाभिधान-मयुक्तमिति परास्तम् ।

## वाक्यार्थमुक्तावली

**समस्तकार्यमिति** ॥ विहितं समस्तमित्यर्थः ॥ **स्वेच्छाचरणमिति** ॥ विहितानामेव केषाञ्चिच्चरणं केषाञ्चिदचरणमित्यर्थः ॥ **स्वेच्छाचरणविधिरिति** ॥ सदसत्प्रवृत्तिविषये स्वेच्छा-चरणविधिरित्यर्थः ॥ **त्रयमिति** ॥ यद्यपि स्तुतय इत्यर्थान्तरस्योक्तत्वात् चतुष्टयमिति वक्तव्यम् । तथाप्यत्रोक्तार्थित्वस्य प्रत्येकं त्रिविधाधिकारिनिष्ठतया विरोधस्यापाक्रियमाणत्वात् । स्तुत्यर्थत्वस्य सर्वाधिकारिसाधारणत्वात् विरुद्धार्थविवक्षया त्रयमित्युक्तम् । अतो मनुष्यादिषु सर्वज्ञादिषु स्तुतये भवतीति तत्वप्रदीपवचनात् । परितः प्लवति नानाविषयेषु चलतीति परिप्लवा अस्थिरा बुद्धिः । तस्या भावः पारिप्लवः बुद्धेरस्थैर्यम् । बुद्धिस्थैर्यनिवृत्तिरिति यावत् । तथा च केन स्यादित्यादि-श्रुतयः पारिप्लवार्थाः । बुद्धेरेकत्र विषये इदमित्थमेवेति स्थिरत्वनिवृत्तिप्रयोजनकाविरुद्धत्वेन संशयहेतवो यथावस्तुबोधका इति चेदिति सूत्रभाष्ययोरर्थमभिप्रेत्याह ॥ **एवं सतीति** ॥ **विशेषितत्वादिति** ॥ ज्ञानिनां मनुष्यदेवचतुर्मुखभेदेन विशेषितत्वादित्यर्थः ।

## वाक्यार्थविवरणम्

भाष्ये 'विधीनां विषयास्त्वन्ये' इत्यनेन ब्रह्मणः सन्ध्यामुपासीत इत्यादिसामान्यविधिविषयत्वमतिः नैवेति भावः ॥ **समस्तमिति** ॥ प्रातरुत्थायेति श्रुत्युक्तसमस्तसदाचारचरणमित्यर्थः ॥ **स्वेच्छाचरणमिति** ॥ श्रुत्युक्तसदाचाराणां मध्य एव स्वेच्छाचरणमित्यर्थः । पारिप्लवार्था इत्यस्य स्थिरत्वनिवृत्त्यर्था इति भाष्येऽर्थ उक्तः । तस्याप्यर्थमाह ॥ **यथावस्तुबोधका न भवन्ति** ॥ यथावद्वस्तुबोधका न भवन्तीत्यर्थः । विकल्पः विरुद्धधर्मवत्त्वम् । समस्तस्य कर्तव्यत्वस्वेच्छाचरणानुज्ञानस्वेच्छाचारविधीनां विरुद्धानां एकस्मिन् पुरुषेऽसम्भवादित्यर्थः ।

## वाक्यार्थमञ्जरी

उक्तरीत्यार्थत्रयवत्वे केन स्यादित्यादिश्रुतयः पारिप्लवार्थाः अव्यवस्थितार्थाः स्युरिति चेन्न विशेपितत्वात् ज्ञानिनामनेकप्रकारादित्यर्थः ॥ **वस्तुनीति** ॥ केन स्यादिति वाक्यार्थे नानारूपत्वासम्भवादित्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ तथा चैकवाक्योपबन्धात् ॥ २४ ॥**

**एवं सति विधिवाक्यानां स्वेच्छावृत्तिवाक्यानां च सम्वन्धो भवति ।**

## तत्त्वप्रदीपिका

तथाचैकवाक्योपवन्धात् ॥ **एवं त्रिधा विशेषितत्वे 'ज्ञानी च कर्माणि सदोदितानि' इत्यादि विधिवाक्यानां स्वेच्छावृत्तिवाक्यानां च ज्ञानिविषयाणामभिप्रायाविरोधेनैकवाक्यतया सम्वन्धो भवति । न मिथो विरोधाशङ्का । स चाभिप्रायः समुचित एव भक्त्यादितारतम्यानुसारित्वात् । कामाचरणश्रुतिपु च जैमिनिमतं मनुष्यविषयम् । 'जैमिन्युक्तं मानुपाणाम्' इत्युक्तिरिहापि सङ्गच्छते । विधिवन्धवर्जितत्वं विधिनियतत्वं विरुद्धमेकत्रेति चेन्न । उक्तं हि विधिबन्धवर्जितत्वमकरणे प्रत्यवायाभावादिति । विधिनियतत्वमकरणे फलह्रासात् । तथा च वक्ष्यति–**

'पश्यन्नपीममात्मानं कुर्यात्कर्माविचारयन् ।
यदात्मनस्सुनियतमानन्दोत्कर्षमाप्नुयात्' इति ॥

(तत्त्वप्रदीपिका)

'शुभकर्मभिराधिक्यं विपरीतैर्विपर्ययः' इति च । अतः कामाचरणश्रुतिश्च मनुष्येषु सुखाधिक्यार्थविधिगर्भेति सिध्यति । विधिमन्तरेणापि देवानां शुभेषु बुद्धिर्गच्छति, अतोऽनियता देवा इत्युक्तम् । शुभेष्वेव ब्रह्मण इति स स्वेच्छानियत इत्युक्तम् । कामाचरणश्रुतेरपि तत्र तत्र यथाधिकारं वर्तमानया देवेषु कामचरणानुमतिरूपतामभिदधदेव परमगुरुः परमेष्ठिनि विधिरूपतां पर्यवसाययन्ननन्तरमेव प्रणिजगाद 'विधिर्वा' इति । अतश्च भगवन्मतं देवविषयम् । एव मतयोरपि सम्बन्धोऽविरोधेन । न चानन्तकालीनं फलाधिक्यं विजानतां ज्ञानिनां कामत एव धर्मचरणं दुश्शकं विधिबन्धादपीति मन्तव्यम् ।

'निषिद्धं मनसा कल्प्य भीतो विहितमाचरेत् ।
अज्ञो ज्ञस्य तु सङ्कल्पस्वभावाद्विहितानुगः ॥
शरीरधर्मिणः क्वापि निषिद्धेऽपि मनो व्रजेत् ।
तथाऽपि तस्य नानर्थो मोक्षे नैवान्यथा व्रजेद्' इति धर्मतत्वे ॥

'केन स्यायेन स्यात्' इत्यादिश्रुतेश्चैवमविरोधेन सर्वज्ञानिषु सम्बन्धो गमयितव्यः । 'स ब्राह्मण' इति ज्ञानिषु सामान्यतः प्रवृत्तं हीदं वेदवाक्यं न च विषयसङ्कोचमर्हति । अपवादाभावात् । अतो मनुष्यादिषु सर्वज्ञानिषु स्तुतये भवति । विशेषादुत्तरोत्तरं, चतुर्मुखे च मुख्यस्तुतेरसम्भवोऽभ्यधायि । स्तुतेरमुख्यत्वात् स्तुतय इत्याह– आपाद्येऽस्ति हि तथा व्यवहारः, यथा 'हिरण्यं कुण्डलाय' इति । अनुमतिरूपत्वं च विशेषादुत्तरोत्तरं विधित्वस्य सन्निकृष्टं भवति । ब्रह्मणो विधिरेव ।

'स्वेच्छानुवृत्त्यैव भवेत् ब्रह्मणः प्रायशस्तथा ।
देवानामपि सर्वेषां विशेषादुत्तरोत्तरम्' इति

ह्याह– 'कामचार' इति कथं विधिः स्यादिति चेत् कामितमेवाऽचरन्तीति श्रुत्यन्तरविहितानुवादे किं दूषणम् । 'यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातनम्' इतिवदिति सकलमनाकुलम् ।

## तत्त्वप्रकाशिका

ज्ञानिनामनेकप्रकारत्वेऽपि किमासीदित्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे ॥ तथा चेति ॥ एवं ज्ञानिनां त्रैविध्ये सिद्धे प्रातरुत्थायेत्यादिवाक्यानां यस्त्वात्मरतिरिति स्वेच्छाचरणानुज्ञावाक्यानां यथाविधानमिति स्वेच्छाचरणविधिवाक्यानामविरोधो भवति भिन्नविषयत्वसम्भवात् । तथा च केन

(तत्त्वप्रकाशिका)

स्यादितिवाक्यस्यापि तदनुसारेणास्थिरत्वाभाव इति भावः । अनेन जैमिनिमतं मानुषविषयं द्वितीयं देवताविषयं तृतीयं हिरण्यगर्भविषयमित्युक्तं भवति । न च देवतानां स्वेच्छाचरणे विध्यभाव-प्राप्तेरुक्तमयुक्तम् । प्रायस्तेषां स्वेच्छाचरणविधिसद्भावात् । स्वेच्छाचरणेऽनुज्ञानमात्रत्वाच्चेति ।

## गुर्वर्थदीपिका

स्वेच्छाचरणविधिसद्भावादित्यत्र सत्कर्मस्वेवेति प्रागुपस्कर्तव्यम् । स्वेच्छाचरणे अनुज्ञानमात्र-त्वादित्यत्र स्वेच्छाचरणमसत्कर्माचरणम् । 'सर्वापेक्षा च यमादिश्रुतेरश्ववत्' 'शमदमाद्युपेतः स्यात्तथापि तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात्' इति सूत्रद्वयस्येदं तात्पर्यम् । ज्ञानात्प्राकृत-मग्निहोत्रादिकर्म । 'विविदिषन्ति यज्ञेन दानेन' इत्यादि श्रुतेर्ज्ञानं प्रत्येव कारणं ज्ञानादुत्तरकालीनं शमदमयज्ञादिकं न ज्ञानसाध्यमोक्षं प्रति कारणम् । 'नान्यः पन्था अयनाय' इति श्रुतेः । किन्तु ज्ञानस्थिरीकरणाय वा मोक्षोत्तरकालीनानन्दवृद्ध्यादेर्वा कारणमिति ज्ञेयम् ।

## भावबोधः

**प्रायस्तेषामिति** ॥ 'स्वेच्छानुवृत्त्यैव भवेत्' 'ब्रह्मणः प्रायशस्तथा' । 'देवानामपि सर्वेषां' इति वक्ष्यमाणत्वादिति भावः । अनेन 'ब्रह्मैव स्वेच्छानियत' इति श्रुतौ 'सर्वात्मना' इत्युप-स्कर्तव्यमित्युक्तं भवति ॥ **अनुज्ञानमात्रत्वाच्चेति** ॥ तथा च विधिविषयत्वाभावेऽपि स्तुतिमात्र-विषयत्वाभावेन परब्रह्मसाम्याभावात्, अपूर्वत्वात्' इत्युक्तं युक्तमित्यर्थः ।

## भावदीपः

भाष्यं व्याचष्टे ॥ **एवं ज्ञानिनामिति** ॥ **अनेनेति** ॥ विशेषितत्वशब्दितत्रैविध्योक्तिपूर्वमेक-वाक्यत्वकथनेनेत्यर्थः ॥ **उक्तमिति** ॥ **परब्रह्मण** एव सर्वविध्यतिदूरतेत्युक्तमयुक्तमित्यर्थः । यद्वा विध्यभावे ह्यनन्तकालीनफलाधिक्यं जानतां कामत एव धर्माचरणं दुःशकमिति कृत्वा पूर्वोक्तं स्वेच्छाचरणमयुक्तमित्यर्थः । विध्यभावेऽपि अनुमतिविषयत्वान्न सर्वविध्यतिदूरत्वापत्त्या ब्रह्मासाम्यमित्याह ॥ **स्वेच्छेति** ॥

## अभिनवचन्द्रिका

**अनेन जैमिनिमतमिति ॥** उपलक्षणमेतत् 'स्तुतयेऽनुमतिर्वा' इत्यत्र स्तुतय इति सूत्रखण्डोक्तं स्तावकत्वमपि मानुषविषयमित्यपि द्रष्टव्यम् ॥ **न च देवतानामिति ॥** उपलक्षणमेतत् । मनुष्याणामित्यपि ग्राह्यम् । 'विधिर्वा धारणवत्' इति सूत्रोक्ततृतीयमतस्य चतुर्मुखविषयत्वे देवानां, मनुष्याणां च, स्वेच्छाचरणे विध्यभावप्राप्तेः । भाष्ये स्वमतानुसारिणी प्रवृत्तिः ब्रह्मणो विहिता इति वक्तव्यत्वात् ज्ञानिनामिति सामान्यवचनमयुक्तमिति न वाच्यमित्यर्थः ॥ **प्रायस्तेषामिति ॥** सत्यमिह भाष्यकृता 'ब्रह्मणो विहिता' इति वक्तव्यम्, तथापि देवानां ब्रह्मवन्नियमेन स्वेच्छाचरणविध्यभावेऽपि 'स्वेच्छानुवृत्त्यैव भवेत् इति वक्ष्यमाणप्रमाणबलेन प्रायः स्वेच्छाचरणविधिसद्भावात् मनुष्याणां स्वेच्छाचरणानुज्ञामात्रसद्भावात् तदुभयसूचनाय, भाष्ये 'ज्ञानिनाम्' इति सामान्येनोक्तमिति भावः । आद्यं चोद्यं परिहृतमिति । 'कामचारेण चैक' इत्यादि सूत्रत्रयेणेत्यर्थः ।

## वाक्यार्थमुक्तावली

एकवाक्येति भावप्रधानो निर्देशः । तथा च तथा सति एवं सति ज्ञानिनां त्रैविध्ये सिद्धे प्रातरुत्थायेत्यादिसर्वसदाचारविधिवाक्यानां यथाविधानमिति स्वेच्छाचारविधिवाक्यानां भाष्ये चशब्दात् यस्त्वात्मरतिरित्याद्यनुज्ञावाक्यानां चैकवाक्यतया विरोधेनोपबन्धात् सङ्गतत्वात् । तथा च केन स्यादिति वाक्यस्यापि तदनुसारेणार्थत्रयेऽप्येकवाक्यतया विरोधेनोपनिबन्धत्वात् केन स्यादित्यादिश्रुतयः पारिप्लवार्था इत्यावृत्त्या सूत्रार्थमभिप्रेत्य व्याचष्टे ॥ **एवं ज्ञानिनामिति ॥** ननु देवानां तावत् सामान्यविधिस्वीकारो नास्ति । सामान्यविधेर्मानुषविषयत्वात् । नापि स्वेच्छाचारविधिविषयत्वम् । तस्याश्चतुर्मुखविषयत्वात् । तथा चास्य देवताविषये स्तुतिपरत्वपक्षे सर्वविध्यतिक्रमेण स्तुतिविषयत्वं परब्रह्मवद्देवानामपि स्यात् । ततश्च परमात्मन एव तदिति यदुक्तं तद्युक्तं स्यादित्याशङ्क्य निराकरोति ॥ **न चेति ॥ प्रायस्तेषामिति ॥** प्राय इति चतुर्मुखसाम्यनिरासः । तस्य सर्वात्मना स्वेच्छाचारविधिविषयत्वात् । न चात्र मानाभावः । प्रायःशब्दः तथा देवानामपि सर्वेषामिति वक्ष्यमाणत्वात् । प्रायस्सतां न मनः पापमार्गे गच्छेदिति ह्यात्ममनश्च सक्तम् । धर्माचला मम मतिर्हि तदेव मानमित्याद्युदाहरणाच्चेति भावः । तथा च देवानां सर्वविध्यतिक्रमाभावादुक्तं युक्तमिति भावः । अनुमतिर्वा । अनुष्ठेयमिति सूत्रानुसारेणाह ॥ **स्वेच्छाचरण इति ॥** तथा चानुज्ञाविषयत्वेन स्तुतिमात्रविषयत्वाभावाच्चेश्वरसाम्यमिति भावः ।

## तत्त्वसुबोधिनी

वाक्यानां परस्परविरुद्धत्वेऽपि अस्तु यथावस्तुबोधकत्वमित्यत आह ॥ **अनेनेति** ॥ ज्ञानिनामनेकप्रकारत्वकथनेनेत्यर्थः । ननु स्वेच्छाचरणविधेः हिरण्यगर्भमात्रविषयत्वे देवानां चरणविध्यभावेन यत्पूर्वमुक्त अपूर्वत्वादित्यनेन ज्ञानिनां सामान्यविधिविषयत्वाभावे स्तुतिमात्र-विषयत्वाभावेन ब्रह्मसाम्याभावादपूर्वत्वादित्युक्तमित्यर्थः ।

## वाक्यार्थविवरणम्

**किमासीदिति** ॥ केन स्यादिति व्यपदेशानां पारिप्लवार्थत्वं कथं परिहृतमित्यर्थः ॥ अस्थिरत्वाभावः इत्यर्थः । यथावस्तुबोधकत्वाभावो नेत्यर्थः ॥ **विध्यभावप्राप्तेरिति** ॥ त्रयाणा-मप्यधिकारिणां विधिवद्धत्वं वक्तव्यम् । मानुषब्रह्मणोरुभयोर्विधिबद्धत्वप्राप्तावपि देवानां तदभाव-प्राप्त्या विधिबन्धवर्जितत्वरूपपरब्रह्मसाम्यप्राप्तेरपूर्वत्वादित्युक्तं परवशत्वमयुक्तमित्यर्थः ॥ **प्राय-स्तेपामिति** ॥ अत एवेन्द्रस्याहल्यागमनं अर्जुनस्य विधवायाः उलूप्याः गमनं दृष्टमिति भावः । विधिविषयत्वाभावमभ्युपेत्याप्याह ॥ **अनुज्ञानमात्रत्वाच्चेति** ॥ विधिविषयत्वाभावेऽपि स्तुतिमात्र-विषयत्वं परब्रह्मणोऽस्ति । तद्वद्देवानां नास्ति । विधिविषयत्वाभावेऽपि कामचारानुज्ञामात्रसद्भावेन परब्रह्मवत् स्तुतिमात्रविषयत्वाभावेनापूर्वत्वादित्युक्तं परवशत्वमुपपन्नमिति भावः ।

## वाक्यार्थमञ्जरी

तथा च ज्ञानिनां त्रैविध्ये सति विधिवाक्यानां स्वेच्छावृत्तिवाक्यानां चैकवाक्यतयाऽ-विरुद्धार्थप्रतिपादकतयोपबन्धात्केन स्यादित्यस्याप्यविरुद्धार्थत्रयवत्त्वमित्यर्थः ॥ **उक्तमिति** ॥ अपूर्वत्वादित्यनेन भगवदधीनत्वेन सर्वविध्यतिदूरत्वाभावकथनमित्यर्थः ॥ **प्रायस्तेषामिति** ॥ तथा च न तेषां विध्यभावप्राप्तिरिति भावः ॥ **अनुज्ञामात्रत्वाच्चेति** ॥ तथा च विधिविषयत्वाभावेऽपि स्तुतिमात्रविषयत्वाभावेन परब्रह्मसाम्याभावादपूर्वत्वादित्युक्तं युक्तमिति भावः ॥ **श्रुतिबलेनेति** ॥ केन स्यादिति श्रुतिबलेन यः सदसत्प्रवृत्त्योरविशेषः शङ्कितः स परिहृत इत्यर्थः । परिहृतं कामकारेत्यादिसूत्रत्रयेण ।

## सूत्रभाष्यम्

**॥ ॐ अत एव चाग्नीन्धनाद्यनपेक्षा ॐ ॥ २५ ॥**

अत एव ज्ञानस्य मोक्षदाने नाग्निहोत्राद्यपेक्षा ।

ब्रह्मतर्के च —

'येषां ज्ञानं समुत्पन्नं तेषां मोक्षो विनिश्चितः ।
शुभकर्मभिराधिक्यं विपरीतैर्विपर्ययः ॥
स्वेच्छानुवृत्त्यैव भवेद्ब्रह्मणः प्रायशस्तथा ।
देवानामपि सर्वेषां विशेषादुत्तरोत्तरम्' इति ॥

## तत्त्वप्रदीपिका

सर्वज्ञानिनां सुकृतौ विकृतावकृतौ च मोक्षो नियत इति यतः अत एव ज्ञानस्य मोक्षदानेऽग्नीन्धनाद्याश्रमधर्मेषु वर्णधर्मेषु चानपेक्षा ।

## तत्त्वप्रकाशिका

एवं ज्ञानिनां श्रुतिबलेन सदसत्प्रवृत्त्योरविशेषः परिहृतः । तत्र यदुक्तं ज्ञानिनां सदसत्प्रवृत्त्योर्विशेषे ज्ञानस्यासत्प्रवृत्तिकुण्ठितशक्तेर्न मोक्षसाधनत्वं स्यात् । मोक्षसाधने च सत्प्रवृत्तिसापेक्षत्वं स्यादिति । तत्राद्यं चोद्यं परिहृतम् । द्वितीयपरिहाराय सूत्रं पठित्वा व्याचष्टे । अत एवेति । ज्ञानिनः सदसत्प्रवृत्तिभ्यां विशेषसद्भावेऽपि नाग्निहोत्रादिसत्प्रवृत्तिसापेक्षत्वं ज्ञानस्य मोक्षसाधने । कुतः । कामचाराणामपि मोक्षस्य पठितत्वादेवेति भावः । ननु यदि सत्प्रवृत्त्या न मोक्षो नासत्प्रवृत्त्या तत्प्रतिबन्धः कथं तर्हि ताभ्यां ज्ञानिनो विशेष इत्यत आह ॥ **ब्रह्मतर्के चेति** ॥

## भावबोधः

**श्रुतिबलेनेति** । 'केन स्यात्' इति श्रुतिबलेन यः सदसत्प्रवृत्त्योरविशेषः शङ्कितः स परिहृत इत्यर्थः । आद्यं चोद्यं परिहृतमिति । 'कामचारेण चैके' इत्यादिसूत्रेणेत्यर्थः । **कामचाराणामपीति** ॥ अनेन सूत्रभाष्ययोरतःशब्देन 'कामचारेण चैके' इत्यत्रोक्ता 'कामचारा' इति श्रुतिः परामृश्यत इत्युक्तं भवति । भाष्ये ब्रह्मतर्के चेत्युक्तमुपलक्षणम् ।

(भावबोधः)

'एतावताधिको नास्ति प्राप्तिरत्यन्ततः स्थिता ।
या स्थितिस्तां समाप्नोति यथाशक्ति प्रयत्नतः ॥
विपरीतप्रवृत्तेस्तु तस्य ह्रासोऽधिकं भवेत् ॥'

इति न्यायविवरणोदाहृतमपि वचनं ग्राह्यम् ।

## भावदीपः

**श्रुतिबलेनेति ॥** केन स्यादिति श्रुतिबलेन प्राप्तो यो अविशेषः स स्तुतय इत्यनेन स्तुत्यर्थतोक्त्या परामर्शमिति अनुष्ठेयमिति योगाभ्यां सदाचारमात्रविषयतोक्त्या सदसदाचारपरत्वेऽपि चतुर्मुखमात्रविषयतोक्त्या च स्यादिति लिङो विधिनिमन्त्रणाद्यर्थत्वेन ज्ञानिमात्रस्य सदसत्प्रवृत्त्योरविशेषानर्पकतया परिहृत इत्यर्थः ॥ **परिहृतमिति ॥** कामकारेण चैक इत्यादावित्यर्थः । अप्रसक्तनिषेधकतानिरासाय युज्यते चेति पूर्वभाष्ये प्रसक्तमापादकमनुवदन् व्युत्क्रमेण भाष्यं व्याचष्टे ॥ **ज्ञानिन इति ॥ सद्भावेऽपीति ॥** एतेन सौत्रश्चशब्दोऽप्यर्थ इति सूचितमित्याहुः । मोक्षसाधने मोक्षसम्पादन इत्यर्थः ।

## वाक्यार्थमुक्तावली

**द्वितीयपरिहारायेति ॥** तर्कस्याप्रयोजकत्वकथनेन द्वितीयपरिहारायेति भावः । चोऽप्यर्थे । तेन ज्ञानिनः सदसत्प्रवृत्तिभ्यां विशेषसद्भावेऽपीति लभ्यते । ज्ञानस्य मोक्षसाधनत्वमिति शेषः । अग्नेरिन्धनं सन्दीपनं यस्मिन् कर्मणि तदग्नीन्धनमग्निहोत्रम् । अत एव चेति कामचारेण चेत्युक्तस्य परामर्श इति भावेन सूत्रार्थं स्पष्टयति ॥ **ज्ञानिन इति ॥ कामचाराणामिति ॥** विहितकरणे तदकरणे निषिद्धकरणे च मोक्षस्य पठितत्वादेवेत्यर्थः । उक्तं च तत्वप्रदीपे । सुकृतौ विकृतावविकृतौ च मोक्षो नियतोऽत एव ज्ञानस्य मोक्षदानेऽग्नीन्धनाद्याश्रमधर्मेषु वर्णधर्मेषु चानपेक्षतेति ॥ इत्यत आहेति ॥ इत्यतश्चशब्दसूचितस्मृतिमुदाहरतीत्यर्थः । अत्र येषां ज्ञानं समुत्पन्नं तेषां शुभाशुभकर्मकरणेऽपि मोक्षो विनिश्चित इत्युक्तस्तुतित्वं सर्वाधिकारिसाधारणम् । ततश्च मनुष्याणां मोक्षार्थमग्निहोत्रादीनां तत्प्रतिबन्धाय कलञ्जभक्षणादीनामनपेक्षितत्वेऽपि जैमिन्युक्तरीत्या तेषां सर्वसत्कर्मणां निषिद्धत्यागानां सामान्यतो विहितत्वेन तत्करणाकरणाभ्यां स्वरूप एव वृद्धिह्रासौ

(वाक्यार्थमुक्तावली)

भवतः । ब्रह्मणस्तु स्वेच्छानुवृत्त्यैवाधिक्यं भवेत् । न तदर्थं श्रुतिविहिताग्नीन्धनाद्यपेक्षा । लोके निषिद्धपुत्रिकाकामत्यागापेक्षा च स्वेच्छानियमस्य विहितत्वादेव । देवानामपि सर्वेषामुत्तरोत्तर-माधिक्येन प्रायशः स्वेच्छानुवृत्त्यैव मुक्तौ क्लृप्तसुखाधिक्यं भवेत् । न तदर्थं प्रायः श्रुतिविहिताग्नि-होत्राद्यकरणनिषिद्धत्यागापेक्षया । प्रायशः स्वेच्छानियतत्वात् । तेषामनुष्ठेयानां मध्ये कामचारानुज्ञावत्वेनानियतत्वादिति ब्रह्मतर्कवचनं सूत्रं च सर्वविषयमिति प्राश्वः ।

## तत्त्वसुबोधिनी

**श्रुतिवलेनेति** ॥ केन स्यादिति श्रुतिबलेन यः सदसत्प्रवृत्योरविशेषः शङ्कितः सः परिहृत इत्यर्थः । आद्यं चोद्यं परिहृतमिति । कामकारेण चैके इत्यादिषु इत्युक्तं भवति । ननु सत्प्रवृत्तेः मोक्षसाधनत्वे कामचाराणां मोक्षो न स्यात् तेषां सत्प्रवृत्तिविशेषाभावात् । तथा च तेषां मोक्षप्रतिपादकश्रुतिबाध इत्यत आह ॥ **कामचाराणामिति** ॥ कामचारत्वेन तैः सत्प्रवृत्तेरपि करणादिति भावः । असत्प्रवृत्तेः मोक्षप्रतिबन्धकाभावमात्रस्यैव कामचारश्रुत्यर्थत्वात्सत्प्रवृत्तेः मोक्षहेतुत्वानिरासान्न तद्विरोध इति भावः ।

## वाक्यार्थविवरणम्

**श्रुतिवलेन** ॥ केन स्यादिति श्रुतिबलेन । सदसत्प्रवृत्त्योः सकाशात् ॥ **अविशेष इति** ॥ येन स्यात्तेनेदृश एवेत्युक्तत्वाद्विशेषो नास्तीत्येवं योऽविशेषः शङ्कितः स परिहृत इत्यर्थः ॥ **मोक्षसाधनत्वे** ॥ अङ्गीक्रियमाणे सत्प्रवृत्तिसापेक्षत्वमिति । तथा च मोक्षस्य ज्ञानकर्मसमुच्चय-साध्यत्वं स्यादिति भावः ॥ **मोक्षस्य** ॥ लिङ्गभङ्गस्य । भाष्ये मोक्षो विनिश्चित इत्यत्र ॥ **मोक्षः** ॥ लिङ्गभङ्गः । शुभकर्मभिराधिक्यमित्यनेनानन्दाभिवृद्धिरूपे मोक्षे समुच्चयसाध्यत्वमङ्गीकृतमिति भावः । शुभकर्मभिराधिक्यमित्युक्तमसदित्याशयेन शङ्कते ॥ **ननु यदीति** ॥ ज्ञानिनः सत्प्रवृत्त्या मोक्षप्राप्तिरेव विशेषोऽस्तु । किमाधिक्यरूपविशेषाङ्गीकारेणेत्यर्थः ।

## वाक्यार्थमञ्जरी

ज्ञानस्य मोक्षजनने अग्नेरिन्धनं दीपनं यस्मिन्नग्नीन्धनमग्निहोत्रं तदाद्याश्रमकर्मापेक्षा नास्ति कुतः अत एव कामचारा इति श्रुतौ कामचारेऽपि मोक्षस्य नैय्यत्यस्योक्तत्वादेवेत्यर्थः ॥

(वाक्यार्थमञ्जरी)

कामचाराणामिति ॥ सत्कुर्वतामसत्कुर्वतां चेत्यर्थः ॥ असत्प्रवृत्तेरिति ॥ तथा चासच्चरणमेव कामचरणं न तु सदकरणमपीति भावः ।

## सूत्रभाष्यम्

**॥ ॐ सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॐ ॥ २६ ॥**

सर्वधर्मापेक्षा च ज्ञानस्योत्पत्तौ । 'विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' (बृ. उ.६-४-२२) इति श्रुतेः । यथा गतिनिष्पत्त्यर्थमश्वादयोऽपेक्ष्यन्ते न विनिष्पन्नगतेर्ग्रामादिप्राप्तौ ।

## तत्त्वप्रदीपिका

सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ वर्णधर्मेष्वध्ययनेज्यादानादिष्वाश्रमधर्मेष्वग्नीन्धनगुरुवासाग्निहोत्रपञ्चयज्ञतपोपास्त्यादिषु सामान्यधर्मेषु भक्त्यादिषु नैमित्तिकेषु श्रद्धादिषु चापेक्षा ज्ञानस्योत्पत्तौ, 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन' इत्यादिश्रुतेः । यथा निष्पन्नप्रयाणो ग्रामं प्राप्नोति किमपि साधनमनपेक्ष्य, न हि तत्र साधनापेक्षावकाशः, अनिष्पन्नप्रयाणस्त्वश्वादिकमपेक्षते तन्निष्पत्तये, एवं ज्ञानोत्पत्तये साधनमपेक्ष्यते । उत्पन्नज्ञानस्य तु मुक्तिप्राप्तये न साधनापेक्षा ।

## तत्त्वप्रकाशिका

अस्तु ज्ञानिनः सत्प्रवृत्त्या विशेषान्मोक्षप्राप्तिः किमाधिक्येन । कामचाराणां मोक्षश्रुतिस्तु न बाधिका । असत्प्रवृत्तेरप्रतिबन्धकत्वेऽपि सत्प्रवृत्तेर्मोक्षहेतुत्वोपपत्तेरित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ **सर्वेति** ॥ न ज्ञानस्य मोक्षसाधने सत्प्रवृत्त्यपेक्षा । सर्वसत्प्रवृत्तीनां ज्ञानोत्पत्त्यर्थमपेक्षितत्वात् । विविदिषन्तीति श्रुतेरिति भावः । अनाशकेनानशनेन । ननु सत्कर्मणो ज्ञानार्थस्यापि मोक्षार्थमपेक्षितत्वं किं न स्यादित्यत आह ॥ **यथेति** ॥ यथा गतिसाधनाश्वादयो निष्पन्नायां गतौ गतिसाध्यफले नापेक्ष्यन्त तथा कर्माणि ज्ञानसाधनानि ज्ञाने निष्पन्ने न तत्फलार्थमपेक्षितानीति भावः ।

## भावदीपः

अत एवेत्युक्तहेतोरन्यथासिद्धिनिरासकतयोत्तरसूत्रमवतारयति ॥ **अस्त्विति** ॥ ज्ञानस्येत्यादि-

(भावदीपः)

पूर्वभाष्यमनुवर्त्य तत्र हेतुत्वेन सर्वेत्यादिभाष्यं व्याचष्टे ॥ **न ज्ञानस्येति** ॥ अत्रोक्तहेतोरप्य-प्रयोजकत्वनिरासकतया यथेत्यादिभाष्यं व्याचष्टे ॥ **नन्विति** ॥

## अभिनवचन्द्रिका

**अस्त्विति** ॥ ज्ञानिनः सत्प्रवृत्त्या विशेषोऽस्तु, किं नाम सत्प्रवृत्तिसाध्यो विशेषो मोक्ष एवास्तु न तु मोक्षगतोऽतिशय इति भावः । ननु कामचाराणामपि मोक्षश्रुतेः, न सत्प्रवृत्ति-र्मोक्षसाधनं, अपि तु विशेषस्यैव साधनमित्याशङ्क्य निषेधति **कामचाराणामिति** ॥ **असत्प्रवृत्ते-रिति** ॥ कामचारश्रुतिबलादसत्प्रवृत्तेरप्रतिबन्धकत्वलाभेऽपि सत्प्रवृत्तेर्न मोक्षसाधनत्वं विहन्यते, तच्छ्रुते कामचारस्य प्रतिबन्धकत्वाभावमात्रे तात्पर्यादिति भावः ॥ **यथेति** ॥ यथा गतिसाधनाऽश्वादीनामन्यथासिद्धत्वात् न गतिफले हेतुता, तथा प्रकृतेऽपीति भावः ।

## वाक्यार्थमुक्तावली

**न बाधिकेति** ॥ कामचाराः कामभक्षा इति श्रुतौ स्पष्टं सत्कर्मकरणेऽपि मोक्ष इत्यनुक्तेरिति भावः । सूत्रे चोऽवधारणे । ज्ञानस्योत्पत्तावित्यध्याहृतेन सम्बद्ध्यते ॥ **यज्ञादिश्रुतेरिति** ॥ यज्ञादीनां ज्ञानसाधनत्वश्रुतेरित्यर्थः । यज्ञादिना विविदिषन्ति वेत्तुं इच्छन्तीत्युक्ते ज्ञानसाधनत्व-प्रतीतेः । अश्ववत् अश्वस्य गत्युत्पत्तावपेक्षैवेति भावेन सूत्रार्थं स्पष्टयति ॥ **न ज्ञानस्येति** ॥ **सर्वसत्प्रवृत्तीनामिति** ॥ अध्यापनं शौर्यं वार्ता शुश्रूषादिसर्वधर्माणां गुरुकुलवासाग्निहोत्रपञ्चमहा-यज्ञतप उपास्त्यादीनां आश्रमधर्माणाम् । सामान्यधर्माणां शमदमभक्त्यादीनाम् । नैमित्तिकानां श्रद्धादीनामिति तत्वप्रदीपोक्तसर्वसत्प्रवृत्तीनामित्यर्थः ।

## वाक्यार्थविवरणम्

ननु सत्प्रवृत्त्या मोक्ष एव विशेषोऽस्त्विति वक्तुं न शक्यते । कामचाराः कामभक्षाः परात्पर-मीयुरिति कामचाराणामपि मोक्षश्रुतेः तया बाधः स्यादित्यत आह ॥ **कामचाराणां मोक्ष-श्रुतिस्त्विति** ॥ **अप्रतिबन्धकत्वेऽपीति** ॥ मोक्षाप्रतिबन्धकत्वेऽपीत्यर्थः ॥ **मोक्षहेतुत्वेति** ॥ तथा च स एव सत्प्रवृत्त्या जायमानो विशेष इति भावः ॥ **मोक्षः** ॥ लिङ्गभङ्गः ॥ **विविदिषन्ति** ॥ वेत्तुमिच्छन्ति ।

## वाक्यार्थमञ्जरी

सर्वापेक्षा सर्वसत्कर्मापेक्षा च ज्ञानोत्पत्त्यर्थमेव न मोक्षे कुतः यज्ञादिश्रुतेः यज्ञेनेत्यादिना यज्ञादेर्ज्ञानसाधनत्वश्रवणात् तर्ह्युभयसाधनत्वमस्त्वित्यत उक्तम् ॥ **अश्ववदिति** ॥ यथा गमनसाधनाश्वस्य गमनहेतुत्वमित्यर्थः । **विविदिषन्ति** जानन्ति ॥

## सूत्रभाष्यम्

**॥ ॐ शमदमाद्युपेतः स्यात्तथाऽपि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात् ॐ ॥ २७ ॥**

**यद्यपि ज्ञानेनैव मोक्षो नियतस्तथाऽपि ज्ञानी शमदमाद्युपेतः स्यात् । 'आचार्याद्विद्यामवाप्यैतमात्मानमभिपश्यन् शान्तो भवेद्दान्तो भवेदनुकूलो भवेदाचार्यं परिचरेत्परिचरेदाचार्यम्' इति माठरश्रुतौ ज्ञानिनोऽपि तद्विधेः । 'ब्राह्मीं वाव त उपनिषदमब्रूमेति । तस्यै तपो दमः कर्मेति प्रतिष्ठा वेदाः सर्वाङ्गानि सत्यमायतनम् । यो वा एतामुपनिषदमेवं वेद' (के.उ. ४-७-८,९) इति ज्ञानाङ्गतया तेषामवश्यानुष्ठेयत्वात् ।**

**'यस्य ज्ञानं तस्य मोक्ष इति नात्र विचारणा ।**
**तस्य शान्त्यादयोऽङ्गानि तस्मात्तेषामनुष्ठितिः ॥**
**अवश्यकरणीया स्यादन्यथाऽल्पफलं भवेत्' इति आग्नेये ।**

**तुशब्दः पूर्णफलार्थत्वं सूचयति ।**

## तत्त्वप्रदीपिका

शमदमाद्युपेतः स्यादित्यादिसूत्रम् ॥ **परिचरेदिति** ॥ द्वितीयोक्तिस्तात्पर्यार्था । आचार्यस्समम्-अस्माच्छ्रेयांसं चाऽचार्यं बहुमानेन परिचरेदिति वाऽर्थः । 'ये के चास्मद्विधाः श्रेयांसश्च तानुपास्व तानुपचरस्व' इति श्रुतेः । 'ब्राह्मीं वाव त उपनिषदमब्रूमेति । तस्यै तपो दमः कर्मेति प्रतिष्ठा वेदाः सर्वाङ्गानि सत्यमायतनम् । यो वा एतामेवं वेदापहत्य पाप्मानमनन्ते स्वर्गे लोके ज्येये प्रतितिष्ठति प्रतितिष्ठति' इति तलवकारश्रुतिः । उत्पन्नज्ञानस्यापि ज्ञानवृद्ध्यर्थं शमादीनामवश्यानुष्ठेयत्वम् ।

(तत्त्वप्रदीपिका)

'शान्तिस्तु भगवन्निष्ठा दमो मदविनिग्रहः ।
हृदिस्थविष्णौ सन्तोषः सदैवोपरमः स्मृतः ॥
तितिक्षा द्वन्द्वसहना क्षमा क्रोधासमुत्थितिः' इति शब्दनिर्णये ॥

'विद्यावेद्यं तव प्रोक्तमास्थानं ते वदाम्यहम् ।
तपोदमस्वधर्मेषु ये स्थिरास्तेषु तिष्ठति ॥
विद्यास्थानानि तस्यास्तु वेदा अङ्गानि निर्णयः ।
वेदैतामेवमखिलां यो विष्णौ प्रतितिष्ठति' इति ब्रह्मपारे ॥

उक्तं च भूयो भगवत्पादैरेव तलवकारोपनिषद्भाष्ये– 'सप्रतिष्ठां सायतनामुपनिपदं ब्रूहीत्युक्ते सम्यगेव मयोपनिषत्स्वरूपमुक्तम् । तत्र वक्तव्यं नास्ति । तपो दमः कर्म च विद्यायाः प्रतिष्ठाः । तद्वत्सु विद्या प्रतितिष्ठतीत्यर्थः । सत्यमिति मीमांसा ॥

'निर्णीयते यतः सम्यगिदं सत्यमिति स्फुटम् ।
श्रुतिस्मृत्युदितं सर्वं व्यक्तं मीमांसयैतया ॥
सत्यमित्युच्यते तस्मान्मीमांसा ब्रह्मनिश्चयः' इति शब्दनिर्णये ॥

'ऋग्यजुस्सामाथर्वाख्या पञ्चरात्रं च भारतम् ।
मूलरामायणं चैव पुराणं भगवत्परम् ॥
वेदा इत्युच्यते सद्भिः शिक्षाद्याः स्मृतयस्तथा ।
अङ्गानि सत्यं मीमांसा तद्विद्यायतनं त्रयम्' इति विद्यानिर्णये' इति ॥

## तत्त्वप्रकाशिका

यदि सदसत्प्रवृत्तिभ्यां मोक्षतदभावाभावः न तर्हि ताभ्यां विशेषो ज्ञानिन इति न तेन सत् स्वीकार्यमसत्याज्यम् । न च मोक्षाधिक्यादिविशेषः । ज्ञानादेव तदुपपत्तेरित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ **शमेति** ॥ यद्यप्यस्ति ज्ञानिनो मोक्षस्तथाऽपि ज्ञानिनः शमदमादिसत्प्रवृत्त्या भवितव्यम् । तथा विधिसद्भावादित्यर्थः । ज्ञानादेव मोक्षसिद्धेर्व्यर्थो विधिरित्यत आह ॥ **ब्राह्मीमिति** ॥ न ज्ञानिनः शमदमादिवैयर्थ्यम् । ज्ञानप्रतिष्ठापकत्वेन तेषामवश्यानुष्ठेयत्वादिति भावः । तपआदि प्रतिष्ठेति । तद्वत्सुविद्या प्रतितिष्ठतीत्यर्थः । सत्यं मीमांसा । आयतनमुत्पत्तिकारणम् । ननु ज्ञानादेव मोक्षसिद्धौ किं प्रतिष्ठयेत्यत आह ॥ **यस्येति** ॥ ज्ञानमात्रेण मोक्षसिद्धावपि

(तत्त्वप्रकाशिका)

शमाद्यङ्गयुक्तेन **संपूर्णो भवति नान्यथाऽतस्तदनुष्ठेयमिति** भावः । **एतत्सूत्र एव किं नोक्तमित्यत** आह ॥ **तुशब्द इति** ॥

## भावबोधः

तपो दमः कर्म च विद्यायाः प्रतिष्ठा तद्वत्सु विद्या प्रतितिष्ठतीत्यर्थ इति तलवकारभाष्यं मनसि निधायाह– **तप आदीति** ॥

## भावदीपः

अत एव कामकारेण चैक इति सूत्रद्वयोक्तप्रमेयाक्षेपसमाधिपरतयोत्तरसूत्रमवतारयति । यदीति ॥ **मोक्षेति** ॥ मोक्षश्च तदभावश्च मोक्षतदभावौ तयोरभावः । सत्प्रवृत्त्या मोक्षोऽसत्प्रवृत्त्या तदभावो न चेदित्यर्थः ॥ **न तर्हीति** ॥ तथा च युज्यते चेति भाष्यमयुक्तमिति भावः । सौत्रतु-शब्दव्यावर्त्यं व्यनक्ति ॥ **न चेति** ॥ ह्रास आदिपदार्थः । भाष्यं व्याचष्टे ॥ **यद्यपीति** ॥ शमदमादिशब्दार्थो जिज्ञासासूत्रेऽभिहितः ॥ **सत्प्रवृत्त्येति** ॥ असन्निवृत्त्या चेत्यपि ग्राह्यम् । विधीत्युपलक्षणम् । ब्राह्मणो न हन्तव्य इत्यादिनिषेधसद्भावादित्यपि ध्येयम् ॥ **एवमग्रेऽपि** ॥ सूत्रादावपि शमदमाद्युपेत इत्येतन्निषिद्धाकारी च स्यादित्यस्योपलक्षणम् । तद्विधेरित्यपि तन्निषेधादित्यस्येति ज्ञेयम् । अत एव सम्बन्धटीकायां सदसत्प्रवृत्तिभ्यामित्यादिद्विवचनोक्तिः । उत्तरत्रापि यदि सदसत्प्रवृत्तिभ्यामित्युक्तिः । तपआदेर्विद्याधारत्वायोगात्तलवकारभाष्योक्तमर्थमाह ॥ **तप इति** ॥ तपो दमः स्वधर्मेषु ये स्थिरास्तेषु तिष्ठतीति स्मृतेरिति भावः । निर्णीयते यतः सम्यगिदं सत्यमिति स्फुटम् । श्रुतिस्मृत्युदितं सर्वं व्यक्तं मीमांसयैतया । सम्यगित्युच्यते तस्मा-न्मीमांसेति स्मृतेराह ॥ **सत्यमिति** ॥ **उत्पत्तीति** ॥ विद्योत्पत्तीत्यर्थः ।

## अभिनवचन्द्रिका

शङ्कते **यदीति** ॥ **न तर्हीति** ॥ 'ज्ञानादेव स्वर्गो ज्ञानादेवाऽपवर्ग' इति वचनात् इष्टमात्रस्य ज्ञानादेव सिद्धेर्न सत्प्रवृत्त्या प्रयोजनम्, तथा असत्प्रवृतिसाध्यस्याऽनिष्टस्य ज्ञानबलेनैव निवृत्ति-सम्भवात् नाऽसत्प्रवृत्त्या हानिरिति न ज्ञानिनाऽसत्कार्यं त्याज्यमित्यर्थः । सत्प्रवृत्तेरसत्त्यागस्य च फलमाशङ्क्य निषेधति– **न चेति** ॥ **ज्ञानादेवेति** ॥ तस्य सर्वेष्टसाधनत्वादिति भावः । एतेन ज्ञानस्याऽनिष्टहेतुत्वाभावात् ज्ञानेनैवाऽसत्प्रवृत्तिफलं भवतीत्यभिधानमयुक्तमिति परास्तम् ।

## वाक्यार्थमुक्तावली

नन्वधिकोपदेशादित्यत्र मुक्तावानन्दातिशयस्य सत्प्रवृत्तिसाध्यविशेषत्वस्योक्तत्वात् कथं तदभाव इत्याशङ्क्य निषेधति ॥ **न चेति** ॥ **ज्ञानादेवेति** ॥ कर्मसाध्यस्याप्यतिशयस्य पुरुषार्थत्वेन ज्ञानादेवोपपत्तेः । अन्यथा ज्ञानादेव सर्वे कामा इत्यस्य सङ्कोचप्राप्तेस्तत्कारकाभावात् । न च ज्ञानादेव सर्वे कामा इत्युक्तास्तथापि यथा यथा कर्म कुरुते तथा तथाधिको भवतीति कर्मणाधिक्योक्तेः ज्ञानसाध्ये कर्मणा विशेष इति वाच्यम् । मुक्तावपेक्षिताधिक्ये ज्ञानं कारणं कर्मापि कारणान्तरम् । न ह्येकस्यैकं कारणमिति नियमः । स्वर्गस्य परस्परानपेक्षानेकहेतुत्वदर्शनात् । तथा च मोक्षार्थमपेक्षितज्ञानादेव सर्वातिशयलाभसम्भवात् कर्मणोऽवश्यानुष्ठेयत्वाभावात् । अनुष्ठितं सत्कर्म ज्ञानवन्मोक्ष एवोपयुज्यत इति वक्तव्यम् । तथात्वे समुच्चयवादप्राप्तेः न सत्प्रवृत्त्या को विशेष इति पूर्वाक्षेप इति भावः ॥ **यद्यपीति** ॥ मोक्ष इत्यनन्तरं न तदर्थं कर्मापेक्षेति पूरणीयम् ॥ **विधिसद्भावादिति** ॥ ननु तद्वतो विधानान्नियमाच्चेति प्रागुक्तमेवैतत्पुनः किमुच्यत इति चेन्न । ज्ञानी तु कर्माणि सदोदितानि कुर्यादित्यादिविधीनां परोक्षज्ञानिविषयत्वोपपत्तेः । देवताचारस्य मुक्तवल्लीलात्वोपपत्तेरित्यत आचार्याद्विद्यामवाप्यैतमात्मानमभिपश्यन् शान्तो भवेदित्यादिना स्पष्टमपरोक्षिण एव तेषां शमादीनां विधेः ज्ञानी शमाद्युपेतः स्यान्न तत्रानादरो युक्तः विहितत्वादिति प्रतिपादनादगतार्थत्वसम्भवात् ज्ञानादेव मोक्षसिद्धेरिति । अविद्यानिवृत्तिवत्प्रचुरतरानन्दवत्तद्गतानन्दातिशयस्यापि सिद्धेः । तदसाध्यस्याभावादानन्दातिशयाय प्रथमभाव्युपाये सति गुरूपायानुसरणं व्यर्थमिति भावः ।

**ज्ञानप्रतिष्ठापकत्वेनेति** ॥ स्यादेतत् । यदि कर्मणां मौक्तानन्दातिशये स्वतन्त्रकारणत्वमभ्युपगच्छामः । न चैवं किन्नाम, ज्ञानप्रतिष्ठापकत्वेनैव । प्रतिष्ठापकत्वं चातिशयफलसम्पादने ज्ञानदार्ढ्यहेतुत्वम् । तदुक्तं तत्वप्रदीपे । उत्पन्नज्ञानस्यापि दार्ढ्यार्थं शमादीनामवश्यानुष्ठेयत्वमिति । दार्ढ्यं च फलोन्मुख्यमिति ज्ञातव्यम् । नन्वेवमुत्तरभाविकर्मणो ज्ञानदार्ढ्यहेतुत्वे तुल्यं तु दर्शनमिति सूत्रविरोधः । तत्र चीर्णीकृते वा ज्ञानस्य न विशेषोऽस्ति कश्चनेत्युक्तत्वादिति चेन्न । तत्राविद्यानिवृत्तिरूपमोक्षाख्यफलोन्मुख्ये राजसूयादिकृतावकृतौ च तुल्यदर्शनमित्युक्तम् । इह तु ज्ञानमात्रेण मोक्षसिद्धावपि फलातिशयार्थं कर्मणां ज्ञानप्रतिष्ठापकत्वमुच्यते । कुतो विरोधः ।

(वाक्यार्थमुक्तावली)

केचित्तु ज्ञानप्रतिष्ठापकत्वं नाम प्रतिदिनं तत्सम्पादकत्वमित्याहुः । यद्यपि तस्यै तपः कर्मेत्यत्र परोक्षज्ञानं प्रकृतम् । शब्दमायतनमिति शब्दकरणकत्वोक्तेः । तथापि तदपरोक्षपर्यवसायीत्य-परोक्षस्यापि प्रकृतत्वम् । यो वा एतामुपनिषदं वेदापहत्य पाप्मानमेनं ते स्वर्गे लोके ज्येये प्रतितिष्ठतीति वेदनस्य मुक्तौ प्रकर्षेण स्थितिहेतुत्वकथनादिति ज्ञेयम् ।

## तत्त्वसुबोधिनी

तपो दमः कर्म च विद्यायाः प्रतिष्ठा तद्वत्सु विद्या प्रतितिष्टतीति तलवकारोपेनिषद्भाष्यं मनसि निधायाह ॥ **तप आदीति** ॥

## वाक्यार्थविवरणम्

**मोक्षतदभावेति** ॥ सत्प्रवृत्त्या मोक्ष असत्प्रवृत्त्या तदभाव इत्यर्थः ॥ **आधिक्यम्** ॥ आनन्दाभिवृद्धिः । आदिपदेन तद्ह्रासः ॥ **ज्ञानादेवेति** ॥ ज्ञानादेव लिङ्गभङ्गरूपमोक्षानन्दाभि-वृध्द्योरुपपत्तेरित्यर्थः ॥ **पूर्णफलम्** ॥ आनन्दाभिवृद्धिः ॥ **मोक्षस्वरूपेति** ॥ लिङ्गभङ्गरूपेत्यर्थः ।

## वाक्यार्थमञ्जरी

तथापि ज्ञानस्यैव मोक्षहेतुत्वेऽपि ज्ञानी शमादिसद्वृत्त्युपेतः स्यात्कुतः तद्विधेः तस्य शमदमाद्युपेतत्वस्य आचार्यादिति श्रुतौ विधेर्विहितत्वात् । किमर्थं विधिरित्यत उक्तम् । तदित्यादि । तदङ्गतया ~~ज्ञानाङ्गतया~~ तेषां शमादीनामवश्यानुष्ठेयत्वादित्यर्थः ।

## सूत्रभाष्यम्

### ॥ ॐ सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॐ ॥ २८ ॥

**'यदि ह वा अप्येवंविन्निखिलं भक्षयीतैवमेव स भवति'** इति सर्वान्नानुमतिः प्राणात्यय-विषया । **'न वा अजीविष्यमिमानखादन्निति होवाच कामो म उदपानम्'** (छां.उ.१-१०-४) इति (तद्) दर्शनात् ॥

## तत्त्वप्रदीपिका

'शुभकर्मभिराधिक्यं विपरीतैर्विपर्ययः' इत्युक्तम् । अन्यथाऽल्पफलं भवेत्' इति च । अथ कथमियं श्रुतिः 'यदि ह वा एवंविन्निखिलं भक्षयीतैवमेव स भवति' इति ? अत्रोत्तरमाह– सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् । आपत्काल्पोऽसौ, ज्ञानिनः प्राणात्ययप्राप्तौ निषिद्ध-भक्षणादावपि न फलह्रासः । 'न वा अजीविष्यमिमानखादन्निति होवाच कामो म उदपानम्' इति यथालब्धाशनाविरोधदर्शनात् । तथाहीभ्याद्भिक्षितांस्तदुच्छिष्टान्कुल्माषान्भक्षयन् चाक्रायणो ब्रह्मवित्'हन्तानुपानम्' इत्यनुपानदित्सया तेनोक्त 'उच्छिष्टं वै मे पीतं स्यात्' इति न प्रतिजग्राह । 'न स्विदेतेऽप्युच्छिष्टा' इति तेनोक्ते 'न वा अजीविष्यमिमानस्वादन्' इत्याद्याह । यथेष्टमुदपान-मित्यनुपानप्रत्याख्यानात् प्राणधारणादधिकं नानुमतमित्यध्यवसीयते ।

## तत्त्वप्रकाशिका

ननु यदि सदसत्प्रवृत्तिभ्यामस्ति ज्ञानिनो विशेषस्तर्हि कथमेवंविन्निखिलं भक्षयीतेति तस्य निषिद्धान्नभोजनेऽपि ह्रासाभावोक्तिः सम्भवति । अतो न विशेषः स्यादित्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे ॥ सर्वेति ॥ नैतच्छ्रुतिबलेन ज्ञानिनोऽसत्प्रवृत्त्या विशेषाभावो वक्तव्यः । एतच्छ्रुतेः प्राणात्ययविषयत्वात् । यदि प्राणात्ययकाले ज्ञानी निषिद्धं भुंजीत तर्हि न तेन तस्य विशेष इति साधारणश्रुतेः कुतः प्राणात्ययविषयत्वकल्पनम् । लिङ्गदर्शनादेव । चाक्रायणेनेभ्योच्छिष्टकुल्माषान् खादतोच्छिष्टजलपाने प्रार्थितेनोक्तमुच्छिष्टं वै मे पीतं स्यादिति । तत्रेभ्यो बभाषे । न स्विदेतेऽपि कुल्माषा उच्छिष्टा इति । तत्र मुनिरुवाच । यदीमान्कुल्माषान्नाभक्षयं तर्हि न मे जीवनं भवति । अतः प्राणात्यये दोषाभावात्ते भक्षिताः । जलपानं तु ममेच्छाधीनमिदानीमपि वर्तते । वृथोच्छिष्ट-स्वीकारे दोषप्राप्तेर्न तत्पिबामीति । अतो न कर्तव्यमेव ज्ञानिनापि निषिद्धमिति भावः ।

## गुर्वर्थदीपिका

चाक्रायणेनेभ्योच्छिष्टकुल्माषानित्यत्र चाक्रायणो नामानसोऽधस्ताद्रथचक्रयोर्मध्ये शयनवा-नुषस्तिनामकः ऋषिः चाक्रायणपदेनोच्यते । इभ्यः इभयन्ता कुल्माषाः वनमाषा इत्यर्थः । एवं चास्मिन्नधिकरणे ज्ञानिनां मनुष्याणां नियमेन शुभकर्मस्वेव विधिबद्धानामपि बन्धनिर्बन्धं विना स्वेच्छयैव प्रायशः कर्तव्यशुभकर्मस्वेव प्रवृत्तिः स्वेच्छयैव कदाऽप्यकर्तव्याकरणं च । अशुभकर्मणि

(गुर्वर्थदीपिका)

त्वाज्ञाऽपि न । तत्करणे तु मोक्षे आनन्दह्रासश्च । 'केन स्याद्येन स्यात्तेनेदृश एव' इति वचना-न्नियमेन शुभकर्मस्वेव विधिबलात्प्रवृत्तिमतां देवानां तु शुभाशुभकर्मस्वपि प्रवर्तनेऽनुज्ञामात्रम् । कदाचित्कर्तव्यकर्मणोऽप्यकरणमधिकम् । ब्रह्मणस्तु विधिनिर्बन्धं विना स्वेच्छया प्रायशःशुभ-कर्मणामेव करणम् । कदाचिदशुभकर्मकरणेऽपि विधिश्चोच्यते । उत्तमाधिकारित्वेन भगवतोऽति-प्रियत्वेन च पापालेपेऽपि शक्तत्वात् । अत एव पुत्रिकाकामनादिकं ब्रह्मणा कृतम् । यद्यपि त्रिविधजीवन्मुक्तानामप्यस्त्येव शुभकर्मसु विधिबन्धः । तथाऽप्युत्तरोत्तरेषां क्रमेण ज्ञान-सामर्थ्याधिक्यप्रदर्शनायैवमुक्तम् । विष्णोस्तु सर्वविध्यतिदूरत्वेन महामाहात्म्यम् । यद्यपि मुक्तानामपि सर्वविधिदूरताऽस्ति । तथाऽपि संसारे विधिसद्भावादतिदूरता नास्ति । लक्ष्म्यास्तु जीवकोटावप्रवेशादीश्वरकोटावेव प्रवेशः । तस्या अपि भगवदाज्ञारूपविधिसम्भवान्न भगवत्साम्य-मिति तात्पर्यमवगन्तव्यम् । तदुक्तं भागवते रुक्मिणीरूपश्रिया 'यर्ह्यस्य वृद्धय उपात्तरजोतिमात्रो मामीक्षसे तदुह नः परमानुकम्पा' इति ।

## भावबोधः

'कथं यदि ह वा इति' श्रुतेः प्राणात्ययविषयत्वमित्यतस्तां व्याचष्टे । **यदि प्राणात्ययकाल इति** ॥ शेषपूरणमेतदिति ज्ञातव्यम् । चरतिर्गतिरिति भक्षणस्य पृथगुक्तेरिति भावः । पूर्वं शमाद्युपेतः स्यात्तथापि त्वित्यत्र 'तु'शब्देन सत्प्रवृत्तेः पूर्णफलत्वसाधनेऽसत्प्रवृत्तेरल्पफल-हेतुत्वमित्यर्थादागतम् ।

## भावदीपः

पूर्वसूत्रोक्तप्रमेये तर्कपराहतिमाशङ्कते ॥ **नन्विति** ॥ **ह्रासाभावोक्तिरिति** ॥ एवमेव स भवतीति भाष्योक्तश्रुतावित्यर्थः ॥ **अत इति** ॥ तादृशोक्तिबलादित्यर्थः । श्रुतिगत्युक्तेर-साङ्गत्यनिरासाय चशब्दस्य शङ्कानिवर्तकत्वमुपेत्याह ॥ **नैतदिति** ॥ श्रुत्यारूढतया दर्शयति ॥ **यदि प्राणेति** ॥ भाष्यशेषं व्यनक्ति ॥ **साधारणेति** ॥ **लिङ्गेति** ॥ प्राणात्ययज्ञापकस्य मुनिवचनरूपस्य छान्दोग्ये प्रथमाध्याये श्रुतस्य दर्शनादित्यर्थः । चाक्रायणेन मुनिना इभ्यो हस्तिपः धनाढ्य इत्येके तदुच्छिष्टधान्यविशेषान् ॥ **प्रार्थितेनेति** ॥ स्वोच्छिष्टजलपानविषये हन्तानुपान-

(भावदीपः)
मितीत्यनेन प्रार्थितेन चाक्रायणेनोक्तमित्यर्थः । एवं हि तत्र वाक्यक्रमः । चाक्रायण इभ्यग्रामे प्रद्रवणक उवास सहेभ्यं कुल्माषान् खादन्तं बिभिक्षे । तं होवाच नेतोऽन्ये विद्यन्ते । यच्च येम इम उपनिहता इति । एतेषां मे देहीति । तानस्मै प्रददौ । हन्तानुपानमिति । उच्छिष्टं वै मे पीतं स्यादिति होवाच । न स्विदेतेऽप्युच्छिष्टा इति । न वा अजीविष्यमिमानखादन्निति होवाच । कामो म उदपानमिति ॥ **अत इति** ॥ लिङ्गदर्शनबलेन यदि ह वा इति श्रुतेः प्राणात्ययविषयत्वेना-बाधकत्वादित्यर्थः ।

## वाक्यार्थमुक्तावली

यद्यपि यदिह वा अप्यनेवंविन्निखिलं भक्षयीत एवमेव स भवतीति श्रुतेः स्तुतय इत्युक्तन्यायेन सर्वभक्षकोऽपि मोक्षप्रतिबन्धो नास्तीत्यर्थत्वं वक्तुं शक्यते । तथापि वस्तुतः श्रुतेर्ह्रासाभावपरत्वं अर्थः इति भावेनेयमाशङ्केति भावः । सूत्रे चोऽप्यर्थः । सर्वान्नानुमतिरपि प्राणात्ययकालविषया । अत उत्सर्गतः सदसत्प्रवृत्तिभ्यां विशेषाङ्गीकारे अपवादिकैतच्छ्रुतिविरोधोऽपि नास्तीति भावः । तच्छ्रुतेः प्राणात्ययकाले सर्वभक्षणेऽपि ज्ञानिनो न कोऽपि दोषः । इत्येतद्विषयत्वं च तत्रैव वाक्यशेषे दर्शनात् । न वा अजीविष्यमिमानखादन्निति होवाच कामो म उदपानमित्यभक्षयितृत्व-स्यापि भक्षणाभावे प्राणात्यये तद्भक्षणेऽपि दोषाभावे अन्यदा तत्सद्भावे लिङ्गदर्शनात् तुल्यते इत्यन्यथा कुल्माषयाचनेभ्योच्छिष्टत्वसाम्ये विभज्य कथनायोगादिति भावेन सूत्रार्थमाह ॥ **नैतच्छ्रुतिबलेनेत्यादिना** ॥

## तत्त्वसुबोधिनी

कथं यदि ह वेति श्रुतेः प्राणात्ययविषयत्वमित्यतः तां व्याचष्टे ॥ **यदि प्राणात्ययेति** ॥ शेषपूरणमिति ज्ञातव्यम् ।

## वाक्यार्थमञ्जरी

यदि ह वेति श्रुत्युक्तसर्वान्नानुमतिर्निषिद्धान्नभोजनानुज्ञा प्राणात्यये प्राणापगमकालविषयैव । कुतः तद्दर्शनात् तस्योक्तार्थस्य न वा अजीविष्यमित्युत्तरवाक्ये दर्शनादित्यर्थः । तदेव व्यनक्ति

(वाक्यार्थमञ्जरी)

॥ यदीति ॥ किं तल्लिङ्गदर्शनमित्यतः उषस्तिर्हि चाक्रायण इभ्यग्रामे प्रद्रावणक उवास सहेभ्यं कुल्माषान् खादन्तं बिभिक्षे तं होवाच नेतोऽन्ये विद्यन्ते यच्च येम इम उपनिहिता इति ॥ एतेषां मे देहीति चोवाच तानस्मै प्रददौ हन्तानुपानमिति । उच्छिष्टं वै मे पीतं स्यादिति होवाच । न स्विदेतेऽप्युच्छिष्टा इतीति पूर्वभागेन सङ्गत्यर्थं हन्तेत्याद्यर्थं तावदनुवदन्न वाऽजीविष्यमिति श्रुतिं व्याचष्टे । चाक्रायणेनेत्यादिना चक्रायणस्यापत्यं पुमान् चाक्रायणः उषस्तिर्नामतः इभ्यो गजपालकः कुल्माषाः कुत्सितमाषाः ।

## सूत्रभाष्यम्

### ॥ ॐ अबाधाच्च ॐ ॥ २९ ॥

'अन्याय्यचरणाभावे न हि ज्ञानस्य बाधनम् ।
अतो विद्वानपि न्याय्यं वर्तेतोत्कर्षसिद्धये' इति ब्रह्मतर्के ॥

## तत्त्वप्रदीपिका

अबाधाचेत्यादिसूत्राण्युदाहृत्योक्तमेवार्थं प्रमाणान्तरैः प्रचुरतरं प्रपञ्चयति ॥

## तत्त्वप्रकाशिका

किं च किं ज्ञानिनिषिद्धाकरणे बाधकसद्भावाद्वा तदुच्यते अथ करणे प्रमाणाभावादुत निषेधकप्रमाणाभावादथ करणे बाधकाभावाद्वा । आद्यं पराकुर्वत्सूत्रं पठित्वा स्मृत्यैव व्याचष्टे ॥ अबाधाचेति ॥

## भावदीपः

अबाधाच्चेत्यादियोगेषु समुच्चायकचापिशब्दश्रवणादाह ॥ किं चेति ॥ तदिति ॥ निषिद्धं कार्यमित्येतदुच्यत इति वा ज्ञानिनोऽसत्प्रवृत्तौ विशेषो नेत्युच्यत इति वाऽर्थः ॥ आद्यं पराकुर्वदिति ॥ सूत्रे युज्यते च विशेष इति वा शमदमाद्युपेतः स्यादिति वा साध्यानुषङ्ग इति भावः । न केवलं तद्विधेरिति वा न केवलं यदि ह वेत्यादेः प्राणात्ययविषयत्वादिति वा सौत्रचार्थ इति भावः । एवमग्रेऽपि ।

## वाक्यार्थमुक्तावली

अनापदि निषिद्धचरणे ज्ञानस्यानन्दातिशयहेतुत्वरूपबाधवदन्याप्यचरणाभावे उक्तविधज्ञानवाधाभाववच्च सर्वान्नानुमतिश्च प्राणात्ययविषयेति सूत्रार्थः ।

## तत्त्वसुबोधिनी

करणे निषिद्धकरणे निषेधकाभावादिति । निषिद्धं न कर्तव्यमिति निषेधकाभावात् । करणं निषिद्धकरणे ।

## वाक्यार्थमञ्जरी

निषिद्धाकरणे बाधकाभावाच्च न तत्कार्यमित्यर्थः । असिद्धत्वात्प्रमाणसद्भावस्य ।

## सूत्रभाष्यम्

**॥ ॐ अपि स्मर्यते ॐ ॥ ३० ॥**

**'अतीतानागतज्ञानी त्रैलोक्योद्धरणक्षमः ।**
**एतादृशोऽपि नाऽऽचारं श्रौतं स्मार्तं परित्यजेत्' इति हरिवंशेषु ॥**

## तत्त्वप्रकाशिका

**न द्वितीयः । असिद्धत्वात् । निषेधकस्मृतिसद्भावान्न तृतीयोऽपीत्यर्थप्रतिपादकं सूत्रं पठित्वा तां स्मृतिमुदाहरति ॥ अपीति ॥**

## भावदीपः

**असिद्धत्वादिति** ॥ अचोदनाच्चेत्यत्रैवोक्तेरिति भावः ॥ **निषेधकस्मृतीति** ॥ अपवदति हीत्यनेन पूर्वं ब्राह्मणो न हन्तव्य इत्यादिनिषेधकश्रुतिरेवोक्ता । अत्र पुनः स्मृतिरित्यपौनरुक्त्यमिति भावः ।

## वाक्यार्थमुक्तावली

**असिद्धत्वादिति** ॥ अचोदनेत्युक्तत्वादिति भावः । निषिद्धवर्जनस्य कर्तव्यत्वमिति शेषः । निषिद्धवर्जनस्यापि श्रुतिस्मृत्युदिताचारत्वात् न स्मृतेः असाङ्गत्यम् ।

## वाक्यार्थमञ्जरी

सद्धर्मात्यागोऽतीतानागतज्ञानीति स्मर्यतेऽपीति भावः ।

## सूत्रभाष्यम्

**॥ ॐ शब्दश्चाऽतोऽकामचारे ॐ ॥ ३१ ॥**

**'स य एतदेवं विदेवंमन्वान एवं पश्यन्न कामचरितं चरेन्न कामं भक्षयीत न काममनुवर्तेत' इति कौण्डिन्यश्रुतौ । अत इत्यल्पफलत्वं सूचयति ।**

**'न निषिद्धानि वर्तेत पूर्णज्ञानफलेच्छया' इति पाद्मे ।**

## तत्त्वप्रकाशिका

**न केवलं स्मृतिरेव निषेधिका श्रुतिश्चास्तीत्यर्थप्रतिपादकं सूत्रमुपन्यस्य तां श्रुतिमुदाहरति ॥ शब्दश्चेति ॥ चरतिर्गतिः । चतुर्थं निराकर्तुमाह ॥ अत इति ॥ तदेव कुत इत्यत आह ॥ नेति ॥**

## भावबोधः

**चरतिर्गतिरिति** ॥ भक्षणस्य पृथगुक्तेरिति भावः । पूर्वं शमाद्युपेतः स्यात्तथाऽपि त्वित्यत्र तु शब्देन सत्प्रवृत्तेः पूर्णफलत्वसाधनेऽसत्प्रवृत्तेरल्पफलहेतुत्वमित्यर्थादागतम् । तदिह सूत्रे 'अतः' शब्देन परामृश्यत इत्यभिप्रेत्य भाष्ये इत्यल्पफलत्वं सूचयतीत्युक्तं तदवतारयति– **चतुर्थमिति** ॥ अत्र आद्ये 'केन स्यात्' इति वाक्यस्य पूर्वपक्ष्युक्तयथेष्टाचारविधिपरत्वापाकरणाय सर्वज्ञानि-साधारणस्तुतिपरत्वेन अनुज्ञानमात्रपरत्वेन सावकाशोक्तिः । द्वितीये असत्प्रवृत्त्या कुण्ठितशक्तेः ज्ञानस्य मोक्षसाधनत्वाभावो नेत्यत्र श्रुतिरूपप्रमाणोक्तिः । तृतीये तत्रैव कैमुत्योक्तिः । चतुर्थे कामचारिणां ज्ञानिनां मोक्षयोग्यत्वे तद्विजिज्ञासूनां कामचाराणां ज्ञानयोग्यत्वं स्यादिति प्रतिबन्दीनिरासः । यद्यपीदं सूत्रत्रयं असत्प्रवृत्तावपि विशेषसमर्थनपरेण 'प्राणात्ययः' इत्यादि-सूत्रचतुष्टयेनैवान्विततया कर्तव्यम् । तथाप्यसत्प्रवृत्त्यविशेषाङ्गीकारे मोक्षानुपपत्तिसमाधानमनेन सूत्रत्रयेण क्रियते । तत्सूत्रचतुष्टयेन आनन्दह्रासहेतुत्वादिना असत्प्रवृत्तेरकार्यत्वसमर्थनं क्रियत इति वैलक्षण्यप्रदर्शनाय व्यवधानं कृतमिति ज्ञातव्यम् । पञ्चमे 'केन स्यात्' इति वाक्यस्य

(भावबोधः)

जैमिनिमतानुसारेण पूर्ववाद्युक्तार्थनिरासायार्थान्तरोक्तिः । षष्ठे प्रथमसूत्रोक्तानुज्ञानस्य ज्ञानिविशेषपरत्वज्ञापनाय विवरणम् । तर्ह्यस्य सूत्रस्य द्वितीयत्वं स्यादिति न वाच्यं जैमिनिमतापेक्षया स्वमते साम्योक्तेः स्वारस्यज्ञापनाय तदानन्तर्यस्यायुक्तत्वात् । सप्तमे 'केन स्यात्' इति श्रुतेः स्वमतेनैव पुनः स्वेच्छाचारविधिरूपार्थान्तरोक्तिः । अष्टमे सप्तमोक्तस्वेच्छाचारविध्याक्षेपपरिहारः । नवमे ज्ञानिनां स्वेच्छाचारविधौ स्पष्टप्रमाणोक्तिः । दशमे 'केन स्यात्' इति श्रुतेः पञ्चमषष्ठसप्तमैरुक्तार्थस्य परस्परविरुद्धत्वेनाव्यवस्थितत्वमाशङ्क्य तन्निषेधपूर्वकं ज्ञानिनामनेकप्रकारत्वोक्तिः । एकादशे ज्ञानिनामनेकप्रकारत्वोक्तेः । द्वादशे ज्ञानिनां सदसत्प्रवृत्तिभ्यां विशेषस्वीकारे ज्ञानस्य मोक्षजनकत्वे सत्प्रवृत्तिसापेक्षत्वं स्यादित्याक्षेपस्य द्वितीयसूत्रोक्तकामचारश्रुतिबलेन निरासोक्तिः । कामचारश्रुत्या असत्प्रवृत्तेर्मोक्षाप्रतिबन्धकत्वसिद्धावपि सत्प्रवृत्तेस्तदकारणत्वासिद्ध्या ज्ञानस्य मोक्षजनने अग्निहोत्रादिसापेक्षत्वमस्त्येवेति शङ्कापरिहाराय किं ज्ञानपूर्वकालीनकर्मसापेक्षत्वमुच्यते, उत्तरकालीनकर्मसापेक्षत्वं वेति विकल्पं हृदि निधाय पूर्वतनप्रवृत्तेः ज्ञानोत्पत्त्युपयोगित्वे प्रमाणोक्त्या, त्रयोदशे आद्यस्य परिहारोक्तिः । उत्तरसत्प्रवृत्तेस्तु ज्ञानप्रतिष्ठापकत्वे संपूर्णफलजनकत्वे च प्रमाणोक्त्या, चतुर्दशे द्वितीयस्य परिहारोक्तिः । अत्र 'तथा तु' इति 'तु'शब्देन सत्प्रवृत्तेः पूर्णफलत्वोक्त्याऽसत्प्रवृत्तेः ह्रासहेतुत्वेनाल्पफलार्थत्वमपि सूचितम् । अत एव 'शब्दश्चातो कामचारः' इत्यत्र 'अतः' शब्देन 'तु'शब्दसूचिताल्पफलत्वमेव परामृष्टमित्यभिप्रेत्य भाष्ये अत इति अल्पफलत्वं सूचयतीत्युक्तम् । एवं च 'अन्यथाऽल्पफलं भवेत्' इत्यस्य–

'न निषिद्धानि वर्तेत पूर्णज्ञानफलेच्छया' इति वाक्यानुसारेण अन्यथाऽसत्प्रवृत्तौ 'ह्रासेनाल्पफलं भवेत्' इत्यर्थताऽपि वक्तव्या ।

तत्र च 'यदि ह वा' इति श्रुतिविरोधपरिहाराय पञ्चदशे तस्याः सावकाशत्वोक्तिः । षोडशे असत्प्रवृत्त्यकरणे बाधकाभावोक्तिः । सप्तदशे असत्प्रवृत्तित्यागे स्मृतिरूपप्रमाणोक्तिः । अष्टादशे 'शब्दश्चाऽतोऽकामचारे' इत्यनेन तत्रैव स्मृत्युपोद्बलकश्रुत्युक्तिः । 'अतः' इत्यनेन असत्प्रवृत्तिकरणे बाधकोक्तिः । त्यागे प्रमाणसद्भावेन ह्रासहेतुत्वेन चासत्प्रवृत्तेः पूर्वसूत्रेषु त्यागोक्तौ तर्हि ह्रासकारणत्यागज्ञानादेव संपूर्णफलसिद्धेर्न सत्कर्म कार्यमित्याशङ्कानिरासाय, एकोनविंशे विहितत्वात् सत्कर्मणः कर्तव्यत्वोक्तिः । 'शमदमाद्युपेत' इत्यत्र शान्त्यादेर्ज्ञानप्रतिष्ठापकतया,

(भाववोधः)
आनन्दवृद्धिहेतुतया, विहिततया च कर्तव्यत्वोक्तिः । अत्र पुनर्वर्णाश्रमोचितकर्मणो विहितत्वेन आनन्दाभिवृद्धिरूपफलत्वेन च कर्तव्यत्वोक्तिरिति च भेदः । विंशतितमे विहितमपि कर्म निष्फलत्वात् कथं कर्तव्यमित्याशङ्कानिरासाय वर्णाश्रमोचितकर्मणाऽऽनन्दाभिवृद्धौ ज्ञानसहकारित्वेन सफलत्वोक्तिरिति सूत्रक्रमः ।

## भावदीपः

नन्वेवं श्रुतिश्चास्तीत्ययुक्तम् । पौनरुक्त्यादिति चेन्न । यथा वियत्त्रये अस्ति तु गौण्यसम्भवादित्युक्तस्यैव शब्देभ्य इत्यनेन प्रपंचनं तथात्रापि श्रुत्यन्तरोक्त्या प्रागुक्तस्यैव प्रपञ्चनत्वाददोषः । उक्तं च तत्वप्रदीपे । अबाधाच्चेत्यादिसूत्राणि उदाहृत्योक्तमेवार्थं प्रमाणांतरैः प्रपञ्चयतीति । प्रपंचनमपि प्रागुक्तनिषेधश्रुतौ ज्ञानिपरत्वस्यास्फुटत्वादत्र चैवं विदि तत्वादिना स्पष्टत्वायेति ज्ञातव्यम् ।

## अभिनवचन्द्रिका

चरतिर्गतिरिति ॥ भक्षणस्य पृथगुक्तत्वादिति भावः । भाष्ये यो यो देवमनोगत इति । यः चतुर्मुखमनोगतः सनियमेन धर्मः, तदितरदेवमनोगतस्तु प्रायेण धर्म इत्यर्थः । एतेन चन्द्रसुग्रीवकृतस्वोच्चदारपरिग्रहस्य धर्मत्वप्रसङ्गो निरस्तः ।

पूर्वपक्षस्तु– न सदसत्प्रवृत्तिभ्यां ज्ञानिनो विशेषोऽस्ति, 'येन स्यात्केन स्यात्' इति यथेष्टप्रवृत्तिविधानात् । न हि मोक्षादतिशयितं फलमस्ति, यत् सत्प्रवृत्त्या भवेत् । नाऽपि मोक्षे दुःखमस्ति । यदसत्प्रवृत्त्या भवेत् । अतः सदसत्प्रवृत्तिभ्यां ज्ञानिनो विशेषाभावात् आद्याधिकरणोक्तं कर्मणो ज्ञानशेषत्वमयुक्तमिति ॥

सिद्धान्तस्तु– अस्त्येव ज्ञानिनः सदसत्प्रवृत्तिभ्यां विशेषः । 'येन स्यात्केन स्यात्' इत्यस्य निषेधशास्त्राबद्धतया ज्ञानिस्तुतित्वेनाविधित्वात् । अथवा अनुमतिमात्रमेतत् । ननु सदसत्प्रवृत्तिभ्यां विशेषाङ्गीकारे असत्प्रवृत्त्या प्रतिरुद्धत्वात् न ज्ञानेन मोक्षः स्यादिति चेत्, न । 'कामचाराः कामभक्षा' इति यथेष्टाचारेऽपि मोक्षाऽभिधानेन असत्प्रवृत्तेरप्रतिबन्धकत्वात् । किं च प्रारब्धस्यापि पापस्योपमर्देन 'ॐ मित्युच्चार्य' इति श्रुतौ मोक्षः श्रूयते । ततश्च ज्ञानिकृतस्य पापस्य

(अभिनवचन्द्रिका)

मोक्षाप्रतिबन्धकत्वमनायासेन सिद्धम् । अथवा 'प्रातरुत्थायाऽथ सन्ध्यामुपासीत' इत्यादौ ज्ञानिनः सन्ध्यावन्दनाद्याऽऽचारपरामर्शात् विधिबन्धवर्जितत्वेन कामचरणमेव 'येन स्यात्केन स्यात्' इति श्रुत्योच्यते । न तु निषिद्धं कर्तव्यमेवेति विधीयते । 'ब्राह्मणो न हन्तव्य' इत्यपवादश्रवणात् । अथवा 'येन स्यात्केन स्यात्' इति श्रुत्या अनुष्ठेयानां मध्य एव केषांचित्स्वेच्छयाऽनुष्ठानं, केषांचित्परित्याग इति कामचरणमुच्यते । 'तेनेदृश एव' इति साम्याभिधानात् । अथवा पुनरस्तु त्रैवर्णिकानां वेदधारणविधिवत् 'येन स्यात्केन स्यात्' इति विधिर्ज्ञानिनाम् ।

ननु येन स्यात्केन स्यात्' इति विध्यतिदूरत्वेन ज्ञानिनां स्तुतिरेव न विधिः । तैरपि सामान्यविधिस्वीकारादिति चेत्, न 'येन स्यात्केन स्यात्' इत्यस्य विध्यतिदूरत्वे सन्ध्यावन्दनादि-सामान्यविध्यभावस्यानेन वाक्येनोक्तत्वात्, स्वेच्छाचरणविधेश्च त्वयाऽङ्गीकारात् सर्वविध्यतिदूरत्वेन स्तुतित्वप्रसङ्गात् । न च तदिष्टम् । तस्येश्वरधर्मत्वात् । भवेदेतद्वाक्यं स्वेच्छाचरणविधायकं, यदि ज्ञानिनां स्वेच्छाचरणविधिरस्तीत्यत्र किञ्चित्प्रमाणं स्यात् । न च तदस्तीति नेदं विधिवाद्यभि-मतमिति चेत्, न । ज्ञानिनां स्वेच्छाचरणविधेः 'विधिर्भावे प्रजापतेः' इति प्रमाणसिद्धत्वात् ।

ननु केन स्यादिति वाक्यस्य 'प्रातरुत्थाय' इति वाक्यानुसारेण जैमिनिमतमवलम्ब्य ज्ञानिभिः समस्तं कार्यमित्यर्थ उक्तः । तथा 'यस्त्वात्मरतिरेव स्यात्' इति वाक्यानुसारेण स्वेच्छा-चरणाऽनुज्ञानमर्थ उक्तः । पुनश्च 'यथाविधानम्' इत्याद्यनुसारेण स्वेच्छाचरणविधायकत्वमुक्तम् । ततश्च इदं वाक्यं न कस्याप्यर्थस्य निश्चायकं स्यादिति चेत्, न । ज्ञानिनां त्रिविधत्वेन, तत्तदधि-काराऽनुसारेण तत्तन्निश्चायकत्वसम्भवात् । तत्र विधिनियता मनुष्याः । अनियता देवाः । स्वेच्छानियतश्चतुर्मुख इति विवेकः । ततश्च 'प्रातरुत्थाय' इत्यादीनां यस्त्वात्मरतिरित्यादीनां, तथा 'यथाविधानमपर' इत्यादिवाक्यानां चाऽविरोधो भवति न तु सत्प्रवृत्त्या ज्ञानिनां विशेषश्चेत् तत्प्रवृत्तिसमुच्चितमेव ज्ञानं मोक्षसाधनमिति तद्विधुराणां ज्ञानिनां मोक्षो न स्यादिति चेत्, न ब्रूमो वयम् अग्निहोत्रादिसमुच्चितस्यैव ज्ञानस्य मोक्षसाधनत्वमिति । येनोक्तदोषः स्यात् । न चैवम् । किं नाम केवलस्यैव मोक्षहेतुत्वं कामचाराणामपि मोक्षश्रवणात् । किं च ज्ञानार्थं तावत् सर्वाणि कर्माण्यपेक्षितानि । ततो निष्पन्नज्ञानस्य मोक्षप्राप्त्यर्थं न तान्यपेक्षितानि । तद्यथा गतिसाधनत्वा-द्गतिनिष्पत्त्यर्थमपेक्षितोऽप्यश्वः निष्पन्नगतेर्ग्रामप्राप्त्यर्थं नापेक्षितो भवति । न चैवं सति ज्ञानिना सत्

(अभिनवचन्द्रिका)

कार्यम् । असत् त्याज्यं सदसदनुष्ठानपरित्यागाभ्यां किं ? विशेषाऽभावादिति वाच्यम् । 'आचार्याद्विद्यामवाप्य एतमात्मानमभिपश्यन् शान्तो भवेत्' इति माठरश्रुतौ ज्ञानिनोऽपि तद्विधानात् 'ब्राह्मीं वाव ते उपनिषदं प्रब्रूम' इति श्रुतौ शमादीनां ज्ञानाङ्गत्वाभिधानाच्च ।

ननु सदसत्प्रवृत्तिभ्यां ज्ञानिनो विशेषः । कथं तर्हि 'एवं विन्निखिलं भक्षयीत' इति तस्य निषिद्धाऽन्नभोजनेऽपि ह्रासाभावोक्तिरिति चेत्, तस्य प्राणात्ययविषयत्वात् 'न वा अजीविष्यामि मानखादन्नुक्तं ज्ञानिना न निषिद्धं त्याज्यमिति तत्र वक्तव्यम् । निषिद्धाकरणे बाधकसद्भावान्निषिद्धं कर्तव्यमित्युच्यते उत विधिसद्भावात्, उत निषेधकाभावात् । अथ करणे बाधकाभावात् । नाद्यद्वितीयौ असिद्धेः । न तृतीयः 'अतीतानागतज्ञानी त्रैलोक्योद्धरणक्षमः । एतादृशोऽपि नाऽऽचारं श्रौतं स्मार्तं परित्यजेत्' इति निषेधश्रवणात् । न चतुर्थः । अपूर्णफलप्राप्तेर्बाधकत्वात् । ननु अस्तु निषिद्धाचरणे फलह्रासादिबाधकसद्भावात्तत्परित्यागः तथापि न ज्ञानिना वर्णाश्रमोचितं कार्यम् । ह्रासकारणाभावे ज्ञानादेव पूर्णफलसिद्धेरिति चेत् न । पश्यन्नपीममात्मानं कुर्यात्कर्माऽविचारयन्निति विहितत्वात् । ननु विहितत्वेऽपि न ज्ञानिना तदनुष्ठेयम् । फलाभावात् ह्रासकारणाभावे ज्ञानादेव पूर्णफलसिद्धेः । अन्यथा समुच्चयवादापत्तिरिति चेत्, न । यथा मन्त्रिणं विनापि कार्यकरणसमर्थस्य राज्ञः फलातिशयहेतुत्वेन मन्त्री सहकारी, एवं सदाचारं विनापि मोक्षदानसमर्थस्यापि ज्ञानस्य फलातिशयहेतुत्वेन सहकारिणः सदाचारस्यावश्यकत्वात् । अतो ज्ञानिनां सदसत्प्रवृत्तिभ्यां विशेषसद्भावेऽपि मोक्षो नियत एवेति सिद्धम् ।

## वाक्यार्थमुक्तावली

**न केवलं स्मृतिरेवेति ॥** स निखिलं भक्षयीतेत्यादिश्रुतेः कथं स्मृतिविरोधेन सावकाशत्वमिति शङ्कापरिहारायेति पूरणीयम् । **अकामचारे** कामेनागम्यगमनाभक्ष्यभक्षणविशेषसवनानामकर्तव्यत्वे श्रुतिश्चास्तीत्यर्थः । **चरतेर्भक्षणार्थत्वात्** भक्षयीतेति पृथगुक्तेः चरेदित्यस्यार्थमाह **॥ चरतेर्गतिरिति ॥** चरगतिभक्षणयोरिति धातोरिति भावः । कामचरतिमिति क्रियाविशेषणम् । कामचरणमिति वा । यद्यप्यचोदनाप्रपञ्च इत्यदोषः । तदुक्तं तत्त्वप्रदीपे अबाधाच्चेत्यादिसूत्राणां उदाहृत्योक्तमेवार्थं प्रमाणान्तरैः प्रचुरतरं प्रपञ्चयतीति । अथ इत्यल्पफलत्वं इति भाष्यस्यात एवाग्नीन्धनेति सूत्रे । तथापि तद्विधेरित्यत्र विपर्ययः । अन्यथा अल्पफलं भवेदित्युक्तरीत्या उक्तमल्पफलत्वं स्मारयतीत्यर्थः ।

## तत्त्वसुबोधिनी

चरतिर्गतिरिति भक्षणस्य पृथगुक्तेरिति भावः । पूर्वं शमाद्युपेत स्यात्तथापीत्यत्र सत्प्रवृत्तेः पूर्णफलत्वसूचने असत्प्रवृत्तेः अल्पफलहेतुत्वमित्यर्थादागतं तदिह सूत्रे अतःशब्देन परामृश्यते इत्यभिप्रेत्य भाष्येऽत इत्यल्पत्वं सूचयतीत्युक्तं तदवतारयति ॥ **चतुर्थमिति** ॥ अत्राद्ये केन स्यादिति वाक्यस्य यथेष्टाचारविधित्वापकरणाय सर्वज्ञानिसाधारणस्तुतिपरत्वेन अनुज्ञानमात्रपरत्वेन वा सावकाशत्वोक्तिः । द्वितीये असत्प्रवृत्त्या कुण्ठितशक्तेः मानस्य मोक्षसाधनत्वाभावो न इत्यत्र श्रुतिरूपप्रमाणोक्तिः । तृतीये तत्रैव कैमुत्योक्तिः । चतुर्थे कामचाराणां ज्ञानिनां मोक्षयोग्यत्वे तद्विजिज्ञासूनां कामचाराणां ज्ञानयोग्यत्वं स्यादिति प्रतिबन्दिनिरासः । पञ्चमे केन स्यादित्यस्य जैमिनिमतानुसारेणार्थान्तरोक्तिः । षष्ठे प्रथमसूत्रोक्तानुज्ञानस्य ज्ञानिविशेषपरत्वज्ञापनाय विवरणम् । तर्हि अस्य द्वितीयत्वं स्यादिति वाच्यम् । जैमिनिमतापेक्षया स्वमते साम्योक्तिः स्वारस्यज्ञापनाय तदानन्तर्यस्य युक्तत्वात् । सप्तमे पुनः स्वमतेनैव केन स्यादिति श्रुतेः स्वेच्छाचारविध्याक्षेपपरिहारः । अष्टमे सप्तमोक्तस्वेच्छाचारविध्याक्षेपपरिहारः । नवमे ज्ञानिनां स्वेच्छाचारविधौ स्पष्टप्रमाणोक्तिः । दशमे केन स्यादिति श्रुतेः अव्यवस्थितत्वमात्रमाशङ्क्य तन्निषेधपूर्वकं ज्ञानिनामनेकप्रकारत्वोक्तिः । एकादशे ज्ञानिनामनेकप्रकारत्वोक्तेः प्रकृतोपयोगोक्तिः । द्वादशे ज्ञानिनां सदसत्प्रवृत्तिभ्यां विशेषाकारज्ञानस्य मोक्षजनकत्वे सत्प्रवृत्तिसापेक्षित्वं स्यादित्याक्षेपस्य कामचारश्रुतिबलेन निरासः । तथापि ज्ञानस्य मोक्षजनकत्वे अग्निहोत्रादिसापेक्षत्वमस्त्येवेति शङ्कापरिहाराय किं ज्ञानपूर्वकालीनकर्मसापेक्षत्वमुच्यते । उत उत्तरकालीनकर्मसापेक्षत्वमिति विकल्पं हृदि निधाय त्रयोदशे आद्यस्य परिहारः, उत्तरत्प्रवृत्तेः ज्ञानप्रतिष्ठापकत्वादौ प्रमाणोक्त्या द्वितीयस्य परिहारः । पञ्चदशे यदि ह वेति श्रुतिपरिहाराय तस्याः सावकाशत्वोक्तिः । षोडशे असत्प्रवृत्तिकरणे बाधकाभावोक्तिः । सप्तदशे असत्प्रवृत्तित्यागे स्मृतिरूपप्रमाणोक्तिः । अष्टादशे तत्रैव स्मृत्युपोद्बलकश्रुत्युक्तिः । तत्रात इत्यनेनासत्प्रवृत्तिकरणे बाधकोक्तिः । एकोनविंशे विहितत्वात् कर्मणः कर्तव्यत्वोक्तिः । विंशे आनन्दाभिवृद्धौ कर्मणो ज्ञानसहकारित्वे सफलत्वोक्तिरिति सूत्रक्रमः ॥

## वाक्यार्थमञ्जरी

अकामचारे कामतश्चरणाकरणे शब्दः न कामचरतिं चरेदिति श्रुतिश्चास्तीत्यर्थः । चरतिर्गतिरिति भक्षणस्य पृथगुक्तेरिति भावः । पूर्णफलार्थं कर्तव्यमित्यत आह ॥ **ह्रासकारणेति** ॥

## सूत्रभाष्यम्

**॥ ॐ विहितत्वाच्चाऽऽश्रमकर्माऽपि ॐ ॥ ३२ ॥**

न केवलं निपिद्धाकरणे पूर्यते । कर्तव्यं च वर्णाश्रमविहितं कर्म ॥

'पश्यन्नपीममात्मानं कुर्यात्कर्माऽविचारयन् । यदात्मनः सुनियतमानन्दोत्कर्षमाप्नुयात्' इति कौपारवश्रुतौ विहितत्वाच्च । अपिशब्दो वर्णधर्मसमुच्चयार्थः ।

## तत्त्वप्रकाशिका

नन्वेवं निपिद्धाचरणे फलह्रासादिबाधकसद्भावादस्तु ज्ञानिनो निषिद्धवर्जनं न तु सत्कर्मकरणम् । ह्रासकारणाभावे ज्ञानादेव पूर्णफलसिद्धेरित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ विहितत्वाच्चेति ॥ सुनियतं वर्णाश्रमोचितम् । सूत्रेऽनुक्तो वर्णधर्मः किमर्थं भाष्यत इत्यत आह ॥ अपीति ॥

## भावदीपः

तुशब्दः संपूर्णफलार्थत्वमित्युक्तेन गतार्थत्वमाशङ्क्य तदाक्षिपति ॥ ह्रासेति ॥

## वाक्यार्थमुक्तावली

आश्रमकर्मापि शमदमाद्युपेतं स्यादित्यस्य प्रपञ्चनमेतत् । अन्यथा तत्र शमादिकं सर्वसाधारणमेव विहितं न तु वर्णाश्रमविहितमिति शङ्काप्रसरादिति ज्ञेयम् ।

## वाक्यार्थमञ्जरी

न केवलं निषिद्धं न कार्यं किन्तु आश्रमाद्युचितकर्म च कार्यं कुतः कुर्यात्कर्मेति श्रुतौ विहितत्वादित्यर्थः ॥ समुच्चयवादेति ॥ मोक्षस्य ज्ञानकर्मोभयसाध्यत्ववादेत्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ सहकारित्वेन च ॐ ॥ ३३ ॥**

'यथा राज्ञः सहकार्येव मन्त्री तथाऽप्यृते तं क्षितिपः कार्यमृच्छेत् । एवं ज्ञानं कर्म विनाऽपि कार्यं सहायभूतं न विचारः कुतश्चित्' इति कमठश्रुतौ सहकारित्वोक्तेश्च ।

(सूत्रभाष्यम्)

'ज्ञानान्मोक्षो भवत्येव सर्वाकार्यकृतोऽपि तु ।
आनन्दो ह्रसतेऽकार्याच्छुभं कृत्वा च (तु) वर्धते' इति (च) ब्रह्माण्डे ॥

'सर्वदुःखनिवृत्तिश्च(स्तु)ज्ञानिनो निश्चितैव हि ।
उपासया कर्मभिश्च भक्त्या चाऽऽनन्दचित्रता' इति बृहत्तन्त्रे ॥

'धर्मस्वरूपचित्रत्वाद्यो यो देवमनोगतः ।
स एव धर्मो विज्ञेयो न ह्येते लोकसम्मिता' इति च पाद्मे ॥

॥ इति कामचाराधिकरणम्(स्तुत्यधिकरणम्) ॥ ४ ॥

## तत्त्वप्रकाशिका

विहितत्वेऽपि न सत्कर्म ज्ञानिना कार्यम् । फलाभावात् । सम्पूर्णफलस्य ह्रासकारणाभावे स्वत एव सिद्धेः । अन्यथा समुच्चयवादापत्तेरित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ सहकारित्वेनेति ॥ कर्तव्यमेव ज्ञानिना सत्कर्म सम्पूर्णफलसिद्धौ कर्मणो ज्ञानसहकारित्वेनोक्तत्वात् । न चैवं समुच्चयवादापत्तिः । विनापि कर्म ज्ञानमात्रेण मोक्षस्वरूपसिद्धेरिति भावः । यद्यपि क्षितिपो मन्त्रिणमृते कार्यं प्राप्नोति तथापि मन्त्री सहकारी सम्पूर्णकार्यसिद्धेः । एवं यद्यपि ज्ञानं कर्म विनापि मोक्षकार्यं साधयेत्तथापि कर्म सहायभूतम् । फलाधिक्यहेतुत्वादित्यर्थः । अत्र स्मृतिं चाह ॥ ज्ञानादिति ॥ यदि सम्पूर्णानन्दप्राप्तिमन्तरेण मोक्षस्वरूपस्य ज्ञानमात्रसाध्यस्य पृथगभावादित्यत आह ॥ सर्वेति ॥ सर्वदुःखनिवृत्तिर्ज्ञानसाध्यो मोक्ष इति भावः । यदुक्तमसत्प्रवृत्त्याऽऽनन्दह्रास इति न तद्युक्तम् । ब्रह्मादीनां पुत्रिकाकामाद्यसत्प्रवृत्त्या ह्रासाभावादित्यत आह ॥ धर्मेति ॥ अन्येषामेवमभावात्तेषामेवायं विशेषः कथमित्यत आह ॥ न हीति ॥ अतो ज्ञानिनां सदसत्प्रवृत्तिभ्यां विशेषसद्भावेऽपि मोक्षो नियत एवेति सिद्धम् ।

## भावदीपः

कर्तव्यं चेत्यादिपूर्वभाष्यमनुवर्त्यात्र भाष्यस्थपञ्चम्याः शेषोक्तिपूर्वमन्वयमाह ॥ कर्तव्यमेवेति ॥ ननु श्रुतौ सहायभूतत्वं कर्मण उक्त्वा सम्पूर्णफलसिध्यर्थत्वादित्यादिना तदुपपादनमकृत्वा तद्विरुद्धं कर्म विनापि कार्यमृच्छेदिति किमर्थमुक्तमित्यतो भावमाह ॥ न चैवमित्यादिना ॥ दुर्गमत्वादुक्त-

(भावदीपः)

मर्थं ज्ञानादिति **स्मृत्यनुरोधेन** श्रुत्यारूढं दर्शयति ॥ **यद्यपीति** ॥ **अत्र स्मृतिं चेति** ॥ यद्यपि ज्ञानामित्युक्तेऽर्थ इत्यर्थः । सर्वदुःखनिवृत्तिरुपलक्षणम् । आनन्दानुभवश्च बोध्यः । अत एव स्मृतौ चित्रतेत्युक्तिः । विवृतमेतदानन्ददश्च मुक्तानामिति जिज्ञासासूत्रानुभाष्यसुधायाम् ॥ **पुत्रिका-कामेति** ॥ व्यक्तमेतद्वाजसनेये तृतीयाध्याये चतुर्थब्राह्मणे स इममेवात्मानं द्वेधा पातयत् । ततः पतिश्च पत्नी चाभवताम् । तां समभवदित्यादिना ॥ **अत इति** ॥ केन स्यादित्यादेर्ज्ञानिनां यथेष्टाचारविधिपरत्वाभावात्कर्मणः सहकारिमात्रत्वाच्चेत्यर्थः ॥ **विशेषेति** ॥ वृद्धिह्रासरूपेत्यर्थः ॥ **नियत एवेति** ॥ तथा चानियमः सर्वेषामित्युक्तमयुक्तमिति भावः ।

## वाक्यार्थमुक्तावली

उक्तत्वादाश्रमकर्मकार्यमिति सूत्रार्थः । तदङ्गतयेत्यस्य प्रपञ्चनमेतत् । सर्वदुःखनिवृत्तिरित्युप-लक्षणम् । प्रचुरतरानन्दव्यक्तिश्चेति ज्ञेयम् । अस्मिन् अधिकरणे विंशतिसूत्राणि ज्ञानिनः सदसत्प्रवृत्तिभ्यां विशेषसमर्थनाय केन स्यादिति वाक्यस्य आषष्टं विधित्वाभावमङ्गीकृत्य आद्ये सदसत्प्रवृत्तिभ्यां विशेषाङ्गीकारे बाधिकायाः कामचाराणां साम्यश्रुतेः स्मृतित्वानुमतित्वाभ्यां सावकाशत्वोक्तिः । द्वितीये सत्प्रवृत्त्याविशेषे मोक्षाभावयुक्तिबाधमाशङ्क्य कामचाराणामपि श्रुत्या मोक्षोक्तिः । तृतीये कैमुत्यन्यायेन तदुक्तिः । चतुर्थे कामचाराणां मोक्षाङ्गीकारेऽविशेषाज्जिहा-सूनामपि कामचाराणां ज्ञानं स्यादिति बाधकोद्धारः । पञ्चमे जैमिनीसंमत्यापि सदसत्प्रवृत्ति-विहित्वाभावस्य कथनं सदाचारपरत्वेन श्रुतेरर्थान्तरस्य च परिचोदना । षष्ठे पुनः सोक्तस्थापनेन जैमिनिमते साम्यश्रुतेः अमुख्यत्ववर्णनम् । सप्तमाष्टमनवमेषु स्वेच्छाचारविधित्वमङ्गीकृत्य स्वमते-नैवार्थान्तरवर्णनम् । तत्र सप्तमे हिरण्यगर्भाभिप्रायेण सामान्यतो ज्ञानिनां स्वेच्छाचारविधित्वमुक्त्वा ज्ञानिनामप्येवं स्यादिति प्रतिबन्दीबाधनिरासः । अष्टमे विधित्वस्याक्षेपेण भगवद्वशत्वान्यथानु-पपत्त्या तत्समर्थनम् । नवमे श्रुत्या तत्समर्थनम् । दशमे एकादशे चार्थत्रयस्य विरोध-माशङ्क्याधिकारिभेदेनैकवाक्यतोक्तिः । द्वादशत्रयोदशचतुर्दशमेषु सत्प्रवृत्तेर्विशेषहेतुत्वे सविशेषमोक्ष एवेति समुच्चयवादापत्तिरिति बाधकोद्धारः । तत्र द्वादशे मोक्षस्य सत्प्रवृत्त्यनपेक्षत्वे अत एवेति द्वितीयसूत्रोक्त कामचाराणामपि मोक्षस्तुत्यतिदेशः । त्रयोदशे तस्याः श्रुतेः असत्प्रवृत्तेर्मोक्षा-प्रतिबन्धकत्वमात्रपर्यवसन्नतया सावकाशत्वेन सत्प्रवृत्तेर्मोक्षहेतुत्वमाशङ्क्य सत्प्रवृत्तेर्ज्ञान

(वाक्यार्थमुक्तावली)

एवापेक्षयोक्तिः । चतुर्दशे ज्ञानोत्तरसत्प्रवृत्तेर्मोक्षाहेतुत्वे वैयर्थ्यमाशङ्क्यानन्दातिशयाय ज्ञानदार्ढ्य-हेतुतया सार्थक्योक्तिः । पञ्चदशे सदसत्प्रवृत्तिभ्यां आनन्दवृद्धिह्रासससद्भावे निषिद्धभक्षणेऽपि वृद्धिह्रासभावोक्तिविरोधमाशङ्क्य निखिलं भक्षयीत एवमेव स भवतीति श्रुतेः प्राणात्ययविषयत्वेन वाक्यशेषोक्तलिङ्गदर्शनेन सावकाशत्वोक्तिः कुत एवं श्रुतेस्सावकाशत्वम् । ज्ञानिनः सर्वदा सर्वभक्षणाभ्यनुज्ञानमेव किं न स्यादिति शङ्कापरिहाराय निषिद्धाकरणे बाधकाभावस्य करणं श्रुतिस्मृतिबाधकस्य चाचोदनाचापवदति हीत्येतत्प्रपञ्चनाय सूत्रत्रयोक्तिः । अस्तु फलह्रासादि-बाधकसद्भावान्निषिद्धवर्जनम् । न तु सत्कर्मकरणह्रासकारणाभावज्ञानादेव सम्पूर्णफलसिद्धेरिति शङ्कापरिहाराय सत्कर्मकरणे साधकस्याकरणे फलह्रासबाधकस्य च समाध्युपेतस्य तदङ्गतयेत्येतत्प्रपञ्चनमुखेन सूत्रद्वये प्रतिपादनमिति सूत्रक्रमः ।

## वाक्यार्थविवरणम्

**सर्वदुःखनिवृत्तिरिति** ॥ सर्वदुःखसाधनत्वाल्लिङ्गदेहः सर्वदुःखपदेनोच्यत इति ज्ञातव्यम् ॥ **विशेषेति** ॥ आनन्दाभिवृद्धितद्ध्रासरूपविशेषेत्यर्थः ॥ **मोक्षो नियत इति** ॥ लिङ्गशरीर-भङ्गरूपमोक्षो नियत इत्यर्थः ।

## वाक्यार्थमञ्जरी

**मोक्षहेतुज्ञानस्य सहकारित्वेन विहितं कर्म तु कार्यमित्यर्थः । श्रुतिं व्याचष्टे ॥ यद्यपीति ॥**

**॥ इति स्तुत्यधिकरणम् ॥ ४ ॥**

## ५. उभयलिङ्गाधिकरणम्

### सूत्रभाष्यम्

**॥ ॐ सर्वथाऽपि तु त एवोभयलिङ्गात् ॐ ॥ ३४ ॥**

सर्वप्रकारेणोत्साहेऽपि ये ज्ञानयोग्यास्त एव ज्ञानं प्राप्नुवन्ति नान्ये । 'य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः'(छां.उ.८-७-३) इति श्रुत्याऽऽचार्योपदेशसाम्येऽपि विरोचनो विपरीतज्ञानमापेन्द्रः सम्यग्ज्ञानमित्युभयविधलिङ्गात् ।

### तत्त्वप्रदीपिका

अयोग्या अपि क्वापि तप आदिभिर्महोत्साहैः कथञ्चिज्ज्ञानमाप्नुयुः । योग्यताया एव हेतुत्वे महोत्साहवैयर्थ्यादित्यत आह– ॐ सर्वथाऽपि तु त एवोभयलिङ्गात् ॐ ॥ तपोगुरुशुश्रूषाश्रवणादिभिरप्ययोग्या न ज्ञानमाप्नुवन्ति । तत्वजिज्ञासू हीन्द्रविरोचनौ द्वात्रिंशतं वर्षाणि प्रजापतौ ब्रह्मचर्यमूषतुः । तस्मादेवाऽऽचार्या'य आत्मा' इत्यादिश्रुत्यात्मकं समानमुपदेशं समानकालमेव प्रापतुः । तथाऽपि विरोचनो विपरीतज्ञानं सद्यः सम्प्राप्य प्रतस्थे । इन्द्रः सम्यग्ज्ञानमापेत्युभयत्रापि लिङ्गात् । अयोग्य उत्साहेनापि न ज्ञानं प्राप्नोति । तुशब्दाद्विपर्ययं प्राप्नोतीति च । अमृतार्थं प्रयतमान इव राहुः शिरश्छेदम् । योग्य उत्साहेन ज्ञानं प्राप्नोति, अमृतमिवामराः । योग्यतैव ज्ञानहेतुरिति न ब्रूमः । येनोत्साहवैयर्थ्यम् । योग्यस्य महोत्साह इत्येव ब्रूमः । पुनरपि चिरकालममरासुरगुरुचरणपरिचर्यया हि विबुधपतिः परमविबोधमवाप । 'वसापराणि द्वात्रिंशतं वर्षाणी' इत्यादिनाऽसकृत्परिवास्य हि प्रजापतिरुपदेशमुपसञ्जहार ।

### तत्त्वप्रकाशिका

अत्र भगवत्प्राप्तिसाधनज्ञानस्याधिकारिमात्रप्राप्यत्वमहिम्नो वर्णनादस्ति शास्त्रादिसङ्गतिः । अनधिकारिप्राप्यत्वे मुक्त्ययोग्यानामपि मोक्षप्रसङ्गात्समर्थनीयमेतत् । प्रकृतं ज्ञानमत्र विषयः । किमधिकारिभिरेवाप्यत उतानधिकारिभिरपीति सन्देहः । उभयथापि लोके दर्शनं सन्देहबीजम् । अनधिकारिभिरपि ज्ञानमाप्यत इति पूर्वः पक्षः । अधिकाराभावेऽपि महाप्रयत्नेन प्राप्तुं शक्यत्वात् ।

(तत्त्वप्रकाशिका)

वेदानधिकारिणामपि **प्रयत्नेन तत्प्राप्तिदर्शनात्। अतोऽयोग्यैरपि ज्ञानस्य प्राप्तुं शक्यत्वादयोग्यानामपि** मोक्ष इति। **सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ॥ सर्वथापीति ॥** देशकालगुरूपसत्ति-श्रवणाद्यनेकोत्साहेऽपि **योग्यानामेव ज्ञानप्राप्तिर्भवति नायोग्यानाम्।** कुतः। य आत्मेतिश्रुति-रूपेणेन्द्रविरोचनयोः **प्रजापतेराचार्यस्योपदेशसाम्येऽपि योग्यत्वादिन्द्र एव** सम्यग्ज्ञानं प्राप्तो न त्वयोग्यो विरोचनः। प्रत्युत **विपरीतज्ञानमेवापायमात्मापहतपाप्मत्वादिलक्षणः स** जिज्ञास्य इति प्रजापतिनोपदिष्टे **कोऽसाविति ताभ्यां पृष्टेन प्रजापतिनोक्तम्।** य एषोऽन्तरक्षणि पुरुषो दृश्यते 'एष आत्मा' इति। **तच्छ्रुत्वेन्द्रेणापहतपाप्मत्वादिलक्षणोऽक्षिस्थो हरिरात्मेति** ज्ञातत्वात्। विरोचनेन तु चक्षुषि **प्रतीयमानप्रतिबिम्ब एवापहतपाप्मत्वादिलक्षणात्मेति कल्पितत्वादिति** भावः। अविजिघत्सोऽपिपास इति **बुभुक्षादिना पीडाभाव उच्यते। न ह्यस्य घटादेरिवान्वेषणं** युज्यत इत्यतः स विजिज्ञासितव्य इति ॥

## गुर्वर्थदीपिका

उभयथापि लोके दर्शनमित्यत्रावैष्णवविप्रैर्वैष्णवविप्रैश्च वेदाध्ययनस्य क्रियमाणत्वादित्यर्थः। वेदानधिकारिणामपीत्यत्र वेदानधिकारिणां योग्यस्त्रीशूद्रादीनामपि स्वयोग्यज्ञानप्राप्तिदर्शनाद्वेदान्त-जनितज्ञानमप्ययोग्यानां भवत्वित्यर्थः। प्रतिबिम्ब एवेत्यत्र स्वप्रतिबिम्ब एवेत्यर्थः। एवं बिम्बप्रतिबिम्बयोरैक्यादहमेव ब्रह्मेति ज्ञातवानिति भावः। अविजिघत्स इत्यत्र जग्धुमिच्छा जिघत्सा पातुमिच्छा पिपासा। उभयविधेच्छाया अपि नवनीतभक्षके क्षीरपातरि च कृष्णेऽवक्तु-मशक्यत्वात्तन्निमित्तपीडाभाव एव तदुभयाभाव इति भावः।

## भावबोधः

**अधिकारिमात्रप्राप्यत्वमहिम्न इति ॥** नियताधिकारिकाध्ययनस्य अनधिकारिप्राप्यत्ववत्। तथाभूतापरोक्षज्ञानस्यापि अनधिकारिप्राप्यत्वे पूर्वाधिकरणोक्तस्वफलजनकत्वनियमो न स्यादिति पूर्वाक्षेपादनन्तरसङ्गतिरिति भावः। अत एव वेदानधिकारिणामपीति। अध्ययनप्रतिबन्दीग्रहणं करिष्यति ॥ **किमिति ॥** अत्रापरोक्षज्ञानं किमनधिकारिभिरपि प्रप्यमुताधिकारिभिरेवेति चिन्ता। तदर्थं किं ज्ञानं गुरूपसत्त्यादिप्रयत्नमात्रसाध्यं उत योग्यतासाध्यमिति। तदर्थं ज्ञानस्य योग्यता-साध्यत्वे प्रमाणं नास्त्युतास्तीति। सर्वथापीति। सर्वप्रकारेणोत्साहेऽपीति सूत्रभाष्याभ्यां सूचितयुक्तिमाह— **अधिकाराभावेऽपीति ॥**

(भाववोधः)

ननु 'असार्वत्रिकी' इत्यत्र ज्ञानस्य नियताधिकारित्वेनोक्तत्वात् कथं अधिकाराभावे तत्प्राप्तिः स्यादित्यत आह– **वेदानधिकारिणामिति** ॥ हरिभक्त्यादिनियताधिकारस्याप्यध्ययनस्यान्यायेनाधिकारिणामपि प्रयत्नेन प्राप्तिदर्शनान्न विरोध इति भावः । श्रुतेरेवोपदेशत्वेन कथं श्रुत्योपदेशसाम्येऽपीत्युक्तमित्यत आह– **श्रुतिरूपेणेति** ॥ 'अविजिघत्सो पिपास' इति पदयोरिच्छाभावार्थत्वनिरासायाह– **बुभुक्षादिनेति** ॥ स विजिज्ञासितव्य इत्यस्य पौनरुक्त्यपरिहारार्थमाह– **न हीति** ॥

## भावदीपः

सूत्रादौ त एवेत्युक्तेराह ॥ **अधिकारिमात्रेति** ॥ महाप्रयत्नेनानधिकारिभिरपि प्राप्यत्वमस्तीति शङ्कानिरासेनेति भावः । एतेन पूर्वत्र सहकारित्वेन चेत्यत्र शुभं कृत्वा च वर्धत इत्युक्तदिशा यथा ज्ञानिभिर्महाप्रयत्नेन मुक्तावाधिक्यं प्राप्यते । तथाऽनधिकारिभिरपि महाप्रयत्नेन ज्ञानं चाप्यतामिति शङ्कोदयात्पूर्वसङ्गतिरपि सूचिता ॥ **मोक्षप्रसङ्गादिति** ॥ तथा च यावदधिकारमवस्थितिरित्यादौ मुक्तिस्थितेः प्राचीनयोग्यतानुसारित्वाद्युक्तिरयुक्तेति भावः ॥ **लोक इति** ॥ अध्ययनादेरधिकार्यनधिकारिभ्यां प्राप्यत्वदर्शनादिति भावः । सर्वेत्यादिभाष्यसूचितयुक्तिमाह ॥ **अधिकारेति** ॥ असम्भावितमेतदित्यत आह ॥ **वेदेति** ॥ अवैष्णवैरप्याप्यत्वदर्शनादित्यर्थः ॥ **अत इति** ॥ प्रयत्नसाध्यत्वादित्यर्थः ॥ **अयोग्यैरिति** ॥ आसुरस्वभावैर्मिश्रस्वभावैश्चेत्यर्थः । भाष्यं व्याचष्टे ॥ **देशकालेति** ॥ 'पर्वताग्रे नदीतीरे' 'ब्राह्मे मुहूर्त उत्थाय' इत्यादेर्देशादेरपि ज्ञानहेतुत्वस्मरणादिति भावः । कुत इत्यस्योभयालिङ्गा दिति भाष्यविवृतिपरं ज्ञातत्वात्कल्पितत्वादित्येतदुत्तरं बोध्यम् । श्रुत्याचार्योपदेशेत्यत्र श्रुतिरूपोऽयमाचार्योपदेश इति वा श्रुतिरूपेणाचार्योपदेशः श्रुत्याचार्योपदेश इति वा विग्रहमुपेत्यार्थमाह ॥ **य आत्मेति** ॥ **श्रुतिरूपेणेति** ॥ यद्वा श्रुत्येति भिन्नं पदं साम्योपपादकमिति भावेनोक्तम् ॥ **श्रुतिरूपेणेति** ॥ नन्विन्द्रविरोचनौ सम्यग्ज्ञानं विपरीतज्ञानं चापतुरिति कथं ज्ञायते । भाष्योक्तश्रुतौ तददर्शनादित्यतो भाष्योपात्तवाक्यस्य प्रतीकग्रहणत्वेनोपयोगं वदन् तदुत्तरवाक्यार्थोक्त्या तद्दर्शयति ॥ **य आत्मेत्यादिना** ॥ छान्दोग्येऽष्टमाध्याये तौ यद्द्वात्रिंशतं वर्षाणि ब्रह्मचर्यमूषतुः । तौ ह प्रजापतिरुवाच किमिच्छन्तावववास्तमिति । तौ होचतुः । य आत्माऽपहतपाप्मेत्यादिविजिज्ञासितव्यान्तं वाक्यमुक्त्वा इति भगवतो वचो वेदयन्ते

(तत्त्वप्रकाशिका)

**वेदानधिकारिणामपि प्रयत्नेन तत्प्राप्तिदर्शनात् । अतोऽयोग्यैरपि ज्ञानस्य प्राप्तुं शक्यत्वादयोग्यानामपि मोक्ष इति । सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ॥ सर्वथापीति ॥ देशकालगुरूपसत्ति-श्रवणाद्यनेकोत्साहेऽपि योग्यानामेव ज्ञानप्राप्तिर्भवति नायोग्यानाम् । कुतः । य आत्मेतिश्रुति-रूपेणेन्द्रविरोचनयोः प्रजापतेराचार्यस्योपदेशसाम्येऽपि योग्यत्वादिन्द्र एव सम्यग्ज्ञानं प्राप्तो न त्वयोग्यो विरोचनः । प्रत्युत विपरीतज्ञानमेवापायमात्मापहतपाप्मत्वादिलक्षणः स जिज्ञास्य इति प्रजापतिनोपदिष्टे कोऽसाविति ताभ्यां पृष्टेन प्रजापतिनोक्तम् । य एषोऽन्तरक्षणि पुरुषो दृश्यते 'एष आत्मा' इति । तच्छ्रुत्वेन्द्रेणापहतपाप्मत्वादिलक्षणोऽक्षिस्थो हरिरात्मेति ज्ञातत्वात् । विरोचनेन तु चक्षुषि प्रतीयमानप्रतिबिम्ब एवापहतपाप्मत्वादिलक्षणात्मेति कल्पितत्वादिति भावः । अविजिघत्सोऽपिपास इति बुभुक्षादिना पीडाभाव उच्यते । न ह्यस्य घटादेरिवान्वेषणं युज्यत इत्यतः स विजिज्ञासितव्य इति ॥**

## गुर्वर्थदीपिका

उभयथापि लोके दर्शनमित्यत्रावैष्णवविप्रैर्वैष्णवविप्रैश्च वेदाध्ययनस्य क्रियमाणत्वादित्यर्थः । वेदानधिकारिणामपीत्यत्र वेदानधिकारिणां योग्यस्त्रीशूद्रादीनामपि स्वयोग्यज्ञानप्राप्तिदर्शनाद्वेदान्त-जनितज्ञानमप्ययोग्यानां भवत्वित्यर्थः । प्रतिबिम्ब एवेत्यत्र स्वप्रतिबिम्ब एवेत्यर्थः । एवं बिम्बप्रतिबिम्बयोरैक्यादहमेव ब्रह्मेति ज्ञातवानिति भावः । अविजिघत्स इत्यत्र जग्धुमिच्छा जिघत्सा पातुमिच्छा पिपासा । उभयविधेच्छाया अपि नवनीतभक्षके क्षीरपातरि च कृष्णेऽवक्तु-मशक्यत्वात्तन्निमित्तपीडाभाव एव तदुभयाभाव इति भावः ।

## भावबोधः

**अधिकारिमात्रप्राप्यत्वमहिम्न इति ॥** नियताधिकारिकाध्ययनस्य अनधिकारिप्राप्यत्ववत् । तथाभूतापरोक्षज्ञानस्यापि अनधिकारिप्राप्यत्वे पूर्वाधिकरणोक्तस्वफलजनकत्वनियमो न स्यादिति पूर्वाक्षेपादनन्तरसङ्गतिरिति भावः । अत एव **वेदानधिकारिणामपीति** । अध्ययनप्रतिबन्दीग्रहणं करिष्यति **॥ किमिति ॥** अत्रापरोक्षज्ञानं किमनधिकारिभिरपि प्रप्यमुताधिकारिभिरेवेति चिन्ता । तदर्थं किं ज्ञानं गुरूपसत्त्यादिप्रयत्नमात्रसाध्यं उत योग्यतासाध्यमिति । तदर्थं ज्ञानस्य योग्यता-साध्यत्वे प्रमाणं नास्त्युतास्तीति । **सर्वथापीति** । सर्वप्रकारेणोत्साहेऽपीति सूत्रभाष्याभ्यां सूचितयुक्तिमाह– **अधिकाराभावेऽपीति ॥**

(भावबोधः)

ननु 'असार्वत्रिकी' इत्यत्र ज्ञानस्य नियताधिकारित्वेनोक्तत्वात् कथं अधिकाराभावे तत्प्राप्तिः स्यादित्यत आह– **वेदानधिकारिणामिति** ॥ हरिभक्त्यादिनियताधिकारस्याप्यध्ययनस्यान्यायेनाधिकारिणामपि प्रयत्नेन प्राप्तिदर्शनान्न विरोध इति भावः । श्रुतेरेवोपदेशत्वेन कथं श्रुत्यापदेशसाम्येऽपीत्युक्तमित्यत आह– **श्रुतिरूपेणेति** ॥ 'अविजिघत्सो पिपास' इति पदयोरिच्छाभावार्थत्वनिरासायाह– **बुभुक्षादिनेति** ॥ स विजिज्ञासितव्य इत्यस्य पौनरुक्त्यपरिहारार्थमाह– **न हीति** ॥

## भावदीपः

सूत्रादौ त एवेत्युक्तेराह ॥ **अधिकारिमात्रेति** ॥ महाप्रयत्नेनानधिकारिभिरपि प्राप्यत्वमस्तीति शङ्कानिरासेनेति भावः । एतेन पूर्वत्र सहकारित्वेन चेत्यत्र शुभं कृत्वा च वर्धत इत्युक्तदिशा यथा ज्ञानिभिर्महाप्रयत्नेन मुक्तावाधिक्यं प्राप्यते । तथाऽनधिकारिभिरपि महाप्रयत्नेन ज्ञानं चाप्यतामिति शङ्कोदयात्पूर्वसङ्गतिरपि सूचिता ॥ **मोक्षप्रसङ्गादिति** ॥ तथा च यावदधिकारमवस्थितिरित्यादौ मुक्तिस्थितेः प्राचीनयोग्यतानुसारित्वाद्युक्तिरयुक्तेति भावः ॥ **लोक इति** ॥ अध्ययनादेरधिकार्यनधिकारिभ्यां प्राप्यत्वदर्शनादिति भावः । सर्वेत्यादिभाष्यसूचितयुक्तिमाह ॥ **अधिकारेति** ॥ असम्भावितमेतदित्यत आह ॥ **वेदेति** ॥ अवैष्णवैरप्याप्यत्वदर्शनादित्यर्थः ॥ **अत इति** ॥ प्रयत्नसाध्यत्वादित्यर्थः ॥ **अयोग्यैरिति** ॥ आसुरस्वभावैर्मिश्रस्वभावैश्चेत्यर्थः । भाष्यं व्याचष्टे ॥ **देशकालेति** ॥ 'पर्वताग्रे नदीतीरे' '**ब्राह्मे मुहूर्त उत्थाय**' इत्यादेर्देशादेरपि ज्ञानहेतुत्वस्मरणादिति भावः । कुत इत्यस्योभयालिङ्गा दिति भाष्यविवृतिपरं ज्ञातत्वात्कल्पितत्वादित्येतदुत्तरं बोध्यम् । श्रुत्याचार्योपदेशेत्यत्र श्रुतिरूपोऽयमाचार्योपदेश इति वा श्रुतिरूपेणाचार्योपदेशः श्रुत्याचार्योपदेश इति वा विग्रहमुपेत्यार्थमाह ॥ **य आत्मेति** ॥ **श्रुतिरूपेणेति** ॥ यद्वा श्रुत्येति भिन्नं पदं साम्योपपादकमिति भावेनोक्तम् ॥ **श्रुतिरूपेणेति** ॥ नन्विन्द्रविरोचनौ सम्यग्ज्ञानं विपरीतज्ञानं चापतुरिति कथं ज्ञायते । भाष्योक्तश्रुतौ तददर्शनादित्यतो भाष्योपात्तवाक्यस्य प्रतीकग्रहणत्वेनोपयोगं वदन् तदुत्तरवाक्यार्थोक्त्या तद्दर्शयति ॥ **य आत्मेत्यादिना** ॥ छान्दोग्येऽष्टमाध्याये तौ यद्द्वात्रिंशतं वर्षाणि ब्रह्मचर्यमूषतुः । तौ ह प्रजापतिरुवाच किमिच्छन्तावास्तमिति । तौ होचतुः । य आत्माऽपहतपाप्मेत्यादिविजिज्ञासितव्यान्तं वाक्यमुक्त्वा इति भगवतो वचो वेदयन्ते

(भावदीपः)

तमिच्छन्तावववास्तमिति । **तौ ह प्रजापतिरुवाच । य एषोऽन्तरक्षणि पुरुषो दृश्यते** एष आत्मेति होवाचेत्यादौ य आत्मेत्यस्येन्द्रविरोचनानुवादत्वेन तौ प्रति चतुर्मुखोपदेशत्वाभावेऽपि भगवतो वच इत्यन्ते श्रवणाच्चतुर्मुखोपदेशत्वमेवेति सूचनाय भाष्ये इति श्रुत्येत्युक्तमिति भावेन तदर्थमाह ॥ इति **प्रजापतिनोपदिष्ट इति** ॥ तमिच्छन्तावित्यस्यार्थः कोऽसाविति । अदनपानेच्छाराहित्यादि-निरासायाह ॥ **अविजिघित्स इति** ॥ अन्वेष्टव्य इत्येतद्विजिज्ञासितव्य इति कुतो व्याख्यायते निर्बीजत्वादित्यत आह ॥ **न हीति** ॥

## अभिनवचन्द्रिका

ननु ज्ञानस्याधिकारिप्राप्यत्वमिवानधिकारिप्राप्यत्वस्यापि सिद्धान्तत्वात् अधिकारिमात्र-प्राप्यत्वसमर्थनमयुक्तमित्यत आह– **अनधिकारिप्राप्यत्व इति** ॥ अनधिकारि प्राप्यत्वे बाधक-सद्भावात् नाऽयं सिद्धान्तः । ततश्च अधिकारिमात्रप्राप्यत्वसमर्थनं युक्तमिति भावः । एतेन अस्य वाक्यस्य अधिकरणाऽऽवश्यकत्वसिद्ध्यर्थं प्रवृत्तत्वेन, वर्णनाभाव एव बाधकस्य वक्तव्यत्वात् तद्विहाय, अनिधिकारिप्राप्यत्वे बाधकत्ववर्णनमयुक्तमिति परास्तम् । अनधिकारिणामपि प्रह्लादा-दीनां ज्ञानस्मरणं हेतुमभिप्रेत्य, तस्यासम्भावनया अपवादो माशङ्कीति भावेन सम्भावनामाह– **अधिकाराभावेऽपीति** ॥ तस्य ज्ञानस्य सम्भावितत्वात् प्रह्लादादीनां श्रुतिस्मृत्युक्तं ज्ञानं नापवादमर्हतीति भावः । एतेन प्राप्तुं शक्यत्वस्य 'ज्ञानमाप्यत इत्यर्थनिर्णायकत्वाभावात् तत्सिद्ध्यर्थमुपन्यासायोग इति परास्तम् । असम्भावनापरिहारार्थमुपन्यस्तत्वेन सिद्ध्यर्थमनुप-न्यासात् । अधिकाराभावेऽपि प्राप्तुं शक्यत्वादित्युक्तं प्राप्तिदर्शनादेवाधिकारस्यापि कल्प्यत्वादित्यत आह– **वेदानधिकारिणामिति** ॥ वेदानधिकारिणामपि शूद्राणां वेदप्राप्तिदर्शनेन व्यभिचारात् । येन यत्प्राप्यते स तत्राधिकारीति व्याप्त्यभावात् न प्राप्त्याधिकारः कल्पयितुं शक्यत इति भावः ॥ **अतोऽयोग्यैरपीति** ॥ अतोऽयोग्यैरपि ज्ञानस्य प्राप्तुं शक्यत्वेनाऽसम्भावनाऽभावात् अयोग्यानामपि ज्ञानाभिधायकभागवतवचनेन तत्सिद्धेः, तेषामपि मोक्षः स्यादेवेत्यर्थः । ननु इन्द्रविरोचनाभ्या-मपहतपाप्मत्वादिगुणक आत्मेत्येव विज्ञातत्वात् इन्द्रस्य सम्यक्ज्ञानं विरोचनस्य तु ज्ञानं विपरीतज्ञानमिति तु कथमित्यत आह– **य आत्मेति** ॥

## वाक्यार्थमुक्तावली

पारिप्लवार्थ इत्यत्र त्रेधा हि ज्ञानिनो भवन्ति । मनुष्योत्तमादेवाब्रह्मेत्युक्तम् । तदयुक्तम् । असुरादीनामपि प्रयत्नेन ज्ञानित्वसम्भवात् इत्याक्षेपोत्थानादनन्तरसङ्गतिः ॥ **मुक्त्ययोग्यानामिति** ॥ तथा च नित्योपलब्ध्यनुपलब्धिप्रसङ्ग इत्यत्रोक्तभङ्गप्रसङ्ग इति भावः ॥ **किमिति** ॥ ज्ञानं किमनधिकारिभिरप्याप्यते उताधिकारिभिरेवेति चिन्ता । तदर्थमगुरूपसत्त्यादिस्वप्रयत्नो योग्यता-मभिभाव्यानधिकारिणां ज्ञानदानशक्त उताशक्त इति ॥ **उभयथेति** ॥ वेदानधिकारिभिरपि वेद-प्राप्तेरधिकारिभिश्च प्राप्तेरित्युभयथेत्यर्थः । ननु असार्वत्रिकी ज्ञानाधिकारितेत्युक्तत्वात्कथं ज्ञानस्य सर्वप्राप्यत्वमित्यतः, सत्यमधिकाराभावः **सर्वेषामिति** ॥ तथाप्यात्मस्वरूपयोग्यतावन्महाप्रयत्नस्यापि दृढत्त्वात्तेन ज्ञानप्राप्तिः सम्भवतीति भावेन सर्वथापि सर्वप्रकारेणोत्साहेऽपीति सूत्रभाष्यसूचितमात्म-स्वरूपदार्ढ्यमित्युक्तन्यायमेतदधिकरणेऽपि दर्शयति ॥ **अधिकाराभावेऽपीति** ॥ यद्यप्यस्मिन्नधि-करणे पूर्वपरसिद्धान्तन्यायौ न्यायमालायां पृथङ् न पठितौ । न्यायविवरणेऽपि न पूर्वन्यायौ सङ्गमितौ । तथापि मुक्तासम्बन्धदीपिकायां शङ्करार्यैः पूर्वाधिकरणन्यायौ सङ्गमिताविति ज्ञेयम् । ननु योग्यताभावे कथमतिदृढेनापि प्रयत्नेन ज्ञानप्राप्तिः । न हि प्रयत्नशतेन नरो वानरीकर्तृं शक्य इत्यत आह ॥ **वेदेति** ॥ हरिभक्त्यादिमन्नियताधिकारिकस्यापि वेदस्यान्यायेनानधिकारि-प्राप्यत्वदर्शनात् प्रकृतेऽपि तथोपपत्तिरिति भावः । सूत्रे त इत्यावर्तते । तुशब्दात् विपर्ययं प्राप्नोति चेति स्पष्टं तत्त्वप्रदीपिकायां वचनात् तुशब्दो विपरीतज्ञानं प्राप्नुवन्ति च इति समुच्चायकः । तथा च सर्वथापि देशकालगुरूपसत्यादिसर्वप्रकारेण तत्साम्येऽपि त एव प्रस्तुतज्ञानयोग्या एव ज्ञान-प्राप्तिमन्तो न त्वयोग्याः । प्रत्युत ते विपरीतज्ञानमप्याप्नुवन्ति । कुतः उभयलिङ्गात् उभय-विधयोग्यायोग्यजनस्य ज्ञानप्राप्त्यप्राप्तिरूपोभयविधलिङ्गदर्शनादिति सूत्रार्थं स्पष्टयति ॥ **देशेति** ॥ श्रुतरूपदेशरूपत्वेन कथं श्रुत्येत्युपदेशकरणत्वोक्तिरित्यत इत्थंभूतलक्षणे तृतीयेत्यत आह ॥ **श्रुतिरूपेणेति** ॥ श्रुतिरूपेण विद्यमानो यमुपदेशतत्साम्येऽपीत्यर्थः । उपदेशसाम्यं चेन्द्रविरोचनयोः प्रजापतौ द्वात्रिंशद्वर्षपर्यन्तं वा साधूक्त्या समदेशकालैकाचार्यत्वैकवाक्यत्वरूपेणेति ध्येयम् । य एषोऽन्तरक्षणीति वाक्येनैवेन्द्रविरोचनयोः सम्यज्ज्ञानविपरीतज्ञानयोर्जननात् कथं य आत्माऽऽ-पहतपाप्मेति भाष्योपात्तश्रुतेस्तादृशोपदेशत्वमित्यत इति ॥ **श्रुत्येति** ॥ भाष्यप्रतीकग्रहणमिति भावेनाह ॥ इति **प्रजापतिनेत्यादिना** ॥

(वाक्यार्थमुक्तावली)

अविजिघित्सोपिपास इति जग्धुं पातुं चेच्छाभाव उच्यत इति प्रतीयते । अतो व्याचष्टे ॥ **अविजिघित्स इति ॥** क्षुत्पिपासादिकाश्चैव देवानां भोगसाधकाः न तु पीडाकरास्तेषामिति वचनादिति भावः । एतेन स्थितिरित्युक्तन्यायोऽपि स्थितिशब्दितयोग्यतानुसारेणैव ज्ञानस्य स्थितिरिति सूत्रारूढो दर्शितो भवति ।

## तत्त्वसुबोधिनी

अधिकारिमात्रेति । नियताधिकाध्ययनस्यानधिकारिप्राप्यत्ववत्तथाभूतापरोक्षज्ञानस्याप्यनधिकारिप्राप्यत्वे पूर्वाधिकरणोक्तस्वफलजनकत्वनियमो न स्यादिति पूर्वाक्षेपादनन्तरसङ्गतिरिति भावः । **सर्वथाऽपीति ॥** सर्वप्रकारेणोत्साहेऽपीति । पूर्वप्रकारेण उत्साहेऽपीति सूत्रभाष्याभ्यां सूचितयुक्तिमाह ॥ **अधिकाराभावेऽपीति ॥** ननु असार्वत्रिकीत्यत्र ज्ञानस्यानियताधिकारित्वेन उक्तत्वात् कथं अधिकाराभावे तत्प्राप्तिः स्यादित्यत आह । **वेदानधिकारिणामिति ॥** हरिभक्त्यादिमन्नियताधिकारिकस्याप्यध्ययनस्य न्यायेन अनधिकारिणामपि प्रयत्नेन प्राप्तिदर्शनान्न विरोधः इति भावः । श्रुतेरेव उपदेशत्वेन कथं श्रुत्या उपदेशसाम्येऽपीत्युक्तमित्यत आह ॥ **श्रुतिरूपेणेति ॥** अविजिघित्सो पिपास इति पदयोरिच्छाभावार्थत्वनिरासायाह ॥ **बुभुक्षादिनेति ॥** स विजिज्ञासितव्य इत्यस्य पौनरुक्त्यपरिहारार्थमाह ॥ **न हीति ॥**

## वाक्यार्थविवरणम्

**प्रयत्नेनेति ॥** पाठादिरूपप्रयत्नेनेत्यर्थः ॥ **अनेकेति ॥** अनेकप्रकारेणेत्यर्थः ॥ **प्रजापतेराचार्यस्येति ॥** आचार्यभूतस्य चतुर्मुखस्येत्यर्थः ॥

## वाक्यार्थमञ्जरी

सर्वथाऽप्यनेकप्रयत्नकरणेऽपि त एव योग्या एव ज्ञानमाप्नुवन्ति न त्वयोग्याः कुतः उभयलिङ्गात् योग्यायोग्ययोरिन्द्रविरोचनयोर्ज्ञानप्राप्त्यप्राप्तिरूपोभयलिङ्गदर्शनादित्यर्थः । श्रुतेरेवोपदेशत्वेन कथं श्रुत्योपदेशसाम्येऽपीत्युक्तमित्यत आह ॥ **श्रुतिरूपेणेति ॥** तुशब्दार्थमाह ॥ **प्रत्युतेति ॥** उभयं क्रमेणोपपादयति ॥ **य आत्मेत्यादिना ॥ पीडाभाव इति ॥** नेच्छाभावमात्रमिति भावः । अन्वेष्टितव्य जिज्ञासितव्य इत्यनयोः पौनरुक्त्यवारणायाह ॥ **न हीति ॥**

## सूत्रभाष्यम्

**॥ ॐ अनभिभवं च दर्शयति ॐ ॥ ३९ ॥**

'दैवीमेव सम्पत्तिं देवा अभिगच्छन्त्यासुरीमेव चासुरा नैवैतयोरभिभवः कदाचित्स्वभाव एव ह्यवतिष्ठत' इति स्वभावानभिभवं च दर्शयति ॥

## तत्त्वप्रदीपिका

अयोग्यानामपि कारणात्स्वभावाभिभवेन योग्यता सञ्जायते, योगव्याघ्रवदित्यत आह– **अनभिभवं च दर्शयति ॥** स्वभावानभिभवं च दर्शयति श्रुतिरुभयभागेऽपि । देहादेस्तु परिणाम-स्वभावत्वाददृष्टान्तत्वम् ॥

## तत्त्वप्रकाशिका

ननु महाप्रयत्नेनायोग्यताया अभिभवितुं शक्यत्वादयोग्यानामपि ज्ञानप्राप्तिः किं न स्यात् । दृष्टं हि विश्वामित्रस्य महता प्रयत्नेन विप्रत्वमित्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे ॥ **अनभिभवं चेति ॥** भवेदयोग्यताभिभवेनायोग्यानामपि ज्ञानप्राप्तिः । यदि क्षत्रियत्वादिवदयोग्यत्वमस्वाभाविकं स्यात् । न त्वेतदस्ति । तस्य स्वभावत्वात् । स्वभावत्वेऽप्यभिभवः किं न स्यादिति न वाच्यम् । स्वभावानभिभवस्य श्रुतिसिद्धत्वादिति भावः । संपत्तिं स्वभावम् ।

## गुर्वर्थदीपिका

आत्मीयामेव जातिमनुभवन्तीति नियमः ततोऽन्यरूपत्वाभावः अतद्रूपत्वम् । तस्माद्धाप्ये-तर्हीत्यत्र यद्यपि सर्वजीवहृदयेषु श्वासरूपजपं कुर्वन्मुख्यप्राण एव । तथापि तस्य देवोत्तमत्वात्तन्मतं तच्छिष्याणां देवादीनामपि मतमिति भावः । असुरैस्तु निर्गुणतया निराकारतया च ब्रह्मोपास्तेः क्रियमाणत्वादभूतित्वेनोपासनं स्पष्टमेवेति न तत्र दृष्टान्त उक्तः ।

## भावबोधः

**स्वभावानभिभवस्येति ॥** अनेन सूत्रे स्वभावस्येति शेष इत्युक्तं भवति । सूत्रे 'च' शब्दः एवार्थः । स्थितिरिति शेषः । प्रकरणात् सम्यज्ज्ञानविपरीतज्ञानयोरित्यस्य लाभः ।

## भावदीपः

अयोग्यता आगन्तुकीति मत्त्वा शङ्कते ॥ **नन्विति** ॥ **विप्रत्वमिति** ॥ 'गाधेरभून्महातेजाः समिद्ध इव पावकः । तपसा क्षात्रमुत्सृज्य यो लेभे ब्रह्मवर्चसम्' इति नवमस्कन्धे व्यक्तमेतत् । भाष्ये स्वभावेत्युक्त्या लब्धं हेतुं वदन् प्रागुक्तं निराह ॥ **नन्वेतदिति** ॥ यदभिभवेन ज्ञानप्राप्तौ प्रयोजकमस्वाभाविकत्वमेतन्नास्तीत्यर्थः । यद्वा अयोग्यताभिभवेन प्राप्तिरित्येतन्नास्ति स्वाभाविकत्वस्यैवानभिभवप्रयोजकत्वेन स्वभावत्वे कथमभिभव इत्यर्थः । स्वभावत्वेऽप्यभिभूयतामयोग्यता । तथा चाप्रयोजको हेतुरित्याशङ्क्य विपक्षे श्रुतिविरोध इति भावेन भाष्यं व्यनक्ति ॥ **स्वभावत्वेऽपीत्यादिना** ॥ प्रकृतोपयोगाय श्रौतपदार्थमाह ॥ **संपत्तिमिति** ॥

## अभिनवचन्द्रिका

॥ **दृष्टं हीति** ॥ क्षत्रियत्वाभिभवेन विप्रत्वं दृष्टमित्यर्थः ।

## वाक्यार्थमुक्तावली

सूत्रे चशब्दादयोग्यतास्वभावस्तस्यानभिभवश्च दर्शयतीत्यर्थमभिप्रेत्याह ॥ **भवेदित्यादिना** ॥

## तत्त्वसुबोधिनी

**स्वभावाभिभवस्येति** ॥ अनेन सूत्रे स्वभावस्येति शेष इत्युक्तं भवति । सूत्रे चशब्द एवार्थः । स्थितिरिति शेषः । प्रकरणात्सम्यग्ज्ञानविपरीतज्ञानयोरित्यस्य लाभः ।

## वाक्यार्थमञ्जरी

स्वभावस्यानभिभवं तिरस्काराभावं दैवीमेवेति श्रुतिर्दर्शयतीत्यर्थः । अतिदार्ढ्येन तदुभयस्वभावस्य ॥ **कर्तुं शक्यत्वादिति** ॥ मिश्रत्वेनादृढत्वादिति भावः ॥

## सूत्रभाष्यम्

**॥ ॐ अन्तरा चापि तु तद्दृष्टेः ॐ ॥ ३६ ॥**

**सम्यग्ज्ञानविपरीतज्ञानयोरन्तरा स्थितानामपि देवासुरभावयोर्दार्ढ्यदृष्टेः ॥**

## तत्त्वप्रदीपिका

मिश्रबुद्धीनामपि देवासुरभावयोरन्तरास्थितानां नित्यसंसृतियोग्यानां मिश्रबुद्धिस्वभावो नाभिभूयते । तेषां देवासुरभावयोरुभयोरपि दार्ढ्यदृष्टेः श्रुतितो लोकतश्च । तत्रापि विशेषो दृश्यते । एकेषामुभयत्रापि बहुमतिः केषाञ्चिदुभयत्रापि निन्दा औदासीन्यमन्येषामित्यादिः ।

## तत्त्वप्रकाशिका

अस्त्वत्यन्तायोग्यानामसुरादीनां ज्ञानप्राप्त्ययोगो देवादीनां च मिथ्याज्ञानप्राप्तिरतिदार्ढ्येनाभिभवायोगात् । मध्यममानुषाणां तु ज्ञानादिप्राप्तिर्भवतु । तत्स्वभावाभिभवस्य कर्तुं शक्यत्वादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ **अन्तरेति** ॥ मानवानां सम्यग्विपरीतज्ञानयोरन्तरास्थितत्वमेव मिश्रज्ञानित्वमेव न तु केवलज्ञानादिप्राप्तिस्तेषामपि स्वभावाभिभवो नास्ति । कुतः । तेषां मिश्रज्ञान एव विशेषेण दार्ढ्यदृष्टेः । अतिदृढस्य चाभिभवायोगादिति भावः ।

## भावबोधः

योग्यतया मानवानामित्यस्य च लाभ इत्यभिप्रेत्यान्तरा चेति सूत्रांशस्यार्थमाह– **मानवानामिति** ॥ **तेषामपीति** ॥ अनेन सौत्र अपिपदेन पूर्वसूत्रोक्तो 'अनभिभवो' अनु कृष्यत इत्युक्तं भवति । तेषां मिश्रज्ञान एवेति । अनेन तुशब्दो विशेषार्थः । तच्छब्दस्तेषां मानवानां तस्मिन् मिश्रज्ञाने तस्य दार्ढ्यस्येत्यर्थत्रयपर इत्युक्तं भवति ।

## भावदीपः

श्रुतौ दैवीमित्युक्तिर्देवानामपि प्रबलशापमहदपचारादिना योग्यताभिभवसम्भवेन मिथ्याज्ञानप्राप्त्या तमोऽपि स्यादिति शङ्कापनुत्तये । अत एव भाष्ये स्वभावेत्येवोक्तम् । न त्वासुरस्वभावेत्युक्तमिति भावेनानुवदति ॥ **अस्त्विति** ॥ श्रुतौ देवासुरपदे योग्यायोग्यसर्वपरे इति भावेनासुरादीनामित्याद्युक्तिः । अप्यन्तभाष्यस्यार्थो ॥ **मानवानामिति** ॥ अपिपदाकृष्टाऽनभिभवशब्दार्थः सम्यगित्यादि । सौत्रचशब्दार्थ एवेति । एवमनुवृत्तानभिभवशब्दार्थमुक्त्वा अपीत्यनन्तरं भाष्ये योज्यं पदं दर्शयन् हेत्वंशं व्यनक्ति ॥ **तेषामपीत्यादिना** ॥ सौत्रतुशब्दार्थो विशेषेणेति ॥

## अभिनवचन्द्रिका

सूत्रं योजयति– **मानवानामिति ॥** अत्रैवं सूत्रयोजना । अन्तरास्थितानां न ज्ञानादिप्राप्तिः स्वरूपाभिभवाभावात् । तदपि कुतः । मिश्रज्ञान एव पटुत्वदृष्टेरिति ।

## वाक्यार्थमुक्तावली

सूत्रे चोवधारणे । स्थितानां स्थितत्वमिति पदद्वयमध्याहार्यम् । तुशब्दो विशेषार्थः । ततश्च प्रस्तुतसम्यज्ज्ञानविपरीतज्ञानयोरन्तरास्थितानां मानवानामपि अन्तरस्थितत्वमेव । न तु सम्यज्ज्ञानादिप्राप्तिस्तेषामपि स्वभावाभिभवो नास्तीति यावत् । कुतस्तदृष्टेः । तेषां देवासुर-स्वभावयोर्मिश्रज्ञान एवेति यावत् । तुविशेषाकारेण तस्य दार्ढस्य दृष्टेरिति सूत्रार्थमाह ॥ **मानवानामित्यादिना ॥**

## तत्त्वसुबोधिनी

योग्यतया मानवानामित्यस्य च लाभ इत्यभिप्रेत्य अन्तरा चेति सूत्रांशस्यार्थमाह । **मानवानामिति ॥ तेषामपीति ॥** अनेन सौत्रापिपदेन पूर्वसूत्रेनाभिभवोऽनुकृष्यत इत्युक्तं भवति ॥ **तेपामिति ॥ मिश्रज्ञान एवेति ॥** अनेन तुशब्दो विशेषार्थः । तच्छब्दः तेषां मानवानां तस्मिन् मिश्रज्ञानेन तस्य दार्ढ्येत्यर्थत्रयपर इत्युक्तं भवति ।

## वाक्यार्थविवरणम्

**देवादीनामिति ॥** अत्र सर्वत्र देवशब्दो मोक्षयोग्यसज्जनवाचीति ज्ञातव्यम् ॥ **कर्तुं शक्यत्वादिति ॥** तदीयस्वभावस्य द्विविधतया एकप्रकारत्वाभावेन तद्दाढर्याभावादिति भावः । तस्यैवार्थमाह ॥ **मिश्रज्ञानित्वमेवेति ॥**

## वाक्यार्थमञ्जरी

मध्यममानुषाणां सम्यगसम्यग्ज्ञानयोरन्तरा मध्ये मिश्रज्ञान एवावस्थितिः । न तु तत्स्वभावस्याभिभवः कुतः तद्दृष्टेः । तदिति तन्त्रं तेषां तत्र मिश्रज्ञाने तस्य दार्ढ्यस्य तु विशेषेण दृष्टत्वादित्यर्थः ॥ **तत्स्वभावत्व इति ॥** ज्ञानादिस्वभावत्त्व इत्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ अपि स्मर्यते ॐ ॥ ३७ ॥**

**'असुरा आसुरेणैव स्वभावेन च कर्मणा ।**
**ज्ञानेन विपरीतेन तमो यान्ति विनिश्चयात् ॥**
**देवा दैवस्वभावेन कर्मणा चाप्यसंशयम् ।**
**सम्यग्ज्ञानेन परमां गतिं गच्छन्ति वैष्णवीम् ॥**
**नानयोरन्यथाभावः कदाचित्क्वापि विद्यते ।**
**मानुषा मिश्रमतयो विमिश्रगतयोऽपि च' इति स्कान्दे ॥**

## तत्त्वप्रकाशिका

**ननु देवदानवमानवानां तत्स्वभावत्वे भवेदभिभवाभावः । तदेव कुतः । तादृशस्वभावत्वे च तथाफलेन भाव्यम् । तदपि कुतः इत्याशङ्कां स्मृत्या परिहरत्सूत्रमुपन्यस्य तां स्मृतिमुदाहरति ॥ अपीति ॥ स्वभावेनेति ज्ञानकर्मणोर्विशेषणम् । ज्ञानादेर्दैवत्वादिकं च सर्वभूतेषु येनैकमित्यादिना ज्ञातव्यम् ।**

## भावबोधः

**तत्स्वभावत्व इति** ॥ ज्ञानादिस्वभावत्व इत्यर्थः । स्वभावस्य ज्ञानकर्मादिसामग्री-सम्पादकत्वेनैव कार्यजनकत्वात् स्वभावेनेत्यस्य पृथक्कारणत्वशङ्कानिरासार्थमाह– **स्वभावेनेतीति** ॥ **ज्ञानादेर्दैवत्वादिकं चेति** ॥ दैवत्वं सात्त्विकत्वं मिश्रत्वं राजसत्वं आसुरत्वं तामसत्वमिति विवक्षितम् । ततश्च देवासुरमानवपदैर्मुक्तियोग्यनित्यसंसारिणो विवक्षिता इति भावः ।

## भावदीपः

स्वभावत्वादित्युक्तहेतोरसिद्धिशङ्कानिरासकतयोत्तरसूत्रमवतारयति ॥ **नन्विति** ॥ भाष्योक्त-स्मृतौ फलोक्तेरुपयोगमाह ॥ **तथा फलेनेति** ॥ तदपि तथा फलमपि । कुतः मानादित्यर्थ सामीप्यात्कर्मणैवान्वयभ्रांतिं निरस्यन् प्रकृतोपयोगायाह ॥ **ज्ञानकर्मणोरिति** ॥ स्मृतौ

(भावदीपः)
देवत्वादिजातिविशेषभ्रमनिरासाय त्रिविधजीवराशिपरत्वायाह ॥ **ज्ञानादेरिति** ॥ सर्वभूतेषु येनैकं भावमव्ययमीक्षते ।

'अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्विकम् ॥
पृथक्त्वेन तु यज्ज्ञानं नानाभावान्पृथग्विधान् ।
वेत्ति सर्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम् ।
यत्तु कृत्स्नवदेकस्मिन्कार्ये सक्तमहैतुकम् ।'

अतत्वार्थवदल्पं च तत्तामसमुदाहृतमित्यनेन ज्ञानस्य तथा, नियतं सङ्गरहितरागद्वेषतः कृतम् ।

'अफलप्रेप्सुना कर्म यत्तत्सात्विकमुच्यते ॥
यत्तु कामेप्सुना कर्म साहंकारेण वा पुनः ।
क्रियते बहुलायासं तद्राजसमुदाहृतम् ।
अनुबंधं क्षयं हिंसामनपेक्ष्य च पौरुषम् ।'

मोहादारभ्यते कर्म तत्तामसमुदाहृतम्' इत्यनेनाऽष्टादशगीतोक्तदिशा कर्मणः सात्त्विकत्वादिकं ज्ञातव्यमित्यर्थः ।

## वाक्यार्थमुक्तावली

**तत्स्वभावत्वे इति** ॥ सम्यज्ज्ञानस्वभावत्व इत्यर्थः । देवादीनां तत्तत्स्वभावत्वमपि शब्दात्तादृशफलवत्त्वं च स्मर्यत इति सूत्रार्थः । स्मृतौ ज्ञानकर्मणोरिव योग्यतापरपर्यायवाच्यस्य स्वभावस्यापि पृथग्गतिहेतुत्वं प्रतीयते । तदयुक्तम् । तदनुसारिज्ञानकर्मणोरेव साक्षाद्धेतुत्वात् । देवादीनां सम्यज्ज्ञानादिस्वभावत्वे चेयं स्मृतिरुदाहृता । तदसिद्धिप्रसङ्गाच्चेत्यत आह ॥ **स्वभावेनेति** ॥ **ज्ञानकर्मणोरिति** ॥ दैवस्वभावेनेत्यत्र दैवेन स्वभावेन चेति विशेषणोभयपदम् । तथा च तदन्तर्गतं स्वभावेनेति पदं आसुरेणैव स्वभावेन चेति श्रुतम् । स्वभावेनेति पदं च ज्ञानकर्मणोर्विशेषणम् । न तु स्वयं योग्यतापरं विशेष्यरूपमित्यर्थः । ज्ञानकर्मणोः स्वभावत्वं च योग्यतानुसारित्वं द्रष्टव्यम् । ननु स्वभावेनेत्येतद्ज्ञानादिविशेषणं तर्हि समासान्तर्गतदैवेनेति पदं पृथक् श्रुतमसुरणेति पदं च ज्ञानकर्मणोरेव विशेषणं स्यात् । तत्र ज्ञानादैवत्वादिकं किमित्यत आह

(वाक्यार्थमुक्तावली)

॥ ज्ञानादेरिति ॥ सर्वभूतेष्वित्याद्युक्त्वा तज्ज्ञानं विद्धि सात्त्विकं इत्याद्युक्तेः दैवत्वं सात्विकत्वं आसुरत्वं तामसत्वं इत्यादि ज्ञातव्यमित्यर्थः ।

## तत्त्वसुबोधिनी

**तत्स्वभावत्व इति** ॥ ज्ञानादिस्वभावत्व इत्यर्थः । तथाफलेन मोक्षतमोरूपफलेन । स्वभावस्य ज्ञानकर्मादिसामग्रीसंपादकत्वेनैव कार्यजनकत्वात् स्वभावेनेत्यस्य पृथक्कार्यत्वशङ्कानिरासार्थमाह ॥ **स्वभावेनेति** ॥ ज्ञानादेर्दैवत्वादिकं चेति । दैवत्वं सात्विकत्वं, मिश्रत्वं राजसत्वं, आसुरत्वं तामसत्वमिति विवक्षितम् । ततश्च देवासुरमानवपदैः मुक्तियोग्यतमोयोग्यनित्यसंसारिणो विवक्षिताः इति भावः ।

## वाक्यार्थविवरणम्

**तत्स्वभावत्व इति** ॥ देवत्वादिस्वभावत्व इत्यर्थः ॥ **इत्यादिनेति** ॥ तथा च सात्त्विकत्वादिकमेव दैवत्वादिकम् । तत्र 'तज्ज्ञानं विद्धि सात्विकम्' इत्याद्युक्तेरिति भावः ॥

## वाक्यार्थमञ्जरी

असुरा इति स्मृत्या तादृग्स्वभावत्वतदनुगुणफलमिति द्वयं स्मर्यत इत्यर्थः । स्वभावस्य प्रथक्कारणत्वप्रतीतिनिरासायाह ॥ **स्वभावेनेति** ॥ तस्य ज्ञानकर्मादिसामग्री संपादकत्वेनैव 'कार्यजनकत्वादिति भावः ॥ **ज्ञानादेर्दैवत्वादिकं चेति** ॥ दैवत्वं सात्विकत्वं, मिश्रत्वं राजसत्वं, आसुरत्वं तामसत्वं, तच्च सर्वभूतेषु येनैकं भावमव्ययमीक्षते । 'अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्विकं पृथक्त्वेन तु यज्ज्ञानं नानाभावान्पृथग्विधान्' । 'वेत्ति सर्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम् । यत्तु कृत्स्नवदेकस्मिन्कार्ये सक्तमहैतुकम् । अतत्वार्थवदल्पं च तत्तामसमुदाहृतम्' इति गीतावचनैर्ज्ञातव्यमित्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ विशेषानुग्रहं च ॐ ॥ ३८ ॥**

**'शृण्वे वीर उग्रमुग्रं दमायन्नन्यमन्यमतिनेनीयमानः ।**
**एधमानद्विळुभयस्य राजा चोष्कूयते विश इन्द्रो मनुष्यान्' इति(ऋ.सं.६-४७-१६)**

(सूत्रभाष्यम्)

**विशेषानुग्रहं च दर्शयति देवेषु परमेश्वरस्य ।**

**'असुरान्दमयन्विष्णुः स्वपदं च सुरान्नयन् ।**
**पुनः पुनर्मानुषांस्तु सृतावावर्तयत्यसौ' इति भविष्यत्पर्वणि ॥**

## तत्त्वप्रदीपिका

'शृण्वे वीर' इत्यादेरयमर्थः । देवासुराणामीश्वरोऽध्यवसायान्तगामी स्वयोग्यताधिकवृद्धिह्रासमसहमानोऽसुरानन्धे तमसि क्षिपन्देवानत्युच्चं स्वपदं नयन्मनुष्यान्सर्गे भूमौ नरके च प्रेङ्खोलयतीत्येवं श्रूयते ।

## तत्त्वप्रकाशिका

हेत्वन्तरेण देवानामेव सम्यग्ज्ञानफले नान्येषामित्यर्थप्रतिपादकं सूत्रमुपन्यस्य व्याचष्टे ॥ **विशेषेति ॥** ज्ञानादितावद्भगवत्प्रसादाधीनम् । 'अज्ञानां ज्ञानदो विष्णुः' इत्यादेः । भगवदनुग्रहश्च देवेष्वेव विशेषतो नान्येषु श्रुतिसिद्धोऽतस्तेषामेव सम्यग्ज्ञानादिनासुराणामिति भावः । अध्यवसायान्तगामी परमेश्वरः सर्वानुग्रान् दैत्यान् दमयंस्तद्विरुद्धान् देवान् संसारमतिक्रम्य स्वपदं नयन्वेदादिषु श्रूयते स एव मनुष्यप्रजाः संसार एवावर्तयतीत्यर्थः । इन्द्रपदव्याख्यानं परमेश्वरस्येति । श्रुत्यर्थनिश्चायिकां स्मृतिं चाह ॥ **असुरानिति ॥**

## भावबोधः

ननु देवानामेव सम्यज्ज्ञानं तत्फले प्रतिपादनीये । तेषु हरेर्विशेषानुग्रहसमर्थनं क्वोपयुक्तमित्यत आह– **ज्ञानादीति ॥** 'असुरान्दमयन्' इति स्मृतिं व्याचष्टे– **अध्यवसायेति ॥** वीर इत्यस्यार्थकथनमिदम् । उग्रमुग्रमिति वीप्सार्थः– **सर्वानुग्रानिति ॥** फलितोक्तिर्दैत्यानिति । अतीत्युपसर्गस्यार्थोऽतिक्रम्येति । अतिक्रमयित्वेत्यर्थः । संसारमिति योग्यतया सम्बन्धः । स्वपदमिति शेषोक्तिः । वेदादिष्वित्यस्य योग्यतया लाभः । मनुष्यप्रजा इति । मुक्तियोग्यतमोयोग्यवर्गयोः फलस्योक्तत्वाद्विश इति मनुष्या एव विवक्षिता इति भावः । अत्र सूत्रे 'अतः' शब्दः 'अनभिभवं च' इत्युक्तस्वभावानभिभवपरामर्शकः । 'तु'शब्दः एवार्थः । ततश्च वह्निमत्त्वादेव धूमवत्त्वमितिवत् ।

## भावदीपः

विशेषाऽनुग्रहोक्तेरसांगत्यनिरासायाह ॥ **हेत्वन्तरेणेति** ॥ ज्ञानादिहेतुभूतेश्वरानुग्रहवत्त्वरूप-हेत्वन्तरेणेत्यर्थः । भाष्यं व्याकर्तुं परिष्करोति ॥ **ज्ञानादीति** ॥ **इत्यादेरिति** ॥ 'अज्ञानां ज्ञानदो विष्णुर्ज्ञानिनां मोक्षदश्च सः । आनन्ददश्च मुक्तानां स एवैको जनार्दनः' इति जिज्ञासानयानु-व्याख्यानाद्युक्तश्रुतेरित्यर्थः । विशेषानुग्रहं चेत्यादिभाष्यं व्याचष्टे ॥ **भगवदिति** ॥ असुरानित्यादि-स्मृतिमनुरुध्य श्रुतिं व्याचष्टे ॥ **अध्यवसायेति** ॥ वीरो अध्यवसायान्तगामीन्द्रः परमेश्वरः । उग्रमुग्रं सर्वानुग्रान् दैत्यानिति यावत् । बहुवचनं वीप्सार्थः । अति अतिक्रम्य संसारमतिक्रम्येति यावत् । क्वचिदुपसर्गाः ससाधनां क्रियामाहुरित्युक्तेः । नेनीयमानः स्वपदं नयन् । शृण्वे वेदादिषु श्रूयते । मनुष्यान् विशः मनुष्यादिप्रजाः । चोष्कूयते संसार एवावर्तयति । श्रुतावभावाद्भाष्ये कथं परमेश्वरस्येत्युक्तिरित्यत आह ॥ **इन्द्रेति** ॥ यद्वा स्मृतौ श्रौतेन्द्रपदस्याव्याख्यानात्कथं परमेश्वर इति टीकायामर्थ उक्त इत्यतो भाष्ये व्याकृतमित्याह ॥ **इन्द्रेति** ॥ स्मृत्युक्तेरुपयोगं वदन् स्वव्याख्यानं स्मृतिमूलमिति भावेनाह ॥ **श्रुत्यर्थेति** ॥

## वाक्यार्थमुक्तावली

**हेत्वन्तरेणेति** ॥ स्मृतेरुदाहृतत्वात् स्मार्तत्वरूपहेत्वपेक्षया भगवद्विशेषानुग्रहपात्रत्वरूप-हेत्वन्तरेणेत्यर्थः । उग्रमुग्रमिति वीप्सार्थः । सर्वानुग्रानिति फलितोक्तिः ॥ **दैत्यानिति** ॥ अत्यन्त-क्रूरान् दैत्यान् इत्यर्थः ॥ **अतिक्रम्येति** ॥ अतिक्रामयित्वेत्यर्थः । चोःकूयते परिवर्तयति । कू आप्रावरणे । एधमानद्विट् स्वयोग्याधिकं एधमानानां ह्रासकर्ता । उभयस्य मुक्तामुक्तवर्गस्य ।

## तत्त्वसुबोधिनी

ननु देवानामेव सम्यग्ज्ञानतत्फलप्रतिपादनीयेषु तेषु हरेः विशेषानुग्रहसमर्थनं क्वोपयुक्तमित्यत आह ॥ **ज्ञानादीति** ॥ असुरान् दमयन्निति स्मृत्यनुसारेण श्रुतिं व्याचष्टे ॥ **अध्यवसायेति** ॥ वीर इत्यस्यार्थकथनं इदमुग्रमुग्रमिति । वीप्सार्थः ॥ **सर्वानुग्रानिति** ॥ फलितोक्तिः । दैत्यानिति । अतीत्युपसर्गस्यार्थः ॥ **अतिक्रम्येति** ॥ अतिक्रामयित्वेत्यर्थः । संसारमिति योग्यतया सम्बन्धः, स्वपदमिति शेषोक्तिः । वेदादिष्वित्यस्य योग्यतया लाभः । **मनुष्यप्रजा इति** ॥ मुक्तियोग्य-तमोयोग्यवर्गयोः फलस्योक्तत्वाद्विष इति मनुष्या एव विवक्षिता इति भावः ।

## वाक्यार्थविवरणम्

ज्ञानफले इति ॥ ज्ञानतत्फले इत्यर्थः ।

## वाक्यार्थमञ्जरी

देवेष्वीशस्य विशेषानुग्रहं च शृण्वे वीरश्रुतिर्दर्शयतीत्यर्थः । इन्द्रशब्दार्थः परमेश्वरः, दमायन्नित्यस्य दमयन्, अन्यमन्यमित्यस्य तद्विरुद्धान् देवान् । बहुवचनं वीप्सार्थे । शृण्वे स्पष्टं श्रूयते । मनुष्यान्विशः मनुष्यान् प्रजाः चोष्कूयते संसार एवावर्तयति । ननु देवानां सम्यग्ज्ञानं तत्फलयोरेव प्रतिपादनीयत्वात् तेषु हरेर्विशेषानुग्रहसमर्थनं कोपयुक्तमित्याह ॥ **ज्ञानादीति** ॥ **अध्यवसायेति** ॥ आरब्धेत्यर्थः । अयं वीरशब्दार्थः उग्रमुग्रमिति । वीप्सार्थः सर्वानुग्रानिति । फलतोक्तिर्दैत्यानिति । अतीत्युपसर्गार्थोऽतिक्रम्येति अतिक्राम्येत्यर्थः । संसारमिति योग्यतया सम्बन्धः । स्वपदमिति शेषोक्तिः । वेदादिष्वित्यस्य योग्यतया लाभः ॥ **मानुषप्रजा इति** ॥ मुक्तियोग्यतमोयोग्यवर्गयोः फलस्योक्तत्वाद्विश इत्यनेन मनुष्या एव विवक्षिता इति भावः ।

## सूत्रभाष्यम्

**॥ ॐ अतस्त्वितरज्ज्यायो लिङ्गाच्च ॐ ॥ ३९ ॥**

**देवभागादसुरभाग एव बहुलः । 'तस्मान्न जनतामियात्' (बृ.उ.३-३-१०) इति लिङ्गात् । चशब्दात् 'ततः कनीयसा एव देवा ज्यायसा असुरा' (बृ.उ.३-३-१) इति श्रुतेश्च ।**

**'असुरा बहुला यस्मात्तस्मान्न जनतामियात्' इति च ब्राह्मे ॥**

## तत्त्वप्रदीपिका

**अतस्त्वितरज्ज्यायो लिङ्गाच्च–**

**'द्वया ब्रह्मसुतास्तत्र दैतेया बहवः स्मृताः ।**
**तमोभूताः सत्वरूपा अल्पसङ्ख्याः सुराः स्मृता' इति महासंहितायाम् ॥**

## तत्त्वप्रकाशिका

यदुक्तं न दैत्यानां तत्स्वभावाभिभवेन देवत्वप्राप्तिरिति तदेव युक्त्या समर्थयत्सूत्रं पठित्वा व्याचष्टे ॥ **अत इति** ॥ **यद्यसुराणां स्वभावाभिभवेन देवत्वप्राप्तिस्तर्हि** कदाचित्तेषां देवभागादूनता स्यात् । न चैवम् । अतो देवभागादितरस्यासुरभागस्यैव ज्यायस्त्वात् । तदेव कुतः । जनताऽ-प्रवेशोक्त्यन्यथानुपपत्तेः श्रुतेश्चेति भावः । ततस्तयोर्देवासुरभागयोः । कनीयांसो ज्यायांसश्चेत्यर्थः । ननु जनताऽप्रवेशनिषेधोऽसुरबाहुल्यनिमित्त एव कुत इति तत्राह ॥ **असुरा इति** ॥

## भावबोधः

असुरस्वभावानभिभवादेव देवभागादसुरभागस्य ज्यायस्त्वमन्यथा तन्न स्यादिति, सूत्रांशस्यार्थ इत्यभिप्रेत्याह **यद्यसुराणामिति** ॥ **अतो देवभागादिति** ॥ अनेनेतरत्वप्रतियोगित्वेन 'विशेषानुग्रहं च' इति प्रकृतदेवभागस्य परामर्शकतया **अतः**शब्दो भाष्ये व्याख्यात इत्युक्तं भवति । 'तस्मा-दित्यादिश्रुतेश्च' इत्यन्तं भाष्ये हेतुसाधकप्रमाणप्रदर्शकमित्यभिप्रेत्याह– **जनतेति** ॥

'द्वया ब्रह्मसुतास्तत्र दैतेया बहवः स्मृताः'

इति बृहदारण्यकभाष्यं मनसि निधाय व्याचष्टे **ततस्तयोरिति** ॥ अनेन तत इति निर्धारणार्थकषष्ठीद्विवचनान्तात्तसिरित्युक्तं भवति । लिङ्गप्रदर्शकत्वेन प्रागुदाहृता स्मृतिः पुनः किमर्थमुदाह्रियत इत्यतस्तदवतारयति **ननु जनतेति** ॥

## भावदीपः

स्वभावानभिभवस्यानभिभवं च दर्शयतीति प्रागेव समर्थनादाह ॥ **युक्त्येति** ॥ पूर्वं तु श्रुत्येति भावः । सूत्रादावसुरभागबाहुल्योक्तेः प्रकृतोपयोगाय तर्कमाह ॥ **यद्यसुराणामिति** ॥ आपाद्यस्या-निष्टतोपपादकत्वेन भाष्यं व्याचष्टे ॥ **न चैवमित्यादिना** ॥ **अत इति** सौत्रपदानुवादेन तद्व्याख्यात्वद्योतनाय भाष्यपदानुवादो देवभागादिति । तदेव ज्यायस्त्वमेव । श्रुतिरूपलिङ्गादिति भ्रान्तिनिरासायाह ॥ **जनतेति** ॥ जनसमूहाप्रवेशोक्त्यन्यथानुपपत्तिरूपलिङ्गात् । कनीयसा इति श्रुतेश्चेत्यर्थः । श्रुत्यर्थमाह ॥ **तत इति** ॥ तस्य प्रतिपदं तयोरिति । तस्याप्यर्थो देवेत्यादि । तत्राहेत्युपलक्षणम् । ज्यायःशब्दो न ज्येष्ठवाची किं तु बाहुल्यवाचीत्यत्रापीत्यपि ध्येयम् ।

## वाक्यार्थमुक्तावली

अत इत्यावर्तते । तुरवधारणे । ततश्च अत एवासुरस्वभावानां अभिभवेन देवत्वप्राप्त्यभावादेवातः विशेषानुग्रहश्चेति प्रकृताद्देवभागादितरत् असुरजातमेव ज्यायो बहुलमस्तीत्युपपद्यते । अन्यथा तन्न स्यात् । वह्निमत्वादेव धूमवत्वमन्यथा तन्न स्यादितिवत् । ज्यायस्त्वं च लिङ्गाच्छ्रुतेश्चेति सूत्रार्थमभिप्रेत्य व्याचष्टे ॥ **यदीति** ॥ जनता प्रवेशोक्त्यन्यथानुपपत्त्येति ॥ जनता प्रवेशनिषेधोक्त्यन्यथानुपपत्तेत्यर्थः । ज्ञानाङ्कुरसम्बृंहणार्थं जनता प्रवेशो निषिध्यते । यदि प्रतिजनसमूहमसुराल्पता सद्बाहुल्यं स्यात् तदाल्पोपमर्देन बहूपदेशेन ज्ञानवृक्षप्ररोहणस्यैव सम्भवन्निषेधो युक्तः । असुरबाहुल्ये तु तद्विजृम्भितोपदेशेन पूर्वप्राप्तश्रवणादिपरिभवेन भगवन्निन्दादिश्रवणेन च ज्ञानाङ्कुरपरिमोषण सम्भवान्निषेधोऽसुरबाहुल्यमन्यथानुपपत्या गमयतीति भावः ॥ **ततस्तयोरिति** ॥ निर्धारणषष्ठी द्विवचनान्तात्तच्छब्दात् तसिरिति भावः । कनीयसा ज्यायसा इत्यकारान्तत्वं छान्दसमित्यभिप्रेत्याह ॥ **कनीयांस इति** ॥ केचित्तु कनीयसा ज्यायसेति तृतीयैकवचनान्तयोः विपरिणामेनार्थमाहेत्यवतारयन्ति । जनता प्रवेशनिषेधो सुरबाहुल्यनिमित्त एव कुत इति ॥ असुराल्पत्वेऽप्युपदिष्टतत्वस्य ग्रहणमयोग्यस्य कस्यचिदपि भवतीत्यन्यथोपपन्नं किं न स्यादिति भावः ॥ **असुरबाहुल्य इति** ॥ स्मृत्यन्तरे जनता प्रवेशनिषेधस्यासुरबाहुल्यनिमित्तकत्त्वोक्त्या तस्मान्न जनतामियादिति सामान्यतो ज्ञानाङ्कुरस्य रक्षणीयत्वान्न जनतामियादिति स्मृत्यन्तरोक्तो जनता प्रवेशनिषेधो असुरबाहुल्यनिमित्तक इति ज्ञायत इति भावः । स्मृत्यन्तरमेव तत् भाष्ये चशब्दार्थतयोपात्तं ज्ञेयम् । अन्यथा प्रथममेव शिष्टवाक्योदाहरणसम्भवेन द्विःपठनायोगात् । श्रुतिवद् ब्राह्मपुराणोदाहरणेनैव विवक्षितासिद्धेर्लिङ्गादिति व्यर्थत्वाच्च । स्पष्टमसुरबाहुल्यस्य तत्रैवोक्तौ तत्र लिङ्गोक्त्यसम्भवाच्च ।

## तत्त्वसुबोधिनी

अत्र सूत्रे अतश्शब्दः अनभिभवं पराभवं चेत्युक्तस्वभावानभिभवपरामर्शकः । तुशब्द एवार्थः । वह्निमत्वादेव धूमवत्वमितिवदासुरस्वभावानभिभवादेव देवभागादसुरभागस्य ज्यायस्त्वम् । अन्यथा तन्न स्यादिति सूत्रांशस्यार्थ इत्यभिप्रेत्याह ॥ **यद्यसुराणामिति** ॥ अतो देवभागा इत्यनेन इतरप्राप्तियोगित्वेन विशेषानुग्रहं चेति प्रकृतदेवभावस्य परामर्शकतया अतःशब्दो भाष्ये व्याख्यात

(तत्त्वसुबोधिनी)

इत्युक्तं भवति । तस्मादित्यादिश्रुतेश्चेत्यन्तं भाष्यं हेतुसाधकप्रमाणदर्शकमित्यभिप्रेत्याह ॥ जनतेति ॥ ततः तयोरित्यनेन तत इति निर्धारणार्थकषष्ठीद्विवचनात्तिसिद्धिरित्युक्तं भवति । लिङ्गप्रदर्शकत्वेन प्रागुदाहृता स्मृतिः पुनः किमर्थं उदाह्रियत इत्यतः तदवतारयति । ननु जनतेति ।

## वाक्यार्थविवरणम्

'तस्मान्न जनतामियात्' इति बृहदारण्यकोक्तलिङ्गाभिप्रायमाह ॥ जनतेति ॥ अनेन जनमित्यस्य जनसमूहमित्यर्थ उक्तो भवति । देवभागादसुरभागस्य ज्यायस्त्वाभावे जनताप्रवेश-निषेधोक्तिरनुपपन्ना स्यादित्यर्थः । जनसमूहाख्यसभायां सज्जनानां स्वल्पत्वेन असुराणां बहुत्वेन तत्र गमने पराभवः स्यात् । अतो न सभां प्रविशेदिति भावः । ग्रामजनबन्धुसमुदायेभ्यस्तलिति सूत्रेण जनशब्दात् समूहार्थे 'तल्' प्रत्ययविधानाज्जनताशब्दो जनसमूहवाचीति ज्ञातव्यम् । भागयोर्मध्ये कनीयसा ज्यायसा इत्येतच्छान्दसमित्यभिप्रेत्य कनीयांसो ज्यायांस इत्युक्तम् ।

## वाक्यार्थमञ्जरी

अतो देवसमुदायादितरदसुरजातं ज्यायः अतिबहुलम् । कुतः लिङ्गात् । तस्मादिति जनसमुदायप्रवेशनिषेधान्यथानुपपत्तिलिङ्गात् । चशब्दात्कनीयस एवेति श्रुतेश्चेत्यर्थः । जनता जनसमुदायः । असुराणां बहुलत्व एव जनसमुदाये तेषामपि सत्वेन तत्सङ्गदोषाभावाय तत्प्रवेश-निषेध उपपद्यते नान्यथेति भावः ॥ ततस्तयोरिति ॥ अनेन तयोरिति निर्धारणार्थकषष्ठी-द्विवचनान्तात्तत्सिद्धिरित्युक्तं भवति ।

## सूत्रभाष्यम्

**॥ ॐ तद्भूतस्य तु तद्भावो जैमिनेरपि नियमातद्रूपाऽभावेभ्यः ॐ ॥ ४० ॥**

**असुरजातेरेवासुरत्वं देवजातेरेव देवत्वं जैमिनेरपि सिद्धमेव । 'नासुरा दैवीं न देवा आसुरीं न मनुष्या दैवीमासुरीं च गतिमीयुरात्मीयामेव जातिमनुभवन्ति' इति नियमश्रुतेः । 'नासुराणां दैवं रूपं न देवानामासुरं न चोभयं मनुष्याणां यो यद्रूपः स तद्रूपो निसर्गो ह्येष भवति' इत्यतद्रूपत्वश्रुतेः । 'तं भूतिरिति देवा उपासाश्चक्रिरे ते बभूवुस्तस्माद्धाऽप्ये तर्हि सुप्तो भूर्भूरित्येव प्रश्वसित्यभूतिरित्यसुरास्ते ह परावभूवुः' (ऐ.आ.२-१-८) इति देवासुराणां भावाभावश्रुतेश्च ।**

(सूत्रभाष्यम्)

'देवानां भूतिरित्येव मनो विष्णौ स्वभावतः ।
असुराणामभूतित्वेनैतन्नेयमतोऽन्यथा ॥
देवाः शापाभिभूतत्वात्प्रह्लादाद्या बभूविरे ।
अतः सुगतिरेतेषां नान्यथा व्यत्ययो भवेत्' इति चाध्यात्मे ॥

## तत्त्वप्रदीपिका

अनन्तेषु जीवेषु कियांश्चिदेव जनो ज्ञानाधिकारीत्युक्तम् । श्रुतिलिङ्गाभ्यां च बहुजनेषु विरलो ज्ञानयोग्यो देवभाग इति पर्यवसितम् । 'मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये' इति च भगवद्वचनम् । अतस्तस्य कदाचित्समाप्तेः पुनरनन्तकाले मोक्षवाक्यानां विषयाविच्छेदार्थं योग्यसन्ततिसापेक्षत्वाद्यथोक्तयोग्यतानियतेः क्वापि कदाचिदन्यथात्वं स्यादित्यत आह– तद्भूतस्येत्यादि सूत्रम् । देवजातीनामसुरजातीनां मनुष्यजातीनां च न क्वापि व्यत्यासः । जैमिनेरपि सिद्धमेवेति मतान्तराभावोपन्यासेन विषयभेदाशङ्कां निरस्यति, उक्तव्यवस्था क्वापि किञ्चिदपि न प्रायिकतां प्राप्नोतीति स्थापयितुम् ।

'देवासुरनरत्वाद्या जीवानां तु निसर्गतः ।
निसर्गो नान्यथैतेषां केनचित्क्वचिदेव वा ॥
देवाः शापबलादेव प्रह्लादादित्वमागताः ।
अतः पुनश्च देवत्वं ते यान्ति निजमेव तु ॥
हेतुतः सोऽन्यथाभावो रक्तता स्फटिके यथा ।
ततो नित्यश्च नाप्येष स्वभावविनिवर्तकः ॥
किन्त्वाक्रम्यैव तं तिष्ठेद्देवसर्गस्ततो हि यः ।
अशोच्य एव विज्ञेयो मोक्षयोग्यो हरेः प्रिय' इति ब्रह्मवैवर्ते,

नारदीये च । न चानादिकालान्मुच्यमानानां जीवानां कदाचित्समाप्तिरिति मन्तव्यम् । एकैकपदयोग्यानामेवानन्तत्वात् ॥

'अनागता अतीताश्च यावन्तः सहिताः क्षणाः ।
अतीतानागताश्चैव यावन्तः परमाणवः ।
ततोऽप्यनन्तगुणिता जीवानां राशयः पृथक्' इति च वत्सश्रुतिः ॥

(तन्त्रप्रदीपिका)

'परमाणुप्रदेशोऽपि ह्यनन्ताः प्राणिराशयः ।
सूक्ष्मत्वादीशशक्त्यैव स्थूला अपि हि संस्थिताः' इति ॥

'सहस्रयोजनसभां प्रभावाद्विश्वकर्मणः ।
अनन्ता राशयोऽनन्ताः प्रजानामधिसंस्थिता' इति स्कान्दे ॥

'स एष भूतिश्चाभूतिश्च तं भूतिरिति देवा' इत्यादेरर्थस्तु ऋक्संहितावचनादवगम्यते–

'स एव भूतिनामाऽपि ज्ञानैश्वर्यादिभूतिदः ।
अज्ञानादिप्रदातृत्वात्स एवाभूतिनामकः ॥
सुखज्ञानादिगुणदं पूर्णं सर्वगुणैः प्रभुम् ।
उपासते तं वाय्वाद्या देवास्तस्माच्च तेऽखिलाः ।
बभूवुः सुखसज्ज्ञानपूर्वैस्सर्वैर्गुणैर्युताः ॥
देवानामपि सर्वेषां प्रधानोऽद्यापि मारुतः ।
स्थित्वा सुप्तेषु विष्णुं तं भूर्भूरित्येव शंसति ॥
भूश्शब्दार्थो भूतिरिति वैपरीत्येन चासुराः ।
अभूतिकारणोऽस्माकमैश्वर्यादिगुणोज्झितः ।
इत्येवोपासते तस्मात्पराभूताश्च सर्वशः ॥
ज्ञानैश्वर्यादिभिर्हीनाः पेतुरन्धे तमस्यथ ।
य एवं वेद तं विष्णुं भूतिदं भूतिरूपिणम् ॥
भावाभावं च देवानां दैत्यानामेवमेव तु ।
ज्ञानैश्वर्यादिभिस्सोऽपि भवेत्तस्य परात्मनः ।
प्रसादादस्य पाप्मा च पराभवति सर्वश' इति ॥ इत्युभयलिङ्गाधिकरणम् ।

## तत्त्वप्रकाशिका

जैमिनिमतेनाप्येतमर्थं समर्थयत्सूत्रं पठित्वा व्याचष्टे ॥ तद्भूतस्येति ॥ देवस्यैव देवभावोऽसुरस्यैवासुरभावो जैमिनेरपि सिद्ध एव । न तु तत्र पुरुषार्थाद्यधिकरणवद्व्यवस्थितविकल्पोऽस्ति । केन हेतुना जैमिनेस्तत्सिद्धिः । नियमादिश्रुतेरेवेति भावः । गतिजातिशब्दौ स्वभावार्थौ । रूपमिति सम्यग्ज्ञानादि । देवासुराणां परस्परविपरीतोपासनफलनियमः 'तं भूतिः' इत्यनेनोच्यते । अन्यथा

(तन्त्रप्रकाशिका)

स न स्यात् । **बभूवुर्भूतिमन्तः । सुप्तः सुप्तेषु स्थितो वायुः । ननु** प्रह्लादादीनां दैत्यानामेव सम्यग्ज्ञानफलयोर्दर्शनात्**कथमेतदित्यत उक्तार्थे स्मृतिं** चाह **॥ देवानामिति ॥** न चैतावता देवानामसुरत्वप्राप्तिः । **'हेतुतः सोऽन्यथाभावो रक्तता स्फटिके यथा'** इति वचनात् । अतो भगवज्ज्ञानस्य **योग्यैकसाध्यत्वाद्योग्यानामेव मोक्ष** इति सिद्धम् ।

## भावबोधः

अत्र सूत्रे **तच्छब्दः, अतस्त्वितरत्** इति पूर्वसूत्रप्रकृतदैवासुरभागपरामर्शकः । भूतशब्दः स्वभावरूपजात्याशयकः । **तुशब्दः एवार्थ** इत्यभिप्रेत्य प्रवृत्तमसुरजातेरेवेति भाष्यं व्याचष्टे **देवस्यैवेत्यादिना ॥** मनुष्यस्यैव मनुष्यभाव इत्यपि ज्ञातव्यम् । 'नासुरा दैवीम्' इत्यादिश्रुत्यनुसारेण भाष्येऽसुरजातेरित्यसुराणां प्रथमं निर्देशः । टीकायां त्वभ्यर्हितत्वात् प्रथमं देवस्यैवेत्युक्तमिति ज्ञातव्यम् । सूत्रभाष्यगतजैमिनेरपि इति **अपिपदतात्पर्यमाह न तु तत्रेति ।** अत एव सिद्ध एवेत्युक्तम् ॥ **स्वभावार्थाविति ॥** अनेन भाष्यगतजातिशब्दोऽप्युक्तार्थः । सूत्रे भावशब्दोऽभावस्याप्युपलक्षक इत्यभिप्रेत्य भाष्ये भावाभावश्रुतेरित्युक्तम् । **देवासुराणामिति** ॥ भवनस्य सर्वसाधारणत्वादाह **भूतिमन्त इति** ॥ सुप्तः सुप्तेषु स्थितो वायुरिति ।

देवानामपि सर्वेषां प्रधानेष्वपि मारुतः ।
स्थितः सुप्तेषु विष्णुं तद्भूर्भूरित्येव शंसति ॥

इति वचनादिति भावः ॥ **एतावतेति ॥** शापेन देवानामसुरादिजन्मप्राप्तिरित्येतावतेत्यर्थः । अत्राद्ये ज्ञानस्याधिकारिमात्रप्राप्यत्वे लिङ्गोक्तिः । तत्र सर्वथापि इत्यंशेनानधिकारिप्राप्यत्वे निमित्तत्वेनाऽशङ्कितस्य प्रयत्नस्याप्रयोजकत्वोक्तिः । द्वितीये प्रयत्नविशेषेण स्वभावाभिभवेनानधिकारिप्राप्यत्वशङ्कापरिहारार्थं स्वभावानभिभवे प्रमाणोक्तिः । तृतीये अतिशयदृढासुरस्वभावाभिभवासम्भवेऽपि अतथाभूतमध्यममनुष्यस्वभावाभिभवसम्भवादनधिकारिप्राप्यमेव ज्ञानमित्याशङ्कायां तत्स्वभावस्याप्यनभिभवप्रयोजकदार्ढ्योक्तिः । चतुर्थे सम्यज्ज्ञानयोग्यत्वादीनां त्रयाणामनभिभवसिद्ध्यर्थं तेषां देवादिस्वभावत्वे स्मृतिरूपप्रमाणोक्तिः ॥ पञ्चमे चतुर्थसूत्रस्मारितसम्यज्ज्ञानतत्फलयोरधिकारमात्रप्राप्यत्वे ईश्वरानुग्रहविषयत्वरूपहेत्वन्तरोक्तिः । षष्ठे असुरस्वभावानभिभवे प्रामाणिकासुरभागज्यायस्त्वरूपहेतूक्तिः । सप्तमे स्वोक्तार्थे प्रमाणसिद्धजैमिन्याचार्यसंमत्युक्तिरिति सूत्रक्रमः ।

## भावदीपः

एतमर्थं स्वरूपानभिभवेनेत्येतत्प्रमेयम् । जातिशब्दः स्वभावपर इत्युपेत्य भाष्यं व्याचष्टे ॥ **देवस्यैवेति** ॥ श्रुत्यनुरोधेन भाष्येऽन्यथानिर्देशोऽपि पूर्वसूत्रभाष्यानुरोधेन व्युत्क्रमेण व्याख्यानम् । सूत्राविसंवादद्योतनाय भावशब्देन भाष्यस्थत्वप्रत्ययानुवादः । एवकारतात्पर्यमाह ॥ **न त्विति** ॥ ज्ञानस्य कर्मशेषतया फलहेतुत्वं मनुष्यापेक्षया दोषित्वेनेत्यधिकारिभेदेन व्यवस्थितविकल्पो जैमिनि-व्यासमतावलम्बेनोक्तः । स्तुतयेऽनुमतिर्वेत्यत्र नियमेन सर्वसदाचारानुष्ठानं मानुषविषयम् । अनियमेन तदनुष्ठानं देवताविषयमित्यादिकं जैमिन्यादिमतावलम्बेनोक्तं तथात्र नेत्यर्थः । कस्मिन्नर्थे हेतुत्वमित्यप्रतीतेर्नासुरा इत्यादिभावाभावश्रुतेश्चेत्यन्तभाष्यमवतार्यार्थमाह ॥ **केनेति** ॥ **नियमादीति** ॥ नियमात्तद्रूपत्वभूत्यभूतिबोधकश्रुतेरित्यर्थः । श्रुतौ स्वभावानभिभवोक्त्यप्रतीतेराह ॥ **गतिजातिशब्दाविति** ॥ देवाः शापेत्यादिस्मृत्यविरोधाय रूपपदार्थमाह ॥ **रूपमितीति** ॥ तं भूतिरित्यादिश्रुतेः प्रकृतोपयोगमाह ॥ **देवेति** ॥ अन्यथा स्वभावाभिभवे सति परस्पर-विपरीतोपासनफलनियमो न स्यादित्यर्थः । फलोक्तेरप्रतीतेराह ॥ **बभूवुर्भूतिमंत इति** ॥ ननु द्वितीयांत्यपादे त इन्द्रियाणि तद्व्यपदेशादिति नये सुप्तौ मुख्यप्राणस्यैव श्वासादिव्यापारकर्तृत्वोक्तेः कथमत्र सुप्तसुरासुरजीवस्य प्रश्वसितीत्युक्तिरित्यत आह ॥ **सुप्त इति** ॥ देवानामपि सर्वेषां प्रधानोऽद्यापि मारुतः । स्थित्वा सुप्तेषु तं विष्णुं भूर्भूरित्येव शंसति । भूशब्दार्थो भूतिरिति । वैपरीत्येन चासुराः । अभूतिकरणोऽस्माकमैश्वर्यादिगुणोज्झितः । इत्येवोपासते तस्मात्पराभूताश्च सर्वदा इत्याद्यैतरेयभाष्योक्तेरिति भावः ॥ **उक्तार्थ इति** ॥ देवानामेव सम्यग्ज्ञानफलं नान्येषा-मित्युक्तार्थ इत्यर्थः । एवं हि तद्भूतस्य तु तद्भाव इति पूर्वोक्तविरोध इति शङ्कते ॥ **न चैतावतेति** ॥ औपाधिकासुरत्वप्राप्तिमात्रेणेत्यर्थः । देवाः शापबलादेव प्रल्हादादित्वमागताः । अतः पुनश्च देवत्वं ते यान्ति निजमेव तु । हेतुतः सोऽन्यथाभावः इत्यादिषोडशाध्यायगीता-तात्पर्योक्तमाह ॥ **हेतुत इति** ॥ **अत इति** ॥ उभयलिङ्गबलात् श्रुतिस्मृतियुक्तिबलेन स्वभावस्या-नपायाच्चेत्यर्थः ।

## अभिनवचन्द्रिका

**न तु तत्रेति** ॥ पुरुषार्थाधिकरणे ज्ञानेनैव सर्वे पुरुषार्थाः । कर्मणा तत्रातिशयो भवतीति बादरायणमतं देवताविषयम् । कर्मणैव पुरुषार्थः, ज्ञानं तु तच्छेष इति जैमिनिमतं तदन्यविषयमिति

(अभिनवचन्द्रिका)

यथा व्यवस्थितविकल्पस्तथाऽत्र नेत्यर्थः । ननु भाष्ये 'गतिमीयुरात्मीयां जातिमनुभवन्ति' इत्युक्तम् । स्वभावप्राप्तेरेव वक्तव्यत्वादित्यत आह– **गतिजातिशब्दाविति ॥** माभूदसुराणां देवत्वं प्रह्लादादीनां देवत्वाभिधानात्, तथापि तत एव देवानामसुरत्वं तु प्राप्तमित्यत आह– **न चैतावतेति ॥**

पूर्वपक्षस्तु– अनधिकारिभिरपि ज्ञानमाप्यते । असुराणामपि प्रह्लादादीनां ज्ञानस्मृतेः । न च स्मृत्युक्तमपि असम्भावितत्वात् न सिध्यतीति वाच्यम् । वेदानधिकारेऽपि शूद्राणां वेदप्राप्तेर्दृष्टत्वेन तदनधिकारिणां तत्प्राप्तेः सम्भावितत्वात् । अतोऽयोग्यैरपि ज्ञानस्य प्राप्तुं शक्यत्वात् अयोग्यानामपि मोक्ष इति ।

सिद्धान्तस्तु– गुरूपसत्त्याद्यनेकोत्साहेऽपि योग्यानामेव ज्ञानप्राप्तिः न त्वयोग्यानाम् । 'य आत्मा अपहतपाप्मा' इति इन्द्रविरोचनयोरेकप्रकारेण चतुर्मुखोपदेशेऽपि इन्द्र एव सम्यग्ज्ञानमाप । विरोचनस्तु विपरीतज्ञानमापेत्युभयविधलिङ्गात् । ननु महता प्रयत्नेन विश्वामित्रस्य विप्रत्वदर्शनात् असुराणामपि योग्यताऽभिभवेन देवत्वप्राप्तिः किं न स्यादिति चेत्, न दैवीमेव संपत्तिं देवा अभिगच्छन्ति, आसुरीमेवासुरा नैतयोरभिभवः कदाचित्' इति श्रुतेः । ननु अस्तु सुदृढत्वात् देवासुरस्वभावयोरनभिभवः । मनुष्यस्वभावस्य तु अभिभवोऽस्तु अदृढत्वादिति चेत्, न । मिश्रज्ञान एवैतेषां दार्ढ्यदृष्टेः 'असुरा आसुरेणैव स्वभावेनैव कर्मणा । ज्ञानेन विपरीतेन तमो यान्ति विनिश्चयात् । देवा दैवस्वभावेन कर्मणा चाप्यसंशयम् । सम्यग्ज्ञानेन परमां गतिं गच्छन्ति वैष्णवीम् ॥ नानयोरन्यथा भावः कदाचित्क्वापि विद्यते । मानुषा मिश्रमतयो विमिश्रगतयोऽपि च' इति स्मृतेः । शृण्वे वीर उग्रमुग्रं दमायन्यन्यमन्यमतिनेनीयमानः । एधमानद्विळुभयस्य राजा चोष्कूयते विश इन्द्रो मनुष्यान्' इति देवेषु विशेषानुग्रहश्रुतेश्च । किं च यद्यसुराणां देवत्वं भवेत्, तर्हि दैत्यभागः कालक्रमेण क्षीणो भवेत्, दिने दिने ब्राह्मणेभ्यो दीयमानधान्यराशेः क्षयदर्शनात् । न चासावस्ति 'असुरा बहुला यस्मात्तस्मान्न जनतामियात्' इति वचनात् । तेन मन्यामहे न दैत्यानां स्वरूपोपमर्देन देवत्वं भवतीति । असुरस्वभावानामेवासुरत्वं, देवस्वभावानामेव देवत्वमिति जैमिनेरप्याचार्यस्य सिद्धम् । 'नासुरा दैवीं न देवा आसुरीम्' इति नियमश्रुतेः । 'नासुराणां दैवं रूपम्' इत्यतद्रूपश्रुतेः, 'तं भूतिरिति देवा उपासाञ्चक्रिरे ते बभूवुः, अभूतिरित्यसुरास्ते ह पराबभूवुः' इति देवासुराणां भावाभावश्रुतेश्च । अतो भगवज्ज्ञानस्य योग्यैकसाध्यत्वात् योग्यानामेव मोक्ष इति सिद्धम् ।

## वाक्यार्थमुक्तावली

**एतमर्थमिति** ॥ अनभिभवश्चेत्युक्तं स्वभावनभिभवं तत्तत्फलभाक्त्वं चेत्यर्थः । तदिति प्रस्तुतदेवादित्रयपरामर्शः । तुशब्द एवार्थः भूप्राप्तौ । सिद्ध इति शेषः । अपिशब्दस्तु उक्तार्थस्याभियुक्तसम्मतिरूपहेत्वन्तरसमुच्चयार्थः । तथा च तद्भूतस्य तत्त्वं देवादित्वं प्राप्तस्य देवादेरेव तद्भावाद्देवादिभावो जैमिनेरपि सिद्ध एवेति भावेन सूत्रखण्डार्थं स्पष्टयति ॥ **देवस्यैवेति** ॥ श्रुत्यनुसारेण भाष्ये असुरजातेरिति प्रथममुक्तेऽपि प्राधान्यविवक्षया देवस्यैवेति प्रथमं ग्रहणम् । सिद्ध एवेत्येवकारव्यावर्त्यमाह ॥ **न चेति** ॥ पुरुषार्थाधिकरणे जैमिन्युक्तस्य बादरायणसम्मतत्वेऽपि कर्मणः पुरुषार्थः । ज्ञानं शेषभूतमिति जैमिन्युक्तस्य मानुषविषयत्वात् बादरायणोक्तस्य कर्मणो ज्ञानशेषत्वस्य देवताविषयत्वेन जैमिनिना व्यवस्थितवैकल्पिकोक्तिर्नात्र किन्तु सिद्धमेव न वैकल्पिकमित्यर्थः । तदुक्तं तत्त्वप्रदीपे 'सिद्धमेवेति मतान्तराभावोपन्यासेन विषयभेदाशङ्कां निरस्यति । उक्तव्यवस्था क्वापि किञ्चिदपि न प्रायिकता प्राप्नोतीति स्थापयितुमिति ॥ **नियमादिश्रुतेरेवेति** ॥ एतेन नियमात्तद्रूपाभावेभ्य इति नियमादिश्रुतिर्लक्ष्यत इति इत्युक्तं भवति । भाष्ये अतद्रूपत्वश्रुतेरित्यनेन रूप्यते निरूप्यत इतरव्यावृत्ततया वस्त्वनेनेति रूपं सम्यग्ज्ञानादिलक्षणम् । तेषां देवादीनां रूपं तद्रूपं तन्नेत्यतद्रूपम् । भावप्रधानो निर्देशः । ततश्च परस्परभिन्नलक्षणवत्त्वश्रुतेः इत्युक्तं भवति । भावाभावश्रुतेरित्यनेन सूत्रे अभावपदं भावस्याप्युपलक्षणम् । भावो भूतिः । अभावो अभूतिः । श्रुतेश्च परस्परविपरीतस्य भूतित्वेनाभूतित्वेनोपासनस्य भूत्यभूतिरूपतत्फलस्य च श्रुतेरित्यर्थ उक्तो भवतीति ज्ञेयम् । भवनस्य सर्वसाधारणत्वादिह भूतिमन्त इति । यद्वा भवतेर्भूत्यर्थत्वाद्भूर्भूरित्यस्यार्थ एवायम् । तदुक्तम् । भूशब्दार्थो भूतिरिति ॥ **सुप्तेषु स्थितो वायुरिति** ॥ 'देवानामपि सर्वेषां प्रधानोऽद्यापि मारुतः । स्थित्वा सुप्तेषु विष्णुं तं भूतिरित्येव शंसति । भूशब्दार्थो भूतिरिति वैपरीत्येन चासुराः । अभूतिकारणोऽस्माकमैश्वर्यादि गुणोज्झितः । इत्येवोपासते तस्मात् पराभूताश्च सर्वशः' इति वचनादिति भावः । एतेन देवास्तं भूतिरिति ज्ञानैश्वर्यादिभूतिद इत्युपासां चक्रिरेऽतस्ते भूतिमन्तो बभूवुः । तत्र ज्ञापकमुच्यते तस्माद् ह तस्मादेव कारणात् एतर्हि अद्यापि सर्वदेवोत्तमः । सुप्तेषु स्थितो वायुर्भूर्भूरित्येव प्रश्वसिति । ज्ञानैश्वर्यादिरूपस्तत्प्रदश्चेति प्रश्वसिति । प्रश्वासनियमपूर्वं स्तौति ।

(वाक्यार्थमुक्तावली)

असुरास्त्वभूतिरित्युपासां चक्रिरेऽतस्ते पराबभूवुरिति श्रुत्यर्थ उक्तो भवति। अतः सुगतिरिति भाष्यस्य प्रह्लादादीनां देवत्वादेव सुगतिस्सम्यग्ज्ञानं गम्यत इति गतिः समीचीनं फलं च। अन्यथा देवत्वादन्यथा। दैत्यत्वेनोक्तस्य व्यत्यय इत्येतन्न भवेदित्यर्थः। ननूक्तविधया दैत्यानां सम्यग्ज्ञानफलाभावेऽपि देवानां दैत्यत्वं प्राप्तमित्याशङ्क्य विशेषवाक्येन परिहरति ॥ **न चेति** ॥ देवाः शापबलादेव प्रह्लादादित्वमागताः। 'अतः पुनश्च देवत्वं ते यान्ति निजमेव तु। हेतुतः सोऽन्यथाभावो रक्तता स्फटिके यथा। अतो नित्यश्च नाप्येषः स्वभावो विनिवर्तकः' इति गीतातात्पर्योदाहृतवचनादित्यर्थः। अत्राद्ये प्रयत्नस्याप्रयोजकत्वं, योग्यताया एव प्रयोजकत्वम्। अतो नायोग्यानां ज्ञानप्राप्तिः। किन्तु योग्यानामेवेत्यत्र लिङ्गोक्तिः। द्वितीये मरुता प्रयत्नेन क्षत्रियत्वस्येव योग्यताया एवाभिभवः किन्न स्यादित्याशङ्क्य योग्यतायाः स्वभावत्वस्य स्वभावस्य च श्रुत्यानभिभवस्य चोक्तिः। तृतीये स्वभावानभिभवश्रुतेरसुरदेवमातृविषयत्वेन मध्यमस्वभावाभि-भवोऽस्त्वित्याशङ्क्य निषेधः। चतुर्थे द्वितीयसूत्रे चशब्दसमुच्चितस्य देवादीनां सम्यग्ज्ञानादि-योग्यतायास्तत्तत्स्वभावत्वस्य स्मृत्यादिसिद्ध्युक्तिः। षष्ठे तु द्वितीये श्रुत्युपपादितस्य स्वभावा-नभिभवस्य युक्त्यापि समर्थनम्। सप्तमे जैमिनिसंमत्यापि दृढीकरणमिति सूत्रक्रमः।

## तत्त्वसुबोधिनी

अत्र सूत्रे तच्छब्दः अतस्त्वितरदिति पूर्वसूत्रप्रकृतदेवासुरभागपरामर्शकः, भूतशब्दस्तु स्वभावरूपजात्यभिप्रायः। तुशब्द एवार्थ इत्यभिप्रेत्य प्रवृत्तं असुरजातेरेवेति भाष्यं व्याचष्टे **देवस्यैवेत्यादिना** ॥ मनुष्यस्यैव मानुषभाव इत्यपि ज्ञातव्यम्। भाष्ये असुरजातेरित्यसुराणां प्रथमं निर्देशो 'नासुरा दैवीम्' इति श्रुत्यनुसारेण, टीकायान्तु अभ्यर्हितत्वात्प्रथमं देवस्येत्युक्तमिति ज्ञातव्यम्। सूत्रभाष्यगतजैमिनेरपीत्यपिपदतात्पर्यमाह। **न तु तत्रेति** ॥ **स्वभावार्थाविति** ॥ अनेन भाष्यगतजातिशब्दोऽप्युक्तार्थः। सूत्रे भावशब्दोऽभावस्याप्युपलक्षक इत्यभिप्रेत्य भाष्ये भावा-भावश्रुतेरित्युक्तम्। तदभिप्रायमाह ॥ **देवासुराणामिति** ॥ अन्यथा स न स्यादिति परस्पर-विपरीतोपासनाभावे सफलनियमो न स्यादित्यर्थः। नैतन्नियमतोऽन्यथेत्यस्य अन्यथा एतत्फलं नियमतो न स्यादित्यर्थः। पवनस्य सर्वसाधारणत्वाद्भूतित इति। सदा सुप्तेषु स्थितो वायुरिति। ''देवानामपि सर्वेषां प्रधानेष्वपि मारुतः। स्थित्वा सुषुप्तौ विष्णुं च तद्भूर्भूरित्येवशंसति'' इति

(तत्त्वसुबोधिनी)

वचनादिति भावः ॥ **एतावतेति** ॥ शापेन देवानामसुरजन्यप्राप्तिरित्येतावतेत्यर्थः । अत्राद्ये लिंगोक्तिः । द्वितीये स्वभावानभिभवे प्रमाणोक्तिः तृतीये मनुष्यस्वभावस्याप्यनभिभव-प्रयोजकदाढर्योक्तिः । चतुर्थे स्मृतिरूपप्रमाणोक्तिः । पञ्चमे ईश्वरानुग्राह्यविषयत्वरूपहेत्वंतरोक्तिः । षष्ठेऽसुरस्वभावानभिभवे प्रामाणिकासुरभागज्यायस्त्वरूपहेतूक्तिः । सप्तमेजैमिनिसंमत्युक्तिरिति सूत्रक्रमः ।

## वाक्यार्थविवरणम्

**जैमिनेरपीति** ॥ अपिपदतात्पर्यमाह ॥ **न तु तत्रेति** ॥ देवस्यैव देवभावः । असुरस्यैवासुर-भाव इत्यर्थः ॥ **पुरुषार्थाधिकरणवदिति** ॥ यथा 'पुरुषार्थोऽतःशब्दात्' इत्यधिकरणे ज्ञानेनैव सिध्यति स्वर्गे कर्मातिशयमाधायकमिति जैमिनिमतम् । तयोश्च मतयोरधिकारिभेदेन व्यवस्थितो विकल्पः । एवं देवस्यैव देवत्वम् । असुरस्यैवासुरत्वम् । 'अनभिभवं च दर्शयति' इत्यादिना भगवता प्रतिपादितम् । अत्र पुनः जैमिनिग्रहणेन कस्यचिद्देवस्यासुरत्वं कस्यचिदसुरस्य देवत्वं भवतीति व्यवस्थितविकल्प इति प्रतियते । तत्परिहारार्थं जैमिनेरपीत्युक्तं यत्पूर्वं भगवता प्रतिपादितम् । न तु जैमिनेरपि । न तु तत्र कश्चिद्विकल्प इत्यर्थः । फले ॥ **भूत्यभूतिरूपे** ॥ **अन्यथेति** ॥ देवादिजातेरेव देवत्वाद्यभावे सः फलनियमो न स्यादित्यर्थः । भाष्ये केवलं दैवीं केवलमासुरीं चेत्यर्थः ॥ **भूतिमन्त इति** ॥ ज्ञानाद्यैश्वर्यवन्तो बभूवुरित्यर्थः । भाष्ये भावाभावशब्दौ भूत्यभूतिवाचकाविति द्रष्टव्यम् ॥ **एतावतेति** ॥ देवा इति वाक्ये देवानां प्रल्हादाद्यसुर-भावेनोत्पत्तिकथनेनेत्यर्थः ॥ **हेतुत इति** ॥ शापरूपादित्यर्थः । तथा च देवानाम् । सोऽन्यथा-भावः । प्रल्हादाद्यसुरभावः ॥ **हेतुतः** ॥ शापरूपोपाधिनिमित्तत एव । न स्वाभाविक इत्यर्थः । तत्र दृष्टान्तः ॥ **रक्ततेति** ॥ जपाकुसुमसन्निधानादिति भावः । शङ्कुकर्णो नाम कश्चिद्देवो भगवद्वस्त्रधारणकर्मणि नियुक्तः । कदाचिद्वस्त्रानयने विलम्बं कृतवान् । तदानीं कुपितो ब्रह्मा शशापेति श्रीमुष्णमाहात्म्ये कथा ।

## वाक्यार्थमञ्जरी

तद्भूतस्य तु देवादित्वं प्राप्तस्यैव देवादिभावो जैमिनेरपि सिद्धः कुतः नियमात्, तद्रूपाभावेभ्यः नासुरा दैवीमिति नियमश्रुतेः । नासुराणां दैवं रूपमित्यतद्रूपत्वश्रुतेः । अभावस्याभूतेः

(वाक्यार्थमञ्जरी)

उपलक्षणमेतत् । भावस्य भूतेर्भूतिरिति देवा अभूतिरसुरा इति श्रुतेरित्यर्थः ॥ **पुरुपार्थाधिकरणेति** ॥ तत्र ज्ञानस्यैव सर्वपुरुषार्थसाधनत्वमिति व्यासमतम् । देवापेक्षया ज्ञानपूर्वकर्मण एव स्वर्गादिहेतुत्वमिति जैमिनिमतं, मनुष्यापेक्षयेति विकल्पस्तथात्र नेत्यर्थः । भवनस्य सर्वसाधारणत्वादाह ॥ **भूतिमन्त इति** ॥ **सुप्तेषु स्थित इति** ॥ 'देवानामपि सर्वेषां प्रधानेष्वपि मारुतः । स्थित्वा भूतेषु विष्णुं तद्भूर्भूरित्येव शंसति' इति वचनादिति भावः ॥ **एतावेतिति** ॥ शापेन देवानामसुरादिजन्मप्राप्तिरित्येतावतेत्यर्थः ॥ **हेतुत इति** ॥ जपाकुसुमसन्निधानाद्यथा स्फटिके रक्तत्वमौपाधिकमेव प्रतीयते तथा दैत्यत्वमपि तेषु शापनिमित्तं प्रतीयत इत्यर्थः ॥

**॥ इति उभयलिङ्गाधिकरणम् ॥ ५ ॥**

# ६. अधिकारिकाधिकरणम्

**॥ ॐ न चाऽधिकारिकमपि पतनानुमानात्तदयोगात् ॐ ॥ ४१ ॥**

न च परमात्मैश्वर्यादिकमाकाङ्क्ष्यम् । ब्रह्मादीनामपि नाऽऽकाङ्क्ष्यं, किमु परस्येति सूचयितुमपिशब्दः । चशब्दस्तु ज्ञानार्थिनां पूर्वोक्तादित्थम्भावान्तरसूचकः । अयोग्यमारोढुं प्रयतन् प्रपतन् हि दृश्यते । एवमयोग्यस्य परमात्मैश्वर्यस्य ब्रह्मादिपदस्य चाकाङ्क्षायां पतनमनुमीयते ।

'न देवपदमन्विच्छेत्कुत एव हरेर्गुणान् ।
इच्छन्पतति पूर्वस्मादधस्ताद्यत्र नोत्थितिः' इति ब्रह्माण्डे ।

'स्वकीयमिच्छमानं तु राजाद्याः पातयन्ति हि ।
एवमेव सुराद्याश्च हरिश्च स्वपदेच्छुकम्' इत्याद्यनुमानरूपवाक्याच्च ।

'मायाभिरुत्सिसृप्सत इन्द्र द्यामारुरुक्षतः । अव दस्यूँरधूनुथा' (ऋ.सं.८-१४-१४) इति श्रुतिश्च ॥

## तत्त्वप्रदीपिका

अयोग्यानां महोत्साहेऽपि न ज्ञानं स्यात्, स्याच्च महान्दोष इत्युक्तम् । न च योग्यतोत्साहेन व्यत्यसितुं शक्येति च । अथापि ज्ञानयोग्यानामेवान्योन्याधिकारप्राप्तिः स्यात् । योग्यतायां सत्यां साधनाधिक्ये फलाधिक्यनियमोक्तेरवरेषामुत्तमपदप्राप्तिर्न विरुध्यते । बीजानामिव साधनसम्पदा सस्यसम्पत्तिरित्याशङ्कायां तेषामुत्तमपदाकाङ्क्षायामेव गरीयान्दोष इत्याहातिदवीयांस्तदधिगम इति किमु कथनीयमित्यभिप्रायेण न चाऽधिकारिकमपि पतनानुमानात्तदयोगात् । उत्तमाधिकारिणां देवानां यस्य यस्मिन्नधिकारः श्रुतिस्मृतिप्रसिद्धस्तत्पदमाधिकारिकम् । चशब्दस्तु ज्ञानार्थिनां पूर्वोक्तादित्थम्भावान्तरसूचकः । अयमर्थः । ज्ञानार्थिनां ब्रह्मचर्यगुरुशुश्रूषाभक्तिश्रवणादयो हि विहिताः । तेषामेवेत्थम्भावान्तरं चशब्देन सूचितम् । ज्ञानार्थिना मुक्तेभ्योऽन्योऽपीत्थम्भावोऽपेक्षितः परब्रह्मणो देवानां चैश्वर्याद्याकाङ्क्षा नैव कार्येति । तदकाङ्क्षायां न ज्ञानमुत्पद्यते । पूर्वस्मादधः पतनं च भवति । अतोऽधःपातभीरूणामपि नैवाऽऽकाङ्क्ष्यं ब्रह्मादिपदम् । अधिकोत्तराकाङ्क्षायां

(तत्त्वप्रदीपिका)

चाधिकोऽधःपातो भवति । अत आह ब्रह्मादीनामपि नाऽकाङ्क्ष्यं किमु परस्येति । रुद्रादिपदयोग्यैरित्यभिप्रायेण ब्रह्मादीनामित्युक्तम् । ते नैवाऽकाङ्क्षन्ति । अतस्तेषामधःपाताशङ्का दूराद्दवीयसी । य एत उत्पन्नज्ञानाः स्वेच्छानुवृत्या प्रायस्सुखाद्युत्कर्षवन्तो भवन्ति ये तूत्पन्नज्ञानत्वेऽपि विधिनियतास्तेषामेव ज्ञानात्प्राक् पूर्वस्मात्पतनं तत्र वैशेषिको विधिः । ये पुनः श्रुतिस्मृतिभिर्बहुभिर्निवारिता अप्ययोग्यं पदमारुरुक्षन्ति ते नैव ज्ञानयोग्यास्तानुद्दिश्याऽह– 'मायाभिरुत्सिसृप्सत' इत्यादि । एवमयोग्यस्येति वचनात्तत्पदयोग्यानां तत्तदाकाङ्क्षायां नैव दोषः ॥

## तत्त्वप्रकाशिका

अत्र भगवत्प्राप्तिसाधनज्ञानस्य देवादिपदाकाङ्क्षाशून्यैरेव प्राप्यत्वमहिम्नो वर्णनादस्ति शास्त्रादिसङ्गतिः । अन्यथा यागाद्यतिशयासिद्धेरेतत्साध्यम् । देवादिषु नियतं ज्ञानं तदन्यैर्न प्राप्यमित्युक्तम् । तत्सङ्गतं देवतापदं विषयः । किमन्यैः प्राप्यं न वेति सन्देहः । लोकदृष्टिरतीताधिकरणन्यायश्च सन्देहबीजम् । देवतापदमन्यप्राप्यमिति पूर्वः पक्षः । 'स्वधर्मनिष्ठः शतजन्मभिः पुमान्विरिञ्चतामेति' इत्यादेः । देवत्वस्य स्वाभाविकत्वान्नान्यैस्तत्प्राप्यमिति चेन्न । प्रयत्नसाध्यत्वश्रवणात्तस्य स्वभावत्वानुपपत्तेः । यद्धि चेतनेषु चेतनत्वं तदेव स्वाभाविकं तच्च सर्वेषां सममेवेति न कश्चिद्देवत्वादिः स्वभावः । किं बहुना प्रयत्नेन भगवदैश्वर्यमपि प्राप्तुं शक्यते किमु देवपदमित्यतो ज्ञानमप्ययोग्यप्राप्यमिति । सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ॥ न चेति ॥ यदुक्तं देवतापदं भगवदैश्वर्यं चान्यैः प्राप्यमिति न तद्युक्तम् । तदाकाङ्क्षाया एवायोगेन तत्प्राप्तेर्दूरोत्सारितत्वादिति भावः । सूत्रे ब्रह्मादिपदानाकाङ्क्षैवोच्यतेऽतः कथं न परमात्मैश्वर्यादिकमाकायमिति भाष्यत इत्यत आह ॥ ब्रह्मादीनामिति ॥

ननु भगवदैश्वर्याद्याकाङ्क्षायोगः कुत इति तत्राह ॥ अयोग्यमिति ॥ अत्रायं प्रयोगः । ब्रह्मादिपदाकाङ्क्षावान् पतति । अयोग्यारोहप्रयत्नवत्त्वात् । अयोग्यवृक्षारोहप्रयत्नयुक्तवदिति । इच्छाया अपि प्रयत्नविशेषत्वाङ्गीकारान्नासिद्धिः । न च जीवानां चैतन्यमेव निजस्वभाव इत्ययोग्यत्वविशेषणासिद्धिः । 'देवासुरनरत्वाद्या जीवानां तु निसर्गतः' इति वचनात् । प्रयत्नस्य स्वभावाभिव्यक्तिहेतुत्वान्निर्मूलानुमानं न मानमिति तत्राह ॥ नेति ॥ यत्र पतितस्य । नन्वयोग्यारोहप्रयत्नस्य पतनकारणत्वेऽपीच्छामात्ररूपस्य तद्दर्शनान्न तावन्मात्रं बाधकमित्यत

(तन्त्रप्रकाशिका)

इच्छाया अपि पातकारणत्वं **स्मार्तानुमानेन** दर्शयति ॥ **स्वकीयमिति** ॥ अयमत्र प्रयोगः । विमतो देवादिभिः पात्यते । अशक्यतत्पदेच्छुत्वात् । राजपदेच्छुवदिति । अत्र मूलभूतां श्रुतिं चाह ॥ **मायाभिरिति** ॥ हे परमेश्वर त्वं कुविद्याभिरुत्तमत्वं प्राप्तुमिच्छतः स्वर्गमारोढुं चेच्छतो दस्यूनन्धं तमस्यवाक्षिप इत्यर्थः ।

## गुर्वर्थदीपिका

देवादिपदाकाङ्क्षाशून्यैरित्यस्य स्वायोग्यपदाकाङ्क्षाशून्यैरित्यर्थः । अन्यथा यागाद्यतिशया-सिद्धेरित्यत्र यागादिभ्योऽतिशयासिद्धेरित्यर्थः । अहं ब्रह्मेति वदतो मिथ्याज्ञानिनोऽपि यागा-त्फलसिद्धेरिति भावः । किं बहुना । भगवदैश्वर्यमपीत्यत्र भगवदैश्वर्यं नामाणिमाद्यैश्वर्यमुच्यते । अद्वैतवादिनां चेयं शङ्का । नन्वयोग्यवृक्षारोहप्रयत्नस्य पतनहेतुत्वेऽपि तदाकाङ्क्षामात्रस्य पतनहेतु-ताया अदर्शनादप्रयोजको हेतुरिति चेन्न । अयोग्यराजसिंहासनारोहाकाङ्क्षामात्रेणापि कारागृहादौ पतनस्यापि वक्ष्यमाणत्वात् । आरुरुक्षत इत्यनेन पौनरुक्त्यपरिहाराय उत् उत्कृष्टत्वं सर्पितुमिच्छन्तः उत्सिसर्पन्तः इति भावेनार्थमाह **उत्तमत्वमिति** ॥

## भावबोधः

चशब्दस्तु पूर्वोक्तादित्थंभावान्तरसूचक इति भाष्यं मनसि निधायाधिकरणप्रतिपाद्यमाह– **देवादिपदाकाङ्क्षाशून्यैरिति** ॥ तथा च एवं पूर्वाधिकरणे ज्ञानस्याधिकारिमात्रप्राप्यत्वमुक्त्वा अत्र ज्ञानस्य देवादिपदाकाङ्क्षाशून्यतालक्षणेत्थंभाववद्भिरधिकारिभिः प्राप्यत्वसमर्थनादनन्तरसङ्गतिरिति भावः । पूर्वाधिकरणोपक्षिप्तदेवतादिपदविचाराच्चानन्तरसङ्गतिरिति दर्शयन् विषयमाह– **देवादि-ष्वित्यादिना** ॥ यद्वा 'स्वधर्मनिष्ठः' इत्यादिना देवत्वस्य प्रयत्नसाध्यत्वश्रवणादयुक्तं पूर्वाधि-करणोक्तं देवत्वस्य स्वाभाविकत्वमित्याक्षेपादनन्तरसङ्गतिरिति ज्ञातव्यम् ॥ **किमित्यादि** ॥ अत्र देवतापदं किमन्यैः प्राप्यं भवत्युत न भवतीति चिन्ता । तदर्थं विरिञ्चादिदेवतापदं प्रयत्नमात्रसाध्यं भवत्युत न भवतीति । तदर्थं देवादिपदाकाङ्क्षा प्रयत्नाधिकारिण अनर्थप्राप्तिर्नास्त्युतास्तीति । तदर्थं देवतापदं ज्ञानादिशुभसाधारणं भवत्युत नेति । तदर्थं देवादिचेतनानां यच्चैतन्यं तदेव स्वाभाविकमुत देवत्वादिकमपीति । 'न चाऽधिकारिकं' इति सूत्रनिवर्तनीयपूर्वपक्षमाह **देवतापदमिति** ॥

(भावबोधः)

इत्यादेरित्यादिपदेन **'शतक्रतुरिन्द्रो भवति'** इत्यादेर्ग्रहणम् । सर्वजीवानामेकप्रकार एव निज-स्वभावश्चैतन्यमिति फलेऽप्यविशेष इति न्यायविवरणं संयोजयति– **यद्धीति** ॥ न च परमात्मैश्वर्यादिकमिति भाष्यानुरोधेनाह– **किं बहुनेति** ॥ **अतो ज्ञानमपीति** ॥ अपरोक्षज्ञानस्य देवतापदहेतुत्वात् तदप्राप्तौ तदप्राप्तेरेवायोगादिति भावः । **तदाकाङ्क्षाया एवेति** ॥ अनेन सूत्रे 'नाधिकारिकमपि तदयोगात्' इति सम्बन्ध उक्तो भवति ॥ **ब्रह्मादिपदानाकाङ्क्षेति** ॥ ब्रह्मादीना-मेवाधिकारिकत्वादिति भावः । आकाङ्क्षायोगः कुत इतीति । अनेन पतनानुमानं तदयोगे हेतुरित्युक्तं भवति । एवमयोगस्येत्यादिभाष्यानुसारेण प्रतिज्ञामाह– **ब्रह्मादीति** ॥ 'अयोग्यमारोढुं' इत्युदाहरणसामर्थ्यलब्धं हेतुमाह– **अयोग्यारोहेति** ॥

ननु ब्रह्मादिपदाकाङ्क्षावति तद्विषयकप्रयत्नाभावादसिद्धिरित्यत आह– **इच्छाया अपीति** ॥ अत्र प्रयत्नशब्देन प्रवृत्तिर्विवक्षिता । प्रवृत्तिविशेषत्वाङ्गीकारादित्यर्थः । यथोक्तं सुधायाम् तत्र साधनगोचरेच्छाप्रयत्ने प्रवृत्तिरित्युच्येते इति । देवतापदस्य ज्ञानवदवान्तरफलत्वेऽपि सायुज्यादि-मोक्षविशेषहेतुत्वेन साधनत्वमप्यस्तीति ज्ञातव्यम् । तथा चायोग्यारोहप्रवृत्तिमत्त्वादिति हेत्वर्थ इति । अयोग्यारोहप्रयत्नस्य पतनकारणत्वेऽपीच्छामात्ररूपस्येत्येतदप्येवमेव व्याख्येयम् । स्वधर्मनिष्ठ इत्यादिवाक्यस्य गतिमाह– **प्रयत्नस्येति** ॥ **तत्राहेति** ॥ भाष्ये 'न देवपदमन्विच्छेत्' इति पुराणोदाहरणमुपलक्षणम् । 'नादेवो देवपदमन्विच्छेत्' इत्यादिन्यायविवरणोदाहृतश्रुतिरप्यनुमान-मूलभूतेति द्रष्टव्यम् । **इच्छामात्रस्वरपस्येति** ॥ प्रवृत्तिशब्दवाच्यस्येत्यर्थः ॥ **स्मार्तानुमानेनेति** ॥ अनेन 'पतनानुमानात्' इति सूत्रांशो भाष्ये प्रकारान्तरेण व्याख्यातो भवति । 'मायाभिः' इत्यस्यार्थः– **कुविद्याभिरिति** ॥ 'उत'शब्दस्यार्थ उत्तमत्वमिति । 'सिसृप्सते' इत्यस्यार्थः प्राप्तुमिच्छत इति, 'सृ गतौ' इति धातोरिति भावः । 'अव' इत्यस्यार्थोऽन्धेतमसीति । सूत्रे उपशब्दः समीपवर्तिवाचकः । पूर्वसूत्राद्देवतावाचकाधिकारिकपदस्यार्थवशेन षष्ठ्यन्तस्यानुवृत्तिः ।

## भावदीपः

सूत्रे देवपदानामयोग्याप्राप्यत्वोक्तावपि पादान्तार्भावलाभाय सूत्रतात्पर्यार्थमाह ॥ **देवादीति** ॥ अयोग्यानामपि देवादित्वसम्पादनसम्भवेनायोग्यैरपि प्राप्यत्वशङ्कायामिति भावः । तेनानभिभवं

(भावदीपः)
चेत्यादिना यद्देवादित्वस्य **स्वभावत्वोपगमेन** ज्ञानस्यायोग्याप्राप्यत्वमुक्तं तद्युक्तम् । देवत्वादेर-स्वाभाविकत्वेन प्रयत्नेन देवत्वसम्पादनद्वाराऽयोग्यानां ज्ञानप्राप्तिसम्भवादिति पूर्वाक्षेपेण शङ्को-त्थानात्पूर्वसङ्गतिरपि सूचिता ॥ **यागादीति** ॥ देवतापदाद्याकाङ्क्षावद्भिरपि ज्योतिष्टोमादिना स्वर्गादिफलप्राप्तिर्भवतीति भावः । यद्यपि पूर्वोक्तप्रमेयासिद्धिरेव फलं सुवचं तथापि स्वर्गाद्यर्थिनां नेयमितिकर्तव्यता ज्ञानार्थिनामेवेति सूचनायैवमुक्तिः । देवपदस्य प्रागप्रकृतत्वादाह ॥ **देवादिष्विति** ॥ **अन्यैरिति** ॥ तदयोग्यैरित्यर्थः । भाष्यदिशाकाङ्क्ष्यं न वेत्येव वाच्ये प्राप्यं न वेत्युक्तिः फलेऽप्यविशेष इत्यन्यत्रोक्तानुरोधात् ॥ **लोकेति** ॥ लोके राजादिपदं प्रयत्नेन तदन्यैः प्राप्य-मप्युपलभ्यते । पूर्वत्र च देवासुरत्वादिः स्वाभाविको न केनापि निवर्त्य इत्यप्युक्तमिति भवति संदेह इति भावः ।

सर्वजीवानामेकप्रकार एव निजस्वभावश्चैतन्यमिति फलेऽप्यविशेष इत्यन्यत्रोक्त प्रतिज्ञांशार्थ-माह ॥ **देवतेति** ॥ कुत इत्यतः प्रयतन् पतन् हि दृश्यते इति भाष्ये प्रयत्न स्यानर्थहेतुत्वोक्ते-स्तद्व्यावर्त्यहेतुं प्रयत्नसाध्यत्वं असिद्धिनिरासाय स्मृत्यैवाह ॥ **स्वधर्मेति** ॥ स्वधर्मनिष्ठः शतजन्मभिः पुमान्विरिंचतामेति ततः परं हि माम् । अव्याकृतं भागवतोऽथ वैष्णवं पदं यथार्हं विबुधैः कलात्यये इति चतुर्थस्कन्धत्रयोविंशोऽध्याये रुद्रवाक्यम् । तस्य चेदं तात्पर्यम् । मां श्रियम् । ऋजवो नाम ये देवा योग्या ब्रह्मपदस्य तु । त एव शतजन्मानि विशेषोपासका हरेः । प्राप्य ब्रह्मपदं पश्चाच्छ्रियं प्राप्यानुमोदिताः । तया ततो हरिं यान्ति वसंति हरिसन्निधौ ॥ अनादिकालभक्ताश्च ज्ञानिनस्ते न संशयः । विशिष्टा ज्ञानभक्त्याद्यैः सर्वजीवनिकायतः ॥ सर्वदापि विशेषेण शतजन्मप्रयत्नतः । स्वपदप्राप्तिरुद्दिष्टा ततो मुक्तिरवाप्यते । तथैव चत्वारिंशद्भिः पदं शैवं च जन्मभिः । विंशद्भिरैन्द्रं दशभिरन्येषामप्युदीरितमिति षाड्गुण्ये इति । तथापि तदन-भिज्ञस्यापातार्थाभिज्ञस्य पूर्वपक्षिण इदं चोद्यमिति ज्ञेयम् । आदिपदेन वया विष्णोरेषस्य प्रभृथे हविर्भिः । विदेहि रुद्रो रुद्रियं महित्वमित्यादिग्रहः । पूर्वोक्तविरोधमाशङ्क्य निराह ॥ **देवत्व-स्येति** ॥ श्रवणात् पूर्वोक्तस्मृत्यादावुक्तेरित्यर्थः । देवत्वादेरस्वभावत्त्वादेव ततोऽन्यस्वभावाभावात् निःस्वभावो जीवः स्यादित्यतः सर्वजीवानामित्याद्यन्यत्रोक्तवाक्यांशार्थं योजयति ॥ **यद्धीति** ॥ एवकारव्यावर्त्योक्तिर्नेत्यादि । सौत्रापिपदव्यावर्त्यं न चेत्यादिभाष्योक्तमाह ॥ **किं बहुनेति** ॥ अत

(भावदीपः)

इति ॥ देवादित्वस्य प्रयत्नसाध्यत्वादित्यर्थः ॥ अनाकाङ्क्षोक्तिरसङ्गतेत्यतः पूर्वपक्षनिरासकहेतुपरतया भाष्यं व्याचष्टे ॥ **यदुक्तमित्यादिना** ॥ सर्वजीवानामित्यादिन्यायविवरणवाक्येन यदुक्तमित्यर्थः । सूत्रादावनुमानादित्युक्तेर्भाष्योक्तहेतुदृष्टान्तौ विवृण्वन्प्रयोगमाह ॥ **अत्रायमिति** ॥ नन्विच्छारूपाकाङ्क्षावत्त्वमेव न तु प्रयत्नवत्त्वमित्यत आह ॥ **इच्छाया इति** ॥ अत्र साध्ये आकाङ्क्षाशब्दोपात्ताया इच्छायाः केवलेच्छामात्रत्वं नोपेयते । किं तु प्रयत्नविशेषरूपत्वमित्यर्थः । इच्छायाः साधनेच्छायाः प्रयत्नविशेषत्वादित्यर्थ इत्येके । पूर्वोक्तदिशा विशेषणासिद्धिमाशङ्क्य षोडशगीतातात्पर्योक्तस्मृत्या निराह ॥ **न चेति** ॥ देवत्वादेः स्वभावत्त्वे स्वधर्मनिष्ठ इत्यादिनोक्तप्रयत्नसाध्यत्वहेतुकानुमानविरोध इत्यत आह ॥ **प्रयत्नस्येति** ॥ यत्रेत्यनुवादः पतितस्येति शेषोक्तिः ॥ **अशक्येति** ॥ प्राप्तुमशक्येत्यर्थः । श्रुतिं व्याचष्टे ॥ **हे परमेश्वरेति** ॥ त्वमिति शेषः । मायाभिः कुविद्याभिः । उत्सिसृप्सतः उत्तमत्वं प्राप्तुमिच्छतः । द्यां स्वर्गं आरुरुक्षतः आरोढुमिच्छतः अवधूनुथः अन्धे तमस्यवाक्षिप इति ।

## अभिनवचन्द्रिका

**अत्र भगवत्प्राप्तिसाधनज्ञानस्येति** ॥ अस्मिन्नधिकरणे देवादिस्वायोग्यपदाकाङ्क्षावैधुर्यलक्षणगुणसम्पत्त्यनन्तरमेव ज्ञानमाप्यत इति प्रमेयस्यार्थात्सिद्धेरस्ति पादसङ्गतिरित्यर्थः । एतेन अत्राधिकरणे अयोग्यानां देवादिपदप्राप्त्यभावस्यैव वर्णितत्वात् ज्ञानमहिम्नो वर्णनादित्ययुक्तमिति परास्तम् ॥ **लोकदृष्टिरिति** ॥ यज्ञदत्तपदस्य देवदत्तप्राप्यत्वदर्शनम् । 'सर्वथाऽपि तु त एवोभयलिङ्गात्' इति न्यायदर्शनं च सन्देहबीजमित्यर्थः ॥ **किं बहुनेति** ॥ 'सायुज्यं समवाप्नोति' इति वचनात् भगवदैश्वर्यमाप्तुं शक्यत इति भावः ॥ **अयोग्यारोहेति** ॥ अरोहोऽत्र प्राप्तिः, न तु प्रसिद्धमूर्ध्वप्रदेशगमनमिति बोध्यम् । एतेन अयोग्यवृक्षारोहप्रयत्नवतोऽपि प्राप्त्यभावदर्शनात् व्यभिचार इति परास्तम् ॥ **अयोग्यवृक्षारोहेति** ॥ राजान्तःपुरगतत्वादिनायोग्यस्य वृक्षस्य प्राप्तये प्रयतमानवदित्यर्थः । अवश्यं चैतदेवं विज्ञेयम् । अन्यथा पक्षदृष्टान्तयोरारोहस्य पातस्य च विलक्षणत्वात् दृष्टान्तोऽनुपपन्नः स्यात् । तथा हि । पक्षे हि अयोग्यारोहप्रयत्नः तत्प्राप्तिप्रयत्नः । दृष्टान्ते हि ऊर्ध्वप्रदेशगमनम् । एवं पक्षे पातो नाम दुःखावाप्तिः । दृष्टान्ते तु अधःपतनमिति भेदात् । ब्रह्मादिपदकाङ्क्षावत्सु सर्वेषु तद्विषयकप्रयत्नाभावात् भागासिद्धिरित्यत आह– **इच्छाया अपीति** ॥

(अभिनवचन्द्रिका)

अत्र प्रयत्नशब्देन प्रवृत्तिर्विवक्षिता । इच्छापि प्रवृत्तिविशेषः 'साधनगोचरेच्छाप्रयत्नौ प्रवृत्तिरित्युच्यते' इति सुधोक्तेः । ततश्च प्रवृत्तित्वेन रूपेण सापि हेतुतया विवक्षितेति न भागासिद्धिरिति भावः । एवं तर्हि प्रयत्नवैयर्थ्यमित्यत आह– **प्रयत्नस्येति** ॥ न वैयर्थ्यमिति शेषः ॥ **अयमत्र प्रयोग इति** ॥

ननु सम्भवति अशक्यराजपदेच्छुं राजा पातयतीति अविवेकित्वात् । इदं तु न सम्भवति देवा देवपदेच्छुं पातयन्तीति विवेकित्वात् । न हि विवेकिनः येन स्वस्योपद्रवशङ्काऽस्ति । तादृशं विघातं करिष्यामीति वदन्तमपि बालं, उन्मादाद्याक्रान्तं वा, घातयन्ति; प्रत्युत उपकुर्वन्ति । एवं च सति कथमेतद्विजानीमः दयालवोऽपि देवा अशक्यस्वपदेच्छुमज्ञतरं घातयन्तीति । ततश्च बाधितविषयमनुमानमिति चेत्, न ब्रूमो वयं देवाः स्वानिष्टशङ्कया स्वपदेच्छुं घातयन्तीति । येनोक्तदोषः स्यात् । न चैवं, किं नाम । धर्माऽधर्मफलदाने भगवता नियुक्तत्वात् निषिद्धं कामयमानमधर्मकारित्वात् घातयन्तीति । ननु अन्धत्वादिदोषवन्तं राजपदायोग्यं राजपदं कामयमानं पुत्रं, राजानो न घातयन्तीति व्यभिचार इति चेत्, सत्यं न घातयन्ति किं नाम स्नेहौत्कण्ट्यस्य प्रतिबन्धकत्वान्न घातयन्ति । न हि विषसंपृक्तत्वादन्नमिष्टसाधनं नेति । अन्नत्वस्य हेतोस्तत्र व्यभिचारो भवति । येनेह प्रतिबन्धवशात् साध्याभावे व्यभिचारं प्रतीमः ।

## वाक्यार्थमुक्तावली

चशब्दस्तु ज्ञानार्थिनां पूर्वोक्तादित्थंभावान्तरसूचक इति भाष्यानुसारेणाधिकरणतात्पर्यमाह ॥ **देवादीति** ॥ अत्राधिकरणे देवादिपदस्य ज्ञानादिश्रेयस्कामेनानाकाङ्क्षत्वाभिधानादिति भावः ॥ **अन्यथेति** ॥ देवादिपदाकाङ्क्षाविरागस्यापि ज्ञानाधिकारित्वाद्देवादिपदाकाङ्क्षावता योग्येनापि ज्ञानस्य प्राप्यत्वेन यागाद्यतिशयो न स्यात् । तथा च यागवदयोग्यप्राप्यत्वेन त एवोभयलिङ्गादित्यत्र ज्ञानयोग्या एव ज्ञानमाप्नुवन्तीत्युक्तमयुक्तम् स्यादिति पूर्वाक्षेपेणोत्थानादनन्तरसङ्गतिरिति भावः ॥ **तत्सङ्गतमिति** ॥ देवादिषु नियतं ज्ञानं तदन्यैर्न प्राप्यमित्युक्तं देवादिपदस्यैव तदन्यप्राप्यत्वे तन्नियतं ज्ञानमन्यप्राप्यं प्रसज्येतेति तदाक्षेपवत्तया सङ्गतं देवादिपदं संशयविषयो विचार्यत इत्यर्थः । एतेन प्रकारान्तरेणाप्याक्षेपिकी सङ्गतिरित्युक्ता भवति ॥ **किमिति** ॥ देवादिपदं किमन्यप्राप्यमुत नेति चिन्ता । तदर्थं तत्किमस्वाभाविकमुत स्वाभाविकमिति । तदर्थं तत्पुरुषप्रयत्नसाध्यं न वेति

(वाक्यार्थमुक्तावली)

॥ **लोकेति** ॥ लोके यस्य कस्यापि राजादिपदद्दष्टिरित्यर्थः ॥ **गताधिकरणेति** ॥ योग्यानामेव ज्ञानप्राप्तिर्योग्यता च स्वाभाविकी । स्वभावस्य चानभिभव इति पूर्वोक्तं न्यायमेव पदस्यान्याप्राप्यत्वे न्यायं इति पूर्वोक्तन्यायः संशयबीजमिति भावः । तथा च पूर्वन्यायेन संशयोत्थानाच्चानन्तर-सङ्गतिरिति ज्ञेयम् । आधिकारिकपदनिरस्यं प्रमाणमाह ॥ **स्वधर्मेति** ॥ पुमानिति सामान्योक्त्या तत्प्राप्त्यर्थं नाधिकारिविशेषक्लृप्तिरित्यर्थः । पूर्वाधिकरणन्यायेन देवत्वस्य चान्यैरप्राप्यत्वमाशङ्क्य निषेधति ॥ **देवत्वस्येति** ॥ कुतो नेत्यतः पततानुमानादित्येतन्निवर्त्ययुक्तिमाह ॥ **प्रयत्नेति** ॥ न तु प्रयत्नस्य योग्यताव्यंजकत्वसम्भवादप्रयोजको हेतुरित्यतः स्यादिदं यदि पदस्य निजस्वभावत्वं स्यात्तदेवासिद्धमित्याह ॥ **यदीति** ॥ यत् प्रयत्नसंस्पर्शशून्यं चेतनत्वं तदेव न तु पदमित्यर्थः । देवासुरनरस्वभावत्वे युक्त्यन्तरमाह ॥ **तच्चेति** ॥ निजस्वभावभूतं चेतनत्वं सर्वेषामेकप्रकारमिति तदायत्तं देवत्वादिकं कथं स्वभाव इति भावः । एतेन तदयोगात् देवत्त्वादावन्येषां योग्यता-भावादिति । सूत्रे अयोग्यमारोढुं सुराद्याश्च हरिश्च स्वपदेच्छुकमिति भाष्ये च देवत्त्वादेर्नैज-स्वभावत्वोक्त्या निरस्यो निजस्वभाव इत्युक्तन्याय उक्तो भवति । आधिकारिकमपीत्यपि-शब्दनिरस्यं कैमुत्यमाह ॥ **किं बहुनेति** ॥ अत इति देवत्वस्य वा न्यायप्राप्यत्वात्तन्नियतं ज्ञानमपीत्यर्थः । देवादिपदाकाङ्क्षायाः कर्तुं शक्यत्वाद्यागादिदं ज्ञानमप्ययोग्यप्राप्यमिति न तस्य यागाद्यतिशय इति वा । न चाधिकारिकमपीत्येतद्विवरणपरं न च परमैश्वर्यादिकमपीति भाष्यांश-मन्यैः प्राप्यमित्यध्याहारेण व्याचष्टे ॥ **तदाशङ्काया एवेति** ॥ भाष्य आदिपदेन देवतापदं गृह्यते इति भावः । तत्र हेतुतया तदयोगात् तदाकाङ्क्षाया एवायोगादिति सूत्रखण्डं तात्पर्यतो व्याकुर्वन् न च परमैश्वर्यादिकमाकाङ्क्ष्यमिति भाष्यं व्याचष्टे ॥ **तदाकाङ्क्षाया एवेति** ॥

ननु सूत्र इति तदयोगादिति सूत्रखण्डे तच्छब्देन पूर्वप्रकृताधिकारिकपदानाकाङ्क्षैवोच्यते कथमैश्वर्यब्रह्मादिपदयोरुभयोरनाकाङ्क्ष्यत्वं भाष्यत इत्यर्थः । यद्वा न च परमैश्वर्यादिकमपीत्य-स्यैवाधिकारिकमिदमीशैश्वर्यं च प्राप्यम् । कुतस्तदुभयं नाकाङ्क्ष्यम् । कुतस्तदुभयविषयाकाङ्क्षैव न कार्येति यावत् । तदपि कुतः तदयोगात् । तदाकाङ्क्षायाः कर्तुमयुक्तत्वादित्यर्थमभिप्रेत्य भाव इत्यन्तेन व्याख्यातम् । तथा च सूत्रे ब्रह्मादिपदानाकाङ्क्षेत्यादेः न चाधिकारिकमिति सूत्रखण्डे ब्रह्मादिपदानाकाङ्क्षैवोच्यत इत्यर्थः ज्ञेयः । इत्थंभावान्तरसूचक इति भाष्यस्य ऊर्ध्वरेतस्सु

(वाक्यार्थमुक्तावली)

चेत्याद्युक्तब्रह्मचर्यगुरुशिष्यादीत्थंभावमपेक्ष्य ज्ञानार्थिनां देवादिपदाकाङ्क्षाशून्यत्वरूपेत्थंभावांतरसूचक इत्यर्थः । यद्वा योग्यतेत्थंभाव इत्यव्यवहिताधिकरणे निरूपितं योग्यानामप्युत्तमपदवीरागोऽपीत्थं-भाव उच्यत इत्यर्थद्वयं तत्त्वप्रदीपे व्यक्तम् । भगवदैश्वर्याद्याकाङ्क्षायोगः कुतः प्रमाणादवसीयत इत्यतः प्रवृत्तं तदयोगात् तत् तत्र भगवदैश्वर्यादौ अयोगात् अयोग्यत्वात् तद्विशेषणकप्रयत्न-वत्त्वहेतुना पतनानुमानात् पदाकाङ्क्षायोग इति सूत्रांशं व्याचष्टे इत्यर्थः । ब्रह्मादिपदाकाङ्क्षावति सर्वत्र प्रयत्नवत्वं विशेष्यमसिद्धमित्यत आह ॥ **इच्छाया अपि प्रयत्नविशेषत्वादिति** ॥ प्रवृत्तिविशेषत्वादित्यर्थः । तदुक्तं सुधायां तत्र साधनगोचराविच्छाप्रयत्नौ प्रवृत्तिरित्युच्येत इति । अत्र दृष्टान्तदार्ष्टांतिकयोरारोहो नामोत्तमस्थानप्राप्तिः । उत्तमस्थानं च दार्ष्टान्तिके पदरूपं दृष्टान्ते उर्ध्वभागरूपमिति न दोषः । पातोऽप्येवमवस्थानप्राप्तिरूप उभयानुगतो बोध्यः ।

ननु प्रयत्नासाध्यं चैतन्यमेव निजस्वभावः । न तु देवत्वादिः प्रयत्ननिष्ठ इति प्रयत्न-साध्यत्वश्रवणादित्याशङ्क्य निषेधति ॥ **न चेति** ॥ कुतो नेत्यतो यस्य यस्मिन्नधिकारः श्रुतिस्मृतिसिद्धस्तत्पदमाधिकारिकमिति तत्त्वप्रदीपरीत्या आधिकारिकपदग्रहणसूचितगीता-तात्पर्योदाहृतवचनमुदाहरति ॥ **देवेति** ॥ **देवत्वादेः स्वाभाविकत्वे स्वधर्मनिष्ट** इति प्रयत्नवैय्यर्थ्य-मित्यतः प्रयत्नस्यान्यथासिद्धिमाह ॥ **प्रयत्नस्येति** ॥ **निर्मूलेति** ॥ वैदिकेऽर्थे केवलानुमानात् प्रवृत्तेरिति भावः । एतेनानुकूलमानादनुमानादिति वर्णकान्तरमुक्तं भवति ॥ **इच्छामात्ररूपस्येति** ॥ प्रवृत्तिविशेषस्येत्यर्थः ॥ **दर्शयतीति** ॥ दर्शयत् पतनानुमानादित्येतत् प्रकारान्तरेण व्याचष्ट इत्यर्थः। एतेन निषेधसामान्यविधिक्रियाणां विभक्ततेति न्यायो लेशतो दर्शितो भवति । न देवपदमन्विछेत् । सुराद्याश्च हरिश्च **स्वपदेच्छुकमित्युक्त्या** देवादिपदेच्छाया अन्येषां निषेधस्य योग्यानां तस्य स्वत्त्वोक्त्याऽनिषेधस्य चोक्त्या निषेधविभागन्यायस्य व्यक्तत्वात् । मायाभि-र्मोहिकाभिरित्यस्य तात्पर्यं कुविद्याभिरिति । तत् उत्तमत्त्वम् । सृ गतौ । सर्तुमिच्छा सिसृक्षा एषां ते उत्सृजन्त तानित्यभिप्रेत्याह ॥ **उत्तमत्त्वमिति** ॥ दस्यून् ब्रह्मस्तेनान् । अव अवमे तमसीति यावत् ।

## तत्त्वसुबोधिनी

चशब्दस्तु पूर्वोक्तादित्थम्भावान्तरसूचकः इति भाष्यं मनसि निधायाधिकरणप्रतिपाद्यमाह **देवादिपदेति** ॥ तथा चैवं पूर्वाधिकरणे ज्ञानस्याधिकारिमात्रप्राप्यत्वमुक्त्वा ज्ञानस्य देवादि-पदाकाङ्क्षाशून्यत्वलक्षण इत्थम्भाववद्भिरधिकारिभिः प्राप्यत्वसमर्थनादनन्तरसङ्गतिरिरिति भावः । पूर्वाधिकरणोपक्षिप्तदेवतादिपदविचाराच्चानन्तरसङ्गतिं दर्शयन् विषयमाह । **देवादिष्वित्यादिना** ॥ यद्वा स्वधर्मनिष्ठ इत्यादिना देवत्वस्य प्रयत्नसाध्यत्वश्रवणादयुक्तं पूर्वाधिकरणोक्तदेवत्वस्य स्वाभाविकं वेत्याक्षेपादनन्तरसङ्गतिरिरिति भावः ॥ **अन्यथेति** ॥ देवादिपदाकाङ्क्षाशून्यैनैव प्राप्यत्व-समर्थनाभावे योगाद्यपेक्षया विशेषो न स्यात्तस्याप्युत्तमपदाकाङ्क्षावद्भिः प्राप्यत्वादित्यर्थः । पूर्वन्यायश्चेति । देवादिपदमेव देवादिभिः प्राप्यं नान्यैरिति पूर्वन्याय इत्यर्थः । न चाधिकारिकमिति सूत्रनिवर्तनीयपूर्वपक्षमाह ॥ **देवतापदमिति** ॥ इत्यादेरित्यादिपदेन शतक्रतुरिन्द्रो नवतीत्यादेर्ग्रहणम् ।

देवत्वं चेदस्वाभाविकं किं तर्हि चेतनेषु स्वाभाविकमित्यत आह ॥ **यद्वीति** ॥ तर्हि देवान्या-प्राप्यमस्तु इत्यत आह ॥ **तच्चेति** ॥ **अतो ज्ञानमपीति** ॥ अपरोक्षज्ञानस्य देवतापदहेतुत्वात्तदप्राप्तौ पदप्राप्तेरेवायोगादिति भावः । इत्थम्भावान्तरसूचक इत्यस्यायमर्थः । ज्ञानिनां ब्रह्मचर्यगुरुशुश्रूषा भक्तिश्रवणादयो विहिताः । तेषामेव इत्थम्भावान्तरं चशब्देन सूचितम् । ज्ञानार्थिनामुक्तन्यायोऽ-पीत्थम्भावोऽपेक्षितः परब्रह्मणो देवानां ऐश्वर्यादिकाङ्क्षा नैव कार्येति इत्येतच्चशब्दसूचितमित्थम्भा-वान्तरं देवादिपदाकाङ्क्षाशून्यैरेवाप्तत्वमहिम्नो वर्णनादित्यनेनैव टीकाकारैरधिकरणारम्भे सूचितमिति नेह तद्वर्णनमिति नात्र तदनुक्तिर्दोषः इति ध्येयम् ॥ **आकाङ्क्षायोग इतीति** ॥ अनेन पतनानुमानं तदयोगे हेतुरित्युक्तं भवति । अयोग्यमारोढुमित्युदाहरणसामर्थ्यलब्धमर्थमाह ॥ **अयोग्यारोहेति** ॥ ननु ब्रह्मादिपदाकाङ्क्षा भवति तद्विषयकप्रयत्नाभावादसिद्धिरिति अत आह ॥ **इच्छाया अपीति** ॥ अत्र प्रयत्नशब्देन प्रवृत्तिर्विवक्षिता प्रवृत्तिविशेषाङ्गीकारादित्यर्थः । अत एव सुधायां तत्र साधनगोचराविच्छाप्रयत्नौ प्रवृत्तिरित्युच्येत इत्युक्तमिति भावः । अयोग्यारोहप्रयत्नस्य पतन-कारणत्वेऽपीच्छामात्ररूपस्येत्येतदप्येवं व्याख्येयम् । स्वधर्मनिष्ठ इत्यादिवाक्यगतिमाह- **प्रयत्नस्येति स्मार्तानुमानेनेति** ॥ अनेन पतनानुमानादिति सूत्रांशो भाष्ये प्रकारान्तरेण व्याख्यातो भवति । मायाभिरित्यस्यार्थः कुविद्याभिः इति । उच्छब्दस्यार्थ **उत्तमत्वमिति** । सिसृक्षतीत्यस्यार्थः प्राप्तुमिच्छतीति । सृगताविति धातोरिति भावः । अवेत्यर्थश्चान्धेतमसीति ।

## वाक्यार्थविवरणम्

**यागाद्यतिशयेति** ॥ अयोग्यकामनावता कृतेनापि यागेन स्वर्गादिफलसिद्धेरित्यर्थः ॥ **लोकदृष्टिरिति** ॥ लोके अन्यपदस्य अन्यैः प्राप्यत्वदर्शनादित्यर्थः ॥ **अतीतेति** ॥ देवजातेरेव देवत्वाद्युक्त्या तत्पदमपि तन्मात्रप्राप्यं नान्यैरित्यर्थः ॥ **स्वधर्मनिष्ठ इति** ॥ अत्र यः कश्चित्पुमान् स्वधर्मनिष्ठो विरिञ्चितामेतीति पूर्वपक्षाभिमतोऽर्थ इति द्रष्टव्यम् । शङ्कते ॥ **देवत्वस्येति** ॥ **प्रयत्नेति** ॥ स्वधर्माचरणरूपप्रयत्नेत्यर्थः । तर्हि किं तत्स्वरूपत्वमित्यत आह ॥ **यद्वीति** ॥ **तदाकाङ्क्षाया एवेति** ॥ देवतापदाकाङ्क्षाया एवेत्यर्थः ।

ननु ब्रह्मादिपदाकाङ्क्षावति तद्विषयकप्रयत्नाभावादसिद्धिरित्यत आह ॥ **इच्छाया अपीति** ॥ प्रयत्नः प्रवृत्तिः । साधनेच्छाप्रयत्नौ अत्र प्रवृत्तिरित्युच्येत इति सुधोक्तेरिति ज्ञातव्यम् ॥ **चैतन्यमेवेति** ॥ न तु देवत्वादिकमित्यर्थः । ननु देवत्वादेः स्वाभाविकत्वे स्वधर्मनिष्ठ इति प्रयत्नसाध्यत्वप्रतिपादकोदाहृतवाक्यविरोध इत्यत आह ॥ **प्रयत्नस्येति** ॥ भाष्ये पूर्वस्मात् स्वयं पूर्वं यस्मिन् स्थाने स्थितस्तस्मात् स्थानादधस्तात् पतति ॥ **यत्र** ॥ अधस्तनस्थाने पतितस्य नोत्थानमित्यर्थः । शक्ये तत्पदयोग्ये तत्पदेच्छुत्वसद्भावेऽपि दैवैः पात्यमानत्वाभावाद्व्यभिचारवारणाय अशक्तत्वे सतीत्युक्तम् । अयोग्यत्वे सतीत्यर्थः । अशक्ते तत्पदानिच्छौ पुरुषे व्यभिचारवारणाय तत्पदेच्छुत्वादित्युक्तम् ।

## वाक्यार्थमञ्जरी

**अतीताधिकरणेति** ॥ ज्ञानस्य योग्यैरेव प्राप्यत्वमित्यत्र साधकत्वेनोक्तश्रुति स्मृत्यादीत्यर्थः । ननु निःस्वभावस्य वस्तुनोऽभावाद्यत्स्वभावत्वेनाऽऽयास्यति तदेव देवत्वादिति ब्रूम इत्यत आह ॥ **यद्वीति** ॥ **अतो ज्ञानमपीति** ॥ अपरोक्षज्ञानस्य देवतापदहेतुत्वात्तदप्राप्तौ तत्प्राप्तेरेवायोगादिति भावः ।

आधिकारिकं ब्रह्मादिपदमपि ज्ञानिभिर्नाकाङ्क्ष्यं किम्वीश्वरपदम् । कुतः तदयोगात् तदाकाङ्क्षाया अयोगात् । कुतः पतनानुमानात् अयोग्यवृक्षारोहप्रयत्नयुक्तदृष्टान्तेन तत्पदारोहप्रयत्नवतामपि पतनानुमानादित्यर्थः । ननु ब्रह्मादिपदाकाङ्क्षावति तद्विषयकप्रयत्नाभावादसिद्धिरित्यत

(वाक्यार्थमञ्जरी)

आह ॥ **इच्छाया अपीति** ॥ अत्र प्रयत्नशब्देन प्रवृत्तिर्विवक्षिता प्रवृत्तिविशेषत्वाङ्गीकारादित्यर्थः । यथोक्तं सुधायाम् । तत्र साधनगोचरेच्छाप्रयत्नौ प्रवृत्तिरित्युच्यत इति देवतापदमपि सायुज्यादि-मोक्षविशेषसाधनमिति न क्षुद्रोपद्रवः । तथा च योग्यारोहप्रवृत्तिमत्त्वादिति हेत्वर्थो ध्येयः । स्वधर्मनिष्ठ इत्यादिवाक्यगतिमाह ॥ **प्रयत्नस्येति** ॥ उत्थितेः पुरुषधर्मत्वादाह ॥ **यत्र पतितस्येति** ॥ **इच्छामात्ररूपस्येति** ॥ उक्तप्रवृत्तिद्वये इच्छारूपप्रवृत्तिरित्यर्थः । मायाभिरित्यस्यार्थः कुविद्याभिरिति । उच्छब्दार्थः उत्तमत्वमिति । सिसृप्सत इत्यस्यार्थः प्राप्तुमिच्छत इति । सृगताविति धातोरिति भावः । अवेत्यस्यार्थोऽन्धेतमसीति ।

## सूत्रभाष्यम्

**॥ ॐ उपपूर्वमपीत्येके भावशमनवत्तदुक्तम् ॐ ॥ ४२ ॥**

**उपदेवपदं च(नाकाङ्क्ष्य)नापेक्ष्यमित्येके । भावशमनवदपिपदवदेव । तच्चोक्तमिन्द्रद्युम्नश्रुतौ 'अथ यथर्षीन्प्रजापतीन्नाकाङ्क्षेदेवं न गन्धर्वान्न विद्याधरान्न सिद्धान्' इति ।**

**वृहत्संहितायां च–**

**'न दैवानभिकाङ्क्षेत कुत एव हरेर्गुणान् ।**
**प्राजापत्यान्न चाऽऽर्षांश्च गान्धर्वादीनपि क्वचित् ॥**
**ऋष्यादिषु विशेषे तु दोषो नैवाविशेषि(ष)तः' इति विशेषदर्शनार्थमेक इत्युक्तम् ॥**

## तत्त्वप्रदीपिका

**गन्धर्वादिपदं च नाऽकाङ्क्ष्यम् । भावशमनवदिति भाष्यपदेन 'यथर्षीन्प्रजापतीन्न काङ्क्षेत्' इति श्रुत्यनुसारिसूत्रावयवमनुवदति । ऋषिपदवदिति व्याख्याति । भावे चित्ते चेष्टायां च शमनात् 'भावशमना' ऋषयः । 'ऋष्यादिषु विशेषे तु दोषो नैवाविशेषित' इत्यस्यायमर्थः । ऋषिगन्धर्वादिषु विशेष आकाङ्क्षमाणे दोषः । यथा वसिष्ठः स्यां विश्वामित्रः स्यामिति । अविशेषऋषित्वमात्र आकाङ्क्ष्यमाणे न दोषः । यथाऽहं कश्चिदृषिः स्यामिति । अस्य विशेषस्य प्रदर्शनार्थमेक इत्युक्तम् । विशेषविवक्षवो नाऽकाङ्क्ष्यमिति ब्रुवन्ति । सामान्यविवक्षवः आकाङ्क्षायां न दोष इति ।**

## तत्त्वप्रकाशिका

कैमुत्येनापि देवतापदाकाङ्क्षाऽयोगं समर्थयत्सूत्रं पठित्वा व्याचष्टे ॥ **उपेति** ॥ यदा मुनीनां देवानामुपवर्तमानानां गन्धर्वादीनामपि पदं नाकायं किमु तदा वाच्यं देवपदं नाकायमिति । ऋष्यादिपदाकाङ्क्षाऽयोग एव कुतः । श्रुतेरेवेति भावः । ऋषीनित्यार्षानित्यादि ज्ञेयम् । मुनिपदस्य दृष्टान्तत्वेनोक्तिः श्रुत्यनुसारेण । **सूत्रद्वयार्थे स्मृतिं दर्शयंस्तच्छेषं प्रमाणीकृत्यैक** इत्यस्याभिप्रायमाह ॥ **बृहदिति** ॥ अहं कश्चिदृषिः स्यामित्यविशेषाकाङ्क्षायां न विरोधः । वसिष्ठः स्यां विश्वामित्रः स्यामिति विशेषाकाङ्क्षायामस्त्येव दोष इति देवादिपदेभ्यो मुन्यादिपदाकाङ्क्षायां विशेषज्ञापनायैक इत्युक्तम् । न त्वेकस्मिन्नेव विषये विप्रतिपत्तिसूचनार्थमन्यतरस्याऽनिर्धारितत्वाद्वस्तुविकल्पासम्भवाच्चेति भावः ।

## गुर्वर्थदीपिका

ऋष्यादीनां गुरुत्वेन तदाकाङ्क्षाया अदोषत्वात् श्रुतेरभिप्रायमाह **आर्षानित्यादीति** । ऋषीणामिमे आर्षाः तत्पदव्याद्याः । स्मृतेस्तु शतजन्मसु नियमेन स्वधर्मनिष्ठताया ऋजुभ्योऽन्यत्रायोग्यत्वात्पुमान् ब्रह्मपदप्राप्तियोग्यः पुमानित्यर्थः सुलभः ।

## भावबोधः

पूर्वशब्दः प्रभृत्यर्थकः अपिशब्दः कैमुत्यार्थ इत्यभिप्रेत्य सूत्रार्थमाह– **यदा मुनीनामित्यादिना** ॥ ऋषीन् इत्यादिप्रकृतोपयोगितया व्याचष्टे– **ऋषीनित्यार्षानित्यादीति** ॥

ननु गन्धर्वादिपदस्यानाकायत्वे तत्समं ऋषिपदं कथं दृष्टान्तः? तत्रानाकायत्वानिश्चये मुनिपदेऽपि तदनिश्चयादित्यत आह– **मुनिपदस्येति** ॥ अत एव प्राक् 'यदा मुनीनां' इति मुनिपदस्यापि गन्धर्वादिपदसमानयोगक्षेमत्वमुक्तम् । उपेत्यादि सूत्रम् ॥ **एकस्मिन्नेवेति** ॥ गन्धर्वादिपद इत्यर्थः ॥ **अन्यतरस्येति** ॥ गन्धर्वादिपदस्याकायत्वानाकाङ्क्षत्वयोरन्य तरस्येत्यर्थः ।

## भावदीपः

**कैमुत्येनापीति** ॥ न केवलं पतनानुमानेनेत्यपेरर्थः । भाष्ये चशब्दः सौत्रापिशब्दार्थः । पूर्वत्रेव कैमुत्यसूचक इति भावेन भाष्यं व्याचष्टे ॥ **पदेति** ॥ ऋषिपदानामाकाङ्क्षाया अद्याप्यसिद्धेस्तद्वदिदं

(भावदीपः)

नाकाङ्क्ष्यमित्युक्ते तदपि नाकाङ्क्ष्यमिति लभ्यत इति भावेनाह ॥ **मुनीनामिति** ॥ ननु श्रुतौ तत्तत्पदानामाकाङ्क्षा न श्रूयत इत्यत आह ॥ **ऋषीनिति** ॥ पक्षतुल्यस्य कथं दृष्टान्तत्वोक्तिरित्यत आह ॥ **मुनीति** ॥ यद्वा एक इत्यस्य वक्ष्यमाणदिशा मुनिपदेच्छायां विशेषद्योतकत्वादेव एके भावशमनमित्येव वाच्यं न तु दृष्टान्ततयेत्यत आह ॥ **मुनीति** ॥ एक इत्युक्तमितीति विशेष-विवक्षवो नाकाङ्क्ष्यमिति ब्रुवन्ति । सामान्यविवक्षवस्त्वाकाङ्क्षायामपि न दोष इत्याहुरिति लाभादिति भावः ॥ **अन्यतरस्येति** ॥ उपदेवादिपदमाकाङ्क्ष्यमित्येके । नाकाङ्क्ष्यमित्यन्ये । इत्येतस्याकाङ्क्ष्यत्वरूपान्यतरपक्षानिर्धारणेनायोगादित्यर्थः । पूर्वोत्तरनयेषु श्रुत्यादिनिर्धारितपक्षद्वय एव मुनिविमत्युक्तेरिति भावः । निर्धारितत्वादिति पाठेऽप्यनाकाङ्क्ष्यत्वमप्यस्यैव निर्धारितत्वा-दित्यर्थो ध्येयः । दोषान्तरं चाह ॥ **वस्त्विति** ॥ देवपदादौ वस्तुनि आकाङ्क्ष्यत्वतदभावरूप-विकल्पेत्यर्थः ।

## अभिनवचन्द्रिका

ननु 'मुनिपदं नाकायम्' इत्यस्याद्याप्यसिद्धत्वात् कथं 'भावशमनवत्' इति दृष्टान्ती-करणमित्यत आह– **मुनिपदस्येति** ॥ ननु एकस्मिन्विषये विप्रतिपत्तिसूचनार्थमेव 'एक' इत्युक्तिः किं न स्यादित्यत आह– **अन्यतरस्येति** ॥ परस्परविरुद्धयोः पक्षयोरेकं पक्षं स्वीकृत्य 'इत्येके मन्यन्त' इत्युक्तौ हि एकस्मिन्विषये विप्रतिपत्तिसूचनं कृतं स्यात् । न चैवं प्रकृते उपदेवविचारस्य स्वेनाकृतत्वादिति भावः । ननु 'नाकायमित्येक' इत्युक्त्यैव आकायमिति स्वसिद्धान्तो लभ्यत इत्यत आह– **वस्तुविकल्पेति** ॥

## वाक्यार्थमुक्तावली

अत्र पूर्वपदेन पूर्वसूत्रे प्रकृतदेवा उच्यन्ते । उपशब्दोऽयं समीपवृत्तिवाची । सङ्ख्याया-मुपसन्नेत्यत्र मञ्जर्यां समीपसमीपिरूपाद्यर्थत्त्वस्योक्तेः । भावे चित्ते चेष्टायां च शमनात् भावशमना ऋषय इति तत्त्वप्रदीपे । ऋषिशब्देन भाष्ये प्रजापतयोऽप्युच्यन्ते । तेषां कश्यपकर्दमादीनां ऋषित्वात् । अपिशब्दः कैमुत्यार्थः । नाकाङ्क्ष्यमिति प्रकृतमनुवर्तते । तथा च पूर्वेषां पूर्वसूत्रे प्रस्तुतदेवानामुपवर्तमानानां गन्धर्वादीनामपि पदं नाकाङ्क्ष्यं किं देवानां भावशममनवदृषिपदवदित्येके

विशेषमवलम्ब्य वदन्ति । सामान्यतो ऋष्यादित्वाकाङ्क्षायां न दोष इत्यपर इति तात्पर्यम् । तदुक्तम् गन्धर्वादिपदस्य ऋष्यादिपदस्य चानाकाङ्क्ष्यत्वं श्रुत्यादावुक्तमिति सूत्रार्थमभिप्रेत्य ऋषिपदस्य श्रुत्यनुसारेण दृष्टान्तत्वग्रहणेऽपि तस्यापि कैमुत्यहेतुत्त्वात् तदुपपादकतया व्याचष्टे ॥ मुनीनामिति ॥ केचित्तु उपेतिशब्दः पूर्वो यस्य तदुपपूर्व आधिकारिकमित्युक्तिलब्धं देवपदमिह विशेषतयाऽन्वीयते । तथा च उपदेवपदमिति लक्ष्यते । तथा च देवानामुप समीपे वर्तिन उपदेवास्तत्फलमिति फलितोऽर्थ इत्याहुः । अविशेषतः सामान्यतः । आकाङ्क्षायां नैव दोषः विशेषे तु विशेष एव । वशिष्टादिरहं स्यामिति विशेषविषयाकाङ्क्षायामस्त्येव दोष इत्यर्थं मत्वा ऋष्यादिष्वेतद्व्याचष्टे ॥ अहं कश्चिदित्यादिना ॥

ननु सामान्याकाङ्क्षापि कथं युज्यते । 'अयोग्यमिच्छन् पुरुषः पतत्येव' इत्यादेः शतकोटिष्वेकैनक्यं विना तद्योगेन विशेष एव पर्यवसानाच्चेति । अत्रोक्तमनन्ताचार्यकृतौ । न ऋषित्वं तावच्छतकोटिष्वेव वर्तते किंत्वन्यत्रापि । राजर्षीणां दूर्वासप्रभृतीनां च ऋषित्वदर्शनात् । तत्कुलजातानां तददर्शनाच्च । एवं गन्धर्वत्वादिकमपि द्रविडादीनां गन्धर्वत्वदर्शनात् । तथा च गन्धर्वक्षितिपादीनां अहं कश्चिद्गन्धर्वोऽहंकश्चिदृषिरित्यादिसामान्याकाङ्क्षा युक्ता । तेषां तत्कालजननतपः करणादेर्योग्यत्वात् । मैवम् । देवत्वसामान्याकाङ्क्षा युक्ता । देवत्वस्य नवकोटिष्वेव भावादन्यत्राभावादिति भावः । न त्वेकस्मिन्नेव विषय इति । एवं सामान्यविशेषभावमपहाय सर्वथा देवपदवदनाकाङ्क्ष्यत्वविषये विप्रतिपत्तिसूचनार्थमित्यर्थः ॥ अन्यतरस्येति ॥ भगवता बादरायणेनाकाङ्क्ष्यत्वानाकाङ्क्ष्यत्वयोरन्यतरस्य निश्चितत्त्वादुभयनिश्चये वस्तुविकल्पप्रसङ्गात्तदभावाच्चेत्यर्थः । केचित्तु अन्यतरस्यानिर्धारितत्त्वादिति पाठं स्वीकृत्यान्यतरस्य सिद्धान्तस्यानिर्धारितत्वात्सर्वथाऽनाकाङ्क्ष्यत्वविषये एक इति विप्रतिपत्तिसूचनं भवतीत्यर्थः । ननु नाकाङ्क्ष्यमित्येक इत्युक्त्यैवाऽनाकाङ्क्ष्यमिति स्वसिद्धान्तो लभ्यत इत्यत आह ॥ वस्तुविकल्पेति ॥ तन्मतस्यादूषितत्वादुभयमपि वास्तवं स्यात्तदयुक्तमिति भाव इत्यर्थमाहुः । सूत्रे गन्धर्वादिपदमिति वाच्ये उपेत्याद्युक्तिस्तत्समीपवर्तिनामपि पदं नाकाङ्क्ष्यं किमु तेषामित्यपिपदसूचितकैमुत्यव्यक्त्यर्था । ऋषिस्वरूपप्रतिपादनाय भावशमनवदित्युक्तिः ।

## तत्त्वसुबोधिनी

सूत्रे उपशब्दः समीपवर्तिवाचकः । पूर्वसूत्राद्देवतावाचकाधिकारिपदस्यार्थवहो न षष्ठ्यन्तस्यानुवृत्तिः । पूर्वशब्दः प्रभृत्यर्थः । अपिशब्दः कैमुत्यार्थ इत्यभिप्रेत्य सूत्रार्थमाह ॥ यदा मुनीनामिति ॥ भावे वित्ते चेष्टायां च शमनाद्भावशमना इत्यभिप्रेत्य देवऋषिपदस्यानाकाङ्क्ष्यत्वे ततोऽपि न्यूनं मुनिपदं कथं दृष्टान्तः । तत्रानाकाङ्क्षत्वानिश्चये ततो न्यूने मुनिपदे सुतरां तदनिश्चयादित्यत आह ॥ **मुनिपदस्येति** ॥ अत एव प्राग्यदा मुनीनामिति मुनिपदस्यापि दृष्टान्तत्वमुक्तम् । तच्छेषम् । ऋष्यादिष्विति स्मृतिशेषम् ॥ **एकस्मिन्नेवेति** ॥ गन्धर्वादिपदे साकाङ्क्ष्यतानाकाङ्क्ष्यत्वयोः अन्यतरस्यानाकाङ्क्ष्यत्वस्य निर्धारितत्वादित्यर्थः ॥ **वस्तुनीति** ॥ गन्धर्वादिपदरूपवस्तुनि कदाचित् आकाङ्क्ष्यत्वं कदाचिदनाकाङ्क्ष्यत्वमिति विकल्पासम्भवादित्यर्थः । ननु विज्ञानभक्त्यादिमतीव तत्साधनकामवहिष्णुतं चेत् । न साधनं स्यादित्यादिना ज्ञानभक्त्या देवतापदस्यानाकाङ्क्ष्यत्वे अनुमानरूपप्रमाणोक्तिः । द्वितीये तत्रैव कैमुत्यप्रदर्शनम् । तत्रोपपूर्वमित्यस्य पूर्वेषां समीपं उपपूर्वं इति सामीप्येऽव्ययीभावः । पूर्वेषां देवानां समीपे वर्तमानानामित्यर्थः । तृतीये ज्ञानादिकमपि नाकाङ्क्ष्यमित्याशङ्कानिरास इति सूत्रक्रमः ।

## वाक्यार्थविवरणम्

मुनीनां पदम् ॥ **एकस्मिन् विषय इति** ॥ गन्धर्वादिपद इत्यर्थः । कुतः इत्यतो विप्रतिपत्तिर्न सम्भवतीत्याह ॥ **अन्यतरस्येति** ॥ गन्धर्वादिपदसाकाङ्क्षत्वानाकाङ्क्षत्वयोर्मध्ये अन्यतरस्यानाकाङ्क्षत्वस्यैव न गन्धर्वानित्यादिश्रुतिस्मृतिभ्यां निर्धारितत्वान्न विप्रतिपत्तिर्युक्तेत्यर्थः । विप्रतिपत्त्ययोगे हेत्वन्तरं चाह ॥ **वस्तुनीति** ॥ एकस्मिन् गन्धर्वपदरूपे वस्तुनि विकल्पस्याकायत्वानाकायत्वरूपविरुद्धधर्मद्वयालिङ्गितत्वस्यासम्भवाच्चेत्यर्थः ।

## वाक्यार्थमञ्जरी

देवानामुप समीपे वर्तमानानां गन्धर्वादीनां पदमुपशब्दोक्तं तत्पूर्वतत्प्रभृत्यपि नाकाङ्क्ष्यं किमु देवपदं कथं भावशमनवत् भावे चित्ते चेष्टायां च शमनाः । भावशमना ऋषयः तत्पदवन्नाकाङ्क्ष्यं किमु देवपदमित्येके प्राहुः । कुतः तद्वयं नाकाङ्क्ष्यमित्येतद्यथार्षीनित्येतत् श्रुतावुक्तं यत इत्यर्थः ।

(वाक्यार्थमञ्जरी)

आर्षान् ऋषिसम्बन्धभूतान् तत्पदाकाङ्क्षानिषेधस्यैव प्रकृतत्वादिति भावः । ननु गन्धर्वादिपदस्यानाकाङ्क्ष्यत्वे तत्समऋषिपदं कथं दृष्टान्तः तत्र नाकाङ्क्ष्यत्वनिश्चये मुनिपदेऽपि तदनिश्चयादित्यत आह ॥ **मुनिपदस्येति** ॥ **एकस्मिन्नेवेति** ॥ गन्धर्वादिपद इत्यर्थः ॥ **अन्यतरस्येति** ॥ गन्धर्वादिपदस्याकाङ्क्ष्यत्वानाकाङ्क्ष्यत्वयोरन्यतरस्येत्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ बहिस्तूभयथाऽपि स्मृतेराचाराच्च ॐ ॥ ४३ ॥**

देवर्षिगन्धर्वादिपदेभ्योऽन्यत्र शुभविषय आकाङ्क्षायामनाकाङ्क्षायां च न पतनम् ।

**देवर्षिगन्धर्वाणां पदाकाङ्क्षी पतेद्ध्रुवम् ।**
**अन्यत्र शुभमाकाङ्क्षन्न पतेदविरोधत इति स्मृतेः ॥**

**'नानात्वमेव कामानां नाकामः क्व च दृश्यते ।**
**अतोऽविरुद्धकामः स्यादकामस्तेन भण्यत' इत्याचाराच्च ॥**

**॥ इति आधिकारिकाधिकरणम् ॥ ६ ॥**

## तत्त्वप्रदीपिका

**'नानात्वमेव' इत्यादेरयमर्थः । निषिद्धकामत्वमनिषिद्धकामत्वमिति कामानां बहुविधत्वमेव लोके दृश्यते । न पुनरकामत्वं क्वापि । अतः कामयमानः श्रुत्यविरुद्धमेव कामयीत निषिद्धं न कामयीतेत्यकाम उच्यते । चकारात् 'ऋषभं मा समानानाम्' इत्यादिश्रुतेश्च ॥**

## तत्त्वप्रकाशिका

यथा देवादिपदं नाकाङ्क्ष्यमेवं ज्ञानभक्त्यादिकमाकाङ्क्ष्यं न वेति सन्देहं पराकुर्वत्सूत्रं पठित्वा व्याचष्टे ॥ **बहिरिति** ॥ आकाङ्क्षायामनाकाङ्क्षायां चेत्यनियमसूचनम् । ननु 'विहाय कामान्यः सर्वान्' इति सर्वकामप्रहाणविधानात्कथं शुभकामेन पतनमित्यत आह ॥ **नानात्वमिति** ॥ पुमानविरुद्धकामः स्यादेव । न चाकामत्वविधिविरोधः । अविरुद्धकामित्वेनाप्यकामो भण्यते । कुतः । यतः

(तत्त्वप्रकाशिका)

**कामानां नानात्वं विलक्षणत्वमतोऽविरुद्धत्वमेव युज्यते न त्वकामत्वमेव तादृशस्यादर्शनादित्यर्थः। आचारवाचकं वाक्यमाचारः। अतो ब्रह्मादिपदस्य तद्योग्यैकलभ्यत्वादुक्तं युक्तमिति सिद्धम्।**

## गुर्वर्थदीपिका

अधिकरणार्थमुपसंहरति **अत इति** ॥ ननु विज्ञानभक्त्यादिकमप्यतीव तत्साधनं कामवहिष्कृतं चेत्, न साधनं स्यादित्यादिना ज्ञानभक्त्यादेरवश्यमाकार्यत्वविधानात्कथमनाकाङ्क्षायां न पतनमित्यत आह– **आकाङ्क्षायामिति** ॥ **अनियम इति** ॥ अनाकाङ्क्ष्यमेवेति, नियमाभावसूचनमित्यर्थः। अत्राद्ये देवतापदस्यानाकाङ्क्ष्यत्वेऽनुमानरूपप्रमाणोक्तिः। द्वितीये तत्रैव कैमुत्यप्रदर्शनम्। तृतीये शुभत्वाविशेषादेवतापदादिवत् ज्ञानभक्त्यादिकमपि नाकाङ्क्ष्यमित्याशङ्कानिरास इति सूत्रक्रमः।

## भावदीपः

आकाङ्क्षाऽनाकाङ्क्ष्ययोरेकदा विरोधात्कथमनाकाङ्क्षायां चेति समुच्चय इत्यत आह ॥ **अनियमसूचनमिति** ॥ यद्वा 'ज्ञानभक्ती हरेस्तृप्तिं विना विष्णोरपि क्वचित्। नाकाङ्क्ष्यम्' इत्युक्त्या ज्ञानादेराकाङ्क्ष्यत्वप्राप्तेः कथमेवमुक्तिरित्यत आह ॥ **अनियमेति** ॥ नाकाङ्क्ष्यमेवेति नियमो नेत्यर्थः ॥ **विहायेति** ॥ गीतायां द्वितीयेऽध्याये 'विहाय कामान् यः सर्वान्पुमांश्चरति निस्स्पृहः। निर्ममो निरहङ्कारः स शान्तिमधिगच्छति' इति मोक्षाङ्गत्वविधानादित्यर्थः। न पतनमिति छेदः। स्मृतिं व्याचष्टे ॥ **पुमानिति** ॥ श्रुत्याद्यनिषिद्धकामः स्यादित्यर्थः ॥ **कामानामिति** ॥ विहाय कामानित्यत्र हेयत्वेनोक्तकामानामित्यर्थः। युज्यते यतोऽत इति योज्यम्। कामसामान्याभाव एवार्थः। कुतो नेत्यत आह ॥ **तादृशस्येति** ॥ स्मृतिशेषो हेतुगर्भ इति भावः। वाक्यस्याचारत्वाभावादित्याचारादित्युक्तिरयुक्तेत्यतः आचारवाक्याच्चेत्यर्थमुपेत्याह ॥ **आचारेति** ॥ **अत इति** ॥ अयोग्यानां तदिच्छाया अप्यनर्थहेतुत्वादित्यर्थः ॥ **उक्तमिति** ॥ ज्ञानमयोग्याप्राप्यमित्युक्तमित्यर्थः।

## अभिनवचन्द्रिका

तन्मतस्यादूषितत्वात् उभयमपि वास्तवं स्यात्। तच्चायुक्तमिति भावः ॥ **ज्ञानभक्त्यादिकमिति** ॥ अतद्गुणसंविज्ञानो बहुव्रीहिरयं बोध्यः। ततश्च स्वर्गादिशुभफलमाकार्यं न वेति सन्देहं

(अभिनयचन्द्रिका)

पराकुर्वत्सूत्रमुपन्यस्य व्याचष्ट इत्यर्थः । एतेन ज्ञानभक्त्यादिकामनाया आवश्यकत्वात् तदवश्यं कर्तव्यमित्यनभिधाय, अनियमसूचनमयुक्तमिति परास्तम् । ननु अकामत्वश्रुतेरविरुद्धकामत्वमर्थः । कुतः सर्वथा कामनाराहित्यमेवार्थः किं न स्यादिति पृच्छति– **कुत इति ॥ यतः कामानामिति ॥** प्रमाणसिद्धमिति शेषः । ततश्च यतो ज्ञानिनां कामाः प्रमाणसिद्धाः, तेषामज्ञानिकामेभ्यो वैलक्षण्यं च मोक्षापरिपन्थित्वरूपं सिद्धम् । ततोऽविरुद्धकामत्वमेव श्रुत्यर्थतया युज्यते न सर्वथा कामराहित्यमिति भावः ।

पूर्वपक्षस्तु– देवतापदमन्यप्राप्यं 'स्वधर्मनिष्ठः शतजन्मभिः पुमान्विरिञ्चतामेति' इत्यादेः । अत एव देवत्वादिकं न स्वाभाविकम् । अपि तु प्रयत्नाधीनम् । ततश्च अयोग्यैरपि ज्ञानं प्राप्यमिति ।

सिद्धान्तस्तु– न देवपदमन्यैः प्राप्यं तदाकाङ्क्षामात्रस्य पातहेतुत्वात् । अत्रायं प्रयोगः । ब्रह्मादिपदाकाङ्क्षावान् पतति अयोग्यप्रवृत्तिमत्त्वात् । अयोग्यवृक्षारोहाय प्रयतमानवत् । न चाऽयोग्यत्वविशेषणमसिद्धम् । देवासुरनरत्वाद्या जीवानां तु निसर्गतः इति वचनात्, प्रयत्नस्य पतनकारणत्वेऽपि नेच्छामात्रं पतनकारणमिति चेत्, न । स्वकीयमिच्छमानं तु राजाद्याः पातयन्ति हि । एवमेव सुराद्याश्च हरिश्च स्वपदेच्छुकमिति वचनात्, ऋषिपदवदुपदेवपदमपि नाकायम् । किमु देवतापदम् । तच्चोक्तमिन्द्रद्युम्नश्रुतौ 'यथा ऋषीन्प्रजापतीन् नाकाङ्क्षेत् एवं न गन्धर्वान् न विद्याधरान्' इति । ननु देवपदादिकमिव स्वर्गादिकमपि किं नाकायम्, उच्यते । देवऋषि-गन्धर्वादिपदेभ्योऽन्यत्र शुभविषये आकाङ्क्षायामपि न पतनम् । देवऋषिगन्धर्वाणां पदाकाङ्क्षः पतेत् ध्रुवम् । अन्यत्र शुभमाकाङ्क्षन् न पतेदविरोधतः' इति पदाकाङ्क्षिणः पतनं तदितरशुभाकाङ्क्षिणः पतनं नेत्युभयथा श्रुतेः । 'अतोऽविरुद्धकामः स्यात्' इत्याचाराभिधानाच्च । अतो ब्रह्मादिपदस्य तद्योग्यैकलभ्यत्वादुक्तं युक्तमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

नन्वाधिकारिकमित्यतो नेति पतनमिति बुध्या विविच्यान्वेति । आधिकारिकादिरूप-देवादिपदाच्चेति च विभक्तिविपरिणामेनान्वेति । तथा च देवर्षिगन्धर्वपदेभ्यो बहिर्भूतज्ञानभक्त्यादिषु तु विशेषः । उभयथापि, आकाङ्क्षायामनाकाङ्क्षायामपि न पतनम् । कुतः स्मृतेर्देवऋषिगन्धर्वेति

(वाक्यार्थमुक्तावली)

स्मृतेरिति भावेन प्रवृत्तं स्मृतेरित्यन्तभाष्यं स्पष्टार्थमिति न व्याख्यातम् । नन्वाकाङ्क्षायामित्ययुक्तम् । विज्ञानभक्त्यादिकमप्यतीव तत्साधनं कामबहिष्कृतं चेत् । अकामितो वाग्गतिमेव दद्यादिति महाभारततात्पर्यनिर्णये ज्ञानभक्तीश्वरप्रसादादेरकामनायामनर्थोक्तेरित्यत आह ॥ **आकाङ्क्षायामिति** ॥ यथा देवत्वमनाकाङ्क्ष्यमिति नियमः । स्वयोग्यं स्वायोग्यमिति द्वैविध्याभावात् न तथात्वनियमः । किन्तु स्वयोग्यमाकाङ्क्ष्यमयोग्यमनाकाङ्क्ष्यमित्यनियमसूचनमनेन क्रियतेऽतो सर्वथा ज्ञानभक्त्यादेराकाङ्क्ष्यत्वेऽपि न पतनमित्युच्यत इति भावः । अयोग्यनाकाङ्क्षायां पतनाप्रसक्तेः प्रतिषेधो युक्त इति चेद्दृष्टान्तोपपत्तेः । यद्वा सुप्तौ तिर्यगादौ कर्माभिमानित्त्वे चाकाङ्क्षाविध्यप्राप्तेर्मनुष्यादिदेहेष्वाकाङ्क्ष्यत्वादाकाङ्क्षायामनाकाङ्क्षायां च न पतनमित्यनियमसूचनमित्यर्थः । अयोग्यज्ञानादिनाकाङ्क्ष्यमिति भावेन स्मृतावविरोध इत्युक्तम् । यद्वा तत्त्वप्रदीपदिशा शुभमाकाङ्क्षन्निति शुभमात्रस्य भाष्ये उपादानेन च ज्ञानभक्त्यादिकमिति टीकास्थं पदं तत्साधनैश्वर्यादिपु विपयम् । ततश्च ज्ञानसाधनैश्वर्यादिशुभाकाङ्क्षायां न पतनं नाप्यनाकाङ्क्षायां पतनम् । ऐश्वर्यादिर्ज्ञानं प्रति नियतसाधनत्वाभावादित्यनियमसूचनमित्यर्थः ॥ **अविरोधत इति** ॥ ऐश्वर्यादिज्ञानविरोधि चेन्नाकाङ्क्ष्यमिति भावः । अत एव 'ऋषभं मा समानानाम्' इत्यादौ ज्ञानाद्यविरुद्धैश्वर्यकामस्योक्तत्वात् । तत्त्वप्रदीपे चकाराद्दृषभ मेत्यादिश्रुतेश्चेत्युक्तं ज्ञेयम् । ज्ञानभक्त्यादिकमिति अतद्गुणसंविज्ञानबहुव्रीहिरित्येके । इत्यत आहेति ।

ननु शङ्कापरिहारकत्वे सूत्रखण्डस्याचाराच्चेति शब्दवैय्यर्थ्यमिति चेन्न । एतदाशङ्कापरिहारसमुचितस्मृतेस्साधकत्वात् । तत्त्वप्रदीपेऽर्थान्तरोक्तत्वाच्च नानात्वमेवेत्येवकारस्य स्यादित्यतः परसम्बन्धमाह ॥ **स्यादेवेति** ॥ तेन चेत्यस्यार्थः न विरुद्धकामत्वेनापीति ॥ **कुत इति** ॥ अविरुद्धकामत्वेऽकामत्वं कुतः प्रतियोगिनि सत्यभावायोगादिति भावः ॥ **यत इति** ॥ यतः कामानां नानात्वं विलक्षणत्वमतो विरुद्धकामत्वेनाप्यकामो भण्यत इति सम्बन्धः । एकं काममङ्गीकृत्य कामान्तरनिषेधविरोधाभावादिति भावः । ननु विहाय कामानिति सामान्यवाक्यस्य सर्वथा कामत्यागार्थत्वं किं न स्यात् । अविरुद्धकामानिषेधेन विरुद्धकामानिषेधकत्वं कुत इत्यतो नाकामः क्व च दृश्यत इत्युक्तम् । तस्य तात्पर्यमाह ॥ **अविरुद्धत्वमेवेति** ॥ पुरुषेष्वविरुद्धकामत्वमेव युज्यते न त्वकामत्वमेव । कुतः नाकामः क्व च कदापि दृश्यते । तथा च स्मृतौ

(वाक्यार्थमुक्तावली)

सर्वकामनिषेधे युक्तार्थत्वं स्यादिति भावः ॥ **आचारवाचकमिति** ॥ अविरुद्धकामः स्यादिति अविरुद्धेष्टसाधनमिति कामाचारवाचकमित्यर्थः । अत्राद्ये देवतापदस्य न्यायप्राप्तत्वेन तत्पदाकाङ्क्षाया एवायोगलक्षणकैमुत्यमुक्त्वा तदाकाङ्क्षायोगस्यानुमानेनोपपादनम् । द्वितीये कैमुत्येन देवतापदाकाङ्क्षायोगोपपादनम् । तृतीयेऽयोग्यज्ञानादिकमप्यनाकाङ्क्षं किमु पदमिति वक्तुं ज्ञानभक्त्यादावुभयथोक्तिरिति सूत्रक्रमः ।

## वाक्यार्थविवरणम्

ननु 'विज्ञानभक्त्यादिकमप्यतीव तत्साधनं कामबहिष्कृतं चेत् । न साधनं स्यात् इति' तात्पर्यनिर्णये ज्ञानभक्त्यादेरवश्यमाकायत्वविधानात् अनाकाङ्क्षायां कथं न पतनमित्यत आह ॥ **आकाङ्क्षायामनाकाङ्क्षायां चेति** ॥ **अनियमेति** ॥ अनाकायमेवेति नियमाभावसूचनमित्यर्थः । तथा चाकायमेवेति भावः । शङ्कते ॥ **विहायेति** ॥ **विधानादिति** ॥ ज्ञानिन इति शेषः ॥ **शुभकाम इति** ॥ ज्ञानभक्त्यादिरूपशुभकाम इत्यर्थः ॥ **न पतनमिति** ॥ 'विहाय कामान्' इति सर्वकामप्रहाणविधानात् शुभकामस्यापि कामत्वात् अविहितायोग्यकामे कथं न पतनमित्यर्थः । नाकामः क च दृश्यत इत्यस्यार्थमाह ॥ **तादृशस्येति** ॥ सर्वथा विरुद्धाविरुद्धकामनामात्रशून्यस्य पुरुषस्यादर्शनादित्यर्थः । आचारेति विधीत्यर्थः । अविरुद्धकामः स्यादिति विहितत्वादिति भावः ।

## वाक्यार्थमञ्जरी

देवादिपदेभ्यो बहिर्बहिर्भूते ज्ञानादौ तु विशेषोऽस्ति स कः उभयथाऽपि आकाङ्क्षायामनाकाङ्क्षायां च न पतनं कुतः देवऋपीति स्मृतेः आचारात् । नानात्वमेव कामानामित्यविरुद्धकामेनाचारप्रतिपादकवाक्याच्चेत्यर्थः । ननु 'विज्ञानभक्त्यादिकमप्यतीव' तत्साधनं कामवहिष्कृतं चेत् । न साधनं स्यात्' इत्यादिना ज्ञानभक्त्यादेरवश्यमाकाङ्क्ष्यत्वविधानात्कथमनाकाङ्क्षायां न पतनमित्यत आह ॥ **आकाङ्क्षायामिति** ॥ **अनियमेति** ॥ अनाकाङ्क्ष्यमेवेति नियमाभावसूचनमित्यर्थः । 'विहाय कामान्यः सर्वान्पुमांश्चरति' इति गीतावचनम् । तादृशस्य सर्वथा कामरहितस्य ।

॥ इति अधिकारिकाधिकरणम् ॥ ६ ॥

## ७. फलश्रुत्यधिकरणम्

**॥ ॐ स्वामिनः फलश्रुतेरित्यात्रेयः ॐ ॥ ४४ ॥**

'ब्रह्मविदाप्नोति परम्' (तै.उ.२-१) इत्यादि फलं स्वामिनां देवानामेव भवति । 'यदु किञ्चेमाः प्रजाः शुभमाचरन्ति देवा एव तदाचरन्ति यदु किं चेमाः प्रजाः विजानते देवा एव तद्विजानते देवानां ह्येतद्भवति स्वामी हि फलमश्नुते नास्वामी कर्म कुर्वाण' इति माध्यन्दिनायनश्रुतेरित्यात्रेयो मन्यते ।

### तत्त्वप्रदीपिका

अनन्तजीवेष्वनादिसञ्चितपुण्यपूगपावितचित्तानां केषाञ्चिदेवास्मिन्ज्ञानेऽधिकारः । न चायोग्यानां केनाप्युपायेन ज्ञानोत्पत्तिः । न च योग्यता कापि कदाचित्केनचिदन्यथा करणीया । अयोग्यपदारुरुक्षायामधःपतनं चेत्युक्तम् । एवमवसितो योग्यताप्रसङ्गानुपङ्गिविचारः । इदानीं तु यस्य तज्ज्ञानं जायते किं तस्यैव तत्फलमथवा तत्प्रयोजकानां देवादीनामिति विचार्यते । तत्र प्राप्तं 'ब्रह्मविदाप्नोति परम्' इति वचनात्तस्यैव फलम् । न ह्यन्य उपास्तेऽन्यः फलमश्नुत इति समञ्जसं भवेत् । प्रेरकाणां किमप्यदृष्टं ज्ञानादिफलं तद्वद्देवाङ्गीकार्यम् । अन्यथा प्रयत्नवैयर्थ्यात् । कर्तुरधिकं फलं प्रेरकाणामिति तु न प्रमाणपद्धतिमध्यास्ते । एवं प्राप्ते प्रत्याह– **स्वामिनः फलश्रुतेरित्यात्रेयः ॥** ज्ञानादिप्रवर्तकतया तत्स्वामिनां देवानामेव महत्तमं फलम् । तत्प्रवर्त्यानां प्रजानां तदधीनज्ञानानां तदपेक्षयाऽत्यल्पफलत्वात्तेषामेव फलमित्युक्तिः । 'महानपि कृतो धर्मो ह्यज्ञानान्निष्फलो भवेत्' इतिवत्, 'यदु किञ्चेमाः प्रजाः' इत्यादिवच्च । न ह्यत्र प्रजागतं कर्म ज्ञानं च प्रतिषिध्यते । प्रत्यक्ष-विरोधात् । 'कर्ता शास्त्रार्थवत्त्वात्' इत्यादेश्च । किन्तु पराधीनं प्रतनु चाभिप्रेयते । 'स्वामी हि फलमश्नुत' इति च महत्त्वापेक्षया, अन्नवानितिवत् । 'नास्वामी कर्म कुर्वाण' इति च न प्रमाण-सिद्धप्रवृत्तिफलप्रतिषेधः । भृत्येष्वपि वेतनादिफलोपलब्धेः । अत उत्तमापेक्षया न फलमिति वक्तुं शक्यत इत्यभिप्रायः ।

### तत्त्वप्रकाशिका

अत्र भगवत्प्राप्तिसाधनज्ञानस्यास्वामिनोऽपि सन्निधिमात्रेण फलदानमहिम्नो वर्णनादस्ति शास्त्रादिसङ्गतिः । अन्यथा ज्ञानिनां मोक्षनियम इत्युक्तमयुक्तं स्यादतस्तद्वर्णनीयम् । प्रकृतं ज्ञानमेव

(तत्त्वप्रकाशिका)

विषयः । किं देवानां फलप्रदं प्रजानां वेति सन्देहः । प्रयोजकत्वं कर्तृत्वं च सन्देहबीजम् । किं तावत्प्राप्तमिति तत्र सूत्रमुपन्यस्य व्याचष्टे ॥ **स्वामिन इति** ॥ 'ब्रह्मविदाप्नोति परम्' इत्यादिश्रुतिसिद्धं यद्भगवत्प्राप्त्यादिज्ञानफलं तद्देवानामेव भवति न प्रजानाम् । कस्मात् । तेषामेवेन्द्रियादिप्रेरकत्वेन ज्ञानस्वामित्वात् । लोके च स्वामिन एव फलदर्शनात् । न च कर्तृत्वेन प्रजानां फलम् । कर्तुरप्यस्वामिनः फलाभावदर्शनात् । न च वेतनादिरूपेण फलम् । अन्नादेर्दीयमानत्वात् । श्रुतिसिद्धं चैतत् । एवमाचार्य आत्रेयोऽपि मन्यत इति भावः । कुतो देवानां कर्मादिदेवानां ह्येतत्कर्मादिफलं भवतीत्यर्थः ।

## गुर्वर्थदीपिका

अन्नादेर्दीयमानत्वादित्यस्य देवैर्दीयमानत्वादित्यर्थः ।

## भावबोधः

**सन्निधिमात्रेणेति** ॥ पूर्वाधिकरणे ज्ञानदानमेव देवानां विहितम् । 'चरन्ति देवाविहितं समस्तम्' इति न्यायविवणानुसारेण देवानां ज्ञानदानादिविहितमित्युक्तम् । 'न चाऽधिकारिकम्' इत्यादिसूत्रद्वयेन निषेधविभागप्रतिपादकेन ज्ञानदानादिविभागादेरप्युपलक्षणतया सूचनात् तद्देवानां ज्ञानदानं यदि तेषां फलदं न स्यात्तर्हि विधेयं न स्यात् इत्याशङ्कापरिहारायात्र ज्ञानदानादिना देवानां सम्पूर्णफलमन्येषां सन्निधिमात्रेणाल्पं फलमिति प्रतिपादनादनन्तरसङ्गतिरिति भावः ॥ **अन्यथेति** ॥ ज्ञानस्वामिनामेव देवादीनां फलं न त्वस्वामिनां प्राप्तज्ञानानामिति चेदित्यर्थः ॥ **किं देवानामिति** ॥ अत्र ज्ञानं किं देवानामेव प्रजानामपीति चिन्ता । तदर्थं ज्ञानफलजनकत्वे ज्ञानस्वामित्वमेव प्रयोजकमुत ज्ञानदत्वमपीति । तदर्थं देवानामेव ज्ञानफलप्रतिपादकमुनिमतश्रुत्योः किं निरवकाशत्वमुत सावकाशत्वमिति । तदर्थं प्रजानामपि ज्ञानफलसद्भावे प्रमाणं नास्त्युतास्तीति । प्रजानां ज्ञानफलवत्त्वस्य ज्ञानस्य प्रजार्थं देवैः क्रियमाणत्वरूपयुक्तिप्रमाणकत्वे ज्ञानफलं देवानां न सम्भवत्युत सम्भवतीति । तदर्थं देवैः क्रियमाणं ज्ञानदानं किं प्रजार्थमेव क्रियते स्वार्थमपीति । तद्देवानामेव भवति । न प्रजानामिति । ब्रह्मविदित्यादिभाष्यव्याख्यानपरेणानेन देवानामेव ज्ञानफलं न किञ्चिदन्येषामिति न्यायविवरणगतप्रतिज्ञाभागोऽपि व्याख्यातो भवति । भाष्ये स्वामिनामिति हेत्वर्थगर्भविशेषणलब्धं न्यायविवरणे च स्वातन्त्र्यादित्युक्तं हेतुं विवृणोति–

(भावबोधः)

तेषामेवेति ॥ स्वामित्वेऽपि देवानामेव ज्ञानफलमित्येतत्कुत इत्यतः 'स्वामी हि फलमश्नुते' इति श्रुत्यनुसारेणाह– लोके चेति ॥ 'कर्म कुर्वाणः' इति श्रुतिविशेषानुसारेणाह कर्तुरपीति ॥ श्रुतिसिद्धं चैतदिति । स्वामिनामेव फलं न प्रजानामित्येतत् । 'यत्किञ्च' इति श्रुतिसिद्धमित्यर्थः । 'देवा एव तदाचरन्ति देवा एव विजानते' इत्यनेन 'देवानां ह्येतद्भवति' इत्यस्य पौनरुक्त्य-परिहाराय व्याचष्टे– कुतो देवानामिति ॥

## भावदीपः

**अस्वामिनोऽपीति** ॥ पराधीनकर्तुरपि ज्ञानिन इत्यर्थः ॥ **फलदानेति** ॥ एतेन ज्ञानादि-फलस्य देवमात्रप्राप्यत्वादन्येषां स्वफलाहेतुज्ञानादाविच्छाया एवायोगेनान्यत्र शुभमाकाङ्क्षन्न पतेदित्युक्तिः तथा ज्ञानप्राप्त्यर्थमन्यानाकाङ्क्षारूपाङ्गोक्तिश्चायुक्तेति पूर्वाक्षेपेण शङ्कोदयात्पूर्व-सङ्गतिरपि ध्येयेति सूचितम् ॥ **इत्युक्तमिति** ॥ अनियमस्सर्वेषामित्यत्रोक्तमित्यर्थः ॥ **प्रकृतमिति** ॥ यत्प्राप्तौ देवतापदाद्यनाकाङ्क्षाङ्गमित्युक्तं तज्ज्ञानमित्यर्थः ॥ **देवानामिति** ॥ देवानामेवेत्यर्थः । सम्बन्धसामान्ये षष्ठी । अस्योद्भवादिदमितिवत् ॥ **प्रजानामिति** ॥ ज्ञानवतीनामिति भावः । प्रयोजकत्वं कर्तृप्रेरकत्वं कर्तृत्वकृतिमत्त्वं चेति । तच्च प्रजानां कर्तेति नयसिद्धमिति भावः । क्वचित्प्रयोजकयस्यैव फलं लोके दृष्टम् । क्वचित्कर्तुरपीति भावः । इति शङ्कायामिति शेषः । तत्र प्राप्तिविषये । भाष्यं व्याचष्टे ॥ **ब्रह्मेति** ॥ एवकारार्थो न प्रजानामिति । देवानामेव ज्ञानादिफलं न किञ्चिदन्येषामित्यन्यत्रोक्तेरिति भावः । स्वातन्त्र्यादित्यन्यत्रोक्त्यनुरोधेन स्वामिनामित्येतद्धेतु-गर्भमिति भावेनाह ॥ **कस्मादिति** ॥ हेतोरप्रयोजकत्वमाशङ्क्य निरुपाधिकसहचारभङ्गप्रसङ्गो बाधक इति भावेनाह ॥ **लोके चेति** ॥ देवानामेवेति प्रतिज्ञायाः कर्तृत्वेन फलवत्त्वानुमान-विरोधमाशङ्कते ॥ **न चेति** ॥ कर्तृत्वमप्रयोजकं किन्त्वन्वयव्यतिरेकाभ्यां स्वामित्वमेवेति भावेनाह ॥ **कर्तुरपीति** ॥

ननु कर्तुरस्वामिनोऽपि वेतनप्रत्युपकारान्नदानादिफलं दृश्यत इत्याशङ्क्य निराह ॥ **न चेति** ॥ वेतनं नाम कर्मानुगुणं मूल्यद्रव्यदानं तर्हीहापि प्रजानां कर्तॄणां वेतनस्थानीयमन्नवस्त्रानिष्ट-परिहारबहुकालजीवनादिकं देवाः प्रयच्छन्तीत्यवान्तरमपि फलमस्त्येव प्रधानं फलं नास्तीत्ये-

(भावदीपः)

वाच्यतेऽस्माभिरिति भावेनाह ॥ अन्नादेरिति ॥ देवैः प्रजानामिति शेषः । यदु किञ्चेत्यादि-भाष्यार्थमाह ॥ श्रुतिसिद्धं चैतदिति ॥ न केवलं स्वामित्वयुक्त्येति चार्थः । एतत्स्वामिन एव प्रधानफलं नास्वामिन इत्येतदित्यर्थः । देवानां ह्येतद्भवतीति श्रुतिशेषमवतार्य व्याचष्टे ॥ कुत इति ॥ पूर्वपक्षित इत्यापाततः सम्पूर्णफलं देवानामेवेति प्रतिपाद्य प्रजानामप्यल्पफलमस्तीति प्रतिपादयन्नित्येवार्थो बोध्यः ।

## अभिनवचन्द्रिका

अत्र द्वे दर्शने 'स्वामिनः फलश्रुतेः' इत्यारभ्य सूत्रत्रयं सिद्धान्ताभिधायकमित्येकम् । आद्यं सूत्रं पूर्वपक्षसूत्रम्, 'आर्त्विज्यम्' इत्यारभ्य सूत्रद्वयं सिद्धान्ताभिधायकमित्यपरम् । तत्राद्यं तत्वप्रदीपकृतो दर्शनम् । 'इदानीन्तु यस्य तज्ज्ञानं जायते किं तस्यैव तत्फलम्, अथवा तत्प्रयोजकानां देवादीनामिति विचार्यते । तत्र प्राप्तम् 'ब्रह्मविदाप्नोति परम्' इति वचनात्तस्यैव फलम् । न ह्यन्य उपास्ते अन्यः फलमश्नुत' इति समञ्जसं भवेत् । प्रेरकाणां किमप्यदृष्टं ज्ञानादिफलं तद्वत एवाङ्गीकार्यम् । अन्यथा प्रयत्नवैयर्थ्यात् । कर्तुरधिकं फलं प्रेरकाणामिति तु न प्रमाणपद्धतिमध्यास्ते । एवं प्राप्ते प्रत्याह– 'स्वामिनः फलश्रुतेरित्यात्रेयः' इति तत्वप्रदीपोक्तिः । अस्मिन्मते 'सहकार्यन्तरविधिः पक्षेण तृतीयम्' इति सूत्रे बादरायणमतस्य तृतीयसिद्धान्तत्वोक्तिर्लिङ्गम् । न हि आत्रेयौडुलोमिमतयोः प्रथमद्वितीयसिद्धान्तत्वाभावे बादरायणमतस्य तृतीयत्वं युज्यते । तेन मन्यामहे 'आर्त्विज्यम्' इत्यादिसूत्रद्वयवत् 'स्वामिनः फलश्रुतेः' इति सूत्रमपि सिद्धान्तसूत्रमेवेति । तथा अनुव्याख्यानकारीयं 'ज्ञानकर्मादि फलं चैषु क्रमोपगम् । स्वातन्त्र्यतारतम्येन फलं हि फलिनां भवेत्' इति 'स्वामिनः फलश्रुतेः' इति व्याख्यानं लिङ्गम् । यदि इदं पूर्वपक्षसूत्रं स्यात्, तर्हि 'ज्ञानकर्मादिफलं एष्वेवेत्यवक्ष्यत् । अवधारणस्यैव दूष्यत्वात् । तथा 'क्रमोपगमिति नावक्ष्यत् । देवेष्विव कर्तरि महास्वातन्त्र्याभावेऽपि अल्पस्वातन्त्र्यसद्भावेन अल्पफलप्राप्तिप्रसङ्गाच्च ।

द्वितीयन्तु टीकाकृतो दर्शनम् । तत्र भाष्यकारीयं 'ब्रह्मविदाप्नोति परम्' इत्यादिफलं स्वामिनां देवानामेव भवति' इति आद्यसूत्रस्य सावधारणव्याख्यानं लिङ्गम् । अन्यथा देवानामेवेत्यव-

(अभिनवचन्द्रिका)

धारणस्य दूष्यतया सिद्धान्तत्वात् सूत्रार्थतयाऽवधारणं नावक्ष्यत् । किं तु अनुव्याख्यान इव 'देवतानां तत्फलं भवति' इत्यवक्ष्यत् । अस्मिन्मते बादरायणमतस्य तृतीयत्वोक्तिर्नानुपपन्ना । 'स्वामिनः फलश्रुतेः' इति सूत्रार्थे देवानामेव फलमित्येवं रूपे अवधारणमात्रस्य त्याज्यत्वेऽपि देवानां भवतीत्यंशस्य ग्राह्यत्वेन तद्विवक्षया तृतीयत्वोक्तिसम्भवात् । उक्तं च सुधायाम्– 'तत्र देवानां ज्ञानादिफलमिति पूर्वपक्षांशो ग्राह्य एव । अवधारणमात्रमेव त्याज्यमिति ।

'उक्तं मतद्वयं सूत्रभाष्यकारविनिश्चितम् ।
जानन्तौ बोधसिध्द्यर्थं शिष्याणामाहतुः पृथक् ॥
टीकाकारावतस्तत्र न विरोधः कथञ्चन ।'

**अन्यथेति** ॥ अत्र स्वामिनः फलसमर्थनाभावे ज्ञानिनां मोक्ष इति स्वाम्यस्वामिसाधारण्येन उक्तो मोक्षनियमोऽनुपपन्नः स्यादित्यर्थः ॥ **प्रयोजकत्वमिति** ॥ किं प्रयोजकत्वमेव फलप्राप्तौ निमित्तम् उत कर्तृत्वमपि इति संदेहविषयतामापन्नं प्रयोजकत्वं, कर्तृत्वं च सन्देहबीजमित्यर्थः । अयं सन्देहबीजमिति भावः । अत्र टीकायां– 'कुतो देवानां कर्मादि' इति श्रूयमाणं वाक्यं न टीकावाक्यम् । अपि तु केनचिद्विदुषा प्रक्षिप्तम् । तथापि गङ्गाजलानुप्रविष्टक्षुद्रनदीजलवत् टीकाप्रवेशमात्रेण सेव्यत्वात् व्याख्यायते । देवानां ह्येतद्भवतीति श्रुत्यंशमवतारयति– कुत इति ॥ कर्मादीत्यतः परं 'इत्यत उक्तम्' इति शेषः । 'देवा एव तदाचरन्ति' इत्यादिना कर्मणां ज्ञानानां चोक्तं देवसम्बन्धित्वं कुत इत्यत उक्तमित्यर्थः । प्रतीकमुपादत्ते– देवानां ह्येतदिति ॥ दुर्गमार्थत्वादेतत्पदार्थमाह– **कर्मादिफलमिति** ॥

## वाक्यार्थमुक्तावली

अत्र ज्ञानभक्त्यादिफलं चेद्देवानामेव न प्रजानां स्यात्तदा निष्फले ज्ञानादौ प्रजानामधिकारायोगाज्ज्ञानादेराकाङ्क्षायामप्यविरोधवचनं प्राचीनमयुक्तं स्यादित्याक्षेपादनन्तरसङ्गतिः । यद्वा योग्यानामेव ज्ञानं नायोग्यानामिति पञ्चमे उक्त्वा षष्टे देवादिपदस्यैवान्यप्राप्यत्वे तन्नियतज्ञानस्याप्यन्यप्राप्यत्वमिति शङ्का पदस्यान्यायोग्यत्वोक्त्या निरस्ता । इह तु ज्ञानफलयोग्यताविचारादनन्तरसङ्गतिः ॥ **सन्निधिमात्रेणेति** ॥ तदधिष्ठाने उत्पादमात्रेणेत्यर्थः ॥ **किमिति** ॥ अत्र

(वाक्यार्थमुक्तावली)

ज्ञानं देवानामेव फलप्रदमुत प्रजानामपीति चिन्ता । तदर्थं फलप्राप्तौ स्वातन्त्र्यं प्रयोजकमुत कर्तृत्वमपीति ॥ **प्रयोजकत्वमिति** ॥ नियामकत्वमित्यर्थः । सूत्रे श्रुत्यनुसारेण स्वामिन इत्येकवचनं समुदायपरम् । स्वामी हि फलमिति श्रुतिवत्त्वादेवेति लभ्यते । फलप्रदं बुद्ध्या विवेकेनात्राप्यन्वेति । स्वामिन इति हेतुगर्भं देवानां विशेषणम् । तथा च देवानामेव ज्ञानफलं न तु प्रजानाम् । देवानामेव स्वामित्वात् । लोके स्वामिन एव फलदर्शनात् । स्वामिनः फलश्रुतेश्चेति एवमात्रेयोऽपि मन्यत इति सूत्रार्थं स्पष्टयति ॥ **ब्रह्मेति** ॥ स्वातन्त्र्यमित्युक्तन्यायप्रदर्शकतया स्वामिपदं व्याचष्टे ॥ **तेषामेवेति** ॥ स्वामी हि फलमश्नुत इति श्रुत्यनुसारेणाह ॥ **लोके चेति** ॥ नास्वामी कर्म कुर्वाण इति श्रुत्यनुसारेणाह ॥ **कर्तुरपीति** ॥ प्रसादादिनिर्मातुस्तक्ष्णः वेतनबहुमानरूपेण फलदर्शनात्तद्वत्प्रकृतेऽपि फलमस्त्वित्यत आह ॥ **न चेति** ॥ **अन्नादेरिति** ॥ पारत्रिकातिरिक्तस्यान्नवस्त्रादेरित्यर्थः ॥ **श्रुतिसिद्धं चैतदिति** ॥ स्वामिनामेव फलं न प्रजानामित्येतदित्यर्थः । देवानां ह्येतद्भवतीति श्रुत्यंशमवतारयति ॥ **कुत इति** ॥ कर्मादीत्यादिपदेन देवा एव तद्विजानत इत्युक्तं ज्ञानं गृह्यते । तत्परिहारकतया देवानां ह्येतदित्यनूद्यार्थकथनपूर्वं भवतीत्यंशं संयोज्य व्याचष्टे ॥ **देवानामिति** ॥

## तत्त्वसुबोधिनी

**सन्निधिमात्रेणेति** ॥ पूर्वाधिकरणे ज्ञानदानमेव देवानां विहितम् । चरन्ति देवा हितमिति श्रुतेरित्युक्तम् । न चाधिकारिकमित्यादिसूत्रद्वयेन ज्ञानदानादिविभागादेरप्युपलक्षणया सूचनात् । तद्यदि देवानां फलदं न स्यान्न तदा विधेयं स्यादित्याशङ्कापरिहारायात्र ज्ञानं देवानामेव सम्पूर्णफलमन्येषां सन्निधिमात्रेणाल्पं फलमिति प्रतिपादनादनन्तरसङ्गतिरित्यर्थः ॥ **अन्यथेति** ॥ ज्ञानस्वामिनामेव देवादीनां फलं न त्वस्वामिनां प्राप्तज्ञानानामिति चेदित्यर्थः । स्वामित्वेऽपि देवानामेव ज्ञानफलं इत्येतत्कुत इत्यतः स्वामी हि फलमश्नुते इति श्रुतेरनुसारेणाह ॥ **लोके चेति** ॥ **नास्वामीति** ॥ श्रुत्यशेषानुसारेणाह ॥ **कर्तुरपीति** ॥ **अन्नादेरिति** ॥ तथा च दीयमानमन्नादिकमेव चेतनादिफलस्वरूपेण फलं न तु ज्ञानफलं मोक्षः तेषामित्यर्थः । **श्रुतिसिद्धमिति** ॥ स्वामिनामेव फलं न प्रजानामित्येतद्यदि किञ्चेति श्रुतिसिद्धमित्यर्थः । देवा एव तदाचरन्ति देवा एव विजानते इत्यनेन देवानां तद्भवतीत्यस्य पौनरुक्त्यपरिहाराय व्याचष्टे ॥ **कुतो देवानामिति** ॥

## वाक्यार्थविवरणम्

**अस्वामिनोऽपीति** ॥ मुख्यतया ज्ञानदानात् कर्तुराचार्यस्येत्यर्थः ॥ **सन्निधीति** ॥ आचार्यं प्रविश्य ज्ञानोपदेष्टॄणां देवानामाचार्यः सन्निधिः प्रतिमा तन्मात्रेणेत्यर्थः ॥ **फलदानेति** ॥ मोक्षफलदानेत्यर्थः ॥ **प्रयोजकत्वमिति** ॥ देवानां कर्तृभूतप्रजाप्रेरकत्वात् प्रजानां च कर्तृत्वादित्यर्थः । तथा च प्रयोजकानां फलं वा कर्तॄणां वेति सन्देह इति भावः ॥ **फलाभावदर्शनाच्चेति** ॥ प्रासादादिकर्तुस्तक्ष्णस्तत्स्वामित्वाभावेन प्रासादादिभोगरूपफलाभावदर्शनादित्यर्थः ॥ **वेतनादिरूपेणेति** ॥ तथा च भगवत्प्राप्त्यादिरूपो मोक्ष एव वेतनस्थानीयं फलमस्तीत्याह ॥ **अन्नादेरिति** ॥ प्रत्यहमित्यर्थः ॥ **कुत इति** ॥ देवा एव तदाचरन्तीत्यादिनोक्तं देवानां कर्मज्ञानादिकरणं कुत इति शङ्कार्थः ॥ **भवतीति** ॥ अन्यथा तन्न स्यादिति भावः ।

## वाक्यार्थमञ्जरी

अस्वामिनः प्रेर्यजनस्य । प्रयोजकत्वं प्रेरकत्वम् । ॐ स्वामिनः फलश्रुतेरित्यात्रेयः ॐ ॥ स्वामिनां देवानामेव ज्ञानफलं न प्रजानां कुतः स्वामी हि फलमश्नुत इति स्वामिनः प्रेरकस्यैकस्यैव फलश्रवणादित्यात्रेयाचार्यो मन्यत इत्यर्थः ॥ **वेतनादीति** ॥ अस्वामिनोऽभृत्यादेर्दृश्यत इत्यर्थः । दीयमानत्वात् देवैः प्रजानाम् । देवा एव तदाचरन्ति देवा एव तद्विजानत इत्यनेन देवानां ह्येतद्भवतीत्यस्य पौनरुक्त्यपरिहाराय व्याचष्टे ॥ **कुतो देवतानामिति** ॥

## सूत्रभाष्यम्

### ॥ ॐ आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रियते ॐ ॥ ४५ ॥

**सत्रयागेष्वृत्विजामपि फलदर्शनादल्पं फलं प्रजानामपि भवतीत्यौडुलोमिर्मन्यते । तदर्थं देवैः क्रियमाणत्वात् ॥**

## तत्त्वप्रदीपिका

**आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रियते ॥ सत्रयागेषु गृहपतेरेव न केवलं फलं 'सत्रमुखे सन्युप्याग्नीन्यजेरन्सर्वे दीक्षेरन्सर्वे सुनुयुः' इत्यादिश्रुतेः ऋत्विजामिष्टप्रथमयज्ञानां स्वान्स्वानग्नी-**

(तत्त्वप्रदीपिका)

स्तदग्निषु समारोप्य दीक्षितानामनात्तदक्षिणानामल्पं फलं दृश्यते । गृहपतेर्द्रव्यातिसृष्टुरसमत्वेऽपि । तथा ज्ञानयज्ञस्य देवैः क्रियमाणस्याऽऽर्त्विज्यं प्रजाभिः क्रियते । तदल्पफलदं भवत्येव । प्रजानामपि फलसिध्यर्थं हि तासु स्थित्वा तत्तत्करणानि व्यापारयद्भिर्देवैः क्रियते ॥

## तत्त्वप्रकाशिका

एवमात्रेयमतावलम्बेन पूर्वपक्षिते सिद्धान्तयत्सूत्रं पठित्वा व्याचष्टे ॥ **आर्त्विज्यमिति** ॥ न केवलं देवानामेव फलं किं तु प्रजानामप्यस्ति । न चास्वामित्वात्फलाभावः । यथा खलु सत्रयागेप्ययजमानानामप्यृत्विजां च यज्ञफलम् । तथाऽस्वामित्वेऽपि प्रजानां ज्ञानफलसम्भवात् । न च श्रुतिमुनिमतविरोधः । प्रजानामल्पफलाभ्युपगमात् । तदभिप्रायकत्वाच्च श्रुत्यादेः । अल्पस्वे निःस्वप्रयोगदर्शनादित्यौडुलोमिराचार्यो मन्यत इति भावः । भवेदेतत् यदि प्रजानां फलभावः सिद्ध्येत् । स एव कुत इत्यत आह ॥ **तदर्थमिति** ॥ देवैरपि प्रजार्थमेव ज्ञानस्यापाद्यमानत्वाद्युक्तं तासां ज्ञानफलम् । तथा लोके दर्शनादिति भावः । उक्तं च । 'त्वरयैव मनुष्याणां सिद्धिरत्वरयैव तु । देवानां तत्प्रसादेन मुक्तिरेव सतां नृणाम्' । इति ।

## गुर्वर्थदीपिका

आत्रेयमतावलम्बनेन पूर्वपक्षित इत्यत्र कर्तुरल्पफलत्वेन स्वामिन एव बहुफलत्वेन च तस्यैवोक्तेरित्यात्रेयमतमजानानेन सर्वथा कर्तॄणां फलं नास्तीति पूर्वपक्षिते सतीत्यर्थः । सत्रयागो नाम बहुभिः स्वस्वगृहात्तण्डुलादिकमानीयैकत्र सर्वेषां सहभोजनम् । तत्तु भोजनमयजमानानामपि सहकारिणां भवतीति भावेन सत्रयाग एव गृहीतः ।

## भावबोधः

ननु श्रुत्यादेः प्रजानामल्पफलसद्भावाभिप्रायकत्वं स्यात् । 'नास्वामीकर्मकुर्वाणः' इति निषेधादित्यत आह– **अल्पस्व इति ॥ देवैरपीति** ॥ अत्रायं प्रयोगः । प्रजा ज्ञानफलोपेताः । प्रजार्थमेव देवज्ञैर्नास्यापाद्यमानत्वादिति । न च वैयधिकरण्यं दोषः । यो यदर्थं यदापादयति स तत्फलवानिति व्याप्तौ सत्यां तस्यादोषत्वादिति भावः । यद्वा, देवैरापाद्यमानं ज्ञानं, प्रजास्वपि फलजनकं देवैः प्रजार्थमेवापाद्यमानत्वात् । यद्यदर्थमापाद्यते तत्तदन्वयिफलजनकं यथा सम्प्रतिपन्नमिति प्रयोगो द्रष्टव्यः । अत्र न्यायविवरणोदाहृतप्रमाणमप्याह– **उक्तं चेति** ॥

## भावदीपः

प्रजानामपीत्यपिपदार्थं वदन् भाष्यं व्याचष्टे ॥ **न केवलमिति** ॥ अपिपदार्थमाह ॥ **अयजमानानामपीति** ॥ गृहपतिव्यतिरिक्तानामित्यर्थः । तेन ये यजमानास्ते ऋत्विज इति वाक्यविरोधः । अल्पमित्युक्तितात्पर्यं व्यनक्ति ॥ **न च श्रुतीति** ॥ प्रागुक्तश्रुत्या प्रागुक्तमुनिमतेन च विरोध इत्यर्थः । ननु श्रुतौ नास्वामी फलमश्नुत इत्युक्तिः कथमित्यत आह ॥ **अल्पस्य इति** ॥ दृष्टान्तवैषम्यशङ्कानिरासकत्वेन भाष्यशेषं व्याचष्टे ॥ **नन्विति** ॥ **तथा लोक इति** ॥ यदर्थं यत्पाकादिकं क्रियते तत्फलभोगः तस्य दृश्यते इत्यर्थः । हेतोरसिद्धिमव्याप्यत्वं चाशङ्क्याऽन्यत्रोक्तश्रुत्यैव निराह ॥ **उक्तं चेति** ॥ न्यायविवरणे मानुषमुक्त्यर्थमेव देवानामत्वरया सिद्धिरित्यत उक्तं च श्रुतावित्यर्थः ।

## अभिनवचन्द्रिका

अत्र गुणसूत्रम् – 'आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रियते' इति । तस्यार्थः देवैः क्रियमाणस्य ज्ञानयज्ञस्य आर्त्विज्यमधिकारिणा क्रियते । अतस्तस्यापि ज्ञानफलम् । न च ज्योतिष्टोमादिषु ऋत्विजां यज्ञफलादर्शनात् आर्त्विज्येऽपि न मुमुक्षोः ज्ञानफलाभावः । यज्ञमात्रे ऋत्विजां फलादर्शनेऽपि सत्रयागे तद्दर्शनेन असम्भावनाभावात् । तमेव विद्वानिति श्रुतिबलेन ज्ञानफलनिश्चयसम्भवात् । किं च । तस्मै मुमुक्षवे फलसिद्ध्यर्थं तत्करणानि व्यापारयद्भिर्देवैः ज्ञानयज्ञस्य क्रियमाणत्वात्, तस्यापि ज्ञानफलं मोक्षो भवतीत्यौडुलोमिराचार्यो मन्यत इति ॥ **यथा खल्विति** ॥ **अयजमानानामिति** ॥ ज्योतिष्टोमाद्यपेक्षया । ततश्च ज्योतिष्टोमादियागेषु याजमान्यरहितानामपि ऋत्विजां, सत्रयागे याजमान्यसद्भावात्, यथा यज्ञफलं भवति तथा प्रजानामन्यत्र स्वामित्वाभावेऽपि अत्र स्वामित्वसद्भावात् ज्ञानफलसम्भवादित्यर्थः । एतेन 'सप्तदशावराः सत्रमासीरन्' इति वचनात्, तथा 'सत्रमुचेत् सन्युप्यग्नीन् यजेरन्, सर्वे दीक्षेरन्, सर्वे सुनुयुः' इति वचनात्, 'ये यजमानास्त ऋत्विज' इति वचनाच्च, सर्वेषां यजमानत्वात् अयजमानानामित्ययुक्तम्। तथा 'अस्वामित्वेऽपि फलसम्भवादित्युक्तम् । भृत्यानामपि कृष्यादिफलप्रसङ्गादिति परास्तम् ॥ **अल्पफलाभ्युपगमादिति** ॥ अनुत्तममोक्षरूपफलाभ्युपगमादित्यर्थः । एतेन अल्पफलाभ्युपगमे मोक्षैकदेशप्राप्त्या मोक्षालाभात्, 'ज्ञानिनां मोक्षो भवत्येव' इत्युक्तनियमविरोध इति परास्तम् ।

## वाक्यार्थमुक्तावली

अत्र तस्मै इत्येतत्षष्ठीबहुवचनान्ततयापि विपरिणम्यते । ऋत्विजामिदमार्त्विज्यमिति लुप्तोपमा । सूत्रे ऋत्विजां फलमिव प्रजानामपि ज्ञानादिफलमस्तीत्यौडुलोमिर्मन्यत इति भावेन व्याचष्टे ॥ **न केवलमित्यादिना** ॥ आर्त्विज्यमिति दृष्टान्तकथनस्योपयोगमाह ॥ **न चेति** ॥ न च सर्वे यजमानाः सर्वे ऋत्विज इत्युक्तेः कथं सत्रयागे ऋत्विजामयजमानत्वमिति चेन्न । अयजमाना-नामित्यस्यागृहपतीनामित्यर्थाङ्गीकारात् । तदुक्तं तत्त्वप्रदीपे । सत्रयागेषु गृहपतेरेव न केवलं फल-मित्यादि ॥ **तथा अस्वामित्वेऽपीति** ॥ बाह्ययज्ञ इव ज्ञानयज्ञेऽपि देवैः क्रियमाणस्य आर्त्विज्यं प्रजाभिः क्रियत इति प्रजानामपि फलं भवतीति भावः । कुत इत्यत आह ॥ **तदर्थमितीति** ॥ एतेन तस्मै इत्येतत्तादर्थ्ये चतुर्थी । हिशब्दो हेतौ । तथा च हि यस्मात्तस्मै प्रजानां फलार्थमेव प्रजासु स्थित्वा तत्करणानि व्यापारयद्भिर्देवैर्ज्ञानादिकं परिक्रियते तस्मादित्यर्थ उक्तो भवति । तथा च प्रयोगः । प्रजाः ज्ञानयज्ञोपेतास्तदर्थं देवैरापादितसाधनवत्त्वात् । यो यदर्थं समर्थापादित-साधनवान् स तत्फलवान् यथा सम्प्रतिपन्न इति ।

ननु सत्रयागे ऋत्विजामिव ज्ञानयज्ञेषु ऋत्विजां प्रजानां ज्ञानफलमल्पमस्तीति यदुक्तं तदयुक्तमिति शङ्कते ॥ **नन्विति** ॥ **अस्वामित्वेऽपीति** ॥ अगृहपतितया द्रव्यास्वामित्वेऽपि दक्षिणामस्वीकृत्य कर्तृत्वात् । अस्तु सत्रे ऋत्विजां फलं ज्ञानयज्ञे तु दक्षिणाप्रतिनिधित्वेनान्नादि-स्वीकारात् कथं तद्दृष्टान्तेन प्रजानां फलमिति शङ्कार्थः ॥ **प्रजार्थमेवेति** ॥ प्रजाधिष्ठाने ज्ञानापादनस्य तेषां फलसिध्यर्थमेव । अन्यथा तदधिष्ठाने ज्ञानापादनं न स्यादिति भावः ॥ **तथा लोक इति** ॥ अन्नादिकं शिष्यार्थं, व्याख्यानेऽपि शिष्याणां ज्ञानदर्शनादित्यर्थः । एतेन सौत्रो हिशब्दः लोकप्रसिद्धिद्योतकश्चेति व्याख्यातं भवति । प्रजानां मोक्षार्थं ज्ञानस्य देवैः क्रियमाणत्व-हेतुरसिद्ध इत्यतो हिशब्दसूचितमत्वरयासिद्धिरित्युक्तन्यायसूचकं प्रमाणमाह ॥ **उक्तं चेति** ॥ तत्प्रसादेनेत्यस्यायमर्थः । अपरोक्षानन्तरं त्वरया देवानां मोक्षाङ्गीकारे तदा पदप्राप्त्यवकाशाभावेन प्रेरकाभावान्मनुष्याणां तत्प्रसादासादितज्ञानद्वारा मोक्षो न स्यात् । अतो मनुष्याणां करणनियमन-पूर्वं ज्ञानोत्पादनेन मोक्षार्थमत्वरयासिद्धिः । तथा च तदन्यथानुपपत्त्या तदर्थं देवैः क्रियमाणत्वं सिध्यतीति ।

## तत्त्वसुबोधिनी

**सत्रयागेष्वित्यादि ॥** सत्रयागेषु गृहपतेरेव न केवलं फलं, सत्रमुचेत्सन्युपोग्नीन् जयेरन् सर्वे दीक्षेरन् सर्वे सुनुयुरित्यादिश्रुते ऋत्विजामभिप्रथमयज्ञानान्तान्स्वानग्नितदग्निषु समाप्य दीक्षितानां दक्षिणानामत्यल्पफलं दृश्यते । गृहपतेः द्रव्यादिस्रष्टुः समत्वेऽपि तपोज्ञानयज्ञस्य देवैः क्रियमाणस्यार्त्विज्यं प्रजाभिः क्रियते । तदाल्पफलं प्रजानामपि भवत्येवेति भावः । अत्र च यजमानपदेन गृहपतिभिन्नत्वविवक्षणादिति न कश्चित् क्षुद्रोपद्रव इति ध्येयम् । ननु कथं श्रुत्यादेः प्रजानामल्पफलसद्भावाभिप्रायकत्वं, 'नास्वामी कर्मकुर्वाण, इति प्रतिषेधादित्यत आह ॥ **अल्पस्व इति ॥ देवैरपीति ॥** अत्रायं प्रयोगः । प्रजाः ज्ञानफलोपेताः प्रजार्थमेव देवैः ज्ञानस्यापाद्यमानत्वादिति । न च वैय्यधिकरण्यं दोषः । यो यदर्थं यदापादयति स तत्फलवानिति व्याप्तौ सत्यां दोषाभावादिति भावः । यद्वा देवैः आपाद्यमानं ज्ञानं प्रजान्वयिफलजनकं देवैः प्रजार्थमेवापाद्यमानत्वादिति यद्यदर्थम् आपाद्यते तत्तदन्वयिफलजनकं यथासम्प्रतिपन्नमिति प्रयोगो द्रष्टव्यः । अत्र प्रमाणमप्याह ॥ **उक्तं चेति ॥** मनुष्याणां च त्वरया सिद्धिः देवानामत्वरया सिद्धिः । तत्र देवानामत्वरया सिद्धौ किं निमित्तमित्यतः तदाह ॥ **तत्प्रसादेनेति ॥** सतां नृणां तत्प्रसादेन मुक्त्या एवेत्यन्वयः । मुक्त्या एवेति तादर्थे चतुर्थी । तथा च सज्जनानां मनुष्याणां तत्प्रसादेन तेषां देवानां प्रसादेन इन्द्रियादिप्रेरणेन मुक्त्यर्थमेव भवति । अन्यथा त्वरयासिद्धौ मनुष्याणामिन्द्रियादिप्रेरणाभावेन ज्ञानाद्यलाभे मुक्तिः न स्यादिति भावः । एवं मनुष्यमुक्त्यर्थमेव देवानामत्वरयासिद्धेः मनुष्याणामपि ज्ञानफलमोक्षप्राप्तिरित्युक्तमिति भावः ।

## वाक्यार्थविवरणम्

**तथा लोक इति ॥** पुत्रार्थमेव सम्पादितस्य धनादेः पुत्रभोगहेतुत्वस्य दर्शनादित्यर्थः । तथा च प्रज्ञाः ज्ञानफलवन्तः प्रजार्थमेव देवैर्ज्ञानस्यापाद्यमानत्वात् । यो यदर्थं यदापादयति स तत्फलवान् यथा सम्प्रतिपन्न इति प्रयोगो द्रष्टव्यः । कुतो देवानामत्वरया सिद्धिरित्यत आह ॥ **मुक्त्या एवेति ॥** सतां नृणां मुक्ते एव मुक्त्यर्थमेवेत्यर्थः । देवानां ज्ञानानन्तरमेव त्वरयैव मुक्तौ मनुष्याणां ज्ञानाभावप्रसङ्गेन अत्वरयैव शनैरिति यावत् सिद्धिरिति भावः । उत्तरत्रैतत्स्पष्टम् ।

## वाक्यार्थमञ्जरी

आर्त्विज्यं ऋत्विजां फलमिव प्रजानामपि फलं भवति कुतः हि यस्मात्तस्मै प्रजार्थं देवै-र्ज्ञानादिपरिक्रियते तस्मादित्यौडुलोमिराचार्यो मन्यत इत्यर्थः । ननु कथं श्रुत्यादेः प्रजाना-मल्पफलसद्भावाभिप्रायकत्वं स्यात् नास्वामी कर्म कुर्वाण इति निषेधसद्भावादित्यत आह ॥ अल्पस्व इति ॥ अल्पधनवतीत्यर्थः ॥ **तथा लोक इति** ॥ यदर्थं पद्येन क्रियते तत्फलं तस्येति लोके दर्शनादित्यर्थः । उक्तं च न्यायविवरणे । मनुष्याणां त्वरयैव सिद्धिर्देवानां त्वरयैवासिद्धि-स्तेषां महाफलभाक्त्वात् । तेषां देवानां प्रसादेनैव सतां नृणां मुक्तिरित्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॐ ॥ ४६ ॥**

**तृतीयः स्वपक्षः । देवानां ज्ञानादिकर्मणि सहकार्यन्तरत्वेन प्रजा विधीयन्ते । यथा प्रजावतो राज्ञः प्रजाः सहकारित्वेन विधीयन्ते । यथा वाऽऽचार्यस्य शिष्याः । वाराहे च—**

**'ज्ञानादिदानं देवानां विष्णुना साधुचोदितम् ।**
**वेदे(पु)च तेषां विहितं तत्राऽचार्यो महत्तरः ॥**
**विहितस्सहकारित्वे सहकार्यन्तरं प्रजाः ।**
**पातृत्वेन यथा राज्ञो यथा शिष्या गुरोरपि ॥**
**तस्माच्छतं फलं तासामाचार्याणां महत्तरम् ।**
**ततो महत्तरं प्रोक्तं देवानामुत्तरोत्तरम्' इति ॥**

**॥ इति फलश्रुत्यधिकरणम् ॥ ७ ॥**

## तत्त्वप्रदीपिका

सहकार्यन्तरेत्यादि सूत्रम् । देवानामेव महत्फलमित्यत्र श्रुतिमात्रेयेण श्रावयामास । प्रजाना-मप्यल्पफलमस्तीत्यत्र युक्तिमौडुलोमिना प्रयोजयामास । स्वयं तु सर्वविद्याचार्यतम आचार्यप्रवेशेन प्रवृत्तत्वं प्रजासु स्थित्वा तदिन्द्रियप्रवर्तनेन ज्ञापनमित्येतदुभयं देवानां फलाधिक्ये कारणं, सहकार्यन्तराभावे स्वविहितज्ञानदानासम्भवेन विहितानुष्ठानाङ्गत्वात्प्रजानामप्यपेक्ष्यत्वं,

(तत्त्वप्रदीपिका)

तासामप्यल्पफलभावे कारणं, प्रजानामाचार्यस्य देवादीनां च फले इयत्ताविशेषं चेति बहून्विशेषा-नाहेति तृतीयः स्वपक्ष इत्याह । 'पक्षेण तृतीयम्' इति सूत्रावयवस्य पक्षत्वेन तृतीयमेतन्मतमिति भाष्यकरणेऽपि पूर्तिः स्यादिति चेन्न । पूर्वत्र वक्त्रोः सूत्रितत्वात् अत्र च यथापूर्वमसूत्रितत्वात् कथनीयकृत्स्नविशेषकथनाच्च तृतीयः स्वपक्ष इति युक्तम् । स्वपक्षैकदेशमेव मतान्तरत्वेन तत्र तत्र सूत्रयतीति विस्तृतमधस्तादभीक्ष्णम् । अनुव्याख्यायां चोक्तं–

'स्वशिष्याणां प्रसिद्ध्यर्थं मतमात्मीयमंशतः ।
विज्ञातं तैर्जगादात्र तारतम्यं नृणां वदन्' इति ॥

देवानां शुभफलाधिक्येऽशुभसम्बन्धाभावे च–

'....ज्ञानकर्मादिफलं चैषु क्रमोपगम् ।
स्वातन्त्र्यतारतम्येन फलं हि फलिनां भवेत् ॥
अशुभं त्वशुभेऽप्येषां स्वातन्त्र्यात्प्रीतितो हरेः ।
आज्ञया चान्यगं नैव भोगाय भवति क्वचित् ॥
पुण्यमेवामुमाप्नोति न देवान्पापमाप्नुयात् ।
इत्यादिश्रुतयो मानमुक्तेऽर्थे युक्तयः पराः ॥
उपासनाधर्मफलं यतो देहान्तरस्थितिः ।
वासुदेवाज्ञया चैव पूर्वकर्मानुसारतः ॥
प्रेरयन्ति हि ते जीवान्पुण्यपापेषु नित्यशः ।
अरागद्वेषतश्चैव कथं दोषानवाप्नुयुः ॥
हर्याज्ञाकरणादेव पुण्यमेभिरवाप्यते ।
हरिपूजेति चोद्देशात्कथं न शुभमाप्नुयुः ॥
अतो यथाक्रमं धर्मज्ञानयोः फलमञ्जसा ।
सर्वप्राणिगतं देवाः प्राप्नुवन्त्याविरिञ्चतः ॥
देवा अपि हि देवानां विशिष्टा विनियामकाः ।
ब्रह्मा त्वखिलदेवानां नराणां च नियामकः ॥
अतः सर्वगुणानेष प्राप्नोत्यधिकमन्यतः ।
द्रव्यस्वातन्त्र्यविज्ञानप्रयत्नैरधिकं फलम् ॥

(तत्त्वप्रदीपिका)

देवानामन्यगं चापि ते यद्ब्रह्मणो हि तत् ।
बृहत्तन्त्रोदितं वाक्यं हरिणा फलनिर्णये ।
लोकेऽप्येतादृशगुणैः फलाधिक्यं हि दृश्यते ॥
एवं च कलिपूर्वाणामसुराणां महत्फलम् ।
अशुभेषु सदैव स्यान्मिथ्याज्ञानादिकेषु हि ॥
शुभाशुभफलं देवा असुराश्च समाप्नुयुः ।
क्रमेणैव यथाशक्ति यथा ये ये प्रयोजकाः ॥
प्रेरका अपि पापानां न देवाः पापमाप्नुयुः ।
इति प्रकाशिकायां हि प्रोवाच हरिरञ्जसा ॥
यद्यप्येवं सुराणां च दैत्यानां च महत्फलम् ।
शुभाशुभेभ्य एवं च कर्तुश्च स्याद्यथोदितम्' इत्यादि ॥

मुक्तावष्टगुणं शिष्याद्गुरुराप्नोति शोभनम् ।
तद्गुरुर्द्विगुणं तस्मात्सार्धं तावत्ततोऽपरे ॥
देवाः सहस्रगुणितं क्रमात्तस्माद्यथोत्तरम् ।
ब्रह्मा महौघगुणितमेवं फलविनिर्णयः' इति च गुरुवृत्ते ॥

यत्तु न्यायविवरणेऽन्यथावचनं तदात्रेयमतमुखेन मन्दाशङ्कानुवादपरमिति न तत्प्रत्यनीकत्वं सिद्धान्तवादस्य ॥

## तत्त्वप्रकाशिका

यदि देवैः प्रजार्थं ज्ञानादि साध्यते तर्हि तत्फलं प्रजानामेव भवेन्न किंचिद्देवानामित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ **सहकारीति** ॥ एतद्वक्ष्यमाणं नौडुलोमिना ज्ञातं किं तु पक्षत्वेन तृतीयं तृतीयः पक्षः । स च भगवतो बादरायणस्य । कोऽसौ । प्रजार्थं ज्ञानसाधनेऽपि न देवानां फलाभावः । देवानां हि ज्ञानदानं कर्तव्यं तस्मिंश्च स्वविहिते प्रजानामनुग्रहाय सहकारित्वेन प्रजाः क्रियन्ते । अतो देवानामेव मुख्यकारणत्वान्महाफलम् । प्रजानां तु सहकारिमात्रत्वादल्पफलमिति । यथा खलु पालनस्य राज्ञा प्रजार्थं क्रियमाणत्वेऽपि न प्रजानामेव पालनफलम् । किं तु राज्ञ एव मुख्यं तासां सहकारिमात्रत्वात् । यथाऽऽचार्येण शिष्यार्थमेव व्याख्यानस्य क्रियमाणत्वेऽपि न तत्फलं शिष्यस्यैव किं तु गुरोरेव मुख्यं शिष्यस्य सहकारिमात्रत्वात् । एवमेवात्राऽपि प्रजार्थं

(तन्त्रप्रकाशिका)

देवैर्ज्ञानस्यापाद्यमानत्वेऽपि न तासामेव फलं किं तु देवानामेवेति भावः । तद्वत इत्येतत्प्रजावत इति व्याख्याय राज्ञ इति विवृतम् । अत्रैव स्मृतिमाह ॥ वाराहे चेति ॥ श्रुतमिति ॥ यावत्तासां प्रामाणिकं तावद्भवतीत्यर्थः । अतः प्रजानामपि ज्ञानफलसद्भावादुक्तं युक्तमिति सिद्धम् ।

## गुर्वर्थदीपिका

देवानां हि ज्ञानदानं कर्तव्यमिति वदता राजगृहप्राकारादिकारिणां वेतनमात्रफलत्वेऽपि ज्ञानदाने 'आचार्यः पूर्वरूपम् । अन्ते वा स्युत्तररूपम्' इति वचनाज्ज्ञानं यथायोग्यं शिष्यस्यापि भवति गुरोरपि भवति । अतो ज्ञानफलं प्रजानामपि कथं न भवेत् । सामग्र्याः कार्यजनकत्व-नियमादिति युक्तिः सूचिता । किंच प्रजानां ज्ञानोत्पादनाय तत्करणेषु सन्निहिता देवाः प्रजानां कथं न फलं दद्युः । न हि शिशूनामर्थे पाककर्त्री माता शिशून्न भोजयतीत्यस्ति । अतोऽपि प्रजानां ज्ञानफलमस्तीति ज्ञेयम् । अत एव आर्त्विज्यमिति कर्ममात्रस्य दृष्टान्तीकृतत्वेन युक्ते-रभावादौडुलोमिमतात्सयुक्तिकव्यासमतस्य विशेषः ।

## भावबोधः

नन्वत्र प्रजानामपि फलमस्तीत्युच्यते तच्चौडुलोमिनाप्यङ्गीकृतमेव । तत्कथमस्य तृतीयत्वमित्यत आह– एतद्वक्ष्यमाणमिति ॥ देवानां ज्ञानदानं कर्तव्यमित्यादिवक्ष्यमाणमित्यर्थः ॥ पक्षत्वेनेति ॥ अनेन 'पक्षेण' इति सौत्रो निर्देशो भावप्रधान इत्युक्तं भवति । स्वपक्ष इति भाष्यगतस्वशब्दाभि-प्रायमाह– स च भगवत इति ॥ औडुलोमिना ज्ञातं पक्षं वक्तुं तावच्छङ्कां प्रतिषेधति– प्रजार्थ-मिति ॥ भाष्ये सहकार्यन्तरं प्रजा इति स्मृत्यनुसारेण सहकार्यन्तरविधिरित्येतत्सहकार्यन्तरत्वेन प्रजा विधीयन्त इति व्याख्यातम् । तत्र तत्र 'आचार्यो महत्तरः विहितः सहकारित्वे' इत्येत-त्स्मृत्यनुसारेण 'महत्तर आचार्यः सहकारित्वेन विधीयत' इति संयोज्यम् । तथा च आचार्याणां इतरप्रजानां च परस्परं विशेषे सत्यपि देवापेक्षया सहकारित्वमेवेत्याह– सहकारित्वेन प्रजाः क्रियन्त इति ॥ अत्र प्रजाशब्देनोभयविधा अपि विवक्षिता इति ज्ञेयम् । अत्राद्ये देवानामेव ज्ञानफलं न प्रजानामिति पूर्वपक्षोक्तिः । द्वितीये च प्रजानामपि ज्ञानफलमस्तीति औडुलोमिमतेन सिद्धान्तोक्तिः । तृतीये देवानां च प्रजानां च ज्ञानदाने मुख्यामुख्यकारणत्वोक्त्या फलतारतम्य-प्रतिपादनरूपस्वपक्षोक्तिः ।

## भावदीपः

सहकारिपदसूचितव्यावर्त्यशङ्कामाह ॥ **यदीति** ॥ कस्तृतीय इत्यप्रतीतेर्भाष्यं व्याचष्टे ॥ एतदिति ॥ तस्यार्थो **वक्ष्यमाणमिति** ॥ स्वशब्दार्थः स चेत्यादि । ज्ञानसाधनेऽपि ज्ञान-सम्पादनेऽपीत्यर्थः । श्रुतफलसम्पूर्त्यप्राप्तेराह ॥ **श्रुतमितीति** ॥ **अत इति** ॥ सहकारित्वेन विधानादित्यर्थः ॥ **उक्तमिति** ॥ अनियम इत्युक्तमित्यर्थः । अत्र प्रजाकृतपुण्यफलमेव देवानां न तु पापफलं तत्त्वसुराणामेवेति बोध्यम् । विवृतं चैतदनुव्याख्याने । 'अशुभं त्वशुभेऽप्येषां स्वातन्त्र्या-त्प्रीतितो हरेः । आज्ञया चान्यगं नैव भोगाय भवति क्वचित्' ॥ 'पुण्यमेवामुमाप्नोति न देवान्पापमाप्नुयात्' इत्यादिना । तथा एकादशस्कन्धतात्पर्ये च द्वितीये ।

## अभिनवचन्द्रिका

भाष्ये 'तस्मात्फलं तासाम्' इत्येतावता पूर्णत्वात्, श्रुतमिति व्यर्थमित्यत आह **यावत्तासा-मिति** ॥ न समस्तं फलं भवति, अपि तु यावत्प्रमाणसिद्धं तावदेव भवतीति ज्ञापनार्थं श्रुतपदमिति भावः ।

पूर्वपक्षस्तु– ब्रह्मज्ञानफलं देवानामेव न मनुष्याणाम् । इन्द्रियादिप्रवर्तकत्वेन तेषामेव ज्ञानस्वामित्वात् । लोके च स्वामिन एव फलदर्शनात्, 'यदु किं च इमाः प्रजाः' इति श्रुतेश्च । न च कर्तृत्वेन अस्वामिनामपि फलम् । कर्तृत्वस्याप्रयोजकत्वात् । न च स्वामित्वात् फलम् । असिद्धेः । किं चैवमाप्ततम आत्रेयो मन्यते इति । ततश्च ज्ञानिनां मोक्षनियम इत्युक्तमिति ।

सिद्धान्तस्तु– न केवलं देवानामेव फलं किं तु प्रजानामपि । तासां देवैः क्रियमाणे ज्ञानयज्ञे ऋत्विक्त्वेन सत्रयागे ऋत्विजां याजमान्यमिव, देवाधीनस्वामित्वसद्भावात् । तदर्थं देवैः क्रियमाणत्वाच्च । न च श्रुतिमुनिमतविरोधः । प्रजानामल्पफलाभ्युपगमात् । तदभिप्रायकत्वाच्च श्रुत्यादेः । यदि प्रजार्थं देवैः क्रियते तर्हि प्रजानामेव फलं स्यात्, न देवानामिति चेत्, न । प्रजार्थं देवैः क्रियमाणत्वेऽपि देवानां मुख्यस्वामित्वेन मुख्यं फलं, प्रजानां सहकारित्वेन अल्पं फलमित्यङ्गीकारात् । अतः प्रजानामपि ज्ञानफलसद्भावात् युक्तमुक्तमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

**सहकार्यन्तरेति ॥ पक्षेणेति** च भावप्रधानम् । देवानां विहिते ज्ञानदाने कर्मणि प्रजानां देवान्प्रति सहकार्यन्तरत्वेन सहकारित्वेन विधानम् । अत एव देवानां महत्फलं प्रजानामल्पं फलमिति पक्षेण पक्षत्वेन तृतीयं तृतीयः पक्षः । कथं तद्वतो विध्यादिवत् । तद्वतः तदिति प्रस्तुतप्रजास्तद्विशेषशिष्याश्चोच्यन्ते । प्रजावतो राज्ञः शिष्यवतो गुरोश्च पालने व्याख्याने च कर्मणि प्रजानां शिष्याणां च सहकारितया विधिः । आदिशब्दाद्राज्ञो गुरोश्च महत्फलं, प्रजानां शिष्याणां चाल्पफलं यथा तथेति सूत्रार्थमभिप्रेत्य स्पष्टयति **॥ एतदित्यादिना ॥** प्रजार्थं देवैः क्रियमाणत्वे तेषामेव फलं स्यान्न किञ्चिदिति शङ्कापरिहरणं वक्ष्यमाणमौडुलोमिना न ज्ञातमित्यर्थः **॥ तृतीय इति ॥** पूर्णफलापेक्षया देवानामेव पूर्णफलमिति श्रुत्यवष्टम्भेनात्रेयोक्त आद्यः पक्षः अल्पफलापेक्षया । तस्मै हि परिक्रियत इति युक्त्यवष्टम्भेनौडुलोम्युक्तो द्वितीयः पक्षः । आचार्यप्रवेशेन प्रवक्तृत्वं प्रजासु स्थित्वा तदिन्द्रियप्रवेशेन ज्ञापनमिति द्वयं देवादीनां फलाधिक्ये मुख्यं कारणं प्रजानां सहकारिमात्रत्वात् । अल्पमिति प्रागुक्तद्वयमप्युपपादयितुं तृतीयोऽयं स्वपक्ष इति भावः । तदुक्तं तत्त्वप्रदीपे । देवानामेव महत्फलमित्यत्र श्रुतिं, प्रजानामल्पं फलमस्तीत्यत्र युक्तिमौडुलोमिना प्रयोजयामास । स्वयं तु सर्वविद्याचार्यतम आचार्यप्रवेशेन वक्तृत्वं प्रजासु स्थित्वा तदिन्द्रियप्रवर्तनेन ज्ञापनमित्येतदुभयं देवानां फलाधिक्ये कारणम् । सहकार्यभावे स्वविहित-ज्ञानदानासम्भवेन विहितानुष्ठानप्रसङ्गात् । प्रजानामप्यपेक्षत्वं तासामप्यल्पफलाभावकारणं प्रजानामाचार्यस्य देवानां च फले इयत्ताविशेषं चेति बहून्विशेषानाहेति तृतीयः स्वपक्ष इत्यादिना **॥ सहकारित्वेनेति ॥** आचार्यः सहकारी,प्रजास्तु सहकार्यन्तरमिति द्योतयितुं सूत्रे सहकार्यन्तरे-त्युक्तमिति भाष्य एव व्यक्तम् । केचित्तु सहकार्यन्तरं सहकारिविशेषः अनुग्राह्यः सहकारीति द्योतयितुमन्तरपदमित्याहुः । यद्यपि तत्त्वप्रदीपे ब्रह्मविदाप्नोति परमित्युक्तं ज्ञानफलं प्रजानामेव । अन्यथा प्रयत्नवैयर्थ्यादिति पूर्वपक्षे प्राप्ते आद्यसूत्रं देवानां स्वामिनामेव महत्फलं तथा श्रुतेरित्यर्थः । युक्त्या देवानां महत्फलं प्रजानामल्पमिति प्रतिपादनाय द्वितीयसूत्रम् । तत्रानुपपत्तिपरिहाराय तृतीयं सूत्रमिति सूत्रत्रयमपि सिद्धान्तपरतया व्याख्याय यत्तु न्यायविवरणेऽन्यथा व्याख्यानं तदात्रेयमत-मुखेन मन्दाशङ्कानुवादपरमिति न तत्प्रत्यनीकत्वं सिद्धान्तवादस्येति न्यायविवरणविरोधो भाष्यस्य परिहृतः । तथापि न्यायविवरणानुसारेण टीकायां भाष्यमेव प्रकारान्तरेण व्याख्यातम् । फलत

(वाक्यार्थमुक्तावली)

ऐक्याविरोधः । अत्राद्ये पूर्वपक्षः । द्वितीये युक्त्या सिद्धान्तः । तृतीये देवानां फलाभावप्रसङ्गेन तदर्थं क्रियमाणत्वहेतोरसिद्धिमाशङ्क्य निरास इति सूत्रक्रमः ।

## तत्त्वसुबोधिनी

नन्वत्र प्रजानामपि फलमस्तीत्युच्यते तच्च औडुलोमिनाप्यङ्गीकृतमेव तत्कथमस्य तृतीयत्व-मित्यत आह ॥ **एतद्वक्ष्यमाणमिति** ॥ देवानां हि ज्ञानदानं कर्तव्यमित्यादि वक्ष्यमाणमित्यर्थः ॥ **पक्षत्वेनेति** ॥ अनेन पक्षेति सौत्रनिर्देशो भावप्रधान इत्युक्तं भवति । स्वपक्ष इति भावः । भाष्यगतस्वशब्दाभिप्रायमाह ॥ **स च भगवत इति** ॥ कोऽसावित्यस्योत्तरमाह ॥ **प्रजार्थमिति** ॥ भाष्ये सहकार्यन्तरं प्रजा स्मृत्यनुसारेण कार्यान्तरमित्येत्सहकार्यन्तरत्वेन प्रजा विधीयते इति व्याख्यातम् । तत्र तत्र यो यो महत्तरो विहितः सहकारित्वे इत्येतत्स्मृत्यनुसारेण महत्तराचार्यः सहकारित्वेन विधीयते इति संयोज्यम् । तथा आचार्याणां इतरप्रजानां च परस्परं विशेषे सत्यपि देवापेक्षया सहकारित्वमेवेत्यभिप्रेत्याह । सहकारित्वेन प्रजाः क्रियन्त इति । अत्र प्रजाशब्देनोतय अपि विवक्षिता इति ज्ञेयम् ॥ अत्राद्ये पूर्वपक्षोक्तिः । द्वितीये औडुलोमिमतेन सिद्धान्तोक्तिः तृतीये स्वपक्षोक्तिरिति सूत्रक्रमः ।

## वाक्यार्थमञ्जरी

प्रजानां देवान्प्रति सहकार्यंतरविधिराचार्यरूपसहकारिलक्षणसहकार्यन्तरत्वेन विधानं पक्षेण पक्षत्वेन तृतीयं तृतीयः पक्षः कथं तद्वतो विध्यादिवत् तद्वतो प्रजावतो राज्ञः सहकारित्वेन प्रजाविधानफलवदित्यर्थः । नन्वत्र प्रजानामपि फलमस्तीत्युच्यते । तच्चौडुलौमिनाप्यङ्गीकृतमेव तत्कथमस्य तृतीयत्वमित्यत आह ॥ **एतद्वक्ष्यमाणमिति** ॥ देवानां ज्ञानदानं कर्तव्यमित्यादि-वक्ष्यमाणमित्यर्थः । औडुलोमिना ज्ञातं पक्षं वक्तुं तावच्छंकां प्रतिषेधति ॥ **प्रजार्थमिति** ॥ श्रुतमित्यनुवादः ।

॥ इति फलश्रुत्यधिकरणम् ॥ ७ ॥

# ८. कृत्स्नभावाधिकरणम्

## सूत्रभाष्यम्

**॥ ॐ कृत्स्नभावात्तु गृहिणोपसंहारः ॐ ॥ ४७ ॥**

'कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान्विदधत्' इत्युक्त्वा 'न च पुनरावर्तते न च पुनरावर्तते' (छां.उ.८-१५-१) इति गृहिणोपसंहारः क्रियते तस्माद्गृहस्थस्यैवोत्तम(र)त्वमिति न वाच्यम् । यतः कृत्स्नगृहस्थान्देवानपेक्ष्यैवोपसंहारः क्रियते । 'कृत्स्ना ह्येते गृहिणो देवाः कृत्स्ना ह्येते यतयोऽत एतेषां न पुत्रा दायमुपयन्ति न चैते गृहान्विसृजन्त्यरागा अद्वेषा अलोभाः सर्वभोगाः सर्वज्ञाः सर्वकर्तार' इति पौत्रायणश्रुतिः ।

## तत्त्वप्रदीपिका

'कुटुम्बे शुचौ देशे' इत्याद्युक्त्वा 'न च पुनरावर्तत' इति गृहिणोपसंहारादस्यैवोत्तमत्वम् । 'अष्टमे वर्षे ब्राह्मणमुपनयीत' इत्याश्रमधर्माणां मनुष्यविषयत्वात् गार्हस्थ्यं च नान्यस्य युक्तम् । अतो देवानां कथमुत्तमं फलं स्यादित्यत आह– **कृत्स्नभावात्तु गृहिणोपसंहारः ॥** कुटुम्बे वर्तमानः शुचौ देशे स्थित्वा स्वाध्यायमधीयानः धार्मिकान्धर्मसम्बन्धिनो विशेषेण धायन् परमात्मनि सर्वेन्द्रियाणि सम्यक् प्रतिष्ठाप्य, इन्द्रियाणां विषयेभ्यः प्रत्याहरणेन निरुद्धबहिर्वृत्तिकं चित्तं परमात्मनि सम्यक्प्रतिष्ठाप्येत्यर्थः । परमात्मानमभिपश्यतस्तदन्यत्रेन्द्रियव्यापाराभावाच्चाऽत्मनि सर्वेन्द्रियाणि सम्प्रतिष्ठाप्येति युज्यते । देवा एव गृहस्थधर्मान्कृत्स्नात् पूर्णफलाननुतिष्ठन्तीति 'कृत्स्नगृहस्थाः' ।

ननु 'न च पुनरावर्तते न च पुनरावर्तत' इति नात्र गृहिणोपसंहारः । यद्यपि सगुणोपास्तिरत्र विधीयते । तथाऽपि तदुपासकस्य तत्स्थानं प्राप्तस्य ततो निर्गुणज्ञानवत एवानावृत्तिर्विवक्षिता । सगुणोपास्तिफलभोगस्य स्थानादिभेदापेक्षिणः । सांसारिकस्यानित्यत्वेन तदनावृत्त्ययोगादिति । तदसत् । सगुणोपास्तिप्रकरणपठितायाः अनावृत्तेस्ततो विच्छिद्याप्रसिद्धविषयत्वापादनस्याप्रामाणिकत्वात् । नित्यशुद्धबुद्धमुक्तेश्वरत्वादिगुणवदेव ब्रह्म प्रामाणिकमिति पुरस्तात्प्रास्तावि । अतो न तत्प्राप्तिः सांसारिकी । कथं च मोक्षे स्थानभेदाद्यभावः । 'सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता' इत्यादिश्रुतेः ।

(तत्त्वप्रदीपिका)

'स्वयोग्यं ब्रह्मविद्भुङ्क्ते विरिञ्चेन परेण च ।
ब्रह्मणा सह तद्वश्यः सुखमेतन्न दुष्कृतम्' इति यजुर्विवेके ॥

'परं ज्योतिरुपसम्पद्य' इत्युक्त्वा 'स तत्र पर्येति' इत्यादेश्च ॥

## तत्त्वप्रकाशिका

अत्र हरिप्राप्तिसाधने ज्ञाने विशेषाधिकारिणां यतीनां सर्वाश्रमिभ्योऽतिशयसमर्थनेन ज्ञानमहिम्न एव वर्णनादस्ति शास्त्रादिसङ्गतिः । कर्माधिकारिभ्यो ज्ञानाधिकारिणामतिशयाभावे ज्ञानस्यैवातिशयाभावप्रसङ्गात्समर्थनीयमेतत् । प्रकृतज्ञानाधिकारिषु देवर्षिमानुषेषु मनुष्या आश्रमभेदभिन्ना एव विषयः । किं सर्वेऽपि मोक्षे समा उत कस्यचिदुत्तमत्वमिति सन्देहः । द्वेधाऽपि दर्शनं सन्देहबीजम् । तत्र गृहस्थो मुक्तावुत्तम इति पूर्वः पक्षः । तस्य सर्वसत्कर्मस्वधिकारित्वात् । न ह्यन्याश्रमिणां क्रत्वादावधिकारोऽस्ति । किं च छन्दोगोपनिषदि गृहस्थस्यैव मोक्षमुक्त्वोपसंहारः क्रियते । 'आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान्विदधदात्मनि सर्वेन्द्रियाणि प्रतिष्ठाप्याहिंसन्सर्वाणि भूतान्यन्यत्र तीर्थेभ्यः स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्तते न च पुनरावर्तते' इति । तेन ज्ञायते गृहस्थस्यैव मुक्तावाधिक्यमिति । न ह्याधिक्याभावे सर्वेषामपि मोक्षे समाने विशिष्योक्तिर्युक्ता । उपसंहाराच्च तात्पर्यमवगम्यते । अतः कर्मिणामेवोत्तमत्वान्न ज्ञानमतिशयितमिति । सिद्धान्तयत्सूत्रं पठित्वा व्याचष्टे ॥ कृत्स्नेति ॥ यतेरेव सर्वाश्रमेषूत्तमत्वं न गृहिणः । यतिमोक्षस्य गृहिमोक्षादपि चिरकालसाध्यत्वादल्पकालापादितसाधनसाध्यान्मोक्षाद्बहुकालीनसाधनसाध्यस्याधिक्यनियमात् । गृहिणां बहुकर्माधिकारमात्रसद्भावेऽपि तदाचरणनियमाभावात् । न चैवं गृहिणोपसंहारविरोधः । तस्य देवताविषयत्वात् । तेषां संपूर्णगृहस्थधर्मवत्त्वेन तद्योग्यत्वात् । न च देवानामपि यतेरुत्तमत्वं कथमिति वाच्यम् । संपूर्णयतिधर्मस्यापि तेषु सद्भावात् । अतो गृहिभ्यो यतीनामेवोत्तमत्वं तेभ्यो देवानामेवेत्याशयः । भवेदेतद्यद्याश्रमद्वयं संपूर्णं देवेषु भवेत्तदेव कुत इत्यत आह ॥ कृत्स्ना हीति ॥ एतेषां न पुत्रा दायमुपयन्त्यरागा अद्वेषा अलोभाः सर्वज्ञा इति यतित्वस्योपपादकमन्यद्गार्हस्थ्यस्य । तथा चोक्तम् । 'गार्हस्थ्यं च यतित्वं च देवेष्वेकत्वमागतम् । प्राधान्योक्तिर्यतित्वस्य गार्हस्थ्यस्य क्वचित्क्वचित्' इति ॥

## गुर्वर्थदीपिका

कृत्स्नगृहस्थान्देवानिति वदता कृत्स्नाभावादिति सूत्रस्य कृत्स्नगृहस्थत्वभावादित्यर्थस्सूचितो भवति । कृत्स्नगृहस्था नाम येषु ब्रह्मचारिधर्मोऽध्ययनं, गृहस्थधर्मो यज्ञादि, वानप्रस्थधर्मस्तपो. यतिधर्मो वैराग्यं च सम्पूर्णं त एव कृत्स्नगृहस्था इत्युच्यन्ते । इदं च देवेष्वेवास्ति । तदपेक्षयैवाय-मुपसंहार इति । अत एव स्वाध्यायमधीयानः धार्मिकान्विदधदात्मनि सर्वेन्द्रियाणि प्रतिष्ठाप्याहिंसन् सर्वाणि भूतानीत्यादिकमुक्तम् ।

## भावबोधः

**यतीनामिति ॥** यद्यप्यत्राधिकरणे मनुष्येषु गृहस्थेभ्यो यतीनामुत्तमत्वं प्रतिपाद्यते । तथापि पूर्वाधिकरणद्वये 'चरन्ति देवा विहितं समस्तं' 'देवा एव तदाचरन्ति' इति यद्देवानामेवाशेषकर्म-कर्तृत्वमुक्तं, तदप्युपसंहारस्य देवताविषयत्वसमर्थनेन समर्थितं भवतीत्यनन्तरसङ्गतिरिति भावः । किं सर्वेऽपीत्यादि । अत्राश्रमभेदभिन्नमनुष्याः किं सर्वेऽपि मोक्षे समा उत कश्चिदुत्तम इति चिन्ता । कस्यचिदुत्तमत्वे किं गृहस्थानामुत्तमत्वमुत यतीनामुत्तमत्वमिति । तदर्थं मुक्तानामुत्तमत्वे बहुकर्माधिकारमात्रप्रयोजकमुत बहुकालापादितसाधनसपत्तिर्वा प्रयोजिकेति ।

## भावदीपः

**विशेषेति ॥** ज्योतिष्टोमादिकर्मप्रहाणेन तन्मात्राधिकारिणामित्यर्थः ॥ **अतिशयसमर्थने-नेति ॥** कुटुम्बे शुचौ देश इत्यादिगृहिप्रशंसापरश्रुतेर्देवताविषयत्वोपपादनेनेति भावः । तेन पूर्वत्र देवानां सम्पूर्णफलवत्वमुक्तमिह तु सम्पूर्णसर्ववर्णाश्रमधर्मवत्त्वमुच्यते इति वा पूर्वत्र प्रजानामपि फलमस्तीति सामान्यतः सिद्धौ तन्मध्ये मानुषोत्तमप्रजानां सर्वासामपि किं सामान्येन फलमुत यतिरूपप्रजानामतिशयेनेति चिन्तनाद्वा पूर्वसङ्गतिरपि सूचिता ॥ **द्वेधाऽपीति ॥** लोके केचन समाः केचन नीचोच्चतापन्नाश्च दृश्यन्त इति तद्दर्शनं सन्देहबीजमित्यर्थः । इति सन्देहबीजमित्यनन्तरं कस्यचिदुत्तमत्वं वाच्यम् । मुक्तौ तारतम्यस्य साधितत्वात् । तत्र किं गृहस्थ उत्तम उत यतिरिति सन्देह इत्येतावद्वाक्यं पूरणीयम् । तेन न पूर्वपक्षाद्यनानुगुण्यं सन्देहस्य शङ्क्यम् । गृहस्थस्यै-वोत्तमत्वमिति भाष्योक्तप्रतिज्ञामाह ॥ **तत्र गृहस्थ इति ॥** आश्रमभेदभिन्नमनुष्याणां मध्य

(भावदीपः)

इत्यर्थः । आधिक्यं मुक्तावित्यन्यत्रोक्तिमनुरुध्य मुक्तावित्युक्तम् । कुत इत्यतः भाष्ये तस्मादित्यस्य बुद्धिस्थवाचितया गृहस्थानामेवाशेषकर्मविशेषयोग्यत्वादित्यन्यत्रोक्तहेतुपरामर्शित्वमुपेत्याह ॥ तस्येति ॥ तस्मादित्यस्य पूर्वप्रकृतोपसंहारपरामर्शित्वमुपेत्यापि कुटुम्ब इत्यादिभाष्यार्थमाह ॥ किं चेति ॥ छन्दोगेति ॥ अष्टमाध्यायान्ते । कुटुम्बे गुरुकुले इति भ्रान्तिनिरासाय वा कुटुम्बस्य वर्तमानत्वद्योतनाय वा पूर्वशेषमाह ॥ आचार्येति ॥ तस्मादित्यादिभाष्यार्थमाह ॥ तेनेति ॥ गृहस्थस्य मोक्षोक्तिपूर्वकोपसंहारेणेत्यर्थः । तावता कथमाधिक्यं गृहिण इत्यत आह ॥ न हीति ॥ आधिक्याभाव इत्यस्य विवरणं सर्वेषामित्यादि । यादृच्छिकत्वानिरासयोपसंहारपदस्वारस्यमाह ॥ उपसंहाराच्चेति ॥ अत इति ॥ सर्वकर्माधिकारित्वादुपसंहारबलाच्चेत्यर्थः ॥

इति न वाच्यमित्येतावता ज्ञाने कोऽतिशयः प्राप्तः येन तन्निरासोऽत्र सङ्गतः स्यादित्यतस्तद्भाष्यस्य पर्यवसितार्थमाह ॥ यतेरेवेति ॥ कुत इत्यतः गृहिभ्यो यतीनां तेभ्यो देवतानामत्वरया सिद्धेरित्यन्यत्रोक्तहेतुमाह ॥ यतीति ॥ तावता कुत उत्तमत्वमित्यत आह ॥ अल्पेति ॥ यो हि त्वरया साधयेत्स मन्दसुखमाप्नुयात् । योऽत्वरया स महदित्यन्यत्रोक्तश्रुतिं हृदि कृत्वाऽऽह ॥ नियमादिति ॥ ननु यतिमोक्षस्य गृहिमोक्षादपि चिरकालसाध्यत्वमसिद्धम् । यदि त्वरयैव गृहिणः साधयन्ति मुक्तिमत्वरयैव यतय इत्यन्यत्रोक्तश्रुत्या तत्सिद्धिस्तर्हि गृहिणामपि सर्वसत्कर्मस्वधिकारात्तत्सर्वाचरणकालस्यापि चिरकालत्वात्कथं गृहिमोक्षस्याचिरकालसाध्यत्वं श्रौतमपि युज्यत इत्यत आह ॥ गृहिणामिति ॥ एतेन बहुकालसाधनाद्बहुकर्माधिकारमात्रस्य दुर्बलत्वादित्यन्यत्रोक्तमधिकारमात्रत्वं तदाचरणनियमाभावादित्युक्त्योपपादितं भवति । कुटुम्ब इत्यादेरिति न मन्तव्यमित्यन्तभाष्यस्य तात्पर्यमाह ॥ न चैवमिति ॥ यतेरुत्तमत्वादित्यर्थः । यत इत्यादिभाष्यार्थमाह ॥ तस्येति ॥ सामान्यवाक्यस्य कुतो विशेषपरत्वमित्यतो मुख्यामुख्ययोर्मुख्यस्य ग्रहणमिति न्यायादेवविषयत्वे श्रुतेर्मुख्यार्थलाभादिति भावेन कृत्स्नगृहस्थानित्यस्यार्थमाह ॥ तेषामिति ॥ एवं गृहिभ्यो यतेरुत्तमत्वं कथमुक्तमित्याशङ्क्य निराह ॥ न चेति ॥ मानुषगृहिभ्यो मानुषयतेरुत्तमत्वेऽपि न देवगृहिभ्यः । तेषां यतित्वस्यापि सत्त्वेन गृहिभ्यो यतिरुत्तम इत्युक्तम् । देवानामपीतरगृहिभ्यो यतित्वेनोत्तमत्वस्यैव प्राप्तेरिति भावेन कृत्स्ना वै एते यतय इति श्रौतपदतात्पर्यार्थमाह ॥ सम्पूर्णेति ॥ तर्हि मानुषयतितो देवानामुत्तमता न स्यादित्यतो गृहिभ्यो

(भावदीपः)

यतीनां तेभ्यो देवानामत्वरया सिद्धेरित्यन्यत्रोक्त्यनुरोधेन भाष्यभावमाह ॥ **अत इति** ॥ तन्मोक्षस्य चिरकालसाध्यत्वादित्यर्थः । **श्रुतिशेषोक्तेरुपयोगमाह ॥ एतेषां न पुत्रा दायमिति** ॥ नन्वेवं देवानां द्विरूपत्वे कुटुम्बे शुचौ देशे इत्यादेः केवलगृहस्थविषयस्य कथं देवपरत्वमित्यतः षोडशेऽध्याये एकादशस्कन्धतात्पर्योक्तस्मृत्या निराह ॥ **तथा चेति** ॥

## अभिनवचन्द्रिका

**कर्माधिकारिभ्य इति** ॥ इह तावत् ज्ञानाधिकारिषु मनुष्येषु केचित् बहुतरं कर्म कृत्वा तत्रैवाऽऽग्रहवन्तो ज्ञानमाप्य मुक्ता भवन्ति । एते कर्मयोगिन इत्युच्यन्ते । अपरे पुनः ज्ञान एव आग्रहवन्तः सदा श्रवणादिरताः स्वावसरे किञ्चित्कर्मानुष्ठाय मुक्ता भवन्ति । एते च ज्ञानयोगिन इत्युच्यन्ते । ततश्च कर्माधिकारिभ्यो ज्ञानाधिकारिणां विशेषाभावे ज्ञानस्यातिशयो न स्यात् । ज्ञानस्याल्पत्वे बहुत्वे वा फलस्यैकरूपत्वात् । न हि ज्ञानातिशये फलं नातिशयीत । ज्ञानं च साधनान्तरादतिशयवदिति युक्तम्, नियामकाभावेन वैपरीत्यस्यापि वक्तुं शक्यत्वादिति समर्थनीयमेव तदिति भावः । **द्वेधापि दर्शनमिति** ॥ विचित्रसाधनवत्सु समविषमफलदर्शनं सन्देहबीजमित्यर्थः ॥ **तस्येति** ॥ वेदोक्तज्योतिष्टोमादिसर्वकर्मस्वधिकारित्वादित्यर्थः ॥ **अन्यत्र तीर्थेभ्य इति** ॥ 'तीर्थं शास्त्राध्वरक्षेत्र' इत्यभिधानात् तीर्थेभ्योऽन्यत्र यज्ञेभ्योऽन्यत्राऽहिंसन्नित्यर्थः । ननु न गृहिमोक्षस्याल्पकालसाध्यत्वं युक्तं, तस्य सर्वकर्माधिकारित्वेन विलम्बमन्तरा तदनुष्ठानायोगेन गृहिमोक्षस्य यतिमोक्षादपि चिरकालसाध्यत्वादित्यत आह– **गृहिणामिति** ॥ तदाचरणनियमाभावात् न तन्मोक्षः चिरकालसाध्य इत्यर्थः ।

इदमुक्तं भवति । सत्यमस्ति गृहस्थानां बहुकर्माधिकारः, तथापि न सर्वानुष्ठानम् । अल्पानुष्ठानेनैव कृतत्वात् । सर्वकर्माधिकारस्तु स्वेच्छया कस्यचिदनुष्ठानायोपयुज्यते । यथा अनेकभार्यापतिश्चित्रकेतुः प्रत्यहं सर्वभार्योपभोगाधिकृतो नैकस्मिन् दिने ताः सर्वा उपभुङ्क्ते किन्तु स्वेच्छया कतिपयास्ता उपभुज्य प्रशान्तकाम उदास्ते । यथा वा मात्रा पित्रा भ्रात्रा तद्दुहित्रा जामात्रा सहभोगाधिकृतोऽपि बालः, स्वेच्छया मात्रा सह भुक्त्वा, पूर्णोदरो न पित्रादिना सह तदैव भुङ्क्ते । एवं सर्वकर्माधिकृतोऽपि गृही ज्योतिष्टोमादिषु कस्यचिदनुष्ठानेन जातापरोक्षः

(अभिनवचन्द्रिका)

कृतकृत्यत्वात् न कर्मान्तरमनुतिष्ठतीति त्वरयैव मोक्ष इति । अयं तु तत्र हेतुरिति । सर्ववर्णाश्रमोचितकारित्वं, तत्र सर्ववर्णत्वे, सर्वाश्रमित्वे च, हेतुरित्यर्थः ।

पूर्वपक्षस्तु– मुक्तौ यतिभ्यो ग्रहस्थ एवोत्तमः । तस्य ज्योतिष्टोमादिसर्वकर्माधिकारित्वात् । सर्वकर्मानुष्ठानं च चिरकालसाध्यम् । चिरकालसाध्य एव हि मोक्ष उत्तमः । किं च । छन्दोगश्रुतौ 'आचार्यकुलाद्वेदमधीत्य' इति ग्रहस्थस्य मोक्षमुक्त्वा, उपसंहारः क्रियते । न च गृहस्थादुत्तम-सद्भावे तदनुक्त्वोपसंहारो युज्यते । अतः कर्मिणामेवोत्तमत्वात् न ज्ञानमतिशयितमिति ।

सिद्धान्तस्तु– मनुष्येषु यतेरेव सर्वापेक्षयोत्तमत्वं न गृहिणः । गृहिमोक्षाद्यतिमोक्षस्य चिरकालसाध्यत्वात् । यद्यपि गृहिणां बहुकर्मसु अधिकारोऽस्ति, तथापि न तैः सर्वाण्यनुष्ठीयन्ते । कतिपयानुष्ठानेनैव अपरोक्षज्ञानसिद्धेः । न चैवं गृहिणोपसंहारविरोधः । तस्य देवताविषयत्वात् । न च देवानामपि कथं यत्युत्तमत्वमिति वाच्यम् । संपूर्णयतिधर्मस्यापि तेषु सद्भावात् । न च देवानां यतित्वाभावः । 'कृत्स्ना ह्येते गृहिणो देवाः, कृत्स्ना ह्येते यतयः' इति श्रुतेः 'यथा ह्येते मुनय एवं सर्ववर्णाः सर्वाश्रमाः' इति श्रुत्या यतित्वदृष्टान्तेन सर्ववर्णाश्रमित्वाभिधानाच्च । अतो धर्माधिकारिषु ज्ञानप्रचुराणां यतीनामेवोत्तमत्वात् युक्तो ज्ञानस्यातिशय इति सिद्धम् ।

## वाक्यार्थमुक्तावली

अतिशयसमर्थनादिति मोक्षाख्यफलेऽतिशयसमर्थनादित्यर्थः । एतेन मानुषादिज्ञानिप्रजानां पूर्वाधिकरणरीत्या ज्ञाने फलसिद्धावेव । तन्मध्ये यतीनां मुक्तिफले आधिक्यविचारावसर इत्यनन्तरसङ्गतिरप्युक्ता भवति ॥ **किमिति** ॥ किमाश्रमिणस्सर्वेऽपि मुक्तौ समा उत कस्य-चिदुत्तमत्त्वमिति सन्देह इत्यर्थः । अत्र तावत्प्राप्तं, सर्वेऽपि समा आश्रमत्त्वाविशेषादिति । तत्र सिद्धान्तः । सर्वे न समाः किन्तु कस्यचिदुत्तमत्त्वम् । 'मानुषा वर्णभेदेन तथैवाश्रमभेदतः' इति तारतम्यकथनात्कस्यचिदुत्तमत्त्वस्य वक्तव्यत्वादिति बहिरेव द्रष्टव्यम् । एवमाश्रमिषु कस्य-चिदुत्तमत्त्वसिद्धौ चिन्तान्तरमाह ॥ **कस्यचिदिति** ॥ कस्यचित् कस्य वोत्तमत्त्वं, किं गृहस्थस्य किं यतेरिति संशय इत्यर्थः । यद्यपि ज्ञानकर्माल्पत्वाद्ब्रह्मचारिणः प्रसक्तौ वानप्रस्थस्य वस्तुतो गृहस्थादुत्तमत्त्वात्प्रसक्तिसम्भवात्तस्यापि संशयकोटिनिविष्टत्वं वक्तव्यं तथापि ज्ञानमाहात्म्यसिध्यर्थं

(वाक्यार्थमुक्तावली)

यत्युत्तमत्त्वस्यैव साधुत्वात् (साधकत्वात्)कर्मकलातिशयेन गृहस्थस्योत्तमत्त्वे पूर्वपक्षं प्रापयित्वा सिद्धान्तोपन्यासादेवं संशयो निरूपित इत्यवधेयम् । तथा चात्राश्रमिषु गृहस्थोत्तमत्त्वमुत यतेरिति चिन्ता । तदर्थं मुक्तौ उत्तमत्त्वे बहुकर्माधिकारमात्रं प्रयोजकम् । छन्दोगोपनिषदि गृहस्थस्यैव मोक्षमुक्त्वा उपसंहारश्च तदाधिक्ये प्रमाणमुत मुक्तावुत्तमत्त्वे बहुकालापादितसाधनसम्पत्तिरेव प्रयोजिका । छन्दोगश्रुतिश्च देवताविषयत्वेन सावकाशेति । गृहस्थस्यैवोत्तमत्वमिति भाष्यसूचित-मापूर्णविशेषयोग्यतेति न्यायं न च गृहस्थानामशेषकर्मविशेषयोग्यत्वादाधिक्यं मुक्ताविति न्यायविवरणानुसारेण व्यनक्ति ॥ **अत्र गृहस्थ इत्यादिना** ॥ साक्षात्सूत्रनिरस्यं स्पष्टं भाष्योक्तयुक्त्यन्तरमाह ॥ **किञ्चेति** ॥ भाष्ये आचार्यकुलादिति प्रतीके ग्राह्ये यत्कुटुम्ब इत्यादितस्तद्ग्रहणं तदस्य वाक्यस्य गृहस्थविषयत्वज्ञापनार्थमिति भावेनादितः पठित्वाशेषं पूरयति ॥ **आचार्यकुलादित्यादिना** ॥ गुरोः कर्मातिशेषेण आज्ञाप्रकारेण समावृत्य समावर्तनं कृत्वा शुचौ देशे स्थित्वा स्वाध्यायमधीयानः कुटुम्बे वर्तमानः शिष्यान्पुत्रान् वा धार्मिकान् विदधत् विषयेभ्यः प्रत्याहारेण चात्मनि सर्वेन्द्रियाणि प्रतिष्ठाप्य (तीर्थं शास्त्रेऽध्वरे क्षेत्र इत्यभिधानात्)यज्ञेभ्योऽन्यत्र सर्वाणि भूतान्यहिंसन्यः स एवं यावदायुषमात्मानं वर्तयन् ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्तत इति श्रुत्यर्थः ।

उपसंहाराच्चेति गृहिणो विशिष्य मोक्षमुक्त्वा उपनिषत्परिसमापनलक्षणोपसंहाराच्चेत्यर्थः। गृहस्थस्यैवोत्तमत्त्वमिति न च वाच्यमिति सिद्धान्तभाष्यं व्याचष्टे ॥ **यतेरेवेति** ॥ तद्धेतुतया अत्वरयासिद्धिरिति पूर्वाधिकरणसिद्धान्तन्यायं विशदयति ॥ **यदि मोक्षस्येति** ॥ यतेर्गृहस्थापेक्षया प्रारब्धकर्मणो बहुत्वेन त्वरया सिद्ध्ययोगादिति भावः । स्वरूपयतीनां साधनकाले यतिजन्म बाहुल्यात् ज्ञानप्राचुर्योपपत्तिः ॥ **आधिक्यनियमादिति** ॥ अन्यथा बहुकालसाधनानुष्ठान-वैयर्थ्यादिति भावः । न च ऋजुत्वे तन्नियमभङ्ग इति वाच्यम् । अतीतानागतकाले मुच्यमानानां ऋजूनां साधनकालसाम्याङ्गीकारात्तदुपपादनप्रकारो रहस्यत्वान्नेह क्रियते । आपूर्णविशेष-योग्यतेत्युक्तपूर्वपक्षन्यायं विघटयति ॥ **गृहिण इति** ॥ यतः कृत्स्नगृहस्थानिति भाष्यं तन्निवर्तनीय-शङ्कानिरासपूर्वं व्याचष्टे ॥ **न चैवमित्यादिना** ॥ तद्योग्यत्वात् पूर्णफलयोग्यत्वात् । कृत्स्नः सम्पूर्णः भावो गृहस्थधर्मो यस्य देवतावर्गस्य स कृत्स्नभावः । ल्यब्लोपनिमित्ता पञ्चमी ।

(वाक्यार्थमुक्तावली)
तुशब्दोऽवधारणे । **सम्पूर्णगृहस्थधर्मान्देवानपेक्ष्यैव** गृहिणि प्रतिपाद्य न निमित्तेन गृहिणमुपादाय तस्य मोक्षमुक्त्वा उपनिषदुपसंहहार: कुत: कृत्स्नभावात्तेषामेव सम्पूर्णफलसत्त्वात्तद्योग्यत्वादिति सूत्रार्थ: । उक्तं च तत्त्वप्रदीपे देवा एव गृहस्थधर्मान्कृत्स्नान्पूर्णफलाननुतिष्ठन्ति इति कृत्स्ना ह्येते यतय इति श्रुत्यनुसारेण सूत्रखण्डस्य वर्णकान्तरं वक्तुं तद्व्यावर्त्यमाशङ्क्य निषेधति ॥ **न चेति** ॥ यतेरिति पञ्चमी कुतो न वाच्यमित्यतो देवानां कृत्स्नभावात् । तुशब्दोऽप्यर्थे सम्पूर्णयतिधर्मस्यापि गृहिभ्यो यतीनां तेभ्यो देवानामुत्तमत्त्वमिति सूत्रखण्डार्थमाह ॥ **सम्पूर्णेति** ॥ **कुत इत्यत आहेति** ॥ कृत्स्नपदसूचितश्रुतिमुदाहरतीत्यर्थ: ॥ **एषां न पुत्रा इति** ॥ पित्रार्जितं दायशब्देनोच्यते । इन्द्रादिपूत्राणां जयन्तप्रभृतीनामिन्द्राद्यैश्वर्यप्राप्त्यभावात्तेषां यतित्वम् । यतिपुत्रस्यापि यतिसम्पादितार्थप्राप्त्यभावात् यतीनां गृहिवद्व्यासङ्गाभावादधिकज्ञानसम्पादनं विद्यते । एवं देवानां न सार्वज्ञं च वर्तत इति यतित्वम् । यद्वा त्यागंभोगप्रजाकर्तृत्वाभावाद्गार्हस्थ्यं चेति भाव: ।

## तत्त्वसुबोधिनी

**यतीनामिति** ॥ यद्यप्यत्राधिकरणे मनुष्येषु गृहस्थेभ्यो यतीनामुत्तमत्वं प्रतिपाद्यते । तथापि पूर्वाधिकरणे ये चरन्ति देवा विहितं समस्तं देवा एव तदाचरन्ति इति तद्देवानामेकशेषकर्मकतृत्व-मुक्तम् । तदप्युपसंहारस्य देवताविषयत्वसमर्थनेन समर्थितं भवतीत्यनन्तरसङ्गतिरिति भाव: । तस्मात् गृहस्थस्यैवोत्तमत्वमिति भाष्योक्तं पूर्वपक्षमाह । किं चेत्यादिना गृहस्थस्यैवेत्यन्तेन । आचार्यकुलादिति श्रुतिप्रतीके ग्राह्ये यत्कुटुम्ब इत्यादित: तद्ग्रहणं तदस्य वाक्यस्य गृहस्थविषयत्व-ज्ञापनार्थम् । विदधदित्यन्तवाक्यग्रहणं तु ब्रह्मलोकमभिसम्पद्यत इत्यन्तस्य प्रतीकग्रहणम् । मोक्षमिति शेषोक्ति: । **गृहिणो मोक्षमुक्त्वेति** सम्बन्ध इत्युक्तं भवति । सूत्रभाष्ये च उपसंहार इत्युक्त: प्रयोजनमाह ॥ **उपसंहाराच्चेति** ॥ उपनिषत्परिसमापनाच्चेति भाव: ॥ **तदेवोपपादयति** ॥ **अल्पकालेति** ॥ अन्यथा बहुकालसाधनानुष्ठानस्य बुद्धिमदुपादित्सागोचरत्वेन स्यादिति भाव: । तथापि गृहिणां सर्वकर्माधिकारित्वेन कथं यतेरुत्तमत्वमित्यत आह ॥ **सम्पूर्णयतिधर्मस्येति** ॥

## वाक्यार्थविवरणम्

सर्वाश्रमिणां ब्रह्मचारिगृहस्थाद्याश्रमिणां सकाशात् सन्देह इत्यनन्तरं कस्यचिदुत्तमत्वेऽपि किं गृहस्थस्योत्तमत्त्वं यतेर्वेति सन्देहोऽपि द्रष्टव्य: ॥ **विशिष्योक्तिरिति** ॥ गृहस्थस्य मोक्षमुक्त्वोप-

संहाररूपेत्यर्थः ॥ **तदेवोपपादयति** ॥ **अल्पकालेति** ॥ **नियमादिति** ॥ अन्यथा बहुकालतदनुष्ठानं व्यर्थं स्यादिति भावः । गृहस्थस्य सर्वकर्मस्वधिकारित्वादुत्तमत्वमित्युक्तं तत्राह ॥ **गृहीणामिति** ॥ यतेः सकाशात् गृहिभ्यः गृहस्थाश्रमिभ्यो मनुष्योत्तमेभ्यः ।

## वाक्यार्थमञ्जरी

सर्वाश्रमिणां सकाशात् ॥ **आचार्यकुलादिति** ॥ मुमुक्षुराचार्यकुलाद्वेदमधीत्य यथा विधानमित्येतत्पूर्वोत्तराभ्यां सम्बध्यते, कर्मसेवारूपं दक्षिणारूपं वा अतिशेषेण अशेषेण कृत्वा कुटुम्बी गृहस्थाश्रमवान् क्वचित्कुटुम्ब इति पाठः तदावर्तमान इति शेषः । धार्मिकान् व्यापारान् विदधत् कुर्वाणः आत्मनि परमात्मनि सर्वेन्द्रियाणि प्रतिष्ठाप्य नियम्य तीर्थेभ्यो यज्ञेभ्योऽन्यत्र विना सर्वाणि भूतान्यहिंसन् वर्तमानस्तं परमात्मानं दृष्ट्वा ब्रह्मलोकमभिसम्पद्यते प्राप्नोति प्राप्तश्च पुनर्नैवावर्तत इत्यर्थः ॥ **उपसंहारत्वाच्चेति** ॥ उपनिषत्परिसमापनाच्चेत्यर्थः ।

ॐ कृत्स्नभावात्तु गृहीणोपसंहारः ॐ ॥ गृहिणो गृहस्थस्य मोक्षमुक्त्वोपसंहारस्तु देवविषयः कुतः देवानां कृत्स्नभावात् कार्त्स्न्येन गार्हस्थ्यवत्त्वादित्यर्थः ॥ **आधिक्यनियमादिति** ॥ तथा च यतेरप्याधिक्यमिति भावः । यतेः सकाशात् गृहिभ्यो मनुष्येभ्यः एकत्वं सामानाधिकरण्यम् ।

## सूत्रभाष्यम्

### ॥ ॐ मौनवदितरेषामप्युपदेशात् ॐ ॥ ४८ ॥

**न चाऽऽश्रमद्वयमेव देवानाम् । 'देवा एव ब्रह्मचारिणो देवा एव गृहस्था देवा एव वनस्था यथा ह्येते मुनय एवं सर्ववर्णाः सर्वाश्रमाः सर्वं ह्येते कर्म कुर्वन्ति' इति कौण्ठरव्यश्रुतौ यतित्वदृष्टान्तेनान्येपामप्युपदेशात् ॥**

॥ इति कृत्स्नभावाधिकरणम् ॥ ८ ॥

## तत्त्वप्रकाशिका

युक्त्यन्तरेणैतत्समर्थयत्सूत्रमुपन्यस्य व्याचष्टे ॥ **मौनवदिति** ॥ न देवानामुक्ताश्रमद्वयकर्मित्वमेव किं तु सर्वाश्रमकर्मित्वमपि । श्रुतिबलात् । तथा च यदाऽश्रमद्वयकर्मित्वेनैव देवानां यतिभ्य

(तत्त्वप्रकाशिका)

**उत्तमत्वं सिध्यति किमु वाच्यं तदा सर्वाश्रमकर्मित्व इति भावः । सर्वाश्रमा इति दार्ष्टान्तिकोक्तिः । न केवलमेतावत् सर्ववर्णाः । सर्वं सर्ववर्णाश्रमोचितम् । अयं तत्र हेतुः । अतोऽधमाधिकारिषु ज्ञानप्रचुराणां यतीनामेवोत्तमत्वाद्युक्तो ज्ञानस्यातिशय इति सिद्धम् ।**

## गुर्वर्थदीपिका

सर्वाश्रमा इति दार्ष्टान्तिकोक्तिरित्यत्र 'यथा ह्येते देवा मुनय एवं सर्वाश्रमाश्च' इति दार्ष्टान्तिकोक्तिरित्यर्थः । वस्तुतस्तु यथा ह्येते देवा मुनय मुन्यादिधर्मवन्तस्तथा एते भूलोकस्थाः सर्ववर्णाः सर्वाश्रमस्थाश्च सर्वं सर्ववर्णाश्रमोचितं कर्म कुर्वन्ति । सर्ववर्णाश्रमधर्माणां प्रथमप्राप्तत्वात्त एव मुख्यतः सर्ववर्णाः सर्वाश्रमाश्चेति भावः ।

## भावबोधः

**दार्ष्टान्तिकोक्तिरिति** ॥ अनेन 'एवं सर्वाश्रमाः' इत्यन्वय इत्युक्तं भवति । सर्वं हीति 'हि'शब्दार्थमाह– **अयं तत्रेति** ॥ तत्र सर्वाश्रमत्वे सर्ववर्णवत्त्वे चेत्यर्थः । अत्राद्ये– यतीनामुत्तमत्वसिद्ध्यर्थं गृहस्थानामुत्तमत्वसाधकतया परोपन्यस्तश्रुतेः सहेतुकं देवतापरत्वोक्तिः। द्वितीये देवानां यतिभ्य उत्तमत्वे सर्ववर्णाश्रमवत्त्वरूपहेतूक्तिरिति सूत्रक्रमः ॥

## भावदीपः

**युक्त्यन्तरेणेति** ॥ न केवलं कृत्स्नगृहस्थयतिधर्मवत्त्वयुक्त्या किं तु सर्वाश्रमधर्मवत्त्वरूपयुक्त्या चैतन्मानुषयतिभ्यो देवानामुत्तमत्वमित्यर्थः । भाष्यं व्याचष्टे ॥ **न देवानामिति** ॥ का युक्तिरनेनोक्तेत्यतो भावमाह ॥ **तथा चेति** ॥ सर्वाश्रमधर्मवत्त्वे सतीत्यर्थः । श्रुतौ यथा ह्येते मुनय एवं सर्ववर्णा इति यथास्थितान्वये सति मुनित्वदृष्टान्तेनान्येषामित्यादिभाष्यायोगः । तस्यान्याश्रमधर्माणामित्यर्थत्वस्य प्राक् टीकायां प्रतीतेः । मुनित्ववर्णत्वयोर्दृष्टान्तदार्ष्टान्तिकत्वायोगाच्चेत्यत एवमित्यस्य सर्वाश्रमा इत्यत्रान्वयमुपेत्याह ॥ **दार्ष्टान्तिकेति** ॥ एवमित्यस्य स्वस्थानेऽप्यन्वयं समुच्चयार्थत्वं चोपत्याह ॥ **नेति** ॥ **तत्रेति** ॥ सर्ववर्णा इत्यत्र सर्वाश्रमा इत्यत्र चेत्यर्थः ॥ अत इति ॥ गृहिभ्यो यतीनामेव चिरकालीनसिद्धिमत्त्वात्कुटुम्ब इति श्रुतेर्देवविषयतया तद्विरोधाभावाच्चेत्यर्थः ।

## अभिनवचन्द्रिका

**कर्माधिकारिभ्य इति ॥** इह तावत् ज्ञानाधिकारिषु मनुष्येषु केचित् बहुतरं कर्म कृत्वा तत्रैवाऽऽग्रहवन्तो ज्ञानमाप्य मुक्ता भवन्ति । एते कर्मयोगिन इत्युच्यन्ते । अपरे पुनः ज्ञान एव आग्रहवन्तः सदा श्रवणादिरताः स्वावसरे किञ्चित्कर्मानुष्ठाय मुक्ता भवन्ति । एते च ज्ञानयोगिन इत्युच्यन्ते । ततश्च कर्माधिकारिभ्यो ज्ञानाधिकारिणां विशेषाभावे ज्ञानस्यातिशयो न स्यात् । ज्ञानस्याल्पत्वे बहुत्वे वा फलस्यैकरूपत्वात् । न हि ज्ञानातिशये फलं नातिशयीत । ज्ञानं च साधनान्तरादतिशयवदिति युक्तम्, नियामकाभावेन वैपरीत्यस्यापि वक्तुं शक्यत्वादिति समर्थनीयमेव तदिति भावः । **द्वेधापि दर्शनमिति ॥** विचित्रसाधनवत्सु समविषमफलदर्शनं सन्देहबीजमित्यर्थः ॥ **तस्येति ॥** वेदोक्तज्योतिष्टोमादिसर्वकर्मस्वधिकारित्वादित्यर्थः ॥ **अन्यत्र तीर्थेभ्य इति ॥** 'तीर्थं शास्त्राध्वरक्षेत्र' इत्यभिधानात् तीर्थेभ्योऽन्यत्र यज्ञेभ्योऽन्यत्राऽहिंसन्नित्यर्थः । ननु न गृहिमोक्षस्याल्पकालसाध्यत्वं युक्तं, तस्य सर्वकर्माधिकारित्वेन विलम्बमन्तरा तदनुष्ठानायोगेन गृहिमोक्षस्य यतिमोक्षादपि चिरकालसाध्यत्वादित्यत आह– **गृहिणामिति ॥** तदाचरणनियमाभावात् न तन्मोक्षः चिरकालसाध्य इत्यर्थः ।

इदमुक्तं भवति । सत्यमस्ति गृहस्थानां बहुकर्माधिकारः, तथापि न सर्वानुष्ठानम् । अल्पानुष्ठानेनैव कृतत्वात् । सर्वकर्माधिकारस्तु स्वेच्छया कस्यचिदनुष्ठानायोपयुज्यते । यथा अनेकभार्यापतिश्चित्रकेतुः प्रत्यहं सर्वभार्योपभोगाधिकृतो नैकस्मिन् दिने ताः सर्वा उपभुङ्क्ते किन्तु स्वेच्छया कतिपयास्ता उपभुज्य प्रशान्तकाम उदास्ते । यथा वा मात्रा पित्रा भ्रात्रा तद्दुहित्रा जामात्रा सहभोगाधिकृतोऽपि बालः, स्वेच्छया मात्रा सह भुक्त्वा, पूर्णोदरो न पित्रादिना सह तदैव भुङ्क्ते । एवं सर्वकर्माधिकृतोऽपि गृही ज्योतिष्टोमादिषु कस्यचिदनुष्ठानेन जातापरोक्षः कृतकृत्यत्वात् न कर्मान्तरमनुतिष्ठतीति त्वरयैव मोक्ष इति । अयं तु तत्र हेतुरिति । सर्ववर्णाश्रमोचितकारित्वं, तत्र सर्ववर्णत्वे, सर्वाश्रमित्वे च, हेतुरित्यर्थः ।

पूर्वपक्षस्तु– मुक्तौ यतिभ्यो ग्रहस्थ एवोत्तमः । तस्य ज्योतिष्ठोमादिसर्वकर्माधिकारित्वात् । सर्वकर्मानुष्ठानं च चिरकालसाध्यम् । चिरकालसाध्य एव हि मोक्ष उत्तमः । किं च । छन्दोगश्रुतौ 'आचार्यकुलाद्वेदमधीत्य' इति ग्रहस्थस्य मोक्षमुक्त्वा, उपसंहारः क्रियते । न च गृहस्थादुत्तमसद्भावे तदनुक्त्वोपसंहारो युज्यते । अतः कर्मिणामेवोत्तमत्वात् न ज्ञानमतिशयितमिति ।

(अभिनवचन्द्रिका)

सिद्धान्तस्तु– मनुष्येषु यतेरेव सर्वापेक्षयोत्तमत्वं न गृहिणः । गृहिमोक्षाद्यतिमोक्षस्य चिरकालसाध्यत्वात् । यद्यपि गृहिणां बहुकर्मसु अधिकारोऽस्ति, तथापि न तैः सर्वाण्यनुष्ठीयन्ते । कतिपयानुष्ठानेनैव अपरोक्षज्ञानसिद्धेः । न चैवं गृहिणोपसंहारविरोधः । तस्य देवताविषयत्वात् । न च देवानामपि कथं यत्युत्तमत्वमिति वाच्यम् । संपूर्णयतिधर्मस्यापि तेषु सद्भावात् । न च देवानां यतित्वाभावः । 'कृत्स्ना ह्येते गृहिणो देवाः, कृत्स्ना ह्येते यतयः' इति श्रुतेः 'यथा ह्येते मुनय एवं सर्ववर्णाः सर्वाश्रमाः' इति श्रुत्या यतित्वदृष्टान्तेन सर्ववर्णाश्रमित्वाभिधानाच्च । अतो धर्माधिकारिषु ज्ञानप्रचुराणां यतीनामेवोत्तमत्वात् युक्तो ज्ञानस्यातिशय इति सिद्धम् ।

## वाक्यार्थमुक्तावली

**युक्त्यन्तरेणेति** ॥ आश्रमद्वयकर्मित्वयुक्त्या देवानां यतिभ्य उत्तमत्वमुक्तम् । कैमुत्य-युक्त्याप्येतमर्थं समर्थयत्सूत्रमित्यर्थः । मुनेर्भावो मौनं यतित्वं तद्वदितराश्रमधर्माणामपि देवानामुप-देशाच्च मौनवदितरेषामपि सत्त्वमित्यावर्त्या सूत्रार्थं स्पष्टयति ॥ **न देवानामिति** ॥ **दार्ष्टान्ति-कोक्तिरिति** ॥ दृष्टान्तमुक्त्वा पुनर्निगमनाय दार्ष्टान्तिकोक्तिरित्यर्थः । वनस्था इत्ययं तु प्रतिज्ञा-रूपमिति भावः ॥ **अयं तत्र हेतुरिति** ॥ सर्वं ह्येत इत्ययं ग्रन्थ । हि यस्मादेते सर्वं सर्ववर्णाश्रमो-चितं कर्म कुर्वन्ति तस्मादेवं यतिदृष्टान्तेन सर्वाश्रमाः इत्यत्र हेतुकथनपर इत्यर्थः । अत्राद्ये यतीनामुत्तमत्त्वसिध्द्यर्थं गृहस्थानामुत्तमत्त्वसाधकपरतया परोपन्यस्तश्रुतेर्देवतापरत्वोक्तिः । देवानामपि यत्त्युत्तमत्त्वं कथमित्यतो गार्हस्थ्यवद्यतिधर्मस्यापि प्रभावोक्तिः । द्वितीये देवानां यत्त्युत्तमत्त्वे हेत्वन्तरोक्तिरिति क्रमः ।

## तत्त्वसुबोधिनी

**दार्ष्टान्तिकोक्तिरिति** ॥ अनेन एवं सर्वाश्रमा इत्यन्वय इत्युक्तं भवति । सर्वं हीति हिशब्दार्थमाह ॥ **अयं तत्रेति** ॥ तत्र सर्वाश्रमत्वे सर्ववर्णत्वे चेत्यर्थः । अत्राद्ये कुटुम्ब इति श्रुतौ देवतापरत्वोक्तिः । द्वितीये देवानां यतित उत्तमत्वे हेतूक्तिरिति सूत्रक्रमः ।

## वाक्यार्थविवरणम्

**एतमर्थमिति** ।। सर्वाश्रमकर्मवत्त्वमित्यर्थः । कर्मित्वं कर्मवत्त्वम् । एवं सर्वाश्रमा इत्यन्वयमभिप्रेत्याह ।। **अयं तत्र हेतुरिति** ।। हि यस्मात् सर्वं सर्ववर्णाश्रमोचितं कर्म कुर्वन्ति, अतः सर्ववर्णाः सर्वाश्रमाः इत्येवमयं सर्ववर्णाश्रमोचितकर्माचारस्तत्र सर्ववर्णत्वे सर्वाश्रमत्वे च हेतुरित्यर्थः । अधिकरणार्थमुपसंहरति ।। **अतोऽधमाधिकारिष्विति** ।। मनुष्योत्तमेष्वेव स्वरूपगृहस्थापेक्षया स्वरूपयतीनामुत्तमत्वादित्यर्थः ।

## वाक्यार्थमञ्जरी

मनेर्भावो मौनं यतित्वं तद्वदितरेषामाश्रमधर्माणां देवा एवेति श्रुतावुपदेशादित्यर्थः । सर्ववर्णा इत्यस्य दार्ष्टान्तिकत्वभ्रमं वारयति ।। **सर्वाश्रमा इति** ।। सर्वं हीति हिशब्दार्थमाह ।। **अयन्तत्रेति** ।। तत्र सर्वाश्रमत्वे सर्ववर्णवत्त्वे चेत्यर्थः ।

**।। इति कृत्स्नभावाधिकरणम् ।। ८ ।।**

## ९. अनाविष्काराधिकरणम्

### ॥ ॐ अनाविष्कुर्वन्नन्वयात् ॐ ॥ ४९ ॥

'एतां विद्यामधीत्य ब्रह्मदर्शी बाव भवति । स एतां मनुष्येषु विब्रूयात् । यथा यथा ह वै ब्रूयात्तथा तथाऽधिको भवति' इति माठरश्रुतौ विद्यादानं श्रूयते । तच्च बहूनां स्वीकरणार्थमाविष्कारेणेति न मन्तव्यम् । अन्वयाद्युक्तेः । आविष्कारेऽयोग्यानामपि स्वीकारप्राप्तिः । तच्च निषिद्धम्—

'मा नः स्तेनेभ्यो ये अभि द्रुहस्पदे निरामिणो रिपवोऽन्नेषु जागृधुः ।
येषां नैतन्नापरं किं च नैकं ब्रह्मणस्पते ब्रूहि तेभ्यः कदाचित् ॥

'अथो(प)शमेनोपरता मनुष्याः ये धर्मिणो ब्रूहि तेभ्यः सदा नः ।
आदेवानामोहते विब्रयो हृदि बृहस्पते न परः साम्नो विदुः' इति
(ऋ.सं.२-२३-१६)

'विद्या ह वै ब्राह्मणमाजगाम गोपाय मां शेवधिष्टेऽहमस्मि ।
अनार्यकायानृजवे शठाय मा स्म ब्रूया ऋजवे ब्रूहि नित्यम्' इति च ॥

### तत्त्वप्रदीपिका

मातरश्रुतौ विद्यादानं कर्तव्यं श्रूयते । तच्चाधिकमधिकफलमुच्यते । यथा यथा बहूनां ब्रूयात्तथा तथाऽधिको भवतीति ह्यर्थः । अतो यथा बहवः स्वीकुर्युः तथोपदेशेन भाव्यमित्याविष्कारेण जनसन्निधावुच्चैः कर्तव्यमिति तु न मन्तव्यम् । अनाविष्कारस्यैव युक्तत्वात् ।

'मा नः स्तेनेभ्यो ये अभिद्रुहस्पदे निरामिणो रिपवोऽन्नेषु जागृधुः ।
येषां नैतन्नापरं किञ्चनैकं ब्रह्मणस्पते ब्रूहि तेभ्यः कदाचित् ॥
अथो शमेनोपरता मनुष्या ये धर्मिणो ब्रूहि तेभ्यः सदा नः ।
आदेवानामोहते विब्रयो हृदि बृहस्पते न परस्साम्नो विदुः'

इत्यृचोऽर्थः श्रीमन्महैतरेयोपनिषद्भाष्योक्तः— 'अभिद्रहस्पदे अभितो द्रोहस्य नित्यनिरतिशय-दुःखस्य अन्धन्तमसो योग्याः ।

(तत्त्वप्रदीपिका)

'ऐकात्म्यं नाम यदिदं केचिद्ब्रूयुरनैपुणाः ।
शास्त्रतत्वमविज्ञाय तथावादबला जनाः ॥
कामक्रोधाभिभूतत्वादहङ्कारवशङ्गताः ।
याथातथ्यमविज्ञाय शास्त्राणां शास्त्रदस्यवः ॥
ब्रह्मस्तेना निरानन्दा अपक्वमनसोऽशिवाः ।
वैगुण्यमेव पश्यन्ति न गुणानि नियुञ्जते ॥
तेषां तमःशरीराणां तम एव परायणम्' इति

मोक्षधर्मे भगवद्वचनादेवंविधा एव स्तेनाः अभिद्रुहस्पदस्थाश्च । रामस्य रमणरूपस्य पूर्णानन्दस्वरूपस्य विष्णोर्जीवस्वरूपतादिज्ञानेन नीचताविदः, अत एव रिपवश्च तस्य ।

'अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् ।
परम्भावमजानन्तो मम भूतमहेश्वरम् ॥
मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः ।
राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिता' ॥

इत्यादिवचनादसुरादयः अन्नेषु जागृधुः भोगमात्रगृध्नवः । येषामेतत्सर्वोत्तमं वासुदेवाख्यं परं ब्रह्म नास्तीति पक्षः । ईशितव्ये विद्यमाने हीश्वरो भवतीति । न चापरं किञ्चित्परमापेक्षया ह्यपरमिति । किं तर्हि किञ्चनैकं किमप्येकमेव वस्त्वस्ति न परमपरञ्चेति तेषां पक्षः ।

'असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।
अपरस्परसम्भूतं किमन्यत्कामहैतुकम् ॥
एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।
प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ।
ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान्सुखी' इत्यादिवचनात् ।

ब्रह्मणस्पते ब्रह्मणो वेदस्य पते वायो 'अथ हे ममासन्यं प्राणमूचुरेष उ एव ब्रह्मणस्पतिर्वाग्धि बृहती' इत्यादिश्रुतेः । एतादृशेभ्यो मा ब्रूहि, शमेन विष्णुनिष्ठया उपसमीपे तस्मिन्नेव रताः साम्नो विष्णोः परं किमपि न विदुः । तदेव देवानां व्रयः सर्वदेवानां वरतमं विष्ण्वाख्यं ब्रह्म हृदा व्योहते वासुदेवादिरूपेण, वरं नियामकं चेतिव्रयः, तेभ्यो ब्रूहि ।

(तत्त्वप्रदीपिका)

'वायुं विद्याः समासाद्य सर्वासाम्पतिमूचिरे ।
स्तेनेभ्यो मैव नो ब्रूहि ब्रूह्यथो वैष्णवेषु च' इत्यैतरेयसंहितायाम् ॥

'सामनाम्ना श्रुतिर्यस्माद्विष्णुमाह ततः प्रियम् ।
तन्नाम विष्णोरिह तु संहितार्थं वदेद्यत' इति च' इति ॥

बृहस्पतिशब्दश्च वायौ प्रसिद्धः । तं प्रस्तुत्य हि श्रुतिराह 'एतमु एव बृहस्पतिं मन्यन्ते वाग्घि बृहस्पतिः, तस्या एष पतिस्तेन' इति ॥

## तत्त्वप्रकाशिका

अत्र भगवत्प्राप्तिसाधनज्ञानस्यातिगोप्यत्वमहिम्नः समर्थनादस्ति शास्त्रादिसङ्गतिः । अन्यथाऽतिशयाभावप्रसङ्गात्समर्थनीयमेतत् । प्रकृतापरोक्षज्ञानसङ्गतं परोक्षज्ञानमत्र विषयः । तत्किमाविष्कारेणोपदेष्टव्यं न वेति सन्देहः । उभयथासम्भवः सन्देह बीजम् । आविष्कारेणेति पूर्वः पक्षः । आविष्कारेणैवोपदेशोऽशेषज्ञानयोग्यानां ज्ञानलाभसम्भवात् बहूनामुपदेशे चोपदेष्टुः फलाधिक्यसिद्धेः । 'यथा यथा ह वै ब्रूयात्तथा तथाऽधिको भवति' इति श्रुतेः । अत आविष्कारेण ज्ञानस्योपदेष्टव्यत्वात्तस्य रहस्यत्वातिशयो न सिध्यतीति । सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ॥ **अनाविष्कुर्वन्निति** ॥ यतः श्रुतौ विद्यादानस्याधिक्यानुसारेण फलप्रदमुच्यतेऽतोऽधिकफलार्थं बहूनां स्वीकरणाय तदाविष्कारेण कार्यमिति न मन्तव्यम् । किं त्वनाविष्कुर्वन्नेवोपदिशेदित्येतत्कुत इत्यतः सौत्रं हेतुमुपादाय व्याचष्टे ॥ **अन्वयादिति** ॥ कासावुपपत्तिरित्यत आह ॥ **आविष्कार इति** ॥ भवेदेतत् यद्याविष्कारेणोपदेशो योग्यानामेव ज्ञानप्राप्तिर्भवेत् । न चैवम् । सभाचत्वरादावुपविश्योपदेशोऽयोग्यानामपि तत्प्रसङ्गादिति भावः । नन्वयोग्यानां ग्रहणप्रसङ्गेऽपि कुतोऽनाविष्कारेण वाच्यमित्यत आह ॥ **तच्चेति** ॥ तच्चायोग्येभ्यः कथनम् । एतद्वायुं प्रति विद्यादेवतानां प्रार्थनम् । येऽभितो द्रोहास्पदेऽन्धे तमसि स्थातुं योग्या रामविरुद्धास्तत एव तस्य रिपवो भोगेष्वेवाकाङ्क्षावन्तो येषामेतत्परं ब्रह्म तदवरं जगच्च नास्ति । किं तु किञ्चन एकं निर्गुणं ब्रह्म अनिर्वाच्यं च जगत्तेभ्यः स्तेनेभ्योऽस्मान्मा ब्रूहि । किं नाम ये विष्णुनिष्ठतया तस्मिन्नेव रता ये च देवानां वरत्वे सति नियामकं ब्रह्म हृदि वहन्ति ततः परं च न विदुस्तेभ्यो ब्रूहीत्यर्थः । ब्राह्मणं वायुम् । शेवधिर्निधिः । तितिक्षवः कारुणिका इत्याद्यार्यलक्षणरहितोऽनार्यकः । ऋजव इत्यार्यकाद्युपलक्षणम् ।

(तत्त्वप्रकाशिका)

**अविपरीतचित्तादिप्रवृत्तिमानृजुः । अतोऽनाविष्कारेण ज्ञानस्योपदेष्टव्यत्वाद्युक्तस्तस्यातिशय इति सिद्धम् ।**

## गुर्वर्थदीपिका

अन्यथातिशयाभावप्रसङ्गादित्यत्र अतिशयितवस्तूनां रत्नादीनां लोके गोपनदर्शनादिति भावः । रहस्यत्वातिशय इत्यत्र रहस्यत्वेनेतरविद्याभ्योऽतिशयो यो भवदभिमतः तदसिद्धेरित्यर्थः । द्रोहास्पद इति वदता अभितः द्रुहः द्रोहः पदे स्थान इति पदविभागस्सूचितः । भोगेष्वाकाङ्क्षावन्त इति वदता ये अन्नेषु अन्नादिभोगेषु 'गृध आकाङ्क्षायाम्' इति धातोः जगृधुराकाङ्क्षां चक्रुरित्यर्थः सूचितो भवति । विष्णुनिष्ठतयेति वदता 'शमो मन्निष्ठता बुद्धेः' इति वाक्यं सूचितम् । 'मानस्तेनेभ्यो ये अभिद्रुहस्पदे निरामिणो रिपवोऽन्नेषु जागृधुः' इति पूर्वार्धस्य 'आ देवानामोहते विव्रयो हृदि बृहस्पते न परस्साम्नो विदुः' इत्युत्तरार्धस्य च मध्ये 'येषां नैतन्नापरं किञ्चनैकं ब्रह्मणस्पते ब्रूहि तेभ्यः कदाचित् । अथो शमेनोपरता मनुष्या ये धर्मिणो ब्रूहि तेभ्यस्सदा न' इति ऋक्परिशिष्टखिलवेदवाक्यम् । अत उभयोरेकवाक्यतया योजना । अन्यथा क्रियाभावेन वाक्यमपरिपूर्णं स्यात् । 'वृञ् वरणे' इति धातोः 'या प्रापणे' इति धातोश्चासुनुप्रत्यये कृते व्रय इति पदसिद्धिमभिप्रेत्योक्तं देवानां वरत्वे सति नियामकमिति विविशेषेणेति शेषः । एवं 'पृ पालने' इति धातोः कर्त्रर्थे असुन्प्रत्यये कृते ऋकारस्य ऩाकाराख्यगुणादेशे तस्य च 'उरण् रपर' इति सूत्रात् रपरत्वे च कृते परस् इति सकारान्तपरःशब्दसिद्धिरित्यस्य फलितमाह ॥ **परं चेति** ॥

## भावबोधः

**अतिगोप्यत्वमहिम्न इति** ॥ पूर्वाधिकरणे कर्मणा ज्ञानस्यातिशयाभिप्रायेण कर्माधिकारिभ्यो गृहस्थेभ्यो ज्ञानाधिकारिणां यतीनामुत्तमत्वमुक्तम् । तत्र यदि ज्ञानमुत्तमं तर्हि तद्दानप्रयुक्तफलाधिक्यार्थमाविष्कारेणोपदेशः स्यादित्याक्षेपोत्थानादनन्तरसङ्गतिरिति भावः । तत्किमित्यादि । अत्र परोक्षज्ञानं किमाविष्कारेणोपदेष्टव्यमुतानाविष्कारेणेति चिन्ता । तदर्थमाविष्कारेणोपदेशोऽपि किं बह्वनुग्रहो युज्यत उत न युज्यत इति । तदर्थमयोग्योपदेश अनर्थहेतुर्न भवत्युत भवतीति । तदर्थमयोग्योपदेशस्यानर्थहेतुत्वे प्रमाणं नास्त्युतास्तीति । तच्चाविष्कारेणेति भाष्यं, आस्थानचत्वरादिषु

(भावबोधः)

स्थित्वैव प्रकथनीयमिति न्यायविवरणं च मनसि निधाय पूर्वपक्षमाह– **आविष्कारेणेतीति** ॥ बहूनां स्वीकारार्थमिति, भाष्यमाविष्कारेण कथनादशेषतोऽपि योग्या ज्ञानिनो भवन्तीति न्यायविवरणानुसारेण व्याचष्टे– **आविष्कारेणेति** ॥ न ह्येवं त्वरमाणे सिद्धिर्भवतीति न्यायविवरणं मनसि निधायाह– **भवेदिति** ॥ सभाचत्वरादाविति । आविष्कारे अयोग्यानामपीति भाष्यव्याख्यानपरेणानेन अयोग्यानामपि श्रवणप्रसङ्गादिति न्यायविवरणमपि व्याख्यातं भवति । 'सा च' इति वक्तव्ये 'तच्च' इति कथमुक्तमित्यत आह– **अयोग्येभ्यः कथनमिति** ॥ एतद्वायुं प्रतीति । 'ब्रह्मणस्पते' इति, वायुवाचकब्रह्मणस्पतिशब्देन सम्बोधनादिति भावः ॥ **विद्यादेवतानां प्रार्थनमिति** ॥ 'नो मा ब्रूहि तेभ्यः सदा नः' इति श्रवणादिति भावः ॥

'रिपवो ये तु रामस्य विमुखत्वान्निरामिणः ।
अभिद्रोहास्पदे नित्यमन्धे तमसि ते स्थिताः ॥'

इत्यनुव्याख्यानं मनसि निधाय श्रुत्यर्थमाह– **येऽभित इत्यादिना** ॥ यद्यप्यत्र भाष्योदाहृतऋग्द्वये पूर्वोत्तरार्धयोरेव पाठः सांव्यावहारिकः तथापि 'मानस्तेनेति पूर्वासु ह्यूनता दृश्यतेऽर्थत' इति ऋग्भाष्योक्तरीत्या मध्यगतैकाऋकूपठ्यमानावान्तरवेदे अन्तर्हितेति ज्ञातव्यम् । अभिद्रुहस्पदे अभितो द्रोहस्य नित्यनिरतिशयदुःखान्धंतमसो योग्या इत्यैतरेयभाष्यं मनसि निधायाह– **येऽभितो द्रोहास्पदेऽन्धेतमसि स्थातुं योग्या इति** ॥ रामस्य रमणरूपस्य पूर्णानन्दस्वरूपस्य विष्णोर्जीवस्वरूपतादिज्ञानेन नीचताविद इति ऐतरेयभाष्यं मनसि निधाय 'निरामिणः' इत्यस्य तात्पर्यमाह– **रामविरुद्धा इति** ॥ त एव रिपवश्च तस्येति तद्भाष्यं मनसि निधायाह– **तत एव तस्य रिपव इति** ॥ अन्वेषु जागृधुः । भोगमात्रगृध्रव इति तद्भाष्यं मनसि निधायाह– **भोगेष्वेवाकाङ्क्षावन्त इति** ॥ तेषामेतत्सर्वोत्तमं वासुदेवाख्यं परं ब्रह्म नास्तीति पक्षः । ईशितव्ये विद्यमाने हीश्वरो भवति । न चापरं किञ्चित् । परमापेक्षया ह्यपरमिति । किं तर्हि किञ्चैकं किमप्येकं वस्त्विति । न च परमपरं चेति तेषां पक्ष इत्यैतरेयभाष्यं मनसि निधायाह– **येषामेतत् परं ब्रह्मेत्यादि** ॥ **स्तेनेभ्य इति** ॥ ब्रह्मस्तेनेभ्य इत्यर्थः । 'ब्रह्मस्तेना निरानन्दाः' इत्युक्तेरिति भावः । शमेन विष्णुनिष्ठया तस्मिन्नेव रता इति तद्भाष्यं मनसि निधायाह– **ये विष्णुनिष्ठया तस्मिन्नेव रता इति** ॥ तदेव देवानां व्रयः सर्वदेवानां परतमं विष्ण्वाख्यं ब्रह्म हृदा व्योहते वरं नियामकं चेति

(भावबोधः)
व्रय इति तद्भाष्यं मनसि निधायाह– **देवानां वरत्वे सति नियामकं ब्रह्मेति** ॥ वरं 'व्रम्' वकारस्थाकारलोपात् । यातेः कप्रत्यये 'यं' नियामकं 'व्रं' च तत् 'यं' चेति विग्रहः । छान्दसो लिङ्गव्यत्यास इति भावः । साम्नो विष्णोः परं किमपि न विदुरिति तद्भाष्यं मनसि निधायाह– **ततः परं च न विदुरिति** ॥

## भावदीपः

**ज्ञानस्येति** ॥ परोक्षज्ञानस्येत्यर्थः । तस्याप्यपरोक्षद्वारा ब्रह्मप्राप्तिहेतुत्वाद्विद्यैव त्वित्युक्तेरिति भावः ॥ **अतिगोप्यत्वेति** ॥ आविष्कारे फलाधिक्यमिति शङ्कानिरासेनेति भावः । पूर्वं बहुकालीनसिद्धिमत्वेन फलाधिक्योक्तौ तर्हि बहुपुरुषसम्बन्ध्युपदेशकर्तुरपि फलाधिक्यशङ्कनात्पूर्व-सङ्गतिरिति भावः । परोक्षज्ञानस्यात्र पादेऽप्रकृतत्वाद्विद्यामधीत्य ब्रह्मदर्शीति भाष्यसूचितमाह ॥ **प्रकृतेति** ॥ भाष्योक्तप्रतिज्ञामाह ॥ **आविष्कारेणेति** ॥ तच्चेत्यादिभाष्यलब्धार्थमाह ॥ **आविष्कारेणोपदेश इति** ॥ अशेषतोऽपि योग्या ज्ञानिनो भवन्तीत्यन्यत्रोक्त्यनुरोधेन बहूनामित्यस्यार्थमाह ॥ **अशेषज्ञानयोग्यानामिति** ॥ उक्तहेतोरप्रयोजकत्वनिरासाय यथायथेत्यादि-श्रुतिशेषभावमाह ॥ **बहूनामिति** ॥ एतेन बहूनां योग्यफलानां स्वीकारार्थमिति भाष्यार्थो दर्शितः । न्यायविवरणे चाशेषतो अशेषाः योग्याः पुरुषार्थाः ज्ञानिनो ज्ञानवतः उपदेष्टुरिति यावत् । भवन्तीत्यर्थ इति भावः ॥ **अत इति** ॥ फलाधिक्यभावादित्यर्थः । भाष्यं योजयति ॥ **यत इति** ॥ कथं तर्हि विद्यादानमित्यतः सौत्रपदमेवानुकरोति ॥ **किं त्वनाविष्कुर्वन्नेवेति** ॥ युक्तिशब्दार्थानु-वादः उपपत्तिरिति । नन्वेतावता प्रागुक्ताविष्कारसाधकयुक्तेः का गतिरित्यतः तर्कपराहतत्वादा-भासतैवेति भावेन प्रागुक्तं तावदनुवदति ॥ **भवेदेतदिति** ॥ फलाधिक्यमित्यर्थः । न ह्येवं त्वरमाणे सिद्धिर्भवतीत्यन्यत्रोक्तवाक्यं हृदि कृत्वाऽऽह ॥ **न चैवमिति** ॥ अयोग्यानामपि श्रवणप्रसङ्गा-दित्यन्यत्रोक्त्यनुरोधेन भाष्यं हेतुत्वेन व्याचष्टे ॥ **सभेति** ॥ नपुंसकोपपत्त्यर्थमाह ॥ **अयोग्येभ्यः कथनमिति** ॥ एतेन सभाचत्वरादौ स्थित्वोपदेशोऽप्ययोग्यानां सर्वथापि तु त एवेत्यत्रोक्तदिशा ज्ञानप्राप्तिरेव न सेत्स्यतीति प्रत्युक्तम् । तेभ्यः कथनस्यैव निन्दितत्वात् । कथं तर्हि विरिंचे-र्विरोचनायोपदेशः । विधिर्वा धारणवदित्यत्रोक्तदिशा विरिञ्चेरप्रत्यवायात् । संमुग्धतयोपदेशाच्च । सभादौ स्थित्वा विविच्योपदेशो अयोग्यस्यापि व्युत्पन्नस्य ज्ञानोदयावश्यंभावाच्च । अत एव सूत्रे

(भावदीपः)

अनाविष्कारपदप्रयोग इति भावः । भाष्योक्तऋग्द्वस्य प्रकृतोपयोगसूचनाय न इत्याद्यस्मच्छब्दादेरर्थमाह ॥ **एतदिति** ॥ वक्ष्यमाणमित्यर्थः । विद्या ह वै ब्राह्मणमाजगामेति श्रुतेः । 'वायुं विद्याः समासाद्य सर्वासां पतिमूचिर' इति स्मृतेरिति भावः । सप्तमेऽध्याये ऐतरेयभाष्योक्तदिशा श्रुत्यर्थमाह ॥ **येऽभित इत्यादिना** ॥ **रामेति** ॥ रमणरूपस्य पूर्णानन्दस्य विष्णोर्जीवस्वरूपताज्ञानेन नीचताविद इत्यर्थः । रिपवो ये तु रामस्य विमुखत्वान्निरामिण इत्यनुभाष्योक्तेश्चेति भावः । अन्नेषु जागृधुः । भोगमात्राकाङ्क्षावन्तः परं सर्वोत्कृष्टं वासुदेवाख्यमित्यर्थः । ब्रह्मणस्पते वायो इत्युक्तप्रायम् । वायुं प्रति प्रार्थनमित्युक्तत्वादिति भावः । व्यवहितपदानामन्वयेनार्थमाह ॥ **तेभ्यः स्तेनेभ्य इति** ॥ नो अस्मान् । तर्ह्येकवचने वैयर्थ्यं वः किं नेति भावेन पृच्छति ॥ **किं नामेति** ॥ प्रसिद्धत्वाद्भाष्येऽपठितस्यापि आदेवानामोहते विव्रयो हृदि बृहस्पते न परः साम्नो विदुरित्युत्तरार्धस्यार्थमाह ॥ **ये चेति** ॥ विव्रय इत्यस्यार्थो वरत्व इत्यादि । व्योहते वहन्तीत्यर्थः । साम्न इत्यस्य तत इति । ब्रह्मत इत्यर्थः । अत्र ऋग्द्वये मध्यतनार्धद्वयस्येदानीं पठ्यमानशाखायामपाठे बीजं मानस्तेनेति पूर्वासु ह्यूनता दृश्यतेऽर्थत इत्यादिऋभाष्यतट्टीकयोर्व्यक्तम् ॥ विद्येतिमन्त्रे पदानामर्थमाह ॥ **ब्राह्मणमिति** ॥ **तितिक्षव इति** ॥

> तितिक्षवः कारुणिकाः सुहृदः सर्वदेहिनाम् ।
> अजातशत्रवः शान्ताः साधवः साधुभूषणाः ।
> मय्यनन्येन भावेन भक्तिं कुर्वन्ति ये दृढाम् ।

मत्कृते त्यक्तकर्माणस्त्यक्तस्वजनबान्धवाः । मदाश्रयाः कथा दृष्टा इत्यादितृतीयस्कन्धषड्विंशाध्यायोक्तसाधुजनलक्षणहीना इत्यर्थः ॥ **अत इति** ॥ आविष्कारेणोपदेशेऽयोग्यानामपि ग्रहणप्रसङ्गादित्यर्थः ।

## अभिनवचन्द्रिका

**अत्र भगवत्प्राप्तीति** ॥ भगवत्प्राप्तिसाधनपरोक्षज्ञानजनकविद्याया अपरोक्षज्ञानातिशयसिद्धये अतिगोप्यत्ववर्णनादित्यर्थः ॥ **परोक्षज्ञानमिति** ॥ परोक्षं वस्तु ज्ञायतेऽनेनेति व्युत्पत्त्या परोक्षज्ञानशब्दः परोक्षज्ञानहेतुवेदविद्यावचन इति बोध्यम् ॥ **अत इति** ॥ विद्याया आविष्कारेणोपदेष्टव्यत्वात् परोक्षापरोक्षज्ञानयो रहस्यत्वातिशयो न सिध्येदित्यर्थः । 'मानस्तेनेभ्य' इति

**(अभिनवचन्द्रिका)**

मन्त्रार्थमाह– **येऽभित इति ॥** यद्यपि अत्र भाष्योदाहृतद्वये पूर्वोत्तरार्धयोरेव पाठः सांव्यवहारिकः, तथापि 'मानस्तेनेति पूर्वासु ह्यूनता दृश्यतेऽर्थतः' इति ऋग्भाष्योक्तरीत्या मध्यगतैका ऋक् पठ्यमानाऽवान्तरवेदेऽन्तर्हितेति ज्ञातव्यम् ।

पूर्वपक्षस्तु– अपरोक्षज्ञानहेतुपरोक्षज्ञानसिद्धये आविष्कारेणैव वेदविद्या उपदेष्टव्या । सभाचत्वरादावुपविश्य विद्योपदेशे अशेषज्ञानयोग्यानां ज्ञानलाभसिद्धेः । आवश्यकश्च बहूपदेशः । **'यथा यथा ह वै ब्रूयात् तथा तथाऽधिको भवतीति'** श्रुतेः । अत आविष्कारेणोपदेष्टव्यत्वात् तस्य रहस्यत्वातिशयो न सिध्येदित्यर्थः ।

सिद्धान्तस्तु– अनाविष्कारेण विद्योपदेशः कार्यः । आविष्कारेणोपदेशे अयोग्यानामपि ज्ञानप्रसङ्गात् । न च तदिष्टम् । **'विद्या ह वै ब्राह्मणमाजगाम'** इति तन्निषेधात् । अतोऽनाविष्कारेण ज्ञानस्योपदेष्टव्यत्वात् युक्तस्तस्यातिशय इति सिद्धम् ।

## वाक्यार्थमुक्तावली

**अन्यथाऽतिशयाभावप्रसङ्गादिति ॥** कर्मवदाप्यते इति पूर्वाधिकरणे कर्मप्रचुरेभ्यो गृहस्थेभ्यो ज्ञानप्रचुराणां यतीनामुत्तमत्वोक्त्योपपादितातिशयाभावप्रसङ्ग इत्यर्थः । यद्यप्येवमनन्तरसङ्गतिस्सर्वैरप्यधिकरणैः शक्यते वक्तुं तथापि पूर्वेऽधिकरणे शुचौ देशे स्वाध्यायमधीयानः सभाचत्वाराद्यशुचिदेशपरित्यागेन विविक्तदेशेऽध्यापनस्योक्तत्वादिह तदाक्षेपेण समाधानाय विशिष्य पूर्वानुबन्ध इति मन्तव्यम् ॥ **तत्किमिति ॥** ज्ञानमाविष्कारेणोपदेष्टव्यमुतानाविष्कारेणेति चिन्ता । तदर्थं आविष्कारेणोपदेशे ज्ञानयोग्यानामेव ज्ञानमुपदेष्टुश्च बहूपदेशेन फलाधिक्यं च सिद्ध्यत्युत न सिद्ध्यतीति । अत्राप्यापूर्णविशेषयोग्यतेत्युक्तमेव न्यायं प्रदर्शयन् बहूनां स्वीकारार्थमाविष्कारेणेति भाष्यं व्याचष्टे ॥ **आविष्कारेणेति ॥** आस्थानचत्वरादिषु स्थित्वोच्चैश्चोपदेश इत्यर्थः । तदुक्तं न्यायविवरणे न चाविष्कारेण कथनादशेषतोऽपि योग्या ज्ञानिनो भवन्तीत्यास्थानचत्वरादिषु स्थित्वैव प्रकथनीयमिति । तत्त्वप्रदीपे च आविष्कारेण जनसन्निधावुच्चैश्च कर्तव्यमिति । न चैवं श्रोत्रप्रयोजनसद्भावादाविष्कारः उपदेष्टुश्च तत्सद्भावादिति भावेन यथा यथा ह वै ब्रूयात्तथा तथाऽधिको भवतीति श्रूयते । अत आधिक्याय बहूनां स्वीकारार्थमाविष्कारेणेति भाष्यं व्याचष्टे

(वाक्यार्थमुक्तावली)

॥ **बहूनामिति** ॥ भाष्ये तच्चेति चशब्दो यत इत्यर्थ इति भावेन व्याचष्टे ॥ **यत इति** ॥ श्रुतौ विद्यादानं श्रूयते इत्येतदध्याहारपूर्वं व्याचष्टे ॥ **श्रुताविति** ॥ अधिकफलार्थतामित्यध्याहारः । सूत्रे उपदिशेदिति शेषः । अनाविष्कुर्वन्नुपदिशेदिति कुतः, अन्यथा उपपत्तेः कासावुपपत्तिरित्यतोऽन्वयादित्युक्तम् । अयोग्यानामपि ज्ञानान्वयप्रसङ्गादित्यर्थः । तस्माद्विचार्य योग्यानामत्वरयैव कथितत्वात्स्थितस्य सिद्धिर्भवतीति ज्ञानाविष्कारेणोपदेष्टव्यमिति भावः । एतेनैवात्वरयापि सिद्धिरिति न्यायोऽपि दर्शितः । तच्चायोग्येभ्यः कथनमिति प्राप्तेः कथितत्वेऽपि श्रुतौ मा ब्रूहीति कथननिषेधात्प्रापणलक्षणं कथनमेव परामृश्यत इति भावः । वायुं विद्यास्समासाद्य सर्वासां पतिमूचिरे । स्तेनेभ्यो मैव नो ब्रूहि ब्रूह्यथो वैष्णवेषु चेति प्रमाणं मनसि निधाय ब्रह्मणस्पत इति केन कः प्रार्थ्यत इत्यत आह ॥ **एतद्वायुमिति** ॥ ब्रह्मणो वेदस्थपते वायो सम्बुध्यर्थ इति भावः । प्राणमूचिरे एव उ एव ब्रह्मणस्पतिरिति श्रुतेः ॥ **अभितो द्रोहस्येति** ॥ विष्णुवैष्णवद्रोहफलस्य नित्यनिरतिशयदुःखस्येत्यर्थः ॥ **रामविरुद्धा इति** ॥ रमणरूपत्वाद्रामो भगवान् स्वामीति ज्ञानमस्तीति रामिणो भगवदुत्तमत्वज्ञानिः । निर् इत्युपसर्गस्य निषेधार्थत्वादुत्तमत्त्वज्ञानिनो न भवन्ति प्रत्युत तन्नीचतायाविरुद्धत्वात्तद्विरोधिन इति यावत् । उक्तं चैतरेयभाष्ये रामस्य रमणरूपस्य विष्णोर्जीवस्वरूपतादिज्ञानेन नीचतादिविदः ॥ **अत एव रिपवस्तस्येति** ॥ किञ्च किमपि यत्किञ्चिन्निर्गुणमिति यावत् । **नैकं** एकविधं न । सदसद्विलक्षणमनिर्वाच्यमिति यावत् । अथेत्यस्यार्थः किंनामेति । उपशमेनेत्यस्यार्थो विष्णुनिष्ठयेति । उत्कृष्टत्वादुशब्दवाच्यो हरिः, शमस्तन्निष्ठा बुद्धिरिति यावत् । व्रय इत्यस्यार्थो वरत्वे सति नियामकमिति । आ ओहत इत्यस्य तात्पर्यं वहतीति । साम्नः सामत्वात्सामनाम्नः, विष्णोरित्यस्यार्थस्तत इति व्याप्त इति यावत् । पर इत्यस्य प्रतिपदं वरमिति । अत्र बृहस्पतिपदेन वायुरुच्यते बृहती तस्या एष पतिरिति श्रुतेः । यद्यपि मानस्तेनेभ्य आ देवानामोहत इत्यर्धर्चयोर्मध्ये एषां नैतन्नापरामिति ऋगवान्तरवेदेऽन्तर्हिता तथापि भगवताऽर्थसङ्गत्यर्थं मूलवेदपाठानुसारेण पठितेति ज्ञेयम् । तदुक्तं ऋग्भाष्ये । मानस्तेनेति पूर्वासु ह्यूनता दृश्यतेऽर्थत इति । विद्या ह वेत्यादिश्रुत्यन्तरम् । ननु तितिक्षाकारुण्यविरहिताय विद्यां न ब्रूहीत्युक्त्वा कस्मै विद्योपदेष्टव्येत्याकाङ्क्षायां तितिक्षादिगुणयुक्तायेति वक्तव्ये ऋजव इति ऋजुत्वमात्रमुपदेशप्रयोजकतया कथमुच्यत इत्यत आह ॥ **ऋजव इतीति** ॥

## तत्त्वसुबोधिनी

**अतिगौप्यत्वमहिम्न इति ॥** पूर्वाधिकरणे कर्मणो ज्ञानस्यातिशयाभिप्रायेण कर्माधिकारिभ्यो गृहस्थेभ्यो ज्ञानाधिकारिणां यतीनामुत्तमत्वमुक्तम् । तत्र यदि ज्ञानमुत्तमं तर्हि तद्दानप्रयुक्त-फलाद्यर्थस्याविष्कारेण उपदेशः स्यादित्याक्षेपोत्थानादनन्तरसङ्गतिरिति भावः । अस्तु ज्ञानलाभः ततः किमत आह ॥ **बहूनामिति ॥** सा चेति वक्तव्ये तच्चेति कथमुक्तमित्यत आह ॥ **अयोग्येभ्यः कथनमिति ॥** एतद्वायुं प्रतीति । ब्रह्मणस्पत इति वायुवाचकस्य ब्रह्मणस्पते इति सम्बोधनादिति भावः ॥ **विद्यादेवतानां प्रार्थनमिति ॥** 'नमो ब्रूहि तेभ्यः सदा न' इति श्रवणादिति भावः । अप्रतीतार्थत्वात् श्रुत्यर्थमाह ॥ **येऽभित इत्यादिना ॥** यद्यप्यत्र भाष्यो-दाहृतग्रन्थद्वये पूर्वोत्तरार्धद्वयोरेव पाठः सांव्यावहारिकः । तथापि मानस्तेनेति पूर्वासु ह्यूनता दृश्यतेऽर्थतः इत्युक्तम् । भाष्योक्तरीत्या मध्यमे एका ऋक् पठ्यमाना चान्तवेदेऽन्तर्हिते विज्ञातव्यम्। अभितो द्रुहस्पदे अभितो द्रोहस्य नित्यनिरतिशयदुखःस्यान्धतमसो योग्या इति ऐतरेयभाष्यं मनसि निधायाह ॥ **योऽभितो द्रोहास्पद इति ॥** रामस्य रमणरूपस्य पूर्णानन्दस्य विष्णोः जीवस्वरूपतादिज्ञानेन नीचताविद इत्यैतरेयभाष्यं मनसि निधायाह ॥ **रामविरुद्धा इति ॥** अन्नेषु जागृधुरिति भोगमात्रगृद्धव इति भाष्यं मनसि निधायाह ॥ **भोगेष्विति ॥** येषामेतत्सर्वोत्तमं ब्रह्म नास्तीति पक्षः ईशितव्ये विद्यमाने हीश्वरो भवति न चापरं किं चित्परमापेक्षया परमिति किं तर्हि किं च नैकं किमप्येकं वास्तीत्यैतरेयभाष्यं मनिसि निधायाह ॥ **ऐषामेतदिति स्तेनेभ्य इति ॥** ब्रह्मस्तेनेभ्य इत्यर्थः । ब्रह्मस्तेना इत्युक्तेरिति भावः । देवानां त्रयः ब्रह्महृदा व्योहते वरं नियामकं चेत्यर्थमनुसन्धायाह ॥ **देवानामिति ॥** वरं त्रकारस्याकारलोपात् । यातेः कप्रत्यये यमयति तत् यमिति यं नियामकं त्रंच तद्यं चेति विग्रहः । छान्दसो लिङ्गव्यत्यास इति भावः । साम्नो विष्णोः । परं न किमपि विदुरित्यर्थमभिप्रेत्याह ॥ **ततः परं न विदुरिति ॥**

## वाक्यार्थविवरणम्

आविष्कारेणेत्यत्र उपदेष्टव्यमिति वर्तते । अशेषाश्च ते ज्ञानयोग्याश्च तेषाम् अशेषज्ञान-योग्यानाम् । योग्यानामेव ॥ **ग्रहणेति ॥** ज्ञानेत्यर्थः । अत्र 'मानस्तेनेभ्यः' 'आ देवानाम्' इति । एतयोर्मध्ये 'येषां नैतत्' 'अथोपशमेन' इति अर्धर्चद्वयमन्तरितं सर्वज्ञाचार्यैः पठितम् । मानस्तेनेति

(वाक्यार्थविवरणम्)
पूर्वासु न्यूनता दृश्यते अर्थत इति ऋग्भाष्यवचनादित्यपि ज्ञातव्यम् । एतत्सर्वोत्तमं वासुदेवाख्यं परं ब्रह्म नास्तीत्यर्थः । कुत इत्यतः ईशितव्ये विद्यमान एवेश्वरो भवति । अतस्तदवरं जगच्च नास्तीत्यर्थः । किं तर्हि किञ्च नैकं वस्त्वस्ति । न च परमपरं च' इति ऐतरेयभाष्यं मनसि निधायाह ॥ **किन्त्वित्यादि** ॥ स्तेनेभ्यः ब्रह्मस्तेनेभ्यः । ओहते व्योहते इत्यस्य तात्पर्यं वदन्तीति । धारयन्ति ध्यायन्तीति यावदित्यर्थः ॥ **निधिरिति** ॥ सुखनिधिरित्यर्थः ।

## वाक्यार्थमञ्जरी

**अधिकः** अधिकफलवान् ॥ ॐ अनाविष्कुर्वन्नन्वयात् ॐ ॥ अनाविष्कुर्वन् आविष्कारं प्राकट्यमकुर्वन्नेवोपदिशेत् कुतः अन्वयात् अन्यथाऽनर्थप्राप्तिरूपयुक्त्येत्यर्थः । पूर्वभाष्यं व्याकुर्वन्नेवोत्तरभाष्यमवतारयति ॥ **यत इति** ॥ सा चेति वक्तव्ये तच्चेति कथमुक्तमित्यत आह ॥ **अयोग्येभ्य इति** ॥ अन्धे तमसीति विशेष्याध्याहारः स्थातुं योग्या इति योग्यताया लाभः । निरामिण इत्यस्य तात्पर्यं रामविरुद्धा इति रामस्य रमणरूपस्य हरेर्जीवतादात्म्यरूपेण ज्ञाने न नीचताविद इत्यर्थः ॥ **आकाङ्क्षावन्त इति** ॥ 'गृधु आकाङ्क्षायाम्' इति धातोरिति भावः ॥ **स्तेनेभ्य इति** ॥ ब्रह्मस्तेनेभ्य इत्यर्थः । विव्रय इत्यस्यार्थो वरत्वे सति नियामक इति, वरत्वात् व्रकारस्याकारलोपो यातेः कप्रत्यये यं नियामकं व्रंच तद्यं चेति विग्रहः । लिङ्गव्यत्ययश्छान्दस इति भावः । ओहत इत्यस्यार्थो वहन्तीति, साम्न इत्यस्य तत इति विष्णोरित्यर्थः । तितिक्षवः द्वन्द्वसहिष्णवः कारुणिकाः दयालवः ।

॥ इति अनाविष्काराधिकरणम् ॥ ९ ॥

## १०. ऐहिकाधिकरणम्

### सूत्रभाष्यम्

**॥ ॐ ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॐ ॥ ५० ॥**

'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः'(बृ.उ.४-४-५) इति दर्शनार्थं श्रवणादि विधीयते । तच्च दर्शनमैहिकमेव प्रारब्धप्रतिवन्धाभावे ।

'श्रुत्वाऽऽत्मानं मतिपूर्वं ह्युपास्य इहैव दृष्टिं परमस्य विन्देत् ।
यद्यारब्धं कर्म निबन्धकं स्यात्प्रेत्यैव पश्येद्योगमेवान्ववेक्ष्या' इति सौपर्णश्रुतौ तद्दर्शनात् ।

'अनादिजन्मसम्बद्धं(न्धं) निर्भेत्तुं पापपञ्जरम् ।
यावत्या सेवया शक्यं तावत्कार्यं न संशयः ॥
यावद्दूरे स्थितो गम्यात्तावद्गन्तव्यमेव हि ।
इह जन्मान्तरे वाऽपि तावत्यैव तु दर्शनम् ॥
श्रवणं मननं चैव निधिध्यासनमेव च ।
परे गुरौ च या भक्तिः परिचर्यादिकं हरेः ॥
एषा सेवेति सम्प्रोक्ता यथा तद्दर्शनं भवेत्' इति बृहत्संहितायाम् ॥

### तत्त्वप्रदीपिका

एवमुक्तसामर्थ्यं भगवद्दर्शनमैहिकफलं वदिष्यंस्तत्स्वयं च श्रवणादेः फलं सदैहिकमेवेति साधयति– ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥ अमृतत्वकामया मैत्रेय्या विषयव्यावृत्तचित्तया परिपृष्टः परितुष्टो याज्ञवल्क्यस्तां प्रति 'आत्मा वा अरे द्रष्टव्य' इत्याह । अमृतत्वमिष्यते चेद्भवत्या परमात्मा द्रष्टव्य इत्यर्थः । दर्शनं केन स्यादित्यकाङ्क्षायां तदर्थं श्रवणादि विधत्त श्रोतव्य इत्यादिना । तच्च दृष्टफलं प्रारब्धकर्मणोऽप्रतिबन्धकत्वे । उक्तार्थे प्रमाणमाह– **'श्रुत्वे'त्यादि** ॥

'ज्ञानं तु योग उद्दिष्टं युज्यतेऽनेन यत्सुखम् ।
क्वचिद्योग उपायः स्यात्क्वचिच्चित्तनिरोधनम्' इति दत्तात्रेययोगे ॥

## तत्त्वप्रकाशिका

अत्रेश्वरप्राप्तिसाधनज्ञानस्य प्रतिबन्धाभावे साधनसम्पत्तिजन्मन्येवोदयसमर्थनादस्ति शास्त्रादिसङ्गतिः । अन्यथा कदापि तदनुदयप्रसङ्गादेतत्समर्थनीयम् । प्रकृतं ज्ञानमेव विषयः । किं साधनसम्पूर्तिजन्मन्येव भवति किं वा जन्मान्तर इति सन्देहः । कृष्यादौ यागादौ चोभयथादर्शनं सन्देहबीजम् । साधनसम्पूर्तिजन्मन्येव दर्शनं भवतीति पूर्वः पक्षः । साधनसम्पूर्तावपि ज्ञानानुदये कारणाभावात् । न च स्वर्गादिवदुपपत्तिः । तस्यैतच्छरीरेण भोगायोगात्तत्पातानन्तरं प्राप्त्युपपत्तेः । न चात्र तादृशं कारणमस्ति । अतो ज्ञानस्यैहिकत्वेन प्राप्तत्वात्तदभावाच्च तदनुदय एवेति । सिद्धान्तयत्सूत्रं पठित्वा व्याचष्टे ॥ **ऐहिकमिति** ॥ श्रुतौ यद्ब्रह्मदर्शनार्थं यच्छ्रवणादि विधीयते तच्च दर्शनं तेषां श्रवणादीनां सम्पूर्तिजन्मन्येव भवतीति न नियमः किं तु जन्मान्तरेऽपि भवति । न चोक्तदोषः । प्रारब्धकर्मसद्भावे जन्मान्तरे तदभावे त्वैहिकमेवेत्यभ्युपगमात् । तत्कुतः । श्रुत्वेति श्रुतेरेवेति भावः । योगमेवान्ववेक्ष्येति पुनः किञ्चित् वर्णादिकमपेक्ष्यैवेत्यर्थः । अत्र स्मृतिं चाह ॥ **अनादीति** ॥ कथं सेवया ज्ञानैकसाध्यः पापपञ्जरनिर्भेद इति तत्राह ॥ **इहेति** ॥ श्रवणाद्येकसाध्यं ज्ञानं कथं सेवया स्यादित्यत आह ॥ **श्रवणमिति** ॥ न चायमेव सर्वत्र सेवाशब्दार्थः किं तु ज्ञानसाधनविषय एवेत्युच्यते ॥ **ययेति** ॥ अतो ज्ञानस्यैहिकत्वान्नोक्तानुपपत्तिरिति सिद्धम् ।

## भावबोधः

**साधनसम्पत्तिजन्मन्येवेति** । पूर्वाधिकरणे 'अन्वयात्' इत्यनेनार्थलब्धस्यापरोक्षज्ञानपरोक्षज्ञानयोः साध्यसाधनभावस्येह समर्थनादनन्तरसङ्गतिरिति भावः । अत एव साध्यसाधनाभावाक्षेपेण पूर्वपक्षोपसंहारः कृतः ॥ **साधनेति** ॥ अत्रापरोक्षज्ञानं किं श्रवणादिसाधनसम्पूर्तिजन्मन्येव भवति, उत जन्मान्तरेऽपीति चिन्ता । तदर्थं कचित् साधनसम्पूर्तिजन्मन्येवापरोक्षज्ञानस्यानुत्पत्तिः किं तयोः साध्यसाधनभावाभावनिबन्धनोत प्रतिबन्धकसद्भावनिबन्धनेति । तदर्थं तयोः साध्यसाधनभावादौ प्रमाणं नास्त्युतास्तीति । विरोधाभावात् साधनानुष्ठानजन्मन्येवापरोक्षज्ञानमिति न्यायविवरणानुसारेण पूर्वपक्षमाह– **साधनसम्पूर्तीत्यादिना** ॥ विरोधाभावादित्यंशस्याभिप्रायमाह– **न चेत्यादिना** ॥ प्रतिबन्धे सति तन्निरासने त्वरयैव सिद्ध्युपपत्तेरिति न्यायविवरणं व्याचष्टे– **प्रारब्धकर्मसद्भावे जन्मान्तर इति** ॥ तच्च दर्शनमैहिकमेव । प्रारब्धकर्मप्रतिबन्धाभाव इति भाष्यं व्याचष्टे– **तदभावे त्वैहिकमिति** ॥

## भावदीपः

**साधनसम्पत्तीति** ॥ श्रवणादिसम्पत्तिजन्मन्येवेत्यर्थः ॥ **अन्यथेति** ॥ साधनसम्पत्तावपि ज्ञानोदयासाधन इत्यर्थः । एतेन पूर्वत्रौपदेशिकवाक्यार्थज्ञानादिरूपश्रवणादेरतिगोप्यत्वोक्तिरयुक्ता । तस्य द्रष्टव्य इति दर्शनरूपफलव्यभिचारेण हेयत्वादिति शङ्कोत्थानात्पूर्वसङ्गतिरपि सूचिता ॥ **ज्ञानमेवेति** ॥ न तु पूर्वत्रेव तत्सङ्गतमन्यदित्येवार्थः । विरोधाभावात् । साधनानुष्ठानजन्मन्येवापरोक्षज्ञानमित्यन्यत्रोक्तप्रतिज्ञाहेतू व्यनक्ति ॥ **साधनसम्पूर्तीति** ॥ विरोधपदं कारणमात्रपरमित्युपेत्याह ॥ **कारणाभावादिति** ॥ **तथैवानुक्त्वा** विरोधेत्युक्तौ तात्पर्यं विवरीतुं शङ्कामाह ॥ **न चेति** ॥ स्वर्गभोगस्य तज्जन्मावच्छेदेन विरोधात्तदनन्तरमेव यथा तथेहाप्यस्त्विति शङ्काभिप्रायः । तमेव व्यञ्जयन्वैषम्यमाह ॥ **तस्येति** ॥ **अत इति** ॥ सत्यां साधनसम्पत्तौ कार्यानुदये हेत्वभावादित्यर्थः । ज्ञानस्यापरोक्षस्य । ऐहिकत्वेन तद्देहावच्छेदेनैवोत्पत्तिमत्त्वेनेत्यर्थः ॥ **तदभावाच्चेति** ॥ तस्मिन्नेव जन्मन्युदयाभावाच्च तस्य ज्ञानस्य कदाप्यनुदय एवेत्यर्थः ।

इदमुक्तं भवति । अपरोक्षधीर्न कदाचिदुदेतुमर्हति । सत्यां साधनत्वेनाभिमतसामग्रीसम्पत्तावप्यनुदितत्वात् । यथा लोके नृशृङ्गादिकं तत्साधनतयानाप्तोक्तान्नभोजनादिसामग्रीसम्पत्तावप्यजायमानं न कदाचिदुदेतीति । तथा चैतां विद्यामधीत्य ब्रह्मदर्शीत्यादिप्रागुक्तमयुक्तं ज्ञानसामर्थ्योक्तिश्च सर्वाप्ययुक्तेति भावः । आत्मेत्यादिभाष्यं व्याचष्टे ॥ **श्रुताविति** ॥

ननु विहितमपि कथं युक्तम् । फलव्यभिचारादित्यतस्तच्चेत्यादि । ऐहिकमेवेत्यन्तं भाष्यशेषं न च साधनानुष्ठानजन्मन्येवापरोक्षज्ञानमिति नियम इति न्यायविवरणांशानुरोधेन शेषोक्त्या व्याचष्टे ॥ **तच्चेति** ॥ तच्चेत्यनुवादः । दर्शनमिति व्याख्या । भवेदेवं यदि यस्मिञ्जन्मनि साधनपूर्तिस्तस्मिन्नेव जन्मनि तत्फलोदय इति साधनविधिः श्रुत्यभिप्रायः स्यात्तर्हि तदभावात्तदनुदय एवेति त्वदुक्तफलव्यभिचारः स्यात् । न चैवम् । किं तु तस्मिञ्जन्मनि वा जन्मान्तरे वा तत्फलमवश्यं भवत्येवेत्यर्थः ॥ **न चोक्तेति** ॥ साधनपूर्तावपि कार्यानुदये कारणाभावादन्यदपि न स्यादित्युक्तदोष इत्यर्थः । प्रतिबन्धे सति तन्निरासेनात्वरयैवेत्य न्यत्रोक्तमेवोक्तशङ्कानिवर्तकत्वेन व्यञ्जयन् योजयति ॥ **प्रारब्धेति** ॥ प्रारब्धप्रतिबन्धाभाव इति भाष्यं योजयति ॥ **तदभावे त्वैहिकमेवेति** ॥ साधनपूर्तिमतीह जन्मन्येवोत्पत्तिमदित्यर्थः ॥ **तत्कुत इति** ॥ सति प्रतिबन्धे जन्मान्तरे अन्यथा

(भावदीपः)

त्विहैव ज्ञानोदय इत्येतदित्यर्थः । 'ज्ञानं तु योग उद्दिष्टं युज्यते तेन यत्सुखम् । कश्चिद्योग उपायः स्यात्कश्चिच्चित्तनिरोधनम्' इति स्मृत्यनुरोधेन वा भाष्ये वक्ष्यमाणस्मृत्यनुरोधेन वा योगशब्दार्थमाह ॥ **श्रवणादिकमिति** ॥ औपदेशिकवाक्यार्थज्ञानादिरूपश्रवणमननाद्यपेक्ष्येत्यर्थः ॥ **ज्ञानेनेति** ॥ यथा पुष्करपलाश आपो न श्लिष्यन्ते एवमेवंविदि पापं कर्म न श्लिष्यते । यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते । य एतदेवं विद्वानित्यादेरिति भावः ॥ **अत इति** ॥ श्रुत्वाऽत्मानमित्यादिश्रुतिबलादित्यर्थः ॥ **नोक्तेति** ॥ तदनुदय एवेत्युक्तानुपपत्तिर्नेत्यर्थः ।

## अभिनवचन्द्रिका

**अत्रेश्वरेति** ॥ अपरोक्षज्ञानस्य साधनसंपत्तिजन्मन्येव उदय इति नियमस्य औत्सर्गिकत्वसमर्थनादित्यर्थः । प्रतिबन्धकसद्भावे एतज्जन्मानुष्ठितसाधनेन जन्मान्तरे प्रतिबन्धकापाये ज्ञानं भवतीत्यस्यार्थस्य समर्थनादस्ति शास्त्रादिसङ्गतिरिति यावत् ॥ **अन्यथेति** ॥ साधनसम्पूर्तिजन्मनि अपरोक्षज्ञानानुत्पादस्य प्रतिबन्धकप्रयुक्तत्वाभावे इत्यर्थः ॥ **किं साधनेति** ॥ साधनसम्पूर्तिजन्मन्येव भवतीति अनौत्सर्गिकनियमसद्भावात्, प्रतिबन्धके प्राप्ते जन्मान्तरे न भवति, उत नियमस्यौत्सर्गिकत्वात् प्रतिबन्धकापाये जन्मान्तरे भवतीत्यर्थः ॥ **साधनसम्पूर्तीति** ॥ साधनसंपूर्तिजन्मन्येव अपरोक्षज्ञानं भवति । तदा प्रतिबन्धके प्राप्ते तत्साधनं षण्डमेव भवति । न पुनः कालान्तरे फलजनकम् । तद्यथा उप्तं धान्यं वृष्ट्यादिसकलसामग्र्यामपि क्रिमिसञ्चारादिरूपप्रतिबन्धके प्राप्ते षण्डमेव भवति, न पुनः कालान्तरे फलजनकमिति पूर्वपक्ष इति भावः । ननु प्रतिबन्धकवशात्साधनस्य षण्डतायां, माभूज्जन्मान्तरे ज्ञानोदयः, प्रतिबन्धकं विनैव तज्जन्मनि ज्ञानानुदये भवतु जन्मान्तरे ज्ञानोदय इत्यत आह– **साधनसंपूर्तावपीति** ॥ प्रतिबन्धकाभाव इति शेषः । न च **स्वर्गादिवदिति** ॥ यथा यागसंपूर्तिजन्मनि स्वर्गानुदयेऽपि जन्मान्तरे स्वर्गो भवति, तथा जन्मान्तरे ज्ञानोदयो भवतीति न वाच्यमित्यर्थः ॥ **तस्यैतच्छरीरेणेति** ॥ ज्योतिष्टोमादेरैहिकफलजनकत्वस्य क्वाप्यदर्शनेन कालान्तरे फलजनकत्वं स्वभावः कल्प्यते । तथा च कालान्तरे फलजनकत्वमुपपन्नमिति भावः ॥ **न चात्रेति** ॥ अत्र ज्ञाने, तादृशं कालान्तरभाविफलजनकत्वस्वभावोपेतं कारणं नास्ति, किन्तु ऐहिकफलजनकत्वस्वभावमेव श्रवणादिरूपं कारणमस्तीति भावः ॥ अत इति ॥

(अभिनवचन्द्रिका)

ज्ञानस्य ऐहिकत्वेन प्राप्तत्वात्, प्रतिबन्धवत इदानीमनुदयात् जन्मान्तरेऽप्यनुदय एव, पण्डस्य फलजनकत्वायोगादिति भावः । एतेन साधनसम्पूर्तिजन्मन्येव ज्ञानं भवतीति प्रसाध्य, अनुदय एवेति सर्वथा तन्निराकरणमयुक्तमिति परास्तम् ॥ **न चोक्तदोष इति** ॥ प्रतिबन्धकवशात्साधनानां षण्डत्वापत्या, कदाप्यनुदय एवेति उक्तदोषो नेत्यर्थः ॥ **प्रारब्धकर्मेति** ॥ श्रवणादिप्रतिबन्धकं न षण्डत्वापादकम् । अपि तु तात्कालिककार्योत्पत्तिविरोधीति भावः । कुत एवं कल्प्यत इति पृच्छति– **तत्कुत इति** ॥ **किंचित् वर्णादिकमिति** ॥ प्राचीनसाधनशक्त्युद्बोधनाय किञ्चिच्छ्रवणादिकमपेक्षितमिति भावः । एतेन पूर्वजन्मनि साधनं परिपूर्णं, न वा । नेति पक्षे प्रारब्धप्रतिबन्धकल्पनायोगः । आद्ये जन्मान्तरे किंचित्साधनानुष्ठानवैयर्थ्यमिति परास्तम् ॥ **ज्ञानस्यैहिकत्वादिति** ॥ प्रतिबन्धकाभावे ज्ञानस्यैहिकत्वादित्यर्थः ।

पूर्वपक्षस्तु– ज्ञानसाधनं कृष्यादिवदैहिकफलस्यैव हेतुः । ततः साधनसम्पूर्तिजन्मन्येव अपरोक्षज्ञानं कस्यचित्प्रतिबन्धकवशात्साधने दुष्टे न कदापि फलोदयः । षण्डबीजादिना कदापि फलानुदयदर्शनात् । न हि दुष्टं बीजं कालान्तरे फलहेतुरिति दृष्टमिष्टं वा । न च यागादिवदुपपत्तिः । तस्य ऐहिकफलहेतुत्वाभावेन वैषम्यात् । अतो ज्ञानस्यैहिकत्वेन प्राप्तत्वात् कस्यचित्प्रतिबन्धकेन तदनुदये जन्मान्तरेऽपि अनुदय एवेति ।

सिद्धान्तस्तु– सत्यं श्रवणादिकमैहिकहेतुः, तथापि श्रवणादिसम्पूर्तिजन्मन्येव भवतीति न नियमः । किं तु प्रतिबन्धकसद्भावे जन्मान्तरेऽपि भवति 'श्रुत्वाऽऽत्मानं मतिपूर्वं ह्युपास्य' इति श्रुतेः । अनादिजन्मसम्बन्धमिति स्मृतेश्च । अतः प्रतिबन्धकाभावे ज्ञानस्यैहिकत्वात् । नोक्तानुपपत्तिरिति सिद्धम् ।

## वाक्यार्थमुक्तावली

**प्रतिबन्धाभाव इति** ॥ साधनसम्पूर्तिजन्मन्येवोदय इति नियमस्यौत्सर्गिकत्वं, प्रतिबन्धे सति तु जन्मान्तरे प्रतिबन्धकापाये एतज्जन्मानुष्ठितसाधनेन ज्ञानं भवतीति समर्थनादिति भावः ॥ **अन्यथेति** ॥ साधनसम्पूर्तिजन्मन्येवेति नियमस्यातिदृढत्वमङ्गीकृत्य ज्ञानस्यैहिकत्वेन प्राप्त्यङ्गीकारे प्रायशस्तदभावाच्छ्रवणादेरसाधनत्वेनापरोक्षज्ञानस्यानुदय एव । तथा च तन्माहात्म्यं दूरतो

(वाक्यार्थमुक्तावली)

निरस्तम् । अव्यवहिताधिकरणे अनाविष्कारेण सम्पादितश्रवणादेरुक्तमपरोक्षसाधनत्वं न स्यादित्यतस्तदर्थनियमनस्यौत्सर्गिकत्वं वर्णनीयमिति शास्त्रादिसङ्गतिरनन्तरसङ्गतिरपीति भावः ॥ **किमिति** ॥ ज्ञानं किं श्रवणादिसाधनसम्पूर्तिजन्मन्येव भवतीति नियमस्यौत्सर्गिकत्वमुत नेति चिन्ता । तदर्थसाधनसम्पूर्तावपि ज्ञानानुदये कारणं प्रमाणं नास्त्युतास्तीति । सिद्धान्ते प्रारब्ध-प्रतिबन्धस्य नियमापवादकारणस्योपन्यासात्सूचितम् । विरोधहानिरित्युक्तन्यायं व्यनक्ति ॥ **साधनेति** ॥ कारणाभावादित्यस्यापवादकारणाभावात्, प्रमाकारणाभावाच्चेत्यर्थः ॥ **तस्यैतच्छरीरेऽपीति** ॥ यागस्य स्वसाधनपात्राग्न्यादीनामाहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्चेत्यादेर्विनियुक्तसंस्काररूपान्त्येष्टिं विना विनियुक्तसंस्कारं च विना परिसमाप्तेरामुष्मिकस्वर्गफलकत्वेन स्वर्गस्यैतच्छरीरेऽप्यभोगायोगात् । एतच्छरीरस्य प्रतिबन्धकत्वाच्च । श्रवणादेः कृतनिखिलसहायस्येहैव साक्षात्कारजनकत्वसम्भवेन विना कारणविशेषं प्रमाणं चामुष्मिकफलकल्पनायोगादिति भावः । पूर्वाधिकरणे परोक्षज्ञानस्य तत्साधनश्रवणादेः प्रकृतत्वादत्र न तद्विचारः । किन्तु परमप्रकृतापरोक्षज्ञानस्येति प्रदर्शनाय दर्शनार्थं श्रवणादि विधीयते । तच्च दर्शनमिति भाष्यमिति भावेन व्याचष्टे ॥ **श्रुताविति** ॥ तच्च दर्शनमिति चशब्दः प्रकृतत्वानुसन्धानार्थ इति भावः । इह जन्मनि भवं ऐहिकं, प्रकृतं दर्शनमप्रस्तुतप्रतिबन्धे प्रारब्धप्रतिबन्धकाभावे ऐहिकमिह जन्मन्येवेति, न च जन्मान्तरे कुतः श्रुतावुक्तार्थस्य दर्शनादित्यर्थः ॥ **पुनः किञ्चिदिति** ॥ प्रतिबद्धप्राचीनशक्त्युत्तेजकतयेति भावः । एतेन पूर्वजन्मनि साधनं पूर्णं न वा । नेति पक्षे प्रतिबन्धकल्पनायोगः आद्ये जन्मान्तरे किञ्चित्साधनानुमानवैयर्थ्यमिति निरस्तम् । एतेनात्त्वरया सिद्धिरिति न्यायः सति प्रतिबन्धके तदुत्तेजकसम्पादनेनाऽत्त्वरयापरोक्ष इति प्रदर्शितो भवति ।

## तत्त्वसुबोधिनी

**साधनसम्पत्तिजन्मन्येवेति** ॥ पूर्वाधिकरणे अर्थलब्धस्यापरोक्षज्ञानपरोक्षज्ञानयोः साध्यसाधनभावस्येह समर्थनादनन्तरसङ्गतिरिति भावः ॥ **उभयथेति** ॥ साधनपूर्तिजन्मनि फलनिष्पत्तिः कृष्यादौ यागादौ च जन्मान्तर इति यथादर्शनमित्यर्थः । नन्वत्रापि किंचित्कारणं भविष्यतीत्यत आह– **न चात्रेति** ॥ तद्दर्शनमैहिकमेव प्रारब्धकर्मप्रतिबन्धकाभाव इति व्याचष्टे । तदभावे **त्वैहिकमिति** ॥

## वाक्यार्थविवरणम्

**अन्यथेति** ॥ साधनसम्पत्तिजन्मन्यनुदये सतीत्यर्थः । ननु यागादिसाधनसम्पूर्ताविति स्वर्गादिरूपं फलं जन्मान्तरे भवति । तद्वदिह किं न स्यादित्याशङ्क्य निषेधति ॥ **न चेति** ॥ ऐहिकतया प्राप्तत्वादिति ॥ **तदभावाच्चेति** ॥ साधनसम्पूर्तिजन्मन्येव कदाचिदुत्पत्तेरदर्शनाच्चेत्यर्थः । यच्च तद्ब्रह्मदर्शनं च यद्ब्रह्मदर्शनम् । तदर्थम् । यच्च तत् श्रवणादि च यच्छ्रवणादि ॥ **उक्तदोषः इति** ॥ साधनसम्पूर्तिजन्मन्यनुदये कदाप्यनुदय इत्युक्तदोष इत्यर्थः । इह जन्मन्येव साधनसम्पूर्ति-जन्मन्येव उत्पत्तव्यतया प्राप्तत्वादित्यर्थः । पापपञ्जरं निर्भेत्तुं यावत्या सेवया शक्यं तावत्सेवनं कार्यमित्युक्तम् । तदुपरि शङ्कते **कथमिति** ॥ सेवया कर्मरूपया ॥ **पापपञ्जरेति** ॥ पक्षिणो निर्बन्धेन यत्र स्थाप्यन्ते स मन्दासः पञ्जरशब्देनोच्यते । अतः पापानां पञ्जरं तत्स्थानीयं लिङ्गशरीरं पापपञ्जरशब्देन ग्राह्यम् ॥ **इहेतीति** ॥ इह जन्मान्तरे वाऽपि तावत्यैव सेवया दर्शनमेव भवेत् । न पापपञ्जरनिर्भेदः । तथा च नास्माभिः सेवया पापपञ्जरनिर्भेदरूपलिङ्गभङ्गः कथ्यते, किन्तु तत्साधनीभूतं ज्ञानमेवेति नोक्तदोष इति ॥ **ज्ञानमिति** ॥ पापपञ्जरनिर्भेदसाधनीभूतमपरोक्ष-ज्ञानमित्यर्थः ॥ **सर्वत्रेति** ॥ 'अश्वत्थसेवा कर्तव्या पुत्रादिफलकाङ्क्षिणा' इत्यादावित्यर्थः ॥ **ज्ञानसाधनेति** ॥ सेवया ज्ञानं भवतीति ज्ञानसाधनत्वेन यत्र सेवा कथ्यते तत्रैव श्रवणादित्रयं सेवाशब्दार्थ इत्युच्यत इति नोक्तदोष इति भावः ।

## वाक्यार्थमञ्जरी

**अन्यथेति** ॥ प्रतिबन्धकाभावसहकृतसाधनसम्पत्तावप्यनुदय इत्यर्थः ॥ **स्वर्गादिवदिति** ॥ यागादिरूपसाधनसम्पूर्तावपि तस्यैतज्जन्मन्यलाभवदत्रापि तथेत्यर्थः ॥ **तदभावादिति** ॥ साधनसम्पत्तावपि इह जन्मनि ज्ञानोदयाभावादित्यर्थः ।

ॐ ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॐ ॥ अप्रस्तुतप्रतिबन्धे प्रस्तुतेन प्रारब्धकर्मणा प्रतिबन्धाभावे ज्ञानमैहिकं इह जन्मन्येव भवति, न चेज्जन्मान्तरे भवति, कुतः तद्दर्शनात् तस्योक्तार्थस्य श्रुत्वाऽत्मानमिति श्रुतौ दर्शनादित्यर्थः । उक्तदोषः कारणाभावरूपः ।

॥ इति ऐहिकाधिकरणम् ॥ १० ॥

## ११. मुक्तिफलाधिकरणम्

### सूत्रभाष्यम्

**॥ ॐ एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॐ ॥ ५१ ॥**

एवमेव प्रारब्धकर्माभावे शरीरपातानन्तरमेव मोक्षः, तद्भावे जन्मान्तराणीत्यनियमः । 'धर्मी स्वर्गं विधर्मी निरयमेत्येव ब्रह्मसंस्थोऽमृत(त्व)मेत्येव ब्रह्म संस्थोऽमृत(त्व) मेत्येव' इति ब्रह्मसंस्थस्य मोक्षस्यैवावधारणात् ।

'विद्वानमृतमाप्नोति नात्र कार्या विचारणा ।
अवसन्नं यदारब्धं कर्म तत्रैव गच्छति ॥
न चेद्बहूनि जन्मानि प्राप्यैवान्ते न संशयः' इति नारायणाध्यात्मे ॥ ५१ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रभाष्ये
तृतीयाध्यायस्य चतुर्थः पादः ॥ ३ ॥ ४ ॥

### तत्त्वप्रदीपिका

एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः । यथोपासकस्याऽरब्धप्रतिबन्धकाभाव इहैव दर्शनं जायते, तद्भावे यावद्भिर्जन्मभिस्तत्क्षयस्तावद्भिरेवेति नियमः । सर्वथेह जन्मन्येवेति न नियमः । एवं दर्शनवतो मुक्तिरस्त्येवेति नियमः । तच्छरीरपातानन्तरमेवेत्यनियमः । प्रारब्धकर्माभाव इहैव तद्भावे तत्क्षय एवेति कुतः । 'एत्येव ब्रह्मसंस्थोऽमृतमेत्येव ब्रह्मसंस्थेऽमृतम्' इति सम्यग्दर्शिनः सर्वथा मुक्त्यवधारणात् सर्वपुरुषार्थप्राप्तिर्दर्शनात्' इत्युक्तेऽपि इतरेषामानुषङ्गिकत्वं साक्षात्फलत्वं मुक्तेरेवेति फलशब्द इति ॥

॥ इति तत्त्वदीपिकायां तृतीयाध्यायस्य चतुर्थः पादः ॥

## तत्त्वप्रकाशिका

अत्र भगवत्प्राप्तिसाधनज्ञानस्य स्वोत्पत्तिजन्मानन्तरमेव प्रतिबन्धाभावे मुक्तिसाधनत्वमहिम्नो वर्णनादस्ति शास्त्रादिसङ्गतिः । अन्यथा ज्ञानस्य मुक्तिसाधनत्वाभावप्रसङ्गात्तत्समर्थनीयम् । प्रकृतज्ञानसाध्यो मोक्षोऽत्र विषयः । किं यच्छरीरे ज्ञानमुत्पन्नं तत्पातानन्तरमेव भवत्युत नेति सन्देहः । उभयथाऽप्यदृष्टफलदृष्टिः सन्देहबीजम् । तद्देहानन्तरमेवेति पूर्वः पक्षः । कारणे सति कार्यानुदये कारणाभावात् । न च ज्ञानवदुपपत्तिः । तत्र प्रतिबन्धकसद्भावात् । न चात्र प्रतिबन्धकं पश्यामः । निष्कारणं कारणे सति कार्यानुदये कदाप्यनुदयः स्यात् । एवं चानियम इत्युक्तव्याघात इति । सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ॥ **एवमिति** ॥ यथा ज्ञानेऽनियमस्तथा मुक्तिफलेऽपि तच्छरीरपातानन्तरमेव मोक्ष इति नियमो नास्ति । किं तु शरीरपातानन्तरं जन्मान्तरं प्राप्य वा । न च निष्कारणमनियमे कदापि मोक्षाभावप्रसङ्गः । प्रारब्धप्रतिबन्धभावाभावयोरनियमकारणत्वात् । कुतोऽत्र प्रतिबन्धककल्पनम् । श्रुतौ हि ब्रह्मसंस्थस्य मोक्षावधारणात् । प्रतिबन्धकाभावे तदनुपपत्तेरिति भावः । अनियमे कदापि मोक्षाभाव इत्येतद्युक्त्या परिहृतम् । तत्रैषा श्रुतिः प्रमाणम् । मोक्षानियमे वा ज्ञानिनो मोक्ष एवावधार्यते न तु शरीरपातानन्तरमेवेति नियम इति भावः । नियमानुक्तिमात्रं नानियमसाधकमित्यत आह ॥ **विद्वानिति** ॥ बहूनीति जन्मान्तरे तात्पर्यम् । सर्वस्य प्रामाणिकत्वसूचनाय द्विरुक्तिः । तदुक्तं 'सर्वप्रमाणसिद्धत्वं वक्तुमाध्यायमूलतः । अध्यायान्ते द्विरुक्तिः स्यात्पूर्वोक्तस्याऽवधारणे' । इत्यतो ज्ञानिनां प्रतिबन्धाभावे मोक्षस्याऽविदूरत्वादुक्तं युक्तमिति सिद्धम् ।

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्ब्रह्मसूत्रभाष्यस्य टीकायां श्रीमज्जयतीर्थमुनिविरचितायां तत्त्वप्रकाशिकायां तृतीयाध्यायस्य चतुर्थः पादः ॥

## गुर्वर्थदीपिका

अल्पाधिकारिणां मनुष्याणां ब्रह्मणश्चरमदिनावसाने तस्मिन्नेव जन्मनि अपरोक्षदर्शनम् । तद्देहपातानन्तरमेव लिङ्गदेहभङ्गः न पुनर्मध्ये जन्मान्तरापेक्षेति भावेनोक्तम् ॥ **प्रारब्धकर्माभाव इति** ॥ ब्रह्मसंस्थस्य मोक्षावधारणादित्यतः परं कापि ब्रह्मसंस्थानामेव ब्रह्मादीनां मोक्षदर्शनाच्चेति वाक्यमध्याहार्यम् । अन्यथाऽर्थानुपपत्तेरिति ज्ञेयम् ।

## भावबोधः

**मुक्तिसाधनत्वमहिम्न इति** ॥ अत्र पूर्वाधिकरणोक्तसाध्यस्यातिदेशात् कर्मक्षयहेत्वपरोक्षज्ञानोत्पत्त्यनन्तरमपि यदा प्रतिबन्धकसद्भावः किमु तदा तदुत्पत्तेः पूर्वमिति पूर्वाधिकरणोक्ते कैमुत्यप्रदर्शनाद्वा पूर्वाधिकरणे श्रवणादिजन्यत्वेन निर्णीतापरोक्षज्ञानस्य मुक्तिसाधनत्वसमर्थनाद्वाऽनन्तरसङ्गतिरिति भावः ॥ **किं यदिति** ॥ अत्र मोक्षः किं ज्ञानोत्पत्त्यवच्छिन्नशरीरपातानन्तरमेव भवति उत तदुत्तरशरीरपातानन्तरमपीति चिन्ता । तदर्थं क्वचित् ज्ञानोत्पत्त्यवच्छिन्नशरीरपातानन्तरं मुक्त्यनुत्पत्तिः किं तयोः कार्यकारणभावाभावनिबन्धनोत प्रतिबन्धकसद्भावनिबन्धनेति । तदर्थं ज्ञानमोक्षयोः कार्यकारणभावादौ प्रमाणं नास्त्युतास्तीति । विरोधाभावात् साधनसम्पूर्तिजन्मन्येवापरोक्षज्ञानं मुक्तिश्चेति न्यायविवरणे जन्मनीत्यस्य साधनसम्पूर्तिजन्मान्तरमित्येतदुपलक्षकत्वमभिप्रेत्य तदनुसारेण पूर्वपक्षमाह– **तद्देहानन्तरमेवेत्यादिना** ॥ **कारणे सतीति** ॥ अनेन विरोधाभावादित्येतत्कारणे सति कार्योत्पत्तौ विरोधाभावादिति व्याख्यातं भवति ।

अतिदेशप्रयोजकामभ्यधिकाशङ्कामाह– **न च ज्ञानवदिति** ॥ **न चात्र प्रतिबन्धकमिति** ॥ अनेन विरोधाभावादित्ययमंशः प्रतिबन्धकसद्भावलक्षणविरोधाभावादिति प्रकारान्तरेण व्याख्यातो भवति ॥ **प्रारब्धप्रतिबन्धकभावाभावयोरिति** ॥ प्रारब्धकर्माभाव इति तद्भाव सति च भाष्यव्याख्यानपरेणानेन प्रतिबन्धे सति तन्निरासेन त्वरयैव सिद्ध्युपपत्तेरिति न्यायविवरणांशस्यापि तात्पर्यमुक्तं भवति ॥ **कुतोऽत्रेति** ॥ व्यभिचारात् ज्ञानमोक्षयोः कार्यकारणभाव एव नास्तीति किं न स्यादिति भावः ॥ **तदनुपपत्तेरिति** ॥ श्रौतकार्यकारणभावानुपपत्तेरित्यर्थः । श्रुतेरर्थान्तरं वक्तुं पूर्वोक्तमर्थमनुवदति– **अनियमेऽपीत्यादिना** ॥ **युक्त्येति** ॥ प्रतिबन्धकसद्भावलक्षणयुक्त्येत्यर्थः । तत्र चैषा श्रुतिः प्रमाणमिति । तत्र प्रतिबन्धकसद्भावरूपयुक्तौ प्रमाणं श्रुतार्थापत्तिरूपतयेत्यर्थ इत्याह– **मोक्षानियमे वेति** ॥ शब्दविधयेत्यर्थः । तदेवोपपादयति– **ज्ञानिन इति** ॥ एकद्विजन्मप्राप्त्यनन्तरमपि जायमानमुक्तिसङ्ग्रहार्थमाह– **बहूनीति जन्मान्तर इति** ॥

अत्र पादे आद्याधिकरणमपरोक्षज्ञानस्याशेषपुरुषार्थसाधनत्वरूपैकार्थप्रतिपादकमेका पेटिका । द्वितीयतृतीयाधिकरणद्वयं ब्रह्मज्ञानाधिकारिरूपैकार्थप्रतिपादकमेका पेटिका । तत्राद्ये अध्ययनादिविशिष्टानामेव ब्रह्मज्ञानाधिकारो न सर्वेषामिति प्रतिपादनम् । द्वितीये च अधिकारिविशेषणा-

(भाववोधः)

ध्ययनादौ तारतम्यप्रतिपादनम् । चतुर्थं अपरोक्षज्ञानस्य सदसत्प्रवृत्तावपि मोक्षसाधनत्वनियम-रूपैकार्थप्रतिपादकमेका पेटिका । पञ्चमषष्ठाधिकरणद्वयं अपरोक्षज्ञानादेरधिकारिमात्रप्राप्यत्व-प्रतिपादनमेका पेटिका । तत्राद्ये अपरोज्ञानस्य तत्प्रतिपादनम् । द्वितीये तन्नियतदेवादिपद-स्याधिकारिमात्रप्राप्यत्वप्रतिपादनम् । सप्तमं अपरोक्षज्ञानस्य स्वनियामकदेवादीनामपि फलदत्व-रूपैकार्थप्रतिपादकमेका पेटिका । अष्टमं अपरोक्षज्ञानाधिकारिषु यतीनां गृहस्थादिभ्योऽतिशय-रूपैकार्थप्रतिपादकमेका पेटिका । नवमं ज्ञानस्यायोग्येषु गोप्यत्वरूपैकार्थप्रतिपादकमेका पेटिका । तदुत्तरमधिकरणद्वयं प्रतिबन्धाभावे अपेक्षितप्राप्तिरूपैकार्थप्रतिपादकमेका पेटिका । तत्राद्ये साधनरूपापरोक्षज्ञानस्य, द्वितीये तत्फलमोक्षस्य तत्प्रतिपादकमिति ॥

**॥ इति श्रीमद्रघुवर्यतीर्थपूज्यपादशिष्यरघूत्तमयतिकृते श्रीमज्जयतीर्थ पूज्यचरणविरचिततत्त्वप्रकाशिकाभावबोधे तृतीयाध्यायस्य चतुर्थः पादः समाप्तः ॥**

## भावदीपः

**स्वोत्पत्तीत्यादि** ॥ एतेन यथा पूर्वत्र ज्ञानमैहिकमेवेत्यतिनियम एवं मोक्षफलमपि तद्देह-पातादनन्तरमेवेति न नियम इति साधनात्पूर्वसङ्गतिरपि सूचिता ॥ **अन्यथेति** ॥ प्रतिवन्धाभावे तदनन्तरमेवेत्यसाधने कदापि मोक्षानुदयप्रसङ्गेन ज्ञानस्य मुक्तिहेतुत्वं न स्यात् । तथा च विद्यैव त्वित्याद्युक्तमयुक्तमिति भावः । सङ्गत्यन्तरं सूचयति ॥ **प्रकृतेति** ॥ साधनचिन्तानन्तरं तत्साध्य-चिन्ताऽत्रेति भावः । अदृष्टफलदृष्टिः अदृष्टफलस्य स्वर्गादेरुभयथाऽनुवादः पुराणादौ तत्र तत्रोच्यमान उपलभ्य इति भावः । पूर्वनयपूर्वपक्षन्यायविवरणे मुक्तिश्चेति नियम इति मुक्ति-पदस्योपादानमत्रत्यपूर्वपक्षाभिप्रायमित्युपेत्य पूर्वत्रैव पूर्वपक्षं व्यनक्ति ॥ **तद्देहेति** ॥ पूर्वेण गतार्थत्वमाशङ्क्य निराह ॥ **न चेति** ॥ ज्ञान इव प्रतिबन्धभावाभावाभ्यामनियमोऽस्त्वित्यर्थः । तद्वैषम्येणाभ्यधिकाशङ्कामाह ॥ **तत्रेति** ॥ ज्ञानोत्पत्तावित्यर्थः ॥ **पश्याम इति** ॥ कल्पकप्रमाणाभावादिति भावः ॥ **एवं चेति** ॥ मोक्षस्य कदाप्यनुदये सत्यनियमः सर्वेषामिति ज्ञानस्य नियमेन मुक्तिहेतुत्वोक्तिरयुक्ता स्यादित्यर्थः ॥ एवं शब्दार्थं विवृण्वन्नेवानियम इत्यन्वय-मुपेत्य भाष्यार्थमाह ॥ **यथेति** ॥ प्रारब्धेत्यादिभाष्यं मुक्तिफलानियम इति सूत्रांशफलितार्थोक्ति-परतया व्याचष्टे ॥ **किं त्विति** ॥ भाष्ये बहुत्वमविवक्षितमित्युपेत्योक्तम् ॥ **जन्मान्तरमिति** ॥

(भावदीपः)

प्राप्येति शेषोक्तिः । एवं तर्हि भाष्ये तावदेव वाच्यं न तु प्रारब्धकर्माभाव इति । तद्भाव इति च कृत्यभावादित्यतः शङ्कानिवर्तकयुक्तिसूचकत्वेन तदुक्तिरित्यभिप्रेत्य प्रागुक्तशङ्कामनूद्य भाष्य-भावोक्त्या निराह ॥ **न चेत्यादिना** ॥ हेतोरसिद्धिवारकतया भाष्यशेषं व्यनक्ति ॥ **कुत इति** ॥ अर्थापत्तिसूचकत्वेन श्रुतेर्भावमाह ॥ **तदनुपपत्तेरिति** ॥ ब्रह्मसंस्थस्य मोक्षावधारणानुपपतेरित्यर्थः ।

ननु यदि मोक्षानियम एव प्रमितः स्यात्तदा प्रतिबन्धकसद्भावकल्पनादिचिन्ता । स एवाप्रामाणिक इत्यतो भाष्यशेषस्य प्रकारान्तरेण तात्पर्यं वक्तुं प्रागुक्तार्थं निष्कृष्याह ॥ **अनियम इति** ॥ प्रारब्धकर्माभाव इत्यादिनोक्तानियम इत्यर्थः ॥ **युक्त्येति** ॥ प्रारब्धप्रतिबन्धभावाभावयोर-नियमकारणत्वादित्युक्तयुक्त्येत्यर्थः ॥ **तत्रेति** ॥ प्रारब्धप्रतिबन्धकसद्भावेऽर्थापत्तिसूचकतया प्रमाणमुक्तमित्यर्थः ॥ **मोक्षानियमे वेति** ॥ तद्देहपातानन्तरं वा मोक्षः जन्मान्तराणि प्राप्य वेति यो मोक्षानियम उक्तः स कुत इत्यतो धर्मी स्वर्गमित्यादिभाष्यशेषः प्रवृत्त इति वार्थ इत्यर्थः । तथा च मोक्षानियमो नाप्रामाणिक इति भावः । पूर्वयोजनापक्षे मोक्षस्यैवेति भाष्यस्थैवकारस्य न तु कदाचिदपि मोक्षानुदय इत्यर्थकत्वस्याभिमतत्वादनियमपक्षे कथमेवकारार्थ इत्यत आह ॥ **ज्ञानिन इति** ॥ नियमव्यावृत्तिरेवैवकारार्थोऽस्मिन्पक्ष इति भावः । श्रुतावरुच्या स्मृत्युक्तिर्भाष्य इत्याह ॥ **नियमेति** ॥ ब्रह्मसंस्थ इति श्रुतौ तद्देहपातानन्तरमेवेति नियमानुक्तिमात्रमित्यर्थः ॥ **इत्यत आहेति** ॥ स्मृतौ न चेद्बहूनि जन्मानि प्राप्येति स्पष्टमुक्तेरिति भावः । श्रुतिरप्येतत्तात्पर्यकेति हृदयम् । बहुत्वमविवक्षितमित्याह ॥ **बहूनीतीति** ॥ सौत्रद्विरुक्तेः कृत्यस्यात्र भाष्येऽनुक्तेरन्यत्रोक्तं स्वयमाह ॥ **सर्वस्येति** ॥ **तदुक्तमिति** ॥ ऐतरेयभाष्ये द्वितीयप्रघट्टके प्रथमेऽध्याये उक्तमित्यर्थः । अध्यायमूलमारभ्य पूर्वोक्तस्यार्थस्य सर्वप्रमाणसिद्धत्वं वक्तुमध्यायान्ते द्विरुक्तिः स्यात् । कुत्रेत्यतोऽवधारणे निर्णायकग्रन्थे इत्यर्थः ॥ **अत इति** ॥ ज्ञानिमोक्षावधारकश्रुत्यादिबलादित्यर्थः ॥ **उक्तमिति** ॥ अनियमः सर्वेषामित्युक्तं युक्तमिति फलोक्तिः । अत्र सूत्रे फलपदं पुरुषार्थोऽत इत्युक्तावपि मुक्तेरेव साक्षाज्ज्ञानफलत्वमन्येषामानुषङ्गिकत्वमिति सूचनायेत्युक्तं तत्वप्रदीपे ।

॥ इति श्रीमद्भाष्यटीकाभावदीपे श्रीराघवेन्द्रयतिकृते तृतीयाध्यायस्य चतुर्थः पादः ॥

## अभिनवचन्द्रिका

**स्वोत्पत्तिजन्मानन्तरमेवेति ॥** ननु इदं महिमवर्णनमयुक्तम् । असत्त्वात् । न हि कस्यापि प्रतिबन्धाभावोऽस्ति । येन ज्ञानस्य स्वोत्पत्त्यनन्तरमेव मोक्षजनकत्वरूपं माहात्म्यं सत्यं स्यात् । प्रारब्धकर्मणामतिबहुत्वेन प्रमितत्वात् । उक्तं चानुव्याख्याने ब्रह्मणां शतकालात्तु पूर्वमारब्धसङ्क्षयः । ब्रह्मणस्त्वेव तावत्त्वं पञ्चाशद्ब्रह्मणस्तथा । रुद्रस्य विंशदेव स्यादिन्द्रस्यार्कादिके दश । अन्येषां ब्रह्ममात्रस्य त्वन्त आरब्धसंक्षय' इति । तस्मादनारम्भणीयमिदमधिकरणमिति चेत्, न केषाञ्चि-दल्पाधिकारिणां ज्ञानोदयजन्मन्येव सर्वप्रारब्धक्षयसद्भावेन तद्देहपातानन्तरमेव तेषां मोक्षसम्भवात् । तदुक्तम् 'विद्वानमृतमाप्नोति नाऽत्र कार्या विचारणा । अवसन्नं यदारब्धं कर्म तत्रैव गच्छति ॥ न चेद्बहूनि जन्मानि प्राप्यैवान्ते न संशय' इति । अनुव्याख्यानन्तु उत्तममध्यमविषयं द्रष्टव्यम् । यद्यपि अत्राधिकरणे ज्ञानफलस्य मोक्षस्य तद्देहपातानन्तरमेवेति नियमाभावः साध्यते, तथापि प्रतिबन्धकाभावे स्वोत्पत्तिजन्मानन्तरमेव मोक्षो भवतीत्यर्थस्य अर्थाल्लाभात्, 'प्रतिबन्धकाऽभावे मुक्तिसाधनत्वमहिम्नो वर्णनादित्युक्तम् । **तद्देहानन्तरमेवेति ॥** तद्देहपातानन्तरमेव मोक्षो भवतीत्यङ्गीकारो युक्तः न तु विलम्बाङ्गीकारो युक्त इति पूर्वः पक्ष इत्यर्थः । कुतो विलम्बाङ्गी-कारो न युक्त इत्यत आह – **कारणे सतीति ॥ न चात्रेति ॥** 'ज्ञानाग्निः सर्वकर्माणि भस्म-सात्कुरुतेऽनघ' इति वचनादिति भावः । **अनियम इति ॥** 'अनियमः सर्वेषाम्' इति सूत्रोक्त-मोक्षनियमव्याघात इत्यर्थः । न च निष्कारणमिति । कारणाभावेऽपि कस्यचिद्देहपातानन्तरमेव मोक्षः कस्यचिन्नेत्यङ्गीकारे, यस्य देहपातानन्तरं न मोक्षः, तस्य कदापि न स्यादित्यर्थः । कुतोऽत्र प्रतिबन्धकल्पनमिति । पतिबन्धकवशात् देहपातानन्तरमेव न मोक्षः, किं तु प्रतिबन्ध-कापगमे मोक्ष इति कुतः कल्प्यते मोक्षाभाव एव किं न स्यादित्यर्थः । ननु भाष्ये 'एवमेव प्रारब्धकर्माभावे शरीरपातानन्तरमेव मोक्षः । तद्भावे जन्मान्तराणीत्यनियम' इति प्रतिज्ञाय 'धर्मी स्वर्गं विधर्मी निरयमेत्येव । ब्रह्मसंस्थोऽमृतत्वमेत्येव ब्रह्मसंस्थोऽमृतत्वम्' इति ब्रह्मसंस्थस्य मोक्षस्यैवावधारणादिति हेतुरुक्तः । न चासौ युक्तः । ब्रह्मसंस्थमोक्षावधारणस्याऽनियम-प्रयोजकत्वात् । 'प्रतिबन्धकसद्भाव' इत्यादेः हेतुगर्भविशेषणत्वेन अनियमप्रयोजकस्य तेनैव लाभाच्चेत्यत आह– **अनियमे कदापीति ॥** नायम् 'अनियम' इति प्रतिज्ञातार्थे हेतुः, किन्तु

(अभिनवचन्द्रिका)

अनियम इति प्रतिज्ञाने कुत इति आकाङ्क्षोत्पन्ना । अनियमे कदापि मोक्षाभाव इति बाधकप्रत्ययश्चोत्पन्नः । तत्र हेत्वाकाङ्क्षाशान्तये प्रारब्धकर्माभावे, तद्भावे, इति द्वे विशेषणे प्रयुक्ते । तयैव युक्त्या कदापि मोक्षाभाव इति शङ्कापि परिहृता । तत्र प्रतिबन्धकसद्भावे एषा श्रुतिरर्थापत्त्युपस्थापनद्वारा प्रमाणमित्यर्थः । प्रतिज्ञातार्थ एवैषा श्रुतिः प्रमाणमित्याह– **मोक्षानियमे वेति ॥** देहपातानन्तरं मोक्षो भवत्येवेति नियमाभाव इत्यर्थः । ननु भाष्ये 'बहूनि जन्मानि' इत्युक्तम् । एकजन्मप्रारब्धसद्भावे बहुजन्माङ्गीकारायोग इत्यत आह– **बहूनीति ॥** अत्र 'बहूनि जन्मानि' इत्यस्य प्रतीकेनोपादानमिति द्रष्टव्यम् । एतेन बहूनीत्यस्य जन्मान्तरमित्यर्थत्वे जन्मानीतिपदं पुनरुक्तं स्यादिति परास्तम् ।

पूर्वपक्षस्तु– अपरोक्षज्ञानोदयदेहपातानन्तरमेव मोक्षो भवतीत्यङ्गीकारो युक्तः । न तु विलम्बाङ्गीकारः । विलम्बे कारणाभावात् । एवमेव कस्यचिन्मोक्षविलम्बाङ्गीकारे तस्य न कदापि मोक्षः स्यात् । तत्साधनानां गतवीर्यत्वात् । न हि जीर्णानां धान्यानामङ्कुरकार्यकारिता । ततश्च 'अनियम' इत्युक्त व्याघात इति ।

सिद्धान्तस्तु– ज्ञानोदये देहपातानन्तरमेव मोक्ष इति न नियमः किं तु प्रतिबन्धकाभावे तद्देहपातानन्तरम् । अन्यथा तु 'जन्मान्तरं प्राप्या' इत्यनियमः । 'धर्मी स्वर्गं विधर्मी नरकम्' इति श्रुतेः, 'विद्वानमृतमाप्नोति' इति स्मृतेः । अतो ज्ञानिनां प्रतिबन्धाभावे मोक्षस्यादूरत्वात् उक्तं युक्तमिति सिद्धम् ।

मोक्षमार्गरतांश्चक्रे सतोऽभिनवचन्द्रिका ।
विदोषा रामचन्द्रस्य तृतीयाध्यायसङ्गता ॥ १ ॥

**॥ इति श्रीसत्यनिधितीर्थश्रीचरणचरणाराधकश्रीमत्सत्यनाथयतिविरचितायां श्रीमत्तत्त्वप्रकाशिकाव्याख्याऽभिनवचन्द्रिकायां तृतीयाध्यायस्य चतुर्थः पादः तृतीयाध्यायश्च समाप्तः ॥**

## वाक्यार्थमुक्तावली

अत्र पूर्वोक्तहेतुसाध्यातिदेशादातिदेशिक्यनन्तरसङ्गतिः । अत्र ज्ञानजन्मपातानन्तरमेव ज्ञानेन मोक्षनियमस्यौत्सर्गिकत्वसमर्थनेन ज्ञानस्य तद्धेतुत्वमहिमवर्णनादित्यर्थः ॥ **अन्यथेति** ॥ उक्त-नियमस्यातिदृढत्वेन ज्ञानजन्मपातानन्तरमेव ज्ञानस्य मोक्षहेतुत्वेन प्राप्त्यङ्गीकारे प्रायशस्तद-भावज्ञानस्य तत्साधनत्वापगमेन मोक्षस्य ज्ञानेन कदाप्यनुदयः स्यात् । क्वचिदुदयस्तु काकतालीय इति शङ्कानिरासाय नियमस्यौत्सर्गिकत्वं वर्णनीयमिति भावः ॥ **किमिति** ॥ किं मोक्षो ज्ञानशरीरपातानन्तरमेव भवतीति नियम अतिदृढ उत औत्सर्गिक इति चिन्ता । तदर्थमपवाद-कारणं प्रमाणं च नास्त्युतास्तीति ॥ **उभयथाप्यदृष्टफलदृष्टिरिति** ॥ अदृष्टजन्यफलस्य यच्छरीरे दृष्टमुत्पन्नं तदपगमानन्तरं कुत्रचिद्बहुजन्मव्यवधानेन शास्त्रदृष्टिरित्यर्थः । अत्रापि दृष्टान्ते विरोधिनो मोक्षप्रतिबन्धकस्य प्रारब्धस्य कारणस्य प्रमाणस्य च प्रदर्शनात्सूचितं विरोधहानिरित्युक्त-न्यायमेवेहापि व्यनक्ति ॥ **कारणे सतीति** ॥ नन्वेवं चेत्पातानन्तरमेव न पूर्वपक्षयितव्यं किन्तु ज्ञानजन्मन्येवेति वक्तव्यं कारणे सति कार्यानुदये कारणाभावात् । एकगुणोपासकानां ज्ञान-जन्मन्येव शरीरोत्क्रमणदर्शनाच्च । यदि च मोक्षशब्देन भोगादिर्विवक्षितस्तदापि कारणे सतीति न्यायेन ज्ञानानन्तरमेव भोगादिकं स्यादित्यपि वक्तव्यम् । यदि चरमशरीरोत्क्रान्तिरपि सामग्री(कार्ये)को यैर्निविश्यते तदा कारणे सतीति व्याहन्येतेति चेन्न । इह मोक्षशब्देन सान्तानिकभोगस्य विवक्षितत्वात् । तत्र च दृष्टस्य शरीरस्य प्रतिबन्धकत्वात्तत्पातानन्तरमदृष्ट प्रतिवन्धे प्रमाणाभावाभावादित्यभिप्रेतत्वाद्गतार्थतामाशङ्क्याभ्यधिकाशङ्कामाह ॥ **न च ज्ञानवदिति** ॥ यथोपासकस्य प्रारब्धप्रतिबन्धकाभावे इहैव दर्शनं जायते तद्भावे यावद्भिर्जन्मभि-स्तत:क्षणस्तावद्भिरेवेत्यनियमः । एवमेव प्रारब्धकर्माभावे शरीरपातानन्तरमेव मोक्षस्तदभावे जन्मान्तराणीति मुक्तिफलेऽप्यनियम इत्यतिदेशसूत्रखण्डार्थं स्पष्टयति ॥ **यथेत्यादिना** ॥

ननु देहपातानन्तरं मोक्षाभावे प्रमिते व्यभिचाराज्ज्ञानस्य मोक्षसाधनत्वमेव त्यज्यतां किं प्रतिबन्धककल्पनयेत्यभिप्रेत्य शङ्कते ॥ **कुत इति** ॥ **तदनुपपत्तेरिति** ॥ प्रतिबन्धाभावेऽपि ज्ञानान्मोक्षाभावे ब्रह्मसंस्थस्य मोक्षावधारणानुपपत्तेरित्यर्थः । श्रौतकार्यकारणेन वाऽनुपपत्तेरिति भावः । यद्वा कुतः प्रमाणात्प्रतिबन्धककल्पनमिति शङ्कार्थः ॥ **तदनुपपत्तेरिति** ॥ अवधारणा-

(वाक्यार्थमुक्तावली)

त्कार्यकारणाभावो निश्चितः । दृश्यते च क्वचिज्ज्ञानजन्मानंतरं मोक्षाभावोऽतस्तदन्यथानुपपत्त्या प्रतिबन्धकं कल्प्यत इत्यर्थः । श्रुतेरर्थान्तरं **वक्तुमुक्तार्थमनुवदति** ॥ **अनियम इत्यादिना** ॥ अनियमे **ज्ञानजन्मन्येवेति** ॥ तत्रैव युक्तिसिद्धमोक्षनियम एव । अर्थान्तरमाह ॥ **मोक्षेति** ॥ मोक्षानियम इत्यर्थः । विद्वानमृतमिति भाष्ये एव त्वरयासिद्धिरित्युक्तन्यायः प्रदर्शितो ज्ञेयः । जन्मद्वये प्रारब्धभोगसम्भवाद्बहूनीति कथमित्यत आह ॥ **बहूनीति** ॥ मुक्त्यनियम इति वक्तव्ये फलेत्युक्तेरभिप्रायस्तत्त्वप्रदीपे उक्तः । सर्वपुरुषार्थप्राप्तिदर्शनादित्युक्तेऽपीतरेषामानुषङ्गिकत्वं साक्षात्फलत्वं मुक्तेरेवेति **फलशब्द इति** ॥ पेटिका तु भावबोधे स्पष्टा ।

**॥ इति श्रीमद्विठ्ठलाचार्यतनूजेन श्रीमत्तीर्थाचार्यचरणसेविना श्रीनिवासेन विरचितायां श्रीमत्तत्त्वप्रकाशिकावाक्यार्थमुक्तावल्यां तृतीयाध्यायस्य चतुर्थः पादः ॥**

## तत्त्वसुबोधिनी

तदवस्थावधृतेः मुक्तिसाधनत्वमहिम्न इति । अत्र पूर्वाधिकरणोक्तकैमुत्यप्रदर्शनाद्वा पूर्वाधिकरणे श्रवणादिजन्यत्वेन निर्णीतापरोक्षज्ञानस्य मुक्तिसाधनत्वसमर्थनाद्वा पूर्वान्तरसङ्गतिरिति भावः । अतिदेशप्रयोजिकाभ्यधिकाशङ्कामाह ॥ **न च ज्ञानवदिति** ॥ सत्यपि कारणे प्रतिवन्धकाभावेऽपि कार्याभावो भवत्वित्यत आह ॥ **निष्कारणमिति** ॥ **कुतोऽत्रेति** ॥ व्यभिचारात् । ज्ञानमोक्षयोः कार्यकारणभाव एव नास्तीति किं न स्यादिति भावः ॥ **तदनुपपत्तेरिति** ॥ श्रौतकार्यकारणभावानुपपत्तेरित्यर्थः । श्रुतेरर्थान्तरं वक्तुं पूर्वोक्तमर्थमनुवदति ॥ **अनियमेऽपीति** ॥ युक्त्येत्यर्थः । तत्रैषा श्रुतिः प्रमाणमिति । तत्र प्रतिबन्धकसद्भावलक्षणयुक्तौ प्रमाणं श्रुतार्थापत्तिरूपतयेत्यर्थः ॥ **मोक्षानियमे वेति** ॥ शब्दविषयेत्यर्थः ॥ **तदेवोपपादयति** ॥ **ज्ञानिन इति** ॥ एकद्विजप्राप्त्यनन्तरमपि जायमानमुक्तिसङ्ग्रहार्थमाह ॥ **बहूनीति जन्मान्तर इति** ॥ अत्र प्रमाणमाह ॥ **तदुक्तमिति** ॥ आध्यायमूलतः अध्यायमूलमारभ्य यावत्पूर्वोक्तं तस्य पूर्वोक्तस्यावधारणे अवधारणपूर्वकं तस्य प्रमाणसिद्धत्वं वक्तुं अध्यायान्ते द्विरुक्तिः स्यादिति सम्बन्धः ॥

**॥ इति तत्वप्रकाशिकाटीकायां तत्वसुबोधिन्यां तृतीयाध्यायस्य चतुर्थः पादः समाप्तः ॥**

## वाक्यार्थविवरणम्

**फलदृष्टिरिति** ॥ पुण्यफलदृष्टिरित्यर्थः । 'अत्युत्कटैः पुण्यपापैरिहैव फलमश्नुते' इति वचनात् पुण्यफलमेतच्छरीरेणैव भुज्यते शरीरान्तरेणापीति दृष्टम् । मोक्षोऽपि पुण्यफलमत उक्तरीत्या सन्देह इत्यर्थः ॥ **तद्देहेति** ॥ यस्मिन् देहे ज्ञानमुत्पन्नं तद्देहपातानन्तरमेव मोक्ष इत्यर्थः ॥ **ज्ञानवदिति** ॥ श्रवणादिसाधनसम्पूर्तावपि ज्ञानं जन्मान्तरे भवतीत्यङ्गीकृतम् । तथा च कारणसद्भावेऽपि कार्यादर्शनात् । इहापि तद्देहपातरूपकारणसद्भावेऽपि मोक्षरूपकार्यानुदयः सम्भवतीत्यर्थः ॥ **प्रतिबन्धकेति** ॥ प्रारब्धकर्मरूपेत्यर्थः ॥ **एवं चेति** ॥ ज्ञानवतोऽपि मोक्षानुदये सतीत्यर्थः ॥ **ज्ञाने अनियम इति** ॥ साधनसम्पूर्तिजन्मन्येवेति नियमो नास्तीत्यर्थः ॥ **शरीरपातेति** ॥ यस्मिन् शरीरे ज्ञनमुत्पन्नं तच्छरीरपातानन्तरमित्यर्थः ॥ **अनियमे** ॥ तच्छरीरपातान्तरमेवेति नियमाभावे ॥ **अनियमकारणत्वादिति** ॥ अनियमेत्युपलक्षणम् । नियमोऽपि ग्राह्यः । तथा च प्रारब्धकर्मभावाभावयोरनियमनियमकारणात्वादित्यर्थः ॥ **कुतोऽत्रेति** ॥ यस्मिन् शरीरे ज्ञानमुत्पन्नं तच्छरीरपातानन्तरं मोक्षाभावेन व्यभिचारात् । ज्ञानमोक्षयोः कार्यकारणभाव एव नास्तीति किं न स्यादिति भावः ॥ **ब्रह्मसंस्थस्येति** ॥ ब्रह्मणि विषये संस्था संस्थितिः । धातूनामनेकार्थत्वात् ज्ञानमिति यावत् । यस्य असौ ब्रह्मसंस्था अपरोक्षज्ञानी । तस्य अमृतमेत्येवेति मोक्षावधारणादित्यर्थः ॥ **तदनुपपत्तेरिति** ॥ प्रतिबन्धककल्पनाभावे तच्छरीरपातानन्तरमेव केषाञ्चिज्ज्ञानिनां मोक्षानुपलम्भात् ज्ञानमोक्षयोः श्रुत्युक्तकार्यकारणभावोऽनुपपन्नः स्यात् । अतः प्रतिबन्धकसद्भावः कल्पनीय इत्यर्थः । अर्थान्तरं वस्तु पूर्वोक्तमनुवदति ॥ **अनियम इति** ॥ तच्छरीरपातानन्तरं मोक्ष इति नियमाभावे कदापि न मोक्षः स्यात् । कारणे सति कार्यानुदयायोगादित्येतत् प्रतिबन्दकसद्भावयुक्त्या परिहृतम् । न हि प्रतिबद्धं कारणं कार्यमजनयदकारणं भवति । तथात्वे वन्हेरपि स्फोटं प्रति अकारणतत्प्रसङ्गादिति भावः ॥ **तत्रेति** ॥ प्रतिबन्धकसद्भावरूपयुक्तावित्यर्थः ॥ **एषा श्रुतिः** ॥ 'धर्मी स्वर्गम्' इत्यादिश्रुतिः ॥ **प्रमाणमिति** ॥ ब्रह्मसंस्थस्य मोक्षावधारणं कदाचित् प्रतिबन्धकाकल्पनेन सम्भवतीत्येवं श्रुतार्थापत्तिरूपतया प्रमाणमित्यर्थः । एव पूर्वोक्तमनुद्यार्थान्तरमाह ॥ **मोक्षानियमे वेति** ॥ ज्ञानिनामपि केषाञ्चिन्मोक्षः केषाञ्चिन्नेत्येवरूपो नियमो नास्ति । किन्तु सर्वेषामपि ज्ञानिनां मोक्ष इत्येवं रूपनियममात्र एव । 'धर्मी स्वर्गम्' इत्येषा श्रुतिः प्रमाणमित्यर्थः । तदेवोपपादयति ॥ **ज्ञानिन इति** ॥ **नियम इति** ॥ **भाव इति** ॥ तथा च

(वाक्यार्थविवरणम्)

तच्छरीरपातानन्तरं जन्मान्तरं प्राप्येत्यनियमोऽपि सम्भवतीति भावः ॥ **नियमानुक्तीति** ॥ तच्छरीरपातानन्तरमेवेति नियमानुक्तिमात्रमित्यर्थः ॥ **अनियमेति** ॥ तच्छरीरपातानन्तरमेवेति नियमो न । किन्तु जन्मान्तरप्राप्येति नियमाभावसाधकमित्यर्थः ॥ **विद्वानितीति** ॥ तत्र न नेद्बहूनि जन्मानि प्राप्येत्युक्तत्वात् तच्छरीरपातानन्तरमेवेति नियमाभावसिद्धेरिति ज्ञातव्यम् । प्रमाणे आरब्धं कर्म अवसन्नं भोगेन क्षीणशक्तिकं सत् गच्छति नश्यतीत्यर्थः । ननु यस्य जन्मद्वया-पादकमेव प्रारब्धकर्मास्ति तस्य बहूनि जन्मानि प्राप्येत्ययुक्तं स्यादत आह ॥ **बहूनीतीति** ॥ तथा च बहूनीत्यनेकत्वोपलक्षणमिति भावः । अत्र तच्छरीरपातानन्तरमेव मोक्ष इत्येतन्मनुष्योत्तमेष्वपि ये अधमाः आत्मत्वमात्रोपासकाः तद्विषयमित्यवगन्तव्यमिति सम्प्रदायविदः ॥ **अध्यायमूलतः** ॥ अध्यायमूलमारभ्योक्तस्येत्यर्थः ।

**॥ इति तत्त्वप्रकाशिकावाक्यार्थविवरणे श्रीनिवासवर्यकृते तृतीयाध्यायस्य चतुर्थः पादः ॥**

## वाक्यार्थमञ्जरी

**तद्देहानन्तरं** तद्देहपातानन्तरम् ॥ ॐ एवं मुक्तिफलानियमस्तदवस्थावधृतेस्त दवस्थावधृतेः ॐ ॥ एवं ज्ञान इव मुक्तिफले मोक्षरूपेप्यनियमः ज्ञानोत्पत्तिजन्मान्तरमेव भवतीति नियमो नास्ति किन्तु प्रारब्धप्रतिबन्धकसद्भावे देहान्तरावसानेऽपि भवति कुतस्तदवस्थावधृतेः तस्मिन्ब्रह्मणि अवस्थाऽवस्थितिर्निष्ठा यस्य तस्यावधृतेर्ब्रह्मसंस्थ इति श्रुतौ मुक्तिफलावधारणादित्यर्थः ॥ **कुतोऽत्रेति** ॥ व्यभिचाराज्ज्ञानमोक्षयोः कार्यकारणभाव एव नास्तीति न स्यादिति भावः ॥ **तदनुपपत्तेरिति** ॥ श्रुतौ कार्यकारणभावानुपपत्तेरित्यर्थः । श्रुतेरर्थान्तरं वक्तुं पूर्वोक्तमर्थमनुवदति । अनियमे कदापीत्यादिना ॥ **युक्त्येति** ॥ प्रतिबन्धक सद्भावरूपयुक्त्येत्यर्थः । तत्र चैषा श्रुतिः प्रमाणमिति तत्र प्रतिबन्धकसद्भावरूपयुक्तौ प्रमाणं श्रुतार्थापत्तिरूपतयेत्यर्थः ॥ **मोक्षनियमे वेति** ॥ शब्दविधयेत्यर्थः । तदेवोपपादयति ॥ **ज्ञानिन इति** ॥ एकजन्मप्राप्त्यनन्तरमपि जायमानमुक्ति-सङ्ग्रहार्थमाह ॥ **बहूनीति** ॥ जन्मान्तर इत्यर्थः ।

**॥ इति श्रीमत्तत्त्वप्रकाशिकावाक्यार्थमञ्जर्यां शर्कराश्रीनिवासविरचितायां तृतीयाध्यायस्य चतुर्थः पादः ॥**

**॥ इति मुक्तिफलाधिकरणम् ॥ ११ ॥**

**॥ इति चतुर्थः पादः समाप्तः ॥**

# Brahmasūtra Bhāṣya of Śrī Ānandatīrtha

Brahmasūtras constitute the central text of Vedānta Philosophy. The philosophical thoughts of Vedas, Upaniṣads, Bhagavadgita and the allied sacred literature are systematised in these Sūtras.

In spite of such a systematic presentation of Vedānta thought a number of schools have developed within Vedānta Philosophy. This is partly due to the influence of the other systems of philosophy such as Sānkhya, Vaiśeṣika, Buddhism etc. and also due to different theologies such as Vaiṣṇavism and Śaivism prevailent in India.

All these schools claim that they faithfully represent the Vedānta thought enshrined in Vedānta Sūtras. Consiquently, these schools not only present their doctrines by interpreting these sūtras but review the interpretations of the other schools and doctrines. This has given rise to a rich interpretational and polemical literature of Vedānta thought. The commentators have developed new dimensions of epistemology, logic, hermeneutics and the, canons of interpretation.

In the Dvaita school of Vedānta propounded by Śrī Ānandatīrtha alias Śrī Madhvāchārya such a rich literature of commentaries on Brahmasūtras is developed. Śrī Padmanābhatīrtha, Śrī Trivikrama Paṇḍitāchārya, Śrī Jayatīrtha, Śrī Vyāsatīrtha, Śrī Raghūttamatīrtha, Śrī Rāghavendratīrtha Śrī Satyanāthatīrtha and a host of other distinguished sholars have commented upon Śrī Madhvāchārya's Brahmasūtrabhāṣya. Śrī Madhvāchārya has developed Mono-theism and realism as the philosophy of Brahmasūtras. He rejects the concepts of adhyāsa, Vivartavāda, Mithyātva and Nirguṇa Brahman. These have no room in Brahmasūtras. In his Bhāṣya he profusely quotes the source passages on which Brahmasūtras are built. There are sixteen commentaries on his bhāṣya and Śrī Jayatīrtha's commentory on it. In this volume eleven 11 commentaries are included to enable the scholars to have an idea of the historical development of the interpretation and the review of the other schools. It is hoped that this volume will inspire the young scholars to probe deeper into Vedānta thought.